तत्साधनादिकं निरतिशयपुरुषार्थ स्वरूपगुणादिकं चावेदयतीति तथा तं वेदं तेने विस्तृतवान् प्रकाशितवान्, प्रादादिति यावत्। "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" (श्वेता. उ. 6-18) इति श्रुत्यर्थोऽत्रानुसन्धेयः। शास्त्रप्रवर्तनं हितार्थम्। एवं च तुल्यन्यायतया जगत्सृष्टिरपि हितार्थैवेति सूचितम्। ततश्च कारुण्यात् चेतनाना मपवर्गोपयुक्तज्ञान-प्रवृत्तिनिष्पादक करणकलेवरप्रदानाय जगत्सृष्टिः; तदपि परिपूर्णत्वादिति च फलितम्। गर्भजन्मादिदुःखानुभवस्तु स्वस्वकर्ममूलक इति नेश्वरस्य दोष इति भावः। "तेन" इत्यादिना नामप्रपञ्चसृष्टि रुच्यते इति केचित्। तत्र; नामकल्पनस्य सृष्ट्यन्तर्भावेण पृथगुक्त्यनपेक्षत्वात्। नामरूपव्याकरणं हि सृष्टिः, "नामरूपे व्याकरवाणि" (छान्दो. उ. 6-3-2) "तन्नामरूपाभ्यां [भ्यामेव] व्याक्रियत" (बृह. उ. 1-4-7) इति श्रुतेः, ब्रह्मशब्दस्य नामधेयपर्यायत्वाभावाच्च। स हि वेदपर्यायशब्दः ब्रह्म च स एव "मूलं कृष्णो ब्रह्म च ब्राह्मणाश्च" (भार. 1-1-66) इति प्रयोगाच्चेति, "कवय" इत्यस्यानन्वयापत्तेश्च। यच्छास्त्रप्रवर्तनेन चिकीर्षितं हितं तद्दर्शयितुं तत्प्रवर्तनाभावेऽनर्थं दर्शयन् विशिनष्टि — मुह्यन्ति यत् सूरय इति। सूरयो ज्ञानवन्तः उपासका यं प्रति मुह्यन्ति अपरिच्छेद्य-वैभवत्वात् व्याकुलीभवन्तीत्यर्थः। अपरिच्छिन्नब्रह्मानुसन्धानं हि शास्त्रप्रवर्तनस्य परमं प्रयोजनम्। शास्त्रप्रवर्तनाभावे अपरिच्छेद्य स्वरूपरूपगुणविभूत्यादीन् मानान्तरानवगम्यान् निरतिशयपुरुषार्थरूपा नवगन्तु मशक्ताः सूरयो मुह्येयुः। अत एषां मोहो मा भूदि त्येतदर्थं ब्रह्म तेने इत्यर्थः। यदिति पाठे यत् यस्मात् शास्त्रप्रवर्तनाभावे मुह्यन्ति। अतो ब्रह्म तेने इत्यन्वयः। यद्वा "आशी र्नमस्क्रिया वस्तुनिर्देशो वाऽपि तन्मुखम्" (काव्या. 1-14) इत्यभियुक्तोक्तेः चिकीर्षित-कृत्स्नप्रबन्धार्थरूपवस्तुनः शारीरकाध्यायचतुष्टयार्थरूपस्यात्र प्रबन्धादौ निर्देष्टव्यत्वेन, तत्र तावत् "कवय" इत्यन्तेन समन्वयाध्यायार्थरूप वस्तु निर्दिष्टम्। मुह्यन्तीत्यादिना विनिमय इत्यन्तेन द्वितीयाध्यायार्थरूपं वस्तु निर्दिश्यते। "सूरय" इत्यनेन द्वितीयाध्यायाद्यधिकरणार्थानां "तेजोवारिमृदां यतो विनिमय" इत्यनेन तदा अध्यायान्त्यस्य संज्ञा मूर्तिकॢ-प्त्यधिकरणस्य चात्र प्रत्यभिज्ञानात्। एवं चायमर्थः — सूरयः कपिलहिरण्यगर्भकणभक्षाक्षपादक्षपणकपशुपत्यादयः साङ्ख्य योगादितन्त्रप्रणेतारः प्रकृत्याद्युपादानत्व निमित्तमात्रेश्वरवादिनो यं प्रति मुह्यन्ति, ईश्वरस्य सूक्ष्मचिदचिद्विशिष्टस्य जगद्रूपेण परिणामं तदुपयुक्तसर्वशक्त्यादिगुणयोगं चाजानन्तः प्रधानस्योपादानत्वं वदन्त स्तन्निर्वोढुं चासमर्था व्याकुली-भवन्तीत्यर्थः। "यत्" इति पाठे यस्मिन् विषयभूते ब्रह्मणि मुह्यन्तीत्यर्थः। "तेने ब्रह्म हृदा य आदिकवये" इत्येतदपि द्वितीयाध्यायार्थनिर्देशपर मिति कश्चित्सम्प्रदायः; तत्र न प्रयोजनवत्त्वाधिकरणार्थप्रत्यभिज्ञानात्। यद्वा, प्रतिपिपादयिषि-तार्थ प्रामाण्यजिज्ञासायां वेदान्तानामेव तत्र तत्प्रमापकत्वं वक्तुं, कृत्स्नस्य वेदस्य अनादिनिधनाविच्छिन्न सम्प्रदायासम्भा-व्यदोषगन्धतां पूर्वतन्त्रनिर्णीतां स्मारयितुं, "तेने ब्रह्म हृदा य आदिकवये" इत्युक्तम्; एवं कारणत्वासम्बन्धव्यवच्छेद-रूपोऽयोगव्यवच्छेद उक्तः। अथान्येषु प्रधानादिषु कारणत्वसम्बन्धव्यवच्छेदरूपान्ययोग व्यवच्छेदाक्षेपपरिहारौ सूचयन् ध्येयं परमात्मानं विशिनष्टि — "तेजोवारिमृदां यतो विनिमय" इति। अत्रैवं आशङ्कते तावत्पुरुषस्याकारणत्वं नोपपद्यते, कारणत्वावगमात्। तथा हि तावत् "हन्ताह मिमा स्तिस्रो देवता अनेन जीवेन आत्मनानुप्रविश्य नामरूपे व्याकरवाणि, तासां त्रिवृते त्रिवृत मेकैकां करवाणि" (छान्दो. उ. 6-3-2) इति त्रिवृत्करणनामरूपव्याकरणे समानकर्तृके प्रतीयेते। त्रिवृत्करणं च हिरण्यगर्भरूप समष्टिजीवकर्तृकं चतुर्मुखसृष्टेष्वण्डान्तर्वर्त्यग्न्यादिषु उपदेशात् "यदग्ने रोहितं

रूपं तेजस स्तद्रूपाम्[66]'' (छान्दो. उ. 6-4-1) इत्यादिभिः त्रिवृत्करण मग्न्यादित्यचन्द्रविद्युत्सु। एवं च त्रिवृत्कर्त्रैककर्तृकं नामरूपव्याकरण मप्यण्डाधिपतिचतुर्मुखकर्तृक मेवेति तमिममाक्षेप मभिप्रेत्य समाधत्ते — तेजोवारिमृदां यतो विनिमय इति। विनिमयः परस्परं मिश्रीकरणं तेजोवारिमृदां तेजोऽबन्नानां विनिमयः, यतो ब्रह्मणः [67]चतुर्मुखादेरित्यर्थः। अयम्भावः — तावत् त्रिवृत्करणं हि अण्डसृष्ट्यर्थम्। ''नानावीर्याः पृथग्भूता स्ततस्ते संहतिं विना नाशक्नुवन् प्रजाः स्रष्टुमसमागत्य[68] कृत्स्नशः''। (विष्णु. पु. 1-2-52) ''समेत्यान्योऽन्यसंयोगं परस्परसमाश्रयाः'' (विष्णु. पु. 1-2-53)। ''महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति ते'' (विष्णु. पु. 1-2-54) इत्यादिभिः वैष्णवादिवचनैः तस्यावगमात्। अण्डसृष्ट्यनन्तरं चतुर्मुखोत्पत्तिः ''तदण्डमभवद्धैमं तस्मिन् जज्ञे स्वयं ब्रह्मा'' (मनु. स्मृ. 1-9) इति स्मरणात्। एवं चाण्डोत्पत्तेः प्राक्तनं त्रिवृत्करणं परमात्मकर्तृकमेवेति तत्कर्त्रैककर्तृकं नामरूपव्याकरणमपि परमात्मकर्तृकमेवेति, तस्यैव जगत्कारणत्वं, न तु जीवप्रधानयोरिति। तर्हि ''यदग्ने रोहितं रूपम्'' (छान्दो. उ. 6-4-1) इत्यादि त्रिवृत्करणोपदेशपर-श्रुतिविरोध इति चेत् — मैवम्; तत्र ह्यण्डान्तर्वर्ति ष्वग्न्यादिषु न[69] त्रिवृत्कृत भूतकार्यत्वप्रदर्शनाय अग्न्यादीनां भूतत्रयात्मकत्वमात्रं उपदिश्यते। यथा इति पाठे यथा विनिमयः यथायथं विनिमयः। यत इति पूर्वस्मादनुषङ्गः। नन्वेवमपि[70] न ब्रह्मण्युपादानकारणत्वं, तद्धि ''अथ परा यया तदक्षरमधिगम्यते'' (मुण्ड. उ. 1-5) ''निष्क्रियं निष्कलं शान्तं निरवद्यं निरञ्जनम्'' (श्वेता. उ. 6-19) इत्यादिभिः निर्विकार मवगतम्। उपादानकारणत्वं च [71]भाव्यव्यवस्थाविशेष-वतः प्रागवस्थायोगित्वरूपं; तच्च ब्रह्मणि नोपपद्यते, तथा सति ब्रह्मणो विकाराश्रयत्वापत्ते रुक्तश्रुतिविरोधप्रसङ्गा दित्याश-ङ्कामभिप्रेत्याह — यत्र त्रिसर्गो मृषेति। त्रयाणां सत्त्वरजस्तमसां सर्गः; सृज्यत इति सर्गः। कर्मणि घञ्। गुणत्रयसृष्टः प्रपञ्चो यत्र यस्मिन् [72]यत्स्वरूपेण मृषा मिथ्या, नास्तीति यावत्, त्रिसर्गस्य सत्त्वादिगुणगतत्वेन न तस्य ब्रह्मस्वरूपगतत्वमिति विकाराभावात् न [73]निर्विकारश्रुतिविरोध इति भावः।

ननु विकाराश्रयत्वरूपं कारणत्वं निर्विकारत्वं चेत्युभयं परस्परविरुद्धं कथ मेकस्मि न्नुच्यते? इति चेत् — शृणु तावत्; ईश्वरप्रधानयोः स्वरूपभेदः सर्वसिद्धान्तसम्प्रतिपन्नः। तथा जीवेश्वरयोरपि ''क्षरं प्रधान ममृताक्षरं हरः'' ''क्षरात्मानावीशते[74] देव एकः'' (श्वेता. उ. 1-10) ''प्रधानक्षेत्रज्ञपति र्गुणेशः'' (श्वेता. उ. 6-16) ''सकारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः'' (श्वेता. उ. 6-9) ''पतिं विश्वस्यात्मेश्वरं शाश्वतं शिवमच्युतम्'' (म. ना.उ. 9-3) ''ज्ञाज्ञौ[75] द्वावजावीशानीशौ'' (श्वेता. उ. 1-9) ''नित्यो नित्यानां चेतनश्चेतनानाम् एको बहूनां यो विदधाति कामान्'' (कठ. उ. 5-13)। ''भोक्ता भोग्यं प्रेरितारं च मत्वा'' (श्वेता. उ. 1-12) ''तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति''(मुण्ड. उ. 3-1-1) ''पृथगात्मानं प्रेरितारं च मत्वा जुष्ट स्तत स्तेनामृतत्व मेति[76]'' (श्वेता. उ. 1-6) ''अजामेकां लोहितशुक्लकृष्णाम्'' (म. ना. उ. 8-4) इत्यादिभिः [77]स्वरूपस्वभावभेदः श्रावितः। एवं स्वरूपतः स्वभावतश्चात्यन्तविलक्षणयोः कार्यकारणोभयावस्थयोः प्रकृतिपुरुषयोः परमात्मानं प्रति शरीरत्वम् ''यः पृथिव्यां तिष्ठन् य आत्मनि तिष्ठन् योऽव्यक्तमन्तरे सञ्चरन् यस्याव्यक्तं शरीरं योऽक्षरमन्तरे सञ्चरन् यस्याक्षरं शरीरम्'' (बृह. उ. 3-7-3) इत्यादिभिः श्रावितम्। एवं सर्वावस्थावस्थित चिदचिद्वस्तुशरीरतया तत्प्रकारः परमपुरुष एव

कार्यावस्थ कारणावस्थ जगद्रूपेणावस्थितः इतीममर्थं ज्ञापयितुं काश्चन श्रुतयः कार्यावस्थं कारणावस्थं[78] जगत् स एवेत्याहुः।

"सदेव सोम्येदमग्र आसीत्" (छान्दो. उ. 6-2-1) "एकमेवाद्वितीयं" (छान्दो. उ. 6-2-1) "तदैक्षत बहु-स्यां प्रजायेयेति तत्तेजोऽसृजत" (छान्दो. उ. 6-3-2) इत्यारभ्य "सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" (छान्दो. उ. 6-8-4) "ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो" (छान्दो. उ. 6-8-7) इति, तथा "सोऽकामयत बहु स्यां प्रजायेयेति। स तपोऽतप्यत। स तपस्तप्त्वा। इदं सर्वमसृजत" (तैत्ति. उ. 2-6) इत्यारभ्य "सत्यं चानृतं च सत्यमभवत्" (तैत्ति. उ. 2-6) इत्याद्याः। तदेवं भोक्तृभोग्य[79]नियन्तृत्वेन विभक्तस्वभावान् प्रतिपाद्य भोग्यगत मुत्पत्त्यादिकं भोक्तरि जीवे प्रतिषिध्य, तस्य नित्यतां च प्रतिपाद्य, भोग्यभूतप्रधानगतं उत्पत्त्यादिकं भोक्तृगतं च अपुरुषार्थाश्रयत्वं नियन्तरि प्रतिषिद्ध्य, तस्य नियन्तृत्वं[80] सर्वदा सर्वज्ञत्वं सत्यसङ्कल्पत्वं करणाधिपाधिपत्वं विश्वस्य पतित्वं च प्रतिपाद्य, सर्वावस्थावस्थितयोः चिदचितोः तं प्रति शरीरत्वं च तस्य चाऽऽत्मत्वं प्रतिपादितम्। अतः सर्वदा चिदचिद्वस्तुशरीरतया तत्प्रकारं ब्रह्म। तत् कदाचित् स्वस्मात् विभक्तव्यपदेशानर्हातिसूक्ष्म दशापन्न चिद-चिद्वस्तु[81]शरीरं तिष्ठति। तत् कारणावस्थं ब्रह्म कदाचिच्च विभक्तनामरूपस्थूलचिद्[82]वस्तुशरीरम् तच्च कार्यावस्थं, तत्र कारणावस्थस्य कार्यावस्थापत्ता वचिदंशस्य कारणावस्थायां शब्दादिविहीनस्य भोग्यत्वाय शब्दादि[83]सत्तया स्वरूपान्यथा-भावरूपविकारो भवति। चिदंशस्य च सङ्कुचितज्ञानस्य कर्मफलविशेषभोक्तृत्वाय तदनुरूपज्ञान सङ्को[84]-चावकाशात्मक स्वभावान्यथाभावरूपविकारो[85] भवति। उभयप्रकारविशिष्टे नियन्त्रंशे तदवस्थतदुभयविशिष्टतारूपविकारो भवति। कारणावस्थाया अवस्थान्तरापत्तिरूपो विकारः प्रकारद्वये प्रकारिणि च समानः। अत एव एकस्यावस्थान्तरापत्ति-रूप विकारापेक्षया "येनाश्रुतम् श्रुतं" (छान्दो. उ. 6-1-3) इत्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय मृदादिदृष्टान्तः "यथा सोम्यैकेन" (छान्दो. उ. 6-1-6) इत्यादिना दर्शितः। ईदृशज्ञान[87]सङ्कोचविनाशक तत्तद्देह[86]सम्बन्धवियोगाभिप्रायाः जीवस्यो-त्पत्तिमरणवादिन्यः "प्रजापतिः प्रजा असृजत" (तैत्ति. सं. 2-2-1) इत्याद्याः श्रुतयः अचिदंशवत् स्वरूपान्यथात्वा-[88]भावाभिप्रायाः उत्पत्तिप्रतिषेधवादिन्यो नित्यत्ववादिन्यश्च। "न जायते म्रियते" (कठ. उ. 1-18) इत्याद्या "नित्यो नित्यानाम्" (कठ. उ. 5-13) इत्याद्याश्च श्रुतयः स्वरूपान्यथात्वज्ञान सङ्कोचविकासरूपोभयविधानिष्ट-विकाराभावाभिप्रायाः। "निष्क्रियं [90]निष्कलं" (श्वेता. उ. 6-19) "स वा एष महानज आत्मा अजरोऽमृतो [91]ब्रह्म" (बृह. उ. 4-4-25) "नित्यो नित्यानाम्" (कठ. उ. 5-13) इत्याद्याः परमात्मविषयाः श्रुतयः। अतः स्थूलसूक्ष्मचि-[92]दचिद्वस्तुशरीरकं ब्रह्मैव कार्यं कारणं चेति ब्रह्मोपादानं जगत्सूक्ष्मचिदचिद्वस्तुशरीरकम् ब्रह्मैव कारणमिति ब्रह्मोपादानत्वेऽपि, संघातस्योपादानत्वेन चिदचितोर्ब्रह्मणश्च स्वभावासङ्करोऽप्युपपन्नतरः। यथा शुक्लकृष्णरक्त तन्तुसङ्घातो-पादानत्वेऽपि चित्रपटस्य तत्तत्तन्तुप्रदेश एव तत्तच्छौक्ल्यादिसम्बन्ध इति कार्यावस्थायामपि न सर्वत्र वर्णसङ्करः। तथा चिदचिदीश्वरसङ्घातोपादानत्वेऽपि जगतः कार्यावस्थायामपि भोक्तृत्वभोग्यत्वनियन्तृत्वाद्यसङ्करः।

इयांस्तु विशेषः — तन्तूनां पृथक्स्थिति[93]योग्यानामेव पुरुषेच्छया कदाचित्संहतानां कारणत्वं कार्यत्वं च। इह तु चिदचितोः सर्वावस्थयोः परमपुरुषशरीरत्वेन तत्प्रकारतयैव पदार्थत्वात् तत्प्रकारः परमपुरुषः सर्वदा सर्वशब्दवाच्य

इति स्वभावभेदः। तदसङ्करश्च दृष्टान्तदार्ष्टान्तिकयोः तुल्यः। एवञ्च सति परस्य ब्रह्मणः कार्यानुप्रवेशेऽपि स्वरूपान्यथाभावाभावात् अविकृतत्वं उपपन्नतरम्। स्थूलावस्थस्य नामरूपविभागविभक्तस्य चिदचिद्वस्तुन आत्मतयाव-स्थानात् कार्यत्वं उपपन्नतरम्। अवस्थान्तरापत्तिरेव हि कार्यतेति सर्वमनवद्यमिति। तत्र जन्मादीत्यादिना जगदुपादानत्वं, सूक्ष्मचिदचिद्विशिष्टब्रह्मनिष्ठं, "तेने" इत्यादिना "मृषे" त्यन्तेन निमित्तकारणत्वं, विशेष्यभूतशुद्धस्वरूपनिष्ठमिति च सूचितं; शास्त्रप्रवर्तन त्रिवृत्करण नामरूपव्याकरण त्रिसर्गस्रष्टृत्वादेः विशेष्यनिष्ठत्वप्रतीतेः। एवमेकस्यैव ब्रह्मणो विशि-ष्टाकारेण जगदुपादानत्वं शुद्धस्वरूपेण निमित्तकारणत्वं चेत्युभयविधकारणत्वं समर्थितम्। एवञ्च जन्मादिकारणत्वं विशिष्टब्रह्मणो विशेषणभूतं लक्षणं विशुद्धस्वरूपस्य तु [94]उपलक्षणतया लक्षणमित्यवगन्तव्यं; तस्य शुद्धस्वरूपनिष्ठ-त्वाभावस्य "यत्र त्रिसर्गो मृषे" त्यनेनावगतत्वात्। न च तदनिष्ठस्य कथं लक्षणत्वं, तदसाधारणधर्मस्यैव लक्षणत्वादिति वाच्यम्। इतरव्यावृत्तवस्तुप्रत्यायकत्वस्यैव अत्रोपलक्षणत्वेन विवक्षितत्वात्, जगत्कारणत्वस्य शुद्धस्वरूप[95]-निष्ठस्यापि तदुपलक्षणतया सकलेतरव्यावृत्तत्वेन ब्रह्मप्रत्यायकत्वसम्भवात्। न च तस्य शुद्धस्वरूपोपलक्षण[96]त्वमपि न स-म्भवति, तस्य तदवृत्तित्वादिति वाच्यम्। तटस्थस्यापि शाखाग्रत्वस्य चन्द्रोपलक्षकत्वदर्शनात् विशेष्यनिष्ठत्वानिष्ठत्वाभ्यां वि-शेषणत्वोपलक्षणत्वयोः भेदः। ततश्च कारणत्वस्य ब्रह्मनिष्ठतया विशेषणत्वं, प्रपञ्चगतजन्मादेस्तु ब्रह्मस्वरूपानिष्ठतया उपलक्षणत्वमिति विभावनीयम्। "यत्र त्रिसर्गो मृषा" इत्यनेनोपादानत्व[97]प्रयुक्ताचिद्गतदोषो निवारितः। अथ चेतनगतं भ्रान्त्यादिक मन्यच्च सर्वमवद्यं नेति वदन् चिदचिद्व्यावृत्तं ब्रह्मस्वरूपं शोधयन् विशिनष्टि — धाम्नेति। ननु जगज्जन्मादिकारणत्वलक्षणेनैव सकलेतरवस्तुव्यावृत्तिः सिद्धेति किमनेन प्रयत्नेनेति चेत् न। जगज्जन्मादिकारणत्वैः अकारणत्वव्यावृत्तिसिद्धावपि जीवजडजातीयत्वशङ्का स्यादेव, कम्बुग्रीवादिमत्त्वरूप संस्थानविशेषवत्त्वादिना पटादिव्यावृत्तघ-टादेः गन्धवत्त्वादिना तज्जातीयत्वदर्शनात्, अबादेः तदभावेन तच्छङ्कानिवृत्तिदर्शनात्। अतः तन्निवृत्त्यर्थं धाम्नेत्यादिवि-शेषणानि। ननु संस्थानविशेषो हि घटपटादिभ्य एव व्यावर्तयति, न तु पृथिवीमात्रात् पटस्यापि पृथिवीत्वात्। एवञ्च संस्थानादिकं येभ्यः पटादिभ्यो व्यावर्तयति तद्विजातीयत्वमपि तेनैव सिद्धम्; अबादेरपि पृथिवीमात्रव्यावर्तकाप्त्वा-दियोगादेव हि[98] पृथिवीजातीयात् संस्थानादिना वैजात्यं न सिध्यति, तस्मात् व्यावर्तकत्वमपि संस्थानादेर्नास्ति; प्रकृते तु कारणत्वं जीवादिभ्यो ब्रह्म व्यावर्तयतीति कथं तेनाकारणेभ्यो जीवादिभ्यो वैजात्यं तदन्तर्भावायोग्यत्वा[99]दिस्वरूपं न सिध्येत्? तदनिष्ठजातियोगित्वं तु धाम्ना निरस्तकुहकत्वादिना लक्षणान्तरेणापि न सिध्यति, कारणत्ववन्निरुपाधिकधामनि-रस्तकुहकत्वादेरपि अजातिरूपत्वात्। तस्माद्धाम निरस्तकुहकत्वादिवत् कारणत्वमपि स्वेतरसर्वव्यावर्तकमिति चेत् — उच्यते; वैजात्यं हि तद्वृत्तिधर्मयोगराहित्यम्। तच्च व्यावृत्तिबोधककारणत्वबलान्न सिध्यति। न हि [100]धर्मभेदग्राहकसामग्र्येव तद्धर्माभावग्राहिका, किन्तु सूक्ष्मचिदचिद्विशिष्टस्य ब्रह्मणो लक्षणमिदं जगज्जन्मादिकारणत्वमिति। ततो विशिष्टस्येतरव्यावृत्ति तद्वैजात्यसिद्धावपि केवले विशेष्यस्य वि[101]शेषणभूतचिदचित्साजात्यशङ्कायां तद्वारणार्थं धाम निर-स्तकुहकत्वादिकं स्वरूपलक्षणम्। वस्तुतस्तु "यतो वा" (तैति. उ. 3-1) इत्यादि श्रुत्या ब्रह्मण्युपादानत्वस्याप्यवगमात् तस्य च मृदादौ विकारादौ दोषसहचरितत्वदर्शनात् ब्रह्मण्यपि तत्प्रयुक्तदोष[102]शङ्कावारणार्थं निरुपाधिक-धाम-निरस्तकुहक-त्वादि विशेषणत्रयमिति न तद्वैयर्थ्यशङ्केति।

अत्र "धाम्ने" त्यादिविशेषणत्रयेण "सत्यं ज्ञानमनन्तम्" (तैत्ति. उ. 2-1) इति श्रुत्युक्तं विशेषणत्रयं प्रत्यभिज्ञाप्यते; "धाम" पदेन ज्ञानपदस्य "पर" पदेनाधिक्यवाचिनाऽनन्तपदस्य "सत्य" पदेन तस्य च प्रत्यभिज्ञानात्। धाम्ना तेजसा नित्यासङ्कुचितज्ञानरूपेण स्वेन स्वाभाविकेन निरुपाधिकेनेति यावत्।[103] निरस्तकुहकं वञ्चकविषयभूतं[104] वस्त्विति यावत्। तद्यस्य तं नित्यनिरुपाधिकासङ्कुचित धर्मभूतज्ञानेनावगतवस्तुरहितमित्यर्थः। अनेन मुक्तजीवा व्यावृत्ताः। तेषां[105] भक्तिदशायां असङ्कुचितज्ञानत्वेऽपि तस्य परमात्मप्रसादायत्तत्वेन सोपाधिकत्वात् बद्धदशायां अभावेन नित्यत्वाभावाच्च "सत्य" पदं निरुपाधिकसत्तायोगिकं[106] परमपुरुषमाह। तेन विकारास्पदमचेतनं तत्संसृष्टचेतनश्च व्यावृत्तः, नामान्तरभ[107]ञ्जनार्हावस्थान्तरयोगेन तयोर्निरुपाधिकस[108]त्तायोगरहितत्वात्। परशब्दोऽधिकवाची संस्थानप्रमाणादपरिच्छिन्नाधिक्यपरः, अनन्तमित्यर्थः। आनन्त्यं चात्र देशकालवस्तुपरिच्छेदरहितत्वरूपम्। तच्च सगुणत्वात् स्वरूपस्य स्वरूपेण गुणैश्चाभिप्रेतम्। अनेन पूर्वपदद्वयव्यावृत्त कोटिद्वयविलक्षणाः सातिशयस्वरूपस्वगुणा नित्यसिद्धा व्यावृत्ताः; विशेषणानां व्यावर्तकत्वात्। सत्यादिवाक्यस्यात्र प्रत्यभिज्ञानादेव विशेष्यसमर्पकं ब्रह्मपदमध्याह्रियते। एवं च जगज्जन्मादिना लक्षणेनावगतस्वरूपं ब्रह्म सकलेतरवस्तुविजातीयमिति लभ्यम्। तत्र देशपरिच्छेदो नाम सर्वदेशावर्तित्वरूपः। इदमत्र भवति, अत्र तु न भवतीत्येवंविधः। कालपरिच्छेदस्त्विदमिदानीं भवति इदनीं तु न भवतीत्येवंविधः। वस्तुपरिच्छेदो नाम सर्ववस्तुसा[109]मानाधिकरण्याभावः; स्वापेक्षया उत्कृष्टवस्तुसद्भावो वा तदभावो वस्तुपरिच्छेदराहित्यम्। तत्राऽऽद्ये वस्तुपरिच्छेदराहित्यं ब्रह्मस्वरूपस्यैव, न तु तद्गुणानां; तत्स्वरूपस्य सर्ववस्तुशरीरकत्वेन सर्ववस्तुसामानाधिकरण्यसत्त्वेऽपि तद्गुणानामसम्भवात्। द्वितीये[110] तद्गुणानामपि तत्संभवति, ब्रह्मगुणापेक्षया उत्कृष्टगुणानां अभावात् — इति विवेकः। सामानाधिकरण्यञ्च द्विविधं — शब्दसामानाधिकरण्यं अर्थसामानाधिकरण्यं चेति। तत्र शब्दसामानाधिकरण्यं नाम भिन्नप्रवृत्तिनिमित्तानामेकस्मिन् विशेष्ये पर्यवसा[111]न मभिधान मित्यर्थः; यथा नीलोत्पलशब्दयोः। अर्थसामानाधिकरण्यं तु भिन्नार्थानामेकस्मिन्नर्थे वृत्तिः; यथा नी[112]लत्वोत्पलत्वादीनाम्। अत्र विशेष्यसमर्पणायाध्याहृतो ब्रह्मशब्दः स्वभावतो निरस्तनिखिलदोषं अनवधिकातिशयासंख्येय कल्याणगुणगणं पुरुषोत्तम माह। तथा च अभाषि भगवद्भिः श्रीरामानुजमुनिभिः — "ब्रह्मशब्देन च स्वभावतो निरस्तनिखिलदोषोऽनवधिकातिशयासंख्येय कल्याणगुणगणः पुरुषोत्तमोऽभिधीयते।[113] बृहत्त्वगुणयोगेन हि ब्रह्मशब्दः।[114] बृहत्त्वञ्च स्वरूपेण गुणैश्च यत्राऽनवधिकातिशयं सोऽस्य मुख्योऽर्थः" (श्रीभाष्यं 1-1-1. अवतारिकायां) इति। तत्र स्वरूपेण गुणैश्च निरतिशय[115]बृहत्त्वं ब्रह्मशब्दप्रवृत्तिनिमित्तं; "स्वभावत" इत्यादिविशेषणद्वयं तु "ब्रह्म" शब्दस्य पुरुषोत्तमपरत्वप्रतिपादनोपयोगितयोक्तं, न तु प्रवृत्तिनिमित्ततया। बृहत्त्वस्य निरतिशयत्वं नाम आनन्त्यम्। ननु "[116]बृंहति बृंहयति तस्मादुच्यते परं ब्रह्म" "बृहत्त्वाद् बृंहणत्वाच्च तद्ब्रह्मेत्यभिधीयते" (विष्णु. पु. 3-3-22) इति श्रुतिस्मृतिभ्यां बृहत्त्वबृंहणत्वे उभे च प्रवृत्तिनिमित्ततयावगते, कथमिह बृहत्त्वमात्रं प्रवृत्तिनिमित्तमुच्यते? गुणतो बृहत्त्वे बृंहणत्वस्याप्यन्तर्गतत्वादिति भावः। "स चाऽऽनन्त्याय कल्पते" (श्वेता. उ. 5-9) इति श्रुतिप्रसिद्धं सकलसङ्कोचनिवृत्तिपूर्वक निरवधिकज्ञान विकासरूपानन्त्यावहत्वं हि बृंहणत्वं, तद्धि सकलहेयप्रत्यनीकत्व क्षान्तिकारुण्यादि मोक्षप्रदत्वौपयिकगुणवत्त्वं, ब्रह्मशब्दश्च योगरूढिभ्यां श्रीनिवासमभिधत्ते। तथा च स्मर्यते श्रीमति गारुडे पुराणे — "वेदे भूरिप्रयोगाच्च गुणयोगाच्च शार्ङ्गिणि।[117] तस्मिन्नेव ब्रह्मशब्दो मुख्यवृत्तो

महामुने।" इत्यारभ्य "यस्मिन् प्रयुज्यमाने तु गुणयोगः सुपुष्कलः। तत्रैव मुख्यवृत्तोऽयमन्यत्रह्युपचारतः" इति। अनेन जगत्कारणभूतवस्तुविशेषजिज्ञासायां देवताविशेषावगमश्च सिद्धः। उक्तप्रकारेण सर्वविलक्षणं श्रियः पतिं धीमहि उपासिषीमहीत्यर्थः। धियं कुर्या[118]मेति विग्रहे धीशब्दात् "तत्करोति" (चुरादि. गणसूत्रं. 204) इति णिचीष्ठवद्भावात्। "प्रकृत्यैकाच्" (अष्टा. 6-4-163) इति प्रकृतिभावात् टिलोपाभावे तस्मादाशिषि लिङि "णिचश्च" (अष्टा. 1-3-74) इत्यात्मनेपदे आगमशास्त्रस्य अनित्यत्वात् आर्षत्वा[119]द्वा सीयुडिटोरभावे "णेरनिटि" (अष्टा. 6-4-51) इति णिलोपे च "धीमही" ति रूपम्। वेदनोपासन ध्रुवानुस्मृति चिन्तास्मृतिभक्त्यादिशब्दपर्यायस्य धीशब्दस्य ध्यानमर्थः, लिङ्स्तु, अलभ्यलिप्सारूपा आशीः। अनेन "आशीर्नमस्क्रिया वस्तुनिर्देशोवा" (काव्या. 1-14) इत्यभियुक्तोक्ताशीश्च कृता भवति। अत्र उक्तविशेषणविशिष्टस्य ध्येयस्य ब्रह्मणो ध्यातुः स्वस्मादुत्कृष्टत्वावगमात् स्वस्य च ततोऽपकृष्टत्वावगमात् प्रह्वीभावावगमात् नमस्क्रियाऽपि कृता भवति। पूर्वद्विकप्रतिपाद्यार्थरूप वस्तुसङ्ग्रहस्तु "जन्मादी" त्यादिना "विनिमय" इत्यन्तेन कृतः पुरस्तादेव दर्शितः। "यत्र त्रिसर्गो मृषे" त्यनेन प्रकृतिपुरुषगतदोषप्रसङ्गपरिहारपरेण जीवदोषकीर्तनपर तार्तीयप्रथमपादार्थः, "तेन सत्य" मित्यादिविशेषणेन च उभयलिङ्गपादार्थश्च निर्दिष्टः। धामनिरस्तकुहकत्वाद्यनेक गुणविशिष्टब्रह्मणो ध्येयत्वोक्त्या गुणोपसंहारपादार्थश्च सूचितः। "धीमही" त्युक्तस्य उपासनस्य अनेकसाधनत्वापेक्षत्वप्रसिद्ध्या अङ्गपादार्थश्च सूचितः। अध्याहृत ब्रह्मशब्दप्रवृत्तिनिमित्तभूत बृहत्त्वान्तर्भूत बृंहणत्वेन अभिप्रेतेन तुरीयफलाध्यायार्थश्च सूचितः। एवमभियुक्ताभिमतं त्रिविधं मङ्गलं [120]मनसाऽपि कर्तुं शक्यमपि शिष्यशिक्षायै ग्रन्थादौ शब्दतोऽपि कृतमि त्यवगन्तव्यम्। "यत्र त्रिसर्गो मृषा धाम्ना" त्यादिना "परम्" इत्यन्तेन निरस्तनिखिलदोषत्व कल्याणगुणाकरत्व कीर्तनात् सगुणनिर्गुणश्रुत्योः विषयभेदश्च दर्शितः॥ १॥

---

1. B °वेद्य° 2. B °च्चा° 3. B तथा 4. W °भवान् 5. B °गुणेन परेण 6. B °प्रति° 7. B,W add तत् 8. B,W °प्रवृत्तकर्मा° 9. A,B °भ्यः प्रति° 10. A,B °ख्याय्य 11. B °मर्लचिकीर्षुः 12. W °श्रीसूक्तेश्च 13. W तच्चा° 14. W °व्यास° 15. W °णः 16. W °वादश्च 17. B °रर्थश्च 18. W °श्च 19. B omits °हेतुत्व° 20. W °त्येकैकं 21. B,W omit तदेव 22. B °ष्टा° 23. W °त्वदनु° 24. B,W °दि° 25. B °दृष्टः 26. W adds °कारण° 27. W °लाभात् 28. W adds अर्थेषु 29. W अ° 30. W तद्वदुभय° 31. W °दानत्व° 32. W एक° 33. W कृत्स्न° 34. B तद्भाव° 35. A,B ज्ञातौ 36. B ब्रह्मणो; W ब्रह्म न 37. B omits °रूप° 38. A °करणार्थदत्र B °करणार्थस्तु अर्थादत्र 39. W °करणस्य लक्षणाक्षेप° 40. B अस्मिन्नेकस्मि° 41. B °द्भगवद्भिरनन्ता योगिनः कल्पिताः 42. A,B सर्व° 43. W °कर्तृकं 44. B साध्या 45. W घटपटादिषु 46. B °मप्राप्तत्वात् 47. W adds स्वर्गादिषु 48. W adds पुरुषार्थत्व° 49. B,W add कं ब्रह्म 50. A,B °षः 51. W कारणत्वोपयुक्तसार्वज्ञ्यादि° 52. W adds कर्मवश्यः 53. B °त्वादिक° 54. B अप्रयोजन° 55. B सर्गे 56. B,W °ग्रहेण 57. B adds ब्रह्मणे 58. W adds °रूप स्व° 59. W °तार्थमे° 60. W तत्र 61. B °गमान् 62. W °भाव्यमान 63. A omits °रूपो .... व्यवच्छेद° 64. W अत्रेदं 65. B त्रिकृतं त्रिकृत्त°; W त्रिवृतं त्रिवृत° 66. W °द्रूपम् 67. W न तत् चतुर्मुखादित्यर्थः 68. W °गम्य 69. W adds त्रिवृत्करणप्रदर्शनं किन्तु श्वेतकेतोः शुश्रूषोः अण्डान्तर्वर्तित्वेन तस्य बहिष्ठवस्तुषु त्रिवृत्करणप्रदर्शनायोगात्। त्रिवृत्कृतानां भूतानां कार्यभूतेष्वग्न्यादिषु 70. W °मपि ब्रह्मोपादानकारणं 71. B,W °व्यवस्था° 72. B,W °रूपे 73. B निर्गुण° 74. B °त्मनि विशते 75. A ज्ञातौ 76. B °मस्ति 77. W adds श्रुतिभिः 78. W adds च 79. W °नियन्तॄन् 80. B,W add निरवद्यत्वं 81. B शरीरे 82. B,W °चिदचिद्वस्तु 83. W °मतया 84. B °सङ्कोचविकाशा°; W °विकासात्मक° 85. B °रोऽन्यथा 86. W उभयत्र 87. B,W omit °ज्ञान° 88. B °विकाशकर°; W °विकासकर° 89. A,B

°भावाभावाभिप्राया 90. A,B निष्फलं 91. W omits ब्रह्म 92. W °चिदचित्प्रकारकं 93. W °विस्थतानामेव 94. B उभयल° 95. B,W °पा° 96. W °क° 97. W omits °त्व° 98. B,W add पृथिवी वैजात्यं यस्मात् 99. B °त्वरूपं निषिद्ध्येत् 100. W धर्मि° 101. W विशेष° 102. B °सङ्कोच° 103. B निरस्तं 104. W °मविषय° 105. B,W मुक्ति° 106. B °योगिनं 107. W °भजनावस्था 108. B °साक्षि° 109. B समानाधिकरणा° 110. W adds तु 111. B °सायिना अभि° 112. W नीलोत्पलादीनाम् 113. B ब्रह्मत्व° 114. B ब्रह्मत्वञ्च 115. B °ब्रह्मत्वं 116. A,B बृंहति 117. B शार्ङ्गिणा 118. B,W °स्मेति 119. W °भावात् 120. W मनसा

श्री गणेशाय नमः ।

श्री वेदव्यासाय नमः ।

श्री गुरुभ्यो नमः ।

श्री लक्ष्मीनारायणाय नमः ।

ओं नमो नारायणाय ।

# श्रीमदानन्दतीर्थभगवत्पादाचार्येभ्यो नमः ।

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

यतो जन्माद्यस्य श्रुतिसुनयमानैकविषयात्
स्वतन्त्रस्तन्त्रज्ञो गुरुरपि गुरोर्यश्च जगताम् ।
विमूढा यत्तत्त्वं प्रकटमिह वेत्तुं सुमनसो
मुकुन्दं ध्यायामा[1]पहतकुहकं तं स्वमहसा ॥ १ ॥

त्रिसर्गो यत्रायं लसति चिदचिद्विष्णुविषयो
ऽ[2]नलोके नानेयं विकृतिरिव तेजोजलमृदाम् ।
विशुद्धं चैतन्यं प्रकृतिविकलं यश्च[3] विततं
परं ब्रह्मात्मानं स्मर हृदय सत्यं गुरुतमम् ॥ २ ॥

यदीयकृति रञ्जसा सुमनसां सुमानं सतां
सती सकलसन्नता सकलवेदवाणीनिधिः ।
स चित्सुखपयोनिधिः सरसिजेक्षणः श्रीपतिः
पराशरशरीरजः शरणमस्तु मे सन्ततम् ॥ ३ ॥

मम वचसि मङ्गलदेवता प्रणयतर्तिं[4] सन्निदधात्वियम् ।
विलसदुरसीव मधुद्विषः कमलवनमध्य इवान्वहम् ॥ ४ ॥

जयति जनकः शम्भो रम्भोजनाभसुताग्रणीः
प्रथमकवीनां मुख्यो यः सर्वजीवन नायकः ।
श्रुतिवितता वाग् यस्य ब्राह्मी प्रमाण मनाकुलं
परमविषये सम्यक् प्रेक्षावतां न मृषा क्वचित् ॥ ५ ॥

हिमकरलसद्बिम्बद्योतः सुधारसजित्वरीं
स मम सुदृशं देया दानन्दतीर्थमहामुनिः ।

मणिगणवराः शाणोल्लीढा इवाधिसमुत्त्विषः
शमदमगुणा यत्रोल्लसन्ति सन्तत मेधसि ॥ ६ ॥

चरणनलिने दैत्याराते [5]र्भवार्णवान्तरसत्तरीम् ।
दिशतु विशदां भक्तिं मह्यं महेन्द्रतीर्थयतीश्वरः ॥ ७ ॥

क्व शब्दः क्वाभ्यासः श्रुतिरपि गुरोः क्वाग्रसरणीः
समीक्षा पौराणी क्व खलु विबुधा मत्सरधियः ।
तथाऽपि व्यामोहात् [6]गुरुगुरुकटाक्षैकशरणो
मनाक् व्याकुर्वेऽहं भागवतपुराणं प्रगहनम् ॥ ८ ॥

आचार्यैरपरैरपि [7]प्रविवृते मार्गे मनश्चोदितां
खद्योतस्तपनप्रकाशितपदे किं तत्र कुर्यादिति ।
तन्मार्गानुगमेन वाक्तनुमनःशुद्धिक्रियायै ततः
श्रीमद्भागवतं पुराणमतुलं व्याकर्तु[8]कामो यते ॥ ९ ॥

तदस्यां पद्यायां झटिति कृतयात्रे मयि कृपां
महान्तः कुर्वन्तो दिवि भुवि वसन्तः सदयनाः ।
निरस्तासूया ये परमपदभक्तिक्षितिधरो-
द्वहप्रह्वग्रीवा विपुलकरुणाः सर्वसुहृदः ॥ १० ॥

आनन्दतीर्थविजयतीर्थौ प्रणम्य मस्करिवरवन्द्यौ ।
तयोः [9]कृतिं स्फुटमुपजीव्य प्रवच्मि भागवतपुराणम् ॥

अथ कलिमलापनुत्तये विधिभवपुरस्सरैः अमरवरैः आदरात् प्रार्थितो दितिसुतबलभर परिखिन्नधरणितले चिरसमयसमाचीर्ण[10]तपसा सत्यवत्यां पराशरादवतीर्णो व्यासनामा मुरमथनः समुद्धृतसमुत्सन्न निगमकल्पतरुः अल्पमतिमनुजदयालुः शाखोपशाखाभेदेन विभक्तवेद स्तदर्थनिर्णयेच्छु र्विरचितब्रह्मसूत्र स्तदनधिकारिजनापवर्गाय प्रकाशित पुराणसंहितो वेदान्तार्थप्रकाशिकां द्वादशस्कन्धसम्मितां अष्टादशसहस्रसङ्ख्योपेतां भागवतपुराणसंहितां चिकीर्षुः[11] कालदोषेण [12]पिहितान् भागवतधर्मा नाविश्चिकीर्षु र्निरन्तराप[13]रोक्षितब्रह्मस्वरूपो निरन्तरायोऽपि प्रेक्षावच्छिक्षायै मङ्गलाचरणाना मनेकप्रयोजनाय च सर्वेष्टदेवतां नारायणाख्या मनुस्मरति जन्माद्यस्य यत इति। अत्र यच्छब्दश्रुते स्तच्छब्दोऽध्याहार्यः। अस्य जगतो जन्मादि यतः, यश्चार्थे ष्वभिज्ञः, यश्च स्वराट्, यश्च ब्रह्म हृदा आदिकवये तेने, यं प्रति सूरयो मुह्यन्ति, तेजोवारिमृदां विनिमयो यथा तथा त्रिसर्गोऽपि यत्र मृषा तं स्वेन धाम्ना सदा निरस्तकुहकं सत्यं परं धीमहीति समस्तान्वयः।

तत्र प्रथमं परं धीमहीति व्यस्तान्वयः; पश्चा दाकाङ्क्षाव[14]शादितः **सर्वेषा मन्वयः। परं पूर्णं गुणैरिति** शेषः। "पॄ पालनपूरणयोः" इति धातोः। द्विविधा हि देवता ग्रन्थार[15]म्भे नमस्कारादिमङ्गलक्रिया मर्हति आधिकारिकी, अभीष्टा चेति। यथा ज्योतिश्शास्त्रे सूर्यादिग्रहलक्षणदेवताऽऽधिकारिकी नमनादिक्रियार्हा परमप्रेमादिविषया ह्यभीष्टा चेति। भगवां स्तूभयरूप इत्यभिप्रायेण "पर" मित्युक्तम्। परमात्मा हि सकलप्राणिनां संसारोन्मूलनायास्मिन् शास्त्रे प्रतिपाद्यते। "तदेतत् प्रेयः पुत्रात् प्रेयो वित्तात् प्रेयोऽन्यस्मा त्सर्वस्मा दन्तरं य दयमात्मा" (बृह. उ. 1-4-8) इति श्रुतेः, स एव परमप्रेमविषयः; परोऽपि नारायण एव नान्यः कश्चित्। "यदेतत् परमं ब्रह्म वेदवादेषु पठ्यते। स देवः पुण्डरीकाक्षः स्वयं नारायणः परः॥" इति हरिवंशे सत्यतपःप्रश्नोत्तरत्वेन दुर्वाससः प्रतिवचने परस्य नारायणत्वोक्तेः। "ब्रह्मवि दाप्नोति परम्" (तैत्ति. उ. 2-1) इति श्रुतेश्च। "धीमहि" ध्यायेम। "जन्माद्यस्य यत" इत्यादिविशेषणैः परशब्दोक्तान् गुणान् विशिनष्टि। पालनपूरणाभ्यां यथासम्भवं सृष्ट्यादयो वाच्या इत्यूहनीयम्। अलौकिकवस्तुनो लक्षणोपदेशमन्तरेण ज्ञातु मशक्यत्वात् शशविषाणकल्पं तदि त्यतो वा लक्षण माह जन्माद्यस्य यत इति। अस्य प्रत्यक्षस्य जगतो जन्म आदिर्यस्य तत्, जन्मादि इति तद्गुणसंविज्ञानो बहुव्रीहिः, यतो यस्मात् भवतीति शेषः। आदिशब्देन स्थितिसंहारनियमन ज्ञानाज्ञान बन्धमोक्षा गृह्यन्ते, न केवलं स्थितिसंहारौ, श्रुतिस्मृतिविरोधात्। यथा सास्नादिमान् गौ[16] रिति वृद्धोपदिष्टसास्नादिमन्तं पदार्थ मश्वादिभ्यो व्यावृत्तं गोशब्दवाच्यं प्रत्येति; तथा जगज्जन्मादिकारणं पर मिति श्रुत्याचार्योपदिष्टं जन्मादिकं प्रत्येकं परब्रह्मलक्षणतया ज्ञातव्यं, वेदान्तसूत्रेषु प्रतिपादितत्वात्। ननु परस्य जन्मादिकारणत्वं कुत इति तत्राऽऽहुः — अन्वयादिति। "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति" (तैत्ति. उ. 3-1) इत्यादिश्रुतीनां, "अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते।" (भ. गी. 10-8) "स्रष्टा पाता तथैवात्ता निखिलस्यैक एव तु" इत्यादिस्मृतीनां च जगत्कारणे हरा वन्वयात् उपक्रमोपसंहारादि तात्पर्यलिङ्गात् परं ब्रह्मैव जगत्कारणं नान्यत् इति भावः। ननु रुद्रादीना[17]मपि जगज्जन्मादिकारणत्वं श्रूयते, अतः कथं परस्यैवेत्यवधार्यते? उच्यते। यद्यपि रुद्रादीनां वेदैकदेशप्रतिपाद्यत्व मस्ति, तथाऽप्यनन्तवेद कदम्बप्रतिपादितत्वं विष्णोरेव, "सर्वे वेदा यत्पद मामनन्ति" (कठ. उ. 2-15) "वेदैश्च सर्वै रहमेव वेद्यः" (भ. गी. 15-15) इत्यादिश्रुतिस्मृतिभ्यः। ननु श्रुत्यादेः पिपीलिकादिलिपिवत् अप्रमाणत्वा न्माणवक दृष्टशार्दूलकल्पनेन तन्निश्चयाभावात्। अतः परमाणुपुञ्जस्यैव कारणत्व मिति तत्राह इतरत इति। प्रत्यक्षागमाभ्या मनुगृहीता दितरस्मात् तर्कात् परब्रह्मणः कारणत्वं ज्ञायते, "समुदाय उभयहेतुकोऽपि तदप्राप्तिः" (ब्र. सू. 2-2-18) इति भगवता कृष्णद्वैपायनेन परमाणुपुञ्जवादस्य निरस्तत्वात्। अत्र श्रुत्याद्यनुगृहीततर्काभावात् केवलतर्कस्य अप्रतिष्ठितत्वात्। ननु, कार्यं कारणपूर्वकं कार्यत्वा दिति कारणसामान्यमात्रं सिद्धं, विशेषतः कुतः सिद्धि रिति चेत् — सत्यम्, प्रधानादे रचेतनत्वेन बुद्धिपूर्वककर्तृत्वानुपपत्ते रस्वातन्त्र्याच्च, क्षित्यादे श्चेतनकर्तृकत्वं परिशेषसिद्धं, चेतनाद्धि पित्रादेः पुत्राद्युत्पत्तिदर्शनात् तद्दृष्टान्तेन ब्रह्मादिचेतनजातं परमचेतनाद्विष्णो रुत्पद्यत इति सुशकोऽयं तर्कः समुत्तिष्ठते। चशब्दः समुच्चये, वेदाना मपौरुषेयत्वेन कर्तृप्रसिद्ध्यभावा दसन्दिग्धप्रमाणत्वे[18] तदनुगृहीततर्कस्यापि प्रतितर्कपराहति र्नाशङ्कनीये त्यस्मिन्नर्थे वा। अनेन "अथातो ब्रह्मजिज्ञासा," (ब्र. सू. 1-1-1) "जन्माद्यस्य यतः" (ब्र. सू. 1-1-2), "शास्त्रयोनित्वात्" (ब्र. सू. 1-1-3), "तत्तु समन्वयात्" (ब्र. सू. 1-1-4) इति चतुस्सूत्री च

व्याख्याता। जिज्ञासैव धीमही त्यनेनोच्यते, वेदविचारनिर्णीत गुणोपसंहाररूपत्वात्। इयानेव विशेषः — ध्यानमेव ज्ञानसाधनं, न कर्मादिक मित्यतो 'धीमही' तिपदं कर्मणः शुद्धान्तःकरणस्य ध्यानसम्भवा दिति। यस्तु श्रुतिस्मृती अनादृत्य केवलतर्केण ब्रह्मणो जन्मादिकारणत्वं विघटय्य प्रत्यवतिष्ठते सोऽन्वयव्यतिरेकात्मक तर्केणापहसितव्य इत्यतो वाऽऽह अन्वयादितरत इति। अन्वयात् अन्वयानुमानात्, इतरतो व्यतिरेकानुमानात् ते च दर्शिते। चशब्द-स्तूक्ततर्कस्य केवलस्य व्याप्तिशून्यत्वा दस्य च प्रत्यक्षगृहीतव्याप्तिकत्वेन बलीयस्त्वा दप्रतिहतः स्वार्थं साधयतीत्येतस्मिन्नर्थे वर्तते। ननु यथा पयोम्ब्वादे रचेतनस्य स्पन्दनादिप्रवृत्तिदर्शनात् तन्निदर्शनेन प्रधानस्य कारणत्वं किं न स्यादिति तत्राऽऽह — अर्थेष्विति। अर्थेषु घटपटादिषु अभितः सर्वतो[19]ऽशेषविशेषाकारेण जानाती त्यभिज्ञः। प्रधानस्य जडत्वेन ज्ञानाश्रयत्वलक्षणासम्भवा न्नितरां न सर्वज्ञत्वं, विष्णोस्तु सर्वज्ञत्वं श्रुतिस्मृतिसिद्धम्। "यः सर्वज्ञः (स) सर्ववित्," (मुण्ड. उ. 2-2-7) "तान्यहं बेद सर्वाणि न त्वं वेत्थ परन्तप" (भ. गी. 4-5) इत्यादि। नन्वस्य हेतोः सर्वज्ञे रुद्रादावपि वृत्ते रसाधकत्व मिति तत्राह — स्वराडिति। स्वयमेव राजत इति स्वराट्, स्वस्य स्वयमेव राजा नान्योऽधिपति रिति वा। अयं भावः — "यं कामये तं त मुग्रं कृणोमि" (अम्भ्रणीसूक्तम्) इति रुद्रादीनां श्रीप्रसादायत्त ज्ञानादिगुणक्त्वदर्शनात्, "मम योनि रप्स्वन्तः" (देव्युप. 4), (अम्भ्रणीसूक्तम्) इति श्रियश्च विष्ण्वनुगृहीत ज्ञानादिमत्त्वदर्शनात् विष्णो स्त्वनन्याधीन ज्ञानादिगुणवत्त्वात्, तद्गतानां विशेषाणां अनन्तानां तै रज्ञातत्वा न्न तेषां निरुपचरितसर्वज्ञत्वम्, अतो नान्येषु तस्य हेतो र्व्यभिचार इति स एव सर्वकर्तेति। "न ते विष्णो जायमानः स एष सर्वेश्वर एष भूताधिपतिः" (वृद्ध. हा. सं. 8-247) इत्यादिश्रुति रनन्याधिपतित्वे सर्वाधिपत्ये च मानं; स्रष्टृराजान्तररहित इति वा स्वराट्; स्वात्मानं स्वयमेव राजयति प्रकाशयति न परेच्छयेति वा।

ननु, श्रुतीना मनन्तत्वा देकत्र हरे रन्याधीनत्वकथनसम्भवा दतः कुतो निश्चयः? परो नान्याधीन इति तत्राऽऽह — तेने इति। यः पर आदिकवये चतुर्मुखाय ब्रह्म साङ्गं वेदं हृदा स्नेहेन तेने विस्तारितवान्, तस्य सकृदुपदेशमात्रेण अशेषविशेष ग्रहणसामर्थ्येऽपि "वक्तव्यं ब्रह्म गुरुणा चतुर्वार मथापि वा" इत्युपदेशशास्त्र मनुसृत्य तेन इत्युक्तम्। शिष्यशिक्षायै तथोपदेशसम्भवात् चतुर्मुखस्य वेदोपदेशेन हरे रनन्याधिपतित्वस्य कि मायात मिति चेत् — न; "प्रजापते नत्वदेता न्यन्यो विश्वा जातानि परिता बभूव" (ऋ. सं. 10-121-10) इति श्रुतौ चतुर्मुखस्य निरतिशयमाहात्म्यकथना त्तदुपदेशा त्तस्य अनन्याधिपतित्वसिद्धेः। "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" (श्वेता. उ. 6-18) इति श्रुतेः सकलवेदविद्योपदेशोऽपि सिद्धः। आदिकवित्वञ्च ब्रह्मणः "कवि र्यः पुत्रः स इमा चिकेत" (ऋ. सं. 1-164-16) इत्यादिश्रुतिसिद्धम्। "ब्रह्म[20] वेद स्तप स्तत्त्वं ब्रह्मा विप्रः प्रजापतिः" (अम. को. 3-271) इत्यभिधानम्। "हृत् स्नेहे मनसि स्निग्धे सुहृद्बन्धौ हरावपि" इति च। न प्रहेलिकाव दुपदेश इति द्योतनाय हृदेत्युक्तम्। तेने ब्रह्मेति सर्वज्ञत्वे यु[21]क्त्यन्तरं वा। सकलचेतनराश्युत्तमस्य चतुराननस्योपदेष्टुः शार्ङ्गपाणेः सर्वज्ञत्वं न्यायप्राप्त मिति भावः। "वेदाह मेतं पुरुषं महान्तम्। आदित्यवर्णं तमसः परस्तात्।" (पु. सू. 2-1) इति श्रुतौ नारायणविषयज्ञाने स्वातन्त्र्यकथना त्तदुपदिष्टज्ञानेनैव तज्ज्ञानं कथं सङ्गच्छत इत्याशङ्क्य "यमेवैष वृणुते तेन लभ्यः" (कठ. उ. 2-22) इति श्रुतेः। तत्प्रसादायत्तज्ञानेन एतद्विषयं ज्ञानं, न तु स्वा[22]यत्तम्। अन्यथा ज्ञानमेव न स्यादुक्तहेतो रित्यभिप्रेत्याऽऽह मुह्यन्ति यं सूरय इति। [23]भूतभविष्यद्वर्तमानब्रह्मादयो यत्प्रसाद मन्तरेण मुह्यन्ति, "मुह वैचित्त्ये"

इति धातो श्चितिं ज्ञानं न जानन्ति, क्वचि दन्यथा च जानन्ति इत्यर्थः। "तेने" इत्युक्ते रस्मात् ब्रह्मादिचेतनराश्यचिन्त्यमहिमा महीधरः प्रसादाभावे इति प्रतीयते। नन्वीश्वरः सृष्ट्यादौ प्रवर्तमानः प्रयोजनार्थी भवति, अन्यथा वा? न प्रथमः, यत्प्रयोजनार्थं प्रवर्तते तस्य तत्पूर्वं तदभावा दपूर्णत्वेन अशक्तत्वात् सृष्ट्यनुपपत्तेः। न द्वितीयः, प्रवृत्तिमात्रस्य स्वप्रयोजनोद्देशेन दृष्टत्वात् वृथा तदनुपपत्तेः। अतो मायामयी सृष्टि रेष्टव्ये त्यत आह तेजोवारीति। तेजोवारिमृदां विनिमयो यथा तथा त्रिसर्गो यत्र यस्मिन् भगवति विषये मृषैव पूर्वाप्राप्तप्रयोजनप्रापको न भवति। कथं तर्हि प्रवृत्ति रिति चेत्, उच्यते। "देवस्यैष स्वभावोऽय माप्तकामस्य का स्पृहा," "लोकवत्तु लीलाकैवल्यम्" (ब्र. सू. 2-1-33) इति श्रुतिसूत्रबला दाप्तसमस्तप्रयोजनस्य हरेः लीलयैव प्रवृत्ति रिति भावः। जीवेश्वरजडानां सर्गस्त्रिसर्गः, यथा एकमेव मूलं तेजः स्वकार्येषु पार्थिवादिपदार्थेषु बहुधा भूत्वा प्रविशति, बहिश्च मथनादिनाऽऽविर्भवति तथेश्वरोऽपि जगत् सृष्ट्वा बहुरूपीभूय जगदन्तः प्रविशति, बहिश्च भूतानुकम्पया वासुदेवादिबहुरूप आविर्भवति। अय मीश्वरसर्गः। दीपात् दीपान्तरोत्पत्ति र्यथा, तथेश्वरसर्ग इति वा। यथा सूर्यादितेजसां जलाद्युपाधिनिमित्तैः बहूनि प्रतिबिम्बानि सूर्यकान्तादीनि सूर्यादे र्जायन्ते, तथैव सूक्ष्मस्थूलशरीराद्युपाधिनिमित्तैः प्रतिबिम्बभूता जीवाः हरे रुत्पद्यन्ते। एष जीवसर्गः। यथा कुलालो मृद मुपादानीकृत्य घटादीन् सृजति तथेश्वरो जडप्रकृति मुपादाय महदहङ्काराद्यशेषजडपदार्थान् सृजति। एष जडसर्गः। अनेन मायामयी सृष्टिः इत्यस्य किमायात मिति चेत् उच्यते। यत्रेश्वर इति विशेषणा दन्यत्र जगत्यमृषा मिथ्या न भवति। तथा च योजना — यथा तेजोवारिमृदां विनिमयः कार्यम् अर्थक्रिया योग्यत्वात् सदसद्विलक्षणो न भवति, तथा यत्र यदाधारतया क्रियमाण स्त्रिसर्गो मिथ्या न भवति [24] अर्थक्रियोपपत्तिरेव मिथ्यात्वबाधिकेति भावः। ननु तेजःकार्यं केशोण्ड्रकादि, वारिकार्यं फेनादि, मृत्कार्यं घटादि, यथा मिथ्या तथा यत्र जगन्मिथ्ये त्यर्थः स्यात्। तथा च श्रुतिः "वाचाऽऽरम्भणं विकारः"। (छान्दो. उ. 6-4-1) अनुमानञ्च — विमतं मिथ्या दृश्यत्वा दित्यतो मायामयी सृष्टि रित्यत आह — धाम्नेति। स्वेन धाम्ना स्वरूपज्ञानमहिम्ना सदा नित्यं निरस्तं कुहकम् इन्द्रजालादिमाया येन यस्य वा स तथोक्तः तम्। "य स्सर्वज्ञः" (मुण्ड. उ. 1-1-9) "अथैन माहुः सत्यकर्मेति", "विश्वं सत्यम्"(ऋ. सं. 2-24-12) इत्यादिश्रुति विरोधात् उदाहृतश्रुते रर्थान्तरत्वसम्भवा दनुमानस्य व्याप्तिशून्यत्वेन तद्विरोधाभावा न्नित्यनिरस्तेन्द्रजालो विष्णु र्मायामयीं सृष्टिं न विदधाति; किन्तु सत्यामेव। लोके वा असमर्थः सन् इन्द्रजालादिकं सृजति, न तु समर्थः। विष्णुस्तु नित्यपरिपूर्णशक्तिः किमर्थं तत् करोतीत्यर्थः। मुक्तव्यावृत्तये "सदा" इत्युक्तम्, तेषां मुक्तेः पूर्वं बन्धभाक्त्वेन कुहकत्वसम्भवात्। ननु विष्णोः सदा निरस्तकुहकत्वे मुक्तव्यावृत्ति र्घटते, तदेव कुत इति तत्राऽऽह — सत्य मिति। सत्यं निर्दुःखनित्य निरतिशयानन्दाद्यनुभवरूपम्। "सच्छब्द उत्तमं ब्रूया दानन्दन्तीति वै वदेत्। येति ज्ञानं समुद्दिष्टम्" इति वचना न्नित्यनिरस्तकुहकत्वेन मुक्तव्यावृत्ति र्युज्यत इति भावः। एत दुक्तं भवति — उपक्रमादितात्पर्ययुक्त्युपेत सर्वश्रुतिस्मृतितात्पर्यपर्यालोचनया जगत्सृष्ट्यादिकर्तृत्वात् सर्वज्ञत्वा दनन्याधिपतित्वा च्चतुर्मुखज्ञानोपदेष्टृत्वात् स्वानुग्रहमन्तरेण दुर्ज्ञेयत्वात् स्वप्रयोजनानुद्देशेन केवललीलयैव जगत्सर्जनादिप्रवृत्तिमत्त्वात् स्वत एव निरस्तेन्द्रजालत्वेन सत्यमहिमत्वा न्निर्दुःखनित्य निरतिशयानन्दाद्यनुभवरूपत्वाच्च सर्वगुणपूर्णो विष्णुः सर्वै र्ध्येय इति वा तात्पर्यार्थः। ननु 'धीमही' ति छान्दसः प्रयोगः कस्मात् कृतः? उच्यते — गायत्रीप्रतिपाद्यं नारायणाख्यं परं ब्रह्मैव न सूर्यः, तस्य "चक्षोस्सूर्यो अजायत" (पु. सू. 1-6) इति श्रुत्या

तदङ्गजननोक्ते रिति दर्शयितुं यथा वेदाध्ययनोपक्रमे गायत्र्यभिधीयते, विशिष्टफलहेतुत्वात्, तथा भागवतोपक्रमे इति वा गायत्र्याद्यशेष वेदप्रतिपाद्यो नारायण एव भागवते प्रतिपाद्यत इति वा इतरेषां भगवत्कृतत्वेन तत्परत्वेऽपि तद्व्यावृत्तये इति वा इतरेभ्योऽप्यस्य माहात्म्याधिक्यप्रकटनायेति वा। 'धीमही' ति छान्दसं पदं प्रायुङ्क्त भगवान् बादरायणः। तथा च मत्स्यपुराणे [25] [26]पुराणदानमाहात्म्ये प्रस्ताव[27]माहात्म्ये तल्लक्षणं प्रदर्श्यते "यत्राधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः। वृत्रासुरवधश्चापि यत्तद्भागवतं विदुः॥ लिखित्वा तच्च यो दद्या द्धेमसिंहसमन्वितम्। पौर्णमास्यां प्रोष्ठपद्यां स याति परमं पदम्॥ अष्टादशसहस्राणि पुराणं तत्प्रकीर्तितम्" इति। स्कान्दे — "ग्रन्थो ऽष्टादशसाहस्रो द्वादशस्कन्धसम्मितः। हयग्रीवब्रह्मविद्या यत्र वृत्रवध स्तथा। गायत्र्या च समारम्भो यत्र भागवतं विदुः" इति। गारुडे च — "अर्थोऽयं ब्रह्मसूत्राणां भारतार्थविनिर्णयः। गायत्रीभाष्यरूपोऽसौ वेदार्थपरिबृंहितः। पुराणानां साररूपः साक्षात् भगवतोदितः। द्वादशस्कन्धसंयुक्तः शतविच्छेदसंयुतः। ग्रन्थोऽष्टादशसाहस्रः श्रीमद्भागवताभिधः" इति। अन्ये "चतुर्विंशत्साहस्रं भागवतम्" इति वदन्ति। तत् असम्प्रदायविदां वचनमि त्युपेक्षणीयम्। गायत्र्यर्थोऽप्यनेन श्लोकेन सूचितः। तथा हि — तत्सवितु र्देवस्ये त्यस्यार्थः जन्माद्यस्य यत्त इत्यादीति। "वामं वरेण्यं परम्," इत्यभिधानात् वरेण्य मित्यस्य व्याख्यानम् — पर मिति। भर्ग इत्यस्य व्याख्यानं — धाम्ना स्वेन सदा निरस्तकुहक मिति। भर्गः सकलदुरितभर्जनं ज्योतीरूपं, तत्पदार्थव्याख्यानम् — स्वराडिति, धियो यो नः प्रचोदया दित्यस्य विवरणं — तेने ब्रह्म हृदा य आदिकवये इति। यः सविता जन्मादिकर्ता नः अस्माकं धियः धर्मा दिविषया बुद्धीः; उपलक्षण मेतत् — सर्वेन्द्रियाणि इत्यादि स्वतत्त्वविषयं ज्ञानं गुरुमुखेनोपदिश्य तज्ज्ञानसाधनानि सर्वाणि करणानि प्रचोदयात् प्रचोदयति, स्वात्मविषयतया प्रेरयति। तस्य सवितु र्देवस्य क्रीडादिगुणसम्पन्नस्य नारायणस्य अनन्याधीनतया[28] तत्तत्त्वात् व्याप्तत्वा त्तद्व-रेण्यं सकलगुणाकरतया परममङ्गलं भर्गः,[29] ज्योतीरूपं भरणगमनयोगात् सर्वज्ञं वा वपुः [30]ज्ञानादिगुणरचित करचरणाद्यव-यव मिति यावत्। धीमहि ध्यायेम। ज्ञानमेव तत्प्रीतिजनकम् न कर्मादिकं, तस्मात् तच्चिन्तनं कर्तव्य मित्यर्थः।

यत्तु, केनचि द्वेदसम्मितैवंविध ग्रन्थव्याख्यानारम्भसमये प्रजल्पितम् — "पदच्छेदः पदार्थोक्ति र्विग्रहो वाक्ययो-जना। आक्षेपश्च समाधान मिति व्याख्यानलक्षणम्॥ अतिरिक्तं पदं त्याज्यं हीनं वाक्ये निवेशयेत्। विप्रकृष्टं च सन्दध्या दानुपूर्व्यं च कल्पयेत्॥ लिङ्गं धातुं विभक्तिश्च योजये च्चानुलोमतः। वाक्यार्थस्यानुसारेण तेषां च प्रत्ययोऽपि च" इति। तत् अनुपासितग्रन्थ सम्प्रदायवित्सज्जनचरणै रुपेक्षित मिति विदुषां परिषदि न स्वारस्य माधत्ते। नहि यथा वेदादा वकारी त्यत्रा करोदिति पदम् अशक्यनिवेशनं, तथात्रा प्यतिरिक्तं पदं सन्त्यज्य हीन मप्रयोज्यं यत एतद्व्याख्यानम् तल्लक्षणं न भवति; तस्मा द्यथास्थितग्रन्थव्याख्यानमेव सज्जनचित्तरञ्जन मिति सन्तोष्टव्यम्। ननु नायं श्लोकार्थः, किन्त्वन्य एव। तथा हि — तं सत्यं धीमहि। ननु "मृत्तिकेत्येव सत्यं" (छान्दो. उ. 6-4-1) इति मृदादेरपि सत्यत्वं श्रूयते, तद्व दस्यापीति तत्राह — पर मिति। मृदादेः कार्यापेक्षया सत्यत्वम्, अयन्तु पारमार्थिकः सत्यः, "तत्सत्यं स आत्मा" (छान्दो. उ. 6-8-7) इति श्रुतेः। परमसत्य स्यावाङ्मनोगोचरस्य कथं ध्यातृ ध्यानध्येयादि व्यव-हारगोचरत्व मित्याशङ्क्याह — जन्मादीति। अस्य जगतो जन्मस्थितिभङ्गा यतः परात् सत्यात् तं धीमहीत्यर्थः। "यतो वा इमानि भूतानि जायन्ते" (तैत्ति. उ. 3-1) इति श्रुतिसिद्धजगत्कारणत्वरूपेण अवाङ्मनोगोचरस्यापि ध्यातृध्यानादिव्य-

वहारो घटत इति भावः। ननु, ब्रह्मणः सिद्धरूपत्वात् प्रमाणान्तरागोचरत्वम्। **अतस्तत्र वेदान्ताना मनुवादकत्वा-दप्रामाण्य मित्याशङ्क्याह** — अन्वया दिति। वेदान्तानां **ब्रह्मण्येवान्वया त्तात्पर्या दित्यर्थः। तथाच श्रुतिस्मृती "सर्वे वेदा यत्पद मामनन्ति"** (कठ. उ. 2-15), "वेदैश्च सर्वै रहमेव वेद्यः" (भ. गी. 15-15) इति प्रमाणान्तरसिद्धत्वेन ह्यनुवादकत्वं सिद्ध मित्यपि ज्ञातव्यम्। न केवलं श्रुत्यन्वयात् स्मृत्यन्वया च्चेत्याह — इतरतश्चेति। "अहं सर्वस्य जगतः प्रभवः प्रलय स्तथा" (भ. गी. 10-8) इति स्मृतितश्चेत्यर्थः। अथवा प्रतिपदोक्त विवक्षितार्थसिद्धये हेतु माह — अन्वया दितरतश्चेति। अस्ति प्रकाशत इति ब्रह्मणश्च कार्यप्रपञ्चे मृदादेरिव घटादौ समन्वया दितरतः प्रकाशव्यतिरेकेण कदाचिदपि कस्या प्यप्रतिभासात् मृदादिव्यतिरेकेण घटादे रिवे त्यन्वयव्यतिरेकौ दर्शितौ। अथवा, ब्रह्मणि कारणा[31]पत्रे महदादिकार्यदर्शना दन्यथाऽदर्शना दिति सत्तास्थित्योः अन्वयव्यतिरेकौ दर्शितौ।

ननु तर्हि साङ्ख्यपरिकल्पितं प्रधानमेव जगत्कारण मस्तु, किं ब्रह्मणेति तत्राऽऽह — **अर्थेष्वभिज्ञ इति।** उत्पाद्यसर्वपदार्थे ष्वभिज्ञः सः अभितः सर्वतः सर्वमिदं जानातीति एवंविधस्यैव कारणत्वम्; नेतरस्य प्रधानस्य जडत्वा त्र सर्वज्ञत्वम्। तथा च "य स्सर्वज्ञः" (मुण्ड. उ. 2-2-7) इति श्रुतिः। तर्हि **अर्थेष्वभिज्ञानां जीवानामेव** जगत्कारणत्व मस्त्वि त्याशङ्क्याऽऽह — स्वराडिति। स्वयमेव राजत इति स्वराट्। जीवानां परिच्छिन्नज्ञानत्वेन पराधीनत्वा त्र स्रष्टृत्वं सम्भवतीत्यर्थः। "एष सर्वेश्वरः" (बृह. उ. 4-4-21) "एष (सर्व) लोकपालः" (कौषी. उ. 3-9) इति श्रुतेः। ननु ईश्वरस्यापि "न तस्य कार्यं क[32]रणं च विद्यते" (श्वेता. उ. 6-8) इति श्रुत्या कार्यक[33]रणाद्यभावात् कथं सर्वज्ञत्व मिति तत्राऽऽह — तेने ब्रह्मेति। आदिकवये ब्रह्मणे। **यः ब्रह्मा ऋग्वेदादिलक्षणं** साङ्गं वेदं हृदा मनसा मनोमात्रेण साधनान्तरनिरपेक्षतया तेने स्वर मात्रा वर्ण पद वाक्यादिक्रमेण विस्तारितवान्। ब्रह्मणः उपाधिभूतां बुद्धिं निर्माय तत्र वेदं प्रकाशितवा नित्यर्थः। अथवा हृदोपनिषदा सह सङ्कल्पमात्रेण **कार्यकारणसम्बन्ध-रहितोऽपि** भगवान् सर्वान्तर्यामी ब्रह्मादिकार्यकारणसाक्षित्वेन सर्वज्ञ इत्यर्थः। एवं जगत्कारणे सच्चिदानन्दात्मके वेदैकवेद्ये निरवद्ये सर्वेश्वरे परै रुद्भाव्यदोषकलापि नास्ती त्यभिधत्ते — मुह्यन्तीति। यं प्रति सूरयः कपिलादयः शास्त्रप्रणेतारः मुह्यन्तीत्युक्ते, तत्प्रणीतशास्त्रस्य निर्मूलत्वेनाप्रामाण्यात् तद्विरोधिग्रन्थो नास्तीत्यर्थः। नानाऽसत्तर्ककलिलान्तःकरण दुरवग्रह-वादिनां विवादानवसरे उपरतसमस्तमायामये भगवति को नु दुर्घट इति स्वोक्तेः। अतः परमसत्याद प्युत्पन्नस्य जगतः कुतः सत्यत्वम्? किन्तु मिथ्यात्वमेवेति दर्शयति — तेजोवारीति। विनिमयः कार्यतेजोविनिमयः केशोण्ड्रकादिः, वारिणो विनिमयः हिमकरकादिः, मृदो विनिमयो घटादिः। यथा येन प्रकारेण तथा कारण सत्ताप्रतीतिव्यतिरेकेण कार्यस्य पृथक् सत्ताप्रतीतिशून्यत्वमे वात्र मिथ्यात्वम्। तद्वत्तेजोवारिमृदामपि कारणसत्ताप्रतीति व्यतिरेकेण कार्यस्य पृथक् सत्ताप्रतीत्यभावात् मिथ्यात्व मित्यर्थः। किञ्च, त्रिवृत्कृतानां चोभयेषां **दृष्टान्तदार्ष्टन्तिकव्याजेन मिथ्यात्वं कथित मिति** सम्प्रदायविदा मभिप्रायः। ननु ब्रह्मणो जगत्कारणत्वे क्रियाकारकादिसम्बन्धात् "असङ्गो ह्ययं पुरुष" इति विरुध्येते त्यतो वाऽऽह — तेजोवारीति। त्रिसर्ग स्त्रयाणां सर्गः तेजोवारिमृदां सर्गः। उपलक्षणं चैतत् — पञ्चभूतानां सृष्टिः यत्र मृषा कथम्? यथा तेजोवारिमृदां विनिमयो मिथ्या तथा जगदपि मिथ्येत्यर्थः। "वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् (छान्दो. उ. 6-4-1) इति श्रुतेः। इदानी मेवंविधप्रपञ्चकारणत्वेन कल्पितमायासम्बन्धनिबन्धनं

किञ्चिदपि चिद्रूपपरमसत्यात्मके ईश्वरे स्वदृष्ट्या वस्तुगत्याऽपि नास्तीति दर्शयति — धाम्नेति। धाम्ना प्रकाशेन स्वेन स्वरूपभूतेनात्मचैतन्येन उपचारतः कारणत्वेन कल्पितेन सदा सर्वदा निरस्तं निराकृतं कुहकं कपटाख्यं येन सः तथोक्तः तम्। सदेति। जीवा द्वैलक्षण्यप्रदर्शनाय अर्था दसङ्गत्वं कूटस्थत्वं चोक्तं, तस्मा देकमेव ब्रह्म उपहितानुपहित-भेदेन "द्वे वाव ब्रह्मणो रूपे मूर्तं चै वामूर्तञ्च" (बृह. उ. 2-3-1) इति श्रुत्या प्रतिपाद्यते। तत्र सगुणब्रह्मोपासनाजनि-तेन ज्ञानेन शुद्धान्तःकरणस्य निर्गुणब्रह्मोपास्तौ बुद्धि रुपतिष्ठते। ततश्च सकलं स्वात्मानं पश्य न्नात्मव्यतिरिक्तं किञ्चिद प्यपश्य न्निर्गुण एवावतिष्ठत इत्येषोऽर्थोऽनेन प्रतिपाद्यते, नापरोऽप्रामाणिक इति तदेत त्कण्ठशोषणप्रलाप ज्वलन-ज्वालातुल्य मिति न परीक्षकाः क्षणमपि कटाक्षेण प्रेक्षन्ते। पूर्वापरपर्यालोचनया स्वोत्प्रेक्षितयुक्तिविरुद्धत्वाच्छ्रुतिस्मृतीना-मतात्पर्यार्थत्वा त्प्रत्यक्षादिप्रमाण प्रहरणप्रहतशिरस्कत्वा दाचार्यैः तत्र तत्र निराकृतत्वाच्छ्रुत्यादीनां मिथ्यात्वपरत्वे विरोधस्य दर्शितत्वा दस्मदुक्तार्थे बहुप्रमाणसम्भवात् ग्रन्थबाहुल्यभया न्न तन्निराकरणं प्रपञ्च्यते। न हि "अपरस्परसम्भूतं किमन्यत् कामहैतुकम्" (भ. गी. 16-8) इति वदतां सम्प्रदायवित्त्व मिति ॥ १ ॥

---

1. K ध्यायेमा° 2. K व्यलीको 3. B,K यच्च 4. K °मभि° 5. B,K °वोत्तर° 6. K उ° 7. B,K प्रविवृतां मागा ज्जनः खेदतां 8. K °कामा° 9. K कृती 10. K °तपस्यायां 11. K adds विघ्नाभावेऽपि 12. K °विहतान् 13. A,B,M °रोहित° 14. A,B वशादादितः 15. B °रम्भेन 16. K °दिष्टिः 17. A,B,M °मपि जन्मा° 18. B,K,M °त्वेन. 19. B,K,M अशेषाकारेण 20. "वेद स्तत्त्वं तपो ब्रह्म" इति मुद्रितामरकोशपाठः 21. K हेत्वन्तरं 22. K स्वप्रतिभया 23. K adds यं प्रति 24 K °क्रियोपयोगित्वोपपत्ति° 25. K adds भागवत° 26. K °तथ्यं 27. K °व्य तन्माहात्म्यं 28. K ° यात्ततत्त्वा 29. K adds पापभञ्जकं 30. K ज्ञानानन्द° 31. K °णायिते 32. M कारणं 33. M °कारणा°

# ओं श्रीमहागणाधिपतये नमः

श्रीकृष्णाय नमः

## राधाकृष्ण प्रणीता सुधीसुधा

परब्रह्मानन्दप्रसितहृदयान् दीनसदयान्
जगच्छ्रेयःप्राणान् प्रणतजनरक्षैकनिपुणान् ।
सुधीरान् मैत्रेयप्रभृतिबहुनामाकृतिधरान्
सुचर्याश्रीधुर्यान् परमगुरुवर्यान् हृदि भजे ॥ १ ॥

वेदवेदाङ्गतत्त्वज्ञैः श्रीधराद्यैः परिष्कृते ।
हरेः कृपां प्रपां कर्तुं यते भागवताध्वनि ॥ २ ॥

कृष्णमाचार्यगुरुणा प्रकाशे परिवर्धिते ।
पश्यामि दिव्यसौन्दर्यं श्रीमद्भागवताकृतेः ॥ ३ ॥

श्रीमद्भागवताम्भोधि समाकर्षसमुद्भवा ।
तनोतु सुधियां मोदं मदीयेयं सुधीसुधा ॥ ४ ॥

नात्र शास्त्रार्थविन्यासो नवा नानामतोद्धृतिः ।
केवलं भगवद्भक्ति सुधास्वादो विधीयते ॥ ५ ॥

अस्य जगतः, जन्मादि सृष्टिस्थितिलयादिकम्। अन्वयात् इतरतश्च, अन्वयव्यतिरेकाभ्याम्। यत्सत्त्वे यत्सत्त्वं अन्वयः। यदभावे यदभावो व्यतिरेकः। यतः ईश्वराद्भवति। अर्थेषु अखिलपदार्थेषु अभिज्ञः ज्ञानवान् सर्वज्ञ इत्यर्थः। स्वराट् स्वयं प्रकाशमानः यः आदिकवये चतुर्मुखब्रह्मणे हृदा मनसा मनसि प्रवर्तितया स्फूर्त्या यत् यस्मिन् शब्दब्रह्मणि सूरयः ब्रह्मादयोऽपि मुह्यन्ति मोहं प्राप्नुवन्ति, अज्ञानिन इति यावत्। तत् ब्रह्म वेदं तेने प्रकाशयाञ्चक्रे। यत्र यस्मिन् परब्रह्मणि त्रिसर्गः त्रयाणां मायागुणानां तमोरजस्सत्त्वानां सर्गः सृष्टिः तेजोवारिमृदां विनिमयो यथा व्यत्ययो यथा, अन्यस्मि न्नन्यावभास इवेत्यर्थः। तेजसि वारिबुद्धिः मरुमरीचिकायां प्रसिद्धा। मृदि काचादौ वारिबुद्धिः, वारिणि काचादिबुद्धिः। एतादृशो विनिमय इव अमृषा सत्यः अधिष्ठानसत्तया सद्वत्प्रतीयमानः। यद्वा, मृषा सत्यत्वेन प्रतीयमानोऽप्यवास्तविकः। यत्तदो र्नित्यसम्बन्धात्, तं तादृशं, स्वेन स्वीयेन धाम्ना तेजसा सदा नित्यं निरस्तकुहकं निरस्तमायागुणं सत्यं परमार्थसत्यभूतं परं परमात्मानं धीमहि ध्यायेम।

यः अन्वयव्यतिरेकाभ्यां विश्वसृष्टिस्थितिलयादीनां निदानभूतः, यो वा सर्वज्ञः स्वयं प्रकाशमानः, यश्च चतुर्मुखब्रह्मणे मनसि स्फूर्तिं आधाय सूरिमोहनं वेदं प्रकाशयाञ्चक्रे, यस्मिन् त्रिगुणसर्गश्च तेजोवारिमृदां व्यत्यय इव वास्तवत्वेन प्रतीयमानः, तं स्वतेजोनिरस्तमायागुणं परमार्थसत्यभूतं परमात्मानं ध्यायेम।

यदुक्तं श्रीशुकदेवेन स्वसिद्धान्तप्रदीपे — "मायावादिना तु यत्र त्रिसर्गोऽमृषा यत्सत्यतया मिथ्यासर्गोऽपि सत्यव त्प्रतीयत इति व्याख्यातं — त दसत्। 'सदेव सोम्येद मग्र आसीत्' (छान्दो. उ. 6-2-1) इत्यादिश्रुतिविरो - धात्। जगत् सत्यं सदुपादानकत्वात् इत्यन्वयात्, न य त्सदुपादानकं न त त्सत्यं, खपुष्पवत् इति व्यतिरेकाच्च हेतोः" इति। तत्रोच्यते —

अत्र मायावादी श्रीधराचार्यः। "यत्सत्यतया मिथ्यासर्गोऽपि सत्यव त्प्रतीयते" इति च तदीयमेव व्याख्यानं खण्डितम्। इदं च खण्डन मनावश्यक मिव प्रतिभाति। तथाहि —

"इदं भागवतं नाम पुराणं ब्रह्मसम्मितम्" (भाग. 1-3-40) इति भागवतोक्तदिशा भगवत्तत्त्वप्रतिपादकस्य भागवतस्य वेदतुल्यत्वात्, वेदानां च द्वैताद्वैतादि नानामतप्रमाणभूतत्वात्, अद्वैतोपष्टम्भकस्य मायावादस्य च वेदप्रामाण्य-सिद्धेः, मायावादिपदव्यपदिष्टस्य श्रीधरस्वामिनो व्याख्यानस्य खण्डनं श्रीशुकदेवकृतं वेदनिरासनिर्विशेषं सत् अविचाररमणी-यम्। न चात्र श्रुतिविरोधः, "सदेव सोम्येदम्" (छान्दो. उ. 6-2-1) इत्यादौ सत्पदस्य ब्रह्मार्थकत्वात्। नापीदं अपूर्वार्थप्रतिपादकं; मायावादिनोऽपि जगतो व्यावहारिकसत्तायाः अभिमतत्वात्। किं च यस्य ब्रह्मणः सत्यतया परमार्थत्वेन मिथ्यासर्गोऽपि सत्यव त्प्रतीयते इति व्याख्याने न काप्यनुपपत्तिः ब्रह्मविवर्तार्थकेन 'मिथ्या' पदेन अत्यन्ताभावस्य अलक्षितत्वात्, वासुदेवपरब्रह्ममयत्वानुसन्धानाननुसन्धानाभ्यां च जगतः सत्यत्वासत्यत्वयो रुभयोरपि सिद्धत्वात्।

यच्चोक्तं तेनैव महाभागेन — "यत्तु सत्य मिति स्वरूपलक्षणम्, जन्माद्यस्येति तटस्थलक्षणम्; तत्र; जगत्कर्तृकत्वस्य धर्मस्य 'सोऽसृज त्सर्वान् लोकान्' इति श्रुतेः, स्वरूपे उपपन्नत्वेन तटस्थलक्षणस्य असम्भवा"दिति तदपि चिन्त्यमेव। तेनैव प्रस्तुते अगणितगुणसिन्धौ भगवति स्वरूपतटस्थलक्षणयो रुभयोरपि युगपत्सम्भवात्। अन्यथा अगणितगुणसिन्धुविशेषणवैयर्थ्यप्रसङ्गाच्च। एवमस्य सिद्धान्तप्रदीपः श्रीमद्भागवतसिद्धान्तप्रतीप इव प्रतिभाति।

अत्रेद मनुसन्धेयं जिज्ञासुभिः — यत् अगणितगुणसिन्धोः स्वप्रपन्नैकबन्धोः सकलभुवनहेतोः सर्वसौन्दर्यहेतोः विगतसकलदोषस्य वेदवेद्यस्य परेशस्य गोपवेषस्य भगवतः तत्त्वप्रतिपादकं कल्पद्रुमवत् सर्वाभीष्टार्थप्रदं श्रीमद्भागवतं सर्वैरपि मुमुक्षुभि र्जनैः यथारुचि यथामति अधीतं सत्, आत्यन्तिकदुःखनिवृत्तिलक्षणं मोक्षं तेभ्यो वितरतीति; तथा चात्र रुचिमात्रप्रयुक्तेषु भगवदेकगम्येषु नानाविधवादप्रवाहेषु वैमत्यं परित्याज्य मिति च।

सम्भाव्यते चं सहृदयै र्यत् प्रायशो ह्ययमेवार्थो "धर्मः प्रोज्झितकैतवोऽत्र परमो निर्मत्सराणां सताम्" (भाग. 1-1-2) इत्यादिश्लोके भागवतप्रणेत्रा भगवता बादरायणेन सूचित इति।

अत्र प्रथमश्लोके गायत्रीप्रतिपादितं सत्यं — "योऽस्माकं बुद्धिवृत्तीः प्रेरयति तस्य तेजो ध्यायेम" इत्याकारकं प्रदर्शितम्। तच्च बुद्धिप्रचोदकं पञ्चज्ञानेन्द्रियेभ्यो, मनसो, बुद्धेश्च परमेव यस्य ताव दस्मदन्तर्गतत्वेन ज्ञानं सुलभं

न तु अस्मत्त्वेनैव, तस्मा दात्मनो भेदमापाद्य जीव स्तत्पश्यति, वस्तुतस्तु न। अत एव तदस्मद्विलक्षणं सूर्यतेजस्त्वेन दृश्यते; वर्तते चास्माकं दूरे यथा वयं तदेवाय मिति ब्रूमः। अत एव "असा वादित्यो ब्रह्म" (सूर्य. उ. 5) इति ऋषयः प्रावोचन्। अस्य चायमाशयः — अस्माभि रयमिति व्यवह्रियमाणः आदित्य एवास्मान् तं चाभिव्याप्य वर्तते। अस्मिन् पुरः स्थिते पुरुषे आदित्ये च अन्तर्यामी एक एव इति। तदिदं परमं सत्यं यत्र सर्वं उत्प्लवते, प्रलयाख्यसमुद्रे तदेतत् मत्स्यत्वेन प्लवमानं प्रतीयते — अव्यक्तः प्रलयः तत्र प्लवमानः सूर्यो मत्स्यः तज्ज्योतिषा कृतं लोकानां उद्धरणमेव मत्स्यकृतं वेदानां उद्धरणम् — इति हि सम्प्रदायविदः कथयन्ति। एवं सङ्केतिता ध्यानविद्यैव मत्स्यपुराण रहस्य मिति कथ्यते। अव्यक्तं सत्यं मायावरणेन सूर्यस्य वृत्ताकारे समारोप्यते। स्थिते रस्याः वृत्रासुरसंज्ञा। तामिमां माया मतिक्रम्य सत्यं पश्यन्त्याः प्रज्ञायाः वृत्रासुरघ्नः इन्द्रः इति संज्ञा।

गायन्तं त्रायते इति गायत्री। सा च उच्छ्वासनिश्वासरूप प्राणात्मना अभिव्यज्यते येन प्राणिनः प्राणवन्तो भवन्ति। स प्राणः 'सोऽह 'मित्यक्षरद्वयात्मक मन्त्रेणाभिव्याप्तः। स मन्त्रश्च स्वनिष्ठहल्द्वयच्युत्या परिणमति ओमिति प्रणवत्वेन। सोऽयं प्रणवः श्वासमनश्शरीराद्यावरणं परिकल्प्य, जीवरूपेणावतरति; जीवेषु चान्तर्यामितया विद्योतते। तस्मादिमां गायत्रीं ध्यायतां प्राणिनां परब्रह्मत्वप्राप्तिः। तथा च प्राणिनां परस्परदर्शनस्पर्शनादि सम्बन्धसमारोपसमये एतत्स्मरणेन जीवरूपदेवस्मरणं सिध्यति। एतत्साधनमार्गबोधनप्रधानमेव भागवतम्।

**धर्मः प्रोज्झितकैतवोऽत्र परमो निर्मत्सराणां सतां**
**वेद्यं वास्तव मत्र वस्तु शिवदं तापत्रयोन्मूलनम्।**
**श्रीमद्भागवते महामुनिकृते किं वा परै रीश्वरः**
**सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषुभि स्तत्क्षणात्॥ २॥**

**श्रीध०** इदानीं श्रोतृप्रवर्तनाय श्रीभागवतस्य काण्डत्रयविषयेभ्यः सर्वशास्त्रेभ्यः **श्रैष्ठ्यं दर्शयति — धर्म** इति। अत्र श्रीमति सुन्दरे[1] भागवते परमो धर्मः निरूप्यते। परमत्वे हेतुः — **प्रकर्षेण उज्झितं कैतवं** फलाभिसन्धिलक्षणं कपटं यस्मिन् सः। प्रशब्देन मोक्षाभिसन्धिरपि निरस्तः। **केवल मीश्वराराधनलक्षणः धर्मः** निरूप्यते[2]। अधिकारितोऽपि[3] धर्मस्य परमत्वमाह। निर्मत्सराणां परोत्कर्षासहनं मत्सरः, तद्रहितानां सतां भूतानुकम्पिनाम्। एवं कर्मकाण्डविषयेभ्यः शास्त्रेभ्यः श्रैष्ठ्य मुक्तम्। ज्ञानकाण्डविषयेभ्योऽपि, **श्रैष्ठ्य** माह — वेद्य मिति। वास्तवं परमार्थभूतं वस्तु वेद्यं; न तु वैशेषिकाणामिव[4] द्रव्यगुणादिरूपम्। यद्वा, **'वास्तव' शब्देन** वस्तुनोंऽशः जीवः, वस्तुनः शक्तिः माया, वस्तुनः कार्यं जगच्च तत्सर्वं वस्त्वेव; न ततः पृथ गिति वेद्यम्, अयत्नेनैव ज्ञातुं शक्य मित्यर्थः। ततः किमत आह — शिवदं परमसुखदम्। किञ्च, आध्यात्मिकादितापत्रयोन्मूलनं च। **अनेन ज्ञानकाण्डविषयेभ्यः श्रैष्ठ्यं** दर्शितम्। कर्तृतोऽपि **श्रैष्ठ्य** माह। महामुनिः श्रीनारायणः। तेन **प्रथमं सङ्क्षेपतः कृते। देवताकाण्डविषयगतं श्रैष्ठ्य** माह — किं वेति। **परैः** शास्त्रैः तदुक्तसाधनै र्वा ईश्वरो हृदि किं वा **सद्य एवावरुध्यते स्थिरीक्रियते। वा शब्दः**

[6]कांपट्यलक्षणः [7]काकर्थः। किन्तु विलम्बेन कथञ्चिदेव, अत्र तु शुश्रूषुभिः श्रोतु मिच्छुभिरेव तत्क्षणादेवावरुध्यते। ननु इदमेव तर्हि किमिति सर्वे न शृण्वन्ति तत्राह — कृतिभिरिति। श्रवणेच्छा तु पुण्यैर्विना नोत्पद्यते इत्यर्थः। तस्मा दत्र काण्डत्रयार्थस्य च यथावत्प्रतिपादना दिदमेव सर्वशास्त्रेभ्यः श्रेष्ठम्, अतो नित्य मेतदेव श्रोतव्य मिति भावः ॥ २ ॥

---

1. H,V add मुमुक्षूणा मतिरमणीय इत्यर्थः 2. H,V add इत्यर्थः। 3. H,V °र° 4 H,V °कादिवत् 5. H,V °काण्डतः 6 A,B कटाक्षे 7. A,B omit काकर्थः

**वीर०** **अथ** विषयप्रयोजन सम्बन्धाधिकारिरूपं अनुबन्धचतुष्टय माह द्वितीयश्लोकेन **''धर्मः प्रोज्झितकैतव''** इत्यादिना। विषयो नाम प्रधानप्रतिपाद्यवस्तुरूपः। स चात्र धर्मः। सोऽपि साध्यः सिद्धश्चेति द्विविधः। सिद्धरूपे वस्तुनि धर्मशब्दप्रयोगो महाभारते दृष्टः। यथा ''ये च वेदविदो विप्रा ये चाध्यात्मविदो जनाः। ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम्'' (भार. 3-86-22) इति। तथाऽभियुक्तै श्च अलौकिकत्वे सति श्रेयस्साधनत्वं धर्मशब्दप्रवृत्तिनिमित्तं मन्वानैः सिद्धरूपेऽर्थे धर्मशब्दः प्रयुक्तः। ''द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते। तेषामैन्द्रियकत्वेऽपि न तद्रूपेण धर्मता'' इति। तत्र सिद्धधर्मः परमात्मा ''अमृतस्यैष सेतुः'' (मुण्ड. उ. 2-2-5) इत्यादिशास्त्रेण तस्यालौकिकत्वे सति श्रेयस्साधनत्वावगमात्। साध्यधर्मस्तु परमात्माराधनात्मिका भक्तिः। तत्र 'सतां' इत्यन्तेन साध्यधर्म उच्यते। 'वेद्य' मित्यादिना 'तापत्रयोन्मूलन' मित्यन्तेन सिद्धधर्मः। 'ईश्वर' इत्यादिना प्रयोजन मुच्यते। तच्चापि द्विविधं व्यवहितं अव्यवहितं चेति। तत्रायत्नेन हृदि ईश्वरावस्थापनं अव्यवहितं फलम्। तापत्रयनिवृत्तिस्तु भगवदनुभवपरम्परया व्यवहितं फलम्। सम्बन्धोऽपि द्विविधः — साध्यसाधनभावरूपः, प्रतिपाद्यप्रतिपादकभावरूपः चेति। तत्र प्रयोजनोक्त्या साध्यसाधनभावरूपः,विषयोक्त्या प्रतिपाद्यप्रतिपादकभावरूप श्चा[1]ऽऽर्थो विवक्षितः। एवं सिषाधयिषुः प्रतिपिपत्सुरूपो मुमुक्षुरधिकारी अर्थतो विवक्षितो वेदितव्यः। तत्र साध्यधर्ममाह — **धर्म** इति। अत्रास्मिन् पुराणे प्रोज्झितकैतवः **परमो** निर्मत्सराणां सतां धर्मः साध्यतयोच्यते इत्यर्थः। कैतवं वञ्चनं; प्रोज्झितं नितरां त्यक्तं कैतवं यस्मिन्। अनेन विप्रलिप्सामूल बाह्यागमोक्त चैत्यवन्दनादिव्यावृत्तिः। ''निर्मत्सराणां सताम्'' इति सम्बन्धसामान्ये षष्ठी। निर्मत्सराणां सतां सम्बन्धी धर्मोऽत्र साध्यतयोच्यत इत्यर्थः। सम्बन्ध श्चानुष्ठेयानुष्ठानभावरूपः। ''निर्मत्सराणां सतां धर्म'' इत्यनेन वेदोक्ताभिचारादि व्यावृत्तिः। अभिचारादयो हि मत्सरादिमतां अनुष्ठेयाः। परमः सर्वोत्कृष्टः। अनेन क्षुद्रफलप्रदकाम्यकर्मव्यावृत्तिः। यद्वा, 'मत्सर' शब्दः कामादीनां प्रदर्शनार्थः शमदमाद्युपेतानां मुमुक्षूणां धर्मः। अनेन स्वर्गाद्यर्थ कर्म व्यावृत्तिः। परमः ''सर्वेषामेव धर्माणा मुत्तमो वैष्णवो विधिः'' इत्युक्तप्रकारेण भगवत्सन्तोषैकफलत्वात् परमः। एवं साध्यधर्मरूपो विषय उक्तः। **अथ** एवंविधमोक्षैकप्रयोजनकं[2] साध्यधर्मसमाराध्य मेत त्पुराणवेद्यं परब्रह्मात्मकं सिद्धधर्मरूपं विषयमाह — वेद्य मिति। सता मित्येतत् काकाक्षिन्यायात् अत्रापि सम्बध्यते। अत्रास्मिन् महामुनिकृते श्रीमद्भागवताख्ये पुराणे। अन्वर्थ मिदं नाम — भगवतः स्वरूपरूपगुण विभूतिप्रतिपादकत्वेन भगवत इदं भागवतमिति व्युत्पत्तेः। सतां वेद्यं वस्तु वास्तवं शिवदं तापत्रयोन्मूलनं वास्तवत्वादि गुणविशिष्ट-

मित्यन्वयः। महामुनिना श्रीबादरायणेन कृते। मुनेः महत्त्वम् अत्र असम्भाव्यमान पौरुषेयदोषगन्धापौरुषेयप्रत्यक्ष श्रुतिवाक्येन, "सहोवाच व्यासः पाराशर्यः" (तैत्ति. उ. 1-9-2) इत्यनेन आप्ततमतया श्रावितत्वरूपं विवक्षितम्। अनेनास्य पुराणस्य वक्तृवैलक्षण्यवत्त्वं सिद्धम्। अत एव प्रमाणतमत्वं च इतरदेवतानाम् असद्गुणारोपेण स्तोतव्यत्वात् तद्व्यावृत्त्यर्थं वास्तव मित्युक्तम्। वस्तुनो भावो वास्तवम्, युवादित्वात् "हायनान्तयुवादिभ्योऽण्" (अष्टा. 5-1-130) इत्यण्, ततो मत्वर्थीयोऽच्। स्वाभाविकधर्मयुक्त मित्यर्थः। शिवदं मङ्गलदं मोक्षानन्दप्रदम्। अनेनेष्टप्रापकत्वं उक्तम्। तापत्रयोन्मूलनम् आध्यात्मिकादि तापत्रयोच्छित्तिकरम्। अनेन अनिष्टनिवर्तकत्वमुक्तम्। यद्वा, 'वास्तव' शब्देन शास्त्रान्तराभ्युपेताब्रह्मात्मक स्वतन्त्रप्रधानादेः वैलक्षण्यमभिप्रेतम्। अब्रह्मात्मकप्रधानादीनां अप्रामाणिकत्वात् इतरविशेषणद्वयेन क्षुद्रोपद्रवशतोपप्लुत परिमितसुखप्रददेवतान्तरव्यावृत्तिः। एवं मोक्षसाधनधर्मः तत्समाराध्यपरदेवता चास्य प्रबन्धस्य विषय इत्युक्तम्। यत एवेद मीदृशविशिष्टविषयकम् तत एव न शास्त्रान्तरैः प्रयोजन मस्तीत्याह — किं वाऽपरै रिति। अपरैः शास्त्रजालैः किंवा ? न किञ्चिदपि प्रयोजन मस्तीत्यर्थः। अथ प्रयोजनमाह — ईश्वर इत्यादिना। शुश्रूषुभिः श्रवणेछामात्रवद्भिः। अत एव तत्क्षणात् कृतिभिः धन्यैः सद्य एतत्पुराणश्रवणानन्तरमेव हृदि ईश्वरोऽवरुध्यते। श्रुतिपथेन हृदयं प्रविशतीत्यर्थः। "यत्नेन चित्ते विनिवेशयन्ति" इति न्यायेन दुर्ग्रहस्य ईश्वरस्य अयत्नेन हृद्यवस्थानं अव्यवहितं फलम्। तापत्रयनिवृत्तिश्च भगवदनुभवपरम्परया फल मित्युक्तं भवति। प्रयोजनेन साध्यसाधनभावरूपः विषयेण प्रतिपाद्यप्रतिपादकभावरूपश्च सम्बन्धः। अधिकारी च अर्थसिद्ध इति पुरस्तादेवोक्तम्॥ २॥

---

1. W °श्चार्थतो 2. A,B omit °क°

**विज०** ननु "जन्माद्यस्य यत" इत्यनेन सकलपुराणार्थस्य सङ्क्षेपतो दर्शितत्वात् कि मुत्तरश्लोकेने त्यतो ग्रन्थारम्भे मङ्गलाचरणा द्युक्त्या नारायणस्य प्रस्तुतत्वं, न तु साक्षाद्विषयत्वेन। विषय स्त्वन्य एवेति शङ्कानिरासार्थं विषय तत्साधनाधिकारि प्रयोजनानि द्वितीयश्लोकेन दर्शयति **धर्म** इति।

ननु य दिष्टसाधनत्वावबोधकं प्राय स्तदेव प्रमाणतयोपादेयम्। अतः कथ मस्य ग्रन्थस्ये त्यतो वाऽऽह धर्म इति। अत्र श्रीमद्भागवते प्रोज्झितकैतवः परमो धर्मः प्रतिपाद्यते। अत्र श्रीमद्भागवते निर्मत्सराणां सतां वेद्यं वास्तवं शिवदं तापत्रयोन्मूलनं वस्तु प्रतिपाद्यते। किं विशिष्टे ? महामुनिकृते। अपरैः किं वा ? शुश्रूषुभिः कृतिभिः। अत्र श्रीमद्भागवतेऽभ्यस्यमाने ईश्वरः सद्य स्तत्क्षणात् हृदि अवरुध्यते इत्येकान्वयः। अत्रास्मिन् श्रीमद्भागवते श्रीमत्त्वं नाम श्रूयमाण रमणीयताऽर्थ पर्यालोचनया च अस्य इतरेभ्यः आधिक्यम्। तथाचोक्तम् — "राजन्ते ताव दन्यानि पुराणानि सतां गणे। याव न्न दृश्यते साक्षाच्छ्रीमद्भागवतं परम्" इति। ध्रियते अनेन अधः पतन् पुरुष इति धर्मः। धारयतीति धरो भगवान्। समीयते ज्ञायते अनेनेति वा। दधाति कर्तारं रमयति मनुते हिनस्ति पाप मिति वा

**भगवतः** प्राप्तिसाधनभूतः। ननु धर्मोऽन्यत्रापि प्रतिपाद्यते कि मत्रैवेति तत्राह — प्रोज्झित इति। **प्रोज्झितकैतवः**, **कितवस्य** भावः **कैतवम्**। प्रकर्षेणोज्झितं कैतवं येन स तथोक्तः। कितवो नाम लोके मन स्यन्य दभिसन्धाय अन्य दभिधत्ते, अन्यदेवाभिचरति। तद्व दत्रापि भगवत्प्रीति मन्त्रेण स्वर्गादिफलं मनसि अनुसन्धाय **भगवद्गुणप्रतिपाद-नलोलुपनिगमार्थं** अन्यथा वदन् स्वात्मनो देहेन्द्रियाणामीश्वराधिष्ठितत्व मीश्वरनियाम्यत्वं निगूह्य हरेः कारयितृत्वं फलदातृत्व मपि अगणय्य[2] अह मेवेदं करिष्ये, अर्थी समर्थो विद्वा नहमेव स्वतन्त्र इति बुद्ध्या वा युक्तः कितवः। तेन क्रियमाणो धर्मः कैतवं इत्युच्यते। अतोऽफलकामनयैव धर्मः कर्तव्य इत्ययमर्थोऽत्र प्रतिपाद्यत इत्यर्थः। "तत्कर्म य न्न बन्धाय सा विद्या या विमुक्तये" इति श्रीविष्णुपुराणे (1-19-41)। तर्हि एतावता पूर्यत इति तत्राह — **परम** इति। "यत् करोषि य दश्नासि य ज्जुहोषि ददासि यत्। य त्तपस्यसि कौन्तेय ! त त्कुरुष्व मदर्पणम्॥" (भ. गी. 9-27) इति स्मृतेः **भगवदर्पणतः** परमो भवतीत्यर्थः। किञ्च परः परमात्मा मीयते अनेनेत्येतदभिप्रायेण परम इत्यभिधायि "परोऽरि परमात्मनोः" (वैज. को. 6-5-49) इत्यभिधानात्। स परः शत्रुः संसारो मीयते प्रलीयते इति वा। मीङ् हिंसायाम्। "प्रमीया हिंसा च संज्ञपन" मित्यभिधानम्। किञ्च, **यतोऽधिकतमः** सुखहेतुः भवति, स **परमो धर्मः**। स च भक्तियोगलक्षण एव। तथाच भारते भीष्मयुधिष्ठिरसंवादे "को धर्मः सर्वधर्माणां भवतः परमो मतः" (भार. 13-135-3) इति पृष्टे "एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः, यद् भक्त्या पुण्डरीकाक्षं स्तवै रर्चे न्नर स्सदा" (भार. 13-135-8) इति। उक्तञ्च — "एतावानेव लोकेऽस्मिन् पुंसां धर्मः परः स्मृतः, भक्तियोगो भगवति तन्नामग्रहणादिभिः" (भाग. 6-3-22)। "नृणा मयं परो धर्मः सर्वेषां समुदाहृतः, त्रिंशल्लक्षणवान् साक्षा त्सर्वात्मा येन तुष्यति" — (भाग. 7-11-12) इति स्वोक्तेः। केषा मधिकारः, कश्च साक्षा द्विषय इति तत्राह — निर्मत्सराणा मित्यादिना। भाव प्रधानो निर्देशः। निर्गतं मात्सर्यं येषान्ते तथोक्ताः। तेषां सतां प्रशस्तकर्मणां पुरुषाणां सतामपि क्वचित् क्वचिन्मात्सर्यं स्यात्, तन्न कर्तव्यं स्वोत्तमेष्वि त्यतो निर्मत्सराणा मित्युक्तं ज्ञेयम्। कृद्योगे षष्ठीति सता मिति। वेदनं ज्ञानमेव, न कर्मादिकमि त्यतो वेद्य मित्युक्तम्। वास्तवं नित्यनिरस्तदोषं पूर्णगुणं वस्तु[3] अप्रतिहतनित्यत्वेन वसनशीलत्वा दित्यर्थः। दुःखनिवृत्ति सुखप्राप्तिलक्षणस्य पुरुषार्थत्वात्, तदभावात् कि मनेनेति तत्राह — शिवद मिति। परमानन्दं ददाति[4] च तापत्रयोन्मूलनं, आध्यात्मिकादि सकलदुःखनिवर्तकञ्च। "वेत्ता वेद्यस्य सर्वस्य मुनिः सद्भिरुदाहृत" इत्यभिधाना न्मुनयो ब्रह्मादयः। तेभ्योऽप्यतिशयितसार्वज्ञ्या न्महामुनि र्व्यासः साक्षा न्नारायणः "कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम्" (विष्णु. पु. 3-4-5) इति वचनम्। तेन कृते प्रणीते।

ननु किमिति ईश्वरतुष्टिकरो भक्तियोगलक्षणो धर्मः। ईश्वर श्चात्र प्रतिपाद्यो, न धर्मादि रिति तत्राह किं वेति। भक्तियोगलक्षण धर्मस्य हरे रपरोक्षज्ञान मुत्पाद्य, तत्प्रसादान्तरङ्गसाधनत्वेन अपवर्गलक्षणानश्वरफलहेतुत्वात् बहिर्मुखमनोरञ्ज-कत्वेन स्वर्गादिक्षयिष्णुवत्फल मुत्पाद्य संसारावृत्ति हेतुत्वात् धर्मादिकथनैः किंवा प्रयोजनं, न किमपी त्यतः तानन्तरेण भक्तियोगलक्षणधर्म, स्तद्विषय ईश्वरश्चात्र प्रतिपाद्यत इत्यर्थः। ननु दृष्टफलप्रवृत्तिद्वाराऽदृष्टफलप्रवृत्तिदर्शनात् किमत्र दृष्टफल मिति तत्राह — ईश्वर इति। अस्मिन् भागवतशास्त्रे सम्यगभ्यस्यमाने कृतिभिः शिक्षितबुद्धिभिः शुश्रूषुभिः मनोवाक्कर्मभिः गुर्वादिपरमपुरुष परिचर्याकरणकुशलैः साधनसामग्र्युपेतैः एभिः ईश्वरः लक्ष्मीशादिचेतनगणाद्वर उत्तमः,

तत्प्रवर्तनशीलो वा परमात्मा हृदि हृदयकमले सद्यः शीघ्रं तत्क्षणात् कालव्यवधानमन्तरेण अवरुध्यते भक्तिशृङ्खलया बद्धो दृश्यत इत्यर्थः। अत्र सद्य स्तत्क्षण शब्दा वधिकारिविशेषद्योतकतया प्रयुक्तौ। ये साधनसामग्रीमन्त स्तेषां यस्मिन् क्षणे ग्रन्थोपक्रम स्तस्मिन् क्षण एव भगवान् दृश्यते। तदुक्तं— "शनकैर्भगवल्लोका न्नृलोकं पुन रागतः" इति। ये भविष्यत्साधनसम्पत्ति सम्पादनयोग्याः तेषामपि सद्यः साधनसामग्र्यां सत्यां दृश्यते। य न्नियतं कालान्तरभावि तज्झटिति भवत्येवेति च वक्तुं शक्यत्वात्। भक्तियोगलक्षणधर्मेश्वरौ विषयतया, निर्मत्सरसदधिकारिभिः प्राप्तं निर्दुःखपरमात्मा[5]नन्दाख्यं प्रयोजन मित्येत त्त्रितय मत्र प्रतिपाद्यत इत्यभिप्रायेण अत्रेति त्रिशः कथितं, न तु सगुणब्रह्म। तत्तुष्टिकरः परमधर्मः निराकारं निर्गुणं ब्रह्म चेति त्रितयाभिप्रागेण अत्रेति त्रित्व मिति। कर्मदेवब्रह्मकाण्डार्थोऽप्यत्रैव निर्णीत इति वा। धर्म इति कर्मकाण्डार्थः। निर्मत्सराणां सता मिति देवताकाण्डार्थः। देवतानामेव मात्सर्यराहित्येन ; मुख्यसत्त्वेनोत्तमाधिकारित्वाच्च। वेद्य मिति ब्रह्मकाण्डार्थः। तस्मा न्नारायणावतारेण सर्वज्ञतमेन कृष्णद्वैपायनेन आप्ततमेन प्रणीतत्वेन प्रमाणतमत्वा दिदं श्रीमद्भागवतं सर्वमुमुक्षुभि र्निरन्तर मभ्यसनीय मिति सिद्धम् ॥ २ ॥

---

1 B,M °यतया 2 अविगणय्य इति साधीयान् पाठः 3 B,M add अप्रतिहतं नित्यं 4 M ददातीति 5 M omits °त्मा°

**रा॰ कृ॰** अत्र अस्मिन् महामुनिकृते श्रीमन्नारायणावतारेण भगवता कृष्णद्वैपायनमहर्षिणा प्रणीते श्रीमद्भागवते श्रीमति सुन्दरे भागवताख्ये ग्रन्थे प्रोज्झितकैतवः प्रकर्षेण उज्झितं त्यक्तं कैतवं सर्वफलाभिसन्धिलक्षणं कपटं यस्मिन् तथाभूते। परमः निश्श्रेयससाधनत्वात् सर्वोत्कृष्टः धर्मः भक्तिरूपो धर्मः, निरूप्यत इति शेषः। अपि चात्र निर्मत्सराणां परोत्कर्षासहनरूपमात्सर्यरहितानां सतां भूतदयावतां वेद्यं ज्ञेयं वास्तवं परमार्थभूतं वस्तु ब्रह्मरूपं शिवदं परमसुखदं तापत्रयोन्मूलनं आध्यात्मिकादितापत्रयनिवारणं प्रतिपाद्यत इति शेषः। परैः शास्त्रान्तरैः तदुक्तसाधनै र्वा ईश्वरः किं वा हृदि सद्यः अवरुध्यते ? स्थिरीक्रियते वा ? किन्तु विलम्बेन कथञ्चिदेव। अतोऽत्र भागवते कृतिभिः पुण्यवद्भिः शुश्रूषुभिः श्रोतुमिच्छद्भि रेव तत्क्षणात् अविलम्बेनैव ईश्वरो मनसि विषयीक्रियते इत्यर्थः।

अस्मिन् भागवते सकलविधफलाभिप्रायरहितः सर्वोत्कृष्टो भक्तिरूपो धर्मो निरूप्यते। किञ्चात्र मात्सर्यविरहितानां सज्जनानां ज्ञेयं परमार्थभूतं परब्रह्मात्मकं वस्तु परमसुखदं तापत्रयनिवारणचणं प्रतिपाद्यते। अपि चात्र यथा धन्यैः शुश्रूषुभिः तत्क्षणादेव ईश्वरो मनोविषयीक्रियते न तथा शास्त्रान्तरै स्तदुक्तसाधनै र्वा।

विना फलाभिसन्धिं अयं भागवतग्रन्थः श्रद्धया पठनीयः। तेन सर्वान्तर्यामिन स्तत्त्वं बुद्धिविषयीभवति। ततश्च तापत्रयं नश्यति। अत्रेद मवधेयम्। वस्तुतस्तु संसारबद्धैः प्राणिभिः आध्यात्मिकाधिभौतिकाधिदैविकरूपतापत्रयवेदनानुभवो दुर्निवारः। सुखादिफलाभिसन्धिना कृतस्य कृत्स्नस्यैव कर्मणो दोषदूषितत्वात् बन्धहेतुत्वाच्च। अथ तापत्रयनिवारणौषधं किमिति मनसि विचिन्तयन्तः केचित् बुद्धिमन्तोऽपि कर्माचरणं सन्न्यस्य भ्रष्टा भवन्ति। तथापि विश्वस्मिन् विष्णुं पश्यन्तः ये केचन सन्तः तत्समर्पितानि सर्वकर्माणि विना फलाभिसन्धिं केवलकर्तव्यधिया समाचरन्ति न ते पीड्यन्ते तापत्रयेण, भगवदर्पितकर्मणां बन्धराहित्यात्, विज्ञानहेतुत्वात् जीवरूपेश्वरसन्तर्पणाच्च।

**निरन्तरसुखाधायकं वस्त्वेकं परब्रह्मैव। तद्धि सर्वमयं सत् सर्वभिन्नं च भवति। तद्बोधकमेव भागवतम्। तस्मात् "अत्र वस्तु शिवदं तापत्रयोन्मूलनम्" इति सुष्ठूक्तं भगवता बादरायणेन॥ २॥**

**निगमकल्पतरोर्गलितं फलं शुकमुखादमृतद्रवसंयुतम्[1]।**
**पिबत भागवतं रसमालयं मुहुरहो रसिका भुवि भावुकाः॥ ३॥**

1 V °सम्मि°

**श्रीध०** इदानीन्तु न केवलं सर्वशास्त्रेभ्यः श्रेष्ठत्वादस्य श्रवणं विधीयते, अपितु सर्वशास्त्रफलरूपमिदम्, अतः परमादरेण सेव्यमित्याह — **निगमेति**। निगमः वेदः स एव कल्पतरुः सर्वपुरुषार्थोपायत्वात् तस्य फलं[1] भागवतं नाम। तत्तु वैकुण्ठगतं नारदेन आनीय मह्यं दत्तम्। मया च शुकस्य मुखे निहितम्। तच्च तन्मुखाद् भुवि गलितं शिष्यप्रशिष्यादिरूपपल्लवपरम्परया शनैरखण्डमेवावतीर्णम्; न तु उच्चनिपातेन स्फुटितमित्यर्थः। एतच्च भविष्यदपि भूतवन्निर्दिष्टम्। अनागताख्यानेनैवास्य शास्त्रस्य प्रवृत्तेः। अत एवामृतरूपेण द्रवेण संयुतम्। लोके हि शुकमुखस्पृष्टं फलममृतमिव स्वादु भवतीति प्रसिद्धम्। अत्र[2] शुको मुनिः। अमृतं परमानन्दः। स एव द्रवः रसः। "रसो वै सः। रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" (तैत्ति. उ. 2-7) इति[3] श्रुतेः। अतो हे रसिकाः! रसज्ञास्तत्रापि भावुका हे रसविशेषभावनाचतुराः! अहो! भुवि गलितमित्यलभ्यलाभोक्तिः। इदं भागवतं नाम फलं मुहुः पिबत। ननु त्वगष्ट्यादिकं विहाय फलाद्रसः पीयते, कथं फलमेव पातव्यं तत्राऽऽह। रसं रसरूपम्। अतस्त्वगष्ट्यादेः हेयांशस्याभावात् फलमेव कृत्स्नं पिबत। अत्र च रसतादात्म्य[4]विवक्षया रसवत्त्वस्या[5]विवक्षितत्वात् अ[6]गुणवचनेऽपि रसशब्दे मतुपः प्राप्त्यभावात् तेन विनैव रसं फलमिति सामानाधिकरण्यम्। तत्र फलमित्युक्ते पानासम्भवः, हेयांशप्रसक्तिश्च भवेदिति तन्निवृत्त्यर्थं रसमित्युक्तं, रसमित्युक्तेऽपि गलितस्य रसस्य पातुमशक्यत्वात् फलमिति[7] द्रष्टव्यम्। न च भागवतामृतपानं मोक्षेऽपि त्याज्यमित्याह। आलयं लयो मोक्षः अभिविधा[8]वाकारः लयमभिव्याप्य। नहीदं स्वर्गादिसुखवन्मुक्तै रुपेक्ष्यते, किन्तु सेव्यत एव। वक्ष्यति हि — "आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे। कुर्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरिः (भाग. 1-7-10)॥ ३॥

1 B.H V add इदं 2 H.V add तु 3 H इत्यादि° 4 A ° त्म्या ° 5 A °स्य° 6 A.H गुण° 7 B.H.V add उक्तमिति 8 H ° धावेवा°

**वीर०** एवं विषयप्रयोजनकथनेऽपि प्रामाण्यनिश्चयं विना श्रवणं नोपपद्यत इत्याशङ्क्य वेदान्तमूलत्वं वदन् चेतनानभिमुखयति तृतीयश्लोकेन — **निगमकल्पतरोः** इत्यादिना। हे! रसिकाः! रसज्ञाः भावुकाः! भगवत्संशीलनपराः! निगमो वेदः स एव कल्पतरुस्तस्य फलं फलरूपमिदं श्रीभागवतं पुराणं आलयमामरणं पु[1]नः पिबत। निगमस्य कल्पतरुत्वनिरूपणं[2] धर्मार्थकाममोक्षपुरुषार्थचतुष्टयतत्साधनं[3]द्वारा धर्मादिफलजनकत्वात्, भागवतस्य तत्फल-

त्वनि[4]रूपणं निगमसारांशरूपत्वात्। 'खादत' इत्यनुक्त्वा 'पिबत' इति वदन्नेतत्सूचयति। आम्रादिफलेष्विव अनुपादेयांशस्त्वग्बीजादिरूपः कल्पतरुफले नास्ति, किन्तु केवलं पेयः कृत्स्नो रस एव, सन्नपि त्वग्बीजादिर प्युपादेय एव। एव मस्मिन्नपि पुराणे नानुपादेयांशो विद्यते। अपि तु सर्वोऽप्युपादेय एवेति। निगमद्रुमफलत्वं चास्य पुराणस्य स्वप्रधानप्रतिपाद्य निरतिशयानन्तब्रह्मानन्द साधनभूतभक्तिद्वाराऽवगन्तव्यम्। एवं 'अमृतद्रवसंयुतम्' इत्यादीन्यपि विशेषणानि। नि[5]गमफलत्वं स्वर्गादितत्साधनावबोधि वेदपूर्वभागोपबृंहणात्मक कल्पसूत्रादेरप्यस्तीति तद्व्युदासायाऽऽह — अमृतद्रवसंयुत मिति। अमृतं मोक्षः। "मुक्तिः कैवल्य निर्वाण श्रेयो निःश्रेयसामृतम्" (अम. को. 1-146) इति मुक्त्यादिशब्दपर्यायित्वस्मरणात्, स एव द्रवः सारांशस्तेन संयुतं रसं रसवत्, "गुणवचनेभ्यो मतुपो लुगिष्टः" (वार्तिकम् 2561. अष्टा. 1-4-19 सूत्रस्य अधस्तात्) इति लुक्; भगवदनुभवानन्दवत्। अनेन भक्तिरूपत्वं सिद्धम्। भक्ति र्नाम "स्नेहपूर्व मनुध्यानं भक्तिरि त्यभिधीयते" इति स्मरणात्, प्रीतिमद्भगवत्स्मरणम्। फल मत्र सम्यज्ज्ञानात्मकं विवक्षितम्, "शुकमुखात् गलितं" इ[6]त्युच्चस्थं फलं शुकाख्यपक्षिमुखपातितं सुग्रहं स्यात् तद्व द्वेदवृक्षशाखाग्रगतं ज्ञानफलं शुकमुखसम्बन्धात् सुलभमित्यर्थः। "द्वा सु[7]पर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते" (मुण्ड. उ. 3-1-7) इति श्रुत्यनुसारेण बादरायणेः शुकाख्यपक्षिस्वरूपिणः। 'आ लया' दिति पाठे आ मरणात् इत्यर्थः। निगमद्रुमफलत्वरूपणेन वेदमूलत्वं 'शुकमुखाद्गलित' मित्यनेन केवलनिवृत्तिधर्मपरायणास्वादितत्वप्रतीत्या शिष्टपरिगृहीतत्वं अत एव प्रामाण्यं मुमुक्षुभि रतीवोपादेयत्वं चेत्यादि फलितम्। यद्यप्येतत्प्रबन्धनिर्माणोपक्रमदशाया मस्य शुकमुखास्वादितत्वं न विद्यते, तथाऽपि भविष्यदभिप्रायेण त्रैकाल[8]ज्ञस्य निर्मातु रेव मुक्तिः ॥ ३ ॥

1 W मुहुः पुनःपुन 2 W रूपणं 3 B,W °नावबोधनद्वारा 4 W रूपणं 5 W निगमद्रुम° 6 B W अ° 7 W °पक्षित्वरूपण
8 W °ल्य°

**विज०** एवं ज्ञातफलानामपि प्रेक्षावतां प्रशंसाविधिभ्यां भागवतशास्त्रश्रवणाभ्यासे क्षिप्रप्रवृत्तिः स्यादिति प्रशस्य विधत्ते — **निगमकल्पतरोः** इति। भुवि भावुका रसिकाः! य न्निगमकल्पतरो र्गलितं शुकमुखा दमृतद्रवसंयुतं भागवतं फलं, तस्य रस मालयं मुहुः पिबते त्येकान्वयः। मर्त्यलोके भवनशीलरसज्ञा यूयम्। निगमयति नितरां ज्ञापय त्यपेक्षिताशेषपुरुषार्थानिति निगमो वेदः। स एव कल्पतरुः कल्पितं सङ्कल्पितं भक्ताऽऽकाङ्क्षितं तरति वितरति ददातीति कल्पतरुः सुरपादपः। उपसर्गः स्वयं धातुलीन मर्थं प्रकाशयति। न स्वत उत्पादयतीति वृत्तिकारवचनदर्शनात् तरति र्दानार्थोऽपि भवति। "विश्राणनं वितरणं स्पर्शनं प्रतिपादनम्" (अम. को. 2-428) इत्यभिधानाच्च। तस्मा द्व्यासनाम्ना मया गलितं पातितं शिवावतारस्य मत्पुत्रस्य शुकनाम्नो मुने र्मुखात् परीक्षिते प्रवचना दमृतद्रवेण संयुतं पूर्वम प्यमृतवत् द्रवसंयुतं पश्चाच्छुकाचार्यमुखप्रवचनेन अतोवद्रवीकृत मित्यर्थः। तथाच पद्मपुराणे अम्बरीषं प्रति गौतमवचनम् "अम्बरीष! शुकप्रोक्तं शृणु भागवतं सदा। पठस्व स्वमुखेनापि यदीच्छसि भवक्षयम्" (पद्म. पु.) इति भागवताख्यं फलं निष्पन्नं पक्व मिति यावत्। तस्य फलस्य मधुरं रसं लिङ्गशरीरमोक्षपर्यन्तं मुहुः परावृत्य श्रवणाञ्जलिपुटैः पिबत पानं कुरुत, श्रवणादिनाऽऽस्वादयतेत्यर्थः। 'अहो' इति बाला नुन्मुखीकरोति। अस्य फलस्य

अमृतरसास्वादसुखानुभवं पश्यतेति रसशब्दस्य तिक्तादिषु षट्सु वृत्तावप्यमृतद्रवेत्यादिस्वोक्तेस्तदन्यथाऽनुपपत्त्या मधुररसो ग्राह्यः। पानप्रारम्भसमयेऽतिमधुर एवायं रस इति वा अहो इति। निगमकल्पो वेदाख्यकल्पवृक्षः "कल्पः सुरपादपेऽपि सम्प्रोक्तः" इति वचनात्। तमेव तारयति प्रकाशयतीति निगमकल्पतरुः। तस्माच्छुकाचार्याननात् गलितं व्याख्यातं, परीक्षिते इति शेषः। अमृतं कैवल्यं तस्य द्रवो गतिः। तया युक्तं कैवल्यप्रापकमिति यावत्। रससम्पत्तेर्निवासस्थानं भागवतं फलं पिबतेति वा। अत्र पिबति र्भक्षणार्थः, अनेकार्थत्वात् धातूनाम्। न चायमाचार्योक्तोऽर्थो नेत्यश्रद्धेयं, चतुर्मुखमुखलेखबुद्धिगोचरापरिमितार्थ भागवततात्पर्यार्थं दर्शयतां पूर्णमतीनामाचार्याणां अप्ययं कश्चित् बुद्धिसमुद्रतरङ्ग इति निश्चित्य वक्तुं शक्यत्वात्। भुवि गलितमिति वा देवलोके देवैः पीयमानं सज्जनमनुजकृपया भुवि पातितमित्यर्थः ॥ ३ ॥

**रा० कृ०** हे! भावुकाः भावनाविशारदाः! रसिकाः! रसज्ञाः! शुकमुखात् शुकयोगिनामककीरमुखात्, भुवि भूतले, गलितं पतितं, अमृतद्रवसंयुतं परमानन्दरूपरसभरितं, रसं रसमयं, निगमकल्पतरोः वेदकल्पवृक्षस्य, फलं फलभूतं, भागवतं भागवताख्यग्रन्थं, आलयं यावन्मोक्षं, मुहुः पुनःपुनः, पिबत।

अत्र रसिकाः भावुकाः इति पदद्वयेन रसास्वादनकुशलाः एव भावनाविशारदा भवन्तीति व्यज्यते। लोके हि काव्येषु नवरसपरिपोषः क्रियते। तत्र विभिन्ननवरसानन्दोऽनुभूयते। अत्र तु भागवतेऽखण्डैकरसानन्दः। ईश्वर श्चाखण्डरसस्वरूपः "रसो वै सः" (तैत्ति. उ. 2-7) इति श्रुतेः ॥ ३ ॥

**नैमिषे[1]ऽनिमिषक्षेत्रे ऋषयः[2] शौनकादयः।**
**सत्त्रं स्वर्गाय लोकाय सहस्रसममासत ॥ ४ ॥**

---

1 H.V.W °शे 2 H.V.W मुनयः

**श्रीध०** तदेवमनेन श्लोकत्रयेण विशिष्टेष्टदेवतानुस्मरणपूर्वकं प्रारिप्सितस्य शास्त्रस्य विषयप्रयोजनादि-वैशिष्ट्येन सुखसेव्यत्वेन च श्रोतॄनभिमुखीकृत्य शास्त्रमारभते — **नैमिश** इति। ब्रह्मणा विसृष्टस्य मनोमयस्य चक्रस्य नेमिः शीर्यते कुण्ठीभवति यत्र तन्नेमिशं; नेमिशमेव नैमिशम्। तथाच वायवीये — "एतन्मनोमयं चक्रं मया सृष्टं[1] विसृज्यते। यत्रास्य शीर्यते नेमिः स देशस्तपसः शुभः। इत्युक्त्वा सूर्यसङ्काशं चक्रं सृष्ट्वा मनोमयम्। प्रणिपत्य महादेवं विससर्ज पितामहः। तेऽपि हृष्ट[2]तमा[3] विप्राः प्रणम्य जगतां प्रभुम्। प्रययुस्तस्य चक्रस्य यत्र नेमिर्व्यशीर्यत। तद्वनं तेन विख्यातं नैमिशं मुनिपूजितम्।" इति। नैमिष इति पाठे वराहपुराणोक्तं द्रष्टव्यम्। तथाहि — **गौरमुख मृषिं प्रति** भगवद्वाक्यं — "एवं कृत्वा ततो देवो मुनिं गौरमुखं तदा[4]। उवाच निमिषेणेदं निहतं दानवं बलम्। अरण्येऽस्मिन् ततस्त्वेत न्नैमिषारण्यसंज्ञितम्। भविष्यति यथार्थं वै ब्राह्मणानां विशेषकम्।" इति

7

अनिमिषः श्रीविष्णुरलुप्तदृष्टित्वात्तस्य क्षेत्रे। तथा चात्रैव[5] शौनकादिवचनं "क्षेत्रेऽस्मिन् वैष्णवे वयम्" (भाग. 1-1-21) इति। स्वः स्वर्गे गीयते इति स्वर्गायो हरिः। स एव लोको भक्तानां निवासस्थानं, तस्मै — तत्प्राप्तये इत्यर्थः। सहस्रं समाः संवत्सराः अनुष्ठानकालो यस्य तत् सत्त्रं सत्त्रसंज्ञकं[6] कर्मोद्दिश्य आसत उपविविशुः। यद्वा आसत अकुर्वत इत्यर्थः। आलभेत निर्वपति उपयन्तीत्यादिवत् प्रत्ययोच्चारणमात्रार्थत्वेनाऽऽस्तेर्धात्वर्थस्याविवक्षितत्वात् ॥ ४ ॥

1 H.V यत्र 2 B हृष्टास्तदा 3 H °तराः 4 H.V तथा 5 H.V चास्मिन्नेवाध्याये 6 H.V add 'सत्त्रमाच्छादने यज्ञे सदादाने-वनेऽपि च'। इत्यभिधानात्। (अम. को. 3-336)

**वीर॰** तदेवमनुष्ठितत्रिविधमङ्गल[1]प्रदर्शितानुबन्धचतुष्टयप्रामाण्यो भगवान् बादरायणस्त्रैकालज्ञो[2]ऽस्य चिकीर्षितस्य वेदान्तार्थोपबृंहणरूपस्य पुराणस्य परीक्षिच्छौनकशुकसूता[3]द्यष्टप्रतिवक्तृप्रश्नोत्तरमुखेन भाविनीं प्रवृत्तिमालोच्य तत्र तेषां प्रश्नोत्तररूपान् श्लोकान् स्वयमेव तत्र तत्र निर्मित्सुः तावदुपोद्घातरूपेऽस्मिन् प्रथमस्कन्धे प्रथमप्रष्टुः परीक्षितः प्रतिवक्तुः शुकस्य चैकत्र समावेशः[4]। प्रतिवक्तुः शुकस्य समागमं [5]परीक्षित्प्रश्नोद्योगहे[6]तुप्रायोपवेशं तन्निमित्तविप्रशापं च विवक्षुः प्रायोपवेशात् प्राक्तनं जन्मावधिकं पारीक्षितं वृत्तान्तं, ततः प्राक्तनं तत्पित्रादिवृत्तान्तं तथैव तत्प्रबन्धकर्तुः स्वस्यैव तन्निर्माणनिमित्तदर्शनसमागतदेवर्षेश्च संवादे[7] तदाज्ञयैतत्प्रबन्धनिर्माणं च शौनकसूतप्रश्नोत्तरमुखेन विवक्षुस्तावच्छौनकादीनां प्रश्नप्रकारं वक्तुं तदुपोद्घातमाह —— **नैमिष** इति। अत्र केचिच्छौनकादिप्रश्नरूपाः श्लोकास्तदर्वाचीनैः निर्माय्यात्र तत्र तत्र निबद्धाः, परीक्षिदादिप्रश्नादिरूपास्तु सूतेनेति वदन्ति — तदसारम्। त्रैकालज्ञ[8]स्य प्रबन्धप्रब[9]न्धुरेव तन्निर्माणोपपत्तेः। न हि, सद्विद्यानन्दवल्लीप्रतर्दनविद्यादिषु "श्वेतकेतुर्हारुणेय आस। तं ह पितोवाच"[10] (छान्दो. उ. 6-1-1) "भृगुर्वै वारुणिः। वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति"। (तैत्ति. उ. 3-1) "प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम" (कौषी. उ. 3-1) इत्यादीनां [11]प्रश्नोत्तररूपाणां श्रौतवचसामाधुनिकत्वं वक्तुं युक्तम्। ननु वेदे कर्तुरभावा[12]द्वेद एव [13]प्रश्नोत्तररूपे प्रतिपिपादयिषितानर्थान् प्रतिपादयति। अत्र तु पौरुषेयेऽन्यकर्तृकाणामपि वचसां सन्दर्भस्तत्र तत्र न दोषावह इति चेत्,[14] एवमपि कृत्स्नप्रबन्धस्यैककर्तृकत्वासिद्धेः कृत्स्नस्य पुराणप्रपञ्चस्य प्रश्नोत्तररूपत्वेन कानि ग्रन्थकर्तुर्वचांसि कानि चेतरेषामिति विभागस्याशक्यत्वाच्च तस्माद्यथोक्तमेव युक्तम्। शौनक आदि येषां ते मुनयः। ब्रह्मणा विसृष्टस्य चक्रस्य नेमिः शीर्यते कुण्ठीभवति यत्रेदं[15] तन्नेमिशं तदेव नैमिशम्। तच्च वायुपुराणे प्रसिद्धम्। "नैविश" इति पाठे निविशन्त्यत्र महर्षय इति निविशं, तदेव नैविशं इत्यन्वर्थं नाम। नैविशाख्येऽनिमिषक्षेत्रे [16]भगवत्सान्निध्यवतीति भावः। स्वर्गाय लोकाय स्वर्गो निरतिशयानन्दः तादृशो लोकः परं[17] पदं तस्मै तत्प्राप्तये तत्साधनं सत्त्रं सहस्रसमं[18] सहस्र[19] संवत्सरमासत, अनुष्ठितवन्तः। स्वर्गो लोकोऽत्र परमपदमेव। "अनन्ते स्वर्गे लोकेऽजय्ये प्रतितिष्ठति" (केन. उ. 4-9) इति, "स्वर्गे लोकेऽमृतत्वं भजन्ते"([स्वर्गलोका] कठ. उ. 1-13) इति श्रुत्यनुरोधेनास्य निर्देशात्। अन्यथा शौनकादय इति न घटते। "दशाश्वमेधी पुनरेति जन्म कृष्णप्रणामी न पुनर्भवाय" (भार. 12-94-3) इति वदतः

परमभागवतस्य शौनकस्य प्रसिद्धस्वर्गाद्यर्थित्वायोगात्। ऋत्विज एव यत्र यजमानास्तत्सत्त्रम्। यद्वा,[20] 'सत्त्र' शब्देन भगवद्गुणानुभवात्मकं ब्रह्मसत्त्रं विवक्षितम्। तथा च तल्लक्षणं वक्ष्यति दशमे श्रुतिगीतायां[21] "तुल्यश्रुततपःशीलास्तुल्यस्वीयारिमध्यमाः। अपि चक्रुः प्रवचनमेकं शुश्रूषवोऽपरे" (भाग. 10-87-11) इति। अत एवासीना दीर्घसत्त्रेणेति वक्ष्यमाणोपपत्तिः ॥ ४ ॥

---

1 W °मङ्गलः 2 W °ल्य° 3 W सूतादिप्रष्टृ° 4 W शं 5 W परीक्षितः प्रष्टुः 6 W °हेतुं 7 W °दं 8 W °ल्य° 9 A,B °बद्धु° 10 W adds श्वेतकेतो 11 W प्रश्नप्रतिवचनादि° 12 W °वात् स्वयमेव वेदः प्रश्नो° 13 W रूपेण 14 W adds न 15. A,B यत्र तन्नेमिषं तदेव नैमिषम् 16 W adds देवक्षेत्रे 17 W परमपदं 18. A,B °सहस्रं 19 A,B omit सहस्र° 20 A,B add अत्र 21 W °गीताध्याये

**विज॰** ननु "ब्रह्मज्ञानेन वा मुक्तिः प्रयागमरणेन वा। अथवा स्नानमात्रेण गोमत्यां कृष्णसन्निधौ" इति स्मृतेः प्रकारान्तरेणाऽपि पुरुषार्थः स्यात्, किमनेने त्यतोऽनेनैव पुरुषार्थो, नान्येनेति ख्यापनाय अस्य शिष्टपरिगृहीतत्वज्ञापनाय श्रोतृप्रवक्तृणां महापुण्यफलवत्त्ववेदनाय च शौनकादिमुनिवरसूत प्रश्नप्रतिवचनरूपा माख्यायिकामाह — **नैमिष** इति। शौनकादयः ऋषयः अनिमिषक्षेत्रे नैमिषे स्वर्गाय लोकाय सहस्रसमं सत्त्रमासत इत्येकान्वयः। शुनकस्यापत्यं शौनकः तदेव तस्य नाम शौरि रितिवत्। स आदिर्येषां ते तथोक्ताः। ऋषय स्त्रिकालदर्शिनः मन्त्रद्रष्टारो वा। अनिमिषक्षेत्रे श्रीनरहर्यादिसुरवरसन्निधानावासे निमिषा ऋषिसेव्यफलाः वृक्षविशेषाः तस्मिन् सन्तीति नैमिषं, "चित्रकृन्निमिषो नेमिः। चञ्चलोऽथायुगच्छदः" इत्यभिधानात्। विशिष्टक्षेत्रदर्शनाय देवप्रेरितस्य सुदर्शनस्य नेमिर्यस्मिन् विशीर्यते तन्निमिषं, तदेव नैमिषमिति यत्तच्चिन्त्यम्। निमिषनाम्ना ऋषिणा यत्र तपश्चीर्णं तत्सम्बन्धाद्वा। नैमिषे, तस्मिन्नैमिषारण्ये। स्वरतो विष्णुः तेन गतो लोको वैकुण्ठाख्यः तस्मै। सदानन्दज्ञानमूर्तित्वात्स्वर्गो विष्णुः। लोक आश्रयः तदर्थ मिति वा। स्वरिति विष्णुः, तं गमयति प्रापयति ज्ञापयतीति स्वर्गः। "लुक् प्रकाशने" इति धातोः लोकः प्रकाशः[1] ज्ञानं विष्णु स्तद्विषयपुराणधर्मज्ञानार्थमिति वा; न तु "मनःप्रीतिकरः स्वर्गो नरक स्तद्विपर्ययः" इति दुःखासम्भिन्नदेवसेव्य देशविशेषायेति, तस्य नश्यत्वश्रुतेः। सहस्रं समा यस्मिंस्तत्तथोक्तं वर्षसहस्रसमाप्यमित्यर्थः। सतः सुजनान् त्रायत इति, सतो ब्रह्मण स्त्राणमस्येति वा सत्त्रं, प्रशस्ततरकर्मसु श्रेष्ठमिति वा सत्त्रं, बहुकर्तृकं यागविशेषम्, आसत उपाविशन्, अदीक्षय न्नित्यर्थः ॥ ४ ॥

---

1 A प्रकाश

**रा॰ कृ॰** अनिमिषक्षेत्रे विष्णुक्षेत्रे नैमिशे नैमिशारण्ये शौनकादयो मुनयः स्वर्गाय निरतिशयानन्दरूपाय लोकाय परमपदाय परमपदप्राप्तये इत्यर्थः। सहस्रसमं सहस्रं संवत्सराः अनुष्ठानकालो यस्य तत्, सत्त्रं सत्त्रनामकं कर्म उद्दिश्य आसत उपविविशुः।

अस्य अनिमिषक्षेत्रस्य वायव्यपुराणानुसारेण 'नैमिशं' इति; वराहपुराणानुसारेण 'नैमिषं' इति च द्वे संज्ञे। तत्र नैमिशमिति संज्ञायां नेमिर्नाम चक्रस्य परिधिः। चक्रश्च मनोमयम्। मनोमयस्य चक्रस्य परिधिर्यत्र शीर्यते कुण्ठीभवति तत्रेमिशं, नेमिशमेव नैमिशम्। मनोमयचक्रपरिधिकुण्ठीभवनम्। सर्वभूतात्मभूतात्मत्वप्रापकं, तदेवं नैमिशं वनं मनोलयलक्षणयोगसिद्धेः सङ्केतः। तदाश्रयिणः शौनकादयः सङ्कल्परहिताः सर्वभूतात्मभूतात्मानः निष्कारणमेव हरिभक्तिभरितान्तरङ्गाः साधकानां च निरन्तरब्रह्मानन्दानुभव पथप्रदर्शकाश्च भवन्ति। नैमिष मिति संज्ञायान्तु — यस्मिन्नरण्ये निमिषेण दानवं बलं निहतं, तदेव नैमिषम्। अत्र दानवबलं रजस्तमसोस्सङ्केतः। निमिषस्तु कालस्य। कालेन रजस्तमोनाशे परिशेषन्यायेन सत्त्वमेवावतिष्ठते। तथा च शुद्धसत्त्वेन सर्वकर्मभस्मीकरणचणं ब्रह्मज्ञानं गम्यते। कालेन च ज्ञानप्राप्तौ "नहि ज्ञानेन सदृशं पवित्रमिह विद्यते। तत् स्वयं योगसंसिद्धः कालेनात्मनि विन्दति।" (भ. गी. 4-38) इति भगवद्गीतावचनं प्रमाणम्। तदेवं नैमिषशब्दोऽपि योगसिद्धेरेव सङ्केतः। अन्यत्सर्वं प्रागुक्तमेव। निरन्तरब्रह्मानन्दानुभवेन तत्क्षेत्रमनिमिषं भवति। तत्र कालपरिगणना नोदेतीति भावः। तैः शौनकादिभिः उद्दिष्टं कर्म सत्त्रं सज्जनत्राणरूपं यज्ञमयम्। तच्च विष्णुरूपमेव "यज्ञो वै विष्णुः" (तैत्ति. सं. 1-5-6) इति श्रुतेः। तस्मिन् यज्ञकर्मणि ते सहस्रसंवत्सरान् निमग्ना बभूवुः। सहस्रसमपदेन ते परार्थैकप्रयोजन सुदीर्घधन्यजीवना व्यराजन्तेति व्यज्यते। वेदविद्यासम्प्रदायसंरक्षणाय लोकोद्धरणाय च पुरा महर्षिभिरीदृशाः दीर्घसत्त्रयागाः निरुह्यन्ते स्मेति ज्ञायते॥ ४॥

**त एकदा तुमुनयः प्रातर्हुतहुताग्नयः[1]।**<br>
**सत्कृतं सूतमासीनं पप्रच्छुरिदमादरात्[2]॥ ५॥**

1 H.M °हुताशनाः 2 M °दृताः

**श्रीध॰ त** इति। प्रातः काले[1] हुता एव हुता अग्नयो यैस्ते। अनेन नित्यनैमित्तिकहोमसाकल्यं[2] दर्शितम्। इदं वक्ष्यमाणं[3] आदरात् पप्रच्छुः॥ ५॥

1 H.V काल्ये 2 B °साधकत्वं 3 H V °माणार्थं

**वीर॰ त** इति। ते शौनकादयो मुनयः कदाचित् प्रातर्हुतहुताग्नयः। हुते त्यर्हार्थे क्तः। हुतेन होमार्हद्रव्येण पयस्सर्पिरादिना साधनेन हुता अग्नयः आहवनीयादयो यैस्तथाभूताः। सत्कृतं यथोचितं बहुमतमासीनमुपविष्टं च सूत मिदं वक्ष्यमाण मादरा दादरपूर्वकं पप्रच्छुः॥ ५॥

**विज॰** ये सत्त्रयागे दीक्षिता स्ते मुनयः सर्वज्ञा अपि एकदा कस्मिंश्चित्काले स्वाश्रमं प्रति आगतं सत्कृतं तद्योग्यसत्कारैः पूजित मासीनं सुखं पीठे उपविष्टं सूतम् इदं स्वबुद्धिस्थितं पप्रच्छुः। किंविशिष्टाः? आदृताः विनीताः तेनापि पूजिता इति वा। हुतं हवि रश्नातीति हुताशनोऽग्निः प्रातः काले हुतः हुताशनो यैस्ते तथोक्ताः। हुतेन

पय आदिद्रव्येण हुतोऽग्निः यैस्ते हुतहुताग्नय इत्यसत्, हुतशब्दस्य पयआदिष्वपाठात्। तुर्लोकानुकम्पाद्योतकः। पृच्छतेः द्विकर्मकत्वात् सूतमिदं पप्रच्छुरिति कर्मद्वयं युज्यते॥ ५॥

**रा॰ कृ॰** ते मुनयः शौनकादयः एकदा तु प्रातः हुतहुताग्नयः सत्कृतं आसीनं सूतं आदरात् इदं वक्ष्यमाणं पप्रच्छुः॥ ५॥

**ऋषय ऊचुः**

**त्वया[1] खलु पुराणानि सेतिहासानि चानघ!**<br>**आख्यातान्यप्यधीतानि धर्मशास्त्राणि या[2]न्युत ॥ ६ ॥**

**यानि वेदविदां श्रेष्ठो भगवान् बादरायणः ।**<br>**अन्ये च मुनय स्सूत! परावं[3]रविदो विदुः ॥ ७ ॥**

**वेत्थ त्वं सौम्य तत्सर्वं[4] तत्त्वत स्तदनुग्रहात् ।**<br>**ब्रूयुः स्निग्धस्य शिष्यस्य गुरवो गुह्यमप्युत ॥ ८ ॥**

1 W °याऽखिल° 2 M ता° 3 H.M.V °पर° 4 W °स°

**श्रीध॰** विविदिषिता नर्थान् प्रष्टुं सूतस्य सर्वशास्त्रज्ञानातिशय माहुः[1] **त्वयेति**[2] त्रिभिः श्लोकैः। इतिहासो महाभारतादिस्तत्सहितानि[3] न केवल मधीता न्यपि तु आख्यातान्यपि व्याख्यातानि च। उत अपि यानि धर्मशास्त्राणि तान्यपि॥ ६॥

किञ्च, **यानीत्यादि**। विदां विदुषां मध्ये श्रेष्ठो व्यासो यानि वेद। परावरे[4] सगुणनिर्गुणे ब्रह्मणी विदन्तीति त[5]था॥ ७॥

**वेत्थेति।** वेत्थ जानासि। सौम्य! हे साधो! तेषामनुग्रहात् तत्त्वतो ज्ञाने हेतुमाह, ब्रूयुरिति। स्निग्धस्य[6] प्रेमवतः। अ[7]त एव गुह्यं रहस्यमपि ब्रूयुरेव॥ ८॥

1 H °ह 2 H.V °त्यादि° 3 H.V add पुराणानि 4 W °परे 5 V विदः। 6 B adds शिष्यस्य 7 A B V उत

**वीर॰** प्रश्नमेवाह — **त्वयेत्यादिना** यावदध्यायसमाप्ति। तावद्युष्मत्प्रश्नोत्तरं वक्तुं नाहं समर्थ इत्याशङ्कां निराकुर्वन्त आहुः, त्वयेति[1]। हे अनघ! शास्त्रार्थाज्ञाननिमित्त कर्मरूपपापरहित! जातिप्रयुक्तावमत्व रूपाघरहित! इति वा। त्वयेतिहाससहितानि सर्वपुराणानि उत अपि च यानि धर्मशास्त्राणि मानवादीनि तानि सर्वा[2]ण्यधीता न्याख्यातानि च॥ ६॥

कानि तानि पुराणधर्मशास्त्राणीत्यत आहुः[3] — **यानीति**। [4]वेदविदां स्वरूपतोऽनुष्ठान पर्यन्तार्थतश्च वेदं विदन्तीति तथा, तेषां मध्ये **श्रेष्ठो** भगवान् बादरायणः तथाविधा अन्ये च मुनयः पराशरादयो मन्वादयश्च परावरविदः **परं परमात्मतत्त्वमवरं** प्रकृतिपुरुषतत्त्वं तद्विदः। तत्त्वज्ञा[5] याथात्म्यविदः यानि पुराणानि धर्मशास्त्राणि च विदुस्तान्यधी-तान्याख्यातानि चेति पूर्वेणान्वयः। वेदविच्छ्रेष्ठो बादरायणः अन्ये च मुनयो यानि विदुरित्यनेन स्मृतीतिहासपुराणानां **वेदमूलत्वम्**। अत एव प्रामाण्यं च दर्शितम् ॥ ७ ॥

नन्वपशूद्राधिकरणन्यायेन अनधिकृतशारीरकोऽहं इतिहासपुराणा[6]ध्ययनजापातप्रतीतिमान् कथं[7] [8]भवत्प्रश्नस्योत्तरं **वक्तुं प्रभुरितीमां** शङ्कां वारयन्त आहुः — **वेत्थेति**। हे! सौम्य! सदनुग्रहात्सतो व्यासस्यानुग्रहात् हेतोः[9] तत्सर्वं **इतिहासपुराणादिप्रधानप्रतिपाद्यं वस्तु**, तत्त्वतस्त्वं वेत्थ जानासि। अनधिकृतशारीरकोऽपि त्वं सदनुग्रहादितिहासपुराणाद्य-र्थरूपं **वस्तु यथावद्वेत्सि**[10] नत्वापातत इति भावः। सदनुग्रहादपि कथं शारीरकाध्ययनं निर्णेतव्यं वस्तुतत्त्वमहं **विद्यामित्यत**[11] आहुः, **ब्रूयुरिति**। स्निग्धस्यानुरक्तस्य त्वादृशस्य शिष्यस्य गुरवो बादरायणादयो **गुह्यमपि**[12] **ब्रूयुः**, **शारीरकमुखेनानुक्त्वा** केवलमुपदिशेयुरिति भावः ॥ ८ ॥

1 W adds त्रिभिः, 2 W adds कथितानि श्रावितानि 3 W °ह 4 W adds हे सूत! 5 B.W तत्त्वत्रय° 6 W °णाद्यध्ययन° 7 W adds ब्रह्मविदां 8 W युष्माकं प्रश्न° 9 A.B omit हेतोः ... दितिहास° 10 W °त्थ 11 W वदामीत्यत 12 W adds उत गुह्यमपि

**विज॰** प्रशंसितः प्रवक्ता सूतः स्वप्रश्नोत्तरं सन्तुष्य सम्यग्वक्तीति हृदि कृत्वा प्रष्टव्यार्थं पृष्ठतः कृत्वा तं प्रशंसन्ति शौनकादय इत्याह — **त्वया खल्विति**। अनघ! "दुःखैनोव्यसने ष्वघम्" (ना. र. को. 47) इति अभिधाना न्निरस्तसमस्तकार्यव्यसन! त्वया सेतिहासानि[1] पुराणानि चशब्दादुपपुराणानि अधीतानि वेदवत्पठितानि आख्यातानि व्याख्यातान्यपि यानि मनुयाज्ञवल्क्यादिप्रणीतानि धर्मशास्त्राणि तान्युत अपि अधीत्य व्याख्यातानीत्येका-न्वयः ॥ ६ ॥

तस्य ज्ञानेयत्तां वदन्तीत्याह — **यानीति**। वेदाविदां श्रेष्ठः बादरायणो भगवान् यानि वेद अन्ये च परापरविदः मुनयः तान्येव विदुः। किञ्च ते मुनयो वेदा दन्यत्र यानि विदुः हे सौम्य! त्वं तत्त्वतः तत्सर्वं वेत्थेत्येकान्वयः। वेदवादरतानां वादिना माश्रयत्वाद्बादरायणः बवयोः सावर्ण्यात्। बादरायणसम्बन्धि यत् बादरं अयनं स्थानं यस्य स तथोक्त इति वा। परं ब्रह्म, अपरं ब्रह्म विदन्तीति परापरविदः अतीतानागतविदो वा। हे सौम्य! भक्तिज्ञानलक्षणसोमार्ह! "विद कृतौ" इति धातोः भगवान् यानि वेद, चकार, अन्ये च मुनयो यानि चक्रुः तत्सर्वं जानासीति वा। गुरवः स्निग्धस्य स्नेहलक्षणभक्तिसम्पन्नस्य शिष्यस्य **गुह्यमप्यतिगोप्यमपि ब्रूयुः**, उतापि तत्सम्भावित मित्यन्वयः ब्रूयुरपि[2] वेत्यर्थ इति वा ॥ ७, ८ ॥

1. B,M add भारतादीतिहाससहितानि 2 M adds ब्रूयुरे°

**रा० कृ०** ऋषयः शौनकादयः त्वयेत्यादित्रयाणां श्लोकानां एकान्वयः। हे अनघ! सूत! त्वया यानि सेतिहासानि महाभारतादीतिहाससहितानि पुराणानि। उत अपि च धर्मशास्त्राणि वर्तन्ते, यत्तदो र्नित्यसम्बन्धात् तानि सर्वाण्यपि अधीतानि अभ्यस्तानि आख्यातानि व्याख्यातानि च। यानि शास्त्रादीनि विदां विदुषां मध्ये निर्धारणषष्ठी, श्रेष्ठः भगवान् बादरायणः व्यासः वेद। किञ्च, परापरविदः सगुणनिर्गुणब्रह्मविदः अन्ये मुनयः विदुः। हे सौम्य! हे साधो! तदनुग्रहात् तेषां महर्षीणा मनुग्रहात् तत्सर्वं तत्त्वतः याथार्थ्यतः त्वं वेत्थ जानासि। कुत इति चेत्, गुरवः अज्ञानान्धकारनिरसनपटवः स्वाभ्यस्तमहाविषयोपन्यासकाः पण्डिताः पृच्छकानामावश्यकविषयबोधनेन चक्षुरुन्मीलनविधायिनो गुरवः, नहि केवलं पाण्डित्यं गुरुत्वप्रयोजकम्। आचार्याः स्निग्धस्य विद्याप्रेमिणः शिष्यस्य गुह्यमपि रहस्यमपि ब्रूयुः उत अवश्यं कथयेयुः। उते त्येवार्थे।

व्याससूतनामनी न व्यक्तिविशेषबोधके। किन्तु, तन्नामकपीठबोधके। व्यासाः सूताश्च बहवो दृश्यन्ते। प्रतिद्वापरयुगान्तं कश्चन महानवतारपुरुषः व्यासपीठमलङ्करोति। साम्प्रतमस्माभिरधीयमानभारतभागवतयोः कर्ता कृष्णनामधेयः। स एव कृष्णद्वीपबदरिकाश्रमसम्बन्धात् कृष्णद्वैपायनबादरायणाभिख्याभ्यां प्रसिद्धिमाप। वेदार्थपरब्रह्मतत्त्वज्ञानसूतिहेतुभूतः सूतः। व्यासवत्तेऽपि बहवः। तत्र भारतभागवतव्याख्याता सूतः उग्रश्रवोनामको रोमहर्षणतनयः। इमेऽपिनामनी ब्रह्मविद्यासक्ताभ्यां मातापितृभ्यां विहिते भवेताम्। परब्रह्मतत्त्वस्मरणेन हृष्टरोमा रोमहर्षणः। बहुवृद्धसेवनेन विद्वद्विस्मयभयावहापरिमित विषयविशेषश्रोता उग्रश्रवाः।

सूतः स्वविज्ञानवैभवेन व्यासप्रोक्तपुराणानि सव्याख्यान विवृणोति। अत एव व्यासप्रोक्तो ग्रन्थः विपुलतरोऽभवत्। व्यासविरचितः कुरुपाण्डव युद्धकथाग्रन्थः जयाख्यः नितरा मल्प एव। स वैशम्पायनेन जनमेजयस्यास्थाने सर्पयागसन्दर्भे सविस्तर मुक्तो भारताख्यो विपुलग्रन्थोऽभूत्। स एष सूतेन बहुयुगान्तरप्रवृत्तकथाभिस्सह शौनकादिभ्यो व्याख्यातो महाभारताख्यो बृहत्तमग्रन्थोऽभवत्।

एवं भागवत मपि — इद मादौ ब्रह्मा नारदाय उपदिदेश मन्त्रयोगमार्गदिशा। तत् नारदो व्यासायोपदिदेश। अत्रान्तरे श्रीकृष्णः 'परम' पद मगमत्। श्रीकृष्णेन स्वनिर्याणात् कतिपय घटिकाभ्यः प्रागेव तन्मैत्रेयायोपदिष्टम् यत्पुनः श्रीकृष्णाभिलाषमनुसृत्य मैत्रेयो विदुरायोपादिशत्। अनन्तरं त त्पुनर्नारदो व्यास मवोचत ततश्च व्यासः तच्छुकयोगिने समुपादिशत्। शुकश्च शापग्रस्ताय परीक्षिते तदन्वग्रहीत्। सर्वैरेभि र्वृत्तान्तै स्सह तदुपदिदेश सूतः शौनकादिभ्यः। तदिदमस्माभि रधुनाऽधीयमानं श्रीमद्भागवतमहापुराणम्॥ ६, ७, ८,॥

**तत्र तत्राञ्जसाऽऽयुष्मन् भवता यद्विनिश्चितम्।**
**पुंसामेकान्ततः श्रेयस्तन्नः शंसितुमर्हसि॥ ९॥**

**प्रायेणाल्पायुषः सभ्य! कलावस्मिन् युगे जनाः।**
**मन्दाः सुमन्दमतयो मन्दभाग्या ह्युपद्रुताः॥ १०॥**

**भूरीणि भूरिकर्माणि श्रोतव्यानि विभागशः ।**
**अतः साधोऽत्र[1] यत्सारं समुद्धृत्य[2] मनीषया ।**
**ब्रूहि नः[3] श्रद्दधानानां येनात्मा सम्प्रसीदति[4] ॥ ११ ॥**

**सूत जानासि भद्रं[5] ते भगवान् सात्वताम्पतिः ।**
**देवक्यां वसुदेवस्य जातो यस्य[6] चिकीर्षया ॥ १२ ॥**

---

1 H साधो! M मर्त्याः; V सर्वे 2 H,V °द्गृह्य 3 H I V भद्राय भूतानां 4 H I सु°. M °ऽऽशु 5 H तत्सर्वं 6 H यत्र

**श्रीध०** **तत्रेति ।** अञ्जसा ग्रन्थार्जवेन । एकान्ततः श्रेयोऽव्यभिचारि श्रेयस्साधनम् ॥ ९ ॥

अन्येऽपि[1] बहुना[2] कालेन बहुशास्त्रश्रवणादिभिर्विनिश्चिन्वन्तु । नेत्याहुः — **प्रायेणेति** । हे सभ्य! हे साधो! अस्मिन् युगे कलौ अल्पायुषः जनास्तत्रापि मन्दा अलसास्तत्रापि सुमन्दमतयस्तत्रापि मन्दभाग्याः विघ्नाकुलास्तत्रापि उपद्रुता रोगादिभिः[3] ॥ १० ॥

न च बहुशास्त्रश्रवणेऽपि तावतैव[4] फलसिद्धिरित्याहुः । **भूरीणीति**[5] । भूरीणि कर्माण्यनुष्ठेयानि येषु तानि समुद्धृत्य[6] येनोद्धृत[7] वचनेन आत्मा बुद्धिः सम्प्रसीदति सम्यगुपशाम्यति ॥ ११ ॥

प्रश्नान्तरं — **सूत! जानासीति** पञ्चभिः । भद्रं ते इत्यौत्सुक्येनाशीर्वादः ।[8] **भगवान्निरतिशयैश्वर्यादिगुणः**[9] । सात्वतां सच्छब्देन सत्त्वमूर्तिर्भगवान्,[10] स उपास्यतया विद्यते येषामिति सत्वन्तो भक्ताः ।[11] स्वार्थेऽण् राक्षसवायसादिवत् । तस्य[12] चाश्रवणमार्षम् । तदेवं सात्वन्त इति भवति । तेषां पतिः पालकः । यस्यार्थविशेषस्य चिकीर्षया वसुदेवस्य भार्यायां देवक्यां जातः ॥ १२ ॥

---

1 H,V नन्वन्येऽपि 2 H,V भूयसा 3 H,V add पीडिताः 4 H,V तावती 5 H,V add सार्धश्लोकमेकं वाक्यम् । 6 H,V °द्गृह्य यथाव दुद्धृत्य 7 H,V add विषयप्र° 8 H,V add [विस्तरेणाशीर्वादवचनेन विष्णुकथाभिघातो भवतीति सङ्ग्रहेणोक्तम् । तथा हि — श्लो ॥ सा हानिस्तन्महच्छिद्रं स मोहस्स च विभ्रमः । यन्मुहूर्तं क्षणं वाऽपि वासुदेवं न चिन्तयेत् ॥ इति वक्ष्यमाणत्वात् ।] 9 H,V गुणयुक्तः 10 V adds अभिधीयते 11 H,V add ततः 12 H अत्र तकारस्य श्रवण°

**वीर०** एवं तस्य प्रतिवचनसामर्थ्यमाविष्कृत्य प्रष्टव्यं पृच्छन्ति — **तत्रेति** । हे! आयुष्मन्! पुंसामेकान्ततो नियमेन निरतिशयं श्रेयः यत्[1] यतः साधनाच्छ्रेयो भवेत् तत् भवता तत्र तत्र पुराणादिषु निश्चितं निर्णीतं नोऽस्मभ्यं शंसितुं प्रस्तोतुमर्हसि । एवमुक्तसाधनभूतो[2] धर्मः पृष्टः किं निरतिशयं श्रेयः ? को वा तत्साधनभूतो धर्मः ? इति प्रश्नार्थः ॥ ९ ॥

अथ त्रिवर्गसाधनानामश्रोतव्यत्वं सूचयन्तस्तन्निष्ठानां दौर्भाग्यं तैः श्रोतव्यानां बहुत्वं च वदन्तः सर्वशास्त्रार्थसारभूतं मुक्तिसाधनमेव पृच्छन्ति — **प्रायेणेति** सार्धाभ्याम् । सभ्य! अस्मिन् कलौ युगे जना मानवाः

प्रायेणाल्पायुषः। अनियतशतवर्षायुषः। अनेन कृतादियुगेष्विव यथेष्टं भोगानन्तरं मुमुक्षोदयासम्भव उक्तः। मन्दाः मन्दप्रकृतयः[3] नितरां मन्दबुद्धयः, उपद्रुताः तापत्रयवर्गत्रयतृष्णाभ्यामिति शेषः। 'सुमन्दमतय' इत्यनेन झटिति श्रेयस्तत्साधनानवगमः सूचितः। 'मन्दा' इत्यनेन श्रेयस्साधनोपसंहारासामार्थ्यं सूचितम्। 'उपद्रुता' इत्यनेन क्वचिच्छ्रेयस्साधनोद्योगस्यानेकान्तरायविहतत्वम्। अत एव ते जना मन्दभाग्या दुर्भगा इत्यर्थः॥ १०॥

हि **यस्मात्**, उपद्रुता अत एव तै र्विभागशः स्वस्वापेक्षितधर्मादिसाधनभेदेन श्रोतव्यानि **भूरिकर्माण्यायासबहुलानि कर्माणि**[4] **बहूनि** सन्तीति पौण्डरीकवाजपेयादिभेदेन भूरीणि एकैकस्मिन्ननेकेतिकर्तव्यता कलापवत्त्वेन भूरिकर्माणीति[5]। **यत एव मतोऽत्र श्रोतव्येषु** मध्ये यत्सारमनिष्टनिवर्तक मिष्टप्रापकं सारं साधनं तन्मनीषया सूक्ष्मया धिया समुद्धृत्य दध्नो घृत मिवोद्धृत्य **श्रद्दधानानां**[6] **नोऽस्माकं ब्रूहि**। सारं विशिंषन्ति — येनेति। येन सारेण आत्मा चित्तं सम्प्रसीदति रागादिभिरकलुषं[7] स्यात्, तत्सारं ब्रूहीत्यन्वयः। प्रायेणेत्य[8]ल्पायुरादिभिः प्रत्येकं सम्बध्यते, **प्रायेण**[9] **मन्दा** इ[10]त्यादिना। तेन "मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये" (भ. गी. 7-3) इति भगवद्वचनार्थः स्मारितः। 'येनात्मा सम्प्रसीदती' त्यनेनात्मप्रसादार्थमेव तावन्मुमुक्षुभि[11]र्वर्तितव्यम्। सति चाऽऽत्मप्रसादे "प्रसादे सर्वदुःखानां हानि रस्योपजायते। प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठति" (भा. गी. 2-65) इत्युक्तरीत्या दुःखहान्यादि रर्थादेव भवतीति सूचितम्। यद्वा येन सारभूतेन साधनेनाऽऽत्मा[12] सम्प्रसीदति प्रसन्नो भवतीत्यर्थः। एवं च "किं मलभ्यं भगवति प्रसन्ने श्रीनिकेतने" (भाग. 10-39-2) इति वक्ष्यमाणरीत्या ततः सर्वं सम्पद्य[13]त एवेति भावः। भूरीणि[14] श्रोतव्यानि विभागशः सन्ति, तत्र सारं ब्रूही त्यनेन भूरिकर्माणि न श्रोतव्यानि [15]प्रतीयन्ते। यद्यपि कर्माण्यपि फलद्वारा हानाय स्वरूपेणोपादानाय च श्रोतव्या न्येव। अन्यथा सांसारिकफलनिर्वेदासम्भवेन निश्श्रे[16]यसस्साधनावबो[17]ध्याध्यात्म शास्त्रशुश्रूषाया एवासम्भवात् परमात्मोपासनस्यानभिसंहितफलकर्मोपकार्यत्वज्ञानाभावप्रसङ्गाच्च, तथाप्येकयैवोक्त्या **सर्वाणि**[18] **फलत** स्त्याज्यान्युपासनाङ्गतया यथाशक्त्यनुष्ठेयान्येतावदेव श्रोतव्यं [19]मुमुक्ष्वभिप्रायेणैवमुक्तम्॥ ११॥

एवं मुक्तिसाधनं **पृष्ट्वाऽथ** तदनुग्राहकेषु प्रधानतमं "श्रवणं कीर्तनं विष्णोः स्मरणम्" (भाग. 7-5-23) इत्यादिषु **प्रथमोपात्तं** भगवच्चरित्रश्रवणं चिकीर्षव स्तत्रापि साधुपरित्राणायावतीर्ण[20]समनन्तरं श्रीकृष्णावतारचरितं **पृच्छन्ति** — **सूत** इत्यादि षड्भिः। हे! सूत! तुभ्यं भद्रं कल्याण मस्तु। सात्वतां भक्तानां पतिः पालयिता भगवान् वसुदेवस्य, अपादानस्य सम्बन्धविवक्षया षष्ठी, वसुदेवात्तद्भार्यायां देवक्यां यस्य चिकीर्षया यत्कर्म कर्तु मिच्छया जातो ऽवतीर्णः। तत्सर्वं त्वं जानासीति॥ १२॥

---

1 W इति वा 2 W एवं मुक्ति° 3 W adds सुमन्दमतयः 4 W adds भूरीणि 5 W adds वा 6 W adds श्रद्धां कुर्वतां 7 W °षित. 8. W °त्येतद° 9 W adds अल्पायुषःप्रायेण 10 W इत्येतेन "मनुष्या° 11 W °र्यति° 12 W adds परमात्मा 13 W °त्स्य° 14 W adds भूरिकर्माणि 15 W इति प्रतीयते 16 A.B °यस्सा° 17 W °बोध्य° 18 W adds कर्माणि 19 W मुमुक्षुभि रित्यभि° 20 B.W °समनन्तर°

**विज०** इदानी मभिमतार्थ माहु रित्याह — **तत्रेति**। आयुष्मन्! प्रशस्तायुष सूत! भवता तत्र **पुराणादिष्वञ्जसा** ऋजुमार्गेण य त्पुंसामेकान्ततः श्रेयो निश्चितं तन्नः शंसितुमर्हसीत्यन्वयः॥ ९॥

ननु किमिति सङ्क्षिप्य कथनं, विस्तरेण किं न स्या दिति तत्राह — **प्रायेणेति**। अस्मिन् कलौ युगे जनाः अल्पायुषः। अत एव मर्त्याः मरणशीला मन्दाः कर्मकरणशक्तिशून्याः। सुमन्दमतयः अत्यल्पप्रज्ञाः मन्दभाग्याः अल्पपुण्यभागिनः कुष्ठभगन्दरादिव्याधिभिरुपद्रुताः। प्रायेणेति प्रत्येकमभिसम्बध्यते। बहुल मेवं कश्चिदेवोक्तार्थे अन्यथा स्यादित्यर्थे वर्तते इत्यन्वयः ॥ १० ॥

अल्पायुष्यादिभिः अत्यन्तं दुर्बलानां श्रेयस्साधनशास्त्राणि हित्वा अर्थादिविषयानेकशास्त्रश्रवणं दुश्शक मित्याहु रित्याह — **भूरीणीति**। विभागशः प्रत्येकं विभक्तानि तथाभूतानि भूरीणि बहूनि भूरिकर्माणि व्यापारवन्ति श्रोतव्यानि अर्थादिविषयशास्त्राणि सन्तीति य दित्यन्वयः। प्रश्नार्थं निगमयति अत इति।[1] एवमर्थादिविषयशास्त्रज्ञानं दुश्शकं श्रेयःपरिपन्थि च, आयुरादिकं चाल्पम्। अतः साधो! हीनजात्युत्पन्नत्वेऽपि निर्दोष! अत्रैषु शास्त्रेषु य त्सारं तन्मनीषया बुद्ध्या समुद्धृत्य इदमेवोपादेयमिति नः ब्रूहि। किमर्थम्? भूतानां भद्राय, येन भवदुक्तसारश्रवणेनाऽऽत्मा हरि राशु प्रसीदति; अनुग्रहोन्मुखो भवतीत्येकान्वयः ॥ ११ ॥

सारश्च हरेः कृष्णावतारकथैवेत्याशयवन्तः पुनराहुरित्याह — **सूतेति**। भो सूत! जानासि सकल मिति शेषः। ते तुभ्यं भद्रं मङ्गल मस्तु, ते तव बिम्बभूतं भद्रं सर्वमङ्गलं भगवन्तं जानासीति वा। सात्वतां पतिर्भगवान् यस्य कार्यविशेषस्य चिकीर्षया वसुदेवस्य सकाशात् देवक्यां जातः, तद्द्वारा प्रकाशितः ॥ १२ ॥

---

1. B.M add अतः

**रा० कृ०** हे आयुष्मन्! सूत! भवता तत्र तत्र पुराणादिषु पुंसां एकान्ततः नियमेन श्रेयः श्रेयस्साधनं यद्विनिश्चितं तत् अञ्जसा ग्रन्थार्जवेन नः अस्मभ्यं शंसितुं वक्तु मर्हसि। गुरवः शिष्येभ्यो वेदविवरणावसरे सुखबोधाय पुराणेतिहासान् समुदाहरन्। तत्र काश्चि त्कथाः वृत्ताः, अन्याः वेदार्थस्पष्टप्रतिपत्तये महर्षिभिः कल्पिताः। पुरावृत्तकथाश्रयाः इतिहासाः। सामग्र्येण सृष्टिलक्षण विवरणोपेतानि पुराणानि। शिष्यपरम्परोपदेश परिवर्धितानि तानि सहस्राधिकान्यासन्। भविष्यत्कलिप्रभावेन पण्डिताः वेदाना मपार्थं आपादयिष्यन्तीति मत्वा तेषां मध्ये मुख्यानि **अष्टादश,** स्वीयविष्णुपुराणे सञ्जग्राह पराशरः। तदाज्ञया तदात्मजो वेदव्यासः तान्यष्टादशपुराणानि प्रत्येकं व्याख्यातवान्। पश्चा त्तेषां समन्वयं स्वसमयप्रवृत्त कौरवपाण्डवकथायां सङ्गृह्य भारतेतिहासमवतारितवान्। तथाऽपि साधारणजनाय समुचितदिशा वेदार्थबोधने कृतार्थो नैवाभूव मिति दुर्मनायमानाय व्यासाय नारदो भागवत मुपादिशत् ॥ ९ ॥

अस्मिन् कलौ युगे सर्वे जनाः प्रायेणाल्पायुषः, मन्दाः अलसाः, तत्रापि सुमन्दमतयः तत्रापि मन्दभाग्याः विघ्नाकुलाः। तत्रापि उपद्रुताः रोगादिभिः पीडिताः ॥ १० ॥

हे साधो! सूत! सारग्राहिणः परोपकारनिरताः एव साधवो भवन्तीति भावार्थदीपिकाप्रकाशे श्रीवंशीधरः। विभागशः स्वोद्दिष्टधर्मसाधनभेदेन श्रोतव्यानि भूरिकर्माणि नानाविधानुष्ठेयकर्माणि भूरीणि बहूनि सन्ति। अतोऽत्र श्रोतव्येषु मध्ये यत्साधनं सारं सारभूतं वर्तते त न्मनीषया बुद्ध्या समुद्धृह्य यथावत् उद्धृत्य, भूतानां प्राणिनां भद्राय

श्रेयसे ब्रूहि कथय। येन कथनेन आत्मा बुद्धिः, सम्प्रसीदति सम्यक् प्रसन्नं निर्मलं भवति। सारभूतकथनेन सर्वेषामेव जनानां बुद्धिप्रसादो भवतीति भावः। हे सूत! ते तुभ्यं भद्रं भूया दिति शेषः। भगवान् निरतिशयैश्वर्यादिगुणः, सात्वतां यादवानां पतिः श्रीकृष्णः यस्यार्थविशेषस्य चिकीर्षया वसुदेवस्य देवक्यां जातः। जानासि तमर्थं सर्वं वेत्सि ॥ ११, १२ ॥

**तन्नः शुश्रूषमाणानामर्हस्यङ्गानुवर्णितुम् ।**
**यस्यावतारो भूतानां क्षेमाय च[1] भवाय च ॥ १३ ॥**

**आपन्नः संसृतिं घोरां यन्नाम विवशो गृणन् ।**
**ततः सद्यो विमुच्येत यद्[2]बिभेति स्वयं भ[3]यम् ॥ १४ ॥**

**यत्पादसंश्रयाः सूत! मुनयः प्रशमायनाः ।**
**सद्यः पुनन्त्युपस्पृष्टाः स्वर्धुन्या[4]पोऽनुसेवया ॥ १५ ॥**

**को वा भगवतस्तस्य पुण्यश्लोकेड्यकर्मणः ।**
**शुद्धिकामो न शृणुयाद्यशः कलिमलापहम् ॥ १६ ॥**

---

1 M वि° 2 A त°. M यं बि° 3 M.W भव 4 M °नोवा°

**श्रीध० तन्न** इति। अङ्ग! हे सूत! तन्नोऽनुव[1]र्णयितुमर्हसि। सामान्यतस्तावद्यस्यावतारो भूतानां क्षेमाय पालनाय भवाय समृद्धये ॥ १३ ॥

[2]तत्प्रभावमनुवर्णयंस्तद्यशश्श्रवणौत्सुक्यमाविष्कुर्वन्ति **आपन्न** इति त्रिभिः। संसृति मापन्नः प्राप्तः विवशो[3]ऽपि गृणन्। ततः संसृतेः। अत्र हेतुः। यत् यतो नाम्नः भयमपि स्वयमेव बिभेति ॥ १४ ॥

**यत्पादेति**। किञ्च यस्य पादौ संश्रयो येषां[4] अत एव प्रशमः अयनं वर्त्म, आश्रयो वा येषां ते मुनयः उपस्पृष्टाः सन्निधिमात्रेण सेविताः सद्यः पुनन्ति। स्वर्धुनी गङ्गा, तस्याः आपस्तु तत्पादान्निस्सृता न तु तत्रैव तिष्ठन्ति। अत स्तत्सम्बन्धेनैव पुनन्त्योऽपि अनुसेवया पुनन्ति[5] न तु सद्यः इति मुनीना मुत्कर्षोक्तिः ॥ १५ ॥

**क** इति। पुण्यश्लोकैरीड्यानि स्तव्यानि कर्माणि यस्य तस्य यशः कलिमलापहं संसार-दुःखोपशमनम् ॥ १६ ॥

---

1 H वर्णितुं 2 H,V add पुनरपि 3 V adds °ऽतिभीतो° 4 H,V add ते 5 B adds तत्रापि

**वीर०** तस्मा द्वक्तु मर्हसी त्याहुः — **तदिति**। तच्छ्रीकृष्णचरितं श्रोतुमिच्छतां नोऽस्माकं वर्णितुं अङ्ग! हे सूत! अर्हसि[1]। 'अर्हसी' त्यनेन सदनुगृहीतः कात्स्न्येंन तच्चरित्रवेदी त्वं वक्तुं प्रभु रिति सूचितम्। महोपकर्तृत्वात्तदवतारचरित्रमवश्यं शुश्रूषितव्यमित्यभिप्रायेण तदवतारं विशिंषन्ति यस्येति। यस्य भगवतोऽवतारः श्रीकृष्णरूपो भूतानां विभवाय योगापरपर्यायेष्टोदयाय क्षेमाय तत्पालनाय च। भक्तानामित्यनुक्त्या[2] भूतानामिति वदतामयमभिप्रायः। शत्रूणामपि दमनपूर्वकमपवर्गदायित्वेन महोपकर्तेति किमु वक्तव्यम् तदवतारो भूतानां योगक्षेमार्थ इति ॥ १३ ॥

यंत[3] स्तन्नामैवानिष्टपरिहारेष्टप्रापणक्षम मेवेत्यभिप्रायेण नामप्रभावमाहुः **आपन्न** इति। घोरां गर्भजन्मजरामरणादिरूपां संसृतिमापन्नः प्राप्तः पुमान् शत्रुरपि विवशः पारवश्येनापीत्यर्थः। यस्य श्रीकृष्णस्य यच्छब्दानां[4] को वा भगवतस्तस्येत्युत्तरेणान्वयः। नाम गृणन्नुच्चरन्[5] देहावसान इति शेषः। ततः संसृतेः सद्य एव विमुच्येत मुक्तो भवेत्। कथं पारवश्येना प्युच्चारणमात्रेणापि शत्रुरपि मुच्येतेत्यत्रोच्चारणं विशिंषन्ति यद्बिभेति स्वयं भव इति। यन्नामोच्चारणं प्रति भवः संसारः स्वयं बिभेति। 'भय' मिति पाठेऽपि जन्ममरणादिभयहेतुत्वाद्भव एव भयशब्देन विवक्षितः। देहावसानकालिकभगवन्नामोच्चारणस्याव्यवधानेन मुक्तिसाधनत्वं इतर कालिकस्य तु कर्मज्ञानयोगादिव द्भक्तियोगानुग्राहकत्वेन तद्द्वारेति विवेकः। एतच्च षष्ठेऽजामिलोपाख्याने प्रपञ्चयिष्यते ॥ १४ ॥

आस्तां तावदवताराणां नाममाहात्म्यं तदीयानां माहात्म्यमेव वाङ्मनसागोचर[6] मित्यभिप्रायेणाऽऽहुः **यदिति**। हे! सूत! यस्य भगवतः पादसंश्रयाः पादावेव प्राप्यत्वेन प्रापकत्वेन संश्रयन्त इति तथा। मुनय स्तत्पदारविन्दमननशीलाः प्रशमायनाः शमदमादिगुणानामाश्रयाः तदीयाः स्पृष्टाः,[7] पादयो रिति शेषः। पादस्पर्शमात्रेणापीति भावः। सद्य एव पुनन्ति, स्पृष्टा[8] निति शेषः। एवं तत्पादसम्बन्धिन्याः स्वर्धुन्या गङ्गाया आपोऽप्यनुसेवया स्नानपानादिरूपया सेवया[9] पुनन्ति स्वर्धुन्याप स्त्वनुसेवया पुनन्ति मुनयस्तदीया स्तूपस्पर्शमात्रेणापि पुनन्तीति केचिद् व्याचक्षते। यथा स्वर्धुन्यापोऽनुसेवया पुनन्ति तथा मुनयोऽप्युपस्पृष्टाः पुनन्तीति दृष्टान्तो वाऽभिप्रेतः ॥ १५ ॥

उक्तैरन्यैश्च गुणैस्तं विशेषतस्तच्चरित्रमवश्यात्मशुद्धि[10][11] मिच्छद्भिः श्रोतव्यमित्यभिप्रायेणाऽऽहुः **को वेति**। तस्योक्तविधस्य पुण्यस्य[12] शृण्वतां वदतां च पुण्यावहः। श्लोक्यत इति श्लोको यशो यस्य। अत एव स चासावीड्यं स्तुत्यं कर्म चरित्रं यस्य तस्य भगवतो यशः कलिमलापहं कलिप्रयुक्तपापहन्तृ चित्तशुद्धिकामः को वा पुमान्न शृणुयात्? सर्वोऽपि शृणुया देवेत्यर्थः ॥ १६ ॥

---

1 W adds जानासि 2 W °क्त्वा 3 W अ° 4 A,B त्मको 5 °च्चैरादे° 6 A °सामगो° 7 W adds उप° 8 W स्प्रष्टृ° 9 W °कान् 10 W °शिंषन्त° 11 B,W °श्यमा° 12 W °ण्यः

**विज०** यस्यावतारो भूतानां क्षेमाय ऐहिकामुष्मिकसुखाय विभवा याभिवृद्धये भवति। अङ्ग! हे वत्स! तस्य कृष्णस्य तं कार्यविशेष चरित्रापरपर्यायं शुश्रूषमाणाना मस्माकमनुवर्णितुं सम्यक् वक्तुमर्हसीत्येकान्वयः। सात्वतामिति सत् ब्रह्म कृष्णाख्य मुपास्य मेषामस्तीति सत्वन्तः त एव सात्वन्तः। प्रज्ञादित्वात् स्वार्थे अण्। तस्यादर्शनं

छान्दसम्। यद्वा सातिः सौत्रो धातुः, सुखार्थः। वासरूपन्यायेन[1] क्विपि सात् सखा परमात्मा स एषामस्तीति सात्वन्तो भक्तास्तेषां पतिः मरुत्वतामितिवत् सात्वतामिति रूपसिद्धिः। यद्वा, सात्वतप्रातिपदिकात् "तत्करोति तदाचष्टे" (अष्टा. ग. सू. 204) इति णिचि कृते "क्विप्च" (अष्टा. 3-2-76) इति क्विपि च कृते णिचो लोपे अतो लोपे च सात्वतामिति, रूपसिद्धिः। सात्वतां पाञ्चरात्रोक्तानुष्ठानकारिणां, यादवानां वा॥ १३॥

सारत्वात् कृष्णचरितमेवानुवर्णनीयं नान्यत् यतस्तस्य वासुदेवादिनामोच्चारणा दखिलबन्धनिवृत्तिः, तत्र किं वक्तव्यं तच्चरितश्रवणमननाभ्यामि त्याशयवन्त आहुरित्याह **आपन्न** इति। भवः संसारः अहङ्काररूपेण बन्धको रुद्रो वा यं प्रति बिभेति भयादपसृतो भवति यन्नाम यस्य नाम गृणन् उच्चारयन् विवशः बह्वभ्यासात् घोरां संसृतिमापन्नः पुरुषः ततः घोरसंसारात् सद्य स्तदानी मेव विमुच्येत विशिष्टां मुक्तिमाप्नोति॥ १४॥

किञ्च यत्पादसंश्रयाः यस्य पादावेव संश्रयो येषां ते तथोक्ताः। प्रकृष्टः शमो भगवन्निष्ठैव अयनमाश्रयो येषान्ते प्रशमायनाः मुनयः यैः प्राणिभि रुपस्पृष्टास्तान् सद्यः पुनन्ति पवित्रीकुर्वन्ति, 'यत्पादसंश्रया' दिति पाठे यच्चरणनिषेवणादात्मानं पुनन्तीत्यर्थः। तत्र निदर्शनमनुसेवया अनुसेवनेन निषेवणेन उपस्पर्शनस्नानाचमनादिना स्वर्धुनी गङ्गेव यथा लोकं पुनाति तथेत्यन्वयः। "स्वर्धुन्याप" इति पाठे गङ्गाजलपरमाणवः। चिरकालसेवया, मुनयः सद्य-इति शेषः॥ १५॥

पुण्यश्लोकै र्ब्रह्मादिभिः ईड्यं स्तुत्यं कर्म कंसवधादिचरितं यस्य स तथा। पुण्यश्लोक श्चाय मीड्य-कर्मेति वा तस्य हरेः कलिमलापहं कलिनिमित्तं मलं पापलक्षण मपहन्तीति। यश श्चरितापरपर्यायम्। शुद्धिकामः अन्तःकरणनिर्मलतां कामयमानः को वा पुरुषः न शृणुयादित्येकान्वयः॥ १६॥

---

1. A,K °न्याये

**रा° कृ° अङ्ग!** हे सूत! यस्य परमात्मनः श्रीकृष्णस्य अवतारः भूतानां क्षेमाय पालनाय भवाय च समृद्धये च भवति तं शुश्रूषमाणानां नः अस्माकं अनुवर्णितुं अनुवर्णयितुं अर्हसि॥ १३॥

घोरां संसृतिं आपन्नः प्राप्तः विवशोऽतिभीतोऽपि यन्नाम यस्य भगवतो नाम गृणन् उच्चारयन् तत स्संसृते स्सद्यो विमुच्येत मुक्तिं प्राप्नुयात्। हे सूत! यत् यन्नाम्नः भयं संसारभयमपि स्वयं बिभेति। किं च यत्पादसंश्रयाः मुनयः प्रशमायनाः शमादिगुणाश्रया स्सन्तः उपस्पृष्टाः सन्निधिमात्रेण सेविताः सद्यः पुनन्ति स्पृष्टान् पवित्रीकुर्वन्ति। स्वर्धुन्यापः गङ्गायाः जलानि तु अनुसेवया स्नानपानादिरूपया पुनन्तीति शेषः; न तु सद्य इति मुनीनामुत्कर्षकथनम्॥ १४, १५॥

पुण्यश्लोकेड्यकर्मणः पुण्यकीर्तिभिः स्तुत्यानि कर्माणि यस्य तस्य भगवतः कलिमलापहं यशः शुद्धिकामः को वा न शृणुयात्॥ १६॥

तस्य कर्माण्युदाराणि परिगीतानि सूरिभिः ।
ब्रूहि नः श्रद्दधानानां लीलया दधतः कलाः ।। १७ ।।

अथाख्याहि हरे र्धीमन्नवतारकथाः शुभाः ।
लीला विदधतः स्वैर मीश्वर स्यात्ममायया ।। १८ ।।

वयं तु न वितृप्याम उत्तमश्लोकविक्रमे[1] ।
य च्छृण्वतां रसज्ञानां स्वादु स्वादु पदे पदे ।। १९ ।।

कृतवान् किल वीर्याणि[2] सह रामेण केशवः ।
अतिमर्त्यानि भगवान् गूढः कपटमानुषः ।। २० ।।

1. H,M °मैः 2. B,I कर्माणि

**श्रीध°** प्रश्नान्तरम् **तस्येति**। उदाराणि महान्ति विश्वसृष्ट्यादीनि। सूरिभिर्नारदादिभिः कलाः ब्रह्मरुद्रादिमूर्तीः ।। १७ ।।

**अथेति** प्रश्नान्तरे[1]। अवतारकथाः स्थित्यर्थमेव तत्तदवसरे ये मत्स्याद्यवतारा[2]स्तदीयाः कथाः। स्वैरं लीलाः कुर्वतः। श्रीकृष्णावतारप्रयोजन प्रश्नेनैव तच्चरितप्रश्नोऽपि जात एवेति ज्ञातव्यम् ।। १८ ।।

अत्यौत्सुक्येन पुनरपि तच्चरितान्येव श्रोतुं इच्छन्त स्तत्रात्मनस्तृप्त्यभाव मावेदयन्ति **वयन्त्विति**। योगयागादिषु तृप्ताः स्मः। उद्गच्छति तमो यस्मात्स उत्तमस्तथाभूतः श्लोको यशो यस्य तस्य विक्रमे तु विशेषेण न तृप्यामः, अलमिति न मन्यामहे। तत्र हेतुः। यद्विक्रमं[3] शृण्वताम्। यद्वा अन्ये तृप्यन्तु नाम वयन्तु **नेति** **तुशब्दस्यान्वयः**। अयमर्थः। त्रेधा ह्यलम्बुद्धि र्भवति — उदरादिभरणेन वा, रसाज्ञानेन वा, स्वादुविशेषाभावा द्वा।[4] **तत्र शृण्वतामित्यनेन** श्रोत्रस्याकाशत्वान्न भरणमित्युक्तम्। रसज्ञाना मित्यनेन चा[5]ज्ञानतः पशुप्र[6]वृत्ति र्निराकृता। इक्षुभक्षणव द्रसान्तराभावेन तृप्तिं निराकरोति। पदे पदे प्रतिक्ष[7]णं स्वादुतो[8]ऽपि स्वादु ।। १९ ।।

अतः श्रीकृष्णचरितानि कथयेत्याशये नाऽऽहुः — **कृतवा निति**। अतिमर्त्यानि **मर्त्यानतिक्रान्तानि** गोवर्धनोद्धरणादीनि। मनुष्ये ष्वसम्भावितानि इत्यर्थः ।। २० ।।

1 B,H,V °रं 2 V °ताराः कृता स्तदाश्रयाः 3 B °मणं 4. H,V add एतत्तय मुत्तमश्लोके नास्तीत्याह। 5. H,V च रसाज्ञानतः 6. B,H,V °वत्तृप्ति° 7. H.V °पदं 8 H,V °नोऽ°

**वीर°** **तस्येति**। अतो लीलया न तु कर्मणेति भावः। कलाः मूर्ती रवतारान्तररूपाः दधतः तस्योदाराणि विपुलानि सूरिभिः नारदपराशरपाराशर्यादिभिः परिगीतानि च कर्माणि चरितानि श्रद्दधानानां नोऽस्मभ्यं ब्रूहीति।

लीलये त्यने नावताराणां अकर्ममूलत्व मुक्तम्। "कलाः दधत" इत्यनेन श्रीकृष्णस्यावतारि[1]त्वप्रतीत्या पूर्णावतारत्वं सूचितं; तेनै वावतारान्तरकथाप्रश्नश्च कृत इत्यर्थः ॥ १७ ॥

लीलयेत्यनेनावताराणामकर्ममूलत्वमुक्तम्। अथावतारचेष्टितानाम[2]कर्ममूलत्वं वदन्तः कात्स्न्र्येन तदवतारचरित्राणि पृच्छन्ति **अथेति**। हे धीमन् आत्ममायया आत्मनः स्वस्य मायया आश्चर्यशक्तियु[3]क्तेन। आश्चर्यत्वं **मायाशब्दप्रवृत्तिनिमित्तं** सङ्कल्परूपज्ञानेन वा। "माया वयुनम्" (वे. नि. 3-9) इति नैघण्टुकाः। "मायया सततं वेत्ति प्राणिनां च शुभाशुभम्" (भार. App. 15. 2085 pr.) इति [4]ज्ञाने ऽभियुक्तप्रयोगः। स्वैरं यथा तथा लीला **श्रेष्ठा** विदधतः कुर्वत ईश्वरस्य सर्वनियन्तु र्हरे राश्रितदुरितहरस्य भगवतः शुभाः शृण्वतां वदतां च शुभावहाः अवतारकथाः। **अथ** कात्स्न्र्येनाऽऽख्याहि कथय। "मङ्गलानन्तरारम्भ प्रश्नकात्स्न्र्येष्वथो अथ" (अम. को. 3-248) इति नैघण्टुकाः। आत्ममायया स्वैरं लीला विदधत इत्यनेन देवमनु[5]ष्यादिजातीयानां अवतारचेष्टानां आत्मीयसङ्कल्पमूलत्वं अकर्मवश्यत्वप्रयुक्तत्वं च सूचितम् ॥ १८ ॥

ननु, आभीक्ष्ण्येन श्रुता एव भगवदवतारकथा भवद्भिः, अतस्ताः किमर्थं पृ[6]च्छ्यन्ते? तत्राऽऽहुः **वयन्त्विति**। [7]वयं यदुत्तमश्लोकचरितं शृण्वतामपि रसज्ञानां पदे पदे क्षणे क्षणे पुनः पुन र्वा स्वादु[8] रुचिजनकं भवति पूर्व[9] श्रवणापेक्ष यो[10]त्तरश्रवणेऽतीव रुचिकरमेव भवति इति श्रुतमपि पुनः पुनः नवमेव भवतीति भावः। यत् यस्मा त्पदे पदे स्वादुतः स्वादु तदुत्तमश्लोकविक्रमे न वितृप्याम इत्यन्वयः ॥ १९ ॥

युक्तंचैतदित्यभिप्रायेणाऽऽहुः — **कृतवा** निति। कपटमानवः छद्ममानवः। मनुष्यवत् प्रतीयमान इत्यर्थः। एवमपि भगवान् पूर्णषाड्गुण्यः तथाऽपि गूढः तत्त्वतोऽयमीश्वर इति केनापि न ज्ञातः। केशवः "क इति ब्रह्मणो नाम ईशोऽहं सर्वदेहिनाम्। आवां [11]त्वदङ्गसम्भूतौ तस्मात् केशवनामवान्" (हरिवंशे) इति रुद्रनिरुक्तकेशवपद पुष्कलप्रवृत्तिनिमित्ताश्रयः **श्रीकृष्णो** [12]बलरामसहितः अतिमर्त्या न्यतिमानुषाणि मनुष्यैः कर्तु मशक्यानीति यावत्। वीर्याणि चेष्टितानि कृतवा[13]नेवेति प्रसिद्धिः। मानुषाणि हि कर्माणि सकृत् श्रुतानि पुनः पुनः शुश्रूषां न जनयेयुः, **भगवद्वीर्या** ण्यतिमानुषत्वाद्विलक्षणविषयत्वादेव स्वविषयां शुश्रूषाम प्युत्तरोत्तराधिकां विलक्षणां जनयन्ति, तत्र किमु वक्तव्यमित्यर्थः। अत स्तत्र न वितृप्याम इति भावः। अतो भगवत्कर्मश्रवणे श्रद्धावतां नः तानि कथयेत्यर्थः ॥ २० ॥

---

1 W °र° 2 W °मप्य° 3 W °योगेन 4 W अभियुक्तैः ज्ञानपर्यायित्वेन मायाशब्द प्रयुक्तः 5 W °दिस° 6 W पृच्छथ इति 7 W adds उत्तमैः ब्रह्मादिभिः श्लोक्यत इत्युत्तमः श्लोको यस्येति वा तस्य विक्रमे चरित्रविषये न वयं तृप्याम.। अतृप्तौ हेतु वदन्तः चरित्रं विशिंषन्ति यदिति। 8 W adds स्वादु 9 B,W add °पूर्व° 10 W adds °त्तरो° 11 W तवाङ्ग 12 W रामेण बलरामेण सहित. 13 W °वान् किले°

**विज०** न केवलं कृष्णकथैव वक्तव्या मत्स्याद्यवतारान्तरकथाऽपीत्याह **तस्य कर्माणीति**। लीलया मत्स्यादिकलाः दधतः तस्य हरेः सूरिभिः ब्रह्मादिभिः परिगीता न्युदारा ण्यक्लिष्टा न्युद्धृतदोषाणि वा कर्माणि ब्रूहीत्येकान्वयः ॥ १७ ॥

तदेवास्माकं वर्णनीयमित्यभिप्रेत्याऽऽहुरित्याह — **अथेति**। यत एवं य च्छ्रद्दधानानामस्माकं **कलिमलापहश्च** तस्मादात्ममायया स्वरूपभूतेच्छया स्वैरं यथेष्टं लीलाः प्रलयजलविहारादिक्रीडाः विदधत ईश्वरस्य स्वतन्त्रस्य हरेः शुभाः मङ्गला अवतारकथाः हे धीम न्नस्माकमाख्याहीत्येकान्वयः॥ १८॥

भवतां बहुशः श्रुतहरिकथानां किमि त्ययमुत्कण्ठाविशेष इत्यत उच्यते **वयं** इति। **वयमुत्तमश्लोकस्य** हरेर्विक्रमैः श्रुतै र्न वितृप्यामः अन्येषां तृप्ति रस्तु वा, नास्माकमलम्बुद्धिरित्येतस्मि न्नर्थे तुशब्दः। यद्विक्रमजातं **शृण्वतां** रसविवेकविदुषां स्वादु स्वा द्वतिमधुरं भवती त्येकान्वयः। "रसो रागे विषे वीर्ये तिक्तादौ पारदे द्रवे" (वैज. को. 6-1-49) इति तद्विशेषज्ञा वा रसज्ञाः॥ १९॥

सम्प्रति कृष्णावतारचरितश्रवण एव उत्कण्ठाविशेष इत्यभिप्रेत्याऽऽहु रित्याऽऽह — **कृतवा** निति। **स्वमहिम्ना** गूढः कपटमानुषः केशवो भगवान् रामेण सह यानि मर्त्यवीर्यमतिक्रम्य विद्यमानानि वीर्याणि पराक्रमलक्षणानि कृतवान् किल, ता न्यस्माकं ब्रूही त्येकान्वयः। मानुषेष्वपि कं सुखं पटति प्राप्नोति इति कपटमानुषः इत्यर्थोऽपि ग्राह्य इति॥ २०॥

**रा° कृ°** लीलया कलाः ब्रह्मरुद्रादिमूर्तीः दधतः तस्य भगवतः सूरिभिः नारदादिभिः परिगीतानि उदाराणि कर्माणि श्रद्दधानानां नः अस्मभ्यं ब्रूहि॥ १७॥

हे धीमन्! अथ अनन्तरं स्वैरं यथेच्छं आत्ममायया लीलाः विदधतः हरेः शुभाः अवतारकथाः मत्स्याद्यवताराश्रयकथाः आख्याहि कथय॥ १८॥

यत् यद्विक्रमादिकं शृण्वतां रसज्ञानां पदे पदे स्वादु स्वादु स्वादुनोऽपि स्वादु भवति, तस्मिन् उत्तमश्लोकविक्रमे तमोऽपहकीर्तिमतो भगवतो विक्रमकथायां वयं न वितृप्यामः तृप्तिं न भजामः॥ १९॥

गूढोऽय मीश्वर इति केनापि न ज्ञातः कपटमानुषः मानुषव त्प्रतीयमानः भगवान् केशवः रामेण बलरामेण सह अतिमर्त्यानि मनुष्येषु असम्भावितानि गोवर्धनोद्धरणादीनि वीर्याणि पराक्रमचेष्टितानि कृतवान् किल॥ २०॥

**कलि मागत माज्ञाय क्षेत्रे ऽस्मिन् वैष्णवे वयम्।**
**आसीना दीर्घसत्त्रेण कथायां सक्षणा हरेः॥ २१॥**

**त्वं नः सन्दर्शितो धात्रा दुस्तरं निस्तितीर्षताम्।**
**कलिं सत्त्वहरं पुंसां कर्णधार इवार्णवम्॥ २२॥**

**ब्रूहि योगेश्वरे[1] कृष्णे ब्रह्मण्ये धर्मवर्मणि[2]।**
**स्वां काष्ठामधुनोपेते धर्मः कं शरणं गतः॥ २३॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां प्रथमस्कन्धे
नैमिशोपाख्याने प्रथमोऽध्यायः॥ १॥

1. H °गी° 2 M °क°

**श्रीध०** ननु याजनाध्यापनादिव्यग्राणां कुतः एतच्छ्रवणावकाशः स्यादत आहुः — **कलि**मिति। कलिमागतं **ज्ञात्वा** तद्भिया विष्णुपदं गन्तुकामाः दीर्घसत्रेण निमित्तेनात्र वैष्णवे क्षेत्रे आसीनाः हरेः कथायां सक्षणाः **लब्धावसराः** ॥ २१ ॥

अस्मिंश्च समये त्वद्दर्शनमीश्वरेणैव सम्पादितमित्यभिनन्दन्ति — **त्वं** इति। कलिं संसारं निस्तर्तुमिच्छताम्। अर्णवं तितीर्षतां कर्णधारो नाविक इव ॥ २२ ॥

पुनः प्रश्नान्तरम् — **ब्रूहीति**। धर्मस्य वर्मणि कवचवद्रक्षके स्वां काष्ठां मर्यादां स्वस्वरूपमित्यर्थः। **अस्यचोत्तरं** "कृष्णे स्वधामोपगते धर्मज्ञानादिभिस्सह" (भाग. 1-3-43) इत्ययं श्लोकः ॥ २३ ॥

इति श्रीमद्भागवते प्रथमस्कन्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां प्रथमोऽध्यायः ॥ १ ॥

1 B य° 2 B °ध्यय° 3 B एव कथाश्रवणा° 4 H,V नितरां तरितु° 5 B निस्तितीर्षतां 6 H V add वक्ष्यमाण

**वीर०** ननु भगवद्वीर्याणि बहूनि महता कालेन श्रोतव्यानि, भवतां तु नित्यं तपश्चरतां कोऽवसर इत्याहुः — **कलिं** इति। कलिं तपोविघ्नकरं कलियुगमागतं प्रवृत्तं विज्ञायाऽऽलक्ष्य वयं उपायान्तरेण कलिं जेतुमशक्ता हरेः कलिकृतदोषहरस्य भगवतः कथायां निमित्तभूतायां कथाश्रवणार्थमित्यर्थः। सक्षणाः सावसराः लब्धावसरा इति यावत्। अस्मिन् वैष्णवे विष्णोः सम्बन्धिनि तत्सान्निध्यवति क्षेत्रे नैमिषाख्ये दीर्घसत्रेण सहस्रवत्सरपर्यन्तेन ब्रह्मसत्रेण। "अध्ययनेन वस" तीतिवत् हेत्वर्थे तृतीया। दीर्घसत्रार्थमित्यर्थः। आसीना उपविष्टा वयं भवामः ॥ २१ ॥

किञ्च पुंसां सत्त्वहरं तपआदिसारहरमत एव दुस्तरमुपायान्तरैस्तर्तुं जेतुमशक्यं कलिं निस्तितीर्षतां तर्तुमिच्छतां नोऽस्माकं अर्णवं सागरं निस्तितीर्षतां जनानां कर्णधार इव त्वं धात्रा ईश्वरेण सन्दर्शितः, उपायत्वेनेति शेषः। दैववशादिदं सम्पन्नमिति भावः ॥ २२ ॥

स्वस्ववर्णाश्रमधर्मेणैव कलिं तरतः किं हरिकथाश्रवणेनेति इमां शङ्कां निराकुर्वन्तः प्रश्नमुपसंहरन्ति — **ब्रूहीति**। ब्रह्मणि ब्रह्मकुले साधुः ब्रह्मण्यः तस्मिन् धर्मवर्मणि धर्मस्य वर्मवत्कवचवत् पालके योगेश्वरे भक्तियोगाराध्ये श्रीकृष्णेऽधुना स्वां काष्ठामभियोगप्रकर्षं स्वां दिशं वा वैकुण्ठलोकमिति यावत्। उपेते गते सति

**धर्मः** वर्णाश्रमानुकूलः कं कृष्णादन्यं कं शरणं रक्षितारं गतः गच्छेत् न कमपीत्यर्थः। अधुना धर्मगोप्तुरभावात् कलिनाऽभिभूतो धर्मस्तं जेतुमप्रभुः। अतः केवलं कलिघ्नं भगवच्चरितमेव ब्रूहि इत्यर्थः ॥ १३ ॥

इति श्रीवत्सान्वयपयःपारावार राकासुधाकरस्य सर्वविद्यानिधे श्चक्रवर्तिनः श्रीशैलगुरोः सुतेन तच्चरणकमलपरिचर्याप्रसादित तत्सूक्तिसमधिगत श्रीमद्भागवतार्थहृदयेन श्रीवैष्णवदासेन. श्रीवीरराघवविदुषा लिखितायां श्रीमद्भागवतचन्द्रचन्द्रिकायां श्रीमद्भागवतव्याख्यायां प्रथमस्कन्धे प्रथमोऽध्यायः ॥ १ ॥

1. W adds नितरां

**विज॰** दीर्घसत्रे दीक्षितानामस्माक हरिकथाश्रवणावसरोऽस्तीत्याहुरित्याह — **कलिमागतं** इति। आगतं **प्रविष्टं** कलिमाज्ञायाऽस्मिन् वैष्णवे क्षेत्रे दीर्घसत्रेणाऽऽसीनाः व्यापारान्तरं विहाय वयं हरेः कथायां कथाश्रवणे सक्षणाः सावसरा इत्येकान्वयः ॥ २१ ॥

पुंसां सत्त्वगुणहरं दुस्तरं तर्तुमशक्यं कलिं निस्तितीर्षतां नितरां तर्तुमिच्छतां नः हे सूत! त्वं धात्रा दैवेन सन्दर्शितः। क इव ? दुस्तरमर्णवं निस्तितीर्षतां सांयात्रिकाणां कर्णधार इव। कर्णधारो यूपकाग्रस्थायी पुरुषः ॥ २२ ॥

प्रश्नान्तरं कुर्वन्तीत्याह — **ब्रूहीति**। अधुना धर्मरूपाणि कर्माणि यस्य स धर्मकर्मा तस्मिन्। **ब्रह्मण्ये** ब्राह्मणहितकारिणि अणिमाद्यष्टयोगेश्वरे भक्तिज्ञानलक्षणयोगे वा योगीश्वरे वा। "कृषि र्भूवाचकः शब्दो णश्च निर्वृतिवाचकः। तयो रैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते" (भार. 5-68-5) इति वचनात्सच्चिदानन्दलक्षणे कृष्णे स्वां काष्ठां गुणपूर्णस्वरूपमुपेते गतवति सति। पूर्वनिर्दिष्टो धर्मः भक्तिज्ञानलक्षणः। कं पुरुषं शरणं गत इति तं अस्माकं **ब्रूहीत्येकान्वयः**। "पुंसा मेकान्ततः" इति श्रेयस्साधनविषयः (१); "ब्रूहि भद्राय" इति प्रत्यगात्मविषयः (२); "**अर्ह स्यङ्गानुवर्णितुं**" इति कृष्णावतारविषयः (३); "ब्रूहि नः श्रद्दधानानां" इति यशोविषयः (४); "अथाऽऽख्याहि" इत्यवतारान्तरविषयः (५); "ब्रूहि योगेश्वर" इति धर्मविषयः (६); — एवं षट् प्रश्नाः ॥ २३ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां प्रथमस्कन्धे प्रथमोऽध्यायः ॥ १ ॥

**रा॰ कृ॰** कलिमागतं विज्ञाय हरेः कथायां सक्षणाः सावसराः लब्धावसराः अस्मिन् **वैष्णवे क्षेत्रे दीर्घसत्रेण** हेतुना आसीनाः वयमुपविष्टाः स्मः ॥२१ ॥

सत्त्वहरं सत्त्वगुणहरं कलिं निस्तितीर्षतां नितरां तर्तुमिच्छतां नः अस्माकं त्वं दुस्तरं **अर्णवं निस्तितीर्षतां पुंसां कर्णधार** इव धात्रा सन्दर्शितः। देवकीवसुदेवतनयत्व भौतिकदेहसञ्चारादिभिः मानवत्वेन **प्रतीयमानः कपटमानुषः**।

देहरामणीयकवयोनामबान्धव्याद्यनावश्यकविषयैः पिहितः विस्मृतप्रायो गूढः। असद्विषया अपि भागवतजनेषु सत्प्रयोजनपर्यवसायिनो भवन्ति। ते कलेरागमनं दुःखनिदानं न मन्यन्ते। न वा तन्निन्दन्ति। अपि तु यज्ञार्थकर्माचरणशीलाः विष्णुकथाश्रवणपरायणाश्च भवन्ति ॥ २२ ॥

धर्मवर्मणि धर्मस्य कवचवद्रक्षके ब्रह्मण्ये ब्रह्मकुलहितकारिणि योगेश्वरे कृष्णे स्वां काष्ठां स्वस्वरूपं उपेते अधुना धर्मः कं शरणं गतः ? ॥ २३ ॥

इति श्रीमद्भागवते प्रथमस्कन्धे
श्रीराधाकृष्णप्रणीतायां सुधीसुधायां व्याख्यायां
प्रथमोऽध्यायः ॥ १ ॥

---

# द्वितीयोऽध्यायः

## व्यास उवाच

इति सं[1]प्रश्नसंहृष्टो विप्राणां रौमहर्षणिः ।
प्रतिपूज्य वचस्तेषां प्रवक्तुमुपचक्रमे ॥ १ ॥

## सूत उवाच

यं प्रव्रजन्तमनुपेतमपेतकृत्यं द्वैपायनो विरहकातर आजुहाव ।
पुत्रेति तन्मयतया तरवोऽ[2]भिनेदु स्तं सर्वभूतहृदयं मुनिमानतोऽस्मि ॥ २ ॥

यः स्वानुभावमखिलश्रुतिसारमेकमध्यात्मदीपम[3]तितितीर्षतां तमोऽन्धम् ।
संसारिणां करुणयाऽऽह पुराणगुह्यं तं व्याससूनुमुपयामि गुरुं मुनीनाम् ॥ ३ ॥

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्या[4]सं ततो जं[5]य मुं[6]दीरयेत् ॥ ४ ॥

---

1. H सम्पृष्ट सम्प्रश्नः ; M सम्प्रश्न सम्पृष्टः ; V सम्प्रश्न सन्तुष्टः 2 M °ऽपि 3 H,V °मतितीरषतां 4 B चैव 5 M ग्रन्थ°
6 H,M °मुदीरये

## श्रीधरस्वामिविरचिता भावार्थदीपिका

[1]तदेवं प्रथमेऽध्याये षट् प्रश्नाः मुनिभिः कृताः ।
द्वितीये तूत्तरं सूतश्चतुर्णामाह तेष्वथ ॥

**इतीति** । विप्राणाम् इति एवंभूतैः सम्यक्प्रश्नैः सम्यक् पृ[2]ष्टः रोमहर्षणस्य पुत्रः उग्रश्रवा[3]ः तेषां वचः प्रतिपूज्य सत्कृत्य प्रवक्तुमुपचक्रमे उपक्रान्तवान् ॥ १ ॥

प्रवचनस्योपक्रमो नाम [4]गुरुदेवतानमस्कार इति [5]तमाह — **यमिति** त्रिभिः । तत्र स्वगुरोः [6]शुक स्यैश्वर्यं तच्चरितेनैव द्योतयन्नाह — यमिति । यं प्रव्रजन्तं [7]सन्न्यस्य गच्छन्तं अनुपेतं मामुपनयस्वेत्युपनयनार्थ-माचार्य[8]मनुपसन्नम्, [9]यद्वा केनाप्यनुपेतमननुगतमेकाकिनमित्यर्थः । तत्र हेतुः अपेतकृत्यं कृत्यशून्यं कर्ममार्गे अप्रवर्तमानं नैष्ठिकत्वात् । द्वैपायनो व्यासः विरहात् कातरो भीतस्सन् पुत्र ३ इति प्लुतेन आजुहाव आहूतवान् । दूरादाह्वाने प्लु[10]ते सत्यपि सन्धिरार्षः । तदा तन्मयतया शुकरूपतया तरवोऽभिनेदुः प्रत्युत्तरमुक्तवन्तः । पितुः स्नेहानुबन्धपरिहाराय यो

वृक्षरूपेणोत्तरं दत्तवानित्यर्थः। तं मुनिं आनतोऽस्मि। तन्मयत्वोपपादनाय विशेषणम्[11]। सर्वभूतानां हृत् मनः अयते योगबलेन प्रविशतीति सर्वभूतहृदयः तम् ॥ २ ॥

तत्कृपालुतां दर्शयन्नाह — **य इति**। अन्धं गाढं तमः संसाराख्यं[12] मतितर्तुमिच्छताम्[13]। पुराणानां मध्ये गुह्यम् गोप्यम्। तत्र हेतुत्वेन चत्वारि विशेषणानि। स्वो निजोऽसाधारणोऽनुभावः प्रभावः यस्य तत् स्वानुभावम्। अखिलश्रुतीनां सारम्। एकमद्वितीयमनुपममित्यर्थः। आत्मानं कार्यकारणसङ्घातमधिकृत्य वर्तमानमात्मतत्त्वमध्यात्मं तस्य दीपं साक्षात्प्रकाशकम् उपयामि शरणं व्रजामि ॥ ३ ॥

[14]जयत्यनेन संसारमिति जयो ग्रन्थः, तं उदीरयेत्[15] इति स्वयं तथोदीरयन् अन्यान् पौराणिकानुपशिक्षयति ॥ ४ ॥

---

1 H,V begin with शास्त्रौघपारः श्रीकृष्णकृत्यं सृष्ट्यादिकेलयः। अवतारकथा· कृष्णवृत्तयो धर्मरक्षणम् ॥ 2 V तु° 3 H V add सूतः 4 B adds अत्र 5 H,V add अभिप्रेत्य 6 H,V शुकदेव° 7 H,V add सर्वं 8 H V °समीप मनुपपन्नम् 9 H,V add (उपनयनकर्मणोऽप्यनर्हवयस्कत्वात् विशेषतो बाल इत्यभिप्रायः) 10 H,V ("दूराद्धूते च" इति सूत्रात्) प्लुतेन "प्लुतप्रगृह्या" इति सूत्रेण सन्ध्यभावे प्राप्ते सन्धि रार्षः। (यद्वा पुत्रेति आदिमगुरुवर्णस्य 'गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम्" इति सूत्रेण प्लुतत्वाङ्गीकारे नात्र सन्ध्यभावः शङ्कनीयः।) 11 H,V add सर्वभूतहृदयमिति। 12 H,V add °मतितीरषता° 13 H,V add रेफषकारयोः विश्लेषणं छान्दसम्। 14 H,V begin with एवं द्वाभ्यां गुरुं नमस्कृत्य देवं प्रणमति नारायणमिति। 15 H °ये इति

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

एवं संपृष्टः[1] निश्श्रेयससाधन तदनुग्राहकप्रधानतम श्रीकृष्णचरित्रं[2] सूतः शौनकादीनां **प्रश्नम्**[3]**अभिनन्दयन्** तेषामुत्तररूपं श्रीभागवताख्यं पुराणमाहेत्याह बादरायणः — **इतीति**। अत्र श्रीसूत उवाच इति संप्रश्नसम्पृष्ट इति क्वचित् पाठो दृश्यते, स चासङ्गतः; इतीत्यादिश्लोकस्य सूतोक्तित्वाभावात्। यं प्रव्रजन्तमित्यादिर्हि सूतोक्तिः। अतस्ततः प्रागेव सूत उवाचेति पठितुं युक्तम्। इह तु श्रीव्यास उवाचेति। इतीत्थं विप्राणां शौनकादीनां तैः[4] **प्रश्नैः संहृष्टो रौमहर्षणिः** रोमहर्षणस्यापत्यं पुमान् सूतः तेषां विप्राणां वचः प्रश्नात्मकं वचः प्रतिपूज्य अभिनन्द्य **प्रतिवक्तुं** प्रतिवचनरूपपुराणमिदं वक्तुं उपचक्रमे आरेभे। विप्राणां इत्यनेन सापेक्षस्यापि **सम्प्रश्नशब्दस्य नित्यसापेक्षत्वादार्षत्वाद्वा**ऽसमासः। तेषां विप्राणां वचः प्रतिपूज्येति वाऽन्वयः। **सम्प्रश्नसंपृष्ट** इति पाठान्तरम्। तदा समीचीनः **प्रश्नो** यस्य तस्मै प्रतिवचनाय संपृष्टः प्रत्युत्तरं वक्तुं पृष्टः इत्यर्थः। यद्वा विप्राणां इत्यस्य वच इत्यनेनैवान्वयः। सं शोभनाः प्रश्नाः येषां तैः शौनकादिभिः संपृष्ट इत्यर्थः ॥ १ ॥

प्रश्नानाम् उत्तररूपमिदं पुराणं शुश्रावयिषुरन्यैरपि श्रावयितृभिरेवं कार्यमिति सूचयितुमेतत्पुराण-प्रथमप्रवर्तकत्वरूपमहोपकर्तृ बादरायणिरूप गुरुनमस्कारं[5] तच्चरणवरणात्मकं मङ्गलमाचरति सूतः — **यं प्रव्रजन्तमिति** द्वाभ्याम्। द्वैपायनः श्रीव्यासः विरहकातरस्सन् यं पुत्रेत्याजुहाव आहूतवान्। तदा तन्मयतया तरवोऽभिनेदुः तं सर्वभूतहृदयं मुनिं आनतोऽस्मीत्यन्वयः। कथम्भूतम्? प्रव्रजन्तं, तदैव[6] पित्रादीन् परित्यज्य व्रजन्तम्। अनुपेतं उपेतरहितं

**असहायं** इत्यर्थः। अपेतं कृत्यं यस्य तं कर्तव्यांशरहितं निष्पन्नब्रह्मोपासनत्वात् कृतकृत्यमिति भावः। **प्रव्रजन्तमित्यनेन देहानुबन्धित्याग** उक्तः। अनेन ममताराहित्यं फलितम्। अनुपेतमित्यनेनासहायत्वमुक्तम्। अनेन देहपोषकसहायान्तर-राहित्यं सूचितम्। तेन च देहात्मभ्रमरूपाहङ्काराराहित्यं फलितम्। द्वैपायनो विरहकातर आजुहावेत्यनेन द्वैपायनादप्यतिश-यितज्ञानवत्त्वं सूचितम्। यद्यपि पुत्रेत्यस्य दूरादाह्वानविषयवाक्य[7]त्वात् "दूराद्धूते च" (अष्टा. 8-2-84) इति प्लुतत्वे सति "प्लुतप्रगृह्या अचि नित्यम्।" (अष्टा. 6-1-125) इति प्रकृतिभावे च सति सन्धिः दुर्लभः। तथाऽपि "गुरोरनृत" (अष्टा. 8-2-86) इत्यत्र प्राचामिति योगं विभज्य सर्वस्य प्लुतस्य वैकल्पिकत्वाभ्युपगमात्, "अग्नीत्प्रेषणे परस्य च" (अष्टा. 8-2-92) इति सूत्रे "सर्वः प्लुतः साहसमनिच्छता विभाषा कर्तव्यः" इति महाभाष्यकारोक्तेश्च (अष्टा. 8-2-92 महाभाष्यम्) प्लुताभावपक्षे सन्धिः सुलभ एवेति बोध्यम्। साहसं शास्त्रत्यागः तदनिच्छता शास्त्रमनुरुन्धानेनेत्यर्थ इति हरदत्तो व्याख्यदिति केचित्। (प. म. अष्टा. 8-2-92) वस्तुतस्त्वितिशब्दस्यैव वाक्यान्तत्वेन पुत्रशब्दे प्लुतप्रसङ्ग एव नास्ति। अनुकार्यस्य पुत्रशब्दस्य सम्बोधनविषयत्वे पुत्रानुकरणस्य तस्य तदभावाच्च। तन्मयतयेत्यत्र मयट् प्राचुर्ये सम्बन्धमात्रे वा; तत्प्रचुरतया तत्सम्बन्धितया वा तरवोऽभिनेदुः शुकात्मका वयं इत्येवंरूपेण प्रतिदध्वनुरित्यर्थः। तत्प्राचुर्यं च तरूणां[8] शुकेन[9] व्याप्त्याऽधिष्ठितत्वा दव-गन्तव्यम्। सम्बन्धमात्रे मयट्पक्षेऽपि ज्ञानद्वारा[10]ऽधिष्ठेयभावरूप एव सम्बन्धो[11] बोध्यः; स्वरूपेण त[12]र्वधिष्ठातृत्वासम्भवात्, "एषोऽणुरात्मा" (मुण्ड. उ. 3-1-9) "आराग्रमात्रो ह्यवरोऽपि दृष्टः" (श्वेता. उ. 5-8) इत्यादिभिः श्रुतिभिर्जीवस्वरूप - स्याणुत्वावगमात्, तत्स्वरूपेणानेकाधिष्ठातृत्वासम्भवात्। यद्यपि धर्मभूतज्ञानस्यापि "स चानन्त्याय कल्पते" (श्वेता. उ. 5-9) इत्यादिश्रुतिभिः मुक्तिदशायामेव आनन्त्यमवगतं; तथाऽपि, शुकस्य परिनिष्पन्नब्रह्मोपासनत्वेन मुक्तानामिव निवृत्तज्ञानसङ्कोचक कर्मरूपावरणत्वात् अपरिच्छिन्नधर्मभूतज्ञानद्वारा अनेकतर्वधिष्ठातृत्वं उक्तम्। यत एव तन्मयतया तरवोऽभिनेदु रत एव सर्वभूतहृदयं सर्वभूतानां हृ[13]द्यते गच्छति ज्ञानद्वारा व्याप्नोतीति सर्वभूतहृदयः तम्। अयगताविति धातुः। यद्वा सर्वभूतानां हृदयं यस्य ज्ञानद्वारा व्याप्यं स सर्वभूतहृदयः तम्। यद्वा, हृदयशब्देन धर्मभूतं ज्ञानं लक्ष्यते, हृदयस्य ज्ञानसाहचर्यात्। सर्वभूतेषु हृदयं धर्मभूतं ज्ञानमधिष्ठानं[14] यस्य सः तं मुनिं स्वात्मपरमात्म याथात्म्यमननशीलं श्रीशुकं इति विशेष्यं अध्याहार्यम्। आनत इति कर्तरि क्तः, नमस्कृतवानस्मी त्यर्थः ॥२॥

**य** इति। यः करुणया पुराणगुह्यम्। "विशेषणं विशेष्येण बहुलम्" (अष्टा. 2-1-57) इति बहुलग्रहणात् विशेष्यस्यापि पुराणशब्दस्य पूर्वनिपातः। गुह्यं पुराणम्। [15]पुराणगतं गुह्य माह, तं मुनीनामपि गुरुं व्याससूनुं उपयामि शरणं व्रजामि। पुराणं कथम्भूतम्? स्वानुभावं स्वेन शुकेनानुभावम्— कर्मणि घञ्— प्रथममनुभूतमित्यर्थः। अखिलानां [16]श्रुतीनां सारो यस्मिन्, प्रतिपाद्यः सः। तथा वेदपूर्वभागार्थभूतकर्मणामप्युत्तरत्र[17] पुराणे भगवदाराधनरूपतायाः तत्र तत्र प्रतिपादनादखिलश्रुतिसारमित्युक्तम्। एवं स्वतुल्याधिकपुराणान्तररहितम्। अध्यात्मदीपम्। आत्मन्[18]यधीत्यध्यात्ममिति विभक्त्यर्थेऽव्ययीभावः। स्वात्मपरमात्मयाथात्म्यप्रकाशने दीपतुल्यमित्यर्थः। अतितितीर्षतां संसृतिं तर्तुमिच्छारहितानामपि संसारिणां तमोऽन्धं तमः संसृतिरुचिजनकं अज्ञानम् अन्धयति तिरो[19]धापयति निवर्तयतीति तथा॥ ३॥

एवं श्रावयितृभिः आदौ महोपकर्तुः बादरायणेः नमस्कारात्मकं मङ्गलं **अनुष्ठेयमिति** सूचितम्। न केवलं बादरायणिरेव नमस्कार्यः, अपित्वन्येऽपि नारायणादय इत्यभिप्रायेणाऽऽह — **नारायणमिति**। नारायणादीन्नमस्कृत्य ततो जयमुदीरयेत् कथयेत् श्रावयेत् इति यावत्। जयमित्यस्यैव पुराणस्यान्वर्थं नामान्तरं, अखिलदुरितजयाविनाभूतत्वात् जयमिति। तत्र नरनारायणयोः बदर्याश्रमवासिनोः भगवदवतारभूतयोः "यो वै भारतवर्षेऽस्मिन् क्षेमाय स्वस्तये नृणाम्। धर्मज्ञानसमोपेत आकल्पादास्थितस्तपः (भाग. 10-87-6) इति वक्ष्यमाणरीत्या शिष्याचार्यरूपेण स्वानुष्ठानद्वाराऽखिलधर्म प्रवर्तकत्वेन नारदादिमुखेनाखिलाध्यात्मशास्त्रप्रवर्तकत्वेन च गुरूणामपि गुरुत्वेन महोपकर्तृत्वात् तन्नमस्कृतिरवश्यं कार्येति भावः। वागधिष्ठातृदेवतात्वात् सरस्वती नमस्कार्येत्यभिप्रायेण सरस्वतीमित्युक्तम्। देवस्य चतुर्मुखस्य स्त्री देवी ताम्। "पुंयोगादाख्यायाम्" (अष्टा. 4-1-48) इति ङीष्। अत्र सरस्वत्याः चतुर्मुखसम्बन्धप्रत्यायक देवीत्वविशेषणेन चतुर्मुखनमस्कृति रपि कार्येति सूचितम्। चतुर्मुखो हि अनिरुद्धाख्य भगवत्तुरीयव्यूह नाभिकमलसम्भूत तपस्तोषितानिरुद्धोपदिष्ट भागवतचतुश्श्लोकी कृत्स्नैतत्पुराणनिदानभूतां नारदायोपदिदेश। अतः सोऽपि महा नुपकर्तैव गुरु श्चेति नमस्कार्य इत्यभिप्रायः। अनेनैव अनिरुद्धनारदयोरपि नमस्कार्यत्वं अर्थसिद्ध वेदितव्यम्। अनिरुद्धा च्चतुश्श्लोक्यधिगमो नारदाय तदुपदेशश्च द्वितीये स्पष्टीभविष्यति। नारदा च्चतुश्श्लोकी मधिगम्य, कार्त्स्न्येन एतत्पुराणनिर्मातृत्वेन उपकर्तृतमत्वात् व्यासो नमस्कार्य इत्यभिप्रायेण व्यासमित्युक्तम्। तत्रायं क्रमो विवक्षितः — तावन्नमस्कार्यः शुकस्ततो व्यासस्ततो नारदस्ततः सरस्वतीतद्वल्लभौ ततोऽनिरुद्धः ततश्च नरनारायणा विति ॥ ४ ॥

1 W संपृष्टनिःश्रेय° 2 W °चरित्रसूतः 3. W °श्नान° 4 W संप्रश्नैःसमीचीनैः 5 A,B °रः 6 A,B दैवपैत्रादीन् 7 W °क्यस्थ° 8. W adds तेन 9. W adds ज्ञान° 10. W °ऽधिष्ठात्रधिष्ठेय° 11. W °घोऽत्र 12. W सर्वा° 13. W °द° 14 W °तृ 15. W adds यद्वा 16. A,B omit श्रुतीनां 17 W °प्यत्र 18. W °नीत्यध्यात्मम 19. A,B °धायय° 20. W °धा°

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

शौनकादिविप्राणामिति पूर्वोक्तैः षड्भिः समीचीनैः प्रश्नैः सम्यक् पृष्टो रोमहर्षणस्य अपत्यं रौमहर्षणिः सूतः तेषां शौनकादीनां वचः प्रतिपूज्य, प्रवक्तुं व्याख्यातुं उपचक्रमे इत्येकान्वयः। एतत् व्यासवचनम् ॥ १ ॥

शौनकादि प्रश्नपरिहारतया भागवतपुराणं व्याकर्तुकामः उरुश्रवाः स्वेष्टगुरुं रुद्रावतारं श्रीशुकमुनिं प्रणमति — **यमिति**। विरहकातरः पुत्रवियोगे कातरः अधीर इव स्थितः सः द्वैपायनो यदा **प्रव्रजन्तमनुपेतमपेतकृत्यं** पुत्रेत्याजुहाव, तदा तन्मयतया तरवोऽपि नेदुः, अहं सर्वभूतहृदयं तं मुनिं सर्वज्ञं आनतोस्मीत्येकान्वयः। द्वीपो नदीमध्यप्रदेशः, सः अयनं आलयः यस्य सः तथा द्वीपायनः स एव द्वैपायनः द्वीपस्यापत्यं द्वैपायनः नदीद्वीपे समुत्पन्नत्वात्तदपत्यत्वनिर्देश औपचारिकः। तद्वत्पराशरसुतत्वमपि औपचारिकमिति ज्ञापयितुं एतदेव प्रसिद्धनामाऽकरोत्। **प्रव्रजन्तं** सर्वपरित्यागरूपमाश्रममाश्रयन्तम्। तत्र कारण माह — **अनुपेतं** देहाद्यभिमानशून्यं, केनापि सख्या रहितं एकाकिनमिति वा। न च उपनयनशून्यो ऽनुपेतः अनुपनीतस्य प्रव्रजनायोगात्। न च प्रव्रजनं सन्न्यासः, किं तर्हि ?

**प्रकर्षेण** गमनमेवेति वाच्यम्; "यदहरेव विरजे त्तदहरेव प्रव्रजेत्"* इति गौतमसूत्रविरोधात्। (अपेतं) अपगतं **कृत्यं** यस्मात्सोऽपेतकृत्यः तं कृतकृत्यम्। अपेतं निराकृतं कृत्यं छेदनकर्म येन स तथा अवाप्ताहिं-**सालक्षणाश्रमत्वात्तमिति** वा। पुत्रेति दूरादाह्वाने प्लुताभावः छान्दसः। सर्वगतत्वज्ञापनाय वा तन्मयतया **अहङ्कारात्मकरुद्रावतारशुकस्य** व्याप्तिमत्तया वृक्षा अपि प्रतिशब्दं नेदुः, किमुत शरीरिण इति द्योतयितुं अपिशब्दः। **सर्वभूतानां** हृत्स्थानमयते गच्छतीति सर्वभूतहृदयः तं अहङ्कारतत्त्वाभिमानित्वेन सर्वत्र स्थितमित्यर्थः ॥ २ ॥

पुनरपि भक्त्युद्रेकात्तमेव प्रणमति — **य** इति। यः स्वानुभावं अनन्याधीनसामर्थ्यं ब्रह्म[1] आह उपादिशत्, **य श्चान्धं** तमः अन्धत्वापादकं अज्ञानं तितीर्षतां तर्तुमिच्छतां संसारिणां जीवानां करुणयाऽखिलानां श्रुतीनां **अर्थज्ञापकतया** सारं उत्तमम्। अखिलस्य जगतः श्रुतेः श्रवणेन्द्रियस्य सारं सुखदं वा। एकं सकलपुराणोत्तमम्। **देहादीश्वरपर्यन्ततत्त्वानि** दीपयति प्रकाशयती त्यध्यात्मदीपम्। पुराणगुह्यं पुराणेषु गोप्यं, पुराणस्य भगवतः सन्निधातुं **योग्यमिति** वा। भागवताख्यं पुराणं मम व्याचख्यौ। मुनीनां गुरुं तं व्याससूनुं श्रीशुकं उपयामि शरणं **गच्छामी** त्येकान्वयः। अखिलश्रुतीः सरति गच्छति विषयतयेत्यखिलश्रुतिसारः, **कर्मण्यण्प्रत्ययः**। वेदार्थं **सारभूतमिति** वा। अध्यात्मं देहः तत्र दीपवत् वर्तमानं पुराणेषु गोपितं स्वानुभावं ममोपदिदेशेति वा ॥ ३ ॥

इष्टदेवतां शास्त्रगुर्वादीन् प्रणमति — **नारायणमिति**। नारायणं शास्त्रप्रतिपाद्यं तथा तमेव शास्त्रकर्तृत्वात् **गुरुं** व्यासञ्च नमस्कृत्य सकलभाग्यात्मिकां श्रियं देवीं तथा परमगुरुं नरोत्तमं वायुं तथा विद्याभिमानिनीं सरस्वतीं **तथोपसाधकं** नरं शेषं प्रणम्य ततः तेषां प्रसादात् श्रीभागवताख्यं ग्रन्थं उदीरये व्याख्यास्ये, भवत्प्रश्नपरिहारित्वेनेति **शेषः** इत्येकान्वयः। श्रीभागवतादिसर्वशास्त्रप्रवक्तृश्रोतृभिः ते अवश्यं नमस्कार्या इति द्योतयितुमेवेत्युक्तिः ॥ ४ ॥

---

* इदं जाबालोपनिषदि लभ्यते। (जाबा. उ. 4) 1. M adds मम

## श्रीराधाकृष्णप्रणीता सुधीसुधा

विप्राणां इति सम्प्रश्नसन्तुष्टः पूर्वोक्तसम्यक्प्रश्नैः सम्यक्तुष्टः रौमहर्षणिः रोमहर्षणात्मजः उग्रश्रवोनामकः सूतः विप्राणां तेषां वचः प्रतिपूज्य सत्कृत्य प्रवक्तुं उपचक्रमे प्रक्रान्तवान् ॥१ ॥

प्रवचनादौ गुरुं श्लोकद्वयेन, देवताश्च श्लोकेनैकेन नमस्करोति।

प्रव्रजन्तं सर्वसङ्गान् परित्यज्य गच्छन्तं केनाऽपि अनुपेतं अननुसृतं एकाकिनमिति भावः। अपेतकृत्यं कर्तव्यविरहितं यं शुकयोगिनं द्वैपायनो विरहकातरः पुत्रवियोगभीतस्सन् पुत्र! इति आजुहाव आहूतवान्। तन्मयतया शुकरूपतया तरवः अभिनेदुः प्रतिवचनं अवोचन्; सर्वभूतहृदयं सर्वभूतात्मभूतात्मानं तं मुनिं शुकं आनतोऽस्मि प्रणतोऽस्मि।

व्यासस्य शुके पुत्रभावना। शुकस्य तु सर्वं ब्रह्ममयमेव। अपि च ब्रह्मवित् शुको भूतमयः। तस्मात्तरवः तन्मयतां प्राप्य व्यासाय प्रतिवचनं अयच्छन्। पुत्त्रमपि परब्रह्मतादात्म्यभावनाविलसितं अनुसरता व्यासेन प्रोक्तं भागवतं ब्रह्मतत्त्वप्रबोधप्रधानं इति गम्यते। तेन च सर्वभूतमनोहारिणि ब्रह्मभूते शुके व्यासस्य स्नेहः न प्राकृतमोहः, अपि तु स्पृहणीयः परमपुरुषव्यामोह इति विवेकः॥ २॥

अन्धं सर्वावरकं गाढं तमः अज्ञानमयं संसारं अतितितीर्षतां अतितर्तुं इच्छतां संसारिणाम्। करुणया तेषु करुणया स्वानुभावं असाधारणप्रभावं अखिलश्रुतिसारं सर्ववेदसारभूतं एकं अद्वितीयं अध्यात्मदीपं आत्मतत्त्वस्य दीपं प्रकाशकं पुराणगुह्यं पुराणानां मध्ये गोप्यं यः आह उपादिशत्, मुनीनां नारदव्यासादीनामपि गुरुं तं व्याससूनुं शुकं उपयामि शरणं गच्छामि।

अत्र सर्ववेदसारभूतं गुह्यं आत्मतत्त्वम। आत्मा च मर्वसृष्ट्यन्तर्यामी अह मित्याकारकः प्रकाशः। आत्मतत्त्वप्रकाशेन संसारतमोनाशः। सृष्टिविषयकोऽस्मदभिप्रायसमाहारः संसारः। तन्निवृत्तेः सृष्टौ आत्मसाक्षात्कारः। तदावश्यकोपदेशे शुकयोगी निरुपमः तस्मादयं मुनीनां गुरुरिति प्रस्तुतः॥ ३॥

नारायणं, नरोत्तमं नरं, देवीं सरस्वतीं, व्यासं च नमस्कृत्य ततोऽनन्तरं जयं संसारतरणसाधनं ग्रन्थं उदीरयेत्।

अत्र नरनारायणौ सृष्टिश्रेयसे तपसि स्थितौ द्वौ ऋषी। तौ न केवलं शरीरधारिणौ अपि तु जीवेषु प्रज्ञारूपेण व्याप्रुतः। तदंशसञ्जातौ कृष्णार्जुनौ॥ ४॥

**मुनयस्साधु पृष्टोऽहं भवद्भिर्लोकमङ्गलम्।**
**यत्कृतः कृष्णसंप्रश्नो येनात्मा[1] सु[2]प्रसीदति॥ ५॥**

**स वै पुंसां परो धर्मो यतो भक्तिरधोक्षजे।**
**अहैतुक्य[3]प्रतिहता यया[4]ऽऽत्मा सं[5]म्प्रसीदति॥ ६॥**

**वासुदेवे भगवति भक्तियोगः प्रयोजितः।**
**जनयत्याशु वैराग्यं ज्ञानं च[6] यदहैतुकम्॥ ७॥**

**धर्मः स्वनुष्ठितः पुंसां विष्वक्सेनक[7]थासु यः।**
**नोत्पादयेद्यदि रतिं श्रम एव हि केवलम्॥ ८॥**

***श्रुतमप्यौपनिषदं दूरे हरिकथामृतात्।**
**यन्न सन्ति द्रवच्चित्तप्रेमाश्रुपुलकोद्गमाः॥**

---

1. M °त्माऽऽशु 2. VF सं° 3 M °क्यव्यवहिता 4 M °त्माऽऽशु 5. B,H,I,V सुप्र° 6 N,VF यत्तद° 7 M कथाश्रयाम् * H.V add this v. Sridhara's commentary and the commentary of Sri Radhakrishna Sarma are to be found at respective places

**श्रीध॰** तेषां वचः प्रतिपूज्येति यदुक्तं तत्प्रतिपूजनं करोति — **मुनय इति।** हे मुनयः! साधु यथा भवति तथाऽहं पृष्टः। यतो लोकानां मङ्गलमेतत्। यत् यतः कृष्णविषयः सम्प्रश्नः कृतः। **सर्वशास्त्रार्थसारोद्धार-**प्रश्नस्यापि कृष्णे पर्यवसानात् एवमुक्तम् ॥ ५ ॥

तत्र यत् प्रथमं पृष्टं सर्वशास्त्रसारमैकान्तिकं श्रेयो ब्रूहीति, तत्रोत्तरम् — **स वै पुंसा** मिति। अयमर्थः — धर्मो द्विविधः प्रवृत्तिलक्षणः निवृत्तिलक्षणश्च[1]। तत्र यः स्वर्गाद्यर्थः प्रवृत्तिलक्षणः, सोऽपरः। यतस्तु धर्मात्[2] [3]श्रवणादरादिलक्षणा भक्तिः भवति, स परो धर्मः; स एवैकान्तिकं श्रेय इति। कथं भूता[4]? अहैतुकी, हेतुः फलानुसन्धानं तद्रहिता अप्रतिहता विघ्नैरनभिभूता ॥ ६ ॥

ननु "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" (बृह. उ. 4-4-22) इत्यादिश्रुतिभ्यो धर्मस्य ज्ञानाङ्गत्वं प्रसिद्धम्। तत्कुतो भक्तिहेतुत्वमुच्यते? सत्यम्[5]। तत्तु भक्तिद्वारेणेत्याह — **वासुदेव** इति। अहैतुकं शुष्कतर्काद्यगोचरम् औपनिषदमित्यर्थः ॥ ७ ॥

व्यतिरेकमाह — **धर्म** इति। यो धर्म इति प्रसिद्धः स यदि विष्वक्सेनस्य कथासु रतिं नोत्पादयेत्तर्हि स्वनुष्ठितोऽपि सन् अयं श्रमो ज्ञेयः। ननु मोक्षार्थस्यापि धर्मस्य श्रमत्वमस्त्येव। अत आह — केवलं विफलः **श्रम** इत्यर्थः। ननु अस्ति तत्रापि स्वर्गादिफलम् इत्याशङ्क्य एवकारेण निराकरोति। क्षयिष्णुत्वात् न तत् फलम् इत्यर्थः। ननु "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति" (आ. श्रौ. सू. 8-1-1) इत्यादि श्रुतेः न तत्फलस्य क्षयिष्णुत्वं इत्याशङ्क्य हिशब्देन[6] साधयति, "तद्यथेह कर्मजितो लोकः क्षीयते[7]" (छान्दो. उ. 8-1-6) इति तर्कानुगृहीतया श्रुत्या-[8]क्षयिष्णुत्वप्रतिपादनात् ॥ ८ ॥

ननु वेदान्तश्रवणादिभिरेव तत्त्वसाक्षात्कारः स्यात्। किं भक्त्या? अत आह — **श्रुतमिति।** यत् यस्य पुंसः हरिकथामृतात् आस्वाद्यमानात् द्रवच्चित्तं प्रेमाश्रुपुलकोद्गमाश्च वा न सन्ति, तस्य औपनिषदं आत्मतत्त्वं श्रुतमपि दूरे परोक्षे इत्यर्थः ॥

---

1 H,V add इति 2 V adds निवृत्तिलक्षणात् 3 B कृष्णे श्रवणादिल॰ 4 H ॰तः 5 H ॰र्वं 6 H,V add हि यस्मात् 7 B,H,V add एवमेवामुत्र पुण्यचितो लोकः क्षीयते 8 H,V फलस्य क्षयिष्णुत्वावगमात् इति हिशब्दस्यार्थः; उक्तफल प्रतिपादनात्।

**वीर॰** तदेवं "मङ्गलाचारयुक्तानां नित्यं च प्रयतात्मनाम्। जपतां जुह्वतां नित्यं विनिपातो न विद्यते"* इत्युक्तरीत्या कृतगुरुदेवतोपासनात्मकमङ्गलस्तावत् प्रश्नं अभिनन्दति — **मुनय** इति। हे मुनयः! भवद्भिः साधु यथा भवति तथा लोकमङ्गलं[1] प्रत्यहं पृष्टः। पृच्छति द्विकर्मकः वक्तृकर्मको वाच्यकर्मकश्चेति। **तत्र लोकमङ्गलमिति** वाच्यकर्मोच्यते। तस्य अनभिहितत्वात् द्वितीया। **वक्तृकर्मणस्त्वहं** शब्दार्थस्य 'क्त' प्रत्ययेनाभिहितत्वात् **प्रथमा प्रयुक्ता। लोकमङ्गलमिति प्रश्नसाधुत्वे**[2] हेतुः। **लोकमङ्गलविषयकत्वात् प्रश्नः**[3] कृतः **"मङ्गलानां च मङ्गलम्" (भार॰**

13-135-10) इत्युक्तरीत्या निरतिशय[4]ः मङ्गलस्वरूपकृष्णविषयकसम्प्रश्नः कृतः। ततो लोकमङ्गलमह पृष्ट इत्यर्थः, कृष्णसम्प्रश्नस्य लोकमङ्गलविषयत्वमेवोपपादयति। येन कृष्णेन तद्विषयकप्रश्नेन वा हेतुना चाऽऽत्मा चित्तं सुष्ठु प्रसन्नं भवति प्रश्नोत्तराभ्यां सस्वरूपगुणविभूतिः कृष्णोऽनुसंहितः चित्तगतमालिन्यं अपनयति [5]चित्तप्रसादादेव लोकानां सर्वाणि मङ्गलानि सुलभान्येवेति भावः ॥ ५॥

तत्र यत्तावत्पृष्टं भवता य द्विनिश्चितं "पुंसामेकान्ततः श्रेयस्तन्नः शंसितुमर्हसि" (भाग. 1-1-9) इति। किं निरतिशयं श्रेयः, को वा तत्साधनभूतो धर्मः श्रेष्ठ इति तत्र गर्भ[7] जरामरणाद्यनर्थरूपससृतिनिवृत्तिपूर्वकब्रह्मानन्दानुभवात्मको मोक्ष एव निरतिशयं श्रेयः। तत्साधनभूतधर्मश्च परब्रह्मोपासनात्मिका विजातीयप्रत्ययान्तराव्यवहिता प्रत्यक्षतापन्ना प्रीत्यात्मिका तद्भक्तिरेव। तन्निष्पत्ति श्च अनभिसंहितफलैः वर्णाश्रमधर्मैः ज्ञानयोगशमदमादिभिः सत्स[8]ङ्गत्यादिप्रणाल्या च भगवद्गुणश्रवणादि रुचिजननद्वारा भवतीति वक्तुं तावद्भक्तियोगानुग्राहक एव वर्णाश्रमप्रयुक्तो धर्मः श्रेष्ठः, तदन्यस्तु अभिसंहितफलः पुनः संसृतिहेतुत्वेनानर्थावह इत्याह — **स वा** इति त्रिभिः। यतोऽनभिसंहितफलाद्धर्माद्वर्णा[9]श्रमानुगुणादनुष्ठितात् [10]अधोक्षजे भक्तिः **भवति**, स एव धर्मः परः उत्कृष्टः। भक्तिमपि विशिनष्टि — अहैतुकी फलोपाधिरहिता अप्रतिहता अन्तरायानुपहता। अव्यवहितेति पाठान्तरम्। तदा विजातीयप्रत्ययान्तराव्यवहिता। यया भक्त्या आत्मा सुप्रसीदति पूर्वाल्पभक्तिरुत्तरभक्तिप्रकर्षौपयिक मनोनैर्मल्यहेतुरित्यर्थः। यद्वा, ययाऽऽत्मा सुप्रसीदति इत्यनेन प्रीत्यात्मकत्वं उच्यते। अनुकूलज्ञानेनैव हि चित्तप्रसादः; प्रतिकूलेन तु चित्तविक्षेप एव। अनुकूलज्ञानमेव हि आनन्दः सुखं प्रीतिश्चेति पर्यायान्तरैः उच्यते। अव्यवहितेत्यनेन तैलधारावत् अविच्छिन्नस्मृतिसन्तानरूपत्वं उक्तम् ॥ ६॥

ननु अव्यवहितेत्ययुक्तम्; शब्दादिविषयासक्तमनसा[11] अकामेनापि मध्ये मध्ये विषयान्तरानुध्यानव्यवहितत्वप्रसङ्गादिति शङ्कां निराकुर्वन्नुक्तभक्तेरेव विशेषणान्तरं आह — **वासुदेव** इति। भगवति षाड्गुण्यपरिपूर्णे वासुदेवे प्रयोजितो भक्तियोगः वैराग्यं आशु जनयति। "सर्वत्रासौ समस्तं[12] च वसत्यत्रैव वै यतः। ततः स वासुदेवेति विद्वद्भिः परिगीयते" (विष्णु. पु. 1-2-12) इति निरुक्तवासुदेवशब्देन सर्वान्तरात्मत्वं सर्वाधारत्वं, भगवच्छब्देन षाड्गुण्यपूर्तिश्चोक्ता। सर्वान्तरात्मकत्वेन निरतिश[13]यत्वं लब्धम्। आत्मैव हि निरतिशयप्रियः। एवमनेन पदद्वयेन शब्दादि लौकिकविषयेभ्यो वैलक्षण्यं अभिप्रेतम्। एवं च विषयस्य विलक्षणत्वादेव तदनुध्यानरूपो भक्तियोगः शब्दादिविषयेषु अनासक्तिरूपवैराग्यं आशु जनयति, कस्मिंश्चिद्विषये विलक्षणे अनुरागातिशयस्य[14] विषयान्तर वैतृष्ण्यावहत्वदर्शनात्। तस्माद्भक्तियोगनिष्ठमनसः शनैः विषयान्तरवैतृष्ण्य स्यार्थादेवोदयात् विषयान्तरानुध्यानाव्यवहितत्वं भक्तेः सम्पत्स्यत एवेति भावः। तथा यदहैतुकम्। "नाहं वेदै[15]र्न तपसा" (भ. गी. 11-53) इत्युक्तरीत्या भक्तिव्यतिरिक्तहेत्वन्तरा[16]लभ्यं[17] ज्ञानं साक्षात्कारात्मकम्, तच्च जनयति। अनेन भक्तेः साक्षात्कारात्मकत्वं विशेषणं उक्तम् ॥ ७॥

तदेवं श्लोकद्वयेनोक्तविधभक्त्यनुग्राहक एवानभिसंहितफलवर्णाश्रमप्रयुक्तधर्मः श्रेष्ठ इत्युक्तम्। अथाऽस्य धर्मस्य भगवद्[18]गुणादि रुचिजननद्वारा भक्तियोगानुग्राहकत्वं वदन्नभिसंहितफलधर्मस्य श्रमफलकत्वं आह — **धर्म**

**इत्येकेन। यः सम्यगनुष्ठितोऽपि धर्मः** पुंसां **विष्वक्सेनस्य** भगवतः **कथासु रतिं रुचिं यदि नोत्पादयेत्तर्हि स धर्मः केवलं श्रम एव श्रमफलक एव, संसृतिरूपानर्थावह एवेत्यर्थः। रतिं नोत्पादयेदित्यनेन रत्येकप्रयोजनतया अनुष्ठितो धर्मः परः। ऐहिकामुष्मिकफलार्थस्तु श्रमफलक इति प्रतीतेः, फलानभिसन्ध्यभिसन्धिभ्यां धर्मस्य उत्कृष्टत्वापकृष्टत्वे वेदितव्ये ॥ ८ ॥**

---

* मनु. स्मृ. 4-146  1 A B omit लोक .. प्रथमा प्रयुक्ता  2 W °त्व°  3 W adds °साधुरित्यर्थः कथं प्रश्नस्य लोकमङ्गलविषयकत्वं? इत्यत आह यत्कृत· कृष्णसम्प्रश्न इति। य द्यस्मात् कृष्णविषयक· सम्प्रश्नः  4 W °य°  5 W adds ततश्चित्तं सुप्रसीदति  6 W °दे च  7 W adds °जन्म°  8 W °त्सङ्गादि°  9 W °तृस्व°  10 W adds पुंसां  11 W °सो  12 A °स्ते  13 W °शयप्रियत्वं  14 A,B °स्ववि  15 A,B वेदेन  16 A B °भ्य°  17 A,B °न°  18 W °द्रूणश्रवणादि°

**विज॰** सम्प्रति सूतः शौनकादिप्रश्नसंहृष्टः तत्प्रश्नं स्तौतीत्याह — **मुनय** इति। कृष्णविषयः समीचीनः प्रश्नः कृत इति यत् यस्मात्। अतोऽहं भवद्भिः साधु सर्वसाधनेषु उत्तमसाधनं प्रति पृष्टो न केवलं **उभयेषां** अस्माकं साधु, किन्तु, लोकं मङ्गलयतीति श्रवणमननाभ्यां कल्याणजनकत्वादित्यर्थः। कुतः? येन **कृष्णसम्प्रश्नेनाऽऽत्मा** परमात्मा मनो वा **प्रसीदति** तस्मादित्येकान्वयः ॥ ५ ॥

भगवद्भक्तिजनकत्वात् कृष्णसम्प्रश्न एव परमधर्म इत्याह — **स वा** इति। यतः **कृष्णसम्प्रश्नात् अधोक्षजे अहैतुकी अव्यवहिता भक्तिः** भवति, **पुंसां** परमधर्मस्स वा इत्येकान्वयः। अक्षजन्यज्ञानं अधःकृत्वा, अतीत्य, वर्तत इत्यधोक्षजः। भगवत्प्रसादमन्तरेण काम्यफलहेतुशून्या अहैतुकी। विक्षेपादन्यप्रसङ्गादिव्यवधानशून्याऽव्यवहिता "नचान्योऽसा वन्योऽहमस्मि" (बृह. उ. 1-4-10) इति "नाऽविष्णुः कीर्तये द्विष्णुम्" इत्यादि श्रुतिस्मृतिनिषिद्धत्वात् भेदबुद्ध्यपरपर्याय व्यवधानशून्येत्यर्थ इति, "व्यवधानं तिरोधान मपिधान मथोच्यते" इत्यभिधानविरोधात्। न च श्रुतिस्मृतिविरोधः, अनयोः, अन्यार्थत्वात्। अविष्णुः न विष्णु र्यस्य स तथा, अतद्भक्त इत्यर्थः। अन्यः स्वतन्त्रः। अप्रतिहतेति पाठे अस्खलितेत्यर्थः। यया भक्त्या **आत्मा** आशु **प्रसीदति**। समुद्धृत्य मनीषयेत्युक्तं दर्शयति स इति। स एव परो धर्मो यतो धर्माद्धोक्षजे भक्तिर्भवतीति वा ॥ ६ ॥

भक्तिरपि वैराग्यद्वारेण अपरोक्षज्ञानसाधनमित्याह — **वासुदेव** इति। **वासुदेवे** भगवति **प्रयोजितो भक्तियोगो वैराग्यं यदहैतुकं ज्ञानं** तच्च **जनयती** त्येकान्वयः। वसति सर्वत्र, स्वस्मिन् सर्वं वासयतीति वा वासुः, क्रीडादिकरणात् देवः, वासु श्चासौ देव श्चेति वासुदेवः। तस्मिन्, भक्तिलक्षण उपायो **भक्तियोगः**। **वैराग्यं** विषयेष्वसारताबुद्धिम्। अकारवाच्यविष्णुप्रसाद एव हेतुः निमित्तं यस्यतत्तथोक्तम्। द्रव्यलाभादिहेतुसम्बन्धीन्द्रजालादिज्ञानं न भवतीति वा ॥ ७ ॥

ननु नित्यनैमित्तिकादिधर्माणां सत्त्वात् कथमस्यैव परमत्वं इत्याशङ्क्य, तेषामपि कृष्णकथारतिजनकतया तत्साधनत्वेन परमत्वं इत्याह **धर्म** इति। यः पुरुषैः स्वनुष्ठितो **धर्मः विष्वक्सेनकथा**श्रयां **रतिं नोत्पादयेत्तर्हि पुंसां** स

केवलं श्रम एव हीत्येकान्वयः। शास्त्रोक्तसदाचारद्रव्यदेशकालादिभिर्नियततया सुष्ठनुष्ठितः यत्राम्नि कीर्तिते विष्वक् सर्वतोऽञ्चति दैत्यसेनाम् इति विष्वक्सेनः तस्य कथासु रतिं निरन्तराभ्यासरूपाम्। केवलं श्रम एव क्रियाकाले उत्तरकालेऽपि दुःखस्वरूपत्वादायास एवेत्यर्थः। हिशब्देनानेवंवित् महत्पुण्यं कर्म करोति तद्धा अस्य अन्ततः क्षीयत इति श्रुतिप्रसिद्धिं दर्शयति ॥ ८ ॥

1 M adds स्वधर्मः

**रा॰ कृ॰** हे मुनयः, भवद्भिरहं लोकमङ्गलं प्रति साधु पृष्टः। यत् यतः येन आत्मा मनः सुप्रसीदति सः कृष्णसम्प्रश्नः कृष्णविषयकः प्रश्नः भवद्भिः कृतः ॥ ५ ॥

यया भक्त्या आत्मा मनः सम्प्रसीदति, सा अहैतुकी फलाभिसन्धिरहिता अप्रतिहता अन्तरायैरनभिहता भक्तिः अधोक्षजे हरौ यतो यस्मात् धर्मात् भवति, सः पुंसां परो धर्मः ॥ ६ ॥

भगवति वासुदेवे प्रयोजितो भक्तियोगः वैराग्यं वैतृष्ण्यं यत् अहैतुकं शुष्कतर्काद्यगोचरं तज्ज्ञानं च जनयति ॥ ७ ॥

यो धर्मः स्वनुष्ठितः सम्यगाचरितः पुंसां विष्वक्सेनकथासु नारायणकथासु रतिं नोत्पादयेत्, स धर्मः केवलं श्रम एवहि ॥ ८ ॥

यत् यतः द्रवच्चित्तप्रेमाश्रुपुलकोद्गमाः न सन्ति। तस्य पुंसः औपनिषदं श्रुतं आत्मतत्त्वं हरिकथामृतात् दूरे हरिकथातुल्यं न भवतीति भावः ॥

**धर्मस्य ह्यापवर्ग्यस्य[1] नाऽर्थोऽर्थायोपकल्पते[2]।**
**नाऽर्थस्य धर्मैकान्तस्य कामो लाभाय हि स्मृतः ॥ ९ ॥**
**कामस्य नेन्द्रियप्रीतिर्लाभो जीवेत यावता।**
**जीवस्य[3] तत्त्वजिज्ञासा[4] नाऽर्थो यश्चेह कर्मभिः ॥ १० ॥**
**वदन्ति तत् तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम्[5]।**
**ब्रह्मेति परमात्मेति भगवानिति शब्द्यते[6] ॥ ११ ॥**
***सत्तामात्रं तु यत्किञ्चित् सदसच्चा[7]विशेषणम्।**
**उभाभ्यां भाष्यते साक्षात् भगवान् केवलः स्मृतः[8] ॥**
**तच्छ्रद्दधाना मुनयो ज्ञानवैराग्ययुक्तया[9]।**
**पश्यन्त्यात्मनि चात्मानं भक्त्या श्रुत[10]गृहीतया ॥ १२ ॥**

1 H ह्यपवर्गस्य 2 M °येह°, W °यप्र° 3 M °स्या° 4 H,M °सोः 5 H,V °व्य° 6 V कथ्यते। 7 H ° त्व ° 8 H समः
9 AF °यः 10 M °ति°

*This additional verse is found between 11th and 12th vv in H & M and is commented upon by Sri Vijayadhvajatirtha and the commentary is to be found in its relevent place

**श्रीध०** तदेवं हरिभक्तिद्वारा तदितरवैराग्यात्मज्ञानपर्यन्तः परो **धर्मः** इत्युक्तम्। अन्ये तु[1] मन्यन्ते **धर्मस्य** अर्थः फलं, तस्य च कामः फलं, तस्य च इन्द्रियप्रीतिः, तत्प्रीतेश्च पुनरपि **धर्मार्थादिपरम्परेति। यथाऽऽहुः** "धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते" (भार. 18-5-49) इत्यादि, तन्निराकरोति **धर्मस्येति द्वाभ्याम्।** आपवर्ग्यस्य[2] उक्तन्यायेन अपवर्गपर्यन्तस्य धर्मस्यार्थाय फलत्वाय अर्थो नोपकल्पते योग्यो न भवति। तथा धर्मैकान्तस्य[3] एवम्भूतधर्माव्यभिचारिणः अर्थस्याऽपि कामो लाभाय फलत्वाय न हि स्मृतो मुनिभिः ॥ ९ ॥

**कामस्येति।** कामस्य च विषयभोगस्य इन्द्रियप्रीतिः लाभः फलं न भवति, किन्तु यावता जीवेत तावानेव कामस्य लाभः[4] जीवनपर्याप्त एव कामः सेव्य इत्यर्थः। जीवस्य जीवनस्य च पुनः कर्मानुष्ठानद्वारा[5] कर्मभिः य इह प्रसिद्धः[6] सोऽर्थो न भवति, किन्तु तत्त्वजिज्ञासैवेति ॥ १० ॥

ननु च तत्त्वजिज्ञासा नाम धर्मजिज्ञासैव धर्म एव हि तत्त्वमिति केचित्, तत्राऽऽह **वदन्तीति।** तत्त्वविदस्तु तदेव तत्त्वं वदन्ति। किं तत्? यज्ज्ञानं नाम अद्वयमिति क्षणिकविज्ञानपक्षं व्यावर्तयति। ननु तत्त्वविदोऽपि विगीतवचना एव। मैवम्; तस्यैव तत्त्वस्य नामान्तरैः अभिधानादित्याह। **औपनिषदैर्ब्रह्मेति** हैरण्यगर्भैः परमात्मेति सात्वतैः भगवानित्यभिधीयते ॥ ११ ॥

तच्च तत्त्वं सपरिकरया भक्त्यैव प्राप्यत इत्याह — **तदिति।** तच्चेत्यन्वयः[7]। ज्ञानवैराग्ययुक्तयेत्यत्र ज्ञानं परोक्षम्। तच्च तत्त्वमात्मनि क्षेत्रज्ञे पश्यन्ति। किं तत्? आत्मानं परमात्मानम्। श्रुतेन वेदान्तादिश्रवणेन गृहीतया प्राप्तयेति भक्तेर्दार्ढ्यमुक्तम् ॥ १२ ॥

---

1 H.V °त्वेवं 2 H अपवर्गस्य 3 A B omit धर्मैकान्तस्य 4 H.V add फलं न त्विन्द्रियप्रीतिः 5 B ध° 6 B adds स्वर्गादिः
7 H.V तदित्यव्ययम्।

**वीर०** तदेवमनभिसंहितफलो भगवद्गुणश्रवणादिरुचिजननद्वारा भक्तियोगानुग्राहक एव धर्मः, परोऽन्यस्तु श्रमफलक इत्युक्तम्। अथ उक्तविधधर्मानुग्राह्यभगवद्भक्तियोगसाध्यमोक्षस्यैव निरतिशयपुरुषार्थत्वमिति दर्शयितुं धर्मार्थकामानां स्वतः पुरुषार्थत्वं धर्मस्यार्थार्थत्वमर्थस्य कामार्थत्वं कामस्येन्द्रियतृप्त्यर्थत्वं इन्द्रियतृप्तेः[1] जीवनस्य पुनर्धर्मार्थत्वमित्यादिरूपां चक्रवत्परिवृत्तिं लौकिकाभिमतां च निरस्य धर्मादीनामपि परम्परया निरतिशयपुरुषार्थरूपमोक्षसाधन भक्तियोगानुग्राहकत्वं आह — **धर्मस्येति** त्रिभिः। तत्र धर्मस्य फलं अर्थः अर्थफलं कामः कामफलमिन्द्रियतृप्तिरिति लौकिकानां मतम्। तत्र धर्मफलत्वमर्थस्य निरस्यति धर्मस्येत्यर्धेन। आपवर्ग्यस्यापवर्गसाधनस्य अनभिसंहितफलत्वे सति परम्परया निरतिशयपुरुषार्थरूपमोक्षसाधनीभविष्यतो धर्मस्यार्थाय प्रयोजनायार्थः धनं न प्रकल्पते, धनं धर्मस्य फलं न भवतीत्यर्थः। धर्मस्यार्थफलकत्वरूप लौकिकमतानुवादेनैव स्वतः पुरुषार्थत्वमपि

निरस्तं वेदितव्यम्। एवं उत्तरत्रापि द्रष्टव्यम्। एकस्यैव दानयागादिरूपस्य धर्मस्य फलानभिसन्ध्यभिसन्धिरूपाकारभेदे-नोत्कृष्टापकृष्टफलसाधनत्वेऽवगते सति तत्र अनभिसंहित फलत्वरूपाकारानादरेण सह इतरपुरुषार्थरूपार्थार्थत्ववादरूपं लौकिकानां मतं अतीवानादरणीय मिति भावः। अथ कामस्यार्थफलत्वं निरस्यति — नार्थस्येति। धर्मैकान्तस्य धर्मैकप्रयोजनस्यार्थस्य वित्तस्य लाभाय प्रयोजनाय कामो न स्मृतः। अर्थस्य प्रयोजनं न कामो भवतीत्यर्थः। अत्र कामशब्देन काम्यते इति काम इति व्युत्पत्त्या अन्नपानादिः उच्यते॥ ९॥

अथ कामस्य इन्द्रियतृप्तिफलकत्वं निरस्यति — **कामस्येति**। यावता अन्नपानादिना कामेन काम्यमानेन वस्तुना जीवति तावतोऽन्नादेर्भोग्यवस्तुनः लाभः फलं नेन्द्रियतृप्तिः, किन्तु देहधारणमेव अन्नपानादिकामफलमित्यर्थः। अथ जीवनस्य पुनर्धर्मार्थत्वं निरस्यति। जीवस्य जीवनस्य प्रयोजनं तत्त्वजिज्ञासैव; न तु इह लोके यः कर्मभिः साध्यो धर्मः सोऽर्थः प्रयोजनम्। अत्र धर्मार्थकामजीवनानां क्रमेण अर्थकामेन्द्रियतृप्तिधर्मार्थत्वं निरस्य, तेषां क्रमेणापवर्गधर्म देहधारणमात्रतत्त्वजिज्ञासार्थत्वोक्तेः अयं भावः। सति वित्ते तेनानभिसंहितफलं धर्मं सम्पाद्य तेन धर्मेण अपवर्गसाधनभूतं भक्तियोगं उपकुर्यात्। सति तु कामे तेन देहधारणमात्रोपयुक्तेन देहं धृत्वा तेन देहेन भजनीयतत्त्वजिज्ञासा कार्येति॥ १०॥

जीवस्य प्रयोजनं तत्त्वजिज्ञासैवेत्युक्तम्। किं तत्त्वम्, यज्जिज्ञासितव्यम्? इत्यत आह — **वदन्तीति**। यज्ज्ञानं ज्ञानस्वरूपं ज्ञानगुणकं च अद्वयं स्वतुल्याभ्यधिक वस्त्वन्तररहितम् अवयवभेदरहितं वा जात्यादिभेदरहितं वा ब्रह्मपरमात्मभगवच्छब्दाभिहितं तदेव तत्त्वमिति तत्त्वविदो वदन्ति। ब्रह्मपरमात्मभगवच्छब्दाः सामान्यविशेषशब्दाः प्रयुक्ताः। एवं प्रयुञ्जानस्य सदाकाशादिशब्दा अपि कारणवाक्यगता भगवत्परा इत्यभिप्रायः॥ ११॥

एवं परधर्मादिवर्गस्यापि[2] परम्परयाऽपवर्गसाधनत्वं, प्रसङ्गात् भजनीयवस्तुस्वरूपं चोक्तम्। अथ यद्विवक्षितं मोक्ष एव निरतिशयं श्रेयः तत्साधनं तु भक्तिरेव। तन्निष्पत्तिश्च वर्णाश्रमधर्मज्ञानयोगसमाधिभिरिति[3] तदुपपादयति **तदित्यादिभिः** सार्धैः दशभिः। त त्तस्मात् भक्तियोगानुग्राहकस्यैव धर्मस्य परत्वात् त्रिवर्गस्यापि परम्परया अपवर्गार्थित्वात् अपवर्गातिरिक्तनिरतिशयपुरुषार्थाभावाच्चेत्यर्थः। श्रुतं यज्ञादिकर्म तस्य कर्तव्यतया वेदे श्रुतत्वात्तेन गृहीतयाऽनुगृहीतया ज्ञानवैराग्याभ्यां युक्तया भक्त्या आत्मनि जीवात्मन्यन्तरात्मतया स्थितं ब्रह्मादिशब्दवाच्यं भगवन्तं श्रद्दधाना एते[4][5] एवंविधया भक्त्या पश्यन्ति। ज्ञानशब्देन प्रत्यगात्मयाथात्म्यज्ञानयोगो विवक्षितः। वैराग्यं विषयान्तरेषु वैतृष्ण्यं, तेन शमादिसङ्ग्रहः[6]। एभिरङ्गैरुपकृतया भक्त्या आत्मनि स्थितं परमात्मानं पश्यन्ति साक्षात्कुर्वन्तीत्यनेन भक्तेरेव परमात्मदर्शनसमनन्तरभाविमोक्षसाधनत्वमुक्तम्। कर्मयोगज्ञानयोगयोः शमादीनां च भक्तियोगानुग्राहकत्वं च "भिद्यते-हृदयग्रन्थिः" (मुण्ड. उ. 2-2-8) इति श्रुत्या तदर्थानुवादिना वक्ष्यमाणश्लोकेन च मोक्षस्य दर्शनानन्तरभावित्वं अवगतम्। एवञ्च भक्त्या पश्यन्तीत्यस्य दर्शनरूपापन्नाया भक्तेः अव्यवधानेन मोक्षसाधनत्वं इत्यभिप्रायः॥ १२॥

---

1. W adds जीवनार्थत्वं 2. W वर्गत्रयस्यापि 3. W °शमादि° 4 W मुनयः 5. W adds पश्यन्ति। हे मुनय इति सम्बोधनं वा। तदा ये श्रद्दधाना स्ते 6. W शमदमादि°

**विज०** ननु धर्मस्य भगवत्कथारत्यजनकत्वे कथं श्रमैकफलत्वं, **धर्मादर्थोऽर्थात्कामः कामात्सुखमि-त्यर्थशास्त्रादौ प्रसिद्धेरिति** तत्राह — **धर्मस्येति**। अपवर्गो मोक्षः तत्साधनं आपवर्ग्यं तस्य धर्मस्य इहार्थः। काञ्चनादिद्रव्यं अर्थाय फलाय न कल्पते; हि यस्मात्तस्माद्धरिकथारतिजनकत्वमेव फलं इत्यर्थः। धर्म एव एकान्तं नियमेन फलं यस्य स धर्मैकान्तः। तस्य धर्मसाधनस्य अर्थस्य कामो लाभाय प्रयोजनाय न स्मृतः, विद्वद्भिरिति शेषः। अत्रापि हिशब्दो हेतौ॥ ९॥

कामस्येन्द्रियप्रीतिः लाभः न भवति, तर्हि अशनाच्छादनाद्यभावे क्षुधादिना मरणमेव स्यात्। तत्राऽऽह — **जीवेतेति**। यावताऽर्थादिना जीवति शरीरयात्रानिर्वाहको भवति, तस्मादर्थशास्त्रादौ प्रतिपादितक्रमो बहिर्मुखानां इति भावः। **ब्रह्मार्पणबुद्ध्या कृतस्य** कर्मणः भगवत्कथारतिसाधनत्वं इत्याह — जीवस्येति। इह कर्मभिः योऽर्थः भगवत्कथारतिलक्षणः सः अतत्त्वजिज्ञासोः जीवस्य न भवति। भगवत्तत्त्वं अजानतः पुरुषस्य तदनर्पणबुद्ध्या कृतैः कर्मभिः फलं ऐहिकामुष्मिकं न स्यादिति भावः॥ १०॥

ननु अतत्त्वजिज्ञासोरित्युक्तं किं तत्तत्त्वं येन तज्ज्ञस्य कर्मभिः पुरुषार्थो न स्यादिति तत्राह — **वदन्तीति**। **अद्वयं** असमाधिकं ज्ञानं ज्ञानस्वरूपं देशकालादिषु बृंहितत्वात् सर्वान्तर्यामित्वादैश्वर्यादिगुणवत्त्वात् ब्रह्मेति, परमात्मेति, **भगवानिति शब्द्यते** ॥ ११॥

***यच्च** सत्तामात्रं केवलानन्ददेहं अत एव यत्किञ्चिल्लोकविलक्षणं तत् तत्त्वं वदन्तीति त्रिकालेऽप्यनन्यथाभूतं एकविधं ब्रुवते। न ब्रह्मणो ज्ञानस्वरूपत्वं युक्तिमत्, लोके ज्ञानस्य विषयापेक्षया उत्पत्तिविनाशधर्मदर्शनात्, अस्यापि तथात्वेन अनित्यत्वप्रसङ्गादिति, तत्राह — सदसदिति। सत्कार्यं असत्कारणं च। अविशेषणं न स्वनियतविशेषापादकम्। यस्येतिशेषः विषयापेक्षया अनुत्पाद्यमिति उभाभ्यां सदसद्भ्यां भाष्यते **मृत्स्रष्टृघटस्रष्टृमृज्ज्ञातृघटज्ञात्रित्याद्यनन्त-**कार्यकारणविशिष्टतया व्यवह्रियते। अतो भगवान् साक्षात् केवलः प्रकृतिसम्बन्धविधुरः **स्मृतः**। ***यादृषयज्ज्ञानं भक्तियोगं** जनयेत् तद् ब्रह्म किं प्रमाणगोचरः? उतागोचरः? गोचरश्चेत् घटादिवदब्रह्मत्वं, अगोचरश्चे **न्नास्त्येवेत्याशङ्क्य** उभयदोषपरिहारायाऽऽह — **वदन्तीति**। न वयं प्रमाणैरनुमिमीमहे न चैव तावता नास्ति। किं तर्हि, यज्ज्ञानमद्वयं ज्ञातृज्ञेयलक्षणरहितं तत्त्वविदस्तत्तत्त्वं जगदाकारेण विवर्तत इति वदन्ति। तदेव वेदान्तिभिः ब्रह्मेति, परमात्मेति, भगवानिति शब्द्यते। तत्रायं विभागः। बृहत्त्वात् ब्रह्मेति वेदान्तिनः। परं **केवलमादानादिकर्तृत्वादात्मेति** योगिनः। षड्गुणयुक्तत्वात् भगवानिति पौराणिकाः। तत्र किं तत् सत्यमिति। तत्राह — **सत्तेति**। तस्मादत्र सगुणं प्रमाणवेद्यं न निर्गुणमिति शास्त्रमथितार्थ इति केचिद्व्याचक्षते तदसारम्, अत्रैव पूर्वापरवाक्यार्थपर्यालोचनया **स्वविरोधात्**॥

तदाह **तदिति**। एवं उक्तप्रकारेण **ब्रह्मपरमात्माद्यनन्तवैदिकादिपदवाच्यतया** सगुणः सर्वजगत्कर्ता **परमात्मैव** तत्त्वमिति यस्मात्तस्मान्मुनयो ज्ञानिनः श्रद्दधानाः शास्त्रोक्तवस्तुगत्या आस्तिक्यबुद्धियुक्त श्रुतिगृहीतया, **वेदान्तश्रवणेन** दृढगृहीतया, तत्त्वज्ञानेन विषयवैराग्येण युक्तया भक्त्या तमेवात्मानं परमात्मानमात्मनि हृदि पश्यन्ति। **चकारः** "स्वात्मन्येवात्मानं पश्येत्" (बृह. उ. 4-4-23) इति श्रुतिप्रसिद्धिद्योतको **न तु आत्मनि क्षेत्रज्ञे जीवे आत्मानं**

परमात्मानं पश्यन्ति; परमात्मनि क्षेत्रज्ञं चेति समुच्चयार्थः। तस्मा ज्जगदाकारेण विवर्तितं तत्त्वं अन्यन्निर्गुण मन्य **तत्त्व**मिति नार्थः ॥ १२ ॥

1 K adds यत् *The vv with No 11 and asterisk mark are commented twice by Vijayadhvaja Thirtha.

**रा० कृ०** आपवर्ग्यस्य मोक्षफलपर्यन्तस्य धर्मस्य अर्थाय प्रयोजनाय फलत्वायेति यावत्। **अर्थः** नोपकल्पते योग्यो न भवतीत्यर्थः। धर्मैकान्तस्य धर्माव्यभिचारिणः अर्थस्य कामो लाभाय न श्रुतः ॥ ९ ॥

कामस्य इन्द्रियप्रीतिः लाभो न भवति। यावता जीवेत् तावतैव कामलाभः। जीवस्य जीवनस्य कर्मभिः यः अर्थः सः कर्माचरणरूपं प्रयोजनं न भवति; केवलं तत्त्वजिज्ञासा प्रयोजनम् ॥ १० ॥

तत्त्वविदस्तु — यत् अद्वयं अखण्डाकारं ज्ञान मिति ब्रह्मेति परमात्मेति भगवा निति च कथ्यते **तत् तत्त्व मिति** वदन्ति ॥ ११ ॥

तच्च तत्त्वं श्रद्दधानाः मुनयः ज्ञानवैराग्ययुक्तया श्रुतगृहीतया भक्त्या आत्मनि आत्मानं परमात्मत्वेन पश्यन्ति जानन्ति ॥ १२ ॥

**अतः पुम्भि र्द्विजश्रेष्ठा वर्णाश्रमविभागशः ।**
**स्वनुष्ठितस्य धर्मस्य संसिद्धि र्हरितोषणम् ॥१३ ॥**

**तस्मा देकेन मनसा भगवान् सात्वतां पतिः ।**
**श्रोतव्यः कीर्तितव्यश्च ध्येयः पूज्यश्च नित्यदा[1] ॥ १४ ॥**

**यदनुध्या[2]सिना युक्ताः कर्मग्रन्थिनिबन्धनम् ।**
**छिन्दन्ति कोविदा स्तस्य को न कुर्यात् कथारतिम् ॥ १५ ॥**

**शुश्रूषोः श्रद्दधानस्य वासुदेवकथारु[3]चिः ।**
**स्या न्महत्सेवया विप्राः! पुण्यतीर्थनिषेवणात् ॥ १६ ॥**

1 H,V °शः 2 M °ध्यायिनो 3 H,M,V रतिः

**श्रीध०** धर्मस्य फलं भक्तिः न अर्थकामादिकं इतीम मर्थं उपपाद्य, उपसंहरति — **अत इति**। हे द्विजश्रेष्ठाः, हरितोषणं हरे राराधनम्। संसिद्धिः फलम् ॥ १३ ॥

यस्माच्च भक्तिहीनो धर्मः केवलं श्रम एव तस्मात् भक्तिप्रधानः एव धर्मः अनुष्ठेयः इत्याह — **तस्मादिति**। एकेन एकाग्रेण मनसा ॥ १४ ॥

भक्तिरहितो धर्मः श्रम एवेति प्रपञ्चितम्। इदानीं तु भक्तेः मुक्तिफलत्वं प्रपञ्चयति — **यदिति।** यस्यानुध्या अनुध्यानम्, सैवासिः खड्गः तेन युक्ताः[1] विवेकिनः, ग्रन्थिं अहङ्कारं निबध्नाति य त्कर्म तच्छिन्दन्ति ; तस्य कथायां रतिं को न कुर्यात् ॥ १५॥

ननु सत्य मेवं[2] कर्मनिर्मूलनी[3] हरिकथारतिः तथाऽपि तस्यां रुचिः नोत्पद्यते ; किं कुर्म स्तत्राह — **शुश्रूषोरिति।** पुण्यतीर्थनिषेवणात्[4] निष्पापस्य महत्सेवा स्यात्। तया च तद्धर्मश्रद्धा। ततः श्रवणेच्छा। ततो रुचिः स्यात् इत्यर्थः ॥ १६ ॥

1 H.V add अप्रमत्ताः 2 H.V °वं 3 H.V °लि° 4 B.H.V निषेवणादिभिः

**वीर॰** श्रुतगृहीतयेत्यनेन वर्णाश्रमधर्मस्य भक्तियोगानुग्राहकत्वं उक्तम्, "धर्मः स्वनुष्ठितः पुंसां" (भाग. 1-2-8) इत्यादिना[1] धर्मस्य भक्तियोगानुग्रहप्रकार उक्तः, इदानीं अन्यथाऽपि, तदनुग्रहप्रकारं दर्शयति — **अत** इति। **यतो भक्तेरेव साक्षात्** मुक्तिसाधनत्वं, अतो हे द्विजश्रेष्ठाः पुम्भिः[2] वर्णाश्रमविभागशः अवस्थितस्येति शेषः। **तद्वर्णाश्रमानुगुणस्य इत्यर्थः। वर्णादिभेदेनावस्थितैः** पुम्भिरिति वा। सम्यगनुष्ठितस्य [3]**पञ्चमहायज्ञादि रूपस्य संसिद्धिः** फलं हरितोषणमेव। अयं भावः — स्वनुष्ठिता द्धर्मात् भक्तियोगप्रतिबन्ध निवृत्त्यनुकूल सङ्कल्पहेतु र्हरितोषः, ततश्च भक्तियोगसम्पन्न[4] प्रतिबन्धपापक्षयः, ततो भक्तियोगनिष्पत्तिः इति। यद्वा हरि स्तुष्यते येनानुध्यानेन त द्धरितोषणम्। तदेव धर्मस्य स्वनुष्ठितस्य संसिद्धिः फलम्। भक्तियोगोत्पत्ति प्रतिबन्धनिरसनद्वारा हरितोषहेतु भक्तियोगनिष्पत्ति रेव धर्मस्य फलं इत्यर्थः। अन्यथा, "धर्मेण पाप मपुनदति" (म. ना. उ. 17-6), "अविद्यया मृत्युं तीर्त्वा"(ईशा. उ. 11) इत्यादिश्रुतेः धर्मस्य भक्तियोगोत्पत्ति प्रतिबन्धक पापनिरासकत्वं वदन्त्या विरोधापत्तेः ; धर्मस्यैव हरितोषफलकत्वे भक्तेः वैयर्थ्यापत्तेश्च। ननु "ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन[5]" (भ. गी. 4-37) इति भक्तियोगस्यैव सर्वदुरितनिवर्तकत्वस्मरणात्, भक्तियोगवत् धर्मस्यापि हरितोषहेतुत्वमेव युक्त मिति चेत्, शृणु — प्रापकप्रतिबन्धकं प्राप्तिप्रतिबन्धकं चेति द्विविधं दुरितम्। तत्र प्रापकस्य भक्तियोगस्य य दुत्पत्तिप्रतिबन्धकं दुरितं त[6]द्धर्मापनोद्यम्। एवं धर्मनिरस्तप्रतिबन्धके भगवत्प्रापकभक्तियोगे निष्पन्ने तेन यद्भगवत्प्राप्ति प्रतिबन्धकं दुरितं तदपनोद्यते ; तदभिप्रायकाणि ज्ञानाग्नि रित्यादीनि वचनानि ॥ १३ ॥

एवं वर्णाश्रमधर्मस्य भक्तियोगोपकारः तत्प्रकारश्च भक्तियोग प्रतिबन्धनिरसनेन, **भगवद्गुणादि** श्रवणरुचिजन-[7]कद्वारा वे[8]ति द्विधा सन्दर्शितः। अथ तुल्यन्यायतया भगवद्गुणस्वरूपादि श्रवणादीनामपि भक्तियोगोपकारकत्वं उपकारप्रकारं च वक्तुं तेषां अवश्यकर्तव्यतां ताव दाह **तस्मादिति** द्वाभ्याम्। तस्मा द्धर्मस्य भक्तियोगानुग्राहकत्व-तत्प्रकारप्रदर्शनादेव तु[9]ल्यन्यायतया **भगवद्भक्तियोगोपकारकत्वेन** सात्वतां भक्तानां पतिः भगवा नेके नैकाग्रेण मनसा नित्यदा श्रोतव्यः कीर्तितव्यः ध्येयः स्मर्तव्य; पूज्यश्च। ध्यानं अत्र श्रुतार्थ प्रतिष्ठापनात्मकं मननापरपर्यायं स्मरणं विवक्षितम्। भक्त्यात्मकस्य [10]श्रवणाद्यनन्तरभावित्वं हि वक्ष्यते ॥ १४ ॥

यस्य भगवतो ऽनुध्या अनुध्यानं भक्तिः सैवासिः **खड्गः** तेन युक्ताः सहिताः कोविदाः कुशलाः। **कर्मैव ग्रन्थिः तद्रूपं निबन्धनं** बन्धनं छिन्दन्ति। कर्मणो ग्रन्थित्वरूपणं ग्रन्थिव दुर्मोच्य[11]त्वात्। [12]**दुर्विमोच्येन कर्मणा निबध्यत इति निबन्धनं**, कर्मायत्तः संसारः तं छिन्दन्ति इति वा। तस्य कथासु रतिं को वा पुमान् न कुर्यात्, **सर्वोऽपि कुर्या देवेत्यर्थः**। यस्य भक्तिः अनर्थावहसंसृति निरासहेतुः तस्य महोपकर्तुः भक्तियोगस्य अनुग्राहकतया तत्कथासु रतिं **सर्वोऽपि जनः कुर्या देवेत्यर्थः** ॥ १५ ॥

**यद्यपि** धर्मः स्वनुष्ठितः पुंसा मिति धर्मस्य वासुदेवकथा रुचिजननद्वारा भक्तियोगानुग्राहकत्वोक्त्यैव कथारुचिजनकत्वम प्युक्तमेव भवति ; तथाऽपि न साक्षादेव धर्मः कथारतिहेतुः ; अपि तु सत्सङ्गादिद्वारा हेत्वन्तरेण वेत्याह **शुश्रूषोरिति**। श्रोतुमिच्छोः स्वधर्मनिरस्त शुश्रूषा प्रतिबन्धकस्येत्यर्थः। श्रद्धायुक्तस्य पुंसः वासुदेवकथायां रुचिः, हे विप्राः, महतां सेवया पुण्यतीर्थानां गङ्गादीनां निषेवणाच्च भवति ॥ १६ ॥

---

1. W विषृवक्सेनकथासु यः नोत्पादयेद्यदि रतिं इति 2 A,B omit °व° 3 W adds धर्मस्य 4 W °निष्पत्ति° 5 W तथा 6 W तद्धर्मापनोद्यम् 7 W °न° 8 W चे° 9 W तत्तुल्य° 10 W adds ध्यानस्य 11 W °च° 12 W adds ग्रन्थिवत्

**विज॰** उपसंहरति **अत इति**। हे द्विजश्रेष्ठाः, संसिद्धिः फलम् ॥ १३ ॥

कृष्णसम्प्रश्नस्य परमधर्मत्वं निगमयति — **तस्मादिति**। यतः कृष्णसम्प्रश्नस्यैव परमधर्मत्वं **तस्माद्धेतोः एकेन एकाग्रेण। चकारौ** परस्पर समुच्चयार्थे। श्रवणादितत्तत्काले कर्तव्यं न क्वचित्कालो वृथा यापनीय **इत्यस्मिन्नर्थे नित्यदाशब्दः** ॥ १४ ॥

फलदर्शनं पुरोधाय प्रवृत्तिदर्शनात् श्रवणादिना किं फलमिति तत्राह — **यदिति**। यं भगवन्तं **अनुसवनं** निरन्तरं ध्यातुं शीलं एषां इति यदनुध्ययिनो युक्ताः मनोयोगयुक्ताः कर्मपाशेन नितरां बन्धनं तत् छिन्दन्ति। **तस्य कथासु रतिं को न कुर्यात्**। अतः श्रवणादिफलं अपरोक्षज्ञानद्वारा मुक्तिरेव ॥ १५ ॥

हरिकथारतिः केन स्यात् इति तत्राह — **शुश्रूषो रिति**। हे विप्राः, शुश्रूषोः गुर्वादिपरिचर्याशीलस्य, **वेदादिषु श्रद्दधानस्य महतां सेवया पुण्यतीर्थानां** भागवतादि सच्छास्त्राणां गङ्गादितीर्थानां च नितरां सेवनाच्च **वासुदेवकथारतिः स्यात्** इत्येकान्वयः ॥ १६ ॥

**रा॰ कृ॰** अतः हे द्विजश्रेष्ठाः, पुंभिः वर्णाश्रमविभागशः वर्णाश्रमानुगुण्येन स्वनुष्ठितस्य **सम्यगनुष्ठितस्य धर्मस्य संसिद्धिः** फलं हरितोषणमेव ॥ १३ ॥

तस्मात् एकेन अनन्येन मनसा भगवान् सात्त्वतां पतिः नित्यशः श्रोतव्यः, कीर्तितव्यः, ध्येयः, **पूज्यश्च** भवति ॥ १४ ॥

यदनुध्याऽसिना यस्य भगवतः अनुध्या अनुध्यानं सैवाऽसिः **खड्गः** तेन **युक्ताः अवधानवन्तः कोविदाः ग्रन्थिनिबन्धनं** अहङ्कार कारणं कर्म छिन्दन्ति, तस्य भगवतः कथारतिं कथास्वनुरागं **को न कुर्यात्? सर्वोऽपि** कुर्या देवेत्यर्थः ॥ १५ ॥

हे विप्राः, शुश्रूषोः श्रद्धानस्य पुंसः महत्सेवया पुण्यतीर्थनिषेवणात् वासुदेवकथारतिः स्यात् ॥ १६ ॥

**शृण्वतां स्वकथां[1] कृष्णः पुण्यश्रवणकीर्तनः ।**
**हृद्यन्तःस्थो ह्यभद्राणि विधुनोति सुहृ त्सताम् ॥ १७ ॥**
**नष्टप्राये ष्वभद्रेषु नित्यं [2]भागवतसेवया ।**
**भगव त्युत्तमश्लोके भक्ति र्भवति नैष्ठिकी ॥ १८ ॥**
**तदा रजस्तमोभावाः कामलोभादयश्च ये ।**
**चेत एतै रनाविद्धं स्थितं सत्त्वे प्रसीदति ॥ १९ ॥**
**एवं प्रसन्नमनसो भगवद्भक्तियोगतः ।**
**भगवत्तत्त्वविज्ञानं मुक्तसङ्गस्य जायते ॥ २० ॥**

1 B,H,I,V °थाः 2 AF GF भगवदाश्रया

**श्रीध०** ततश्च **शृण्वता मिति** । पुण्ये श्रवणकीर्तने यस्य सः । सतां सुहृत् हितकारी । हृदि या न्यभ[1]द्राणि कामादिवासनाः तानि । अन्तःस्थो हृदयस्थ स्सन्[2] ॥ १७ ॥

ततश्च **नष्टप्राये** ष्विति । सर्वभिद्रनाशस्य ज्ञानोत्तरका[3]लत्वा त्प्रायो[4]ग्रहणम् । भागवतानां भागवतशास्त्रस्य वा सेवया नैष्ठिकी निश्चला विक्षेपकाभावात्[5] ॥ १८ ॥

**तदेति** । रजश्च तमश्च ये च तत्प्रभवाः भावाः कामादयः एतै रनाविद्धं अनभिभूतम् । **प्रसीदति** उपशाम्यति ॥ १९ ॥

**एवमिति** । भगवद्भक्तियोगतः प्रसन्नमनसः । अत एव मुक्तसङ्गस्य ॥ २० ॥

1 V °च्छिद्राणि 2 H,V add विधुनोति 3 H,V कालीनत्वा° 4 H,V °य° 5. H,V add **अत्र पूर्वार्धे नित्यं भागवतसेवयेति वर्णाधिक्यं** आर्षम् । सद्भागवतसेवयेति पाठे नका प्यनुपपत्तिः ।

**वीर०** श्रवणादीनां भक्तियोगोपकारप्रकारं दर्शयति **शृण्वतामिति** द्वाभ्याम् । **पुण्यं शृण्वतां कीर्तयतां च** पुण्यावहं श्रवणं कीर्तनं च यस्य स कृष्णः स्वकथां शृण्वतां सतां साधूनां हृदयान्तःस्थितस्सन् अभद्राणि भक्तियोगोत्पत्ति प्रतिबन्धकानि दुरितानि विधुनोति । सुहृ दिति हेतुगर्भ मिदं सुहृत्त्वात् धुनोतीत्यर्थः ॥ १७ ॥

ततः किमत आह **नष्टप्रायेष्विति**। नित्यं भागवतानां सतां सेवया तत्सेवापूर्वक भगवद्गुण श्रवणेनेत्यर्थः। **अभद्रेषु नष्टप्रायेषु सत्सु उत्तमश्लोके भगवति नैष्ठिकी** दृढा **भक्तिः भवति**। नष्टप्रायेष्विति प्राय[1]ग्रहणेन भक्तियोगापनोद्यं प्राप्तिप्रतिबन्धकं उत्तरपूर्वा[2]घरूपं तु अवशिष्यत इति सूचितम्। एवं तुल्यन्यायतया स्वधर्मेणापि उपायोत्पत्तिप्रतिबन्धकमात्र मेव निरस्यत इति सम्य गुक्तं प्राक्॥ १८॥

कथं अभद्रेषु नष्टेष्वपि भक्तिः भवतीत्यत्राह — **तदेति**। नृणां सततं महत्सेवैव धर्मः। तस्मात्[3] **अभद्रेषु नष्टेषु** तन्मूलाः चित्तविक्षेपावरणहेतवो **रजस्तमसो भावा** धर्माः कार्यभूता इति यावत्। ये **कामलोभादयः** सन्ति, आदिशब्दग्राह्याः क्रोधमोहादयः; ते सर्वे नश्यन्ति। नष्टेषु च रजस्तमोभावेषु **एतै** रजस्तमोभावैः **अनाविद्धं** अविक्षिप्तं अविमूढं च अत एव **सत्त्वे** रजस्तमोभ्यां अनभिभूते सत्त्वगुणे **स्थितं** सत्त्वप्रधानं सत् स्थिरं स दिति याव **त्प्रसीदति**। प्रसन्ने च चेतसि नैष्ठिकी भक्तिर[4]प्युद्भवतीति भावः॥ १९॥

तदेवाह **एवमिति**। एवं उक्तरीत्या **प्रसन्नं मनो यस्य** तस्य **मुक्तसङ्गस्य** विरक्तस्य **पुंसः** नैष्ठिकी भक्तिः भवतीति शेषः। तस्माच्च **भक्तियोगात् भगवत्तत्त्वविज्ञानं** भगवत्स्वरूपगुण याथात्म्यसाक्षात्कारात्मकं ज्ञानं **जायते**। दृष्ट इत्यनन्तरोक्तेः तच्च ज्ञानं परभक्तेः फलं "भक्त्या त्वनन्यया शक्य अह मेवंविधो ऽर्जुन। ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप" (भ. गी. 11-54) इति वचनात्॥२०॥

1. A °यो° 2. B,W °घ° 3. W adds तदा 4. W °राशुभव°

**विज०** श्रवणफल माह — **शृण्वता** मिति। सुहृ दनिमित्तबन्धुः। पुण्ये श्रवणकीर्तने यस्य स तथा॥ १७॥

सर्वामङ्गलनाशफलं आह — **नष्टेति**। लिङ्गशरीरभङ्गपर्यन्तं अभद्राणां सम्भवात् प्रायेष्वित्युक्तम्। नैष्ठिकी अचला। उत्तमः उद्गतदोषः श्लोकः कीर्तिः यस्य स तथोक्तः तस्मिन्॥ १८॥

भक्तिफल माह — **तदेति**। यदा हरै अचला भक्तिः तदा ये रजआदयो भावाः। एतैः अनाविद्धं असंसक्तं शुद्धसत्त्वे स्थितं वा। बलज्ञान समाहारवति हरौ स्थितं वा चेतः प्रसीदति। सकलदोषविधुरतया निरन्तरं परमात्मानं स्मरतीत्यर्थः। रजस्तमोभ्यां भावः उत्पत्तिः येषां ते तथोक्ताः कामलोभादयः। चकारात् प्रमादादय इति वा॥ १९॥

निरन्तरं हरिस्मरणफलं आह **एव** मिति। भगवत्तत्त्वविज्ञानं स्वबिम्बापरोक्षविज्ञानम्॥ २०॥

**रा० कृ०** पुण्यश्रवणकीर्तनः सतां सुहृत् कृष्णः स्वकथाः शृण्वताम्। अन्तःस्थस्सन् हृदि हृदयस्थानि **अभद्राणि** वासनारूपाणि विधुनोति॥ १७॥

अभद्रेषु नष्टप्रायेषु 'नित्यं भागवतसेवया'— अत्र 'सद्भागवत सेवया' इति समुचिततरः पाठः **श्रीधराचार्यैः** सूचितः। **उत्तमश्लोके भगवति नैष्ठिकी** निश्चला **भक्तिः भवति**॥ १८॥

किंच, तदा रजस्तमोभावाः रजस्तमोभवा ये कामलोभादयो वर्तन्ते, एतैः अनाविद्धं चेतः सत्त्वे स्थितं सत् **शुद्ध**सत्त्वस्वरूपे भगवति आसक्तं सत् प्रसीदति प्रसन्नं भवति ॥ १९ ॥

एवं भगवद्भक्तियोगतः प्रसन्नमनसो मुक्तसङ्गस्य भगवत्तत्त्व विज्ञानं जायते ॥ २० ॥

**भिद्यते हृदयग्रन्थि श्छिद्यन्ते सर्वसंशयाः ।**
**क्षीयन्ते चास्य कर्माणि दृष्ट ए वात्म नीश्वरे ॥ २१ ॥**
**अतो वै कवयो नित्यं भक्तिं परमया मुदा ।**
**वासुदेवे भगवति कुर्व न्त्यात्मप्रसादनीम्[1] ॥ २२ ॥**
**सत्त्वं रज स्तम इति प्रकृते र्गुणा स्तै र्युक्तः परः पुरुष एक इहास्य धत्ते ।**
**स्थित्यादये[2] हरिविरिञ्चि हरेति संज्ञाः श्रेयांसि तत्र खलु सत्त्वतनो र्नृणां स्युः ॥ २३ ॥**
**पार्थिवा द्दारुणो धूम स्तस्मा दग्नि स्त्रयीमयः ।**
**तमसस्तु रज स्तस्मा त्सत्त्वं यद् ब्रह्मदर्शनम् ॥ २४ ॥**

1 H.V °दि° 2 H °यो

**श्रीध०** ज्ञान[1]फल माह — **भिद्यत** इति । हृदयमेव ग्रन्थिः चिज्जडग्रथनरूपः अहङ्कारः । अत एव सर्वे **संशयाः** असम्भावनादिरूपाः। **कर्माणि** अनारब्धफलानि । आत्मनि[2] स्वरूपभूते ईश्वरे दृष्टे साक्षात्कृते सति । एवकारेण **ज्ञानानन्तर** मेवेति दर्शयति ॥ २१ ॥

तत्र च सदाचारं दर्शयन् उपसंहरति — **अत** इति । आत्मनः प्रसाद[3]नीं मनश्शोध[4]नीं वासुदेवे भक्तिं **कुर्वन्तीति** भजनीयविशेषो दर्शितः ॥ २२ ॥

तदेवोपपादयितुं ब्रह्मादीनां त्रयाणां एकात्मकत्वे[6]ऽपि वासुदेवस्य आधिक्य माह — **सत्त्व** मिति । **इह** **यद्यपि** एक एव परः पुमान् अस्य[5] स्थित्यादये स्थितिसृष्टि प्रलयार्थं हरिविरिञ्चिहरेति संज्ञाः केवलं भिन्नाः धत्ते। "हरिविरिञ्चिहरा" इति वक्तव्ये सन्धि रार्षः । तत्र तेषां मध्ये श्रेयांसि शुभफलानि सत्त्वतनोः वासुदेवादेव स्युः ॥ २३ ॥

उपाधिवैशिष्ट्येन फलवैशिष्ट्यं सदृष्टान्त माह — **पार्थिवादिति** । पार्थिवात् स्वतःप्रवृत्ति प्रकाशरहिता द्दारुणः **काष्ठात्** सकाशात् धूमः प्रवृत्तिस्वभावः त्रयीमयो वेदोक्तकर्मप्रचुरः ईषत्कर्मप्रत्यासत्तेः । तस्माद प्यग्निः त्रयीमयः साक्षा त्कर्मसाधनत्वात् । एवं[7] तमसः सकाशा द्रजः,[8] ब्रह्मदर्शनं ब्रह्मप्रकाशकम् । तुशब्देन लयात्मका त्तमसः **सकाशा-**

द्रजसः सोपाधिक ज्ञानहेतुत्वेन किञ्चिद् ब्रह्मदर्शनप्रत्यासत्तिमात्र मुक्तं; न तु सर्वथा तत्प्रकाशकत्वं विक्षेपकत्वात्। यत्सत्त्वं तत्साक्षाद् ब्रह्मदर्शनम्[9]। अतः तद्गुणोपाधीनां ब्रह्मादीनामपि यथोत्तरं वैशिष्ट्य मिति भावः ॥ २४ ॥

---

1. H,V °ने 2 B adds आत्म° 3 V °दि° 4 H,V °धि° 5. B,H,V add विश्वस्य 6 H °यः 7 H,V add लयात्मकात् 8 H,V add तस्मात् सत्त्वं 9. H,V add प्रकाशकत्वात्

**वीर०** एवं साक्षात्कारपर्यन्त भगवद्भक्तियोगसाध्यं फलमाह — **भिद्यत** इति। आत्मनि परमात्मनि **ईश्वरे** भगवति दृष्ट एव दृष्टमात्रे सत्ये वास्य द्रष्टुः पुंसः सर्वकर्माणि भगवत्प्राप्तिप्रतिबन्धकानि उत्तरपूर्वाघरूपाणि- क्षीयन्ते नश्यन्ति, अत एव तन्मूलकाः सर्वे संशयाः नश्यन्ति। सर्वशब्देन अन्यथाज्ञान विपरीतज्ञानाज्ञान सङ्ग्रहः। ततः तन्मूलको हृदयग्रन्थिव दनिर्मोच्यो ऽहंममाभिमानो भिद्यते, समूला संसृतिः निवर्तते। तन्निवृत्तौ च ब्रह्मप्राप्तिः तदनुभव श्च अयत्नसिद्धः इति भावः ॥ २१ ॥

उक्तार्थस्य अनुष्ठानं दर्शयति — **अत** इति। यतो मोक्ष एव निरतिशयपुरुषार्थः। तत्साधनं तु भक्तिरेव। अतः कवयो निरतिशयश्रेयस्तत्साधनाभिज्ञाः परमया मुदा भगवति वासुदेवे भक्तिं आत्मप्रसादनीं कुर्वन्ति। आत्मप्रसादनीं[1] भक्तिं कुर्वन्ती त्यनेन आरब्धभक्तियोगस्य चित्तप्रसादोऽपि शनैः शनैः भक्तियोगादेव भवतीति सूचितम् ॥ २२ ॥

ननु सृष्ट्यादिकारणेषु ब्रह्मरुद्रादिदेवेषु सत्सु कथं वासुदेवभक्तिरेव मोक्षोपायत्वेनोच्यत इति शङ्काया- माह — **सत्त्व** मित्यादिना यावदध्यायसमाप्ति। तत्र भगवान् वासुदेव[2] हिरण्यगर्भ रुद्राख्य जीवशरीरकतया स्वावतार- रूपेण च जगत्सृष्टि स्थितिलय कारणभूतः। तत्र साक्षा द्वासुदेवभक्ति रेव मोक्षोपायभूता। तच्छरीरभूत हिरण्यगर्भादि- भक्तिश्च[3] "यो यो यां यां तनुं भक्तः" (भ. गी. 7-21) इत्याद्युक्तरीत्या तत्तल्लोकादि[4] प्राप्त्युपायः यद्यपि हिरण्यगर्भादि- जीवशरीरकतया तद्रूपेणावस्थितः परमात्मैव, तथाऽपि कर्तृत्व भोक्तृत्वादिकं जीवगतमेव, न[5] परमात्मगतम्। न हि शरीरगतधर्माणां शरीरिणि प्रसक्तिः इत्ययं अर्थोऽत्र प्रतिपाद्यते। सत्त्व मिति सत्त्वादय स्त्रयः प्रकृते र्गुणाः। प्रकृते रिति सावधारणं विवक्षितम्। प्रकृतेरेव गुणा न तु जीवस्य ईश्वरस्य[6] वेत्यर्थः। तैः सत्त्वादिभि र्युक्तः परः पुरुषः परमपुरुषः योगोऽत्र शरीरात्मभावरूपो विवक्षितः। एकः सृष्टेः प्रागिति शेषः। "सदेव सौम्येद[7] मग्र आसीत्" (छान्दो.उ. 6-2-1) इत्यादि श्रुत्यनुरोधात्। एकत्वं च कार्यदशावस्था नामरूपविभागप्रयुक्त बद्धप्रतिसम्बन्धि[8] नामरूप विभागाभावप्रयुक्त विभागानर्ह सूक्ष्मचिदचि च्छरीरकत्वं सृष्टेः प्राक् नामरूपविभागानर्ह सूक्ष्म चिद- चिच्छरीरकतया एक एव सन्नित्यर्थः। अस्य स्थूलचिदचिदात्मकस्य जगतः स्थित्यादये स्थितिसृष्टिलयार्थम्। स्थिति प्राथम्यं भगवत्प्राथम्यविवक्षया परमपुरुष एव ब्रह्मरुद्ररूपेण तन्मध्ये स्वावताररूपेण स्थितिसृष्ट्यादिकृ द्धरिविरिञ्चिहरेति संज्ञा विष्णुब्रह्मरुद्रसंज्ञाः। इतिः प्रकारार्थः; तेन रूपसङ्ग्रहः, हर्यादिरूपाणि तद्वाचकानि हर्यादिनामानि च **धत्ते बिभर्ति**। तत्र सत्त्वं तनुः शरीरं अधिष्ठेयं यस्य तस्मात् सत्त्वप्रवर्तका द्विष्णोरेव[10] नृणां भजतां श्रेयांसि

ज्ञाननिष्पत्ति भवनिवृत्तिपर प्राप्तिरूपाणि स्युः खलु। सर्वकारणत्वात् सर्वस्मात् परत्वात् सम्यक् ज्ञानवर्धक सत्त्वप्रवर्तकत्वाच्च वासुदेवभक्ति रेव मोक्षप्रदेत्यर्थः। नन्वेक एव हर्यादिसंज्ञा धत्ते इत्यनेन हर्यादीनां परस्परं संज्ञाभेद एव, न वस्तुभेद इति प्रतीत्या त्रयाणां ऐक्यम्[11] एव[12] द्रष्टव्यम्। तथा च श्रूयते "ब्रह्मा नारायणः शिवश्च नारायणः" (त्रि. म. ना. उ. 2-8) इति। स्मर्यते च "ब्रह्मा[13] नारायणाख्योऽसौ कल्पादौ भगवान् यथा। प्रजाः ससर्ज भगवान् ब्रह्मा - नारायणात्मकः"। (विष्णु. पु. 4-4-1,2) "तत स्स भगवा न्विष्णू रुद्ररूपधरो ऽव्ययः। ततः कालाग्निरुद्रोऽसौ भूत्वा सर्वहरो हरिः। सर्गस्थित्यन्तकारिणीं[14] ब्रह्मविष्णु शिवात्मिकाम्। [15]संज्ञां सं[16]याति भगवा नेक एव जनार्दनः।" इति। ततश्च वासुदेवस्य सर्वस्मा त्परत्वं नोपपद्यते। किञ्चैक एव हर्यादिसंज्ञा धत्ते इत्यनेन न[17] हर्यादिभ्यः परं तत्त्व मस्ती त्यवगम्यते। युक्तं चैतत्। अत एव "विष्णु र्मन्वादयः कालः" (विष्णु. पु. 1-22-32) "यस्मिन् ब्रह्मविष्णुरुद्रेन्द्राः [18]सर्वे सम्प्रसूयन्ते" (अथ. शिखा. उ. 2) "तेनेदं पूर्णं पुरुषेण सर्वम्। ततो यदुत्तरतरं तदरूपं अनामयम्। यएत द्विदु रमृता स्ते भवन्ति" (श्वेता. उ. 3-10) इति विष्णोरपि परतत्त्वविभूतित्व, तत उत्पत्तिः, पुरुषशब्दनिर्दिष्ट नारायणातिरिक्त तत्त्वस्य मोक्षहेतुत्वं इत्यादिकं सर्वं श्रूयमाणं सङ्गच्छते। किञ्च, "अमृतस्यैष सेतुः" (मुण्ड. उ. 2-2-5) इति सेतुव द्भगवतो ऽन्यप्रापकत्वोक्तेश्च त्रिमूर्त्युत्तीर्णमेव सर्वजगत्कारण मिति नारायणस्य न परत्वं नापि तद्भजना न्मुक्तिः, "कारणं तु ध्येयः" (अथ. शिखा. उ. 3) इति श्रुतिविरोधप्रसङ्गा दिति चे दत्रोच्यते — न तावत् त्रिमूर्त्यैक्य मुपपन्नम् "नारायणाद् ब्रह्मा जायते। नारायणाद्रुद्रो जायते। नारायणाद् द्वादशादित्या रुद्रा वसवः सर्वाणि च्छन्दांसि नारायणादेव समुत्पद्यन्ते" (नारा. उ. 1)। "एको ह वै नारायण आसी न्न ब्रह्मा नेशानः" (महा. उ. 1-1) "एको ह वै नारायण आसी न्न ब्रह्मा न च शङ्करः। स मुनिर्भूत्वा समचिन्तयत् तत एते व्यजायन्त विश्वे हिरण्यगर्भोऽग्नि र्यमवरुणरुद्रेन्द्राः। य त्राभिपद्मा दभवत् स महात्मा प्रजापतिः। तत्र ब्रह्मा चतुर्मुखोऽजायत सोऽग्रे भूतानां मृत्यु मसृजत[19]। त्र्यक्षं त्रिशिरस्कं त्रिपादं खण्डपरशुम्। ब्रह्मणः पुत्राय ज्येष्ठाय"। "ब्रह्मा दक्षादयः काल स्तथैवाखिल जन्तवः। विभूतयो हरे रेता[20] जगतः सृष्टिहेतवः" (विष्णु. पु. 1-22-31)। "रुद्रः कालान्तकाद्याश्च समस्ताश्चैव जन्तवः। चतुर्विधाश्च ते सर्वे जनार्दन विभूतयः" (विष्णु. पु. 1-22-33)। "आद्यो नारायणो देव स्तस्मात् ब्रह्मा ततो भवः। परो नारायणो देव स्तस्मा ज्जात श्चतुर्मुखः। तस्मा द्रुद्रोऽभवद्देवि"। "क इति ब्रह्मणो नाम ईशोऽहं सर्वदेहिनाम्। आवां त्वदङ्गसम्भूतौ तस्मात् केशवनामभाक्" (हरिवंशे) "तवान्तरात्मा मम च येचान्ये देहिसंज्ञिताः। सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित् क्वचित्"। (भार. 12-339-4) "एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजौ स्मृतौ। तदा दर्शितपन्थानौ सृष्टिसंहारकारकौ" (भार. 12-328-17)। "विष्णुरात्मा भगवतो भव[21]स्यामिततेजसः"। (भार. 8-24-85) "सृष्टिं ततः करिष्यामि त्वामाविश्य प्रजापते" (वि. ध. पु. 68-52)। "हरो हरति तद्वशः" इत्यादि श्रुतिस्मृतिभ्यः ब्रह्मरुद्रयोः परमपुरुषसृज्यत्व तद्विभूतित्व तदव[22]रत्व तत्प्रसादायत्त ज्ञानवत्त्व तच्छरीरत्वादि धर्माणां तदैक्यविरुद्धानां अवगतत्वात्। "ब्रह्मा नारायणः शिवश्च नारायणः" (त्रि. म. ना. उ. 2-8) इत्यादि सामानाधिकरण्यस्य च "सृष्टिं ततः करिष्यामि त्वामाविश्य प्रजापते" (वि. ध. पु. 68-52)। "हरो हरति तद्वश" इति प्रमाणान्तरानुगुण्ये नान्तरात्मतया आकृत्यधिकरणन्यायेन शरीरवाचिनां शरीरिपर्यन्तत्वेना प्युपपत्तेः। बहुप्रमाणावगत भेदस्य

निर्वाहासम्भवाच्च। नापि नारायणा दुत्तीर्णं तत्त्वान्तर मस्ति ? "विश्वमेवेदं पुरुष स्तद्विश्व मुपजीवति। पतिं विश्व स्यात्मेश्वरम्," (म. ना. उ. 11-1) "य मन्तः समुद्रे कवयो वयन्ति" (म. ना. उ. 1-3) "न तस्येशे कश्चन तस्य नाम महद्यशः" (म. ना. उ. 1-10)। "परात्परं य न्महतो महान्तम्" (महा. उ. 4-71) "न तत्सम श्चाभ्याधिक श्च दृश्यते," (श्वेता. उ. 6-8) "अग्नि रवमो देवतानां विष्णुः परमः" (तैत्ति. सं. 5-5-1)। "मत्तः परतरं नान्य त्किञ्चि दस्ति धनञ्जय" (भ. गी. 7-7)। "आभूतसंप्लवे प्राप्ते प्रलीने प्रकृतौ महान्" (भार. 2 App. 21-52 pr)। "एकस्तिष्ठति विश्वात्मा" (भार. 12 App. 17B-45 pr) "स तु नारायणः स्मृतः" (भार. 2 App. 21-53 post)। "न परः पुण्डरीकाक्षाद् दृश्यते पुरुषर्षभः।" "परं हि पुण्डरीकाक्षा न्न भूतो न भविष्यति"। "न विष्णोः परमो देवो विद्यते नृपसत्तम। न वासुदेवा त्परमस्ति दैवतम्।" "न वासुदेवं प्रणिपत्य सीदति"। "देशतः कालतो व्याप्ति र्मोक्षदत्वं तथैव च। हरे र्विभूतिमात्रं तु केवलं सम्प्रभाषितम्।" "न देवः[23] केशवात्परः[24]" (भार. 3 App. 13-17 post) "राजाधिराजः सर्वेषां (सर्वासां) विष्णु र्ब्रह्ममयो महान्" (भार. 14-43-12) "परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे" (विष्णु. पु. 6-5-85) इत्यादिभि र्बहुभिः प्रमाणै र्विष्णोः सर्वाधिकत्वप्रदर्शनपूर्वकं तदधिकदेवतान्तर निषेधात्। ब्रह्मविष्णुरुद्रेन्द्राः ते सर्वे सम्प्रसूयन्त इत्यत्र तु विष्णो रुत्पत्ति रवताररूपा स्वसङ्कल्पमूला उच्यते; न तु ब्रह्मरुद्रादीना मिव कर्ममूला। कारणवाक्ये ष्वेकस्यैव कृत्स्न जगत्कारणत्वावगमात् त्रयाणां समुच्चित्य कारणत्वानुपपत्तेः कारणत्वोपास्यत्व बोधकवाक्य गतानां शिवशम्भ्वादि सामान्यशब्दानां छागपशुन्यायेन विशेषवाचि नारायणशब्दार्थ पर्यवसानोपपत्तेः अचितः सर्वकारणत्वानुपपत्तेरीक्षणार्थ[25]विरोधाच्च रुद्रादीनां अनपहतपाप्मा वा अह मस्मी त्यादिना कार्यत्वकर्मवश्यत्वादि श्रवणात् वासुदेवादि पदवाच्यस्य कुत्रापि कर्मवश्यत्वाद्यश्रवणात् तदुत्पत्तेश्च "अजायमानो बहुधा विजायते" (तैत्ति. आ. 3-13) इत्यवताररूपत्वश्रवणात् अजायमान इति कर्मायत्तोत्पत्ति निषेधाच्च कर्मकृतत्वस्यापोदितत्वाच्च, इतरोत्पत्तेः तथा अपवादकाभावाच्च। ततो य दुत्तरतरं इत्यनेन कि मुच्यते इति चे दुच्यते — त्रिमूर्तिमध्ये रक्षकत्वे नावतीर्णस्य नारायणस्य "अस्येशाना जगतो विष्णुपत्नी" (तैत्ति. सं. 4-4-12) इत्यादिना अवगतस्य "अद्भ्यः सम्भूतः" (तैत्ति. आ. 3-13) इत्यत्र पूर्वानुवाकोक्तं महापुरुषत्वं "वेदाहमेतं" (तैत्ति. आ. 3-12) इत्यनेनैव वाक्येन प्रत्यभिज्ञाप्य तस्य श्रियःपतित्व महापुरुषत्वादिश्रवणात् तमेव सर्वोत्तरं महापुरुषं "यस्मात् परं ना परमस्ति किञ्चित्। यस्मा न्नाणीयो न ज्यायोऽस्ति कश्चित् वृक्ष इव स्तब्धो दिवि तिष्ठ त्येकस्ते नेदं पूर्णं पुरुषेण सर्वम्" (म. ना. उ. 10-4; श्वेता. उ. 3-9) इति प्रत्यभिज्ञाप्य, उपरिच "सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः सर्वव्यापी च भगवान्" (श्वेता. उ. 3-11) इति सहस्रशीर्षत्वादिधर्मान् प्रत्यभिज्ञाप्य तयोः वाक्ययोः मध्ये प्रयुक्तस्य ततो य दुत्तर[26] मिति वाक्यस्य सन्दंशन्यायेन नारायणपरत्वस्य आवश्यकत्वात् तत इत्यस्य शब्दतोऽर्थतश्च प्रत्यभिज्ञापित तद्धेतुपरामर्शत्वस्यैव न्याय्यत्वात् अन्यथा यस्मात्पुरुषा दपरं व्यतिरिक्तं परं उत्कृष्टं नास्तीति पूर्ववाक्ये नोक्तं पुरुषमेव परामृश्य तद्व्यतिरिक्तस्य उत्त्वप्रतिपादने पूर्वापरव्याघातप्रसङ्गाच्च। तत उक्तहेतुभ्यः यत्पुरुषशब्दवाच्यं तत्त्वं तदेवोत्तरं तत्त्व मिति "अमृतस्यैष सेतु"रिति अनेनापि विष्णोः न तत्त्वान्तरप्रापकत्वं उच्यते; अपि तु स्वप्राप्तौ स्वयमेव हेतु रिति दिक्॥ २३॥

ननु प्रकृतिर्गुणत्वे[27] समानेऽपि कथं[28] मोक्षहेतुः, कथमितरौ गुणौ तदहेतू, सर्वमपि मोक्षहेतुर्न वा स्यादिति शङ्कायां दृष्टान्तेन गुणानां **वैषम्य**मुपपादयति — **पार्थिवा**दिति। दारुण इति पञ्चमी पार्थिवात् पृथिवीपरिणामरूपाद्दारुणः काष्ठात्तावद्धूमः उत्पद्यते तस्माद्धूमादनन्तरं इत्यध्याह्रियते। धूमोद्गमेः पूर्वमुत्पद्यते तस्माद्धूमादनन्तरमग्निरुत्पद्यते स च त्रयीमयः। यथा पार्थिवदारूत्पन्नत्वाविशेषे[29]ऽपि धूमो न प्रकाशकः न च स्वर्गाद्यौपयिकः[30] अग्निस्तु[31] प्रकाशकः त्रयीप्रतिपाद्यतारूपेण[32] स्वर्गप्रदश्चेति तयोर्दृष्टकार्य[33]वैषम्यसिद्धिः, एवं सुषुप्तस्य पुरुषस्य तमोगुणानन्तरं[34] मनसः अनाविलत्वहेतुर्यत्सत्त्वं तदेव ब्रह्मदर्शनसाधनमिति कार्यवैचित्र्योपपत्तिरित्यर्थः ॥ २४ ॥

---

1. A,B °दि° 2. W adds एव 3. B,W °स्तु 4 B,W अन्तव° 5. W adds तु 6 W परस्य चे° 7. W सो° 8. B,W °बहुत्व° 9. W °कत्वरूपं विवक्षितम् 10. W adds तद्भजनादेव 11 W omits एव 12 W एष्टव्यम् 13. A °ह्य 14 W °करणीं 15. W स संज्ञां 16. W याति 17. W omits न 18. W adds ते 19. W °त् 20. W °ते 21. W °ग° 22. W °म° 23. W दैवं 24. W °त्परं 25. B,W °णाद्यर्थ° 26. B,W °त्तरतर° 27. A गुणत्वेन 28. B,W add सत्त्वं 29 A,B विशेषोऽपि 30. W स्वर्गसिद्धयौ° 31. B °स्तत्प्रति° 32. W °पाद्यत्रेता° 33. B,W °दृष्टादृष्ट° 34. W °दनन्तरं प्रवर्तकं रजः तदनन्तरं

**विज॰** अपरोक्षज्ञानफलमाह — **भिद्यत** इति। आत्मनि हृत्कमलकर्णिकामध्ये स्वबिम्बे सर्वेश्वरे दृष्टे **एव**, तस्मिन् क्षण **एव** हृदयग्रन्थ्याख्यलिङ्गं मनो भिद्यते। तस्मिन् भिन्ने सति ईश्वरादितत्त्वविषयाः सर्वसंशयाः **छिद्यन्ते**। तेषु छिन्नेषु सत्सु पूर्वकृतपापकर्माणि क्षीयन्ते, उत्तराणि न श्लिष्यन्त इत्येकान्वयः। संसारच्छेदनमेवापरोक्षज्ञानफलं इति भावः। आत्मनि जीवे ईश्वरे ब्रह्मणि[1] जीवे दृष्टे चेति परस्परभेदनिरासे नाहमेव ब्रह्मेत्येवं दृष्टे व्यतिहारन्यायेन हृदयग्रन्थिः अहङ्कारो भिद्यत इति केचित्। तदयुक्तम् — श्रुतिस्मृतिविरोधात्। "सत्यमात्मा सत्यो जीवः", **"द्वासुपर्णौ"** (श्वेता. उ. 4-6, मुण्ड. उ. 3-1) इत्यात्मनि भिदाबोधः भेदसृष्ट्यभिमानेनेति भागवतज्ञानात् अद्वैतज्ञाननिषेधाच्च ॥ २१ ॥

निगमयति — अत इति। अतो निश्शेषदुःखनिवृत्त्यलम्बुद्धिगोचरसुखानुभवलक्षणमोक्षाख्यपुरुषार्थलाभाद्धि कवयः परमया मुदा आत्मप्रसादनी भक्तिं वासुदेवे भगवति कुर्वन्ती त्येकान्वयः। आत्मप्रसादनीं मनसो नैर्मल्यापादनीं विष्णुप्रसादजननीं वा, मुक्तामुक्ताश्चेत्युभयेऽपि हरौ भक्तिं कुर्वन्तीत्येतस्मिन्नर्थे वैशब्दः ॥ २२ ॥

उक्तश्रवणभक्त्यादिलभ्यमुक्तौ कोऽधिकारीत्याशङ्क्य, सात्त्विकप्रकृतिरेव तत्राधिकारीति वक्तुं सत्त्वादिगुणांस्तदाश्रयांश्च आह — **सत्त्व**मिति। सत्त्वं रजस्तम इत्येते त्रयो गुणाः जडप्रकृतेः, स्वरूपभूता श्चित्प्रकृत्यभिमताः हरेर्जगदुत्पत्तौ उपादानभूताः। तैर्गुणैः स्वयं अगुणः सन्नपि तत्प्रवर्तकतया युक्तः परः पुरुषोऽस्य जगतः स्थित्यादये पालनसृष्टिसंहारान् कर्तुं हरिविरिञ्चिहरेति संज्ञाः नामानि[2] एव धत्ते। विष्णुर्ब्रह्मा शिव इति संज्ञावत्त्वेनावतरति। तत्र सत्त्वगुणसम्बन्धविधुरोऽपि सत्त्वगुणप्रवर्तनेन जगत् पालयन् विष्णुसंज्ञो हरिरनन्याधिष्ठिततया पृथगेव स्थितः। चतुर्मुखस्थो ब्रह्माख्यो विष्णुः स्वयमरजा अपि रजोगुणमुपादानीकृत्य जगत्सृजन्नास्ते। शिवाख्यो विष्णुः स्वयं अतमा अपि तमोगुणप्रवर्तकतया जगत्संहरन् शिवे तिष्ठति। तत्सन्निधानविशेषादेव कमलासनवृषासनयोर्ब्रह्मशिवसंज्ञा।

तस्मा द्धरे रेव त्रिसंज्ञाः, न तु लोकप्रसिद्ध हरि ब्रह्म शिव भेदनिरासेन संज्ञाः। तथात्वे, "ब्रह्मविष्णवीशरूपाणि त्रीणि विष्णो र्महात्मनः। ब्रह्मणि ब्रह्मरूप स्स" त्रित्यादि वामनपुराणविरोधात्। एवं त्रयोऽपि गुणाः विष्ण्वाश्रयाः तथाऽपि सात्त्विक राजस तामस शरीरिणां नृणां मध्ये सत्त्वतनौ सात्त्विकशरीरिणि देवप्रकृतौ जीवराशावेव श्रवणभक्त्यादिश्रेयांसि स्यु र्न राजसतामस शरीरिषु मिश्रमनुष्येषु असुरेषु च इत्येकान्वयः। सत्त्वतनोः विष्णोः केवलं भवतीति दर्शयितुं मूर्तित्रयस्वरूपं आह — सत्त्व मिति। सत्त्वादयः प्रकृते र्गुणाः तै र्युक्त एकः परः पुरुषः हर्यादित्रिसंज्ञा धत्ते। किमर्थम्? जगतः स्थितिसृष्टिभङ्गार्थम्। तत्र तेषां त्रयाणां मध्ये सत्त्वगुणः तनुः शरीरं यस्य सः सत्त्वतनुः; तस्मा द्विष्णोः श्रेयांसि स्यु रिति वाणी न युक्ता। "केवलो निर्गुणश्च" (श्वेता. उ. 6-11) इति श्रुतिव्याकोपात्; न चास्याः सर्वगुणराहित्य मर्थः। "सत्यं[3] ज्ञान मनन्तं ब्रह्म" (तैत्ति. उ. 2-1-1) "गुणाः सर्वेऽपि वेत्तव्या ध्यातव्याश्च न संशयः," "आनन्दादयः प्रधानस्य" (ब्र. सू. 3-3-11) इति [4]स्मृतिसूत्रैः ज्ञानादिगुणगणविधानात् अत्रापि "साक्षी चेता केवलः[5]" (श्वेता. उ. 6-11) इत्यादि साक्षित्वादिगुण प्रतीतेश्च। तस्मात् सत्त्वादिगुण राहित्यमे वास्या अर्थ इति सन्तोष्टव्यम्। किञ्च, हरिविरिञ्चिहरा इत्युक्तिं विहाय हरेत्युक्तेः प्रमाणसिद्धः कश्चि दर्थविशेषो ऽस्तीति विज्ञायते। स च सकलसुरवरपुरटमुकुट पटलकोटि तटपरिघट्टित चरणकमल परागैः श्रीमद्बादरायणान्तेवासि प्रवरैः श्रीमदानन्दतीर्थ भगवत्पादाचार्यैः दर्शित इति नोऽस्माभिः अत्र प्रयाततव्यम्॥ २३॥

ननु त्रयाणां गुणानां प्रा[6]कृतत्वा दविशेषेण कथं सत्त्वस्यैव श्रेयःप्रा[7]प्ति हेतुत्वमि त्याशङ्क्य, सात्त्विकानामे वोत्तमत्वेन ब्रह्मविद्याधिकारित्व प्रतिपादनाय गुणत्रितये सत्त्वगुण स्योत्तमत्वं सोदाहरण माह — **पार्थिवादिति**। अत्रोत्तमपदं अध्याहृत्य, व्याख्येयम्। पार्थिवात् पृथिवीकार्यात् दारुणो वृक्षात् पार्थिवो धूम उत्तमः, लोकोपकारक मेघरूपत्वात्। तस्मात् धूमात् पार्थिवोऽग्निः उत्तमः। कीदृशः? त्रय्यां प्रतिपाद्यत इति त्रयीमयः, सकलपदार्थ प्रकाशकः। अत्र यथा वृक्षधूमाग्नीनां पार्थिवत्वाऽविशेषेऽपि अग्निः आधानेन संस्कृतो विशिष्ट पुरुषार्थसिद्धये याज्ञिकैः उत्तमत्वेन पूज्यते, तथा प्राकृता त्तमस स्तमोगुणा द्रजोगुण उत्तमः। तस्मा त्सत्त्वं, परब्रह्मादि सकलदेवता तत्त्वप्रकाशकः सत्त्वगुण उत्तमः। य द्यस्मा त्सत्त्वगुणात् ब्रह्मदर्शनं ब्रह्मज्ञानं भवतीति शेषः। यत्सत्त्वं ब्रह्म दर्शय त्यपरोक्षयतीति तस्मा त्सात्त्विका एव ब्रह्मज्ञानाधिकारिण इति सिद्धम्। अनेन चेतनानां अपवर्गनरक तमःप्राप्ति योग्यानां त्रैविध्यं सूचितम्॥ २४॥

---

1 M adds **दृष्टे ब्रह्मणि** 2 B,M add **एकः** 3 M **°त्वं** 4. M adds **श्रुति°** 5. A,B **°लं** 6. A,B **प्र°** 7. M **°प्रति°**

**रा० कृ०** आत्मनि परमात्मनि ईश्वरे दृष्टे एव दृष्टमात्रे अस्य द्रष्टुः हृदयग्रन्थिः अहङ्काररूपः भिद्यते। सर्वसंशयाः छिद्यन्ते; कर्माणि च क्षीयन्ते॥ २१॥

अतः कवयो विद्वांसः परमया मुदा भगवति वासुदेवे आत्मप्रसादनीं भक्तिं नित्यं कुर्वन्ति॥ २२॥

सत्त्वं रजः तम इति त्रयः प्रकृते र्गुणाः। तै र्युक्तः एकः परः पुरुषः परमपुरुषो भगवान् अस्य विश्वस्य स्थित्यादये स्थिति सर्ग प्रलयार्थं हरि विरिञ्चि हरेतिसंज्ञाः विष्णु ब्रह्म रुद्रनामानि धत्ते। तत्र तेषां मध्ये सत्त्वतनोः वासुदेवात् नृणां नराणां यशांसि स्युः खलु भवेयुः खलु॥ २३॥

पार्थिवात् पृथिवीपरिणाम रूपात् दारुणः काष्ठात् धूमः, श्रेष्ठः इत्यध्याहार्यः। तस्मा द्धूमात् त्रयीमयः अग्निः श्रेष्ठतरः। एवं लयात्मकात् तमसो रजः विक्षेपात्मकं विशिष्टम्, तस्मात् ब्रह्मदर्शनं ब्रह्मप्रकाशकं यत्सत्त्वं तत् विशिष्टतरम्। अनेन दृष्टान्तेन वासुदेवस्य सर्वोत्तमत्वं उक्तं भवति॥ २४॥

**भेजिरे मुनयोऽ थाग्रे भगवन्त मधोक्षजम् ।**
**सत्त्वं विशुद्धं क्षेमाय कल्पन्ते[1] येऽनु ता निह ॥ २५॥**

**मुमुक्षवो घोररूपान् हित्वा भूतपती[2] नथ ।**
**नारायणकला[3]ः शान्ता[4] भजन्ति[5] ह्यनसूयवः ॥२६॥**

**रजस्तमःप्रकृतयः समशीला[6] भजन्ति वै ।**
**पितृभूत प्रजेशादीन् श्रियैश्वर्य प्रजेप्सवः ॥ २७॥**

**वासुदेवपरा वेदा वासुदेवपरा मखाः ।**
**वासुदेवपरा योगा वासुदेवपराः क्रियाः ॥ २८॥**

**वासुदेवपरं ज्ञानं वासुदेवपरं तपः ।**
**वासुदेवपरो धर्मो वासुदेवपरा गतिः ॥ २९॥**

---

1 M कल्पते नेतराविह 2 V °तींस्तथा 3 AF GF °कलां 4 AF,GF शान्तां 5 H,V भजन्ते 6. M,W °लान्

**श्रीध॰** वासुदेवभक्तौ पूर्वाचारं प्रमाणयति — **भेजिर** इति। अथातो हेतोः अग्रे पुरा विशुद्धं सत्त्वं सत्त्वमूर्तिं भगवन्तं अधोक्षजम्[1]। अतो येताननुवर्तन्ते त इह संसारे क्षेमाय कल्पन्ते॥ २५॥

नन्वन्यानपि केचि द्भजन्तो दृश्यन्ते। सत्यम्। मुमुक्षव स्त्वन्यान्[2] न भजन्ति[3], किन्तु सकामा एवेत्याह — **मुमुक्षव** इति द्वाभ्याम्। भूतपतीनिति पितृप्रजेशादीनां उपलक्षणम्। अनसूयवो देवतान्तरानिन्दकाः सन्तः॥ २६॥

**रज** इति। राजस्तमसी प्रकृतिः स्वभावः येषां ते। अत एव पितृभूतादिभिः समं शीलं येषाम्[4]। श्रिया सहैश्वर्यं प्रजा श्चेप्सन्तीति तथा ते॥ २७॥

[5]मोक्षप्रदत्वा द्वासुदेवो भजनीय इत्युक्तम्। सर्वशास्त्र तात्पर्यगोचरत्वा दपीत्याह द्वाभ्याम् — **वासुदेवेति।** वासुदेव एव पर स्तात्पर्यगोचरो येषां ते। ननु वेदा मखपरा दृश्यन्ते इत्याशङ्क्य तेऽपि तदाराधनार्थत्वात् तत्परा एवेत्युक्तं — **मखा** इति। योगा योगशास्त्राणि। तेषामपि आसन प्राणायामादि क्रियापरत्वं आशङ्क्य तासामपि तत्प्राप्त्युपायत्वा त्तत्परत्वं उक्तम्॥ २८॥

**वासुदेवेति** । ज्ञानं ज्ञानशास्त्रम् । ननु च तं[6]त् ज्ञानपरमेवे त्याशङ्क्य ज्ञानस्यापि तत्परत्वं उक्तम् । तपोऽत्र ज्ञानम् । धर्मो धर्मशास्त्रं दानव्रतादि विषयम् । ननु त त्स्व[7]र्गपर मित्याशङ्क्य, गम्यत इति गतिः स्वर्गादिफलं साऽपि तदानन्दांशरूपत्वा त्तत्परैवे त्युक्तम् । यद्वा वेदा इत्यनेनैव तन्मूलत्वात्सर्वाण्यपि वासुदेवपराणी त्युक्तम् । तत्र ननु तेषां मखयोगक्रियादि नानार्थपरत्वात् न तदेकपरत्वमि त्याशङ्क्य मखादीनामपि तत्परत्व मित्युक्त मिति द्रष्टव्यम् ॥ २९ ॥

---

1. H,V add अधः अधःकृतं अक्षजं ज्ञानं यस्मा त्तमधोक्षजम् । 2. H,V add राजसतामसान् 3. H,V °न्ते 4 B,H,V add ते 5. B,H,V add अतो 6. V तदपि 7. H,V °र्गादिफल°

**वीर**° यतः सत्त्वस्यैव ब्रह्म[1]दर्शनत्वं तं[2]तश्च सत्त्वप्रवर्तका द्विष्णोरेव नृणां श्रेयांसि । अत एव सत्त्वतनुं विष्णुमेव मुनयोऽभज न्नित्याह — **भेजिर** इति । अथ तस्मा दग्रे पूर्वकाले मुनयः विशुद्धं रजस्तमोभ्या मननुविद्धं सत्त्वं सत्त्वशरीरकं तत्प्रवर्तकं भगवन्तम् अधोक्षजं भेजिरे उपासांचक्रिरे । एव मिह तान्मुनी ननुसृत्य[3] सत्त्वतनुं भगवन्तं ये जना उपासते इत्यर्थः । ते क्षेमाय कल्पन्ते श्रेयोयुक्ता भवन्तीत्यर्थः । रजस्तमःप्रधानौ ब्रह्मरुद्रौ भजन्त स्तु न क्षेमाय कल्पन्ते, अपि त्वन्तवत्फलभाजो भवन्तीति भावः ॥ २५ ॥

ननु केचित् ब्रह्मरुद्राद्युपासका अपि दृश्यन्ते, सर्वेऽपि विष्णुमेव किं न भजन्त इति शङ्कायां, उपासकानां स्वस्वगुणानुसारे णो[4]पास्यदेवता विषयकोपासनायां रुचिः जायत इत्याह — **मुमुक्षव** इति द्वाभ्याम् । मुमुक्षवः सत्त्वगुणप्रधानाः अनसूयवः । घोररूपान् भूतपतीन् रुद्रादीं स्तमःप्रधानान् हित्वा शान्ताः शुद्धसत्त्वप्रवर्[5]तका नारायणस्य कला अवतारान् भजन्ति । अनसूयव इत्यनेन विष्णुभक्तानां देवतान्तरेषु तदुपासकेषु चासूयाराहित्यं देवतान्तरभक्तानां तु विष्णौ तत्परेषु चासूयावत्त्वं चास्तीति सूचितम् ॥ २६ ॥

रजस्तम स्स्वभावा स्तु जनाः समशीलान् रजस्तमस्स्वभावान् पितॄं[6]भूतेशान् रुद्रादीन् प्रजेशान् हिरण्यगर्भादीन् आदिशब्देन सङ्कीर्णदेवताः सरस्वतीप्रभृतीश्च "प्रेतान् भूतपतीं (गणां) श्चान्ये यजन्ते तामसा जनाः" (भ. गी. 17-4) इत्युक्तान् भजन्ति । कथम्भूताः ? श्रीम[7] च्चैश्वर्य माधिपत्यं च प्रजाः पुत्रादयश्च ; ता ईप्सन्ति आप्तु मिच्छन्तीति तथाभूताः । अनेन विष्णुभक्तानां अनन्यप्रयोज[8]नत्व मनन्तस्थिर फलप्राप्तिः, अन्येषां तु अन्तवत्फलप्राप्ति श्चेति सूचितम् ॥ २७ ॥

अथ "सर्वे वेदा यत्पद मामनन्ति । तपांसि सर्वाणि च यद् वदन्ति" (कठ. उ. 2-1-5) । "इष्टापूर्तं[9] बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः, तदेवाग्नि स्तुद्वायु स्तत्सूर्य स्तदु चन्द्रमाः" (म. ना. उ. 1-6-7) "**वेदैश्च सर्वै रहमेव वेद्यः**" (भ. गी. 15-15) "यो यो यां यां तनुं भक्तः" (भ. गी. 7-21) इ[10]त्युक्तरीत्या भागद्वयात्मक वेदवेद्यः चतुर्मुखरुद्रादि शरीरकः तदन्तर्यामितया ऽन्तवच्छ्रियैश्वर्यादि फलदश्च वासुदेव एवे त्यभिप्राये णाह — **वासुदेवपरा** इति द्वाभ्याम् । वेदाः पूर्वोत्तरभागद्वयात्मका वेदाः वासुदेवपराः वासुदेवः परः तात्पर्यभूमि र्येषां तथाभूताः । ननु अग्न्यादिदेवतोद्देश्क यागदानहोमादि कर्मप्रतिपादक पू[11]र्वभागस्य कथं वासुदेवपरत्व मित्यत आह —

वासुदेवपरा मखा इति। मखा अग्न्यादिदेवता पूजात्मका यागादयो वासुदेवपराः **वासुदेवः परः**[12] **प्रधानतया आराध्यं**[13] एषां तथाभूताः अग्न्यादि शरीरकतया तद्रूपो वासुदेव एव मखै राराध्य इत्यर्थः। केवलं **अग्न्यादिदेवता पूज्य**[14]**-** मात्रत्वाभिमानेन ये मखा ननुतिष्ठन्ति तेषामपि तत्समीहितं फलं तै रविज्ञातोऽपि **वासुदेवोऽग्न्याद्यन्तर्यामितयाऽऽराधितः** प्रयच्छतीति भावः। एव माराधितोऽन्तवत् फलं प्रयच्छतीति भावः। तथा **चोक्तम् — "अहं हि सर्वयज्ञानां भोक्ता च** प्रभु रेव च। न तु मा मभिजानन्ति तत्त्वे नात श्च्यवन्ति ते" (भ. गी. 9-24) इति। एवं तुल्यन्यायतया वेदान्तेषु क्वचित् क्वचित् कालाग्निरुद्रोपनिष त्प्रतर्दनविद्यादिषु रुद्रेन्द्राद्युपासनात्मका योगा अपि रुद्रादिशरीरक वासुदेवविषया इत्याह — **वासुदेवपरा योगा** इति। **वासुदेवः** परो विषयो येषां त इत्यर्थः। प्रायशो वेदान्तेषु विहिता योगा वासुदेवविषया एव श्रूयन्ते। क्वचि दापाततो रुद्रादि विषयत्वेन प्रतीयमाना अपि तत्तत्प्रकरणगतै र्लिङ्गैः **रुद्रादिष्व-** सम्भाव्यमानैः तच्छरीरक वासुदेवविषयत्वेनैव निश्चीयन्त इति भावः। एवं निखिल निगमवेद्यो वासुदेव एवे त्युक्तम्। अथ तत्पूर्वभागोपबृंहणात्मक तन्मूलक स्मृत्यादि प्रतिपाद्यः स्मार्त क्रियाराध्यश्च स एवेत्याह — **वासुदेवपराः क्रिया** इति। क्रियाः स्मार्त्यः श्रौतीनां तु मखा इ त्युक्तत्वात् पूर्ववदर्थः॥ २८॥

अथ वेदान्तार्थोपबृंहणार्थतया प्रवृत्त कपिलाद्यागमोक्त प्रकृतिपुरुषविषयक ज्ञानमपि प्रकृतिपुरुषशरीरक परमात्म-विषयक मेवेत्याह — **वासुदेवपरं** ज्ञान मिति। ज्ञानं प्रकृतिपुरुषविषयकं[15] वासुदेवविषयकं **विशेषणबुद्धिशब्दयो-र्विशेष्यपर्यन्तत्वा** दित्यर्थः। कपिलादिभिस्तु तथा न बुद्ध मिति भावः। तथा वेदान्तार्थोपबृंहणपरं **मन्वादिस्मृत्युक्त कृच्छ्र-**चान्द्रायणानशनादि तपश्च वासुदेवाराधनरूप मित्याह — वासुदेवपरं तप इति। किं बहुना। सर्वे वैदिकाः स्मार्तश्च धर्माः, तत्प्राप्या गतयश्च वासुदेवाधीना इत्याह — **वासुदेवपरो धर्मो वासुदेवपरा गति** रिति॥ २९॥

---

1 W °दर्शनसाधनत्वं 2 W य° 3 W adds ये तद्वत् 4 W °णैवो° 5 W °र्ति° 6 W °तॄन् 7 W श्रीः सम्पच्चै° 8. W **जनकत्व**° 9 W °र्तं 10 W इत्यादि श्रुतिस्मृत्युक्त° 11 W °वेदपूर्व° 12 W adds प्रधानः 13 W °ध्यो येषां 14 W °जा° 15 W adds वासुदेवपरं

**विज**° उक्तार्थे शिष्टाचारं दर्शयति — **भेजिर** इति। अथ तस्मात् सात्त्विकानां उत्तमाधिकारित्वात्[1] अग्रे पूर्वं मुनयो ज्ञानिनो ब्रह्मादयो ऽधोक्षजं भेजिरे। तस्मा दिह गुणेषु विशुद्धं सत्त्वं क्षेमाय मोक्षाय कल्पते; नेतरौ तमोरजोगुणौ मुक्तये न कल्पेते इत्येकान्वयः॥ २५॥

इदानीमपि सदाचारं दर्शयति — **मुमुक्षव** इति। ब्रह्मादि परमसात्त्विका वासुदेवं भेजिर इति **यस्मा दथ** तस्मा दसूयादि दोषरहिता दुस्तर संसारात् मुमुक्षवो वर्तमान भविष्य त्सात्त्विका अपि घोररूपान् राजसतामसान् भूतपतीन् रुद्रादीन् हित्वा शान्ताः परिपूर्ण सुखात्मिकाः वासुदेवकलाः भगवन्मूर्तीः सम्प्रति भजन्ति भजिष्यन्ति हि चेत्येकान्वयः॥ २६॥

इदानीं प्रसङ्गा त्तामसराजस सेव्यानाह — **रज** इति। श्रियैश्वर्य प्रजेप्सवो रजस्तमःप्रकृतयः पुरुषाः समशीलान् पितृभूत प्रजेशादीन् भजन्ती त्येकान्वयः। "निर्दोषं हि समं ब्रह्म" (भ. गी. 5-14) इति वचनात् समं ब्रह्म।

तच्छीलान् सेवकस्य य च्छीलं सेव्यस्यापि तच्छील मस्तीति वा समशीलान् । श्रीकामः प्रजेशान् ऐश्वर्यकामो भूतपतीन् प्रजाकामः पितॄन् श्रियञ्च ऐश्वर्यञ्च प्रजाञ्च प्राप्तु मिच्छन्तः श्रियैश्वर्यप्रजेप्सवः ॥ २७ ॥

सकलशास्त्र तात्पर्य पर्यालोचनया सकलैरवश्यं सेव्यः श्रीनारायण एवे त्यभिप्रेत्याह — **वासुदेवपरा** इति । अत्र वेदा वासुदेवपरा इत्यादि प्रतिपाद मन्वेतव्यम् । वासुदेवगुणोत्कर्ष प्रतिपादन तात्पर्यवन्तो मखाः, संसारमदं खनन्तीति नाशयन्तीति मखाः अग्निष्टोमादयो वासुदेवोद्देश्याः नान्योद्देश्याः । योगाः अष्टाङ्गाः वासुदेवविषयाः । श्रुतिस्मृतिविहित सन्ध्योपासनादिकाः क्रियाः ॥ २८ ॥

ज्ञानं औपनिषदम्, तपः कृच्छ्रचान्द्रायणादिकायक्लेशः । धर्मो दानादिः । गम्यत इति गतिः । फलं परलोकः । अनेन हरे रखिल ऋग्वेदादि शास्त्रमुख्य विषयत्वेन सर्वोत्तमत्व मुक्तम् ॥२९ ॥

1 M °र°

**रा० कृ०** अथ अतः अग्रे पुरा मुनयः विशुद्धं सत्त्वं सत्त्वस्वरूपं भगवन्तं अधोक्षजं वासुदेवं भेजिरे सिषेविरे । ये जनाः ता न्मुनीन् अनु अनुवर्तन्ते ; तेऽपि क्षेमाय कल्पन्ते ॥ २५ ॥

अथ अतः मुमुक्षवः अनसूयवो देवतान्तरानिन्दका स्सन्तः घोररूपान् भूतपतीन् भूतेशादीन् हित्वा त्यक्त्वा शान्ताः नारायणकलाः नारायणावतारान् भजन्ते । रजस्तमःप्रकृतयः रजस्तमस्स्वभावाः समशीलाः पितृभूतादिभि स्सह समशीलाः श्रिया सह ऐश्वर्यप्रजेप्सवः ऐश्वर्यं प्रजां प्राप्तु मिच्छन्तः पितृभूतप्रजेशादीन् भजन्ति ॥ २६, २७ ॥

वासुदेवपराः वेदाः । एवं मखाः योगाः क्रियाश्च वासुदेवपराः । वासुदेव परमेव ज्ञानं । तत्परमेव तपः । तत्परो धर्मः । तत्परैव च गतिः ॥ २८, २९ ॥

**स एवेदं ससर्जा ऽग्रे भगवा नात्ममायया ।**
**सदसद्रूपया चासौ गुणमय्या ऽगुणो विभुः ॥ ३० ॥**

**तया विलसितेष्वेषु गुणेषु गुणवानिव ।**
**अन्तः प्रविष्ट आभाति विज्ञानेन विजृम्भितः ॥ ३१ ॥**

**यथा ह्यवहितो वह्नि र्दारुष्वेकः स्वयोनिषु ।**
**नानेव भाति विश्वात्मा भूतेषु च तथा पुमान् ॥ ३२ ॥**

**असौ गुणमयै र्भावै र्भूतसूक्ष्मेन्द्रियात्मभिः ।**
**स्वनिर्मितेषु निर्विष्टो भुङ्क्ते भूतेषु तद्गुणान् ॥ ३३ ॥**

**भावय त्येव[2] सत्त्वेन लोकान् वै लोकभावनः ।**
**लीलावतारानुरतः[3] देवतिर्यङ्नरादिषु[4] ।। ३४ ।।**

इति श्रीमद्भागवते महापुराणे वैयासिक्यां अष्टादशसाहस्र्यां
श्री हयग्रीव ब्रह्मविद्यायां पारमहंस्यां संहितायां प्रथमस्कन्धे
नैमिषीयोपाख्याने द्वितीयोऽध्यायः ।। २ ।।

1 M व्य° 2 M.W °न्ने° 3 M °ग° 4 M तिर्यङ्नरसुरादिषु

**श्रीध॰** ननु जगत्सर्गतत्प्रवेश नियमनादि विलास[1]युक्ते वस्तुनि सर्वशास्त्र समन्वयो दृश्यते। कथं च वासुदेवपरत्वं सर्वस्य[2] ? तत्राह — **सएवेति** चतुर्भिः। एतैरेव श्लोकैस्तस्य कर्माण्युदाराणि ब्रूहीति प्रश्नस्योत्तर-मुक्तम्। सदसद्रूपया कार्यकारणात्मिकया अगुण श्चेत्यनुवयः। स्वतो निर्गुणोऽपि सन्नित्यर्थः ।। ३० ।।

भगवतो जगत्कारणत्व मुक्तं प्रवेश[3]नियमनलक्षणां लीलामाह — **तयेति**। विलसितेषूद्भूतेषु गुणे-ष्वाकाशादिषु अन्तः प्रविष्टः सन् गुणवा निव,[4] मदधीना एते[5] गुणा इत्यभिमानवा निव न तु वस्तुत स्तथा। यतो विज्ञानेन चिच्छक्त्या विजृम्भितो ऽत्यूर्जितः ।। ३१ ।।

बहुलीलारूपत्व[6] माह — **यथेति**। स्वयोनिषु स्वाभिव्यञ्जकेषु। अवहितो निहितः[7] विश्वात्मा पुमान् परमेश्वरः। भूतेषु प्राणिषु। अन्तर्यामिणोऽपि प्रतियोगि[8]नानात्वेन नानात्व मिवोच्यते, क्षेत्रज्ञरूपेण वा ।। ३२ ।।

भोगरूपां लीला माह — **असाविति**। असौ हरि र्भूतसूक्ष्माणि चेन्द्रियाणि चात्मा मनश्च तैः स्वयं निर्मितेषु भूतेषु चतुर्विधे ष्विति भोगे स्वातन्त्र्यं द्योत्यते। तद्गुणां स्तत्तदनुरूपा न्विषया निच्छया भुङ्क्ते भोजयतीति णिजर्थो[9] वा[10] ज्ञेयः। पालयतीति वा। तदा त्वात्मनेपद मार्षम्, (अष्टा. 1-3-66) "भुजोऽनवने" इति स्मरणात् ।। ३३ ।।

इदानीं सूत जानासीति प्रश्न स्योत्तर माह — **भावयतीति**। भावयति पालयति। एतत्तु सर्वावतारसाधारणं प्रयोजनम्। विशेषतः कृष्णावतारस्य कुन्तीस्तुतौ वक्ष्यते। लोकभावनो लोकभर्ता[11]। देवादिषु ये लीलावतारास्ते-ष्वनुरतोऽनुरक्तः ।। ३४ ।।

इति श्रीमद्भागवते प्रथमस्कन्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां द्वितीयोऽध्यायः ।। २ ।।

1. H,V °लीला° 2. H,V सर्वशास्त्रस्य 3. H,V अनुप्रवेश° 4. H adds आभाति 5. H एवेमे 6. B,H,V °रूपत्वलीला° 7. H वि° 8 V °नि° 9. H,V णिचो 10. H,V लोपो 11. H °क°

**वीर॰** कथं वेदादीनां वासुदेवपरत्व मित्याशङ्कायां "तदात्मानं स्वय मकुरुत" (तैत्ति. उ. 2-7) इत्युक्तरीत्या सूक्ष्मचिदचिद्विशिष्टं स्वात्मानं जगद्रूपेण परिणमय्य तत्तद्रूपेण वासुदेव स्यैवावस्थानात् वासुदेवात्मकं विना **वस्त्व-भावा** दित्याह — **स** इति द्वाभ्याम्। अग्रे सृष्टेः प्राक् स एव वासुदेव एव नामरूपविभागानर्ह **सूक्ष्म-चिदचि** च्छरीरकतया **अवस्थित** इत्यर्थः। एवकारेण तच्छब्द परामृष्ट [2] भगवद्वाचक वासुदेव शब्दावयवार्थेन चेदं लब्धम्। यद्वा इदं परिदृश्यमानं जग दग्रे सृष्टेः प्राक् स एव आसीदित्यध्याहारः। "स देव सौम्येद [3] मग्र आसीत्" (छान्दो. उ. 6-2-1) इति स्थानप्रमाणात्। एवं चेद मित्यनेन नामरूपविभागभिन्नं जग न्निर्दिश्य तस्य वासुदेवरूपे णाव-स्थानोक्त्या वियदादिवस्त्वन्तर व्यावर्तकैवकार प्रयोगेण च "प्रकृतिं पुरुषं चैव विद्ध्यनादी उभा वपि (भ. गी. 13-2) इति स्मृत्यनुरोधाच्च, अन्यथा न कर्माविभागा दिति चेन्न; अनादित्वात् इत्युक्तन्याये नाकृताभ्यागम कृतवि-प्रणाशादि दोषप्रसङ्गाच्च सूक्ष्मचिदचिद्वैशिष्ट्यं लब्धम्। सृष्टेः प्रागेव मवस्थितो भगवा नात्मनः स्वस्य मायया स्वशरीरभूतया [4] गुणमय्या सत्त्वादि गुणप्र[5]चुरतया सदसद्रूपया महदादि पृथिव्यन्तकार्यकारणरूपेण परिणममानया विभुः व्यापकः सदसद्रूपेऽप्य[6]न्तरात्मतयाऽनुप्रविष्ट इत्यर्थः। अ[7]थाऽगुणः व्याप्यतद्गु[8]णै रस्पृष्ट इदं जगत् ससर्ज ॥ ३० ॥

एवं समष्टिव्यष्ट्यवस्था चिदन्तर्यामितया तत्कारणतया च तद्रूपे णावस्थान मुक्तम्। अथोभयावस्थ प्रकृतिसं-सृष्ट जीवशरीरकतया तदन्तरात्मतया तद्रूपेण वासुदेवस्यै वावस्थिति माह — **तयेति**। तया आत्ममायया विलसितेषु रचितेषु एषु परिदृश्यमानेषु [9] गुणशब्दो लाक्षणिकः गुणकार्यभूत श[10]ब्दादिस्तम्ब[11]पर्यन्ते ष्वित्यर्थः। विज्ञानेन जीवेन "विज्ञानं यज्ञं तनुते" (तैत्ति. उ. 2-5) "य आत्मनि तिष्ठन्*" "यो विज्ञाने तिष्ठन्" (बृह. उ. 3-7-22) इति श्रुतिप्रयोगात्। तेन विजृम्भितः विशिष्टतच्छरीरक इत्यर्थः। "यस्य विज्ञानं शरीरं" (बृह. उ. 3-7-22) इति श्रुतेः। यद्वा विज्ञानरूपेण विजृम्भितः भा[12]ष्यमाणः तच्छरीरतया तदन्तरात्मतया च तद्रूपेण प्रकाशमानइत्यर्थः। अन्तः प्रविष्टः जीवद्वारा देवादिशरीरे-ष्वनुप्रविष्टः। गुणवानिव साक्षा द्देवादिशरीरतच्छरीरक जीवगतधर्मवा निवाभाति। इव शब्द स्याय मभिप्रायः। "काठिन्य-वान् यो बिभर्ति नृसिंहरूपी भगवा[13]न् श्वेत", इत्यत्र काठिन्यश्वै[14]त्यादिव च्छरीरभूतजीवे हेयसम्बन्धः। न तु शरीरिणि वासुदेवे इति। तथा तस्यैकस्यैव देवादिशरीर भेदे नानेकधाऽवस्थिति श्वेति ॥ ३१ ॥

एतदेव दृष्टान्तमुखे नोपपादयति — **यथेति**। अभिव्यक्तिस्थानमा[15]त्रं योनिशब्दे नोक्तं न तु[16] तदुपादानम्। न हि प्रकृति र्जीव स्योपादानं न वा वह्ने र्दारूपादानं, किन्तु निमित्तम्। "[17]अग्ने रापः अद्भ्यः पृथिवी" (तैत्ति. उ. 2-1) इति हि सृष्टिक्रमः। यथा दारुभ्यो वह्नि र्[18]वहितः व्यतिरिक्त [19]एवंवा सन् स्वयोनिषु स्वाभिव्यक्तिस्थलेषु दारुषु नाने वानेकधेव भाति ज्वलति। अग्नित्व स्यैकरूपत्वेऽपि, तार्णपार्ण शाखादिभेदवान् भाति। एवं प्रकृतिपरिणामरूप देहे ष्वभिव्यक्तो जीवो ज्ञानानन्दरूपत्वे नैकरूपोऽपि देवोऽहं मनुष्योऽह मिति देवादिभेदभिन्नो भातीत्यर्थः। पुंशब्दो जीववाची। तच्छरी-[20]परमात्मपर्यन्तः। पुमान् विश्वात्मा जीवशरीरकः सर्वेश्वर एक एव देवादिरूपेण नाना भातीत्यर्थः। दारुषु भूते ष्विति दृष्टान्त दार्ष्टान्तिकयो रधिष्ठेय बहुत्वोक्त्या यथा ह्रस्वत्व स्थूलत्व वक्रत्वादि भेदश्च दारुगत एव नाग्निगतः, तथा देवत्वाज्ञत्व दुःखित्वादि भेदोऽपि न विश्वात्मगतः, किन्तु देवादि शरीरदारुभेद स्तद्गत तच्छरीरक जीवगत इति सूचितम्।

वह्नि विश्वात्मे त्येकत्वनिर्देशे नाग्निव द्विश्वात्मनोऽपि सर्वत्रावस्थितस्य स्वरूपतः स्वभावतो वा नावस्थान्तरापत्ति रिति सूचितम् । इयां स्तु विशेषः । दारुष्वग्निः साक्षा दभिव्यक्तो नाना भाति, दार्ष्टान्तिके [21] जीवद्वारा देवादिरूपेण नाना भाति इति जीवविशिष्ट देवादिशरीराणा मेवाधिष्ठेयत्वात् ॥ ३२ ॥

यथा विश्वात्मनः स्वशरीरभूत प्रकृतिपुरुषद्वारा देवादिरूपेण नानाभान मेवं सुखदुःखादि भोक्तृत्वं, तन्निमित्तं कर्तृत्वञ्च, स्वशरीरभूत जीवद्वारैव ; स्वतस्तु तदुभयरहित इत्याह — **असाविति**। असौ विश्वात्मा गुणमयैः सत्त्वादिगुण परिणामरूपत्वेन तत्प्रचुरैः भूतसूक्ष्मादिरूपै भविः पदार्थै स्तत्र भूतानि पृथिव्यादीनि सूक्ष्माणि गन्धादीनि, इन्द्रियाणि श्रोत्रादीनि ज्ञानेन्द्रियाणि, वागादीनि कर्मेन्द्रियाणि, [22] पादादीनि च, आत्मा अन्तःकरणं, जीवो वा। एभिः स्वेनैव कर्त्रा निर्मितेषु भूतेषु देवादिषु निर्विष्टः जीवद्वारा ऽनुप्रविष्टः तद्गुणान् पृथिव्यादि भूतगुणान् गन्धादीन् विषयान् भुङ्क्ते । जीवद्वारा विषयान् भुङ्क्ते न तु स्वत इत्यर्थः। भोक्तृत्व समव्याप्तं कर्तृत्वम प्यत्र विवक्षितं, जीवद्वारा पुण्यापुण्यरूपाणि कर्माणि च करोतीत्यर्थः। अत्र विश्वात्मे [23] त्युच्यमानं भोक्तृत्वं कर्तृत्वं च प्रयोजक [24] कर्तृत्वं विवक्षितम् ॥ ३३ ॥

॥ यद्वा ॥ सत्त्व रजस्तम इति प्रकृते गुणाः स्यु रित्यादिना सर्वकारणात् परमपुरुषादेवोपास्यमानात् नृणां श्रेयांसि कारणत्वे [25] नोपास्यत्व मोक्षप्रदत्वादीनां "कारणं तु ध्येयः, (अथ. शिखा. उ. 3) "अमृत स्यैष सेतुः" (मुण्ड. उ. 2-2-5) इत्यादि प्रमाणै रेकनिष्ठत्वावगमात्, न तु ब्रह्मरुद्रादिभ्यः तेषां कर्मवश्यत्व [26] सुखदुःखादि भोक्तृत्वादि नोपासकतुल्यत्वा दिति सूचितम् । अथ तदुपपादनाय सर्वजीवानां परमपुरुषसृष्ट कर्मानुगुण करणकलेवरादि सम्बन्धं, तत्प्रयुक्तं कर्तृत्वं भोक्तृत्वमेषां कर्मवश्यत्व प्रयुक्तत्वे नौपाधिकत्वं, स्वभावतस्तु ज्ञानैकाकारत्वंचेत्याह — **सएवे** त्यादिभिश्चतुर्भिः । स एवेद मित्यस्य यथोक्त एवार्थः। **तयेति**। तया आत्ममायाया विलसितेषु रचितेषु एषु गुणेषु गुणकार्येषु ब्रह्मादिशरीरे ष्वन्तःप्रविष्टो जीव इति शेषः। पुमा नित्य स्योत्तरश्लोका दपकर्षो वा। विज्ञानेन स्वधर्मभूतज्ञानेन विजृम्भितः देह मात्मत्वे नाभिमन्वान इत्यर्थः। गुणवानिव देवत्वादि धर्मवानिवाभाति। देवोऽहं मनुष्योऽहं कृशोऽहं स्थूलोऽहं इ त्यभिमन्यत इत्यर्थः। इव शब्देन वस्तुतो देहविलक्षण स्तद्गतधर्मै रस्पृष्ट एवेति सूच्यते॥ क॥

तदेव दृष्टान्ते नोपपादयति — **यथेति**। यथैक एव वह्निः स्वयोनिषु स्वाभिव्यक्ति स्थानेषु तृणपर्णादिषु अभिव्यक्तो नानेव भाति, तार्णत्वपार्णत्वादि भेदेन भाति। इव शब्देन वस्तुतो वह्नित्वेन रूपे णैकरूप एव। एवं विश्वात्मा विश्वस्याचेतनजात स्यात्मा पुमान् जीवोऽपि भूतेषु देवादिशरीरेषु नानेव भाति देवोऽहं मनुष्योऽहं इत्यादिरूपेण नाना भाति। वस्तुतो ज्ञानैकाकारेण एकरूप एवेत्यर्थः। पुमा निति जात्यभिप्रायक एकत्वनिर्देशः "एको व्रीहिः सुसम्पन्नः सुपुष्टं कुरुते प्रजा" इत्यत्र व्रीहिशब्दवत्। एवं च जीवैकत्वभ्रमो न कार्यः। दृष्टान्तेऽपि वह्नित्वेन [28] ऐकेनापि [29] व्यक्तिभेदोऽभिप्रेतः। न चैव मेकैकस्य जीवस्य देवादिशरीरस्थस्य युगप न्नानाप्रतिभानाभाव इति वाच्यम्। एकैक एव जीवः क्रमेण देवमनुष्यादिशरीरा ण्युपाददानः देवोऽहं मनुष्योऽहं इत्याभाती त्येव मभिप्रायात्। न हि दृष्टान्तेऽपि तार्णस्य वह्नेः पार्णत्वेन भान मस्ति॥ ख॥

असौ जीवः गुणमयैः सत्त्वादिगुणत्रयात्मक भगवन्मायापरिणामरूपैः पृथिव्यादिभूत गन्धादितन्मात्रा[30] ज्ञानेन्द्रिय-य कर्मेन्द्रियान्तःकरणै र्भावैः पदार्थैः स्वनिर्मितेषु स्वकर्मानुसारेण निर्मितेषु भूतेषु देवादिशरीरेषु **निर्विष्टः गुणान्** शब्दादिविषयान् **भुङ्क्ते**। तन्निमित्तानि कर्माणि च पुण्यापुण्यरूपाणि करोतीति च विवक्षितं वेदितव्यम्। यद्वा **तया** विलसिते ष्वित्यादिभिः केवलं परमात्मैव प्रतिपाद्यते। तदा विज्ञानेने त्यस्य सङ्कल्परूपज्ञानेने त्यर्थः। पुमान् परम**पुरुषः** गुणान् भुङ्क्ते इत्यस्य लीलारसरूपान् गुणान् भुङ्क्ते इत्यर्थः॥ ग॥

तदेवं "पुंसा मेकान्ततः श्रेय स्त न्नः शंसितु मर्हसि" (भाग. 1-1-9) इत्य स्योत्तर मुक्तम्।[31] " सूत **जानासि** भद्रं ते" (भाग. 1-1-12) इत्यादिना श्रीकृष्णावतारं तच्चरित्रं तदितरावतार तच्चरित्रादिकं च पृष्टम्। तत्र श्रीकृष्णावतारं तच्चरित्रादिकं विशिष्य दशमैकादशस्कन्धाभ्यां सर्वावतारां स्तच्चरित्राणि च विशिष्य तत्र तत्र तृतीयादिषु विवक्षु स्ताव त्समासतः सर्वावतारसाधारणं प्रयोजन माह — **भावयन्निति**[32]। एष सर्वेश्वरो लोकस्रष्टृत्वेन **लोकान्** भावयन् कर्मवश्यां श्चेतनान् उज्जीवयितुं सत्त्वेनोपलक्षितः शुद्धसत्त्वमूर्तिः तिर्यङ्नरसुरादिषु लीलावतारे **ष्वनुरतो** भवति। भावयतीति पाठे लोकभावनो लोकस्रष्टा एव[33] सर्वेश्वरः तिर्यगादिषु मत्स्यादिषु मध्ये ये **लीलाया**[34] अवतारा स्तेष्वनुरतः। लीलावतारै र्भक्ते ष्वनुरतो वा सत्त्वेन लोकान् भावयति त्रायति। साधुपरित्राणाय मत्स्याद्यवतारं धत्त इत्यर्थः॥ ३४॥

इति श्रीमद्भागवते प्रथमस्कन्धे
श्रीवीरराघवविदुषा लिखितायां 'भागवतचन्द्रचन्द्रिकायां
व्याख्यायां द्वितीयोऽध्यायः॥ २॥

---

1. W अवासुदेवात्मकवस्त्व° 2. W °पूर्वप्रस्तुत° 3. W सो° 4 W adds मायया 5. W °प्रचुरया 6 W °ष्व° 7 W अथाप्य° 8 W °गत गुणैः° 9 W adds गुणेषु 10 W °ब्रह्मादि° 11 W °पर्यन्तशरीरेष्वि° 12. W भासमानः 13 A,B °वां श्चेत 14 A,B °श्चे° 15 W °मत्र 16 W तूपादानं 17 W adds वायोरग्निः 18 W adds एव अभिव्यक्त 19 W एवासन् 20 W °रक° 21 W adds तु 22 W omits 23 °तमन्यु° 24 W °कत्वरूपं 25 W °त्वोपा° 26 W adds °परमपुरुषसृज्यत्व° 27 A,B omit स एवेद मित्यस्य 28 B एकेऽपि; W एकत्वेऽपि 29 B adds न; W adds तद्° 30 W °त्र° 31 W adds अथ यत् 32 A,B °यतीति 33 W एष 34 W °ल°
* काण्वपाठसम्बन्धि विज्ञानपर्यायस्थाने माध्यन्दिनपाठे इदं वाक्यमुपलभ्यते

**विज॰** अत्र हेतुमाह — **स एवेति**। यः सर्ववेदान्तादि मुख्यविषयः परमसात्त्विक ब्रह्मादीष्टदेवता वासुदेवः सोऽसावेवागुणः सत्त्वादि गुणविधुरः मुख्यकारणं वा विभु र्व्याप्तः भगवा न्नारायणोऽग्रे सृष्टेः पूर्व मात्ममायया **स्वेच्छया** निमित्तकारणरूपया सदसद्रूपया व्यक्ताव्यक्तरूपया गुणमय्या सत्त्वादिगुणात्मिक जडप्रकृ त्योपादानकारणरूपया **चेदं** जगत्ससर्जेत्येकान्वयः। अतो विष्णुरेव सत्यजगत्स्रष्टृत्वा त्सर्वोत्तम इत्यर्थः॥ ३०॥

नियन्तृत्वमपि तदेकनिष्ठ मित्याह — **तयेति**। स हरिः तया सदसद्रूपया विलसितेषु भूतभौतिक-देहेन्द्रियाद्यात्मना परिणतेष्वेषु गुणेषु अन्तः प्रविष्टो गुणवान् जीव इवाभाति अज्ञाना मिति शेषः। कुतः? **विज्ञानेन**

विजृम्भितः विज्ञानपूर्णः। इदं हेतुगर्भं विशेषणं नानाकर्मविपाकिनां जीवानां विज्ञानाभावा दस्य परिपूर्णत्वात् तेन नियम्यत्वं तेषा मिति भावः ॥ ३१ ॥

न च स्थानभेदा दद्वयस्य हरे र्भेदाशङ्का कार्ये त्याह — **यथेति**। यथैको वह्निः स्वस्वयोनिषु स्वस्य व्यक्तिस्थानेषु दारुषु व्यवहितो भूताना मदृश्यतया स्थितो नानेव भाति, मथनादिनेति शेषः। दारूणा मानन्त्यात्। तथैको विश्वात्मा विश्वव्याप्तः पुमान् भूतेषु प्रविष्टो नानेव भाति। न तु नाना। "नेह नानाऽस्ति किञ्चन" (बृह. उ. 4-4-19) इति श्रुतेः। अग्नेः कश्चि द्विशेषसम्भवोऽपि, नास्य कश्चि द्विशेष इति इवशब्दार्थः ॥ ३२ ॥

न च दुर्भगशरीरेषु प्रविष्टस्य जीववद् दुःखभोगः सम्भाव्यत इत्याह — **असाविति**। असौ परमात्मा सत्वादिगुणमयैः सत्वादिगुणविकारैः भूतसूक्ष्मेन्द्रियात्मभिः पञ्चमहाभूत पञ्चतन्मात्रादशेन्द्रिय मनोऽभि र्भावैः तत्त्वैरुपादानरूपैः स्वनिर्मितेषु स्वेन तत्त्वेषु प्रविष्टेन विरचितेषु भूतेषु निर्विष्टः यौगैश्वर्या दसङ्गतया प्रविष्ट स्तद्गुणानानन्दादीनेव भुङ्क्ते न तु दोषनिमित्तदुःखादीन्। तस्मात् दुर्भगशरीरस्थत्वेऽपि न दुःखादिभोग स्तस्य स्वातन्त्र्या दित्यर्थः ॥ ३३ ॥

उत्तराध्याये अथाऽख्याहीति प्रश्नं परिहरिष्यन् तदर्थं सङ्क्षेपतो दर्शयति **भावयन्निति**। लोकभावनः जगदुत्पादकः सत्त्वेन गुणेन इतरगुणा नभिभूय लोकान् भावयन् पालनेन वर्धय न्नेष पर[3]पुरुष स्तिर्यङ्नरसुरादिषु तिर्यग्वराहादिजातिषु नरेषु मनुष्येषु देवेषु आदिशब्दात् स्तम्भादिषु लीलावतारानुगतो भवतीति, विशेषणान्वयः। लीलयै वावतारान् अनुगच्छति, न तु पूर्वकर्मणा। यो योऽवतारो जगदवनादा वनुकूलः स्या त्तं त मवतारं गृह्णाती त्यस्मि न्नर्थे ऽनुशब्दः ॥ ३४ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
प्रथमस्कन्धे द्वितीयोऽध्यायः ॥ २ ॥

---

1 KM वेऽपि 2 K च; M omits इव 3 K परम°

**रा॰ कृ॰** अग्रे सृष्टेः प्राक् **असौ** स एव भगवान् अगुणः स्वतो निर्गुणोऽपि विभुः सर्वव्यापकः सन् सदसद्रूपया कार्यकारणात्मिकया गुणमय्या **सत्त्वादिगुणरूपिण्या** आत्ममायया इदं जगत् ससर्ज। तया मायया विलसितेषु प्रभूतेषु एषु गुणेषु। गुणशब्देन **गुणिनो** लक्ष्यन्ते। तेन आकाशादिषु स वासुदेवः अन्तःप्रविष्टः विज्ञानेन विजृम्भितस्सन् गुणवानिव गुणाभिमानवानिव आभाति ॥ ३०, ३१ ॥

यथा एको वह्निः स्वयोनिषु स्वस्याभिव्यञ्जकेषु दारुषु अवहितः निहितः, तथा विश्वात्मा पुमान् परमेश्वरश्च भूतेषु अवहितः नानेव बहुरूप इवाभाति ॥ ३२ ॥

असौ वासुदेवः गुणमयैः भूतसूक्ष्मेन्द्रियात्मभिः **भावैस्स्व**निर्मितेषु भूतेषु निविष्टः जीवरूपेण अनुप्रविष्टः **तद्गुणान्** भूतगुणान् भुङ्क्ते भुनक्ति भोजयति च ॥ ३३ ॥

एष लोकभावनः लोकस्रष्टा वासुदेवः देवतिर्यङ् नरादिषु लीलावतारानुरतः सत्त्वेन लोकान् भावयति पालयति।

अत्र सूतसमाधानं भक्तिध्यानसाधनं त्रिमूर्तितत्त्वादि बोधनं विराजते। तथाहि — निरन्तर कृष्णकथानुसन्धानेन आत्मनि प्रसन्ने सिद्ध्यति भक्तियोगः, तेन विघ्नापगमः। मुमुक्षोः विघ्नकारणानि इन्द्रियप्रेरणया जायमाना श्चित्तवृत्तय एव। तन्निवारणप्रयत्नोऽपि चित्तवृत्तितया क्रोधोद्वेगनैराश्य श्रद्धाजाड्यादि विघ्नात्मना पर्यवस्यति। तस्मात्तन्निवारण प्रयत्न मपहाय मुमुक्षुणा कृष्णस्मरणं करणीयम्। तथा च तदार्द्रेण तिरोहितान्यवृत्तिना चित्तेन प्रत्यूहव्यूहो नानुभूयते; किन्तु तत्स्थानीयो भगवान् कृष्ण एव दृश्यते। एतादृश स्मरणाभ्यास बलेन विषयान्तरग्रह शैथिल्यं वैराग्यापरपर्यायं सिद्ध्यति। अपि च प्रापञ्चिक विषयवासनासङ्गपरित्यागप्रयत्नोऽपि व्यतिरेकेण तत्स्मरण पर्यवसायितया न वैराग्यापादकः। निरन्तर कृष्णस्मरणेन तु सर्वेषामेव विषयाणां कृष्णमयत्वापत्तेः विषयमात्र स्मरणानुपपत्ते रस्मिन् भागवतमार्गे वैराग्य मयत्नलभ्यं भवति। वैराग्य ञ्चास्मन्मते न शुष्कं रागराहित्यम्। परन्तु विश्वविस्तृत रागवत्त्वम्। तत्कथं भवति? विश्वस्मिन् भगवन्मयत्व भावनयैव। ईदृशवैराग्योदयेन सर्वस्मिन्नेव वस्तुनि अन्तर्यामितया कृष्णो दृश्यते। तत्सर्वान्तर्यामिसन्दर्शनमेव ज्ञानमिति कथ्यते। तदेतत्सर्वप्रयोजको भक्तियोगाख्यः धर्मः प्राणिनां परमो धर्मः।

धर्मो द्विविधः — व्यक्तिश्रेयोहेतुः, विश्वश्रेयोहेतु श्चेति। विश्वश्रेयस्साधन धर्मानाचरणे व्यक्तिश्रेयस्साधन धर्मनिर्वहणानुकूल दशा नोदेति। किञ्च, वैयक्तिकधर्माः फलाऽभिसन्धि दोषदूषिततया अधर्मपर्यवसायिनो भवन्ति। तत्प्राणिभिः प्रथमं विश्वश्रेयसे यज्ञार्थधर्म विशेषाः समाचरणीयाः तत्र वर्णाश्रमधर्म पालनं प्रधानम्। तेन प्रजाभि रनुभवविषयीक्रियते सर्वसन्तृप्तिकारिणी दशा, यया हि सर्वान्तर्यामी भगवान् प्रीयते। एतदेव वर्णाश्रम धर्माचरणस्य परमं प्रयोजनम्।

भगवदनुध्यानं अहंकारकारण कर्मविदारणं यदेव हि भगवदायुधं सुदर्शनतया सङ्केतितम्। तस्य च रजस्तमश्छेदेन भगवद्दर्शन साधनतया 'सुदर्शनायुधं' इत्यन्वर्था संज्ञा। तत्सुदर्शनप्रेरकः भावः भगवदायुधान्तर 'नन्दकखड्ग' त्वेन सङ्केतितः। नन्दयतीति नन्दकः इत्यन्वर्थं नाम, तस्य भगवद्दर्शनानन्द निदानत्वात्। सर्वान्तर्यामिभगवद्दर्शनानुकूल भावप्रभावेन प्राणिना महंकारग्रन्थिः विच्छिद्यते। चिज्जडग्रन्थि निबन्धनः अहंकारः, अहमिति संविद्रूपा चित्। मदीय मित्यभिप्राय लक्ष्यभूतं शरीरादिकं जडम्। चिज्जडग्रन्थिभेदे परब्रह्मतत्त्व मेकमे वावशिष्यते। यथा वा जलोपरि हिमशकले प्लवमाने वस्तुद्वयं हिमद्रुतौ तु जलमेक मेव दृश्यते। एव मपगतेऽहङ्कारे तिरोदधति स्वीयाः भावाः ये भवन्ति पूर्वाभ्यासनिष्पन्नाः; ते च पूर्वाभ्यासाः कर्मबन्धा इति तत्प्रभावाः वासना इति च कथ्यन्ते। मानवकर्माचरण मेतद्वासनापराधीनम्। वासनाक्षयश्च प्रागुक्त ध्यानसाधनेनैव।

एक एव देवः सृष्टि स्थिति लयार्थं गुणत्रय माश्रित्य ब्रह्म विष्णु शिवात्मकत्वेन त्रिधाऽऽविर्भवति। गुणत्रयात्मिका प्रकृतिः भगवच्छक्ति रेव। सा च स्थितिहेतौ विष्णौ बाह्यलक्ष्म सङ्केततया लक्ष्मीरिति वक्षसि वर्तते। वक्षःस्थलञ्च

**प्राणिनां** ममकारमय हृदयस्य सङ्केतः। ब्रह्मणि साऽऽविर्भावशक्तेः प्रतीकतया सरस्वतीनाम्ना वर्तते। सैव शिवे **लयसङ्केततया** शरीरार्धलीना सती गौरीति व्यवह्रियते।

तमोरजस्सत्त्वाना मस्ति यथोत्तरं वैशिष्ट्यम्। दारुधूमाग्नयः यथाक्रमं जडचेतनात्मनां सङ्केताः। उष्णतेजो ज्ञान-**दायकः** अग्निः वेदत्रयस्य सङ्केतः। प्राणिनां तु देहो दारु, प्राणो धूमः, जीवोऽग्निश्च। शुद्धवह्नेः प्रकाशकत्व मिव **शुद्धसत्त्वमयस्य** जीवस्यैव परमात्मत्वम्। अतए वाग्नाविष्णू परदेवतात्वेन वेदः स्तौति। वेदविदश्च एतद्विद्यां **प्रकाशरूपिणीं** ग्रहीतुकामाः समिद्धि रग्निं जुह्वति।

भगवान् वासुदेवः अधोक्षजः अधःकृतेन्द्रिय ज्ञानवान्। बुद्धेरपि परस्य तस्य ग्रहणे विषयवासनादूषितानि **इन्द्रियाण्यशक्ता** न्येव रजस्तमोऽभिभूताः जनाः सम्पदैश्वर्य सन्तानकाङ्क्षिणः पितृभूतप्रजेशादीन् सेवन्ते। पितरो नाम **पितृपितामहाद्याः**। तदाराधनञ्च तद्दत्तधनरक्षण वर्धनादि श्रद्धारूपम्। भूताश्च रजस्तमोदूषिते मनसि जायमानाः शक्तिमन्तो **भावाः** आग्रह जागरूकता कार्पण्यसंशयादयः। एतद्भावानुषङ्गेण भौतिकसुखाय उच्चावच दशाविहरणमेव भूताराधनम्। **सृष्टिसाधनावयवगत** शक्तीनां स्त्रीपुरुषसम्बन्ध कामादिभावानां च सङ्केताः प्रजापतयः। पुंस्त्ववर्धका हारौषधसेवन व्यायाम-**मन्त्र तन्त्राद्यभ्यास** एव प्रजापत्याराधनम्। सर्व एवैते जनाः तत्तद्दशा विशेषावस्थिताः तत्तद्रूपधारिण मीश्वर मेकमेवाश्रित्य **जीवन्ति**। अज्ञान विलसितमपि तेषां जीवनं साधनान्तर्गत मेव। "तेऽपि मामेव कौन्तेय। यजन्त्यविधि पूर्वकम्" (भ. गी. 9-23) इति गीतायां भगवतै वोक्तत्वात्। किन्तु, तेषां साधनमार्गः व्यत्यस्तः। मुमुक्षूणां साधकानान्तु **शुद्धसत्त्वस्वरूपिणो** वेदादि विश्वात्मकस्य नारायणस्य सेवनमेव समीचीनः पन्थाः। स भगवान् सूर्यमण्डलाधिपतिः सूर्यं रक्षति। भूम्यादि ग्रहान्तराण्यपि परस्पराकर्षणाधानाद्युपायै स्संरक्षति। नख दशन दंष्ट्रा शृङ्गादिभिः मृगान् रक्षति। माता पितृ सम्बन्धरूपेण सन्ततिं रक्षति। दुष्कर्मभिः त्रिगुणानां साम्यभङ्गेन प्रकोपे तेन प्रागुक्तरक्षणे च दुष्करे सः नानाविध लीलावतारधारी विश्वं रक्षति॥ ३४॥

इति श्रीमद्भागवते प्रथमस्कन्धे
श्री राधाकृष्णप्रणीतायां सुधीसुधायां व्याख्यायां
द्वितीयोऽध्यायः॥ २॥



# तृतीयोऽध्यायः

**सूत उवाच**

**जगृहे पौरुषं रूपं भगवान्महदादिभिः ।**
**सम्भूतं षोडशकलमादौ लोकसिसृक्षया ॥ १ ॥**

**यस्याम्भसि शयानस्य योगनिद्रां वितन्वतः ।**
**नाभिहृदाम्बुजादासीद्ब्रह्मा विश्वसृजां पतिः ॥ २ ॥**

**यस्यावयवसंस्थानैः कल्पितो लोकविस्तरः ।**
**तद्वै भगवतो रूपं विशुद्धं सत्त्व मूर्जितम् ॥ ३ ॥**

**पश्यन्त्यदो रूपमदभ्रचक्षुषा[1] सहस्रपादोरुभुजाननाद्भुतम् ।**
**सहस्रमूर्धश्रवणाक्षिनासिकं सहस्रमौल्यम्बरकुण्डलोल्लसत् ॥ ४ ॥**

---

1. H,M °षः

## श्रीधरस्वामिविरचिता भावार्थदीपिका

अवतारकथाप्रश्ने तृतीये तूत्तराभिधा ।
पुरुषाद्यवतारोक्त्या तत्तच्चारित्रवर्णनैः ॥

यदुक्तम् — "अथाख्याहि हरेर्धीमन्नवतारकथाश्शुभाः" (भाग. 1-1-18) इति, तदुत्तरत्वे[1] नावता[2]राननुक्रमिष्यन् प्रथमं पुरुषावतारमाह — **जगृह** इति पञ्चभिः। महदादिभिः महदहङ्कारपञ्चतन्मात्रैः सम्भूतं सुनिष्पन्नम्। एकादशेन्द्रियाणि पञ्च महाभूतानीति षोडशकलाः अंशाः यस्मिन्[3]। यद्यपि भगवद्विग्रहो नैवम्भूतः, तथाऽपि विराड्[4]जीवान्तर्यामिणो भगवतो विराड्रूपेणोपासनार्थमेवमुक्तमिति द्रष्टव्यम् ॥ १ ॥

कोऽसौ भगवानित्यपेक्षायां तं विशिनष्टि — **यस्येति**। यस्य अम्भसि एकार्णवे शयानस्य विश्रान्तस्य तत्रच योगः समाधिः तद्रूपां निद्रां विस्तारयतः। नाभिरेव ह्रदः तस्मिन् यदम्बुजं तस्मात् सकाशात् ब्रह्मा आसीत् अभूत्। पाद्मे कल्पे स पौरुषं रूपं जगृहे ॥ २ ॥

कीदृशं रूपम्[5]? तदाह — **यस्येति**। ननु कीदृशो विग्रहः तस्य, योऽम्भसि शेते स्म? तदाह। तत् तस्य भगवतो रूपं तु विशुद्धं रजआद्यसम्भिन्नम्, अत एव ऊर्जितम् निरतिशयं सत्त्वम् ॥ ३ ॥

एतच्च योगिनां प्रत्यक्षमित्याह — **पश्यन्तीति**। अदभ्रमनल्पं ज्ञानात्मकं **य** च्चक्षुः तेन। सहस्रमपरिमितानि यानि पादादीनि तैः अद्भुतम्। सहस्रं मूर्धादयो यस्मिन् तत्। सहस्रं यानि मौल्यादीनि तैरुल्लसत् शोभमानम् ॥ ४ ॥

---

1 H,V add °न ना° 2 H,V °तारकथामनु° 3 B,H,V add तत् 4 H,V °इदेहान्त° 5 B adds जगृहे

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

तदेवं प्रथमेऽध्याये प्रश्नः कृतः। द्वितीये तु सर्वप्रवर्तक[1]भगवद्भक्तेरेव मोक्षप्रदत्वात् भगवदीयप्रबन्ध एव श्रोतव्य इति स्थापितम्, अवतारप्रयोजनं चोपक्षिप्तम्। अथ भगवदवतार विशेषे[2] तच्चरितानि विस्तरेणोपरि विवक्षता सूतेन भगवतोऽनेकेऽवताराः सन्तीति प्रतिपाद्यते तृतीयाध्याये — **जगृहे** इत्यादिना। अवताराश्च द्विविधाः — अनुप्रवेशावताराः, स्वेन रूपेणावताराश्चेति। अकर्महेतुत्वाविशेषात् उभयत्रावतार शब्द प्रयोगः कृतः। द्विविधानपि तान् वक्तुं तदुपयोगित्वेन प्रथमं चेतनमिश्रं प्रकृतिप्राकृतजातमेकं शुद्धसत्त्वमयमपरं चेति रूपद्वयं भगवतोऽस्तीति विवक्षन् पूर्वं प्रकृतिप्राकृतात्मरूपपरिग्रहमाह — जगृह इति। पुरुषाः क्षेत्रज्ञाः[3] तत्सम्बन्धि पौरुषं तन्मिश्रमित्यर्थः। एकादशेन्द्रियपञ्चभूतात्मिकाः षोडश कलाः यस्मिन् तत् तथा। महदादिभिस्सम्भूतं रूपम् अण्डकारणं समष्टितत्त्वजातम् इह रूपशब्देन विवक्षितम्। समुदायस्य महदादिभिः[4] सम्पाद्यत्वात् महदादिभिः सम्भूतमित्युक्तम्। लोकसिसृक्षया जगृहे ब्रह्माण्डतदन्तर्वर्तिकार्यजातसिसृक्षया रूपं जगृहे इत्यर्थः ॥ १ ॥

अथ स्वासाधारणं रूपमाह — **यस्येति**। प्रथमस्य यस्य इति शब्दस्य योऽर्थः, स तद्वा इति तच्छब्देन परामृश्यते। द्वितीयं तु यस्येति पदं चतुर्मुखपरम्। चतुर्मुखशरीराद्धि देवमनुष्यादिसृष्टिः पुराणान्तरेषु दृष्टा। यस्यावयवसंस्थानैः यच्छरीरावयवपरिणामैः देवमनुष्यादिलोकविस्तरः। स ब्रह्मा विश्वसृजां मरीच्यादीनां पतिः। यस्याम्भसि शयानस्य योगनिद्रां वितन्वतः अनिरुद्धस्य नाभिह्रदाम्बुजादासीत्तद्भगवतो रूपमूर्जितम्, विशुद्धं **सत्त्वं शुद्धसत्त्वमयम्** इति, श्लोकद्वयमेकवाक्यम्[5]। तस्य रूपस्य ज्ञानदृश्यत्वमपरिच्छेद्यत्वं सर्वावतार निदानत्वं चाऽऽह — पश्यन्तीति सार्धश्लोकेन। यद्वा जगृह इत्यादिश्लोकानामेवमर्थः। अजडेषु अनुप्रवेशरूपेण स्वेन[6] रूपेण च द्विविधेऽवतारे तत्र प्रथमस्य देवादि ष्वनुप्रवेशरूपत्वात् तत्र वक्तव्यांशाभावात्[8] स्वेन रूपेण अवतारोपयोगिदिव्यमङ्गलविग्रहयोग उच्यते। आदौ महदादिभिः लोकसिसृक्षया षोडशकलं **भूतेन्द्रियाभिमानिदेवताश्रयं** पौरुषं परमपुरुषसम्बन्धि रूपम् अनिरुद्धाख्यरूपं सम्भूत माविर्भूतं जगृहे परिजग्राह। यस्याम्भसीति स्फुटम्। यस्यावयवेति यस्य अनिरुद्धस्यावयवसंस्थानैः शरीरभूत प्रकृत्येकदेशपरिणामैः लोकविस्तरः कल्पितः, तस्य भगवतो रूपं **शुद्धसत्त्वमयमूर्जितमुत्कृष्टमित्यर्थः** ॥ २, ३ ॥

**पश्यन्तीति**। अदः एतदनिरुद्धाख्यं रूपम् अदभ्रचक्षुषा अनल्पज्ञानेन मनसा पश्यन्ति। मनसा तु विशुद्धेन "दृश्यते त्वग्र्या बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः" (कठ. उ. 3-12) इत्याद्युक्तरीत्या योगपरिशुद्धमनसा

पश्यन्तीत्यर्थः। प्रत्येकं सहस्रसङ्ख्याकैः पादादिभिः अद्भुतं तथा प्रत्येकं सहस्रं मूर्धादयो यस्मिंस्तत्। तत्र **श्रवणे**[10] **श्रोत्रे**[11] **सहस्रेण मौलिभिः** किरीटैः **अम्बरैः वस्त्रैश्च कुण्डलैश्च**[12] उपशोभमानं रूपं भवतीति ॥ ४ ॥

1 W °त्त्व° 2 W °ष° 3 A,B °जा 4 A,B omit महदादिभिः सम्पाद्यत्वात् 5 A,B °स्यै° 6 A,B omit स्वेन रूपेण 7 A,B °धा° 8 A,B °व्यस्वभा° 9 A,B omit आदौ ... यस्यावयवेति 10 W °णं 11 W °त्रं 12 W adds उल्लसत्

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

"भावयन्नेष सत्त्वेन" इति द्वितीयाध्यायान्ते सूचितान् अवतारान् कथयितुं प्रथमतः परमपुरुषाख्यभगवदभिव्यक्तिप्रकारमाह — **जगृह** इति। भगवानादौ लोकसिसृक्षया महदादिभिः **सम्भूतं** षोडशकलं पौरुषं रूपं जगृह इत्येकान्वयः। प्रलयकालीनस्वगूहकतमःपानेन परमपुरुषाख्यं निजं रूपमाविश्चक्रे; न तु विराड्रूपम्। महदादिभिः प्रलयकाले स्वोदरनिविष्टैः महदहङ्कारादिसप्तप्रकृतिविकृतिभिः शरीरस्थानीयादिभिः सम्भूतं सहितम्। "कलाश्च पञ्चभूतानि ज्ञानकर्मेन्द्रियाणि च। पञ्च पञ्च मनश्चेति षोडशोक्ता महर्षिभिः" इति षोडशकला अन्तर्गता यस्मिन्निति तत् षोडशकलम्। "यस्मिन्नेताः षोडशकलाः प्रभवन्ति" (प्रश्न. उ. 6-2) इति श्रुतेः प्राणादिषोडशकलासहितं वा। सिसृक्षया सृष्टीच्छया यः प्राक् जगत् संहृत्य सूक्ष्मरूपतया स्वोदरे निवेश्य प्रलयोदके श्रीपर्यङ्के श्रीभुजान्तर्गतः प्रकृतिमयतमसा निगूढः स्थितः स एव परमपुरुषः पुनरुत्पत्तिकाले स्वगूहकं तमः पीत्वा आत्मानं प्रकाशितवानित्येतदेवात्र पुरुषरूपग्रहणमभिप्रेतं रामकृष्णादिवल्लोकव्यक्त्यभिप्रायोऽपीत्युक्तं भवति ॥ १ ॥

एवं स्वगूहकतमःपानेन प्रकाशितः परमपुरुषः महदादितत्त्वान्युत्पाद्य तैः ब्रह्माण्डं सृष्ट्वा तदण्डान्तः प्रविश्य अन्तरुदके शेषपर्यङ्कशायी नाभेः लोकात्मकं पद्मं निर्माय पद्मनाभनामा भूत्वा तस्मात् पद्मात् चतुर्मुखमस्राक्षीदित्याह — **यस्येति**। अम्भसि शयानस्य योगनिद्रां वितन्वतः यस्य भगवतो नाभिह्रदाम्बुजात् विश्वसृजा दक्षादीनां पतिः ब्रह्मा आसीत् ॥ २ ॥

स एव पुनर्ब्रह्माण्डे "नाभ्या आसीदन्तरिक्षम्" (पु. सू. 1-5) इत्यादिना अन्तरिक्षादिलोककल्पकावयवान् पुरुषाख्योऽवततार इत्यभिप्रेत्याह — **यस्येति**। पातालमित्यादिलोकविस्तरः चतुर्दशभुवनविस्तरः यस्य पुरुषनाम्ना अवतीर्णस्य अवयवसंस्थानैः चरणाद्यवयवविन्यासैः कल्पितः तदुत्पन्नत्वेन तदाधारत्वेन विद्भिर्निरूपितो न तु तदात्मत्वेन सच्चिदानन्दरसब्रह्मचैतन्यमविद्यादर्पणे प्रतिबिम्बितं स जीव इत्यभिधीयते तदेव ब्रह्म वशीकृतमाय मीश्वर इति तत्र सच्चिदानन्दब्रह्मलक्षणपुरुषो भगवानीश्वरः **पौरुषं** रूपं जगृहे। पौरुषं विराड्रूपं स्वमायया कल्पितं महदहङ्कारादिभिः सम्भूतम् उत्पन्नम्; अत एव पञ्चभूतादिषोडशकलोपेतम्। किमर्थम्? अनेन लोकसिसृक्षया। कोऽसौ भगवान् इत्यपेक्षायामाह — यस्येति। स्वमायापरिणतभूतसूक्ष्मेषु शयानस्य तत्तद्रूपेण व्याप्तस्य योगनिद्रां जगत्कारणमायाशक्तिं **वितन्वतो** विस्तारयतः सृष्टौ प्रेरयतो यस्य नाभिह्रदाम्बुजात् पञ्चीकृतभूतनिष्पन्नलोकपद्मात् ब्रह्मा आसीत्, यस्य ब्रह्मोत्पादकजगत्पद्मस्य अवयवविन्यासैः पद्मदलायमानैः लोकविस्तरः **कल्पितः**। न वस्तुतः सत्यः। तत् भगवतः

त्रैलोक्यात्मकं प्रथमं रूपमिति केचित्, तद्दूषयति — तदिति। भगवतस्तद्रूपं पुरुषादिरूपत्रयं विशुद्धं निर्दोषम् ऊर्जितम् उद्रिक्तं सत्त्वं सम्पूर्णबलज्ञानादिसर्वगुणसमूहम्। वै इति पदेन परकृतापव्याख्यानस्य प्रमाणविरोधञ्च दर्शयति। "निरनिष्ठो निरवद्यः" इति श्रुतेः नित्यनिरस्ताविद्याविलासस्य ब्रह्मणो विद्यादर्पणे प्रतिबिम्बीभूय जीवत्वं न घटते। न हि नित्यनिर्मुक्तशिरोवेदनो लीलया कदाचित् तद्वान् स्यामित्ति कामयते। पञ्चीकरणमपि स्वकल्पनामन्तरेण न प्रमाणपदवी मध्यास्ते। अतः उपेक्षणीयमेतन्मतम्॥ ३॥

इतोऽपि तन्मतमयुक्तमित्याह — **पश्यन्तीति**। अदभ्रचक्षुषः पूर्णज्ञानाः ब्रह्मादयोऽदो रूपत्रयं पश्यन्ति। कीदृशम्? सहस्रशब्दोऽनन्तत्ववाची प्रत्येकमभिसम्बध्यते। सहस्रं पादा ऊरवश्च भुजाश्च आननानि च सहस्रपादोरुभुजाननानि तैः अद्भुतं सहस्रं मूर्धश्रवणाक्षिनासिका यस्मिन् तत् तथोक्तम्। सहस्रमौल्यम्बरकुण्डलैः उल्लसत् शोभमानं, निरस्ताविद्यैः उत्तमाधिकारिभिः ब्रह्मादिभिः अपरोक्षतया दृष्टत्वात् नैतत् रूपत्रयं मायाकल्पितमिति भावः॥ ४॥

---

1 B.M विद्वद्भि° 2 K °दद्वयानन्द°

## श्रीराधाकृष्णप्रणीता सुधीसुधा

भगवानादौ लोकसिसृक्षया लोकान् स्रष्टुमिच्छया महदादिभिः महदहङ्कारपञ्चतन्मात्रैः सम्भूतं सुनिष्पन्नं षोडशकलं, पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि मन इति एकादशेन्द्रियाणि पञ्च महाभूतानीति षोडशकलाः अंशाः यस्मिन् तत् पौरुषं रूपं जगृहे गृहीतवान्॥ १॥

अम्भसि एकार्णवे शयानस्य योगनिद्रां वितन्वतः यस्य भगवतः नाभिह्रदाम्बुजात् नाभिह्रदे यदम्बुजं तस्मात् विश्वसृजां प्रजापतीनां मरीच्यादीनां पतिः ब्रह्मा आसीत् अभूत्। सः पौरुषं रूपं जगृहे इति पूर्वेणान्वयः॥ २॥

अपि च यस्य भगवतः अवयवसंस्थानैः लोकविस्तरः कृतः शरीरावयवपरिणामैः देवमनुष्यादिलोकविस्तारः कृत इत्यर्थः। तस्य तद्रूपं विशुद्धं रजोमुख्यगुणामिलितं ऊर्जितं निरतिशयं सत्त्वमयं भवतीत्यर्थः॥ ३॥

सहस्रपादोरुभुजाननाद्भुतं सहस्रमूर्धश्रवणाक्षिनासिकं सहस्रमौल्यम्बरकुण्डलोल्लसत् अदः रूपं आदिनारायणरूपं अदभ्रचक्षुषा अनल्पज्ञानमयनयनेन पश्यन्ति योगिनः पश्यन्ति॥ ४॥

**एतन्नानावताराणां निधानं बीजमव्ययम्।**
**यस्यांशांशेन सृज्यन्ते देवतिर्यङ्नरादयः॥ ५॥**

**स एव प्रथमं देवः कौमारं सर्गमास्थितः।**
**चचार दुश्चरं ब्रह्मा ब्रह्मचर्यमखण्डितम्॥ ६॥**

**द्वितीयं तु भवायास्य रसातलगतां महीम्।**
**उद्धरिष्यन्नुपादत्त यज्ञेशः सौकरं वपुः॥ ७॥**

**तृतीयमृषिसर्गं[4] च[5] देवर्षित्वमुपेत्य सः ।**
**तन्त्रं सात्वतमाचष्ट नैष्कर्म्यं कर्मणां[6] यतः ॥ ८ ॥**

1. W °दा° 2. W रूप° 3. I °श्रितः 4 W सर्गः 5. H,I,K,M,W वै 6. W °र्मि°

**श्रीध०** एतत्तु कूटस्थं, न त्वन्यावतारवत् आविर्भावतिरोभाववदित्याह — **एतदिति**। एतत् आदिनारायणरूपम्। निधीयते अस्मिन्निति निधानम्। कार्यावसाने[1] प्रवेशस्थानमित्यर्थः। बीजमुद्गमस्थानम्[2]। बीजत्वेऽपि नान्यबीजतुल्यं किन्त्वव्ययम्। न केवलमवताराणामेव बीजं, किन्तु सर्वप्राणिनामपीत्याह — यस्येति। यस्यांशो ब्रह्मा, तस्यांशो मरीच्यादिः तेन॥ ५॥

सनत्कुमाराद्यवतारं तच्चरित्रं चाऽऽह — **स एवेति**। कौमार आर्षः प्राजापत्यो मानवः इत्यादीनि सर्गविशेषनामानि। यः पौरुषं रूपं जगृहे स एव देवः कौमाराख्यं सर्गमास्थितस्सन् ब्रह्मा ब्राह्मणो भूत्वा ब्रह्मचर्यं चचार[3]। **प्रथमद्वितीयादिशब्दाः** निर्देशमात्रापेक्षया[4][5]॥ ६॥

वराहावतारमाह — **द्वितीय**मिति। अस्य विश्वस्य भवाय उद्भवाय। महीमुद्धरिष्यन्निति कर्मोक्तिः। एवं सर्वत्रावतारः तत्कर्म च उक्तमित्यनुसन्धेयम्॥ ७॥

नारदावतारमाह — **तृतीय**मिति। ऋषिसर्गमुपेत्य तत्र च देवर्षित्वमुपेत्येत्यर्थः। सात्वतं वैष्णवं तन्त्रं पाञ्चरात्रागमं आचष्ट उक्तवान्। यतः तन्त्रान्निर्गतं[6] कर्मत्वं बन्धहेतुत्वं येभ्यः तानि निष्कर्माणि तेषां भावो नैष्कर्म्यम्। कर्मणामेव मोचकत्वं यतो भवति तदाचष्टेत्यर्थः॥ ८॥

1 H,V add अवताराणां 2 H °द्गमन° 3. H,V add सः प्रथमोऽवतारः 4 B मात्रविवक्षया 5 H,V add प्रयुक्ताः 6 V adds कर्म

**वीर०** एतदनिरुद्धाख्यं रूपं नानाविधाना मवताराणां निदानं मूलकारणं बीजं कृत्स्नजगद्बीजभूतं कृत्स्नजगत्स्रष्टृचतुर्मुखोत्पत्तिस्थानत्वादिति भावः। अव्ययम् अपक्षयविकाररहितम्[1]। अनेन अप्राकृतत्वमुक्तम्। यस्येति। यस्य भगवतोऽनिरुद्धस्यांशांशेन शरीरभूतचिदचित्तत्त्वैकदेशेन देवादयः सृज्यन्ते॥ ५॥

स देवः[2] परमपुरुष एव ब्रह्मा चतुर्मुखशरीरकः सन् प्रथमं कौमारं सर्गं[3] सनत्कुमारादिसर्गमास्थितः सनकादिरूपेणावतीर्ण इत्यर्थः। अखण्डितं निर्विघ्नं ब्रह्मचर्यं ऊर्ध्वरेतस्कत्वोपेतं भगवदुपासनं चचार[4] चकार। ते च कुमाराः प्रथमावताररूपाः। प्रथममिति विशेषणात् द्वितीय मित्यनन्तरोक्तेश्च। इमे च कुमाराः अनुप्रवेशावताररूपाः। तथा चतुर्मुखोऽपि ब्रह्मरूपधरः "ब्रह्मा नारायणात्मकः" (विष्णु. पु. 1-4-2) इत्यादिभिः सृष्ट्यादिकाले तदात्मकतया योगिभिः चिन्त्यत्ववचनात्। भगवता शौनकेन च "आब्रह्मस्तम्बपर्यन्ता जगदन्तर्व्यवस्थिताः। प्राणिनः कर्मजनित संसारवशवर्तिनः॥ यतस्ततो न ते ध्याने ध्यानिनामुपकारकाः। अविद्यान्तर्गतास्सर्वे ते हि संसारगोचराः॥ पश्चादुद्भूतबोधास्ते ध्यानेनैवोपकारकाः। नैसर्गिको न[5] वै बोधः तेषामप्यन्यतो यतः॥" (वि. ध. पु. 104-23, 24, 25.)

इति चतुर्मुखसनकादीनां जगदन्तर्वर्तिनां अविद्यावेष्टितत्वेन शुभाश्रयत्वानर्हतामुक्त्वा बद्धानामेव सतां पश्चाद्योगेन उद्भूतबोधानां स्वस्वरूपापन्नानां च स्वतः शुद्धिविरहेण मुमुक्षूपास्यत्वनिषेधात्, "सृष्टिं ततः करिष्यामि त्वामाविश्य प्रजापते" (विष्णुधर्मे. 68-52) इति श्रीजन्मरहस्यवचनैकार्थ्यात् च। तदेवं चतुर्मुखसनकादयः भगवदनुप्रवेशावतारः प्रथमश्चेत्युक्तं भवति। ब्रह्मचर्यं चचार इत्यवतारप्रयोजनमुक्तम्। एवमुत्तरत्रापि द्रष्टव्यम् ॥ ६ ॥

अथ व[6]राहावतारमाह — **द्वितीय** न्त्विति। अस्य जगतः भवाय अभ्युदयाय रसातलगतां महीं पृथ्वीम् उद्धरिष्यन् यज्ञेशो भगवान् द्वितीयं सौकरं वाराहं वपुः आदत्त जगृहे। वराहो द्वितीयावतार इत्यर्थः। अयं च स्वेन रूपे[7]णावतारः, यज्ञेश इत्यनेन यज्ञाराध्यत्व, तत्फलद[8]त्व तच्छरीरकत्वाद्युक्तेः वपुरादत्तेति कथनात्, तच्छरीरकत्वायुक्तः वपुरुपादत्तेति वपुर्मात्रपरिग्रहोक्तेः अस्य भवायेति केवलसाधुपरित्राणार्थत्व सूचनाच्च ॥ ७ ॥

नारदावतारमाह — **तृतीय** मिति। तृतीयं वपुः उपादानं ऋषिस[9]र्गः ऋषिरूपजन्मेत्यर्थः। तत्र तृतीये अवतारे स भगवान् देवर्षित्वं नारद[10]रूपमापद्य नारदाख्यं जीवमनुप्रविश्येत्यर्थः। सात्वतं त[11]न्त्रं पञ्चरात्रशास्त्रम् आचष्ट अवोचत्, प्रवर्तयामासेत्यर्थः। तन्त्रं विशिनष्टि, यतस्तन्त्रात् क[12]र्मिणां निवृत्तिधर्मवतां नैष्कर्म्यं प्रवृत्तिधर्मविरहः प्रवृत्तिधर्माणामकर्तव्यता अवगम्यत इ[13]ति ॥ ८ ॥

---

1. W °यादि° 2 W एव 3 W omits सर्ग 4 A,B omit चचार 5 W नैव 6 B °वा°; W द्वितीयावतार° 7 W °णैवाव° 8 A,B °दत्वयोः कथनात् 9 W °व° 10 W °रूपत्व° 11 A तं 12 A,B कर्मणां 13 W इत्यर्थः

**विज०** त्रयाणां रूपाणां मध्ये पद्मनाभाख्यं रूपम् अवतारकारण मित्याह — **एतदिति**। यत् क्षीरार्णवशायि पद्मनाभाभिधं रूपम् एतत् मत्स्यादिनानावताराणां बीजं व्यञ्जकं निधानम्। अन्ततोऽत्र सर्वावतारा निधीयन्ते एकीक्रियन्त इति। न व्येति इत्यव्ययम्। यस्य पद्मनाभस्यांशांशेन सामर्थ्यैकदेशेन देवादयः सृज्यन्ते स पद्मनाभ एव सर्वावतारहेतु रित्यर्थः ॥ ५ ॥

स एव पद्मनाभो देवः प्रथमं स्वस्मादेव कौमारं सनत्कुमाराभिध मवतार मास्थितः। ब्रह्मा बृंहितः स्वतः पूर्णो विशिष्टजनशिक्षणाय अन्यैः दुश्चरं ब्रह्मचर्यम् अखण्डितमप्रतिहतं यथा भवति तथा चचारेत्यर्थः। सनत्कुमारोऽन्यः सनकादिषु पठितः ॥ ६ ॥

रसातलगतां महीमुद्धरिष्यन् उद्धर्तुकामो यज्ञेशः श्रीनारायणोऽस्य जगतो भवाय तु स्थित्यर्थमेव सौकरं सूकरस्य वराहस्य विद्यमानं वपुः उपादत्तेत्यन्वयः ॥ ७ ॥

ऋषिषु सर्गः अभिव्यक्तिः यस्य स तथोक्तः। ऋषीणां स्वभावो यस्य स तं तृतीयं महिदासाभिधावतारमुपेत्य देवर्षित्वं चोपेत्य स भगवान् तत्रावतारे सात्वतं पञ्चरात्रं नाम ग्रन्थविशेषमाचष्ट व्याचख्यौ नारदादेरिति शेषः।

**यतः** सात्वततन्त्रोक्तानुष्ठानात् कर्मणां नैष्कर्म्यं मोक्षसाधनत्वं स्यात् इत्यन्वयः। ''सर्गस्वभावनिर्मोक निश्चयाध्यायसृष्टिषु'' **(अम. को.** 3-178) इत्यभिधानम्। श्रुत्यादिप्रसिद्धिद्योतकेन वै शब्देन देवर्षित्वं नारदत्वमुपेत्य इत्यपव्याख्यानमपहस्तितमिति **ज्ञातव्यम्**। भो! शोनकादयः! तृतीयं ऋषिसर्गं वित्तेति वा, तदवतारप्रयोजनमाह देवर्षित्वमिति॥ ८॥

**रा० कृ०** यस्य भगवतः अंशांशेन। अंशो ब्रह्मा, तस्यांशो मरीच्यादिः तेन देवतिर्यङ्नरादयः सृज्यन्ते, तस्यैतत् पूर्वोक्तनारायणरूपं नानावताराणां निधानं कार्यावसाने प्रवेशस्थानम् अव्ययम् अविनाशि बीजं प्रभवस्थानम्।

अयं तावत् भगवतः प्रथमावतारः। तस्येदं सर्वसृष्ट्याधारभूतं विश्वरूपमेव पुरुषसूक्ते समुपवर्णितम्। स्थूलत्वेन व्यक्तो विश्वरूपस्य देहो महत्। एतदेव जीवैः मनोयवनिकायां सृष्टित्वेन प्रतीयते। प्राणिनां करचरणाद्यवयवाः एतदीया एव। एतस्य विश्वरूपस्य वस्त्राणि आकाशस्तराः, किरीटाः सूर्यादिग्रहसमूहाः, हारास्ताराः, कुण्डलादिमण्डनानि खगोलानि।

एकार्णवश्च देशकालातीतसृष्टिस्थितिरहितनिरालम्बानन्तसत्तामात्रस्य सङ्केतः। आत्मनि जाग्रत्सु लोकेषु तेषु आत्मनो निद्रालुता योगनिद्रा। जाग्रत्प्राणिनां स्वसत्तामात्रज्ञानवतां भगवदभिज्ञानविरहे तेषु अयं भगवान् निद्राति अज्ञातो वर्तत इत्यर्थः। नाभिर्नाम केन्द्रम्। अम्बुजश्च विकसनशीलस्य सङ्केतः। ब्रह्मणा भगवदवयवस्थानत्वेन लोकाः कल्प्यन्ते। प्राणिनामस्माकं देहावयवानाश्रित्य तत्तल्लोकसम्बन्धिन्यः प्रज्ञाः वर्तन्ते। ध्यानविधानेन जीवः तैरेव लोकैः बहिःस्थितैः सम्बन्धमापादयितुं प्रभवति। अपि च तत्तदवयवसम्बन्धिन्यो देवताः तत्तदवयवानां शक्तित्वेन प्रज्ञात्वेन च तेषु सन्निहिता वर्तन्ते। एवं बाह्यदेवतासम्बन्धेन जीवो बाह्यलोकान् द्रष्टुं श्रोतुं च समर्थो भवति॥ ५॥

यः पौरुषं रूपं जगृहे स एव देवः प्रथमं कौमारं कौमाराख्यं सर्गमास्थितस्सन् ब्रह्मा ब्राह्मणो भूत्वा अखण्डितं ब्रह्मचर्यं चचार। बाल्ययौवनयोः मध्यस्थं वयः कौमारम्। ब्रह्मणि आत्मप्रज्ञाप्रसरः ब्रह्मचर्यम्। एतदर्थमेव कौमारे वयसि तपोवेदाध्ययनादिभिस्सह ब्रह्मचर्यसाधनमपि मुमुक्षूणामावश्यकं भवति॥ ६॥

स देवः अस्य विश्वस्य भवाय उद्भवाय रसातलगतां महीम् उद्धरिष्यन् यज्ञेशस्सन् सौकरं वाराहं वपुः उपादत्त स्वीकृतवान्।

द्रवदशायां विद्यमानो ग्रहगोलाकारो रसातलम्। प्रतिफलनिरपेक्षया क्रियमाणं कर्म यज्ञः। भगवता प्रवर्तितेयं सर्वा सृष्टिः यज्ञ एव, तस्मादयं यज्ञेशः॥ ७॥

सः तृतीयं ऋषिसर्गमुपेत्य तत्रापि देवर्षित्वमुपेत्य यतः यस्मात् तन्त्रात् कर्मणां नैष्कर्म्यं बन्धमोचकत्वं भवति तत् सात्वतं वैष्णवं तन्त्रं पाञ्चरात्रागमाख्यं आचष्ट अवोचत्।

ऊहात्मकतन्तुभिः विष्णुभावनावयनस्य तन्त्रं सङ्केतः। भागवतविद्यैव वैष्णवतन्त्रम्। तत् नारदो व्यासाय उपदिदेश॥ ८॥

तुर्ये[1] धर्मकलासर्गे नरनारायणावृषी ।
भूत्वाऽऽत्मोपशमोपेत[2] मकरोद्दुश्चरं तपः ॥ ९ ॥

पञ्चमः कपिलो नाम सिद्धेशः कालविप्लुतम् ।
प्रोवाचाऽऽसुरये साङ्ख्यं तत्त्वग्रामविनिर्णयम् ॥ १० ॥

षष्ठे[3] अत्रेरपत्यत्वं वृतः प्राप्तोऽनसूयया ।
आन्वीक्षिकीमलर्काय प्रह्लादादिभ्य ऊचिवान् ॥ ११ ॥

ततस्सप्तम[4] आकूत्यां रुचे र्यज्ञोऽभ्यजायत ।
स यामाद्यै स्सुरगणै रपात् स्वायम्भुवान्तरम् ॥ १२ ॥

---

1 M °र्ये 2 H.V शमदमोपेत 3 H.I.K.M.N.V.W °ष्ठं 4 VF °था स°

**श्रीध०** नरनारायणावतारमाह — **तुर्य** इति। तुर्ये चतुर्थे अवतारे। धर्मस्य यमस्य[1] कलांऽशो भार्येत्यर्थः। "अर्धो वा एष आत्मनो यत्पत्नी" (तैत्ति. ब्रा. 3-3-3) इति श्रुतेः। तस्याः सर्गे ऋषिः[2] भूत्वा इत्येकावतारत्वं दर्शयति ॥ ९ ॥

कपिलावतारमाह — **पञ्चम** इति। आसुरये तन्नाम्ने ब्राह्मणाय तत्त्वानां ग्रामस्य **संघस्य** विनिर्णयो यस्मिन् शास्त्रे तत् साङ्ख्यम् ॥ १० ॥

दत्तात्रेयावतारमाह — **षष्ठ** मिति। अत्रेरपत्यं तेनैव वृतस्सन् प्राप्तः "**अत्रेरपत्यमभिकाङ्क्षत** आह तुष्टः" (भाग. 2-7-4) इति वक्ष्यमाणत्वात् कथं प्राप्तः? अनसूयया मत्सदृशापत्यमिषेण मामेवापत्यं वृतवानिति दोषदृष्टिमकुर्वन्नेव[3] अत्रेरपत्यत्वं प्राप्तः इत्यर्थः। आन्वीक्षिकीम् आत्मविद्याम्। अलर्काय[4] राज्ञे प्रह्लादादिभ्यश्च। आदिपदात् यदुहैहयाद्या गृह्यन्ते ॥ ११ ॥

यज्ञावतारमाह — **तत** इति। स यज्ञो यामाद्यैः स्वस्यैव पुत्रा यामा नाम देवाः तदाद्यैस्सह स्वायम्भुवं मन्वन्तरं अपात्[5] पालितवान्। तदा **स्वयमिन्द्राऽभूदित्यर्थः** ॥ १२ ॥

1 A.B.H omit यमस्य 2 B.H °षी 3 A.B °र्वन् इत्यर्थः 4 A.B omit अलर्काय राज्ञे 5 A B omit अपात्

**वीर०** **तुर्य** इति। धर्मकलासर्गे धर्मात् पितुः कलासर्गे देहजन्मरूपे तुर्ये चतुर्थावतारे नरनारायणाख्यावृषी भूत्वा आत्मोपशमः इन्द्रियनिग्रहः, तेन उपेतं दुश्चर मितरैः चरितुमशक्यं तपश्चकार ॥ ९ ॥

**पञ्चम** इति। पञ्चमोऽवतारः। कपिलो नाम कपिलाख्यः। सिद्धानां **आत्मयाथात्म्यानुसन्धानयोगेन सिद्धानां** स्वस्वरूपापन्नानामीशः कालेन प्रवर्तयितृरहितेन कालेन विप्लुतं तिरोहितं **साङ्ख्यं, कथम्भूतम्?** **तत्त्वानां**

प्रकृतिमहदादीनां ग्रामस्य कलापस्य विनिर्णयो याथात्म्यनिर्णयो यस्मात् तथाभूतम्। आसुरये प्रोवाच। आसुरिर्नाम सिद्धेषु प्रधानः, तस्मै ॥ १० ॥

**षष्ठ** मिति। अत्रेः प्रजापतेः अपत्यत्वं प्रति वृतः। मम पुत्रो भवेति अत्रिणा वृत इत्यर्थः। अनसूयया अत्रेर्भार्यया प्राप्तः। तस्याः पुत्रो दत्तात्रेयाख्यो भूत्वेत्यर्थः। अलर्काय प्रह्लादादिभ्यश्च आन्वीक्षिकीम् अध्यात्मविद्याम् ऊचिवान्, य[2] ऊचिवान् तं षष्ठमवतारं विद्यात् इति यच्छब्दाध्याहारेण अन्वयः। षष्ठं षष्ठरूपन्विति वा ॥ ११ ॥

**तत** इति। ततः सप्तमे अवतारे रुचेः तद्भार्यायामाकूत्यां व्यजायत। स च यज्ञ इति प्रसिद्धः। स यज्ञः याम आद्यो येषां तैः सुरगणैस्सह स्वायम्भुवमन्वन्तरम् अपात् पालयामास ॥ १२ ॥

---

1. A,B चर्तु° 2 A,B omit य ऊचिवान्

**विज°** भो शौनकादयः! तुरीयं चतुर्थं शृणुत। कथं स पद्मनाभः धर्मनाम्नि भगवति कलासर्गे स्वांशावतारे नाम्ना नरनारायणावृषी भूत्वा अज्ञलोकदृष्ट्या च आत्मनः अन्तःकरणस्य उपशमेन अधिकशान्त्या उपेतं युक्तं अन्यैः कर्तुमशक्यं तपः अकरोत् इत्येकान्वयः। अत्र कलासर्ग इत्युक्त्या नारायणस्य अवतारत्वं, नरे तु विशेषावेश इति ज्ञातव्यम्। तुर्य इति केचित् पठन्ति, तत्र तुर्ये चतुर्थे धर्मकलासर्गे इति सुगमोऽन्वयः ॥ ९ ॥

पञ्चमोऽवतारोऽपि कपिलो नामेत्यन्वयः। स सिद्धेशः कपिलः कालबलेन तिरोहितं तत्त्वानां चतुर्विंशतिसङ्ख्याकानां ग्रामः समूहः तस्य विशेषेण निर्णयो भगवत्परत्वेन यस्मिन् तत् तथोक्तम्। साङ्ख्यं भगवज्ज्ञानप्रतिपादनपरं वेदार्थपरिबृंहितं नाम्ना आसुरये सच्छिष्याय प्रोवाचेति पश्चादन्वयः। अत्राज्ञलोकप्रसिद्धसाङ्ख्य-शास्त्रप्रणेता कपिलः, तच्छिष्यः आसुरिश्च अन्य एवेति सतां सम्प्रदायः। यः पद्मनाभोऽनसूयया अत्रिपत्न्या वृतः, अत्रेः ऋषेः अनसूयायामपत्यत्वं प्राप्तः आन्वीक्षिकीं तत्त्वविद्याम् अलर्काय प्रह्लादादिभ्यश्च ऊचिवान्, तमवतारं षष्ठं वित्त ॥ १०, ११ ॥

ततः स पद्मनाभः सप्तमो रुचेः आकूत्यां पत्न्यां यज्ञोऽभ्यजायत जातः, स यज्ञो नाम्ना यामा आद्या येषां ते तथा तैः सुरगणैस्सह स्वायम्भुवमन्वन्तरम् अपात् अरक्षत् इत्यन्वयः। प्रतिमन्वन्तरं देवानां नामभेदात् यामा इत्युक्तम् ॥ १२ ॥

**रा° कृ°** सः तुर्ये चतुर्थेऽवतारे धर्मकलासर्गे धर्मस्य यमस्य तत्पत्न्याः मूर्तिनाम्न्याश्च सर्गरूपे नरनारायणौ ऋषी भूत्वा आत्मशमोपेतं आत्मनः अन्तःकरणस्य शमः शान्तिः तदुपेतं दुश्चरं तपः अकरोत्। अनेन विश्वश्रेयोहेतुभूततपोविद्यां भगवान् लोकाय ददौ इत्यर्थः ॥ ९ ॥

पञ्चमः पञ्चमोऽवतारः, कपिलो नाम सिद्धेशस्सन् कालविप्लुतं कालेन तिरोहितं तत्त्वग्रामविनिर्णयं तत्त्वनिर्णायकं साङ्ख्यं तन्नामकशास्त्रम् आसुरये तन्नाम्ने शिष्याय प्रोवाच। अनेन महदादितत्त्वोपदेशः सूचितः ॥ १० ॥

अत्रेः तन्नाम्ना मुनिना अपत्यत्वं वृतः अनसूयया प्राप्तो दत्तात्रेयः आन्वीक्षिकीमात्मविद्याम् अलर्काय तन्नाम्ने राज्ञे प्रह्लादादिभ्यश्च ऊचिवान् उक्तवान्। तं षष्ठमवतारमवगच्छतेति शेषः। जीवात्मपरमात्माभेदसाधनी विद्यैव आत्मविद्या। सैव योगाभ्यासः। दत्तात्रेयो योगाविर्भावसङ्केतः ॥ ११ ॥

ततस्सप्तमोऽवतारः रुचेः आकूत्यां यज्ञः यज्ञत्वेनाभ्यजायत। स यज्ञः यामाद्यैः स्वपुत्रभूतैः सुरगणैः स्वायम्भुवान्तरं स्वायम्भुवमन्वन्तरम् अपात् अपालयत्। तदाऽयं स्वयमिन्द्रः अभूत् इत्यर्थः।

एतदवतार एव कालमनुमन्वन्तरप्रारम्भकः। सार्धसप्तघटिकापरिमितः कालः याम इत्युच्यते। यामाष्टकपरिमितो वासरः ॥ १२ ॥

**अष्टमे[1] मेरुदेव्यां तु नाभेर्जात उरुक्रमः ।**
**दर्शयन् वर्त्म धीराणां सर्वाश्रमनमस्कृतम् ॥ १३ ॥**

**ऋषिभिर्याचितो भेजे नवमं पार्थिवं[2] वपुः ।**
**दुग्ध[3]ेमामोषधीर्[4]विप्राः तेनायं स[5] उशत्तमः ॥ १४ ॥**

**रूपं स जगृहे मात्स्यं चाक्षुषो[6]दधिसम्प्लवे ।**
**नाव्यारोप्य महीमय्यामपाद्वैवस्वतं मनुम् ॥ १५ ॥**

**सुरासुराणामुदधिं मथ्नतां मन्[7]दराचलम् ।**
**दध्रे कमठरूपेण पृष्ठ एकादशे[8] विभुः[9] ॥ १६ ॥**

---

1. K,M °मो 2. K,M,W °र्थ° 3 K,M दुग्धवानोष° 4 N,V °मौ° 5 K,M च 6 H,K,M,W °षान्तर° 7 W °न्थना° 8 K,M °शं
9 K,M °दुः

**श्रीध॰** ऋषभावतारमाह — **अष्टम** इति। सर्वाश्रमनमस्कृतम् अन्त्याश्रमं पारमहंस्यं वर्त्म धीराणां दर्शयन् नाभेः आग्नीध्रपुत्रात् ऋषभो जातः ॥ १३ ॥

पृथ्ववतारमाह — **ऋषिभि** रिति। पार्थिवं वपुः राजदेहं पृथुरूपम्। पाठान्तरे पृथोरिदं पार्थवम्। ओषधीरित्युपलक्षणम्। इमां पृथ्वीं सर्वाणि वस्तूनि दुग्ध अदुग्ध। अडागमाभावस्त्वार्षः। हे विप्राः तेन पृथ्वीदोहनेन। सोऽयमवतारः उशत्तमः कमनीयतमः। "वश-कान्तौ" इत्यस्मात् धातोः[1] निष्पन्नोऽयं शब्दः ॥ १४ ॥

मत्स्यावतारमाह — **रूप** मिति। चाक्षुषमन्वन्तरे य उदधीनां सम्प्लवः संश्लेषः तस्मिन् यद्यपि मन्वन्तरावसाने प्रलयो नास्ति तथाऽपि केनचित् कौतुकेन सत्यव्रताय माया प्रदर्शिता यथा अकाण्डे मार्कण्डेयाय इति द्रष्टव्यम्। महीमय्यां नावि नौकारूपायां मह्यामित्यर्थः। अपात् रक्षितवान् वैवस्वतमिति भाविनी संज्ञा ॥ १५ ॥

कूर्मावतारमाह — **सुरेति**। कमठः कूर्मः। तद्रूपेण एकादशे अवतारे विभुः दध्रे दधार॥ १६॥

1. A,B omit धातोः निष्पन्नोऽयं शब्दः

**वीर०** अष्टमे अवतारे उरुक्रमे भगवान् नाभेः स्वायम्भुवमनुपौत्रस्य[1] भार्यायां मेरुदेव्यां जातः। स च ऋषभाख्यः। धीराणां योगीश्वराणां वर्त्म अनुष्ठेयं धर्ममार्गं दर्शयन् दर्शयितुं जात इत्यर्थः। वर्त्म विशिनष्टि सर्वैराश्रमैः आश्रमस्थैः नमस्कृतं पूजितं आश्रमधर्मवर्त्मभ्यः उत्कृष्टमिति भावः॥ १३॥

**ऋषिभि** रिति। हुङ्कारैः वेनं हतवद्भिः ऋषिभिः याचितः जगत्पालनार्थं याचितो भगवान् नवमं पार्थिवं[2] पृथोःसम्बन्धि वपुः भेजे प्राप्तः। अंशेनानुप्रविष्टः पृथ्वाख्यजीवानुप्रवेशेन पृथुरूपेणावतीर्ण इत्यर्थः। हे विप्राः! शौनकादयः! स इमां पृथ्वीं गोरूपं धृतवतीम् ओषधीः दुग्ध दुदोह। अडभाव आर्षः। यतोऽदुग्ध, तेन कारणेन स पृथुः उशत्तमः सर्वेषामपीष्टतमो[3] बभूवेत्यर्थः॥ १४॥

**रूप** मिति। चाक्षुषान्तरं चाक्षुषमन्वन्तरम्। तत्र यः सम्प्लवः प्रलयः। तस्मिन् स भगवान् मात्स्यं दशमं रूपं जगृहे। अवतारप्रयोजनमाह नावीति। वैवस्वतं मनुं वैवस्वतमनुरूपेण जनिष्यमाणं सत्यव्रतं महीमय्यां पृथ्वीरूपायां नावि आरोप्य अपात् ररक्ष॥ १५॥

एकादशे तु अवतारे विभुः भगवान् सुरासुराणां उदधिम् अमृतार्थं मथ्नतां सतां कमठरूपेण कूर्मरूपेण[4] पृष्ठे मन्दराख्यमचलं दध्रे धृतवान्॥ १६॥

1 A,B omit मनु 2 A,B °र्थि° 3 A,B °मिष्ट° 4 A,B omit कूर्मरूपेण

**विज०** य उरुक्रमो नाभेः आग्नीध्रपुत्रात् मेरुदेव्यां पत्न्या जातः सर्वाश्रमनमस्कृतं धीराणां विद्यारतानां वर्त्म पारमहंस्याश्रमं दर्शयन् अभूत्, तस्य सोऽष्टमोऽवतारः। न शुक्रशोणितमिश्रतया अस्य जननं, किन्तु द्वारमात्रम् इत्यस्मिन्नर्थे तु शब्दः॥ १३॥

ऋषिभिः प्रार्थितः पद्मनाभो नवमावतारं पार्थिवं, पृथुचक्रवर्तिशरीराविष्टरूपं भेजे। हे विप्राः! ज्ञानिनः! गोरूपिण्याः भुवः ओषधीः क्षीरात्मिकाः दुग्धवान् इति येन, तेन कर्मणाऽयं भगवान् उशत्तमः सत्यकामेषु श्रेष्ठः। उश इच्छायाम्। चशब्दो दोहनकर्मणः अमानुषत्वं द्योतयति॥ १४॥

स भगवान् चाक्षुषान्तरसम्प्लवे चाक्षुषमन्वन्तरप्रलये मात्स्यं मत्स्यस्य विद्यमानं रूपं जगृहे। किञ्च, महीमय्यां नावि तरीस्थानीयभूमौ वैवस्वतं मनुमारोप्य अपादित्यन्वयः॥ १५॥

सुरासुराणाम् उदधिं समुद्रं प्रमथ्नतां यो भगवान् पातालमाविशन्तं मन्दरं पर्वतं कूर्मरूपेण पृष्ठे दध्रे बभारेत्येकान्वयः। तम् अवतारमेकादशं विदुः इति॥ १६॥

**रा० कृ०** अष्टमे अवतारे धीराणां सर्वाश्रमनमस्कृतं वर्त्म पारमहंस्यं मार्गं दर्शयन् उरुक्रमो भगवान् नाभेः तत्राग्नो नृपतेः आग्नीध्रपुत्रस्य मेरुदेव्यां जातः ऋषभनाम्ना जातः। उच्छ्वासनिःश्वासमूलस्पन्दनस्य सङ्केतः परमहंसमार्गः। अयमेव लौकिकप्राण्युच्छ्वासनिःश्वासप्रारम्भकः। अत्र मेरुदेवी नाभ्युरुक्रमपदानि साभिप्रायाणि। कुण्डलिनी प्रणवोपासनायोगसमन्वयोऽत्र सूचितः। तथाहि — मेरुदेवी कुण्डलिनीप्रसारसङ्केतसरणिः। शब्दोत्पत्तिस्थानं नाभिः। उरुक्रमश्च श्वासक्रमः। उच्छ्वासनिःश्वासक्रमं समीकृत्य प्रणवमुपासमानानां कुण्डलिनीप्रबोधो जायते। अयञ्च समन्वयः पातञ्जलयोगानुगुण एव॥ १३॥

हे विप्राः! स देवः ऋषिभिः याचितो नवमं पार्थवं पृथुरूपं राजदेहं भेजे। इमां पृथिवीम् ओषधीः अदुग्ध। तेन पृथिवीदोहनेन अयमवतारः उशत्तमः कमनीयतमः।

अत्र स्थूलगोलाविर्भावः सूचितः। पृथुचक्रवर्ती स्थौल्यस्य चक्राकृतिगतेश्च सङ्केतः। भूगोलात् खनिजवृक्षपर्वतरलाद्युत्पत्तिः अभूत् इत्यर्थः॥ १४॥

सः चाक्षुषोदधिसम्प्लवे चाक्षुषमन्वन्तरे यः उदधिसम्प्लवः उदधिसंश्लेषः तस्मिन् मात्स्यं रूपं जगृहे। अपि च महीमय्यां नावि वैवस्वतं मनुमारोप्य अपात् रक्षितवान्। अयं दशमो मत्स्यावतारः।

खनिजाद्युद्भवानन्तरं वृष्ट्या भूगोलं जलाप्लावितमभूत्। तदा जले प्रथमः प्राणी मत्स्यः उदभूत्। तन्मनस्त्वेन मनुः गोपितोऽभवत्॥ १५॥

एकादशे एकादशावतारे विभुः भगवान् सुरासुराणाम् उदधिं मथ्नतां सतां कमठरूपेण पृष्ठे मन्दराचलं दध्रे धृतवान्।

जले प्लवमानं भूगोलं घनीभावमभजत् इति भावः॥ १६॥

**धान्वन्तरं द्वादशमं त्रयोदशममेव च।**
**अपाययत् सुरा[1]नन्यान् मोहिन्या मोहयन् स्त्रिया॥ १७॥**

**चतुर्दशं नारसिंहं बिभ्रद्दैत्येन्द्रमूर्जितम्।**
**ददार करजैर्व[2]क्षस्येरकां[3] कटकृद्यथा॥ १८॥**

**पञ्चदशं वामनकं कृत्वाऽगादध्वरं बलेः।**
**पदत्रयं याचमानः प्रत्यादित्सु[4]स्त्रिविष्टपम्॥ १९॥**

**अवतारे षोडशमे पश्यन् ब्रह्मद्रुहो नृपान् ।**
**त्रिस्सप्तकृत्वः कुपितो निःक्षत्त्रामकरोन्महीम् ॥ २० ॥**

1. K,M °धामन्या° 2 H,I,K,M,V,W °रूरावेर° 3. H,K,M,V,W °कान् 4 B,I °पि° 5 K,M यच्छन् 6 H,V धर्म°

**श्रीध०** धन्वन्तर्यवतारमाह — **धान्वन्तर** मिति। धान्वन्तरं धन्वन्तरिरूपम्। द्वादशममिति[1] मट्प्रयोगस्त्वार्षः। त्रयोदशममेवेत्यादिना[2] तच्चरितेन सह दर्शयति, अत्राप्यार्ष[3] एव मट्। अपाययत् इत्यत्र सुधाम् इत्यध्याहारः। मोहिन्या स्त्रिया तद्रूपेणान्यानसुरादीन्[4][5] मोहयन् धन्वन्तरिरूपेणामृतमानीय मोहिन्या अपाययत् इत्यर्थः ॥ १७ ॥

नृसिंहावतारमाह — **चतुर्दश** मिति। नारसिंहं रूपं [6] बिभ्रत् एरकां[7] निर्ग्रन्थितृणम्[8] ॥ १८ ॥

वामनावतारमाह — **पञ्चदश** मिति । दुष्टानां मदं वामनयतीति **वामनक** रूपं, ह्रस्वं वा प्रत्यादित्सुः तस्मादाच्छिद्य ग्रहीतुमिच्छुः ॥ १९ ॥

परशुरामावतारमाह — **अवतार** इति। त्रिः त्रिगुणं यथा भवति तथा सप्तकृत्वः सप्तवारान् एकविंशतिवारान् इत्यर्थः ॥ २० ॥

1. A,B °मादिप्रयोगस्त्वार्षः 2. A,B °तममव रूप तच्च° 3 A,B omit अत्राप्यार्ष एव मट् 4 H,V मोहिन्याख्यस्त्रीरूपेण° 5. A,B °रान् 6. V adds सः 7. H,V °कान् 8. H,V °तृणविशेषान्

**वीर०** द्वादशमं वपुस्तु धान्वन्तरं धन्वन्तर्याख्यजीवानुप्रवेशरूपमित्यर्थः[1]। त्रयोदशमं रूपं तु यन्मोहिन्याख्यया अन्यान् असुरान् मोहयन् सुरान् अमृतमपाययत्, तदेव मोहिनीरूपं त्रयोदशममित्यर्थः[2] ॥ १७ ॥

नारसिंहं चतुर्दशं रूपं बिभ्रत् ऊर्जितं बलिष्ठं दैत्येन्द्रं हिरण्यकशिपुं वक्षसि करजैः नखैः ददार। यथा कटकृत् आस्तरणकृत् एरकान् तदर्थतृणविशेषान् विदारयति, तद्वत् ॥ १८ ॥

वामनकं वामनाख्यं पञ्चदशं वपुः कृत्वा धृत्वा बलेरध्वरं यज्ञवाटमगात् जगाम। प्रयोजनमाह — त्रिविष्टपं प्रत्यादित्सुः आहृत्य इन्द्राय दातुमिच्छुः, पदत्रयं पदत्रयव्याजेन त्रिलोकीं याचमानः याचयिष्यमाणोऽध्वरमगात् इत्यन्वयः ॥ १९ ॥

षोडशमे अवतारे भार्गवरामाख्ये[3] नृपान् कार्तवीर्यादीन् ब्रह्मद्रुहः ब्रह्मकुलद्रोहकान् पश्यन्[4] कुपितः त्रिस्सप्तकृत्वः एकविंशतिवारं महीं निःक्षत्त्रां क्षत्त्रबीजरहिताम् अकरोत् ॥ २० ॥

1. A,B धान्वन्तराख्य° 2. A,B °दशामत्यर्थः 3 A,B °ख्यो 4. A,B नृपान्

**विज०** द्वादशमवतारं धान्वन्तरं धन्वन्तर्याख्यरूपसम्बन्धिनं विदुः। स हरिः यस्मिन् अवतारे मोहिन्या मोहकशक्तिमत्या स्त्रिया स्त्रीमूर्त्या अन्यान् असुरान् मोहयन् सुधाम् अपाययत्, तं त्रयोदशमेव विदुरित्येकान्वय । च शब्दो मोहयन् इत्युक्त्या मायामयं तद्रूपमिति शङ्कानिरासार्थः ॥ १७ ॥

नरसिंहसम्बन्धिविग्रहं बिभ्रत् स भगवान् करजैः नखैः ऊर्जितं हिरण्यकशिपुं ऊरौ अङ्के निपात्य तथा ददार, यथा कटकृत् तृणास्तरणकर्ता एरकान् दीर्घाकारान् तृणविशेषान् ददार दारयति, तमवतारं चतुर्दशं विदुः इत्येकान्वयः ॥ १८ ॥

त्रिविष्टपं त्रैलोक्यं प्रत्यादित्सुः बलेराच्छिद्य इन्द्रायेदं दातुकामः तदर्थं बलिं पदत्रयं याचमानः स पद्मनाभः पञ्चदशमवतारं वामनसम्बन्धिनं कृत्वा बलेः अध्वरं यज्ञम् अगात् इत्यन्वयः ॥ १९ ॥

षोडशमे अवतारे स भगवान् जमदग्निसुतो भूत्वा ब्रह्मद्रुहो ब्रह्मद्रोहिणो नृपान् यच्छन् घ्नन् त्रिस्सप्तकृत्वः एकविंशतिवारं महीं निःक्षत्त्रियां क्षत्त्रियजातिरहिता मकरोत् इत्येकान्वयः। कुपिताकारं दर्शयन् न तु कुपितः। न हि ईश्वरस्य कोपः सम्भवति, अशक्तस्य सः; "कामः क्रोधस्तथा लोभः तस्मादेतत्त्रयं त्यजेत्" (भ. गी. 16-21) इति हेयत्वात्तस्येति ॥ २० ॥

**रा० कृ०** धान्वन्तरं द्वादशमं धन्वन्तरिः द्वादशोऽवतारः, त्रयोदशमं त्रयोदशावतारः मोहिन्यवतारः। तस्मिन्नवतारे मोहिन्या स्त्रिया मोहिनी स्त्रीरूपेण अन्यान् असुरान् मोहयन् सुरान् अपाययत्; सुधामिति शेषः।

देवासुराः प्राणिगत सुगुणदुर्गुणा एव। धन्वन्तरिः देहस्थितिहेतुभूतधर्मसमाहारः। अमृतकलशश्च प्राणस्थिति-निदानं हृदयमेव। मोहिनीपदेन देहेषु स्त्रीपुरुषभेदाविर्भावस्सूचितः। तेन मानवमानसेषु परस्परव्यामोहश्च उदभूत् इत्यपि व्यञ्जितः ॥ १७ ॥

सः चतुर्दशं नारसिंहं रूपमिति शेषः बिभ्रत् करजैः नखैः ऊर्जितं दैत्येन्द्रं हिरण्यकशिपुम् ऊरौ निपात्येति शेषः। कटकृत् एरकान् यथा एरकानिव ददार दारितवान्।

आत्मनः सर्वेश्वरत्वं सर्वैरन्यैः अङ्गीकर्तव्यम् इत्यस्य जनसमुदायनिष्ठस्य असुरगुणस्य हिरण्यकशिपुः सङ्केतः। परिहृते च तद्गुणे जायमानः आह्लाद एव प्रह्लादः। एतत्साधनावश्यकतीव्रसङ्कल्पात्मकश्रद्धापाटवस्य सङ्केतो नरसिंहः। तादृशसङ्कल्पसम्भवस्थानत्वेन नरस्य सिंहशिरःकल्पना च ॥ १८ ॥

सः पञ्चदशं वामनकं वामनरूपं कृत्वा धृत्वा त्रिविष्टपं स्वर्गं प्रत्यादित्सुः इन्द्राय दातुं बलेः आच्छिद्य ग्रहीतुमिच्छुः पदत्रयं याचमानः बलेरध्वरमगात्।

द्रव्यशक्तिप्रज्ञाभिः मानवसृष्टेः सङ्केतः पदत्रययाचना। मानवे जीवभावनायाः प्रतीको बलिः। जीव भावमाक्रममाणस्य दैवभावस्यैव वामनसंज्ञा। पृथिव्याम् अयं वामनः प्रथमं भौतिकदेहेन मानवस्य आविर्भूतेः प्रारम्भकः ॥ १९ ॥

सः षोडशमे षोडशे अवतारे परशुरामाख्यया युक्तः ब्रह्मद्रुहः ब्राह्मणद्रोहिणो नृपान् कुपितस्सन् त्रिस्सप्तकृत्वः एकविंशतिवारान् महीं निःक्षत्त्रामकरोत् ।

दारुणहिंसाभिः दुष्टप्रभूणां क्रूरपालनेन च भूयिष्ठमुपद्रुते मानवसमाजे तत्परिष्कारसाधनम् आयोधनं विधाय मानवान्तर्गतब्रह्मक्षत्त्रशक्तिद्वयपरस्परपरिपोषकप्राधान्यानुसन्धानप्रयत्नस्य प्रतीकः परशुरामावतारः। तत्प्रयत्नफलभूतो रामावतारः ॥ २० ॥

**ततस्सप्तदशे जातः सत्यवत्यां पराशरात् ।**
**चक्रे वेदतरोः शाखा दृष्ट्वा पुंसोऽल्पमेधसः ॥ २१ ॥**
**नरदेवत्वमापन्नः सुरकार्यचिकीर्षया ।**
**समुद्रनिग्रहादीनि चक्रे वीर्याण्यतः[1]परम् ॥ २२ ॥**
**एकोनविंशे विंशतिमे वृष्णिषु प्राप्य जन्मनी ।**
**रामकृष्णा विति भुवो भगवानहरद्भरम् ॥ २३ ॥**
**ततः कलौ सम्प्रवृत्ते सम्मोहाय सुरद्विषाम् ।**
**बुद्धो नाम्नाऽ[2]जनसुतः कीकटेषु भविष्यति ॥ २४ ॥**

1 W °ण्यनेकशः 2. B,I °म्नाऽञ्जन° V °म्नाऽजिन°, H,M,W °म्ना जिन°

**श्रीध०** व्यासावतारमाह — **तत** इति। अल्पमेधसः अल्पप्रज्ञान् पुंसो दृष्ट्वा तदनुग्रहार्थं शाखाः चक्रे ॥ २१ ॥

रामावतारमाह — **नरेति**। नरदेवत्वं राघवरूपेण प्राप्तस्सन्। अतःपरम् अष्टादशे ॥ २२ ॥

रामकृष्णावतारमाह — **एकोने** ति। विंशतितम इति वक्तव्ये तकारलोपच्छन्दोऽनुरोधेन । [1](वर्णाधिक्यं तु छान्दसत्वा देवेति ज्ञेयम्। नैतत्केनाऽपि व्याख्यात्रा स्पष्टीकृतम्। अत्र विंशेचेति पाठे न काप्यनुपपत्ति रिति मन्तव्यम्।) रामकृष्णावित्येवं ना[2]मजन्मनी प्राप्य ॥ २३ ॥

बुद्धावतार माह — **तत** इति। अजि[3]नस्य सुतः। जिनसुत इति पाठे जिनोऽपि स एव। कीकटेषु मध्ये गयाप्रदेशे ॥ २४ ॥

1. A,B Omit वर्णाधिक्यं ....... मन्तव्यम्। 2. A,B नामनी 3. A,B °ज°

**वीर०** ततः सप्तदशे अवतारे पराशरात् सत्यवत्यां जातो बादरायण इति प्रसिद्धः। अल्पमेधसः कृत्स्नवेद-तदर्थावगमोपयुक्तबुद्धिशून्यान् पुंसः पुरुषान् दृष्ट्वा वेद एव तरुः तस्य शाखाः चक्रे ऋग्यजुस्सामादिभेदेन तदवान्तरभेदेन च विभक्तवानित्यर्थः ॥ २१ ॥

**नरदेवत्व** मिति। अतः परम् अष्टादशे अवतारे सुरकार्यं रावणवधरूपं कर्तुमिच्छया नरदेवत्वं क्षत्त्रियत्वं प्राप्तः श्रीरामरूपेणावतीर्ण इत्यर्थः। समुद्रविषयको निग्रहः आदिर्येषां तानि वीर्याणि कर्माणि चक्रे ॥ २२ ॥

एकोनविंशे विंशतिमे चावतारे भगवान् वृष्णिषु यादवेषु रामकृष्णाविति जन्मनी। रामः बलरामः, कृष्णश्चेति द्वे जन्मनी प्रादुर्भावरूपे प्राप्य भुवो भार महरत्। रामस्त्वेकोनविंशः, कृष्णस्तु विंशतितमोऽवतार इत्यर्थः ॥ २३ ॥

ततः कलौ युगे सम्प्रवृत्ते सति सुरद्विषामार्हतानामसुराणां वा सम्मोहनार्थं भगवान् कीकटेषु देशेषु[1] जिनस्य सुतो भविष्यति नाम्ना बुद्ध इति प्रसिद्धः। अयमेव विंशोऽवतारः ॥ २४ ॥

1. A,B Omit देशेषु

**विज०** ततस्स हरिः सप्तदशे अवतारे पराशरात् सत्यवत्यां जातः अल्पमेधसः अल्पप्रज्ञान् पुरुषान् दृष्ट्वा वेदतरोः शाखाः चक्रे कृतवान्। रामावतारात् पूर्वं व्यासावतारसत्त्वं ज्ञेयम् ॥ २१ ॥

अतः परं सप्तदशात् परं पश्चात् अष्टादशावतारे देवकार्यकरणेच्छया नरदेवत्व राजत्वं प्राप्तः समुद्रनिग्रहादीनि सेतुबन्धनपूर्वाणि वीरकर्माणि कृतवान् इत्येकान्वयः ॥ २२ ॥

स भगवान् एकोनविंशे विंशतितमे[2] अवतारे वृष्णिषु नाम्ना रामकृष्णाविति जन्मनी प्राप्य भुवो भरम् असुरपृतनालक्षणम् अहरत् इत्येकान्वयः। जन्मनी इति द्विवचनात् बलभद्रे विशेषावेशो ज्ञातव्यः ॥ २३ ॥

ततः कलौ युगे सम्प्रवृत्ते सति सुरद्विषां त्रिपुरवासिनां दैत्यानामयोग्यानां वेदमार्गे प्रवर्तमानानां मोहाय नाम्ना बुद्धः कीकटेषु मगधविषयेषु जिनसुतः जिनेन सुतत्वेन वृतः भविष्यति इत्यन्वयः ॥ २४ ॥

1. K adds अपि 2 K,M विंशतिमे

**रा० कृ०** ततः सप्तदशे अवतारे पराशरात् सत्यवत्यां जातो बादरायण इति प्रसिद्धः अल्पमेधसः पुंसः दृष्ट्वा तान् अनुग्रहीतुं वेदतरोः शाखाः चक्रे। श्रीरामावतारात् प्राक् व्यासावतार कथनं लेखकप्रमादापतितमिति चिन्त्यते ॥ २१ ॥

अतःपरम् अष्टादशे अवतारे सुरकार्यचिकीर्षया नरदेवत्वामापन्नः श्रीरामरूपेणावतीर्णः समुद्रनिग्रहादीनि वीर्याणि वीरकर्माणि चक्रे कृतवान्। मानवजात्युत्पत्त्यनन्तरं राजधर्मोपदेशाय अयमवतारः ॥ २२ ॥

सः भगवान् एकोनविंशे विंशतिमे विंशतितमे चावतारे वृष्णिषु यादवेषु रामकृष्णाविति बलरामश्रीकृष्णाविति जन्मनी प्राप्य भुवो भरमहरत् ।

पूतनासंहारमारभ्य आभारतसङ्ग्रामसमाप्ति कृतो दुष्टसंहारो धर्मसंस्थापनाय उद्दिष्टः। तद्धर्मसंस्थापनम् अद्यापि भगवद्गीतामुखेन निरुह्यत एव ॥ २३ ॥

ततः कलौ युगे सम्प्रवृत्ते सुरद्विषां सम्मोहाय कीकटेषु गयाप्रदेशे जिनसुतः नाम्ना बुद्धो भविष्यति।

अत्र राक्षससम्मोहनं नाम कामक्रोधादीनां तत्प्रेरितानां दुष्टानां च प्रेममार्गे निर्वीर्यतापादनं, अथवा प्रेम्णा विजितत्वम् ।

अयं बुद्धो न शौद्धोदनिः गौतमबुद्धः। अपि तत्प्राक्कालिकः अन्य एव स जिनसुतः। तस्याराधकाः जैनाः। जैनगौतमबुद्धयोर्विषये चरित्रलेखकैः उक्ताः अंशाः भ्रान्तिमूलका इति ज्ञायते॥ २४॥

**अथासौ युगसन्ध्यायां दस्युप्रायेषु राजसु ।**
**जनिता विष्णुयशसो नाम्ना कल्कि[1]र्जगत्प[2]तिः ॥ २५ ॥**

**अवतारा ह्यसङ्ख्येया हरे स्सत्त्वनिधेर्द्विजाः ।**
**य[3]थाऽविदासिनः कुल्याः सरसस्स्युस्सहस्रशः ॥ २६ ॥**

**ऋषयो मं[4]नवो देवा मनुपुत्ता महौजसः ।**
**कलास्सर्वे हरेरेव सप्रजापतयस्त[5]था ॥ २७ ॥**

**ए[6]ते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम् ।**
**इन्द्रारिव्याकुलं लोकं मृडयन्ति युगे युगे ॥ २८ ॥**

1 K.M °ल्की ज° 2 H.V °द्गुरुः 3 K.M यथा विदा 4 H.V मुनयो, W पितरो 5 B.H I K M V °सूस्मृता. 6 H एतेंऽशांश°. K.M एते स्वांश°

**श्रीध०** कल्क्यवतारमाह — **अथेति**। युगसन्ध्यायां कलेरन्ते विष्णुयशसो ब्राह्मणात् सकाशात् जनिता जनिष्यते॥ २५॥

अनुक्तसर्वसङ्ग्रहार्थमाह — **अवतारा** इति। असङ्ख्येयत्वे दृष्टान्तः यथेति। अविदासिनः अ[1]पक्षयशून्यात्, दसु उपक्षये इत्यस्मात् नि[2]ष्पन्नः। सरसः सकाशात् कुल्याः क्षुद्रप्रवाहाः॥ २६॥

विभूतीराह — **ऋषय** इति॥ २७॥

तत्र विशेषमाह — **एते चेति**। पुंसः परमेश्वरस्य केचिदंशा केचित् कला विभूतयश्च। तत्र मत्स्यादीनामवतारत्वेन सर्वज्ञत्वसर्वशक्तिमत्त्वेऽपि यथोपयोगमेव ज्ञानक्रियाशक्त्याविष्करणम्। कुमारनारदादिष्व[3]धिकारि-केषु यथोपयोगम् अंशकलावेशः। त[4]त्र कुमारादिषु ज्ञानावेशः, पृ[5]थ्वादिषु शक्त्यावेशः। कृष्णस्तु भगवान् सा[6]क्षात् नारायण एव, आविष्कृतसर्वशक्तित्वात्। सर्वेषां प्रयोजनमाह। इन्द्रारयो दैत्याः तैः व्याकुलम् उपद्रुतं लोकं मृडयन्ति सुखिनं कुर्वन्ति॥ २८॥

1 A उ° 2 A,B Omit निष्पन्नः 3 H °ष्वधिकारेषु 4 B तेषु 5 A Omits पृथ्वादिषु शक्त्यावेशः 6 A Omits साक्षात्

**वीर॰** अथासौ जगत्पतिः भगवान् युगयोः कलिकृतयुगयोः सन्ध्यायां सन्धौ राजसु दस्युप्रायेषु चोरप्रायेषु केवलमधर्मबहुलेषु सत्सु तद्वधार्थं विष्णुयशसो जनिता विष्णुयशसः पुत्ररूपेणावतरिष्यति, स च नाम्ना कल्किरिति प्रसेत्स्यति॥ २५॥

दिङ्मात्रमेतद्दर्शितमित्यभिप्रायेण आह — **अवतारा** इति। हे द्विजाः! सत्त्वनिधेः शुद्धसत्त्वमूर्तेः भगवतोऽनिरुद्धात् एते अवतारा अन्येऽपि **असङ्ख्येयाः** स्युः प्रवर्तन्ते। यथा अविदासिन अशोष्यात् सरसः सहस्रशः कुल्याः स्युः स्पन्दन्ते, तद्वत्। कुल्याः क्षुद्रनद्यः॥ २६॥

के ते इत्यत आह — **ऋषय** इति। ऋषयो मन्त्रद्रष्टारो वशिष्ठादयो मुनयः, केवलस्वात्मपरमात्म याथात्म्यमननशीलाः शुकादयः, देवाः इन्द्रादयः, मनुपुत्राः प्रियव्रतादयः, महौजसः महाप्रभावाः सप्रजापतयः दक्षादिभिस्सहिताः प्रजापतयश्च इत्यर्थः। त एते सर्वे हरेरेव कलाः स्मृताः, भगवदंशेनैव सम्भूता इत्यर्थः। तथाचोक्तं भगवता — "यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा, तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवम्"। (भ. गी. 10-41) इति॥ २७॥

एतद्वचनार्थमेवाऽऽह — **एत** इति। एते ऋषिप्रभृतयस्तु पुंसः अनिरुद्धाख्य स्यांशकलाः अंशांशसम्भूताः। "कृष्णस्तु भगवान् स्वयम्" इति श्रीकृष्णस्य पूर्णावतारत्वमुक्तम् उदाहृतभगवद्गीतावचनेन। विभूत्यादिमतां जन्तूनां ममत्वेन निर्दिष्टश्रीकृष्णस्य तेजोंऽशसम्भवत्वं श्रीकृष्णस्य तु[2] पूर्णत्वं चावगतम्। अत्रापि भगवानित्यनेन कृ[4]ष्णस्य पूर्णषाड्गुण्यत्वमवगतम्। यद्वा अत्रैत इत्यनेन पूर्वोक्तेषु हिरण्यगर्भसनकादिषु केषाञ्चित् वराहनारायण मत्स्यकूर्ममोहिनी-नृसिंहवामनश्रीरामावताराणां पूर्णानां सत्त्वेऽपि छत्रिन्यायेन सर्वेऽप्यवताराः परामृश्यन्ते। तत्र पूर्णत्वं नाम षाड्गुण्यपूर्णत्वेन रूपेण साक्षादवतीर्णत्वम्। अंशांशसम्भूतत्वं नाम तत्तज्जीवान्तरात्मतया अवस्थितस्य षाड्गुण्यपूर्णस्य भगवतः केनाप्यैश्वर्यवीर्यादि गुणलेशेन जीवद्वारा आविर्भूतेन विशिष्टतया सञ्जातत्वम्। निरंशस्य ब्रह्मस्वरूपस्यकदेश-भेदेन आविर्भावासम्भवात्। ननु धर्मिस्वरूपैकदेशवाचिनोंऽशशब्दस्य कथं गुणपरत्वमिति चेत् न। अपृथक्सिद्ध-विशेषणस्यापि अंशशब्दवाच्यत्वात् विशिष्टवस्त्वेकदेशत्वस्यैव अंशपदप्रवृत्तिनिमित्तत्वात्, विशिष्टवस्त्वेकदेशत्वञ्च विशेषणविशेष्ययोः एकदेशतया द्वयोरप्यविशिष्टम्। वाराहाद्यवताराणां पूर्णत्वं तु तत्तत्पुराणादिभ्य एव अवगन्तव्यम्।

सर्वावतारसाधारणं प्रयोजनमुपसंहरति इन्द्रेति। इन्द्रारिभिः असुरादिभिः व्याकुलम् उपद्रुतं लोकं युगे युगे प्रतियुगं मृडयन्ति सुखयन्ति[5]॥ २८॥

1 A.B °वद्वच° 2 A.B omit तु 3 A.B स्थापितम् 4 A.B omit कृष्णस्य 5 A.B omit सुखयन्ति।

**विज०** अथ बुद्धावतारात् **अनन्तरमसौ** जगत्पतिः पद्मनाभो युगसन्ध्यायां प्राप्तायां राजसु दस्युप्रायेषु **बहुलं चोरेषु** सत्सु नाम्ना कल्किनाम्ना विष्णुयशसो विप्रात् जनिता उत्पत्स्यतीत्येकान्वयः॥ २५॥

हरेरवताराणां अनन्तत्वात् अनन्तपुरुषायुषाऽपि समापयितुं नास्माकं शक्तिरस्तीत्यभिप्रेत्याऽऽह — **अवतारा** इति। **हे द्विजाः!** सत्त्वनिधेः **बलज्ञानादिमहागुणानधानस्य** हरेरवतारा **असङ्ख्येया** हि यस्मात् तस्मात् प्राधान्यतः **सङ्ख्याताः**, न साकल्येन समापयितुं शक्याः। **तत्रोदाहरणमाह** यथेति। यथाऽविदासिनः उन्नतस्थलात् भिन्नाद्वा सरसः सहस्रशः कुल्याः क्षुद्रनद्यः स्युरिति। इदं मन्दमतीनपेक्ष्योक्तम्, न तु योगिनः। क्षुद्रनदीनां तैः **सङ्ख्येयत्वे**ऽपि न हरेरवताराः **सङ्ख्यातुं** शक्यन्त इत्यतो **बुद्ध्यवतारार्थमिति** ज्ञातव्यम्॥ २६॥

इदानीं प्रतिबिम्बांशानाह — **ऋषय** इति। मनुपुत्राः प्रियव्रतादयः। प्रजापतिभिः दक्षादिभिः सहिता एते **ऋष्यादयः**। हरेः कलाः भिन्नांशाः स्मृतिषु उक्ताः॥ २७॥

तर्हि के स्वरूपांशा इति तत्राऽऽह — **एत** इति। स एव प्रथमम् इत्यारभ्य अथासौ इत्यनेन प्रोक्ता एते शेषशायिनः परमपुरुषस्य स्वांशकलाः स्वरूपांशावताराः ; न तत्र अंशांशिनां भेदः प्रतिबिम्बांशवत्। किमुक्तं भवति? कृष्णो मेघश्यामः शेषशायी मूलरूपी पद्मनाभो भगवान् स्वयं तु स्वयमेव न शाखिशाखावत् भेदाभेदोऽपीति भाव इत्याह। **इन्द्रारिभिः** दैत्यैः व्याकुलं जनं **तत्स्थानं** च युगे युगे अवतीर्य मृडयन्ति रक्षन्तीत्यन्वयः॥ २८॥

**रा० कृ०** अथासौ जगत्पतिः युगसन्ध्यायां कलिकृतयुगयोः सन्धौ राजसु दस्युप्रायेषु बाहुल्येन चोरेषु सत्सु विष्णुयशसो ब्राह्मणात् नाम्ना कल्किः जनिता उत्पत्स्यते॥ २५॥

हे द्विजाः! यथा अविदासिनः अपक्षयरहितात्सरसः कुल्याः अल्पसरितः सहस्रशः स्युः। तथा **सत्त्वनिधेः** हरेः **असङ्ख्येया** अवतारा भवेयुर्हि॥ २६॥

ऋषयः मुनयः देवाः महौजसः सप्रजापतयो मनुपुत्राः सर्वे हरेरेव कलाः अंशाः स्मृताः। प्रजासु धर्मव्यवस्थापनशीलाः अधिकारिणः विष्णोः क्षत्रियरूपाः अंशावताराः। वेदोद्धरण सत्कर्माचरणानुशासनशीलाः सर्वे विष्णोः ब्राह्मणरूपाः अंशावताराः इन्द्रियविजयिनो विश्वहितार्थिनो लोकसञ्चारिणो महर्षयः नारायणस्य ज्योतिर्मयावताराः। एवमसङ्ख्येयाः भगवतोऽवतारा वर्तन्ते। अत एव भगवान् स्वयमाह — **"यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव** वा। तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवम्" (भ. गी. 10-41) इति॥ २७॥

एते पूर्वोक्ताः ऋषिप्रभृतयः पुंसः परमपुरुषस्य अंशकलाः केचिदंशभूताः, केचित् कलाभूताः। कृष्णस्तु स्वयं भगवान् पूर्णावतार इत्यर्थः। एते सर्वेऽपि युगे युगे प्रतियुगं इन्द्रारिव्याकुलं असुरोपद्रुतं लोकं मृडयन्ति सुखयन्ति।

अत्र असुराः आसुरगुणसम्पन्नाः जनाः। मानवास्तावत् द्विविधाः दैवगुणसम्पन्नाः, आसुरगुणसम्पन्नाश्चेति। दैवासुरसम्पद्विभागश्च भगवता गीतासु षोडशेऽध्याये सुव्यक्तं कथितः। आसुरगुणसम्पन्नजनकृता बाधैव असुरबाधेति पुराणेषु कथ्यते। एतद्बाधानिवारणार्थं धर्मरक्षणार्थं च न अवतारोत्पत्त्यावश्यकता। अथ अन्तर्यामिणा दैवांशेन आविष्टैः जीवैरेव धर्मसंस्थापनं विधीयते। लोके हि केनचित् धूर्तेन अवमानितायाः कस्याश्चन स्त्रियः आक्रन्दनमाकर्ण्य परिसरवर्तिभिः जनैः तस्याः संरक्षणम्, अपि च चौर्यक्रौर्यादिपीडितानां दुर्बलानां अगतिकानां च अनाहूतैः कैश्चिदावेशपूरितैः जनैः क्रियमाणं परित्राणं च दृश्यते। एतादृशेषु सन्निवेशेषु अन्तर्यामिणा दैवांशेन आविष्टाः ते जनाः कार्येषु प्रवर्तन्ते। प्रवृत्ते च दैवांशे आसुरगुणाः अकिञ्चित्करा एव। तथाहि —अस्मन्निन्दकाय जनाय क्रुद्धा अपि वयं अकस्माद्विपन्नस्य तस्य रक्षणाय प्रयतामहे इति अस्मदनुभवविषय एव। एते सर्वेऽपि सन्निवेशाः भगवदावेशावतारतत्त्वं कथयन्ति।

किञ्च प्रागुक्तासु तदन्यास्वपि नितान्तावपत्करदशासु यदा मनुष्याः आसुरगुणाभिभूततया सद्गुणप्रत्ययविरहिता. स्वार्थैकपरायणाः परस्परक्षेमनिरपेक्षाः अन्योऽन्यं कलहायन्ते तदा नारायणः स्वावतारमुपसंहरतीति, स च तेषां विनाशकाल इति तदेतत्सर्वमपि कालात्मना भगवता स्वलीलाविशेषान्तर्भागित्वेन सङ्कल्पित इति च विज्ञेयं भवति। अत्र द्वे प्रमाणे — एकं तावत् भारतप्रधनप्राक्कालिकं धार्तराष्ट्रपक्षप्रवर्तनम्। तदा भीष्मद्रोणादयः सर्वधर्मविशारदाः भागवतोत्तमाः महावीरा अपि दुर्योधनपक्षमाश्रित्य तदनुमोदिधृतराष्ट्रानुयायिनः सन्तः पाञ्चालीवस्त्रापहरणादिविषमघट्टेषु तटस्था बभूवुः। एवम् आसुरगुणोपहतास्ते पश्चादर्जुनेन युद्धे निहताः। स्वयं कालस्वरूप इति एतद्वधे अर्जुनो निमित्तमात्र इति भगवतैवोक्तं गीतासु। यथा — "कालोऽस्मि लोकक्षयकृत्प्रवृद्धः" इति, "मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन्!" (भ. गी. 11-32, 33) इति च।

अन्यत्तु श्रीकृष्णनिर्याणात् प्राक् यादवानां मनःप्रवृत्तिः। एवमेव तत्तत्कालीनजनमनःप्रवृत्तिपर्यालोचनया भगवदवताराऽऽविर्भावोपसंहारकालोऽवसेयः॥ २८॥

**जन्म गुह्यं भगवतो य एतत्प्रयतो[1] नरः ।**
**सायं प्रातर्गृणन् भक्त्या दुःखग्रामाद्विमुच्यते ॥ २९ ॥**

**एतद्रूपं भगवतो ह्यरूपस्य चिदात्मनः ।**
**मायागुणैर्विरचितं महदादिभिरात्मनि ॥ ३० ॥**

**यथा नभसि मेघौघो[2] रेणुर्वा पार्थिवोऽनिले ।**
**एवं द्रष्टरि दृश्यत्व मारोपितमबुद्धिभिः ॥ ३१ ॥**

**अतःपरं यदव्यक्तमव्यूढगुणबृं[3]हितम् ।**
**अदृष्टाश्रुतवस्तुत्वात् स जीवो य[4]त्पुनर्भवः ॥ ३२ ॥**

1 K,M एवं प्र° 2. K,M,W °घाः 3 A,G,N °व्यूहितम् 4 K,M,W यः पुन°

**श्रीध०** एतत्कीर्तनफलमाह — **जन्मेति**। गुह्यम् अतिरहस्यं जन्म। प्रयतः शुचिस्सन् दुःखग्रामात् संसारात् ॥ २९ ॥

विमुच्यत इति यदुक्तं तत्र कथं देहद्वयसम्बन्धे सति तद्विमुक्तिः इत्याशङ्क्य [1]देहद्वयसम्बन्धस्य भगवन्मायोत्थाविद्याविलसितत्वात् एतच्छ्रवणादिजनितविद्यया तन्निवृत्तिरुपपद्यत इत्याशयेनाऽऽह — **एतदिति** पञ्चभिः। अरूपस्य चिदेकरसस्य आत्मनो जीवस्यैतत् स्थूलं रूपं शरीरं भगवतो या माया तस्याः गुणैः महदादिरूपैः विरचितं [2]कृतम्। क? आत्मनि आत्मस्थाने शरीरं कृतमित्यर्थः ॥ ३० ॥

कथमित्यपेक्षायाम् स्वरूपावरणेन तदध्यास इति सदृष्टान्तमाह — **यथेति**। यथा वाय्वाश्रितो मेघौघो नभसि आकाशे अबुद्धिभिः अज्ञैः आरोपितः। यथा वा पार्थिवो रेणुः तद्गतं धूसरत्वादि अनिले। एवं द्रष्टरि आत्मनि दृश्यत्वं दृश्यत्वादिधर्मकं शरीरम् आरोपितम् इत्यर्थः ॥ ३१ ॥

**अत** इति। किञ्च अतः स्थूलाद्रूपात् परम् अन्यदपि रूपमारोपितमित्यनुषङ्गः। कथम्भूतं तत्? यदव्यक्तं सूक्ष्मम्। तत्र हेतुः अव्यूढगुणबृं[3]हितम् व्यू[4]हः करचरणादिपरिणामः न[5] त[6]था, अव्यूढाः अपरिणताः ये गुणाः [7]करचरणादयः, तैः[8] गुणैः बृंहितम् रचितं, आकारविशेषरहितत्वात् अव्यक्तमित्यर्थः। एतदेव कुतः? तत्राऽऽह अ[9]दृष्टेति। अदृष्टाश्रुतवस्तुत्वात् यच्च आकारविशेषवद्वस्तु तत् अस्मदादिवत् दृश्यते श्रूयते वा इन्द्रादिवत्। इदं तु न तथा। तर्हि तस्य सत्त्वे किं प्रमाणम्? तत्राऽऽह — स जीवः जीवोपाधिः लि[10]ङ्गशरीरम् "जीवो जीवेन निर्मुक्तः", "जीवो जीवं विहाय च[11]" इत्यादौ जीवोपाधौ लिङ्गदेहे जीवशब्दप्रयोगः[12] उ[13]पचारात्, जीवोपाधितया कल्प्य[14]त इत्यर्थः। ननु स्थूलमेव भोगायतनत्वात् जीवस्य उपाधिरस्तु, किमन्यकल्पनया इत्यत आह। यत् यस्मात् सूक्ष्मात् पुनर्भवः पुनर्जन्म [15]भवतीति जीवस्य उत्क्रान्तिगत्यागतीनां तेन विना असम्भवादिति भावः ॥ ३२ ॥

1 H,V देहसम्बन्धस्य 2 A,B omit कृतम् 3 A,B,V °व्यूहितम् 4 H व्यूढम् 5 B,V omit न 6 V omits तथा, H अथ 7 A,B omit करचरणादयः 8 A,B तैः व्यूहितम् 9 A,B omit अदृष्टेति 10 A,B omit लिङ्गशरीरं 11 A,B omit च 12 A B °गात् 13 A,B omit उपचारात् 14 H,V °ल्पि° 15 A,B omit भवतीति जीवस्य

**वीर०** अवतारकीर्तनादिफलमाह — **जन्मगुह्य**मिति। यः कश्चिन्नरो भगवतः एतज्जन्म गुह्यम् अवताररहस्यम्। सायंप्रातः समाहितचित्तो भक्त्या गृणन् कीर्तयन् दुःखजातात् विमुच्यते संसारात् मुक्तो भवतीत्यर्थः। जन्म गुह्यम् इत्यनेन भगवज्जन्म, न जीवजन्मवत् कर्ममूलम्, अपि तु स्वसङ्कल्पमूलमित्यभिप्रेतम् ॥ २९ ॥

तदेव दर्शयिष्यन् रूपप्रसङ्गात् न केवलं अवतीर्णमेव रामकृष्णाद्याख्यं भगवतो रूपम्, अपि तु परिदृश्यमानं प्रकृतिगुणवैषम्यमूलमहदादिकृतं जगदपि तद्रूपं इत्याह — **एतद्रूप** मिति। चिदात्मनः ज्ञानस्वरूपस्य। अत एव अरूपस्य अमूर्तस्वरूपस्य भगवतः मायागुणैः गुणपरिणामरूपैः महदादिभिः आत्मनि आधारभूते स्वस्मिन् एतत्परिदृश्यमानं जगदात्मकं रूपं विरचितम्[1]। आत्मनि इत्यनेन रूपशब्देन च जगतो भगवद्रूपत्वं प्रतिपादितम् शरीरस्य आत्मनो[2] धार्यत्वनियमात् ॥ ३० ॥

एवं जगदन्तर्गतदेवमनुष्यादिशरीराणामपि भगवद्रूपत्वे सति जीवानां केवलं देवोऽहं, मनुष्योऽहम् इत्यभिमानो[3] भ्रम एवेत्याह — **यथेति**। यथा मेघसमूहाः नभसि आकाशे अबुद्धिभिः आकाशयाथात्म्याविद्भिः आरोपिता। यथा च पृथिव्याः सम्बन्धी रेणुः धूलिः अनिले तद्याथात्म्याविद्भिः आरोपिता एवमबुद्धिभिः प्रत्यगात्मयाथात्म्याविद्भिः द्रष्टरि जीवे दृश्यत्वमारोपितम्। देवादिशरीरजातम् 'अहं मम' अभिमानविषयत्वेन आरोपितमित्यर्थः। अतो न देवादिशरीरजातं जीवस्वरूपमिति भावः। यद्यपि देवादिशरीरस्य तदभिमानिजीवेन धार्यत्वात् तं प्रति रूपत्वमस्त्येव, तथाऽपि "य आत्मनि तिष्ठन् यस्याऽऽत्मा शरीरम्*" (बृह. उ. 3-7-22) इत्याद्युक्तरीत्या जीवस्यापि परमपुरुषधार्यत्वात् मुख्यधारकत्वं परमात्मनिष्ठमेवेति तं प्रत्येव देवाद्यचेतनजातं मुख्यं रूपं देहात्मनोः उभयोरपि परमपुरुषधार्यत्वज्ञानं[4] भ्रमरूपं प्रकृतिपुरुषयोः अब्रह्मात्मकत्वज्ञानं प्रकृत्यादौ[5] च आत्माभिमानः स्वातन्त्र्याभिमानः प्रकृतेः प्रत्यगा-[6]त्मैकधार्यत्वाभिमानश्च अबुद्धिकृत इत्यभिप्रायः ॥ ३१ ॥

ननु दृश्यधर्मः तस्मिन्नारोपितश्चेत् स जीवः कीदृश इत्यत्राऽऽह — **अत** इति। अतः अचिदात्मकदृश्यप्रपञ्चात् परं विलक्षणं तत्त्वं स जीवः। परत्वमेव दर्शयितुं विशिनष्टि। अव्यक्तं बाह्येन्द्रियैः द्रष्टुमशक्यं, कुत इत्यपेक्षायां हेतुः अदृष्टाश्रुतवस्तुत्वात् इति। तत्र हेतुमाह अव्यूढगुणबृंहितमिति। व्यूढैः गुणैः बहुधा विभक्तैः गुणैः बृंहितं स्थूलीकृतं यन्न भवति तत् अव्यूढगुणबृंहितम्। अनेन अचिद्व्यावृत्तिः कारणदशायाम् अस्थूलम् अचेतनम्, कार्यदशायां हि व्यूढैः गुणैः सत्त्वादिभिश्च अनिवतं स्थूलीभवति, न तथा इत्यर्थः। अत एव अदृष्टाश्रुतवस्तुत्वं[7] तदन्यार्थे[8] नञ्। तत्र दृष्टं कार्यावस्थितमचिद्द्रव्यम्[9]। श्रुतं तु कारणावस्थम्। "अचेतना परार्था च नित्या सततविक्रिया" (प. सं. 2) इत्यादिशास्त्रैः श्रुतं तदुभयविलक्षणवस्तुत्वादव्यक्तम् "अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते" (भ. गी. 8-20) इति हि भगवता गीयते। एवम्भूतं यद्वस्तु स जीवः यः पुनर्भवः प्रकृतिसङ्गात् पुनःपुनर्जन्मभाक् इत्यर्थः। यत्पुनः इति पाठे यतो यत्सम्बन्धात् पुनर्भवः ततः परमित्यन्वयः ॥ ३२ ॥

---

1 A,B चिदचित्त्वम् 2. A,B °नो 3 A,B °मानिनो 4 W adds न 5 W प्रकृतौ आत्माभिमानः 6 A,B प्रसङ्गादात्मैक° 7. A,B °त्वात् 8 A,B °र्थत्वात् 9 W °स्थमचि° (*काण्वपाठसम्बन्धिविज्ञानपर्यायस्थाने इदमुपलभ्यते। बृह. उ. 3-7-22)

**विज०** फलमाह — **जन्मेति**। प्रयतः प्रकर्षेण निर्जितेन्द्रियग्रामो यो नरो जनः एवं उक्तप्रकारेण जन्मरहस्यं सायं प्रातः भक्त्या गृणन् पठन् सांसारिकदुःखसमूहात् मुच्यत इत्यन्वयः ॥ २९ ॥

इदानीं प्रतिमारूपमाह — **एतदिति**। मायागुणैः प्रकृतिविकारैः महदहङ्कारादिभिः उपादानकारणैः आत्मनि सर्वगते हरिणा विरचितमेतज्जडं ब्रह्माण्डं अरूपस्य प्रकृतिविकृतिरूपरहितस्य चिदात्मनः केवलज्ञानस्वरूपस्य भगवतो रूपं प्रतिमास्थानीयम्। हि हेतोः यस्मात् जडं, तस्मात् प्रतिमैव न साक्षात् स्वरूपम्; चिदेकरूपस्य भगवतो मायाकल्पितसत्त्वादिगुणैः महदाद्याकारेण परिणतैः एतत्प्रतीयमानं विराड्रूपम् आत्मनि चिद्रूपे कल्पितम्। अत एव तन्मिथ्या, अतस्मिन् तद्बुद्धेः इति यैः कैश्चिदुच्यते, तन्न युक्तम्, प्रमाणविरोधात् इत्यस्मिन्नर्थे वा हिः॥ ३०॥

प्रतिमात्वकल्पनामन्तरेण साक्षाद्रूपत्वं किं न स्यात् इत्याशङ्क्य सा भ्रान्तिरिति सोदाहरणमाह — **यथेति**। यथा मेघौघाः नभसि आरोपिताः। मेघौघान् दृष्ट्वा अयमाकाश इति कल्पयन्ति विवेकशून्याः। यथा अनिले वायौ पार्थिवो रेणुः आरोपितः, वायुना उद्धूयमानं ऊर्ध्वमुखं रेणुं दृष्ट्वा अयं वायुरिति आकाशवाय्वोः चाक्षुषत्वाभावात् भ्रान्तिरेव सा। एवं द्रष्टरि सर्वज्ञे[1] भगवति प्रतिमां दृष्ट्वा मनुष्यदृष्यगोचरे अबुद्धिभिः अज्ञैः भ्रान्त्या दृश्यत्वं जडरूपत्वं आरोपितं कल्पितम्[2], तस्मात् भ्रान्तम्, अतो न साक्षाद्रूपम्, प्रतिमैव इति भावः॥ ३१॥

एवं हरेः वासुदेवादिपरमं रूपं ब्रह्माण्डाख्यं प्रतिमारूपं च निरूप्य जैवं रूपमाह — **अत** इति। यत् जैवं रूपम् अतः उक्तयोः जडेश्वररूपयोः परं यदव्यक्तं सूक्ष्मम् अव्यूढगुणबृंहितम् अनादिकालात् कदाचिदपि अनपगतसत्त्वरजस्तमोगुणपूर्णं पश्चात् अदृष्टाश्रुतवस्तुत्वात् अश्रुतामतानुपासितानपरोक्षितपरमात्मस्वरूपत्वात् पुनः पुनः भवः उत्पत्तिः यस्य सः तथोक्तः पुनः पुनः जायमानो म्रियमाणश्च सः जीवः। तस्मात् निर्विवादं ईश्वरवशं जैवं रूपमिति भावः। अतः कार्यरूपात् परं व्यतिरिक्तं यदव्यक्तं यदनभिव्यक्तं रूपादिव्यक्तिकारणसाधनैः शून्यम् अव्यूढम् अनभिव्यक्तम् गुणानां बृंहितं कार्यं यस्मिन् तत्, अव्यूढगुणबृंहितम्। अत एव अदृष्टाश्रुतवस्तु तस्मात् अव्यक्तं स प्रसिद्धः जीवः यत् यस्मात् पुनः[3] भवति जीवेन सह वर्तमानः पुनः भवतीति पुनर्भवो देहादिप्रपञ्चलक्षणः संसारो यस्मात् भवतीति च तत् कारणं इति यत् व्याख्यानं तत् अदृष्टाश्रुतवस्तुत्वात् इति हेत्वभिधानं विरुद्ध्यते[4]। अस्मिन्[5] पक्षे यददृष्टादिविशेषणैः विशिष्टं तद्वस्तु मूलकारणमिति वक्तव्यं[6] प्रकृतानुपयुक्तं च। अत्र देवादिप्रपञ्चस्य मिथ्यावाचिपदं[7] प्रक्षेप्यम्, अतः यत्किञ्चित् एतत्॥ ३२॥

---

1 A,B °गे 2 A ज° 3. A,B omit पुनःभवति जीवेन सह वर्तमानः 4 K,M °द्ध्येत 5 A,B त° 6. K °व्यत्वेन 7 K °थ्यात्व°

**रा० कृ०** यो नरः यःकोऽपि जनः प्रयतः पवित्रस्सन् भगवतः एतद् गुह्यं जन्म सायंप्रातः भक्त्या गृणन् कीर्तयन् दुःखग्रामात् संसारात् विमुच्यते।

जननमरणविरहितस्य भगवतः अवतारत्वज्ञानम् एकवारपठनेन न भवति, अपि तु दीर्घकालिकपरिशीलनेनैव। तथाऽपि परिसरवर्तिमानवलक्षणानुशीलनदशायां तदनुबन्धनिबन्धनायाः रागद्वेषरूपायाः संसृतेः आपत्तिः; तामन्तरा अवताररहस्यज्ञानं तु भक्तिपूर्वक तदध्ययनानुविद्धलोकानुशीलनेनैव भवति॥ २९॥

अरूपस्य चिदात्मनः जीवस्य एतत् स्थूलं रूपं भगवतः मायागुणैः महदादिभिः आत्मनि विरचितम्॥ ३०॥

अबुद्धिभिः अज्ञैः यथा मेघौघः वाय्वाश्रित इति शेषः। नभसि आकाशे आरोपितः, यथा वा पार्थिवो रेणुः अनिले आरोपितः। एवं तथा द्रष्टरि दृश्यत्व मारोपितम् ॥ ३१ ॥

अतः स्थूलरूपात् इत्यर्थः, परम् अन्यत् भिन्नमिति यावत्। अव्यक्तं सूक्ष्मम् अव्यूढगुणबृंहितम् अपरिणतकरचरणादिगुणविरचितम् यद्रूपं वर्तते तदपि द्रष्टरि आरोपितमिति भावः। तच्च अदृष्टाश्रुतवस्तुत्वात् स जीवः जीवोपाधितया वर्तते। जीवोपाधिश्च लिङ्गशरीरं, तथा च तत् सूक्ष्मरूपं लिङ्गशरीरात्मना अवतिष्ठत इत्यर्थः। यत् यस्मात् सूक्ष्मरूपात् पुनर्भवः पुनर्जन्म भवति। जीवस्य उत्क्रमणगमनागमनानि तेनैव भवन्ति॥ ३२ ॥

**यत्रेमे सदसद्रूपे प्रतिषिद्धे स्वसंविदा ।**
**अविद्ययाऽऽत्मनि कृते इति तद्ब्रह्मदर्शनम् ॥ ३३ ॥**

**यद्येषोपरता देवी माया वैशारदी मतिः ।**
**सम्पन्न एवेति विदुर्महिम्नि स्वे महीयते ॥ ३४ ॥**

**एवं जन्मानि कर्माणि ह्यकर्तुरजनस्य च ।**
**वर्णयन्ति स्म कवयो वेदगुह्यानि हृत्पतेः ॥ ३५ ॥**

**स वा इदं विश्वममोघलीलः सृजत्यवत्यत्ति न सज्जतेऽस्मिन् ।**
**भूतेषु चान्तर्हित आत्मतन्त्रः षाड्वर्गिकं जिघ्रति षड्गुणेशः ॥ ३६ ॥**

**श्रीध॰** तदेवं उपाधिद्वयमुक्त्वा तदपवादेन जीवस्य ब्रह्मता माह— **यत्रेति**। यत्र यदा इमे सदसती[1] कार्यकारणरूपे स्थूलसूक्ष्मे रूपे स्वसंविदा श्रवणमननादिभक्त्या स्वरूपसम्यग्ज्ञानेन प्रतिषिद्धे भवतः। ज्ञानेन प्रतिषेधार्हत्वे तमेव हेतुमाह। अविद्यया आत्मनि कृते कल्पिते इति हेतोः तद्[2] ब्रह्म तदा[3] जीवो ब्रह्मैव भवतीत्यर्थः। कथम्भूतं दर्शनम्? ज्ञानैकस्वरूपम् ॥ ३३ ॥

तथाऽपि भगवन्मायायाः संसृतिकारणभूतायाः विद्यमानत्वात् कथं ब्रह्मता? तत्राऽऽह— **यदीति**। यदीत्यसन्देहे सन्देहवचनम्; 'यदि वेदाः प्रमाणं स्युः' इतिवत्। वैशारदी विशारदः सर्वज्ञः ईश्वरः तदीया देवी संसारचक्रेण क्रीडन्ती एषा माया यद्युपरता भवति। किमित्युपरता भवेत्— तत्राऽऽह मतिः विद्या। अयं भावः— यावदेषा अविद्या आत्मनां[4] आवरणविक्षेपौ करोति तावत् न उपरतमिति। यदा तु सैव विद्यारूपेण परिणता तदा सदसद्रूपं[5] जीवोपाधिं दग्ध्वा निरिन्धनाग्निवत् स्वयमेव उपरमेत् इति। तदा सम्पन्नो ब्रह्मस्वरूपं प्राप्त एवेति विदुः तत्त्वज्ञाः। किमतः परम्[6]? यद्येवं स्वे महिम्नि परमानन्दस्वरूपे महीयते पूज्यते, विराजत इत्यर्थः॥ ३४ ॥

यथा जीवस्य जन्मादिमाया एवं ईश्वरस्यापि जन्मकर्मादिमाया[7] इत्याह— **एवमिति**। अकर्तुः कर्माणि, अजनस्य जन्मानि, हृत्पतेः अन्तर्यामिणः॥ ३५ ॥

तर्हि जीवात् ईश्वरस्य को विशेषः ? स्वातन्त्र्यमेव विशेष इत्याह — **स वा** इति। षाड्गर्गिकं इन्द्रियषड्गर्गविषयं जिघ्रति दूरादेव गन्धवत् गृह्णाति, न तु सज्जत इत्यर्थः कुतः ? षड्गुणेशः षडिन्द्रियनियन्ता ॥ ३६ ॥

---

1. A,B omit सदसती कार्यकारणरूपे 2. V स° 3 V स° 4 A °नः 5. A सद्रूपं 6 A,B omit परम् 7 A,B जन्मादिमाया

**वीर॰** तर्हि केनोपायेन प्रकृतिसङ्ग[1]मूलकपुनर्भवस्य निवृत्तिः, कीदृशं वा निवृत्तपुनर्भवं जीवरूपम् ? इत्यत्राऽऽह — **यत्रेति** द्वाभ्याम्। सदसच्छब्दौ कार्यकारणपरौ "असद्वा इदमग्र आसीत्। ततो वै सदजायत" (तैत्ति. उ. 2-7) इति प्रयोगात्। कारणावस्था च प्रलयदशा, ततश्चायमर्थः। यत्र आत्मनि इमे चिद्रूते सदसद्रूपे उत्पत्तिविनाशावित्यर्थः। अविद्यया अज्ञानेन आत्मनि कृते आरोपिते च तस्मिन्नात्मनि स्वसंविदा स्वशरीरकपरमात्मविषयसम्यग्ज्ञानेन प्रतिषिद्धे निवृत्ते भवतः। अनेन स्वसंविदेव पुनर्भवनिवृत्तिहेतुरिति दर्शितम्। इतिशब्दः प्रकारवाची इत्येवंविधं स्वसंविन्निवृत्तोत्पत्तिविनाशमित्यर्थः। अत एव दर्शनं ज्ञानं प्रकृतिसङ्गवियुक्तं[2] केवल परिशुद्ध[3]जीवात्मस्वरूपज्ञानं यत्तद् ब्रह्म गुणतो बृहत्त्वात् ब्रह्मशब्दवाच्यम्। मुक्तात्मस्वरूपम् "ब्रह्मभूयाय कल्पते" (भ. गी. 14-26) "ब्रह्मणो हि प्रतिष्ठाऽहम्" (भ. गी. 14-27) इति मुक्तात्मन्यपि ब्रह्मशब्दप्रयोगो दृश्यते॥ ३३ ॥

**यदीति**। यदि यदा एषा वैशारदी महदादिकार्यमुखेन विपुला एषा माया तन्मूला मतिः अभिमतिः। देहात्माभिमानादिरूपा च उपरता निवृत्ता भवति। उपरति रत्र सम्बन्धविरहः। "नित्या सततविक्रिया" (प. सं. 2) "गौरनाद्यन्तवती" (मन्त्रि. उ. 4) इति। मायाशब्दवाच्यायाः प्रकृतेः नित्यत्वावगमेन विनाशायोगात्। एव इत्यस्य तदा इत्यादि[4] तदैव सम्पन्ने परमात्मप्राप्त्या अभिव्यक्ते स्वे स्वकीये महिम्नि गुणाष्टकरूपे मुक्तैश्वर्यात्मके महिम्नि महीयते। 'मह-पूजायाम्' महशब्दात् आचारक्यजन्तात् कर्मण्यात्मनेपदम्। स्वकीय महिमलब्ध्या हेतुना परमव्योमवासिभिः बहुमतो भवतीति विदुः, मुक्तात्मस्वरूपयाथात्म्यविदः। यद्वा, सम्पन्न इति प्रथमान्ततया छेदः[5], स्वे[6] महिम्नि मुक्तैश्वर्ये सम्पन्नः तल्लब्ध्या समृद्धः महीयत इति निरवशेषत्वेन प्रकृतिसम्बन्ध तत्कार्यनिवृत्तौ आविर्भूतगुणाष्टकयुक्तः परब्रह्म अनुभवन् परमव्योमनिवासिभिः बहुमतोऽवतिष्ठते इत्यर्थः। अपहतपाप्मत्वादि[7]गुणाष्टकरूपमहिम्नि "प्रकाश्यन्ते न जन्यन्ते" इत्यादिशास्त्रेभ्यः स्वाभाविकत्वावगमात् स्वे महिम्नि इत्युक्तं भवति॥ ३४ ॥

तदेवं प्रसक्तानुप्रसक्ततया जीवस्वरूपं कथितम्[8]। अथ परमप्रस्तुतस्य भगवज्जन्मनो जीवजन्मविलक्षणत्वमाह[9] — **एव** मिति। अजनस्य जीववत् कर्मायत्तजननरहितस्य, अकर्तुः तद्वदेव पुण्यपापात्मककर्मरहितस्य हृत्पतेः हृदयकमलमध्यावस्थानेन पाति सर्वाणि भूतानि नियमयतीति हृत्पतिः[10]। तस्य सर्वान्तरात्मनो भगवतः एवमुक्तविधानि जन्मानि कर्माणि, कवयो वेदगुह्यानि वर्णयन्ति। कवयो ज्ञानाधिकाः। "न मुह्यात् चिन्तयन् कविः"। इति प्रयोगात् वेदगुह्यानि वेदरहस्यानि वर्णयन्ति। "अजायमानो बहुधा विजायते। तस्य धीराः परिजानन्ति योनिम्" (पु. सू. 2-1,2) इत्यादि हि वेदतात्पर्यविषयविभागप्रदर्शनपूर्वकं यादृशानि भावयति, तादृशानि वर्णयन्ति। तत्र हि अजायमान इत्यनेन जीवस्य या कर्मायत्तोत्पत्तिः सा ईश्वरस्य प्रतिषिध्यते। बहुधा विजायते इत्यनेन अकर्मायत्ता

स्वसङ्कल्पमूला च उत्पत्तिः बोध्यते। "न हिंस्यात् भूतानि", "पशुमालभेत" इत्यादिवत् विधिनिषेधयोः भिन्नविषयत्वावश्यंभावात् तयोः एकविषयत्वे पूर्वोत्तरव्याघातापत्तेः। एवम् उत्सर्गापवादसामान्यविशेषन्यायादिभिः निर्णेतव्यमिममर्थं कवय एव जानन्तीत्यभिप्रायेणोक्तम्। "तस्य धीराः परिजानन्ति योनिम्" (पु. सू. 2-2) इति तस्य प्रस्तुतस्य भगवतः योनिम् अधिष्ठेयं शरीरं धीराः परिजानन्ति। अकर्मायत्तत्वस्वेच्छोपात्तत्वाजहत्स्वभावत्वादिरूपेण धीरा एव जानन्तीत्यर्थः। अकर्तुः कर्माणि वेदगुह्यानि इत्यनेन कर्मविधिनिषेधवादिन्योः "निष्क्रियं निष्कलं" (श्वेता. उ. 6-19) "यस्य चै(वे)तत् कर्म स वै वेदितव्यः" (कौषी. उ. 4-18) इत्यादिश्रुत्योरपि कविभिः निर्णेतव्यो विषयविभागो द्रष्टव्य इति सूचितम्। इदं सगुणनिर्गुण-सशरीराशरीर-सविकाराविकारजीवब्रह्म-भेदाभेद श्रुतिविषयविभागस्याप्युपलक्षणम्। एवं च जन्मकर्मगुणशरीरविकारभेदप्रतिपादकानां वेदान्तवाक्यानां तत्प्रतिषेधपरैर्वाक्यैः बाध्यत्वं मृषावादिभिरुक्तमनादरणीयमिति भावः। तथा चोक्तम् वात्स्यैः वरदगुरुभिः —"यद्ब्रह्मणो गुणशरीरविकार भेद कर्मादि (जन्मादि) गोचर धियः (विधि) प्रतिषेधवाचः। अन्योन्य भिन्नविषया[11] न विरोधगन्धमर्हन्ति तत्र विधयः प्रतिषेधबाध्याः" (त. सा. 69) इति। अकर्तुः कर्माणि वेदगुह्यानि इत्यनेन भगवच्चेष्टितानां जगद्व्यापारादि[12]रूपाणां जीवचेष्टितसजातीयतया चिन्तयितुमशक्यानि। किन्तु तद्वैजात्येन वेदादेव अवगन्तव्यानि। तथैव च कविभिरपि वर्ण्यन्त इति चोक्तम्। कवयः वर्णयन्तीत्यनेन कवीनां भगवज्जन्मकर्मयाथात्म्यवेदनमूलक तद्वर्णयितृत्वोक्त्या कुबुद्धीनां भगवज्जन्मकर्मादियाथात्म्यवेदित्वं च सूचितमिति॥ ३५॥

तदेव उपपादयितुं तावत् भगवतः तच्चेष्टितस्य जीव-तच्चेष्टिताभ्यां वैजात्यं दर्शयति — **स वा** इति। स वै भगवान् अमोघलीलः। अमोघा अवितथा लीला यस्य सः। इदं परिदृश्यमानं चिदचिदात्मकं जगत् सृजति, अवति रक्षति, अत्ति संहरति, न च अस्मिन् जगति सज्जते च। लीलाशब्देन जगद्व्यापारस्य लीलात्वमुक्तम्। अनेन प्राचीनकर्मवासनानुगुणप्रवृत्तबुद्ध्यनुगुणकेवल सुखदुःखाद्यर्थजीवकर्मव्यावृत्तिः। अमोघपदेन लीलायाः[13] निर्विघ्नसमाप्तिं वदताऽपि अनेकान्तरायोपहतजीवकर्मवैजात्यमुक्तम्। समुदायेन जीववैजात्यं विश्वं सृजत्यवत्यत्ति इत्यनेन सर्गादिकर्मणः कृत्स्नजगद्विषयकत्वोक्त्या अनल्पत्वमवगतम्। अनेन अत्यल्पजीवकर्म[14]व्यावृत्तिः। अस्मिन् न सज्जत इति सङ्गनिषेधेन सङ्गहेतुकरागद्वेषादिराहित्यं लब्धम्। तेन वैषम्यनैर्घृण्याभावः। एवञ्च जीवव्यावृत्तिः। किञ्च भूतेषु चिदचिदात्मकेषु "न हिंस्याद्भूतानि" इत्यादाविव अत्र भूतशब्दः अचेतनसंसृष्टचेतनवाची अन्तर्हितः अन्तरात्मतया अवस्थितोऽपि भूतैरविज्ञात इत्यर्थः। जीवस्तु अनुमापकैः लक्षणैः विज्ञायत इति ततो व्यावृत्तिः। आत्मतन्त्रः स्वतन्त्रः, जीवस्तु कालकर्मदैवादिपरतन्त्रः। षड्गुणेशः ज्ञानशक्तिबलैश्वर्यवीर्यतेजसां षण्णां गुणानामीशः, अधिपतिः आश्रय इति यावत्। जीवस्तु तद्विपरीतगुणाश्रयः। षाड्गुणिकं षडिन्द्रियवेद्यं शब्दादिकं भुङ्क्ते। तेन लीलारसम् अनुभवति। जीवस्तु सुख्यति दुःख्यति मुह्यति चेति भावः॥ ३६॥

---

1.A,B °मूलसंज्ञक 2. A,B °क्त° 3 A,B °शुद्धात्म° 4. W °दिः 5 A,B °दे 6. A,B स्व° 7. A,B °गुणाष्टकमहि° 8. A,B स्थितम्
9. A,B omit जीव 10 W व्युत्पत्तिः 11. B °श° 12. A B °रू° 13 A,B omit लीलायाः 14. A,B omit कर्म

**विज॰** जीवस्य एवंविधानादिबन्धनिवर्तकं ब्रह्मज्ञानमेव, न कर्मादिकम् इत्यभिप्रेत्य आह — **यत्र** इति। यत्र परमात्मनि सदसद्रूपे व्यक्ताव्यक्त मिति प्रकृतिप्राकृतरूपे स्वसंविदा स्वरूप ज्ञानेन प्रतिषिद्धे अनादित एव निवृत्ते अविद्यया अज्ञानेन आत्मनि जीवे कृते इति यद्दर्शनं ज्ञानं तत् ब्रह्मज्ञानं संसारनिवर्तकमिति शेष इत्येकान्वयः ॥ ३३ ॥

कण्ठोक्त्या आह — **यदिति**। यदि सम्यगपरोक्षज्ञानोदयसाध्योत्तमप्रसादरूपा एषा विशारदस्य हरेः विद्यमाना देवी द्योतमाना मतिः ज्ञानरूपा मायेच्छा अपरोक्षज्ञानदानेन नैनं जीवं संसारयामीत्युपरता तस्मात् निवृत्ता तर्हि तं जीवं सम्पन्न एवेति परं ब्रह्म प्राप्त एवेति विदुः। किञ्च स्वस्वरूपे ज्ञानानन्दाद्यात्मके महिम्नि स्थितः स्वावरमुक्तजनैः महीयते पूज्यत इत्यन्वयः। महीयत इत्युक्त्या एषा कार्यकारणलक्षणप्रपञ्चविवर्तरूपा देवस्य विष्णोः सम्बन्धिनी माया वैशारदी विघटमानसंसाररूपा मतिः बुद्धिः यद्युपरता तदा स्वात्मरूपं ब्रह्म सम्पन्नं तदैक्यम् आपन्नं विदुः इत्येतत् निरस्तम्, भेदनिष्ठत्वात् [1]पूज्यपूजकभावस्येति भावः ॥ ३४ ॥

हरेः एवंविधावतारकर्मभिः आप्तकामत्वेन प्रयोजनाभावेऽपि जीवानां प्रयोजनमस्तीत्याह — **एव** मिति। अनन्याधीनकर्तृत्वात् फलोद्देशाभावाद्वा अकर्तुः अजनस्य जनविलक्षणस्य वा हृत्पतेः मनःप्रेरकस्य विष्णोः एवंविधानि वेदगुह्यानि उपनिषत्प्रतिपाद्यानि जन्मानि कर्माणि च कवयः संसारमोक्षाय वर्णयन्ति स्म। हिशब्देन हरेः साकल्येन क्रियाराहित्यं प्रतिषेधति, अन्यथा उत्तरश्लोकविरोधात् इत्येकान्वयः। तस्मात् जीवानां संसारमोक्ष एव भगवदवतारपराक्रमप्रयोजनम् इत्यर्थः ॥३५॥

फलाभिसन्ध्यभावात् अकर्तृत्वं न कर्तृत्वाभावात् इति यत्, तत् स्पष्टमाह — **स वा** इति। अमोघलीलः सत्यकामलक्षणक्रीडः स पद्मनाभ एव इदं विश्वं सृजति, अवति रक्षति, अत्ति संहरति न रुद्रादिः तथाऽपि अस्मिन् जगति न सज्जते। लौकिककर्तृवत् फलासक्तो न भवति, अतः अकर्ता न तु कर्तृत्वाभावात्। अभोक्तृत्वमपि दुःखाभोगादेव, न तु भोगाभावात्, सुखभोक्तृत्वसम्भवात् इत्यभिप्रेत्य आह भूतेष्विति। पञ्चभूतैः सम्भूय उत्पन्नत्वात् भूतेषु शरीरेषु अन्तर्हितो[2] मनश्श्रोत्रादिषडिन्द्रियवर्गग्राह्यशब्दादि विषयसारं जिघ्रति भुङ्क्ते, न तु दुःखादिकम्। कुतः? आत्मतन्त्रो न हि स्वतन्त्रस्य दुःखादनं घटते। इतोऽपि नेत्याह षडिति। षड्गुणेशः षडिन्द्रियविषयेशः अतश्च सारभुक्। तस्मात् अभोक्तृत्वं नाम दुःखाभोग एव, न तु भोक्तृत्वाभावादित्यर्थः। आत्मतन्त्र इत्यनेन विशेषणेन ईश्वर एव देहप्रविष्टो जीवो भवति, नान्य इत्यर्थः। स वा इदम् इत्यनेन समर्थ्यत इत्येतत् दूषितम्। न हि सुखमेव स्यात्, दुःखम् अण्वपि न स्यात् इति कर्तुं समर्थः ईश्वरः सुखदुःखपात्रीभूतं जीवत्वं अभिकाङ्क्षति, ईश्वरत्वविरोधात् ॥ ३६ ॥

---

1 A,B omit पूज्य 2 A °त°

**रा॰ कृ॰** यत्र यदा, इमे सदसद्रूपे कार्यकारणरूपे स्थूलसूक्ष्मरूपे, स्वसंविदा श्रवणमननादिभक्तिरूपेण स्वरूपसम्यग्ज्ञानेन प्रतिषिद्धे भवतः, ते रूपे द्वे अपि अविद्यया आत्मनि कृते इति हेतोः तद्ब्रह्मदर्शनम्। तदा **ब्रह्म जीवो ब्रह्मैव** भवतीति भावः। तच्च ब्रह्मदर्शनं ज्ञानैकस्वरूपमित्यर्थः ॥ ३३ ॥

वैशारदी विशारदः सर्वज्ञः ईश्वरः। तदीया देवी क्रीडनशीला एषा माया यद्युपरता भवति, तदा मतिः विद्या आवरणविक्षेपोपरत्या सैव मायारूपिणी अविद्या विद्यारूपेण परिणता भवति। तदा जीवः सम्पन्न एव, ब्रह्मस्वरूपं प्राप्त एवेति विदुः। तत्त्वज्ञा इति शेषः। स च स्वे महिम्नि परमानन्दरूपे महीयते पूज्यते॥ ३४॥

एवं कवयः अकर्तुः अजनस्य जन्मरहितस्य हृत्पतेः अन्तर्यामिणः देवस्य च वेदगुह्यानि कर्माणि जन्मानि वर्णयन्ति स्म। स्थूलसूक्ष्मशरीरे ज्ञानमये जीवे आरोप्येते। एते च द्वे शरीरे आत्मना व्याप्ते इति तयोः आत्मभिन्नं अन्यद्वस्तु नास्तीति ज्ञानमेव स्वरूपसम्यग्ज्ञानम्। आरोपिताभ्याम् एताभ्यां तु व्यवहारसिद्धिः। एतत् अज्ञानमेव अविद्या। तया च कर्मकौशलरूपयोगासिद्धिः, फलसङ्गश्च। विद्या तु स्वरूपसम्यग्ज्ञानमेव। विद्यावानेव ब्रह्मदर्शनाधिकारी। दर्शनं च ज्ञानमेव। तेन ब्रह्मदर्शनं नाम आत्मनः ब्रह्मत्वे अवस्थानमिति पर्यवस्यति। एवमात्मनः द्रष्टृत्वे दृश्यम् अन्यत्सर्वं नावशिष्यते।

ज्ञानमयशरीरः ईश्वरः स एव जगन्नाटकसूत्रधारी सर्वाधिकारी च। अविद्याऽपरनाम्नी तदधीना क्रीडैव माया। उक्तं च भगवता "ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन! तिष्ठति। भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया" (भ. गी. 18-61) इति। जीवरूपेणावस्थितस्य आत्मनः स्वस्वरूपज्ञानमपि एतत्कीडान्तर्भाग एव। स्वस्वरूपज्ञाने सति माया हि विद्या भवति। तदा स्वाधारभूतस्थूलसूक्ष्मरूपस्थितिविरहात् तत्स्थानेऽपि आत्मैव अवतिष्ठते। स च आनन्दस्वरूप एव।

शरीरादिसृष्टिकर्मणि व्यापृताः प्रज्ञामूर्तयः अत्र कवयः। यथा शुक्रधातुगतप्रज्ञया शरीराणि निर्मीयन्ते सा प्रज्ञा 'शुक्र' संज्ञया व्यवह्रियते। स शुक्रो देहकल्पनया 'कवि'रित्युच्यते। तस्यैव उशना इति नामान्तरम्। भगवान् स्वयमाह — "कवीनामुशना कविः" (भ. गी. 10-37) इति। एतदनुसन्धाय लोके कवयः वाल्मीकिव्यासादयः भगवतः जन्मकर्मवैभवं वर्णयामासुः।

भगवतः जन्मानि कर्माणि वेदगुह्यानि इत्युक्तम्। अथ कथं तानि वेदगुह्यानि? उच्यते — वेदो ज्ञानमेव। ज्ञानं च आत्मज्ञानम्। तस्मिन् ज्ञाते तु आत्मा जन्मकर्मविरहित इति जीवात्मैव तदुभयबद्ध इति ज्ञायते। तस्मात् अखण्डज्ञानमयः आत्मा जन्मकर्मरहस्यं वेत्ति; 'काणोऽयम्', 'बधिरोऽयम्' इति खण्डज्ञानमयो जीवात्मा तन्न वेत्ति। अत एव भगवता — "बहूनि मे व्यतीतानि जन्मानि तव चार्जुन! तान्यहं वेद सर्वाणि नत्वं वेत्थ परन्तप!" (भ. गी. 4-5) इति चमत्कृतम्। अत्र युष्मदस्मच्छब्दौ जीवात्मपरमात्मसङ्केतौ। सर्वोऽयं ज्ञानाज्ञानमयो व्यापारः भगवतः क्रीडैव। अत एव "जन्म कर्म च मे दिव्यम्" (भ. गी. 4-9) इत्यपि तत्रैव भगवतोक्तम्॥ ३५॥

अमोघलीलः स वै भगवान् इदं विश्वं सृजति, अवति रक्षति, अत्ति संहरति। किन्तु अस्मिन् न सज्जते। अपि च भूतेषु अन्तर्हितः, आत्मतन्त्रः स्वतन्त्रः षड्गुणेशः षडिन्द्रियनियन्ता च सन् षाड्वर्गिकम् इन्द्रियषड्वर्गविषयं जिघ्रति दूरादेव गन्धवत् गृह्णाति।

अत्र भगवतः क्रीडैव लीला। सा त्वमोघा अनियता एवंभाविनी इति वक्तुं न शक्यते। स भगवान् सृष्ट्यादिकर्ता इन्द्रियविषयभोक्ताऽपि आकाश इव असङ्गः। तथाहि — महाकाशः घटमठयोगवशात् घटाकाशः

मठाकाशः इत्युच्यते। तथाऽपि घटाकाशमठाकाशयोः घटमठाभ्यां बद्धता नास्ति। यथा च ऊर्णनाभिः स्वनिर्मितैः तन्तुभिः अबद्धो विहरति तथैव भगवानपि स्वमायया नैव स्पृष्टः ॥३६॥

**न चास्य कश्चिन्निपुणेन[1] धातुरवैति जन्तुः कुमनीष ऊतीः[2] ।**
**नामानि रूपाणि मनोवचोभिः सन्तन्वतो[3] नटचर्यामिवाज्ञः ॥ ३७ ॥**

**स वेद धातुः पदवीं परस्य दुरन्तवीर्यस्य रथाङ्गपाणेः ।**
**योऽमायया सन्ततयाऽनुवृत्त्या भजेत तत्पादसरोजगन्धम् ॥ ३८ ॥**

**अथेह धन्या भगवन्त इत्थं यद्वासुदेवेऽखिललोकनाथे ।**
**कुर्वन्ति सर्वात्मकमात्मभावं[4] न यत्र भूयः परिवर्त उग्रः॥ ३९ ॥**

**इदं भागवतं नाम पुराणं ब्रह्मसम्मितम् ।**
**उत्तमश्लोकचरितं चकार भगवानृषिः ॥ ४० ॥**

---

1 K,M निपुणं विधातुः 2 K,M °तिः 3 W वित° 4 K,M °त्मक आत्म° , W_F °त्मन आत्म°

**श्रीध॰** ननु किमीश्वरस्य सृष्ट्यादिकर्मभिः विषयभोगैर्वा? तत्राऽऽह — **न च** इति। धातुः जगद्विधातुः ईश्वरस्य ऊतीः लीलाः कुमनीषः कुबुद्धिः निपुणेन तर्कादिकौशलेन न अवैति न जानाति। मनसा रूपाणि वचसा नामानि सन्तन्वतः सम्यक् विस्तारयतः। मनोवचोभिः[1] इति बहुत्वं वृत्त्यभिप्रायेण[2] मनोवचोभिः सह इति वा॥ ३७॥

भक्तस्तु कथंचित् जानतीत्याह — **स वेद** इति। अमायया अकुटिलभावेन सन्ततया निरन्तरया अनुवृत्त्या आनुकूल्येन भजेत॥ ३८॥

भक्तिमार्गे[3] प्रवृत्तान् ऋषीन् अभिनन्दति — **अथेति**। यत्[4] यतः भक्त[5] एव भगवत्तत्वं जानाति[6]। अथ अतः कारणात्[7] भगवन्तः सर्वज्ञाः भवन्तो धन्याः कृतार्थाः। कुतः? यत् यस्मात् इत्थं प्रश्नैः वासुदेवे आत्मभावं मनोवृत्तिं कुर्वन्ति। सर्वात्मकं ऐकान्तिकम्। यत्र यस्मिन् भावे सति भूयः उग्रो गर्भवासादिदुःखरूपः परिवर्तो जन्ममरणाद्यावर्तः न भवति॥ ३९॥

सूत! किमेतत् शास्त्रम् अपूर्वं कथयसि? तत्राऽऽह — **इद** मिति। ब्रह्मसम्मितं सर्वज्ञतुल्यम्[8]। उत्तमश्लोकस्य चरितं यस्मिन् तत्। ऋषिः व्यासः॥ ४०॥

---

1 A,B,V omit मनो 2 A,B श्रुत्यभि° 3 H मार्गेण 4 A,B omit यत् 5 H,V भक्ताः 6 H,V जानन्ति 7 A,B omit कारणात्
8. B,H,V वेद°

**वीर॰** नेति। यत एवं अत एव अस्य मनसा सङ्कल्पेन वचोभिः वेदात्मकैश्च नामानि देवमनुष्यादिनामानि रूपाणि देवादिरूपाणि च नटचर्याम् इव वितन्वतः विदधतः[1] धातुः ईश्वरस्य ऊतीः गतीः अवतेः गतिश्चार्थः; पदवीः प्रकारान् इति यावत्। निपुणेन भावप्रधानो निर्देशः नैपुण्येनापि जन्तुः नावैति नावगच्छति। अनवगतौ हेतुं वदन् जन्तुं विशिनष्टि। कुत्सिता मनीषा बुद्धिः यस्य। शब्दादिविषयासक्तबुद्धिः अज्ञः अहम्माभिमानाभ्यां स्वात्मपरमात्मयाथात्म्यानभिज्ञः मनोवचोभिः नामानि रूपाणि च वितन्वत इत्यत्र मनसा सङ्कल्पेन रूपसृष्टिः, वेदवचोभिः नामकल्पनमिति विवेकः। "नाम रूपं च भूतानां कृत्यानां च प्रपञ्चनम्। वेदशब्देभ्य एवादौ देवादीनां चकार सः।" (विष्णु. पु. 1-5-63) इति वचनात् नटचर्यामिवेति चिदचिद्गतदोषराहित्यं विवक्षितम्। यद्वा नटचर्यामिव-नटो यथा विचित्रवेषानुपादत्ते तत्तद्रूपाणि मत्स्यकूर्मादीनि तन्नामानि च सन्तन्वतः बिभ्रतोऽस्य धातुः जगत्स्रष्टुः ईश्वरस्य ऊतीः गतीः जन्तुः मनसा वचोभिश्च निपुणेन तत्र नैपुण्येन च नावैति इत्यर्थः। अत्र पक्षे नटचर्यामिवेति दृष्टान्तेन इदं विवक्षितम्। नटस्य अनेकवेषपरिग्रहेऽपि यथा स्वस्वभावात्यागः वेषाणां चेष्टामूलत्वं[2], चर्यायाश्च लीलात्वं तद्वदस्यापि इति। कुमनीषोऽज्ञो जन्तुः नावैतीत्यनेन शब्दादिषु विरक्तः स्वात्मपरमात्म याथात्म्य मननशीलस्तु अवैत्येवेति सूचितम्॥ ३७॥

तदेवाऽऽह — **स** इति। यः पुमान् अमायया मायागुणकामादिरहितया सन्ततया अनुस्यूतया दुरन्तवीर्यस्य अपारवीर्यस्य रथाङ्गपाणेः अनुवृत्त्या सेवया तस्य रथाङ्गपाणेः पादसरोजगन्धम् भजेत अनुभवेत्। स धातू रथाङ्गपाणेः पदवीं वेद जानाति। तथाचोक्तम् भगवता — "भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन। ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप॥ (भ. गी. 11-54) इति॥ ३८॥

एव मया उपपादितं भगवदवतारादिरहस्यममायिकाः अविच्छिन्न भगवद्भक्तियोगनिष्ठावन्तो जानन्त्येव, अत्र न विप्रतिपत्तिरिति सूचयितुं[3] श्रोतॄणां शौनकादीनां कृतार्थतां सहेतुकाम् आविष्करोति — **अथेति**। भगवन्त इति सम्बोधनम्, यूय मित्यध्याहारः। यद्वा हे मुनयः! भगवन्तः! पूज्याः भवन्तः धन्याः कृतार्थाः। कुतः ? हि यस्मात् इहलोके अखिललोकनाथे वासुदेवे सर्वात्मकं सर्वप्रकारकं कारणत्रयेणापीत्यर्थः। सर्वात्मक इति पाठे सर्वस्यात्मनि सर्वशरीरके वा इति वासुदेवविशेषणम्। आत्मभावं भावः भक्तियोगः[4] आत्मनो भावः आत्मकर्तृकः। सर्वात्मन इति पाठे आत्मना मनसा यो भावो भक्तिः तं कुर्वन्ति, ततो धन्या इत्यर्थः। कथम् भक्तियोगमात्रकर्तृकत्वेन धन्यता ? इत्यपेक्षायाम् आत्मभावं विशिनष्टि। यत्र यस्मिन् आत्मभावे सति[5] उग्रः गर्भजन्मजरामरणादिदुःखहेतुत्वेन घोरः परिवर्तः संसारपरिवृत्तिः भूयो न भवति॥ ३९॥

तदेवं "पुंसामेकान्ततः श्रेयस्तन्नः शंसितुमर्हसि" (भाग. 1-1-9) इत्यादीनां[6] शौनकादिप्रश्नानां सङ्ग्रहेण उत्तराण्यभिधाय, अथ एतच्छुश्रावयिषितभागवताख्यपुराणमुखेन तान्येव विस्तरतः प्रतिपिपादयिषुः तावत् एतत्पुराणनिर्माण-प्रकारं निर्मातुः बादरायणस्य निर्माणप्रवृत्तिनिमित्तं, निर्मितस्य पुनः शुकं प्रत्यध्यापनं तेन अधीतस्य राज्ञे श्रावणं च सहेतुकं प्रष्टुं अवसरप्रदानाय भगवान् बादरायणः तदिदं पुराणं निर्माय, पुत्रमध्याप्य, तन्मुखेन प्रवर्तयामास। तदाऽहं[7]

तत्तन्मुखेनाधिगतम् इदं पुराणं वः श्रावयिष्यामीत्याह सूतः — **इदमिति**। इदं भागवतमिति प्रसिद्धं पुराणं ब्रह्मसम्मितं ब्रह्म वेदः तेन सम्मितं समीकृतं, वेदतुल्यमित्यर्थः। यद्वा, ब्रह्म परं ब्रह्म तत् सम्यक् मीयते अनेनेति ब्रह्मसम्मितम्। बाहुलकात् करणे क्तः। परब्रह्मप्रमापकमित्यर्थः। यद्वा, सम्यक् मीयते प्रमीयत इति कर्मण्येव क्तः। ब्रह्म सम्मितं यस्मात् तत् ब्रह्मसम्मितम् संपूर्वात् इण्-गतौ इत्यस्मात् वा कर्मणि क्तः। "ङमो ह्रस्वादचि ङमुण्णित्यम्" (अष्टा. 8-3-32) इति ङमुडागमः। ब्रह्म सम्यक् इतं अवगतं येन यस्मात् वा तत् ब्रह्मसम्मितम्। तत्र हेतुं वदन् विशिनष्टि। उत्तमश्लोकस्य भगवतः चरितं चरितप्रतिपादकम् प्रतिपाद्यप्रतिपादकयोः अभेदविवक्षया उत्तमश्लोकचरितमित्युक्तम्। एवंविधं पुराणं भगवानृषिः निखिलनिगमद्रष्टा व्यासः चकार॥ ४०॥

---

1 A,B omit वि 2 W °मूलचर्या° 3 A,B सूचितम् 4 A,B omit भक्ति 5 A,B omit सतिं 6 A °दिना 7 A,B तदहं

**विज०** एवंविधमिथ्याज्ञानी तत्स्वरूपाज्ञानात् भगवद्भजनात् अवनस्मरणयोग्यानि रूपाणि सम्यक् तन्वतः विस्तारयतः मनोवचोभिः नामरूपात्मकं प्रपञ्चं सृजतो वा। सतां निपुणं भद्रं विधातुः अस्य हरेः। ऊतिम् अभिप्रायं गतिं वा कश्चिदपि नावैति न जानाति। कीदृशः? कुमनीषः मिथ्याज्ञानी जन्तुः कृमिसदृशो जन्तुरिति पुनः जायमानो म्रियमाणः मिश्रबुद्धिः संसारी। कुमनीषः इति। कुत्सितं प्रमाणविरुद्धं सर्वमिथ्यात्वं मनसा मन्यते, न तु युक्त्या वक्तुं शक्नोतीति अद्वैतवादी वा। कथमिव नटस्य अङ्गुल्याद्यभिनयविशेषानभिज्ञो नटचर्यां भरतादिकथात्मिकां यथा न जानाति, तथाऽयमितिभावः॥ ३७॥

तर्हि कीदृशो वेद इति तत्राह — **स** इति। यो वेदप्रामाणिकः अमायया अव्याजेन इदमखिलं मायाकल्पितम् अनिर्वाच्यं न भवतीति भावेन वा। सन्ततया निरन्तरया प्रवाहरूपया अनुवृत्त्या सेवया। हृत्कमलमध्यनिवासिनः तस्य पादसरोजयोः गन्धं भजेत अत्रैवास्वाद्य मग्नमनाः भवेत्, स पुरुषः दुरन्तवीर्यस्य असङ्ख्यातपराक्रमस्य परस्य पूर्णस्य धातुः पोषणादिकर्तुः रथाङ्गपाणेः श्रीनारायणस्य पदवीं मार्गं स्वरूपस्थितिं वेद इत्येकान्वयः। धातुः इत्युक्ते चतुर्मुखोऽपि स्यात् इत्यतः परस्येति। चतुर्मुखपरत्वमपि अक्षरस्यास्ति, अतो रथाङ्गपाणेरिति। तस्मात् भागवता एव भगवदापरोक्ष्यं लभन्ते नेतरे इति सिद्धम्॥ ३८॥

भागवता अपि भवादृशा एव इत्याशयवान् आह — **अथेति**। हे भगवन्तः! पूजावन्तः भाग्यवन्तो वा। यत्र यस्मिन्, भगवति आत्मभावे स्वामिभृत्यभावे क्रियमाणे सति भूयः पुनः उं रुद्रमपि ग्रसतीति उग्रः क्रूरः परिवर्तः संसारः मरणं वा न स्यात्। तस्मिन् अखिललोकनाथे सर्वात्मके सर्वान्तर्यामिणि वासुदेवे इत्थम् उक्तप्रकारेण आत्मभावं कुर्वन्तीति यत् यस्मात्, अथ तस्मादिह चेतनराशौ यूयं धन्याः निरपेक्षगुणपूर्णाः कृतकृत्या इत्येकान्वयः। यत्र यस्मिन् आत्मभावे क्रियमाणे परिवर्तो न स्यात् तमात्मभाव मिति वा॥ ३९॥

धर्मः कं शरणं गत इति प्रश्नं परिहरति — **इद** मित्यादिना। ऋषिः सर्वज्ञः व्यासः भगवान् ब्रह्मणा वेदेन सम्मितं तुलितम् उत्तमश्लोकस्य हरेः चरितानि यस्मिन् सन्ति तत् तथोक्तम्। इदं बुद्धिस्थं भागवतं पुराणं चकार॥ ४०॥

1. A.B मतिम् 2 A °दपरोक्षं

**रा० कृ०** किञ्च कुमनीषः विषयाविष्टबुद्धिः कश्चिदपि जन्तुः जीवः मनोवचोभिः मनसा वचोभिः यथाक्रमं रूपाणि नामानि सन्तन्वतो विस्तारयतः अस्य धातुः सर्वहेतुभूतस्य भगवतः ऊतीः लीलाः निपुणेन तर्कादिकौशलेन अज्ञः नटचर्यामिवि नावैति न जानाति॥ ३७॥

अमायया फलाभिसन्धिरहितया सन्ततयाऽनुवृत्त्या आनुकूल्येन यः तत्पादसरोजगन्धम्, तस्य भगवतः पादयुग्मं भजेत; सः धातुः दुरन्तवीर्यस्य रथाङ्गपाणेः चक्रपाणेः परस्य भगवतः पदवीं लीलामार्गं वेद जानाति॥ ३८॥

अथ अतः इहात्र भगवन्तः सर्वज्ञा यूयं धन्याः कृतिनः। कुत इति चेत्, यत् यस्मात् अखिललोकनाथे वासुदेवे सर्वात्मकमैकान्तिकं आत्मभावं मनोवृत्तिं भवन्तः कुर्वन्ति। यत्र यस्मिन् भावे सति भूयः उग्रः भयङ्करः गर्भवासादिदुःखरूपः परिवर्तः जननमरणाद्यावर्तो न भवति।

जननमरणादीनां शरीरसम्बन्धितया वासुदेवभक्तानां ज्ञानिनां तु शरीरसम्बन्धस्पृहायोगात् जननमरणादिजन्यबाधा न भवतीति भावः॥ ३९॥

ब्रह्मसम्मितं वेदतुल्यं अथवा श्रीकृष्णपरब्रह्मतुल्यं उत्तमश्लोकचरितम् इदं भागवतं नाम पुराणं भगवानृषिः व्यासः चकार॥ ४०॥

**निश्श्रेयसाय लोकस्य धन्यं स्वस्त्ययनं महत्।**
**[1]तदिदं ग्राहयामास सुतमात्मवतां वरम्॥ ४१॥**

**सर्ववेदेतिहासानां सारं सारं समुद्धृतम्।**
**स तु संश्रावयामास महाराजं परीक्षितम्॥ ४२॥**

***प्रायोपविष्टं गङ्गायां परीतं परमर्षिभिः।**
**[2]तत्र कीर्तयतो विप्रा [3]विप्रर्षेर्भूरितेजसः॥ ४३॥**

**अहञ्चाध्यगमं तत्र निविष्टस्तदनुग्रहात्△।**
**सोऽहं वः श्रावयिष्यामि यथाऽधीतं यथामति॥ ४४॥**

**‡कृष्णे स्वधामोपगते धर्मज्ञानादिभिस्सह ।**
**कलौ नष्टदृ[4]शामेष पुराणार्को[5]ऽधुनोदितः ॥ ४५ ॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादश साहस्र्यां
श्रीहयग्रीव ब्रह्मविधायां पारमहंस्यां संहितायां
प्रथमस्कन्धे नैमिषीयोपाख्याने तृतीयोऽध्यायः ॥ ३ ॥

1. AF ततस्सङ्गा° * The order of lines in the 3 verses starting with 'प्रायोपविष्टं' is changed to fit in with the principal commentaries thereof. 2 K,M तस्य 3. K,M राजर्षे° △. V adds यूयं व्यवसिता विप्रा जिज्ञासायां च निष्ठिताः । This line is the Second part of the 44th verse in H ‡. This verse is shown in brackets in H 4 K,M °दृशां पुंसाम् 5 K,M °ऽमु°

**श्रीध०** तत्सम्प्रदायप्रवृत्तिमाह — **निश्श्रेयसाय** इति। सुतं शुकम् आत्मवतां[1] धीराणां मख्यम् ॥ ४१, ४२ ॥

**प्रायोपविष्ट** मिति। प्रायेण मृत्युपर्यन्तानशनेन उपविष्टमिति परमवैराग्योक्तिः। हे विप्राः! विप्रर्षेः सकाशात ॥ ४३ ॥

**अह** मिति। अध्यगमं ज्ञातवानस्मि। तत्र कीर्तयतः तत्र निविष्टः इति च अन्वयभेदात्[2] तत्र पदावृत्तिः अदोषः। यथाऽधीतं, न तु स्वमतिविलसितम्। तत्राऽपि यथामति स्वमत्यनुसारेण सङ्क्षेपतः कथितं विस्तरतः श्रावयिष्यामि ॥ ४४, ४५ ॥

इति श्रीमद्भागवते प्रथमस्कन्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां तृतीयोऽध्यायः ॥ ३ ॥

1. A.H,V omit आत्मवतां धीराणां मुख्यं 2 A °भेदपदा°; B भेदेन तत्र पदा

**वीर०** किमर्थं लोकस्य शृण्वतो जनस्य निश्श्रेयसार्थं मुक्त्यर्थम्[1]। तदेव दर्शयितुं विशिनष्टि। धन्यं सम्यग्ज्ञानजननद्वारा कृतार्थत्वावहं स्वस्त्ययनं मङ्गलास्पदम्। "पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम्" (भार. 13-135-10) इत्युक्तरीत्या निरतिशयमङ्गलावहं भगवत्स्वरूपरूपादिप्रतिपादकत्वेन मङ्गलास्पदमित्यर्थः। तदुक्तविधमिदं पुराणं आत्मवतां ज्ञानिनां श्रेष्ठं सुतम् श्रीशुकं ग्राहयामास अध्यापयामास ॥ ४१ ॥

पुराणमेव विशिनष्टि। सर्वेषां पूर्वोत्तरभागात्मकानां वेदानाम् इतिहासानां च सारं सारं समुद्धृतम्। एतत्पुराणरूपेणेति शेषः। सारं[2] सारांशः समीचीनन्यायैः परिष्कृतोऽर्थ इति यावत्। "सारं सारं समुद्धृतम्" इत्यनेन वेदेतिहासादिसिद्धस्य अर्धशरीरस्य क्रमविशेषनिवेशनं वेदाद्यर्थपरिष्करणं च व्यासबुद्ध्यधीनम् इति[3] अवगम्यते। स तु अधीतैतत्पुराणः शुकस्तु परीक्षितं महाराजम् इदं संश्रावयामास। शृणोतेः शब्दकर्मणोऽण्यन्ते कर्तुः परीक्षितः

णौ-"गतिबुद्धि" ( अष्टा. 1-4-52) इति कर्मसंज्ञायां, द्वितीया। एवं ग्राहयामास सुतम् इत्यत्रापि तत्र ग्रहेरपि शब्दकर्मकत्वात् ॥ ४२ ॥

परीक्षितं कथम्भूतम्? गङ्गायां प्रायोपविष्टम् अनशनव्रतदीक्षितम्। ऋषिभिः परीतं परिवेष्टितम्। तत्र परीक्षितः सन्निधौ भूरितेजसो विप्रर्षेः शुकस्य कीर्तयतः श्रावयतः सतः हे विप्राः ! ॥ ४३ ॥

**अह** मिति। तत्र निविष्टोऽहं तदनुग्रहात् शुकानुग्रहात्[4] अध्यगमम् अधिगतवानस्मि पुराणमिति शेषः। गमेः लृदित्वादङि अध्यगममिति रूपम्। सः तदनुग्रहात् अधिगतैतत्पुराणोऽहं च यथाधीतं यथावत्[5] अधीतम्। यद्वा, अधीतमिति भावेक्तः। यथाऽध्ययनम् अध्ययन मनतिक्रम्य अध्ययनानुसारेण इत्यर्थः। यथामति श्रावयिष्यामि। यथामति इत्यनेन पुराणस्य दुरवबोधत्वं सूच्यते ॥ ४४ ॥

पुराणं स्तौति **कृष्ण** इति। कृष्णे भगवति धर्मज्ञानादिभिस्सह स्वधाम स्वलोकं गतवति सति, अत एव कलौ युगे नष्टदृशां नष्टप्रज्ञानां जनानां दृष्टिप्रदानक्षम एष[6] पुराणरूपोऽर्कः सूर्योऽधुनोदितः। यथा रात्रौ नष्टदृष्टीनाम् अर्कोदये सति दृष्टिः स्वविषयग्रहणसमर्था भवति, एवं रात्रिरूपे कलौ नष्टप्रज्ञानां पुनरेतत्पुराणार्कोदयेन प्रज्ञा प्रवर्तत[7] इत्यर्थः ॥ ४५ ॥

इति श्रीमद्भागवते प्रथमस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां तृतीयोऽध्यायः ॥ ३ ॥

---

1 A,B omit मुक्त्यर्थं 2. W सारः स्थिरांशः समी° 3 A,B omit इति 4 A omits शुकानुग्रहात् 5 A,B omit यथावत् अधीतम्
6. A,B एव 7 A,B वर्तते

**विज°** किमर्थं लोकस्य निश्श्रेयसाय मोक्षाय धन्यं पुष्टिकरं स्वस्त्ययनं सर्वमङ्गलानाम् आलयम् अर्थतः शब्दतोऽपि महत् यदेवंविधं तदिदं, स व्यासः आत्मवतां वरं वशीकृतमनसां वरं सुतं शुकं ग्राहयामास ॥ ४१ ॥

कुतः एतदेव अग्राहयत्? इति तत्राह — **सर्वेति**। वेदादिसर्वशास्त्रोत्तमत्वात् इदमेव ग्राहितमिति भावः। स तु शुकः परमऋषिभिः परीतं समन्वितं गङ्गायां प्रयोपविष्टम् अनशनव्रतमाचरन्तं परीक्षितं नाम महाराजं चक्रवर्तिनं श्रावयामास। किञ्च अहं च हे विप्राः तदनुग्रहात् तत्र गङ्गायां तदन्तिके निविष्टो योग्यस्थाने उपविष्टो भूरितेजसः क्षात्रसामर्थ्योपेतस्य ब्रह्मापरोक्षज्ञानवतो वा। तस्य राजर्षेः अर्थे कीर्तयतः शुकात् अध्यगमम् पठितवानस्मि। योऽहं तत्राध्यगमम् सोऽहं तत्र इत्यादि प्रश्नपरिहाराय सर्ववेदेतिहासादिसारत्वेन भगवतो[1] वृत्तं श्रीभागवतं युष्माकं श्रावयिष्यामि। यथापठितं **यथाप्रज्ञ** मित्येकान्वयः ॥ ४२, ४३, ४४ ॥

यत्पृष्टं 'धर्मः कं शरणं गत' (भाग. 1-1-23) इति, तत्र उत्तरं धर्मज्ञानादिभिस्सह कृष्णे स्वधाम वैकुण्ठं प्राप्ते सति कलियुगे नष्टज्ञानानां पुंसां सर्वसद्धर्मप्रकाशकश्रीभगवतपुराणार्कोऽमुना वेदव्यासेन उदितः उदयं प्रापितः । तस्मात् स धर्मः सच्छास्त्रैः ज्ञानसद्धर्मप्रवर्तकं तमेव व्यासरूपिणं कृष्णं शरणं गत इति भावः ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्या संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
प्रथमस्कन्धे तृतीयोऽध्यायः ॥ ३ ॥

---

1 A,B भगवता कृत श्री°

**रा° कृ°** लोकस्य निश्श्रेयसाय धन्यं स्वस्त्ययनं मङ्गलास्पदम्, महत् तदिदं भागवतं व्यासः आत्मवतां जितेन्द्रियाणां मध्ये वरं सुतं शुकं ग्राहयामास अध्यापयामास ॥ ४१ ॥

स तु शुकयोगी गङ्गायां गङ्गातीरे प्रायोपविष्टं मृत्युपर्यन्तानशनेन उपविष्टं परमर्षिभिः परीतं महाराजं परीक्षितं सर्ववेदेतिहासानां सारं सारांशं सारं श्रेष्ठं भागवतं श्रावयामास। हे विप्राः ! तत्र कीर्तयतः भूरितेजसः विप्रर्षेः सकाशात् तत्र निविष्टोऽहं च तदनुग्रहात् अध्यगमम् भागवतं ज्ञातवानस्मि। सोऽहं अधीतभागवतोऽहं यथाऽधीतं यथामति वः श्रावयिष्यामि ॥ ४२, ४३, ४४ ॥

कृष्णे भगवति धर्मज्ञानादिभिस्सह स्वधामोपगते नित्यलीलास्थानं प्राप्ते सति कलौ युगे नष्टदृशां लुप्तप्रज्ञाचक्षुषां जनानाम् एष पुराणार्कः अधुना उदितः ॥ ४५ ॥

इति श्रीमद्भागवते प्रथमस्कन्धे
श्रीराधाकृष्णप्रणीतायां सुधीसुधायां व्याख्यायां
तृतीयोऽध्यायः ॥३ ॥



# चतुर्थोऽध्यायः

व्यास उवाच

इति ब्रुवाणं संस्तूय मुनीनां दीर्घसत्त्रिणाम् ।
वृद्धः कुलपतिः सूतं बह्वृचः शौनकोऽब्रवीत् ॥ १ ॥

शौनक उवाच

सूत! सूत! महाभाग! वद नो वदतां वर! ।
कथां भागवतीं पुण्यां यदाह[1] भगवाञ्छुकः ॥ २ ॥

कस्मिन् युगे प्रवृत्तेयं स्थाने वा केन हेतुना ।
कुतस्सञ्चोदितः कृष्णः कृतवान् संहितां मुनिः ॥ ३ ॥

तस्य पुत्रो महायोगी समदृङ्निर्विकल्पकः ।
एकान्तम[2]तिरुन्निद्रो गूढो मूढ इवे[3]यते ॥ ४ ॥

---

1. K,M यामाह 2. M ग° 3 H °ह°

## श्रीधरस्वामिविरचिता भावार्थदीपिका

तुर्ये भागवतारम्भकारणत्वेन वर्ण्यते ।
व्यासस्यापरितोषस्तु तपः प्रवचनादिभिः ॥

**इतीति** । इत्येवं प्र[1]सन्नतया श्रावयिष्यामीति ब्रुवाणम् । मुनीनां बहूनां मध्ये एकेन वक्तव्ये यो वृद्धो वृद्धेष्वपि बहुषु यः कुलपतिः ग[2]णमुख्यः तेष्वपि बहुषु यो बह्वृचः ऋग्वेदी तेन वक्त[3]व्यम् । अतः एवम्भूतत्वात् शौनकोऽब्रवीत् ॥ १ ॥

**सूतेति** । यत् यां कथामाह ॥२ ॥

**कस्मिन्निति** । कस्मिन् यु[4]गे कस्मिन् वा स्थाने केन हेतुनेति । महाभारतादिध[5]र्मशास्त्राणि कृतवतः पुनरेतत्संहिताकरणे किं कारणमित्यर्थः । कुत इति सार्वविभक्तिकस्तसिः ; केन प्रवर्तितः इत्यर्थः । कृष्णो व्यासः ॥ ३ ॥

यदुक्तं "स तु [6]तं श्रावयामास" (भाग. 1-3-42) इति त[7]च्छुकस्य व्याख्यानादिकं कथं घटितमिति प्रष्टुं तस्यासङ्गोदासीनतामाह द्वाभ्यां — **तस्येति** । समदृक् समं ब्रह्म पश्य[8]ति । अतो निर्विकल्पकः । स्वार्थे कः ।

निरस्तभेदः। किञ्च एकस्मिन्नेवान्तः समाप्तिः यस्याः तथाभूता मतिः यस्य सः। यतः उन्निद्रः मायाशयनादुद्बुद्धः। [9]"या निशा सर्वभूतानां तस्यां जागर्ति संयमी" (भ. गी. 2-69) इति स्मृतेः। अत एव गूढः अप्रकटः मूढ इव प्रतीयते॥ ४॥

1. H,V प्रसन्नवाचा 2. H गु° 3. H °न्यः 4. A,B omit युगे कस्मिन् 5. H,V °सर्व° 6. B,H,V सं° 7. H,V तत्र शुकस्य 8 H,V °तीति 9. H,V add निद्रा माया।

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

इत्थं लब्धावसरः शौनकः पृच्छतीति आह व्यासः **इतीति**। अत्र व्यास उवाचेति पठ्यते युक्तं चैतत्। कृत्स्नप्रबन्धस्य व्यासोक्तिरूपत्वेऽपि परीक्षिच्छुकशौनक सूतप्रश्नोत्तररूपेण प्रणीतत्वात्, तत्र तत्र परीक्षिदादिप्रश्नोत्तरत्वज्ञापनाय राजोवाच, शुक उवाच इत्यादीनां पाठेऽपि यत्र शौनकसूतकृत प्रश्नोत्तरप्रकारानुकाररूपाः श्लोका दृश्यन्ते तेषां सर्वेषामादौ शौनकसूतप्रश्नोत्तरत्वज्ञापनाय तेषां व्यासोक्तित्वज्ञापनाय च तदादौ व्यास उवाच इत्यस्य पाठावश्यम्भावात्। क्वचित्तदभावेप्यर्थतः तस्य विवक्षितत्वात् शौनकादेरर्वाचीनस्य नियतप्रष्टृन्तरादेः अभावादेव अमुक उवाच इति पाठायोगात्। एतेनात्रैव व्यास उवाच इति पठ्यते, न क्वाप्यन्यत्र अस्मिन् पुराणे। तत्र मूलं मृग्यमिति केषाञ्चिदाशङ्का प्रत्युक्ता[1]। इति इत्थं ब्रुवाणं सूतं संस्तूय दीर्घसत्त्रिणां ब्रह्मसत्त्रेण दीक्षितानां मुनीनां कुलस्य समूहस्य पतिः। कुलशब्दस्य नित्यसापेक्षत्वात् "देवदत्तस्य गुरुकुलं" इत्यादाविव समासः। वृद्धः ज्ञानेन वयसा च वृद्धः। बह्वृचः ऋग्वेदी शौनकोऽब्रवीत्॥ १॥

तदेवाह — **सूत! सूत!** इत्यादिभिः द्वादशभिः। हे सूत! सूत! आदरात् सम्भ्रमाद्वा द्विरुक्तिः। हे महाभाग! भाग्यवन्! भाग्यमत्र निखिलतत्त्वज्ञानित्वरूपम्। हे वदतां वर! भागवतीं श्रीमद्भागवतमहापुराणप्रतिपाद्यां कथां नोऽस्मभ्यं वद। भागवतं विशिनष्टि — यद्भागवतं भगवान् शुक आह परीक्षिते इति शेषः। वृत्तस्यापि भागवतस्य बुद्ध्या निष्कृष्टस्य यदित्यनेन परामर्शः॥ २॥

एवं सामान्यतः पृष्ट्वा विशेषतः पृच्छति — **कस्मिन्निति**। इयं भागवती कथा कस्मिन् युगे[2] प्रवृत्ता इत्येकः प्रश्नः। कस्मिन् स्थाने इत्यपरः। केन हेतुनेति तृतीयः। कुतः कस्माद्धेतोः केन पुंसा सञ्चोदितः कृष्णो मुनिः द्वैपायनः इमां संहितां भागवतरूपां कृतवानिति चतुर्थः॥ ३॥

यदुक्तं "स तु संश्रावयामास महाराजं परीक्षितम्" (भाग. 1-3-42) इति तदघटनमिव अभिप्रेत्य तद्धेतुभूतैः विशेषणैः शुकं विशिनष्टि — **तस्य** इत्यादिभिः पञ्चभिः। तस्य कृष्णस्य मुनेः पुत्रः शुको महायोगी योगिश्रेष्ठः। श्रेष्ठत्वमाह — समदृक् सर्वदेवमनुष्यादिशरीरजातं प्रधानपरिणामरूपत्वेन पराक्त्वेन च जीववर्गं ज्ञानैकाकारत्वेन सर्वत्रानुस्यूतं परमात्मानं सत्यज्ञानादिकल्याणगुणाकरत्वेन चेत्येवं रूपं समं पश्यतीति समदृक्। [3]एवंविधमेव समदर्शित्वं "विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि। शुनि चैव श्वपाके च पण्डितास्समदर्शिनः॥"

(भ. गी. 5-18) इत्यादावप्यगीयत[4]। निर्विकल्पकः भेदानुसन्धानरहितः। देहगतविकल्पानां देवमनुष्यत्वादीनां आत्मनि नारोपयिता। यद्वा अब्रह्मात्मकस्वतन्त्रवस्तुज्ञान[5]रहितः। एकान्तमतिः एकान्ता अव्यभिचारिणी निश्चितेति यावत्। मतिर्भगवति यस्य तथाभूतः। उन्निद्रः जागरूकः "या निशा सर्वभूतानां तस्यां जागर्ति संयमी।" (भ. गी. 2-69) इत्युक्तविधजागरूक[6] इत्यर्थः। गूढः स्वमाहात्म्यानाविष्कार[7]शीलः मूढः अज्ञ इव ईयते[8] दृश्यत इत्यर्थः॥ ४॥

1 W परास्ता 2 W °बोधि° 3 A,B समवि° 4 A,B °प्यधीयते 5 A,B omit °ज्ञान° 6. W जागरयुक्तः 7 W °ष्करण° 8 W adds प्रतीयते

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

"सोऽहं वश्श्रावयिष्यामि" (भाग. 1-3-44) इति सूतेनोक्तोऽपि शौनकः श्रीभागवतश्रवणे श्रद्धालुत्वदर्शनाय विशेषप्रश्नाय सूतमाह — **इतीति**। दीर्घसत्रिणां[1] दीर्घकालीनं सत्रमेषामस्तीति तेषां मध्ये **ज्ञानवयोवृद्धः** ऋषिकुलाचाररक्षकः बह्वृचः ऋग्वेदेषु निष्णातः शौनक इति ब्रुवाणं सूतं संस्तूय सूतमब्रवीत् इत्यन्वयः॥ १॥

महाभाग! भाग्ययुक्त! सूतसूतेति तात्पर्ये द्विरुक्तिः। एकत्र पुण्यकर्मवासनेति वा। शुको भगवान् पूजावान् पुनातीति पुण्यां यां भागवतीं कथामाह, परीक्षिते इति शेषः। हे वदतां वर! तां कथां नोऽस्माकं वदेत्येकान्वयः॥ २॥

विशेषप्रश्नं दर्शयति — **कस्मिन्निति**। चतुर्णां युगाना मध्ये कस्मिन्नियं प्रवृत्ता, कस्मिन् वा स्थाने देशे केन वा कारणेन कस्माद्धेतोः सञ्चोदितः कृष्णद्वैपायन इमां संहितां कृतवानित्यन्वयः॥ ३॥

शुकः परीक्षितं श्रावयामासेति त्वद्वचनमनुपपन्नमेव, केनापि श्रीशुकावगमनस्यासुलभत्वादित्याशयवानाह — **तस्येति**। तस्य व्यासस्य पुत्रः शुकः महायोगी महाज्ञानी महाध्यानी वा। अत एव सर्वदेशकालवस्तुषु ज्ञानादिसर्वगुणैः सममेकप्रकारं ब्रह्म पश्यतीति समदृक्। मया श्रिया सह वर्तत इति वा समम्। अत एव निर्विकल्पकः इदं मदीयं तत् तदीयमिति भेदबुद्धिमपहाय सर्वमीश्वराधीनमिति स्थितः। अत एव एक एवान्तः एकान्तः तस्मिन् हरौ मनसः सन्ततगतिर्यस्य स तथा। अत एवोद्गता निद्राऽज्ञानादिदोषपरम्परा यस्मात्स तथा। भस्मनाऽवगूढः मूढ इव अज्ञ इव ईयते दृश्यते अज्ञेनेति शेषः। तस्मात्तद्दर्शनमसुलभमिति मन्य इत्यन्वयः॥ ४॥

1 K adds प्रशस्त

## श्री राधाकृष्णप्रणीता सुधीसुधा

इति एवं ब्रुवाणं सूतं संस्तूय सम्यक् स्तुत्वा दीर्घसत्रिणां ब्रह्मसत्रदीक्षितानां मुनीनां कुलपतिः गणश्रेष्ठः वृद्धः बह्वृचः ऋग्वेदी शौनकः तदाख्यो मुनिरब्रवीत्॥ १॥

सूत! सूत! आदरे द्विरुक्तिः। महाभाग! निखिलतत्त्वज्ञानरूपभाग्यवन्! वदतां वर! भगवान् शुकः यद्भागवतं आह परीक्षिते उपदिदेश तां पुण्यां भागवतीं भगवन्तमधिकृत्य कृतां श्रीमद्भागवतप्रतिपाद्यां कथां नः अस्मभ्यं वद कथय॥ २॥

इयं भागवती कथा कस्मिन् युगे कस्मिन् स्थाने केन वा हेतुना प्रवृत्ता? कुतः केन सञ्चोदितः प्रवर्तितः कृष्णो मुनिः कृष्णद्वैपायनमुनिः संहितामिमां भागवतरूपां कृतवान्॥ ३॥

तस्य कृष्णद्वैपायनस्य पुत्रः शुकः महायोगी समदृक् समदर्शनः सर्वत्र समं ब्रह्म पश्यन्नित्यर्थः। निर्विकल्पकः निर्भेदज्ञानवान्। एकान्तमतिः निर्जनदेशवासनिरतः। अथवा एकस्मिन्नेव ब्रह्मणि अन्तस्समाप्तिः यस्याः सा एकान्ता ब्रह्मैकविश्रान्ता मतिः यस्य तथाभूतः। उन्निद्रः मायारूपनिद्रायाः **उद्बुद्धः**। गूढः अप्रकटः सर्वज्ञत्वेऽपि स्वसामर्थ्यप्रकटनरहितः इत्यर्थः। मूढ इव ईयते प्रतीयते।

एकान्तमतिर्नाम सर्वत्र ब्रह्मत्वनिश्चयमतिमान्, सर्वदा सर्वत्र ब्रह्मतादात्म्यबुद्धिमानित्यर्थः। अत्रोक्ता एकान्ता मतिरेव अनन्या भक्तिरिति गीतासु कथिता। एतादृशानन्यभक्तिमतामेव भगवतो विश्वरूपस्य दर्शनं सिध्यति नेतरेषाम्। तथा चोक्तम्— "नाहं वेदैर्न तपसा न दानेन न चेज्यया। शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा॥ भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन! ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप!॥" (भ. गी. 11-53, 54)।

अपि च गूढमूढशब्दौ प्रश्नगर्भौ स्वविज्ञानप्रकटनपराः पण्डिताः यद्यपि राज्ञां दृष्टिपथं उपयन्ति। किन्तु गूढो मूढ इव वर्तमानः अयं शुकः कथं परीक्षिन्नरपतेः दृष्टिपथमुपयातः? इति प्रश्नः। अयं च भागवततत्त्वजिज्ञासानिदानभूतः॥ ४॥

***दृष्ट्वानुयान्तमृषिमात्मजमप्यनग्नम् देव्यो ह्रिया परिदधुर्न सुतस्य चित्रम्।**
**तद्वीक्ष्य पृच्छति मुनौ जगदुस्तवास्ति स्त्रीपुम्भिदा न तु सुतस्य विविक्तदृष्टेः॥ ५॥**

**कथमालक्षितः पौरैः सम्प्राप्तः कुरुजाङ्गलान्[1]।**
**उन्मत्तमूकजडवद्विचरन् गजसाह्वये॥ ६॥**

**कथं वा पाण्डवेयस्य राजर्षेर्मुनिना सह।**
**संवादस्समभूत्तात! यत्रैषा सात्वती श्रुतिः॥ ७॥**

**स गोदोहनमात्रं हि गृहेषु गृहमेधिनाम्।**
**अवेक्षते महाभागः तीर्थीकुर्वंस्तदाश्रयम्॥ ८॥**

---

* VV 5 & 6 are reversed in H & V, M omits V 5 1 K,M °लम्

**श्रीध०** निर्विकल्पकत्वं प्रपञ्चयति — **दृष्ट्वेति**। आत्मजं शुकं प्रव्रजन्तं सर्वं सन्न्यस्य गच्छन्तं अनुयान्तं अनुगच्छन्तं ऋषिं व्यासं अनग्नमपि दृष्ट्वा जले क्रीडन्त्यः देव्यः अप्सरसः ह्रिया लज्जया परिदधुः वस्त्रपरिधानं कृतवत्यः। अनग्नमपि इत्यनेन अर्थात् तत्सुतः नग्नः इत्युक्तम्[1]। नग्नस्य पुरतः गच्छतः सुतस्य तु ह्रिया न परिदधुः। [2]तच्चित्रं वीक्ष्य। इयं स्त्री अयं पुमानिति भिदा भेदस्तवास्ति सुतस्य पुनः भेदमतिर्नास्ति। विविक्ता पूता दृष्टिर्यस्य ॥ ५ ॥

**कथमिति**। एवम्भूतोऽसौ कथमालक्षितो ज्ञातः ? कुरवो जाङ्गलाश्च देशविशेषास्तान् सम्प्राप्तः प्रथमम्। ततो गजसाह्वये विचरन् गजेन सहित आह्वयो नाम यस्य तस्मिन् हस्तिनापुरे। हस्ती नाम राजा, तेन निर्मितत्वात् ॥ ६ ॥

**कथंवेति**। एवम्भूतेन मुनिना सह। यत्र संवादे एषा सात्त्वती भागवती श्रुतिः [3]भागवतसंहिता ॥ ७ ॥

एतद्व्याख्यानं बहुकालावस्थानापेक्षं, तस्य त्वेकत्रावस्थानं दुर्लभमित्याह — **स** इति। गोदोहनमात्रं कालं प्रतीक्षते। तदपि न भिक्षार्थं किन्तु तेषामाश्रमं गृहं तीर्थीकुर्वन् पवित्रीकुर्वन्। तस्मादेवम्भूतः अत्र वक्ता इत्याश्चर्यम् ॥ ८ ॥

---

1 H,V add भवति 2 B तच्चरित्रं 3 A,B omit भागवत°

**वीर०** तस्य ज्ञानाधिक्यमेव [1]व्यञ्जयितुं कञ्चिदितिहासमाह — **दृष्ट्वा** इत्यनेन। कदाचित् क्वचित् देवस्त्रियः नग्ना जले विहरन्त्यः पुरतो गच्छन्तं शुकमालोक्य वासांसि न परिदधुः, ततः पृष्ठतः आयान्तं व्यासमालोक्य तु ह्रिया परिदधुः। तदिदं चित्रमवलोक्य श्रीव्यासे[2] पृच्छति शुकमवलोक्यापि वासांसि किं न परिधत्त मां त्ववलोक्य परिधत्तेति। तदा ता ऊचुः — तव तु स्त्रीपुरुषविवेकोऽस्ति। तव सुतस्य तु परमात्मनिष्ठैकमनसः तद्व्यतिरिक्तज्ञानाभावेन स्त्रीपुंविभागो नास्ति। अतस्तमवलोक्यापि लज्जारहिता न परिदधीम, [3]त्वां तु अवलोक्य परिदधीम इति सोऽयमत्रोच्यते। आत्मजमनुयान्तमनग्नमपि ऋषिं व्यासं दृष्ट्वा देव्यो देवानां स्त्रियः ह्रिया लज्जया परिदधुः, वासांसीति शेषः। सुतस्य नग्नस्यापि दर्शने न परिदधुः। तद्विचित्रं वीक्ष्य मुनौ व्यासे पृच्छति सति जगदुः देव्य इत्यनुषङ्गः। किमिति ? तव [4]स्त्रीपुंभिदा [5]स्त्रीपुंभेदोऽस्ति त्वत्सुतस्य तु नास्ति। तत्र हेतुः विविक्ते प्रकृतिपुरुषविलक्षणे परमात्मन्येव दृष्टिर्यस्य तथाभूतत्वात् तद्दर्शनेनापि नास्माकं लज्जा बभूवेति ॥ ५ ॥

एवम्भूतः सदा कुरून् जाङ्गलांश्च उन्मत्तवन्मूढवज्जडवच्च विचरन् कथं वा गजसाह्वये हास्तिनाख्ये पुरे सम्प्राप्तः ? कथं च पौरैर्जनैरालक्षितः ? ॥ ६ ॥

कथं वा पाण्डवेयस्य राजर्षेः परीक्षितो मुनिना शुकेन सह संवादः सम्बभूव ? संवादं विशिनष्टि। यत्र संवादे एषा सात्वती, सातयति सुखयतीति सात् परमात्मा सातेः सुखार्थात् सौत्राद्धातोः हेतुमण्ण्यन्ताद्व्यासरूपविधिना

"अनुपसर्गाल्लिम्पविन्द" (अष्टा. 3-1-138) इत्यादिना शप्रत्ययाभावपक्षे क्विपि सादिति व्युत्पत्तेः। सः प्रतिपाद्यतया[6] अस्तीति सात्वती। मतुप्युगित्वात् ङीप्। श्रुतिः श्रुतितुल्या प्रवृत्ता॥ ७॥

संवादस्यासम्भावनां व्यञ्जयन्नाह — **स** इति। स महायोगी शुकः गृहमेधिनां गृहाश्रमिणां गृहेषु गोदोहनमात्रं, यावता कालेन गौर्दुह्यते तावन्तं कालं अवेक्षते। प्रतीक्षमाणः तिष्ठति; नत्वधिकमित्यर्थः। विरक्तत्वादिति भावः। कथमवेक्षते? तेषां गृहमेधिनामाश्रमं तीर्थीकुर्वन् पवित्रीकर्तुमित्यर्थः॥ ८॥

1 W व्यञ्जयन् 2. W °सोऽपृच्छत् 3 A,B omit त्वां त्ववलोक्य परिदधीम 4. A omits स्त्रीपुम्भिदा 5. W °पुंस° 6 W तयाऽस्यामस्तीति

**विज**॰ श्लो॰ ५. माध्वसम्प्रदायानङ्गीकृतोऽयं श्लोको न व्याख्यातः।

कुरुजाङ्गलं कुरुविषयं प्राप्तः गजसाह्वये हस्तिनापुरे क्वचिदुन्मत्तवत् क्वचिन्मूकवत् क्वचिज्जडवत् विचरन् मुनिः पुरवासिभिः कथमालक्षितः? शुकत्वेनेति शेषः, पौरैरपि यज्ज्ञानं दुश्शकं किं पुनरन्तःपुरनिवासिभिः॥ ६॥

किञ्च परीक्षितः तद्दर्शनानन्तरकालीनः तेन सह संवादः सुतरां असुलभ. इत्याशयवानाह — **कथं वेति**। यत्र ययोः संवादे सात्वतो हरेः, तत्सम्बन्धिनी सात्वती श्रुतिः वर्तते। तादृशः संवादः पाण्डवेयस्य राजर्षेः परीक्षितः तेन मुनिना सह कथं वा समभूत्? न कथमपि घटत इत्येकान्वयः॥ ७॥

इतोऽपि तस्य तेन सह संवादः दुर्घटः इत्याशयवानाह — **स** इति। तदाश्रमं तेषां गृहस्थानां सतां गृहं तीर्थीकुर्वन् स्वपादक्रमणेन पवित्रीकुर्वन् महाभागः शुकः[1] गृहमेधिनां गृहं गत्वा पाणिभिक्षामाचरन्, गोदोहनमात्रं ततो नाधिकम्, अवाङ्मुखतया एकमनाः तिष्ठति; परं अन्यतः याति। हि यस्मात् तद्दर्शनमसुलभमित्येकान्वयः॥ ८॥

1 A,B omit शुकः

**रा॰ कृ॰** आत्मजं सर्वं सन्न्यस्य गच्छन्तं सुतं शुकं अनुयान्तं अनुगच्छन्तं अनग्नमपि ऋषिं व्यासं दृष्ट्वा देव्यः अप्सरसः ह्रिया लज्जया परिदधुः वस्त्रैः परिधानमकुर्वन्। सुतस्य नग्नस्य तु पुरो गच्छतः न परिदधुः, परिधानं नाकुर्वन्। तच्चित्रं वीक्ष्य मुनौ पृच्छति कारणं पृष्टवति — तव स्त्रीपुम्भिदा स्त्रीपुरुषभेदः अस्ति। विविक्तदृष्टेः पूतदृष्टेः सर्वत्र ब्रह्मदर्शिनः इत्यर्थः। तव सुतस्य तु नास्ति इति जगदुः अप्सरसः अवोचन्॥ ५॥

एवम्भूतोऽसौ शुकः कुरुजाङ्गलान् तन्नामकदेशविशेषान् उन्मत्तमूकजडवद्विचरन् गजसाह्वये गजसहिताह्वये पुरे इति शेषः। हस्तिनापुरे कथं प्राप्तः? कथं वा पौरैरालक्षितः ज्ञातः?॥ ६॥

तात! सूतसम्बोधनमिदम्। राजर्षेः राज्यपालनव्यापृतस्य परीक्षितः मुनिना निस्पृहेण शुकयोगिना सह यत्र यत्संवादे सात्वती हरिसम्बन्धिनी श्रुतिः भागवतसंहितेति यावत्। वर्तते सः संवादः कथं वा समभूत्?॥ ७॥

सः महाभागः शुकः गृहमेधिनां गृहस्थाश्रमिणां गृहेषु तदाश्रमं तीर्थीकुर्वन् पवित्रीकुर्वन्। संसारतरणकारणं स्थलं तीर्थमिति कथयन्ति। गोदोहनमात्रं कालमिति शेषः। अवेक्षते भिक्षाव्याजेन प्रतीक्षते॥ ८॥

**अभिमन्युसुतं सूत! प्राहुर्भागवतोत्तमम्।**
**तस्य जन्म महाश्चर्यं कर्माणि च गृणीहि नः॥ ९॥**

**स सम्राट् कस्य वा हेतोः पाण्डूनां मानवर्धनः।**
**प्रायोपविष्टो गङ्गायामनादृत्याधिराट्छ्रियम्॥ १०॥**

**नमन्ति यत्पादनिकेतमात्मनः शिवाय हा[1]नीय धनानि शत्रवः।**
**कथं स वीरः श्रियमङ्ग! दुस्त्यजां यु[2]वैषतोत्स्रष्टुमहो सहासुभिः॥ ११॥**

**शिवाय लोकस्य भवाय भूतये य उत्तमश्लोकपरायणा ज[3]नाः।**
**जीवन्ति नात्मार्थमसौ प[4]राश्रयं मुमोच निर्वि[5]द्य कुतः कलेबरम्॥ १२॥**

---

1 H,K,M,V चा° 2 K.M इयेष चोत्स्रष्टु° 3 H,V नराः 4. K,M परां श्रियं 5 H,V °वें°

**श्रीध॰** श्रोतुस्तु चरितमतीवाश्चर्यं [1]अतः कथय इत्याह — **अभिमन्युसुतं** इति पञ्चभिः। गृणीहि कथय॥ ९॥

**स** इति। सम्राट् चक्रवर्ती। वेति वितर्के। कस्य वा हेतोः कस्मात् कारणात्। [2]**अधिराट्छ्रियं** अधिराजां श्रियं सम्पत् अनादृत्य॥ १०॥

**नमन्तीति।** यस्य पादनिकेतनं चरणपीठम्। ह स्फुटम्। धनानि आनीय शत्रवो नमन्ति। अङ्ग! हे सूत! युवा तरुण एव। ऐषत ऐच्छत्। अत्र आर्षमात्मनेपदम्। असुभिः प्राणैस्सह॥ ११॥

ननु विरक्तस्य किं धनादिभिरिति चेत् तत्राह — **शिवाय** इति। लोकस्य शिवाय सुखाय भवाय **[3]समृद्ध्यै** भूतये ऐश्वर्याय च ते जीवन्ति नत्वात्मार्थम्। एवं सति असौ राजा [4]निर्विद्य विरज्यापि परेषामाश्रयं कलेबरं कुतः हेतोः मुमोच? न हि परोपजीवनं स्वयं त्यक्तुमुचितमित्यर्थः॥ १२॥

1. H,V add यतः 2 B adds अधिराट् क्विबन्तः 3 B,H,V समृद्धये 4. H निर्वेद्य

**वीर॰** अन्यच्च पृच्छति — **अभिमन्युसुत** मिति। हे सूत! अभिमन्योः सुतं परीक्षितं महाभागवतं प्राहुः। अतः तस्य महाश्चर्यं जन्म कर्माणि च नः अस्माकं गृणीहि कथय॥ ९॥

**स** इति। पाण्डवानां पाण्डुवंशजानां मानं प्राशस्त्यं वर्धयतीति वर्धनः, नन्द्यादित्वात् कर्तरि ल्युः। **सम्राट्** सार्वभौमः सः परीक्षित् कस्य हेतोः कस्माद्धेतोः अधिराट्छ्रियं अधिराज्यसम्पदमनादृत्य गङ्गायां प्रायोपविष्टः॥ १०॥

**नमन्तीति।** शत्रवः आत्मनः स्वस्य शिवाय आत्मनां योगक्षेमाय धनानि आनीय आदाय समर्प्य इत्यर्थः। यस्य परीक्षितः पादनिकेतं पादपीठं नमन्ति। ह इत्याश्चर्ये। सः वीरः परीक्षित् युवा सन्नपि दुस्त्यजां श्रियमधिराट्छ्रियं असुभिः प्राणैस्सह उत्स्रष्टुं त्यक्तुं ऐषत ऐच्छत्। अहो अत्याश्चर्यमेतत्॥ ११॥

ननु महाभागवतं प्राहुरिति त्वयैव उक्तत्वात् भागवतानां च देहतदनुबन्धिषु विरक्तेः स्वाभाविकत्वाच्च नेदमाश्चर्यं इत्यत आह — **शिवाय** इति। यद्यपि भागवता विरक्ताः, तथापि उत्तमश्लोको भगवानेव परं अयनं प्राप्यः प्रापकः[1] आधारश्च येषां ते जना भागवता न आत्मार्थं जीवन्ति, किन्तु लोकस्य शिवाय मङ्गलाय भूतये श्रियै भवाय तस्या उत्तरोत्तरोदयाय च जीवन्ति एवं पराश्रयं परैः लोकैः शिवाद्यर्थं आश्रयणीयं परोपकारकमित्यर्थः। कलेबरं कुतः हेतोः निर्विद्य हेयं मत्वा मुमोच तत्याज॥ १२॥

1 W °कं

**विज०** किञ्च हे सूत! सुज्ञाः अभिमन्युसुतं परीक्षितं भागवतश्रेष्ठं प्राहुः। ततः[1] किमिति, तत्राह तस्य इति। तस्य परीक्षितः महाश्चर्यं, श्रोतॄणां इति शेषः। जन्मकलिबन्धनादीनि कर्माणि च अस्माकं गृणीहि इत्यन्वयः॥ ९॥

तस्य वैराग्यहेतुं पृच्छति — **स सम्राट्** इति। पाण्डवानामभिमानवर्धनः सः सम्राट् अप्रतिहताज्ञः चक्रवर्ती कस्य वा हेतोः अधिराट्छ्रियं चक्रवर्तिसम्पदं लक्ष्मीं अनादृत्य तृणवत् कृत्वा गङ्गायां प्रायोपविष्टः अभूदित्यन्वयः॥ १०॥

एवंविध श्रीसङ्गत्यागे महता कारणेन भवितव्यं, तत्किमित्याशङ्क्याऽऽह — **नमन्ती**ति। शत्रवः मण्डलपतयः आत्मनः शिवाय स्वकल्याणाय धनानि च आनीय यस्य परीक्षितः पदयोर्निकेतं पीठाख्यस्थानं नमन्ति इत्यन्वयः। अङ्ग! सूत! स धीरः असुभिः सह दुस्त्यजां श्रियं अधिराज्यसंज्ञां[2] उत्स्रष्टुं हातुं इयेष ऐच्छत्। अहो आश्चर्यमेतत्। अतो महता हेतुना भवितव्यम्, तत्किमिति भावः॥ ११॥

पुनरपि तदेव पृच्छति — **शिवाय** इति। ये उत्तमश्लोकपरायणाः जनाः ते लोकस्य शिवादिप्राप्तये जीवन्ति न स्वार्थं जीवन्तीत्यन्वयः। तस्मात् परार्थैकजीवनोऽसौ तस्मात् कारणात् परां उत्कृष्टां श्रियं निर्विद्य विरज्य कलेबरं देहं मुमोच इत्यन्वयः॥ १२॥

1. A,B,M omit ततः 2. A,B °ज°

**रा० कृ०** हे सूत! अभिमन्युसुतं परीक्षितं भागवतोत्तमं **भगवद्भक्तानां श्रेष्ठं प्राहुः कथयन्ति। तस्य राज्ञः महाश्चर्यं जन्मकर्माणि च नः गृणीहि कथय॥ ९॥**

पाण्डूनां पाण्डुवंश्यप्रभूणां मानवर्धनः अभिमानवर्धनः सः सम्राट् परीक्षित् कस्य वा हेतोः अधिराट्छ्रियं राज्यसम्पदमनादृत्य गङ्गायां गङ्गातीरे प्रायोपविष्टः मरणपर्यन्तमनशनेन उपविष्टः ?॥ १०॥

किञ्च अङ्ग! हे सूत! शत्रवः आत्मनः शिवाय क्षेमाय धनानि आनीय यत्पादनिकेतं यस्य पादपीठं नमन्ति; सः वीरः परीक्षित् युवा सन् असुभिस्सह दुस्त्यजां श्रियं उत्स्रष्टुं त्यक्तुं कथमैषत, ऐच्छत्? अहो आश्चर्यम्!॥ ११॥

उत्तमश्लोकपरायणाः उत्तमश्लोकः भगवान् परमं सर्वोत्कृष्टं अयनं आश्रयः येषां ते; तथाभूताः ये जनाः सन्ति ते नराः लोकस्य शिवाय सुखाय, भवाय समृद्धये, भूतये ऐश्वर्याय जीवन्ति, न तु आत्मार्थम्। अस्यां दशायां असौ परीक्षिन्नरपतिः निर्विद्य निर्वेदं प्राप्यापि पराश्रयं परेषामाश्रयभूतं कलेबरं कुतः मुमोच? न खलु परोपकारकरणं स्वयं त्यक्तुमुचितमिति भावः॥ १२॥

**तत्सर्वं न समाचक्ष्व पृष्टो यदिह किञ्चन।**
**मन्ये त्वां विषये वाचां स्नातमन्यत्र छान्दसात्॥ १३॥**

**सूत उवाच**

**द्वापरे समनुप्राप्ते तृतीये युगपर्यये।**
**जातः पराशराद्योगी वासव्यां कलया हरेः॥ १४॥**

**स कदाचित्सरस्वत्या उपस्पृश्य जलं शुचि[1]।**
**विविक्तदेश[2] आसीनः उदिते रविमण्डले॥ १५॥**

**परावरज्ञः[3] स ऋषिः कालेनाव्यक्तरंहसा।**
**युगधर्मव्यतिकरं प्राप्तं भुवि युगे युगे॥ १६॥**

**भौतिकानां च[4] भावानां[5] शक्तिह्रासञ्च तत्कृतम्।**
**अश्रद्दधानान्निस्सत्वान् दुर्मेधान् ह्रसितायुषः॥ १७॥**

**दुर्भगांश्च[6] जनान् वीक्ष्य मुनिर्दिव्येन चक्षुषा।**
**सर्ववर्णाश्रमाणां[7] यद्दध्यौ हितममोघदृक्[8]॥ १८॥**

**चातुर्होत्रं कर्म[9] शुद्धं प्रजानां वीक्ष्य वैदिकम्।**
**व्यदधाद्यज्ञसन्तत्यै वेदमेकं चतुर्विधम्॥ १९॥**

**ऋग्यजुस्सामाथर्वाख्या वेदाश्चत्वार उद्धृताः ।**
**इतिहास[10]पुराणं च पञ्चमो वेद उच्यते ॥ २० ॥**

1 I.K.M शुचिः 2 B.H.I K M V W एक 3 H °प° 4 B तु 5 W भूतानां 6 H.V दुर्बलांश्च 7 M °धर्म° 8 M चिर° 9 B म° 10 H.V.W °सः

**श्रीध॰ तदिति ।** यत्किञ्चन पृष्टः असि तत्सर्वं नः अस्मभ्यं समाचक्ष्व। यत् यस्मात् वाचां विषये गिरां गोचरेऽर्थे स्नातं पारङ्गतं त्वां मन्ये, छान्दसादन्यत्र वैदिकव्यतिरेकेण अत्रैवर्णिकत्वात्॥ १३ ॥

कस्मिन् युगे इत्यादिप्रश्नानां व्यासजन्मकथनपूर्वकमुत्तरमाह — **द्वापर** इति। द्वापरे समनुप्राप्ते। कदेत्य-पेक्षायामाह, तृतीये युगस्य पर्यये परिवर्ते[1]। वासव्यामुपरिचरस्य वसोर्वीर्याज्जातायां सत्यवत्यां योगी ज्ञानी व्यासः जातः ॥ १४ ॥

**स** इति। जलमुपस्पृश्य जले स्नानादिकं कृत्वा इत्यर्थः। आसीनः बभूव इति शेषः। विविक्ते देशे इत्यादि। चित्तैकाग्र्यर्थमुक्तम्। अनेनैव बदरिकाश्रमस्थानं सूचितम् ॥ १५ ॥

**परावरज्ञ** इति। तत्र च सः ऋषिः युगधर्मव्यतिकरादिकं वीक्ष्य सर्ववर्णाश्रमाणां यत् हितं तत् दध्यौ इति तृतीयश्लोकेनान्वयः। परा[2]वरज्ञः अतीतानागतवित् अव्यक्तं रंहः वेगः यस्य तेन कालेन [3]युगधर्माणां व्यतिकरं सङ्करं प्राप्तं वीक्ष्य। तथा भुवि युगे युगे॥ १६ ॥

**भौतिकाना**मिति। भौतिकानां[4] शरीरादीनाम्। तत्कृतं कालकृतम्। निस्सत्वान् धैर्यशून्यान् दुर्मेधान् मन्दमतीन् [5]ह्रसितायुषः ह्रसितं आयुः तेजः येषां तान्॥ १७॥

**दुर्भगा**निति। [6]अमोघदृक् सर्वज्ञानसम्पन्नः ॥ १८ ॥

**चातुर्होत्र**मिति। ततश्च होत्रोपलक्षिताः चत्वारः ऋत्विजः चतुर्होतारः, तैः अनुष्ठेयं कर्म चातुर्होत्रम्। शुद्धं शुद्धिकरं [7]कर्म। यज्ञसन्तत्यै यज्ञानामविच्छेदाय॥ १९ ॥

चातुर्विध्यमेवाऽह — **ऋगिति**। उद्धृताः पृथक्कृताः ॥ २० ॥

1 H.V add चरमभाग इत्यर्थः। 2 H °प° 3 H युगतो 4 B adds भावानां 5 A H.V omit ह्रसितायुषः .. तान्। 6 A H V omit अमोघदृक् सर्वज्ञानसम्पन्नः 7 A.B omit कर्म

**वीर॰** प्रश्नमुपसंहरति — **तदिति**। नः अस्माभिः पृष्टस्त्वं तदेतत् पृष्टं सर्वं सम्यगाचक्ष्व आख्याहि। [1]यदपि किञ्चन अपृष्टमस्ति तदपि समाचक्ष्व। यदसीतिपाठे [2]यत् यस्मात् पृष्टः त्वं ततः पृष्टं तदेतत्सर्वं अन्यदपि

किञ्चित् समाचक्ष्व। त्वां अन्यत्र छान्दसात् वेदवाक्यं विना वाचां इतिहासपुराणादिरूपाणां विषये स्नातं पारङ्गतं अधिकृतं वा मन्ये वेदवाक्यव्यतिरिक्तेतिहासपुराणादिश्रवणे त्वामेव अधिकारिणं व्यासानु[3]ग्रहात् रोमहर्षणसुतं मन्य इत्यर्थः ॥ १३ ॥

एवं आपृष्टः सूतः ''कस्मिन् युगे प्रवृत्तेयं'' इत्यादिप्रश्नान् प्रतिविवक्षुः तावत् तदुपोद्घातरूपं जन्मप्रभृत्येतत्पु[4]राणोद्योगावधिकं श्रीव्यासचरित्रं तदनुप्रयुक्तं श्रीनारदवृत्तान्तं चाऽऽह 'द्वापर' इत्यादिना यावत्षष्ठाध्यायसमाप्ति। द्वापरे युगे समनुप्राप्ते तत्रापि तृतीये अस्य युगस्य पर्यये अवसाने पराशरात् ऋषेः वासव्यां उप[5]रिचरवसुवीर्यजातायां सत्यवत्यां हरेः कलया अंशेन योगी श्रीव्यासः जातः जज्ञे ॥ १४ ॥

स व्यासः कदाचित् सरस्वत्यां नद्यां शुचि पवित्रं जलं उपस्पृश्य आचम्य। इदं नित्यकर्मोपलक्षणम्। रविमण्डले उदिते सति एकः असहायः। विविक्ते निर्जने देशे आसीनः उपविवेश ॥ १५ ॥

ऋषिः निखिलनिगमद्रष्टा परावरज्ञः प्रकृतिपुरुषेश्वररूपोत्कृष्टतत्त्वयाथात्म्यदर्शी स व्यासः। अव्यक्तं रंहः वेगः यस्य तेन दुर्निरीक्ष्यवेगेन कालेन हेतुना भुवि भूलोके प्रतियुगं प्राप्तं धर्मव्यतिकरं धर्मव्यत्यासं कृतादियुगक्रमेण प्राप्तं धर्मस्य वृद्धिह्रासादिकमित्यर्थः ॥ १६ ॥

तथा तत्कृतं धर्मव्य[6]तिकरकृतं भौतिकानां आकाशादिभूतपरिणामरूपाणां देवादिशरीराणां भूतानां त[7]त्सृष्टानां जीवानां च शक्तिह्रासं शक्तिक्षयञ्च तथा जनान् अभि[8]वीक्ष्य। कथम्भूतान् अश्रद्दधानान् श्रद्धां अकुर्वाणान् स्वस्ववर्णाश्रमानुगुणधर्मानुष्ठानविषयकत्वराराहितान् निस्सत्त्वान् दुर्बलान् सत्यामपि श्रद्धायां दुर्बलान् सत्यपि सत्त्वे दुर्मेधान्। ह्रसितं सङ्कुचितं आयुः येषां तान् अनुष्ठानोपयुक्तज्ञानायूरहितान् ॥ १७ ॥

अत एव दुर्भगान् भाग्यहीनान् मुनिः परमात्मयाथात्म्यमननशीलः, अत एव अमोघदृक् अवितथसङ्कल्पः। दिव्येन चक्षुषा योगपरिशुद्धेन मनसा। सर्वेषां वर्णानामाश्रमा[9]णां च हितं दध्यौ चिन्तितवान्, चिन्तापूर्वकं चकार इत्यर्थः ॥ १८ ॥

तदेवाऽऽह प्रजानां त्रैवर्णिकानां सम्बन्धित[10]या श्रेयस्साधनतयाऽनुष्ठेयं वैदिकं वेदपूर्वभागबोध्यम्, अत एव विशुद्धं [11]भ्रमविप्रलम्भादिपुरुषदोषास्पृष्टविधिबोधितं चातुर्होत्रं चातुर्होत्रशब्दवाच्यमन्त्रप्रकाश्यं कर्म वीक्ष्य प्रजानामनुष्ठेयमालोच्य तावत् यज्ञानां सन्तत्यै कर्तव्ययज्ञकलापादिविषयकबोधार्थं [2]तद्वेदं पूर्वं एकरूपेण अवस्थितवेदं ऋग्यजुस्सामाथर्वभेदेन चतुर्विधं व्यदधात् व्यभाङ्क्षीत् ॥ १९ ॥

चतुर्विधेन विधानमेव दर्शयति — **ऋगिति**। ऋगाद्याः चत्वारः वेदात् उद्धृताः मिश्रीभूतवेदराशेः उद्धृत्य सन्निवेशविशेषेण योजिता इत्यर्थः। तथा इतिहासः पुराणानि च उद्धृतानि इत्यनुषङ्गः। कालेन विप्लुतानि

**मत्स्यादि पुराणानि इतिहासाश्च उद्धृताः इत्यर्थः। इतिहासं पुराणानि च विशिनष्टि पञ्चमो वेद उच्यते। पञ्चमवेदत्वेन प्रसिध्यन्त इत्यर्थः॥ २०॥**

1. W यदिह 2. W °पा° 3. W °गृहीत° 4. W °त्पुराणयोगा° 5 W °बाज° 6 A,B omit व्यतिकर 7 W तत्संसृष्टानां 8 W °पि 9. W °मि° 10. W तासां 11 W भ्रमप्रमादविप्र° 12. W तद्बोधकं 13 W °तं

**विज॰** इह अस्यां अवस्थायां प्रश्नराशौ यत्किञ्चित्प्रश्नरूपं पृष्टः त्वं तत्सर्वं किञ्चन इत्यनुर्वरीकृत्य समाचक्ष्व। कुतः छान्दसात् वेदविषयात् अन्यत्र पुराणादौ वाचां विषये स्नातं निष्णातं मन्य इति यस्मात् तस्मात् इत्यन्वयः॥ १३॥

कस्मिन् युग इति प्रश्नं परिहरति — **द्वापर** इति। कृतयुगापेक्षया तृतीये द्वापरे युगे युगपर्यवसाने समनुप्राप्ते सति हरेः कलया अंशेन पराशरात् पराकृतः शरः हिंसा येन स तथोक्तः। तस्मात् वासव्यां वसोः उपरिचरस्य पुत्र्यां सत्यवत्यां योगी नित्यज्ञानी नाम्ना व्यासो जातः अवतीर्णः। अतः द्वापरे युगपर्यवसाने भागवतप्रवृत्तिरिति भावः॥ १४॥

अवतारप्रयोजनमाह — **स कदाचि** दिति। सः व्यासः भगवान् शुचिः शुद्धः कदाचित् सरस्वत्याः नद्याः जलं उपस्पृश्य सन्ध्याक्रियादिकं निर्वर्त्य पश्चात् रविमण्डले उदिते सति तत्तटे विविक्ते एकान्ते स्वाश्रम एव आसीनः एकाकी॥ १५॥

परावरज्ञः कालत्रयज्ञानी सः सर्वतः सारः सर्वोत्तमः ऋषिकुलावतीर्णः परावरज्ञत्वे हेतुर्वा, त्रिकालदर्शित्वाद्वा। अव्यक्तरंहसा अनभिव्यक्तवेगेन भुवि युगे युगे प्राप्तं युगधर्मव्यतिकरं युगधर्मसाङ्कर्यम्॥ १६॥

तथा तत्कृतं कालकृतं भौतिकानां भूतकार्याणां भावानां पदार्थानां शक्तिह्रासं च अत एव जनान् च अश्रद्दधानान् तात्पर्यशून्यान्, निस्सत्त्वान् निरुत्साहान्, दुष्टा मेधा येषां ते दुर्मेधाः तान् धारणाशक्तिशून्यान् वा। एधशब्दवत् अयमप्यकारान्तः। ह्रसितायुषः अल्पायुषः॥ १७॥

दुष्टभाग्यान् वीक्ष्य मुनिः मौनवान् दिव्येन चक्षुषा अपरोक्षज्ञानेन सर्वाश्रमाणां यत् हितं तत् चिरं **दध्यौ** चिन्तितवान् इत्येकान्वयः। सर्वज्ञस्य चिरध्यानं अज्ञदृष्ट्यपेक्षया, दुष्टमोहनाय च इति ज्ञातव्यम्। अमोघदृक् अवन्ध्यज्ञानः[1]॥ १८॥

किं हितमपश्यत् इति तत्राह — **चातुर्होत्र** मिति। चत्वारः होतारः होत्रध्वर्यूद्गातृब्रह्माणः यस्मिन् तत् तथोक्तं, दशहोत्रादिचातुर्होत्रपर्यन्तैः मन्त्रैः प्रकाश्यं वा अग्निष्टोमादिकं कर्म प्रजानां वैदिकीनां शुद्धिकरं रागादिवर्जितं वा वीक्ष्य यज्ञसन्तत्यै अग्निष्टोमादियज्ञपरम्पराप्रवर्तनाय एकं अविभक्तं वेदं ऋगादिभेदेन चतुर्विधं व्यदधात् इत्येकान्वयः। आदिमध्यावसानेषु हरिस्मृत्या तत्पूज्यत्वेन क्रियमाणं कर्म प्रजानां ज्ञानद्वारा शुद्धिकरं अपश्यत् इति भावः॥ १९॥

कथं विभक्ता इति तत्राह — **ऋगिति**। वेदव्यासेन मूलवेदसमुद्रात् ऋग्यजुस्सामाथर्वाख्याः चत्वारः वेदाः उद्धृताः, न तु कृताः। तदर्थज्ञानाय कृतं इतिहासपुराणञ्च वेदार्थाऽऽवेदकत्वात् पञ्चमो वेद इत्युच्यते। "पञ्चमो वेद" इत्युक्तेः इतिहासादीनां शब्दतः रचनं न तु अर्थतः, तस्य नित्यत्वात् इति ज्ञातव्यम् ॥ २० ॥

1. K adds अचिन्त्यो वा

**रा० कृ०** इह इदानीं यत्किञ्चन पृष्टः त्वं तत्सर्वं नः अस्मभ्यं समाचक्ष्व कथय। कुत इति चेत्? छान्दसात् वैदिकात् अन्यत्र वाचां विषये अर्थे त्वां स्नातं निष्णातं पारङ्गतं मन्ये।

अत्र "अन्यत्र छान्दसात्" इति पदद्वयमाधारीकृत्य सूतस्य त्रैवर्णिकत्वाभावं तन्मूलकं वेदानधिकारं च बहवः प्राचीनप्राज्ञवरेण्याः कथयन्ति। अहन्तु व्यासहृदयं अन्यथैव मन्ये — सामान्यजनदुर्ग्रहवेदार्थसुखबोधायैव पुराणोत्पत्तेः, सूतस्य बहुपुराणकथामुखेन वेदार्थप्रवचनप्रज्ञाशालित्वात् अत्रापि छान्दसात् वैदिकवाङ्मयादन्यत्र पुराणादिलौकिकवाङ्मये तस्य पारङ्गतत्वकथनं तत्पुराणप्रवचनप्रावीण्यप्रशंसामात्रपरमेव। अन्यथा "स संहितां भागवतीं" (भाग. 1-7-8) इत्यत्र, "यत्रैषा सात्वती श्रुतिः" (भाग. 1-4-7) इत्यत्र च अस्य भागवतस्य वेदवाचकसंहिताश्रुतिशब्दाभ्यां साक्षाद्वेदत्वाभ्युपगमात् अत्रैवर्णिकत्वमात्रप्रयुक्तवेदानधिकारिणि सूते शौनकादि कृतप्रश्नस्यैव असङ्गतत्वापत्तेः ॥ १३ ॥

युगपर्यये युगगणनायां तृतीये द्वापरे समनुप्राप्ते पराशरात् वासव्यां उपरिचरवसोः वीर्यात् जातायां सत्यवत्यां हरेः कलया ज्ञानांशेन योगी ज्ञानी व्यासः जातः।

हरिकलासञ्जातो नाम भगवदवतारः इत्यर्थः। मोक्षविद्याधर्मोद्धारार्थं धरायामवतीर्णाः महात्मानः भगवतः अवताराः। तेषु अन्यतमः व्यासः। सर्वोऽपि अवतारः प्रयोजनसापेक्षः। पुराणमुखेन वेदधर्मप्रयोजनकः वेदव्यासावतारः।

दैवयोगेन पराशरमहर्षेः उपरिचरवीर्यसञ्जातायां कन्यायामेव सत्यवत्यां सद्योगर्भात् उदभूत् वेदव्यासः। पुराणोपवर्णिताः, इह परत्र वा प्राक् प्रवृत्ताः जगत्सृष्टिक्रमे च पुनः पुनः आवर्तमानाः गूढार्थव्यञ्जिकाः ईदृगवतारकथाः इतिहासरूपेण उपदिश्यन्ते प्राचीनैः। तासु एकतमा व्यासजननकथा। उपरिचरवसुः खगोलवृत्तिः सम्पत् या प्राणिनां प्राणहेतुभूतस्य सौरकिरणस्यांशमयी। जलपतिता च एषा जीवप्रज्ञारूपेण पृथक्क्रियते। अयमंशो मत्स्यावतारकथावसरे सविस्तरं व्याख्यास्यते। अथ जीवे दैवांशेन अभिव्यज्यमाना प्रज्ञैव वागित्यभिधीयते। सा परिसरवर्तिवस्तुभिः मनःप्रभृतीन्द्रियेषु अविकृतदशायां सत्यवतीसंज्ञां लभते। या चित्तवृत्तिस्पर्शायोगात् कन्या इति च कथ्यते। तस्यां येन देवभावः जागरितः सः गुरुः। तस्य वाक् शिष्ये ज्ञानबीजरूपेणोप्ता वर्धते। तदिदमेव कन्याया गर्भधारणं नाम। तद्गर्भसम्भूता च प्रज्ञा कृत्स्नमेव सृष्टिविज्ञानं विभज्य भागवतं धर्मं जगति प्रतिष्ठापयति। तदेतत् वेदव्यासजन्मनः गुह्यम्। एवं व्यासः युगे युगे अवतीर्य भुवि वेदविभागं विदधाति। अस्त्येतदुपदेशप्राप्त्युपायः। स यथा —

**श्वासैकाग्रं मनः कृत्वा साधकः श्वासप्रवर्तकं सङ्गीतमनुध्यायेत्। तत्सङ्गीतश्रवणोपयोगिमर्मसमुदायः सामगानमिति गान्धर्वमिति च कथ्यते यमेव अभिदधति केचित् हंसमार्ग इत्यपि। तमनुग्रहीतुमेव जीवेभ्यः नारदः पर्यटति सर्वत्र।**

एता गूढकथाः न केवलमस्मासु मनुष्येषु, किन्तु सर्वेषु लोकेषु सर्वासु कक्ष्यासु किम् बहुना जगत्सर्गे च सम्प्रवर्तन्ते। तत्प्रतिबिम्बभूतोऽयं भौतिकप्रपञ्चः। इहाप्येतत्कथाप्रवर्तकानां कथाः प्रागुक्तक्रमानुगताः एव पूर्वोक्तसङ्केतपदैः तेषां व्यवहारश्च वेदपुराणसम्प्रदायानुसार्येव। तथाहि — व्यासप्रज्ञां धरायां अवतारितवतः व्याससंज्ञा। नारदप्रज्ञां लोकायानुग्रहीतुं जातस्य नारदाख्या च। एवं सरस्वतीव्यासादिनामधारिणः जीवाः तत्सम्बन्धिप्रयोजनापेक्षया उद्भूय भगवल्लीलामयीं जीवयात्रां कुर्वन्ति। एतादृगृषिषु बहवः जन्मान्तरेष्वपि नैकेषु स्वप्रत्यभिज्ञावन्तः स्वकर्तव्यकरणपरायणाः सन्तः तद्गुरुभिश्च प्रत्यभिज्ञायन्ते। एतादृशप्रत्यभिज्ञावतां मध्ये तत्तत्सङ्गीयाः बहुषु जन्मसु एकमेव नामधेयं तत्तज्जन्मकारणपितृकृतनामनैरपेक्ष्येण सङ्केततया स्वीकुर्वन्ति। वेदेषु पुराणेषु च श्रूयमाणानां ऋषीणां नामानि प्रायशः ईदृशान्येव। अत एव बहुयुगप्रवृत्तपुराणकथासु श्रुतपूर्वाण्येव ऋषिनामानि पुनः पुनः श्रूयन्ते।

अन्यच्च गुह्यं — यदेतन्नामधारिणः लोकातीताः महान्तः सकुटुम्बाः यथापूर्वसम्बन्धानुगताः सङ्घशः परिवर्तिनि कालचक्रे भूयो भूयः भुव्यवतरन्ति। तथाहि — वटवृक्षबीजसञ्जातं वटवृक्षान्तरमपि पूर्वलक्षणलक्षितमेव भवति। एतद्रहस्यलवज्ञानिनः ज्योतिश्शास्त्रविदः केचन पुरा नाडीग्रन्थान् व्यरचयन्।

प्रतिवत्सरं वसन्तादिऋतुधर्माइव प्रतिवत्सरशतं प्रतिवत्सरसहस्रञ्च पुनः पुनरावर्तिनः ऋतुधर्माः सन्तीति अकथयत् सूतः महाभारतसंहितारम्भावसरे। तान् धर्मान् सम्यग्विचार्य कृतत्रेताद्वापरकल्याख्ययुगचतुष्टयव्यवस्था कृता प्राचीनैः। तानि च युगानि तिथिवासरादय इव यथाक्रमं पुनःपुनः आवर्तन्ते।

द्वात्रिंशत्सहस्रोत्तरचतुर्लक्षसंवत्सरपरिमितः कालः कलियुगस्य प्रमाणम्। तत्प्रमाणे द्विगुणीकृते द्वापरयुगं, त्रिगुणीकृते त्रेतायुगं, चतुर्गुणीकृते कृतयुगञ्च यथाक्रमं सम्पद्यन्ते। युगचतुष्टयप्रमाणानि आहत्य विंशतिसहस्रोत्तरचत्वारिंशल्लक्षवत्सरपरिमितकालं महायुगप्रमाणं भवति। (1. कलिः 4,32,000, 2. द्वापरं 8,64,000, 3. त्रेता 12,96,000, 4. कृतं 17,28,000 आहत्य 43,20,000) कलिः नाम गणितशास्त्रे कलनं अथवा मित्यावश्यक इत्यर्थः। द्वापरः द्विगुणः। त्रेता त्रिगुणा। कृतं तु चतुर्गुणम्। तस्मात् कलिरेव कालमानम्।

प्रतिसंवत्सरं ऋतुपरिवर्तनावसरे प्रकृत्यां मनुष्यप्रवर्तनारोग्यादिष्विव युगसन्धिष्वपि नदीसमुद्रपर्वतेषु तत्तद्देशजातिस्वरूपस्वभावेषु मानवानाञ्चाभ्यासायुरारोग्यादिषु, विशिष्य धर्मसूक्ष्मावगतिप्रत्ययादिषु विपरिणामाः दृश्यन्ते। तादृग्युगसन्धिसमयेषु धर्मसंस्थापनार्थं भगवदवतारावश्यकता समुदेति। कृतयुगे निर्व्याजमेव धर्माचरणम्। त्रेतायां स्वसंरक्षणार्थं धर्माश्रयणं क्रियते; तेन पादत्रयवान् धर्मः। द्वापरे परस्परप्रयोजनार्थं स्वाभ्युदयार्थं च धर्ममाचरन्ति जनाः। तस्मात् तदा धर्मः द्विपाद एव। कलौ तु प्राणभयावसर एव धर्मः क्रियते। ततः तदा धर्मः एकपाद एव। द्वापरकलिसन्धिसमये श्रीकृष्णव्यासयोरवतारः समजनि। अपिच, युगसन्धिषु प्रायेण प्रपञ्चमहासङ्ग्रामः अनिवार्यः। व्यासकाले हि महाभारतयुद्धमभूत्॥ १४॥

सः व्यासः कदाचित् सरस्वत्याः शुचि जलं उपस्पृश्य आचम्य रविमण्डले उदिते सति एकः विविक्ते निर्जनप्रदेशे आसीनः बभूव।

परावरज्ञः अतीतानागतवेदी ऋषिः निखिलागमार्थवेदी सः व्यासः अव्यक्तरंहसा अविदितवेगेन कालेन कारणेन भुवि युगे युगे प्रतियुगं प्राप्तं युगधर्मव्यतिकरं युगधर्माणां तपोयज्ञस्वाध्यायदानादीनां नाशं अनधिकारिषु प्रवृत्तिरूपं सङ्करं वा। तत्कृतं तेनैव कालेन कृतं भौतिकानां पाञ्चभौतिकानां भावानां प्राणानां शक्तिह्रासं सामर्थ्यहानिं तथा अश्रद्दधानान् सन्मार्गश्रद्धाविरहितान्, निस्सत्त्वान् सत्त्वगुणरहितान् दुर्मेधान् मन्दमतीन् ह्रसितायुषः क्षीणायुषः दुर्बलांश्च जनान् दिव्येन चक्षुषा वीक्ष्य मुनिः मननशीलः सन् अमोघदृक् सर्वहितकरतत्त्वदर्शनः सर्ववर्णाश्रमाणां हितं यत् तत् दध्यौ ध्यातवान् ॥ १५, १६, १७, १८ ॥

किञ्च सः व्यासः चातुर्होत्रं चतुर्भिः होतृभिः अनुष्ठेयं वैदिकं वेदोक्तं शुद्धं कर्म यज्ञादिरूपं प्रजानां यज्ञसन्तत्यै यज्ञानां अविच्छेदाय एकं तावत्पर्यन्तं एकरूपेण अवस्थितं वेदं चतुर्विधं व्यधात् अकरोत् ॥ १९ ॥

ते चत्वारः वेदाः ऋग्यजुस्सामाथर्वाख्याः उद्धृताः मिश्रीभूतवेदराशेः पृथक्कृताः। इतिहासः महाभारतादिः, पुराणं विष्णुपुराणादिकं पञ्चमः वेद इत्युच्यते। इतिहासपुराणानां एकत्वाभिप्रायेण पञ्चमः वेदः इति संज्ञा।

मनुष्याणां गुणकर्मानुरूपाः विभागाः वर्णा इत्युच्यन्ते। ते च ब्रह्मक्षत्त्रवैश्यशूद्राख्याः चत्वारः। उक्तं च भगवता — "चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः। तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥" (भ. - गी. 4-13) वयोऽनुरूपभावपरिणामानुकूलकर्माचरणाश्रयभूताः मनुष्याणां जीवितदशादिविशेषाः आश्रमा इति कथ्यन्ते।

वेदः कर्माचरणप्रधानः। सत्कर्माचरणमेव स्त्रीपुरुषव्यक्तिषु सत्संस्काराधाने बीजं, न तु केवलं मेधाविलसनम्, नापि तत्त्वज्ञानं वा।

वेदोपासनाय यज्ञाचरणमावश्यकं भवति। यज्ञश्च उपसर्जनीभूतेन्द्रियसुख निष्कारणमेव सर्वसङ्क्षेमाय पवित्रभावनया कृतं सत्कर्मैव। तथाहि — नमस्कारपुरस्कारादिभिः सभ्यप्रसादनं पञ्चभूतपर्जन्यपशुसस्यादीनां पूज्यभावनया सद्विनियोगादिकञ्च यज्ञपदवाच्यं भवति। यज्ञनिर्वहणाय चत्वारः ऋत्विजः आवश्यकाः। ते च अस्मच्छरीरे खनिजजलोष्णप्राणस्वरूपाः। यज्ञाचरणेन प्रजानां संस्कारशुद्धिः।

व्यासकृतः वेदविभागः कलियुगे वैदिककर्माचरणौपयिकः। ऋग्वेदः वाग्रूपेण कण्ठनिस्सृतध्वनेः सङ्केतः। तद्ध्वनिकारणोच्छ्वासनिश्श्वासप्रवर्तितं प्राणस्पन्दनं सामवेदः। शरीरेण मनसा इन्द्रियैश्च क्रियमाणस्य कर्मणः प्रतीकः यजुर्वेदः। मनुष्याणां परस्परश्रेयःप्रयोजनकारोग्य पौरधर्मराष्ट्रतन्त्रादि नानाशाखामयः अथर्ववेदः। सविस्तरं वेदतत्त्वबोधकाः पुराणेतिहासाः, येषां तावत् पञ्चमवेदप्रतिपत्तिः प्रकल्पिता भगवता व्यासेन ॥ २० ॥

**तत्रर्ग्वेदधरः पैलः सामगो जैमिनिः कविः ।**
**वैशम्पायन एवैको निष्णातो यजुषामुत ॥२१ ॥**

**अथर्वाङ्गिरसामासीत् सुमन्तुर्दारुणो[3] मुनिः ।**
**इतिहासपुराणानां पिता मे रोमहर्षणः ॥ २२ ॥**
**त एत[4] ऋषयो वेदं स्वं स्वं व्यस्यन्ननेकधा ।**
**शिष्यैः प्रशिष्यैस्तच्छिष्यैः वेदास्ते शाखिनोऽभवन् ॥ २३ ॥**
**त एव वेदा दुर्मेधैर्धार्यन्ते पुरुषैर्यथा ।**
**एवं चकार[5] भगवान् व्यासः कृपणवत्सलः ॥ २४ ॥**

1 AF.GF एकस्तु 2 H,V °षां गणे ; K °षां ततः ; M °षा मुने ; W °षां मतः 3 K °वारुणो 4 H,K,M,N,V °व 5 K,M व्यवस्यत्

**श्रीध० तत्रेति ।** कविः पूर्वमीमांसाकृत्वात् जैमिनिः निष्णातः पारङ्गतः ॥ २१ ॥
**अथर्वेति ।** दारुणः क्रूरः, अथर्वोक्ताभिचारादि[1]प्रवृत्तेः ॥ २२ ॥
[2]शाखाविभागमाह — **त इति ।** व्यस्यन् [3]विभक्तवन्तः ॥ २३ ॥
वेदविभागप्रयोजनमाह — **त[4] एवेति ।** ये पूर्वमतिमेधाविभिः धार्यन्ते स्म त एव[5] ॥ २४ ॥

1 H,V °देत्र 2 A,H,V omit शाखाविभागमाह 3 H,V विभागं कृतवन्तः 4 H,V त इति 5 H,V एवेति

**वीर०** तत्र ऋगादीनां मध्ये ऋग्वेदधरः पैलः । अध्ययनपूर्वकं ऋग्वेदं पैलः मुनिः दधार इत्यर्थः । कविः विद्वान् जैमिनिस्तु सामगः, अध्ययनपूर्वकं ऋगाधाराणि सामानि जगौ इत्यर्थः । वैशम्पायनः एक एव ऋषिः यजुषां निष्णातः पारङ्गतः मतः स्मृतः । अवान्तरभेदाभिप्रायेण यजुषां इत्युक्तम् ॥ २१ ॥

एवं अथर्वाङ्गिरसां इत्यत्रापि तेषां निष्णातः दरुणः अपत्यं दारुणः सुमन्तुर्नाम मुनिः आसीत् । अथर्वाख्यानि अङ्गिरांसि । तेषां इतिहासानां पुराणानाञ्च निष्णातस्तु मे मम सूतस्य पिता [1]रोमहर्षणः ॥ २२ ॥

सर्व एवैते भगवतः व्यासस्य अनुग्रहादेव निष्णाताः बभूवुः इत्यर्थतः द्रष्टव्यम् । ततस्त एते पैलादयः स्वं स्वं वेदं शिष्यैः प्रशिष्यैः शिष्याणामपि शिष्यैः तेषामपि शिष्यैश्च शिष्यादिद्वारा इत्यर्थः । अनेकधा व्यस्यन् व्यभाङ्क्षुरित्यर्थः । ततः ते वेदाः शाखिनः अभवन् व्यस्तशाखा अभवन् । तत्र ऋग्वेदः एकविंशतिशाखाभेदं प्राप्तः, यजुर्वेदस्तु एकशतधा, सामवेदस्तु सहस्रधा, आथर्वणस्तु नवधेति विवेकः ॥ २३ ॥

किमर्थमेवं आत्मना शिष्यादिमुखेन च व्यभाङ्क्षीत् इत्यपेक्षायां प्रयोजनं दर्शयन् व्यासनाम निर्वक्ति — **त** इति । दुर्मेधैरल्पप्रज्ञैः पुरुषैः त एते वेदाः यथा धार्यन्ते, यथा सन्निवेशितेषु धार्यन्ते एवं तथा चकार भगवान्

श्रीव्यासः। तत्र हेतुः कृपणेषु वत्सलः वात्सल्ययुक्तः। यतः वेदान् व्यस्यत् व्यभाङ्क्षीत् अत एव व्यास इति प्रसिद्धः बभूवेति भावः॥ २४॥

---

1 A,B लो°

**विज॰** तत्र तेषां वेदानां मध्ये ऋग्वेदप्रवर्तकः पैलः अभूदिति प्रत्येकमन्वयः। जैमिनस्य अपत्यं जैमिनिः। साम गायति, शिष्येषु गमयति प्रवर्तयतीति वा सामगः। कविः सूक्ष्मज्ञानी। ततः जैमिनेः अनन्तरं एकः प्रधानः वैशम्पायन एव यजुर्वेदानां निष्णातः, प्रवर्तकतया इति शेषः। एवशब्देन सूर्यादन्यः प्रतिषिध्यते, न तु सूर्यः। तथा सति वक्ष्यमाणविरोधात्॥ २१॥

वारुणः वरुणपुत्रः सुमन्तुः नाम मुनिः अथर्वाङ्गिरसां अथर्ववेदानां प्रवर्तक आसीत्। मे पिता रोमहर्षणः इतिहासपुराणानां प्रवर्तकः॥ २२॥

भगवदाज्ञाप्रवर्तकं चतुर्णां वेदानां शाखोपशाखाभेदेन ऋषिकृतविभागमाह — **त एव** इति। त एव पैलादय ऋषयः स्वं स्वं वेदं अनेकधा व्यस्यन् व्यभजन् इत्यन्वयः। ते वेदाः शिष्यप्रशिष्यादिभिः शाखिनः तन्नामपूर्वशाखावन्तः अभवन् इत्यन्वयः॥ २३॥

व्यासनामनिर्वचनायाऽऽह — **त एव** इति। दुर्मेधैः अल्पप्रज्ञैः पुरुषैः त एव वेदा यथा धार्यन्ते पठिताः अवधृतार्थाः क्रियन्ते, एवं तथा शिष्यप्रशिष्यादिभिः शाखोपशाखाभेदेन व्यवस्यत् चकार, तस्मात् व्यास इति। किमर्थमिति तत्राह कृपणवत्सलः दीनजनस्निग्धः॥ २४॥

**रा॰ कृ॰** तत्र वेदानां मध्ये ऋग्वेदधरः ऋग्वेदप्रवर्तकः पैलः तन्नामकः ऋषिः। कविः सूक्ष्मदर्शी जैमिनिः सामगः सामवेदप्रवर्तकः। वैशम्पायनः एक एव यजुषां गणे निष्णातः निपुणः। दारुणः क्रूरस्वभावः सुमन्तुः तन्नामकः मुनिः अथर्वाङ्गिरसां अथर्ववेदानां विषये निष्णातः। मे पिता रोमहर्षणः इतिहासपुराणानां विषये निष्णातः॥ २१, २२॥

त एव ते पैलादयः ऋषयः स्वं स्वं वेदं अनेकधा व्यस्यन् विभक्तवन्तः। शिष्यैः तेषां शिष्यैः प्रशिष्यैः शिष्यशिष्यैः पुनः तच्छिष्यैः ते वेदाः शाखिनः बहुशाखावन्तः अभूवन्॥ २३॥

त एव पूर्वं मेधाविभिः धृता एव वेदा अद्य दुर्मेधैः मन्दप्रज्ञैः पुरुषैः यथा धार्यन्ते, एवं तथा कृपणवत्सलः दीनदयालुः भगवान् व्यासः चकार विभागं कृतवानित्यर्थः॥ २४॥

**स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा ।**
**कर्मश्रेयसि मूढानां श्रेय एवं भवेदिह ।**
**इति भारतमाख्यानं कृपया मुनिना कृतम् ॥ २५ ॥**

**एवं प्रवृत्तस्य सदा भूतानां श्रेयसि द्विजाः ।**
**सर्वात्मकेनापि यदा नातुष्यद्धृदयं ततः ॥ २६ ॥**

**नातिप्रसीदद्धृदयः[1] सरस्वत्यास्तटे शुचौ ।**
**वितर्कयन् विविक्तस्थ इदं[2] प्रोवाच[3] धर्मवित् ॥ २७ ॥**

**धृतव्रतेन हि मया छन्दांसि गुरवोऽग्नयः ।**
**मानिता निर्व्यलीकेन गृहीतं चानुशासनम् ॥ २८ ॥**

**भारतव्यपदेशेन ह्याम्नायार्थश्च[4] दर्शितः ।**
**दृश्यते यत्र धर्मादि[5] स्त्रीशूद्रादिभिरप्युत ॥ २९ ॥**

**तथापि[6] बत मे दैह्यो ह्यात्मा चैवात्मना विभुः ।**
**असम्पन्न इवाभाति ब्रह्मवर्चस्यसत्तमः[7] ॥ ३० ॥**

**किं वा भागवता धर्मा न प्रायेण निरूपिताः ।**
**प्रियाः परमहंसानां त एव ह्यच्युतप्रियाः ॥ ३१ ॥**

**तस्यैवं खिलमात्मानं[8] मन्यमानस्य खिद्यतः ।**
**कृष्णस्य नारदोऽभ्यागात् आश्रमं प्रागुदाहृतम् ॥ ३२ ॥**

**तमभिज्ञाय सहसा प्रत्युत्थायाऽऽगतं मुनिः[9] ।**
**पूजयामास विधिवन्नारदं सुरपूजितम् ॥ ३३ ॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीव ब्रह्मविद्यायां पारमहंस्यां संहितायां
प्रथमस्कन्धे नैमिषीयोपाख्याने चतुर्थोऽध्यायः ॥ ४ ॥

---

1 K,M प्रसन्नहृदयः 2 B इति 3 H,I,V चो° 4 H,K,M,V °र्थः प्रदर्शितः 5 K,M धर्मो हि ; B,H,W धर्मादिः 6 B,K,M,N,W अथापि 7. K,M °स्वि सत्तमः ; W °स्युशत्तमः ; VF स्व्युशत्तमः 8 K,M,W °न्न° 9 K,M °निम्

**श्रीध॰** किञ्च, **स्त्री शूद्रेति**। द्विजबन्धवः त्रैवर्णिकेष्वधमाः · तेषाम्। कर्मरूपे श्रेयसि श्रेयस्साधने। एवं भवेत् अनेनैव प्रकारेण श्रेयः[1] भवतु इति। अत एव तेषां कृपया भारताख्यानं मुनिना कृतम्; इति[2] सार्धश्लोकं एकं वाक्यम् ॥ २५ ॥

**एवमिति।** एवं अनेन प्रकारेण भूतानां श्रेयसि हिते सर्वात्मकेनापि [3] कर्मणा ॥ २६ ॥

**नातिप्रसीद** दिति। न अतिप्रसीदत् हृदयं यस्य सः चित्ताप्रसत्तौ [4] हेतुं वितर्कयन् इदं उवाच स्वगतम् ॥ २७ ॥

**धृतव्रतेनेति।** निर्व्यलीकेन निष्कपटबुद्ध्या। मानिताः पूजिताः ॥ २८, २९ ॥

**तथेति।** दैह्यः देहे भवः आत्मा जीवः, वस्तुतः विभुः परिपूर्ण एव। आत्मना स्वेन रूपेण असम्पन्नः तादात्म्यं अप्राप्त इवाभाति। ब्रह्मवर्चसं वेदश्रवणाध्यापनोत्कर्षजं [5] तेजः तत्र साधवः ब्रह्मवर्चस्याः तेषु सत्तमः अतिश्रेष्ठोऽपि। यद्वा, न केवलमसम्पन्न इवाभाति, प्रत्युत ब्रह्मवर्चसी ब्रह्मवर्चसवानपि असत्तम इवाभाति। उशत्तम [6] इति पाठान्तरे कमनीयतमोऽपि इति ॥ ३० ॥

असम्पत्तौ हेतुं स्वयमेवाऽऽशङ्कते — **किंवेति।** प्रायेण भूयस्त्वेन। हि यस्मात् त एव धर्माः अच्युतस्य प्रियाः ॥ ३१ ॥

**तस्येति।** खिलं [7] न्यूनम्। आत्मानं खिद्यतः खेदं प्राप्नुवतः। कृष्णस्य व्यासस्य। प्रागुदाहृतं सरस्वतीतीरस्थम् ॥ ३२ ॥

**तम्** इति। तं नारदं आगतं अभिज्ञाय सहसा प्रत्युत्थाय विधिवत् पूजयामास। सुरपूजितमिति ब्रह्मलोकादागतमित्यर्थः ॥ ३३ ॥

इति श्रीमद्भागवते प्रथमस्कन्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां चतुर्थोऽध्यायः ॥ ४ ॥

---

1 A,H,V omit श्रेयः 2. A,B omit इति ... वाक्यम्। 3 B adds (अनेकोद्देशवताऽपि) 4. H,V चित्तस्याप्रसन्नत्वे 5. B ब्रह्मणः
6 A omits उशत्तम इति 7 V adds शून्यं

**वीर०** एवं कृतवतापि [1] मुनिना व्यासेन स्त्रीणां शूद्राणां च द्विजबन्धूनां त्रैवर्णिकाभासानाञ्च श्रुतिगोचरा श्रवणविषया त्रयी ऋगादिभिन्नो वेदः। न भवति अध्ययनस्य उपनयनाङ्गकत्वात्, उपनयनस्य च त्रैवर्णिकाधिकारित्वात्, स्त्रीशूद्रादीनां वेदाध्ययनयोग्यता नास्ति। अत एव कर्मश्रेयसि वैदिककर्मसाध्ये श्रेयसि मूढानां पुरुषार्थचतुष्टयतत्साधनविषयकज्ञानविधुराणां अन्यथा श्रेयो न भवेत् इत्थं तु [2] भवेदिति हेतुमालोचयता ॥ २५ ॥

कृपया भारतमाख्यानं कृतं हे द्विजाः! एवं सर्वात्मकेन [3] प्रकारेणापि भूतानां लोकानां श्रेयसि निमित्ते सदा प्रवृत्तस्यापि बादरायणस्य हृदयं मनः यदा नातुष्यत् न जहर्ष, ततः तदा नातीव प्रसीदत् प्रसन्नं हृदयं यस्य तथाभूतः,

शुचौ परिशुद्धे सरस्वत्याः तटे विविक्ते निर्जने देशे स्थितः वितर्कयन्, असन्तोषहेतुः को वा इति विचारयन्, धर्मवित् बादरायणः इदं स्वगतं वक्ष्यमाणमुवाच च ॥ २६, २७ ॥

तदेवाऽऽह — **धृतव्रतेन** इत्यादिचतुर्भिः। धृत व्रतं छन्दः गुर्वग्निसेवोपयुक्तं येन तेन मया छन्दांसि छन्दोऽधिदैवतानि गुरवः अग्नयो[4] निर्व्यलीकेन निष्कपटभावेन मानिता बहुमानिताः पूजिता इति यावत्, छन्दआदीनां अनुशासनं गृहीतं कृतञ्च ॥ २८ ॥

किञ्च, भारतव्यपदेशेन भारतव्याजेन आम्नायानां वेदानामर्थश्च दर्शितः। भारतं विशिनष्टि यत्र भारते स्त्रीशूद्रादिभिरपि धर्मः दृश्यते। स्वस्वापेक्षितश्रेयस्साधनः स्वानुरूपो धर्मः दृश्यते अवगम्यते ॥ २९ ॥

अथापि एवं सति[5]। बतेति खेदे। मे मम दैह्यः देहस्थः विभुः प्रभुः आत्मा प्रत्यगात्मा। आत्मना अन्तःकरणेन सह। यद्वा दैह्यो विभुः आत्मा अन्तःकरणं आत्मना स्वयं ब्रह्मवर्चसि कृत[6]स्वाध्यायनिमित्ते तेजसि। समासान्तविधेः अनित्यत्वात् "ब्रह्महस्तिभ्यां वर्चसः" (अष्टा. 5-4-78) इत्यजभावः। उशत्तमः शुद्धतमोऽपि असम्पन्न इव असमृद्धः इवाभाति; असत्तम इति पाठे[7] ब्रह्मवर्चस[8]रहित इवाभाति, यथा असत्तमः असज्जनतमः इव आभाति तद्वत् ॥ ३० ॥

एवं वितर्क्य सूक्ष्मदर्शित्वात् असन्तोषहेतुमुत्प्रेक्षते — **किं वा** इति। यतः भागवता धर्माः प्रायशः मया न निरूपिताः, ततो वाऽसौ किं असन्तोषः? पारिशेष्यादयमेव भागवतधर्मानिरूपणमेवासन्तोषहेतुः भवितुमर्हति इत्यभिप्रायेण, अनिरूपणस्य असन्तोषहेतुत्वमुपपादयति प्रिया इति। सर्वान्तरात्मनि भगवति प्रीते सति हि तन्नियाम्यस्य मनसस्तोषः स च भगवान् भागवतेषु तुष्टेषु सत्सु स्वयं तुष्यति, तेषां च सन्तोषहेतवः त एव, भागवतधर्मा एव; तदनिरूपणादुचितएव असन्तोष इति भावः। प्रायेण इत्यनेन क्वचित् क्वचिदेव भारते भागवतधर्मनिरूपणमिति सूचितम् ॥ ३१ ॥

एवं इत्थं आत्मानं खिन्नं[9] दूनं[10] मन्यमानस्य अत एव खिद्यतः तस्य कृष्णस्य व्यासस्य प्रागुदाहृतं पूर्वमुक्तसरस्वतीतीरस्थाश्रमं प्रति नारदः अभ्यागात् अध्यागच्छत् ॥ ३२ ॥

तं आगतं अभिज्ञाय चिह्नैः नारदमुनिं ज्ञात्वा सहसा त्वरया विधिवत् पूजयामास। कथम्भूतम्? सुरैः पूजितं पूज्यमानं "मतिबुद्धिपूजार्थेभ्यश्च" (अष्टा. 3-2-188) इति वर्तमाने क्तः ॥ ३३ ॥

इति श्रीमद्भागवते प्रथम व्याख्यायां चतुर्थोऽध्यायः

इति श्रीमद्भागवते प्रथमस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां चतुर्थोऽध्यायः ॥ ४ ॥

---

1 W adds पुनः 2 W °दिहेत्यालो° 3 A.B °कत्वेन 4 W °यश्च 5 W अपि 6 W वृत्त° 7 W adds ब्रह्मवर्चसि असम्पन्न इव 8 A.B °स्य° 9 A.B खिलं 10 A B न्यूनं

**विज०** एवं भगवद्भक्तानां त्रैवर्णिकानां वैदिककर्मानुष्ठानेन शुद्धान्तःकरणानां अधोक्षजोपासनाजनितज्ञानेन मुक्तिः स्यात् इति व्यासेन स्थापितम्, तदनधिकारिणां स्त्रीशूद्रादीनां हरिभजनं कुत्रोक्तमुपायेन इत्याकाङ्क्षायामाह —— **स्त्रीशूद्रेति**। वेदोक्तकर्माख्यश्रेयसि पुरुषार्थसाधने मूढानां अत एव अनधिकारिणां स्त्रीशूद्रद्विजाधमानां त्रयी त्रयो वेदाः श्रोतुं न योग्याः, इति तस्मात् अत एवं मया करिष्यमाणभारतादिशास्त्रोक्तविधिना इह जने श्रेयः भवेत् इति कृपया मुनिना सर्वज्ञेन व्यासेन भारताख्यानं कृतमित्यन्वयः। अत्रैतत्प्रमेयमवगन्तव्यम्। स्त्रीशूद्रादिकृपया भगवता भारताख्यानस्य कृतत्वात् तेषामेव तत्राधिकारः न अन्येषां इति शङ्का माभूत्। "इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्" (भार. 1-1-204) इति वचनात्, ब्राह्मणादीनामपि वेदार्थपरिज्ञानाय भारताद्यभ्यासस्य आवश्यकत्वेनोक्तत्वात् उभयत्र अधिकारः युज्यते। तेषां स्त्रीशूद्रादीनां तु गत्यन्तराभावात् तदुक्तानुष्ठानेन मुक्तिरिति भावः॥ २५॥

केन हेतुना, कुतः सञ्चोदितः इति प्रश्नं परिहरिष्यन् प्रायः कृतावतारकार्यस्य दुर्जनान् मोहयतः व्यासस्य लोकानुकरणप्रकारमाह — **एवम्** इत्यादिना। हे द्विजाः! भूतानां सदा श्रेयसि नित्यमुक्तिसाधने एवं प्रवृत्तस्यापि यदा हृदयं सर्वात्मकेन नातुष्यत् मे मनः अवतारप्रयोजनेन सर्वप्रकारेण अलं इत्यलम्बुद्धिं नाप[1]। ततः तदा॥ २६॥

धर्मज्ञानी नातिप्रसन्नहृदयः अवतारप्रयोजनानलम्बुद्धिमान् सरस्वत्याः तटे तत्रापि शुचौ देशे विविक्तस्थ एकान्ते तिष्ठन् लोकदृष्ट्यानलम्बुद्धिकारणं किञ्चेति विविधं तर्कयन् विचारयन् इदं वक्ष्यमाणमेव आत्मानं प्रत्युवाच इत्यन्वयः॥ २७॥

धृतव्रतेन लौकिकाचारो[2]पेक्षया वेदव्रतधारणवता मया निर्व्यलीकेन निर्व्याजेन चेतसा इति शेषः। छन्दांसि वेदाः। गुरवः अध्यापकाः। त्रेता अग्नयः। मानिताः सत्कृताः। अनुशासनं आज्ञा च गृहीता। हिशब्देन विप्रादिभिः वेदव्रतादि वैदिकं कर्म अवश्यं कर्तव्यमिति दर्शयति॥ २८॥

यत्र भारते स्त्रीशूद्रादिभिरपि त्रैवर्णिकैः उत अनुष्ठेयः धर्मः दृश्यते, तस्य भारतस्य करणे नाम्नायार्थः वेदादिसं[3]प्रत्ययार्थः प्रदर्शितोहि। तत्र किञ्चिदुर्वरितं नास्तीत्यर्थः॥ २९॥

अथापि भारतकृपया आम्नायार्थप्रदर्शनानन्तरमपि दैह्यः देहरूपः आत्मा आत्मना स्वत एव विभुः व्याप्तः मे मम आत्मा अवतारप्रयोजनासम्पत्या असम्पन्नः अप्राप्तप्रयोजन इवाभाति। कीदृशः? ब्रह्मवर्चस्विसत्तमः वृत्ताध्ययनसम्पन्नानां मध्ये श्रेष्ठः इत्यन्वयः। ब्रह्मवर्चस्यसत्तम इति पाठेऽपि अयमेवार्थः॥ ३०॥

प्राय इदमेवानलम्बुद्धौ कारणमाह — **किं वा** इति। भागवता धर्माः प्रायेण न निरूपिताः। किञ्च भारते निरूपिता अपि पुनः शास्त्रान्तरेण निरूपणीया इत्यतः प्रायेण इत्युक्तम्। किंविशिष्टाः? परमहंसानां प्रियाः। ततः किं ते परमहंसाः एव अच्युतप्रियाः हि यस्मात् असम्पन्न इवाभातीति भावः॥ ३१॥

केनचित् प्रेरित एव महापुरुषः स्वकार्ये प्रवर्तते इति न्यायात् भागवतकृतिरेव अलम्बुद्धिहेतुरिति निश्चयवानपि नारदप्रेरितः भागवतमकार्षीदिति नारदस्य लोके महती कीर्तिः स्यात् इति भक्तवत्सलत्वात् नारदागमनं आकाङ्क्षमाणं व्यासं प्रति तदागमनमाह — **तस्य** इति। खिन्नं अनलम्बुद्धिमाप्तवतः खिद्यतः खिद्यमानस्य अनलम्बुद्धिं गतस्य ॥ ३२ ॥

अभिज्ञाय संज्ञापूर्वकं विज्ञाय सहसा कालक्षेपमन्तरेण सरस्वतीतीरवर्तिस्वाश्रमस्थितो भागवतधर्मज्ञापनहेतोः नारदेन चोदितः श्रीकृष्णः भागवतसंहितां अकरोत् इति शौनकप्रश्नपरिहारः ॥ ३३ ॥

**इति श्रीमद्भागवते महापुराणे पारमहंस्यां** इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां **कायां प्रथमस्कन्धे चतुर्थोऽध्यायः** ॥ ४ ॥
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
प्रथमस्कन्धे चतुर्थोऽध्यायः ॥ ४ ॥

---

1 A नापत्तदा 2 K °रा° 3 K सम्प्रदायार्थः

**रा॰ कृ॰** स्त्रीशूद्रद्विजबन्धूनां स्त्रीणां शूद्राणां त्रैवर्णिकेषु अधमानां त्रयी ऋगादित्रयी श्रुतिगोचरा श्रवणयोग्या न भवति। अतः कर्मश्रेयसि कर्मरूपे श्रेयसि मूढानां अज्ञानिनां तेषां इह अस्मिन् जन्मनि श्रेयः एवं भवेत् इति विचार्य मुनिना व्यासेन कृपया भारतं आख्यानं कृतम्।

विद्यावतां बुद्धिजाड्यात् स्त्रीषु वेदाध्ययन प्राधान्यं लुप्तप्रायमभवत्। शिष्यबोधनं स्वीयगौरवप्रतिष्ठादिसाधन-मिति मन्वानाः विद्वांसः स्वगृहेषु स्त्रीभ्यः वेदार्थप्रबोधे शिथिलितश्रद्धाकौशलाः सञ्जाताः। ये तावत् आश्रमाः प्राक्कुटुम्बप्रायाः बभूवुः, ते कलौ समागते अध्यापकान्तेवासि पाण्डित्यमल्लविद्याप्रदर्शन रङ्गस्थलानि अभवन्।

एवमुदरपोषणार्थं पराश्रयेण क्रियमाणं कर्म शूद्रधर्मः। तच्च यज्ञार्थकर्मव्यतिरिक्तम्। लोकश्रेयस्करकार्या-चरणेन अयत्नलब्धानां अन्नवस्त्रादीनामनुभवः ब्रह्मक्षत्रवैश्य स्वभाववतां धर्मः। कलौ बहवः प्रागुक्तशूद्रधर्मेणैव जीवन्ति। उदरपोषणैकासक्त्या ते निर्विरामाः अज्ञानपरवशाः वेदधर्मप्रमत्ता भवन्ति।

एवं स्त्रीशूद्रधर्मिणः वेदश्रवणानर्हाः अभवन्। ईदृशाज्ञानप्राबल्यात् कालान्तरे स्त्रीशूद्राणां वेदाध्ययनाधिकारो नास्तीति नियमोपि अकारि। एतन्नियमेन जनसामान्ये वेदप्राधान्याभाव वेदद्वेषादिकलिधर्माः प्राविशन् ॥ २५ ॥

हे द्विजाः! एवं सर्वात्मकेनापि सर्वात्मनाऽपि सर्वथाऽपि इत्यर्थः। सदा भूतानां श्रेयसि प्रवृत्तस्य व्यासस्येति शेषः। ततः स्वकर्मणः यदा हृदयं नातुष्यत् सन्तोषं न प्रापत्, तदा नातिप्रसीदद्धृदयः नातिप्रसन्नहृदयः शुचौ शुद्धे सरस्वत्याः तन्नाम्न्याः नद्याः तटे विविक्तस्थः विजनप्रदेशे स्थितः धर्मवित् सः व्यासः वितर्कयन् स्वचित्ताप्रसादहेतुं वितर्कयन् इदं वक्ष्यमाणं उवाच स्वमनसि अवोचत् इत्यर्थः ॥ २६, २७ ॥

धृतव्रतेन मया निर्व्यलीकेन निष्कपटबुद्ध्या छन्दांसि गुरवः अग्नयः मानिताः पूजिताः। अनुशासनं तेषां अनुशासनं गृहीतं तदुक्तं कृतमित्यर्थः। उत किञ्च, यत्र भारते स्त्रीशूद्रादिभिरपि अनुष्ठेयमिति शेषः। धर्मादि दृश्यते। भारतव्यपदेशेन तस्य भारतस्य व्यपदेशेन व्याजेन आम्नायार्थः वेदार्थः प्रदर्शितः। तथाऽपि मे दैह्यः देहाभिमानी आत्मा जीवः ब्रह्मवर्चस्यसत्तमः ब्रह्मवर्चस्याः वेदाध्ययनाध्यापनादिप्रभावजन्यतेजोवन्तः, तेषु श्रेष्ठः। आत्मना स्वरूपेण विभुः समर्थोऽपि असम्पन्न इव अप्राप्तमनोरथः असन्तुष्ट इवाऽऽभाति। बतेति खेदे। आत्मरूपी भगवान् ईश्वरः नातुष्यत् इति भावः।

यद्यपि कलियुगे प्रजासु वेदसम्प्रदायाविच्छेदाय व्यासः वेदं चतुर्धा विभज्य शिष्यान् अध्यापयामास, किन्तु अयं वेदविभागः कालक्रमेण केवलशाखोपशाखादिविभेद परस्परसमन्वयाभाव तत्प्रयुक्तब्राह्मणानैक्याद्यनर्थपर्यवसायी वैरूप्यं प्रापत्। तथाहि — एकशाखीयैः अन्यशाखा अनध्येतव्या, अधीता चेत् प्रायश्चित्तं कार्यमिति केचित् अधुनाऽपि वदन्ति। अन्ये केचन शाखापरमार्थानभिज्ञाः अस्माकं यजुश्शाखा प्रथमशाखापर्यालोचनया महीयसीति दृप्यन्ति। स्वकालेऽपि वेदापेक्षया तच्छाखाभेदेषु प्रवर्धमानेन आग्रहेण कैश्चित् बहुधा विशकलितप्रायं तथा निरुपयोगतां आनीतं तं वेदं आकलय्य व्यासः खेदं अनुबभूव इति तर्क्यते; यच्च तेन भगवता जनेषु वेदाध्ययनेन सह तद्विषयसमन्वय दैनन्दिनानुष्ठानसामर्थ्यं अपेक्षितं तदद्यापि लुप्तप्रायमास्ते। अत एव मानवजीवितं वर्णाश्रमधर्मभ्रष्टं कष्टभूयिष्ठं अद्य दृश्यते।

तस्मात् वेदार्थावगत्यै व्यासप्रोक्तपुराणसमुच्चय एव गतिः। एतानि पुराणानि स्त्रीशूद्रादिभ्यः उद्दिष्टानि नास्मभ्यं इति मन्यमानाः विद्वांसोऽपि वेदहृदयानभिज्ञा एव। ते हि वेदप्रयोजनं तदुक्तेतिहासयज्ञादिकर्माचरणविधानादि परिगणनमात्रमित्येव जानन्ति।

अपि च वेदेषु तत्तज्जातीयानां केषाञ्चिदायोधनगाथाः सन्तीति भ्रान्तमतयः कतिचन आर्यमिश्राः "पुरा भारतदेशे आदिममानवेषु परस्परं कलहायमानेषु तान् अन्ये वैदेशिकार्याः बलात् अभियुज्य दक्षिणपथविद्रुतान् विधाय तदुषितपूर्वं उत्तरभारतदेशं आचक्रमुः" इत्येताः कथाः कल्पयित्वा पण्डितमेलकेषु विश्वविद्यालयेषु विषबीजानि वपन्ति। एते सर्वेऽपि अनर्थाः वेदार्थस्य अनवगमेन तदवगमोपयोगिव्यासप्रोक्त पुराणसम्प्रदाय स्वीकारे कैश्चित् अपरिणतमतिभिः प्रदर्शितया मिथ्याभिमानप्रयुक्तया उपेक्षया च प्रभवन्ति।

आर्यसमाजाद्यन्यमतावलम्बिनस्तु वेदानां अपौरुषेयप्रयुक्तं प्राशस्त्य प्रकटयन्तः पुराणानां पौरुषेयत्वकृतं मिथ्यात्वं आपादयन्ति। तदविचारितरमणीयम्। कुतः? उच्यते — वेदा अपौरुषेया इत्यत्र नास्माकमपि विप्रतिपत्तिः। तथापि ते तद्द्रष्टृभिर्महर्षिभिः लोके प्रकाशिताः। तथा च आप्तवाक्यानां वेदानां प्रकाशकाः महर्षयोऽप्याप्ताः। तेषु आप्तेषु मुख्यः भगवान् व्यासः। "सहोवाच व्यासः पाराशर्यः विद्युद्वधमेवाहं मृत्युमैच्छम्"(तैत्ति. आ. 1-9) इति व्यासवचनस्य प्रामाण्यं अभिहितम्। तादृशेन आप्ततमेन मन्त्रद्रष्ट्रा भगवता व्यासेन प्रणीतानां पुराणानां

मानवरचनाप्रयुक्तमिथ्यात्वकल्पनं अन्याय्यम्। अपि च यदि तावत् ईश्वरस्य संस्कृतभाषणैक दौर्गत्यमङ्गीक्रियेत; तर्हि स संस्कृतभाषाभिज्ञमुखेनैव भाषते स्वयमरूपत्वात्, किं वेदमन्त्रैः भाषमाणः पुराणश्लोकैः नाभिभाषते? तथा चेत् स सर्वज्ञः ईश्वरः कथं भवति? किं च वेदमन्त्राः ऋषिभिः दृष्टा इत्यत्र वेदे तत्तदृषिनामनिर्देश एव प्रमाणम्। न खलु संस्कृतमन्त्रग्रन्था वा तदन्यमन्त्रग्रन्था वा ईश्वरेण सृष्टाः भुवि निपातिताः। वस्तुतस्तु निरहङ्कारनिर्मलान्तःकरणेन मानवेन दृष्टस्य विश्वतत्त्वस्यैव वेदसंज्ञा। स च वेदः तद्दृष्टृद्वारा तद्भाषामन्त्रमयाकारः बहिः प्रकाशितः भवति। ईदृशाः द्रष्टार एव ऋषयः। तेष्वन्यतमः व्यासः। तत्कृतं वेदसमन्वयपरमार्थविवरणादिकं पुराणेषु दृश्यते। ततश्च तेषां वेदार्थोपबृंहकत्वं अव्याहतमेव इत्यलमतिविस्तरेण। आत्मरूपी भगवान् ईश्वरः नातुष्यत् इति भावः॥ २८, २९, ३०॥

भागवताः धर्माः प्रायेण प्रायशः मया किं वा न निरूपिताः? परमहंसानां विषयविरक्तानां ज्ञानिनां प्रियाः अभीष्टाः ते धर्मा एव अच्युतप्रियाः भगवतः नारयणस्यापि प्रियाः। एवं इत्येवंप्रकारेण आत्मानं खिलं न्यूनं मन्यमानस्य खिद्यतः कृष्णस्य कृष्णद्वैपायनस्य प्रागुदाहृतं सरस्वतीतीरस्थितं आश्रमं प्रति नारदः अभ्यागच्छत् आगच्छत्॥ ३१, ३२॥

मुनिः व्यासः आगतं तं ऋषिं इति शेषः। अभिज्ञाय लक्षणैः नारदं ज्ञात्वा सहसा प्रत्युत्थाय सुरपूजितं तं नारदं विधिवत् यथाविधि पूजयामास।

सरस्वतीब्रह्मणोः पुत्रः नारदः सरस्वतीतीरस्थितं व्यासमभिजगाम। अत्र सरस्वती अव्यक्तदशायां अन्तर्वाहिन्याः वाचः प्रतीकायते। सा भविष्यद्भागवतात्मना व्यासस्य प्रज्ञायां अन्तर्वर्तिनी विराजते स्म। तां विश्वहिताय आविष्कर्तुं नारद आजगाम। गुरुः शिष्ये गुप्तां वाचं बहिः प्रकाशयति। गुरुः स्वयं शिष्यं उपैतीति ब्रह्मविद्यासम्प्रदायः॥ ३३॥

इति श्रीमद्भागवते प्रथमस्कन्धे
श्रीराधाकृष्णप्रणीतायां सुधीसुधायां व्याख्यायां
चतुर्थोऽध्यायः॥ ४॥

# पञ्चमोऽध्यायः

## सूत उवाच

अथ तं सुखमासीन[1] उपासीनं बृहच्छ्रवाः ।
देवर्षिः प्राह विप्रर्षिं वीणापाणिः स्मयन्निव ॥ १ ॥

## नारद उवाच

पाराशर्य! महाभाग! भवतः कच्चिदात्मना ।
परितुष्यति शारीर आत्मा मानस एव वा ॥ २ ॥

जिज्ञासितं सुसम्पन्नमपि ते महदद्भुतम् ।
कृतवान् भारतं यस्त्वं सर्वार्थपरिबृंहितम् ॥ ३ ॥

जिज्ञासितमधीतञ्च यत्तद् ब्रह्म सनातनम् ।
अ[2]थापि शोचस्यात्मानमकृतार्थ इव प्रभो ॥ ४ ॥

---

1 B H V नमुपा 2 B H I K M V W तथाऽपि

## श्रीधरस्वामिविरचिता भावार्थदीपिका

पञ्चमे सर्वधर्मेभ्यो हरिकीर्तनगौरवम् ।
व्यासचित्तप्रसादाय नारदेनोपदिश्यते ॥

**अथ** इति। उप समीपे आसीनं विप्रर्षिं व्यासं बृहच्छ्रवाः महायशाः। स्मयन् ईषद्धसन्निव इत्यनेन मुखप्रसत्तिः द्योत्यते। यद्वा इव इत्य[1]नधिकारार्थम्। अहो महानपि मुह्यतीति स्मयमानः॥ १ ॥

**पाराशर्य** इति। शारीरः शरीराभिमानी आत्मा, आत्मना तेन शरीरेण कच्चित् किं[2] परितुष्यति मानसः आत्मा मनोऽभिमानी तेन मनसा परितुष्यति कच्चित् कि[3]ं वा॥ २ ॥

**जिज्ञासितम्** इति। ते जिज्ञासितं ज्ञातुमिष्टं धर्मादि यत्[4] सुसम्पन्नं सम्यक् ज्ञातम्। [5] अपिशब्दादनुष्ठितञ्च इत्यर्थः। अयीति पाठे सम्बोधनम्। सुसम्पन्नत्वे हेतुः महदद्भुतमित्यादि। सर्वैः अर्थैः धर्मादिभिः परिबृंहितं परिपूर्णम् ॥ ३ ॥

**जिज्ञासितम्** इति। किञ्च यत्सनातनं नित्यं परं ब्रह्म च तत्त्व त्वया जिज्ञासितं विचारितं अधीतं अधिगतं प्राप्तं च इत्यर्थः। अथापि शोचसि तत्किमर्थमिति शेषः ॥ ४ ॥

---

1 H,V °त्यधिकाश्चर्ये 2 H,V add °स्विच्चित् 3 B,H,V नो 4 B,H,V add तत्सर्वं 5 H,V add गत्यर्थधातोः ज्ञानार्थकत्वात्

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अथ यथावत् पूजानन्तरं सुखं आसीनः बृहत् श्रवः कीर्तिः यस्य। वीणा पाणौ यस्य स देवर्षिः नारदः स्मयन्निव स्वाज्ञया उपासीनं उपविष्टं विप्रर्षिं व्यासं प्राह ॥ १ ॥

तदेवाह **पाराशर्य** इति त्रिभिः। असन्तोषमालक्ष्य आह-कच्चिदिति इष्टप्रश्ने हे पाराशर्य! हे महाभाग! भवतः[1] स्वात्मना[2] स्वयं शारीर आत्मा क्षेत्रज्ञः मानसः मनसम्बन्धी मनःकरणकः समनस्क इति यावत्[3] परितुष्यत्येव हि कच्चित् ॥ २ ॥

ते त्वया जिज्ञासितं ज्ञातुमिष्टं सर्वं सुसम्पन्नमपि? अपिशब्दः प्रश्नद्योतकः, ज्ञातमेव हि इत्यर्थः। पद-गतौ, गत्यर्थाः बुद्ध्यर्थाः। यत् यस्मात् सर्वार्थैः परिबृंहितं, सर्वार्थाः परिबृंहिताः उपबृंहिताः येन तत् इति वा। अत एव महत् विपुलं अत्यद्भुतं शब्दतः अर्थतश्च चित्रं भारतं कृतवान्। अतः सुसम्पन्नं जिज्ञासितमिति भावः ॥ ३ ॥

किञ्च जिज्ञासितमिति यत् सनातनं अनादिनिधनाविच्छिन्नसम्प्रदायं ब्रह्म वेदः तदधीतं जिज्ञासितं च, सन्नर्थस्त्वविवक्षितः, विचारितमिति वा। पूर्वोत्तरमीमांसयोः प्रणायनप्रणयनाभ्यामिति भावः। तथापि एवं **कृतकृत्योऽपि** त्वमकृतार्थः अकृतकृत्यः इव हे प्रभो! शोचसि शोचन्निव लक्ष्यसे इत्यर्थः ॥ ४ ॥

---

1 W भगवतः 2 W तवात्मना 3 W adds परितुष्यत्येव वा

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

अथ अर्घ्यपाद्यादिसमर्हणानन्तरं सुखमुपविष्टः विस्तृतकीर्तिः वीणा महती नाम पाणौ यस्य सः तथोक्तः, मन्दस्मितं कुर्वन्निव प्रसन्नवदनः देवर्षिः समीप उपविष्टं तं विप्रर्षिं व्यासं प्राह इत्येकान्वयः ॥ १ ॥

विज्ञातभगवदभिप्रायः तदनुकारणानुगुणानुकारणवान्[1][2] नारदः नित्यकुशलं तस्य सञ्ज्ञानन्नपि तदनुवदन्निव कुशलं पृच्छतीत्याह — **पाराशर्य** इति। महाभाग! ऐश्वर्याद्यनन्तभाग्यनिधे! पाराशर्य! पराशरपुत्र! भवतः[3] शारीरः मानसो वा शरीररूपो[4] वा। भेदाभावादेवमुक्तिः। आत्मावतारप्रयोजनं कृत्वा आत्मना स्वत एव परितुष्यति कच्चित्? स्वतन्त्रतया कृतावतारकार्यत्वात् परितुष्यति इत्येवकारार्थः ॥ २ ॥

कुत इति तत्राह — **जिज्ञासितम्** इत्यादि। यस्त्वं धर्मादिसर्वपुरुषार्थबृंहितं पूर्णं भारतं कृतवान् ते त्वया सुसम्पन्नं सुखपूर्णं अद्भुतं सर्वस्मादाश्चर्यतमं अत्ता रुद्रः यस्मात् भवति तदद्भुतं वा। महत् देशतः कालतः गुणतश्च अपरिच्छिन्नं ब्रह्म जिज्ञासितं विचारितम्। अपि-च-शब्दौ वक्ष्यमाणसमुच्चये। शब्दतः अर्थतः अपि महत् अद्भुतं गहनम्। ("अर्थः स्यात्...) व्यवहारे धने **शास्त्रे** वस्तुहेतुनिवृत्तिषु" (वैज. को. 6-1-3) इति वचनात्, **तन्न्यायेन** अर्थशब्दस्य **द्विरावृत्त्या सर्वशास्त्रार्थपरिबृंहितं** कृतवान् इति यस्मात् तस्मात्, तेन लोकानां ज्ञातुमिष्टं सुष्ठु सुपूर्णं अभूत् इति वा॥ ३॥

किञ्च यच्चोपाध्यायपरम्परया भवता अधीतं सनातनं नित्यं वेदात्मकं शब्दब्रह्म, तदपि जिज्ञासितं विचारितं तस्मात् **कृतावतारकार्योऽपि**, तत एव नातुष्टिकारणं पश्यामीत्यर्थः। **तथापि एवमपि कृतावतारकार्योऽपि अकृतावतार-प्रयोजन इव आत्मानं शोचसि प्रकाशयसि।** हे प्रभो! प्रभूतज्ञान! इत्यन्वयः॥ ४॥

---

1 K °क° 2 K °क° 3 B.K.M भगवतः 4 K.M add मनोरूपो

## श्रीराधाकृष्णप्रणीता सुधीसुधा

अथ यथावत् पूजानन्तरं सुखं आसीनः बृहच्छ्रवाः महायशाः वीणापाणिः देवर्षिः नारदः स्मयन्निव ईषत् हसन्। अत्र हासः नारदमुखप्रसादद्योतकः। उपासीनं समीपे उपविष्टं विप्रर्षिं व्यासं प्राह उक्तवान्॥ १॥

हे पाराशर्य! पराशरात्मज! महाभाग! महाभाग्यवन्! भवतः तव शारीरः आत्मा आत्मना स्वरूपेण शरीरेण अथ मानसः आत्मा वा आत्मनैव स्वरूपेण मनसैव कच्चित् किं परितुष्यति?

यद्यपि श्रीधरस्वामिप्रभृतिभिः "शारीर आत्मा मानस एव वा" इत्यत्र **शरीराभिमानी** आत्मा मनोभिमानी आत्मा इति च सुष्ठु व्याख्यातं, तथापि शारीरमानसरूपविशेषणद्वयं आत्मनः स्थूलसूक्ष्मादिसर्वमयत्वं सूचयति। तेन आत्मनः बृंहणशीलेन ब्रह्मणा अभेदसिद्धिः, ततश्च "सर्वं खल्विदं ब्रह्म" (त्रि. म. ना. उ. 1-3) इति महावाक्यं सुप्रतिष्ठितं भवति॥ २॥

ते त्वया यत् जिज्ञासितं ज्ञातुमिष्टं सुसम्पन्नमपि सम्यक् ज्ञातं, अपिना अनुष्ठितञ्च इति भावः। तत्कथमिति चेत्, उच्यते। यस्त्वं महत् अद्भुतं सर्वार्थपरिबृंहितं धर्मादिभिः सर्वैः अर्थैः पूर्णं भारतं कृतवानसि इति शेषः॥ ३॥

किञ्च यत् सनातनं शाश्वतं ब्रह्म परब्रह्म **वर्तते तत्त्वया** जिज्ञासितं विचारितं अधीतं प्राप्तम्। तथापि हे प्रभो! व्यास! **सर्वसमर्थोऽपि** इत्यनेन सम्बोधनेन गम्यते। अकृतार्थ इव अकृतकर्तव्य इव आत्मानं प्रति किमर्थं शोचसि? एवं नारदः व्यासं अपृच्छत्॥ ४॥

व्यास उवाच

अस्त्येव मे सर्वमिदं त्वयोक्तम् तथापि नाऽऽत्मा परितुष्यते मे ।
तन्मूलमव्यक्तमगाधबोधम् पृच्छामहे त्वाऽऽत्मभवात्मभूतम् ॥ ५ ॥

स वै भवान् वेद समस्तगुह्यम् उपासितो य[1]त्पुरुषः पुराणः ।
प[2]रावरेशो मनसैव विश्वं सृजत्यवत्यत्ति गुणैरसङ्गः ॥ ६ ॥

त्वं पर्यटन्नर्क इव त्रिलोकीम् अन्तश्चरो वायुरिवाऽऽत्मसाक्षी ।
प[3]रावरे ब्रह्मणि धर्मतो व्रतैः स्नातस्य मे न्यूनमलं विचक्ष्व ॥ ७ ॥

श्रीनारद उवाच

भवताऽनुदितप्रायं यशो भगवतोऽमलम् ।
येनैवासौ न तुष्येत[4] मन्ये तद्दर्शनं खिलम् ॥ ८ ॥

---

1 K.M यः पुरुषः 2 H परापरेशो 3 H.W परापरे 4 H.V °त्तु

**श्रीध॰ अस्ति** इति। आत्मा शारीरः मानसश्च। तन्मूलं तस्य अपरितोषस्य कारणं अव्यक्तं अस्फुटम्। हे नारद! त्वा त्वां पृच्छामि। आत्मभवः ब्रह्म तस्य आत्मनः देहात् उद्भूतः तं अत एव अगाधः अतिगम्भीरः बोधः यस्य तम् [2] ॥ ५ ॥

अगाधबोधतां प्रपञ्चयन्नाह — **स वा** इति द्वाभ्याम्। सर्वगुह्यज्ञाने हेतुः यत् यस्मात् पुराणः अ[3]नादिसिद्धः पुरुषः उपासितः त्वया। कथम्भूतः ? परावरेशः कार्यकारणनियन्ता। मनसैव सङ्कल्पमात्रेण गुणैः कृत्वा विश्वं सृजति इत्यादि ॥ ६ ॥

**त्वम्** इति। किञ्च त्वं त्रिलोकीं पर्यटन् अर्क इव सर्वदर्शी योगबलेन प्राणवायुरिव सर्वप्राणिनां अन्तश्चरस्सन् आत्मसाक्षी बुद्धिवृत्तिज्ञः। अतः परे ब्रह्मणि धर्मतः योगेन निष्णातस्य। तदुक्तं याज्ञवल्क्येन "इज्याचारदमा[4]हिंसादानस्वाध्यायकर्मणाम्। अयं तु परमो धर्मो यद्योगेनाऽऽत्मदर्शनम्" (याज्ञ. स्मृ. 1-8) इति। अव[5]रे च ब्रह्मणि वेदाख्ये। व्रतैः स्वाध्यायनियमैः निष्णातस्य मे अलं अत्यर्थं यन्न्यूनं तद्विचक्ष्व वितर्कय ॥ ७ ॥

**भवता** इति। [6] अनुदितप्रायं अनुक्तप्रायं विमलं भगवद्यशः। विना येनैव धर्मादिज्ञानेन असौ भगवान् न तुष्येत[7] [8]तदेव दर्शनं ज्ञानं खिलं न्यूनं [9] मन्येऽहम् ॥ ८ ॥

---

1 B.H.V °मः 2 H.V add पृच्छिर्द्विकर्मकः 3 A.B omit अनादिसिद्धः 4 B °याऽ° 5 H V °प° 6 H V add भवता 7 H V °त्
8 H.V तत्तदेतत् 9 H.V add शून्यम्

**वीर॰** एवमापृष्टः आह व्यासः **अस्ति** इत्यादिभिः त्रिभिः। त्वयोक्तं सर्वमिदं "जिज्ञासितं सुसम्पन्नं" इत्यादिनोक्तं मम अस्त्येव, तथापि मम आत्मा न परितुष्यते। तस्य असन्तोषस्य मूलं निमित्तं, अव्यक्तं न मया ज्ञातम्। अतः त्वामेव अगाधबोधं अपारज्ञानं सर्वज्ञमिति यावत्। आत्मभवः ब्रह्मा तस्य आत्मनः शरीरात् उत्सङ्गात् उद्भूतं पृच्छामहे ॥ ५ ॥

नाहं जानामीति मावोचः, इत्यभिप्रायेणाह — **स वा** इति। सः वै ज्ञानिनां अग्रणीः भवान्[1] समस्तं गुह्यं देहिनां अन्तर्गतं वेद जानाति। कुतः? यत् यस्मात् त्वया पुराणः पुरुषः सर्वजगत्कारणभूतः सर्वज्ञः परमपुरुषः उपासितः। कथं परमपुरुषोपासनमात्रेणाहं जानीयाम् इत्यत्राह परावरेशः परे ब्रह्मादयः अवरे यस्मात् स च असौ ईशः सर्वनियन्ता भगवान् मनसैव सङ्कल्पमात्रेणैव विश्वं सृजत्यवत्यत्ति संहरति च। अथापि गुणैः सत्त्वादिभिः न सज्यते इत्यसङ्गः। स्वसङ्कल्पकृतजगदुदयविभवलयलीलस्य [2] सर्वनियन्तुः सर्वप्राण्यन्तर्गतवस्तुवेदित्वात् यथाक्रतुरस्मिन् लोके पुरुषः भवतीति न्यायेन ईश्वरवत् सर्वमुक्तप्रायः त्वमपि जानास्येव इति भावः ॥ ६ ॥

एतदेव उपपादयन् असन्तोषनिमित्तं वद इत्याह — **त्वम्** इति। त्वं अर्कः सूर्य इव त्रिलोकीं पर्यटन् बहिष्ठवस्तुद्रष्टा, वायुरिव अन्तश्चरः ज्ञानव्याप्त्या सर्वेषामन्तश्चरन् आत्मसाक्षी आत्मनः अन्तःकरणस्य साक्षी साक्षात्[3] द्रष्टा हृद्गतार्थवेदीत्यर्थः। अतः, परं च अवरं च तयोः समाहारः तस्मिन् ब्रह्मणि परे ब्रह्मणि तदावेदके वेदाख्ये ब्रह्मणि च विषये धर्मतः निवृत्तिधर्मैः व्रतैः काण्डव्रतादिभिश्च स्नातस्य पारङ्गतस्य समाप्तधर्मव्रतस्य इत्यर्थः। मम न्यूनं असन्तोषरूपं अलं विचक्ष्व। न्यूनशब्दस्तद्धेतावुपचाराद्वर्तते। न्यूनहेतुं विचक्ष्व। चक्षिः दर्शनेऽपि वर्तते। पश्य आलोचय इत्यर्थः। अलं द्रष्टुं समर्थः त्वम्। यद्वा न्यूनमिति भावप्रधानो निर्देशः। अलं अधिकं न्यूनं न्यूनत्वं विचक्ष्व। अथवा चक्षिः भाषणार्थः एव न्यूनताहेतुं विचक्ष्व इत्यर्थः। इत्थं प्रचोदित आह भगवान् नारदः यावदध्यायसमाप्ति ॥ ७ ॥

"किं वा भागवता धर्मा न प्रायेण निरूपिताः" (भाग. 1-4-31) इति तदुत्प्रेक्षितमेव तावत् असन्तोषहेतुमाह — **भवता** इति द्वाभ्याम्। अमलं शृण्वतां वदतां च अखिलदुरितापहं भगवतः यशः भवता अनुदितप्रायं प्रायेण अवर्णितमित्यर्थः। प्रायग्रहणेन भारते प्रासङ्गिकतया अप्राधान्येन भगवद्यशः क्वचित् क्वचित् उदितं, न तु कृत्स्नप्रबन्धानुस्यूतत्वेन प्राधान्येन चोदितमिति सूच्यते। येन भगवद्यशोऽनुवर्णनेनैव[4] असौ तवाऽऽत्मा न तुष्येत। असौ तवाऽऽत्मा भगवान् वा न तुष्येत भगवदपरितोषेऽपि सति तन्नियम्यं[5] त्वदीयं अन्तःकरणमपि न तुष्यत्येवेति भावः। यद्वा येनैव कारणेन न तुष्येत असौ तवाऽऽत्मा भगवान् वा तत्कारणं किमिति चेत्, खिलं न्यूनं तद्दर्शनमेव भगवद्दर्शनमेव भगवत्स्वरूप[6]गुणविभूतियाथात्म्यज्ञानपूर्वकं प्राधान्येन तद्वर्णनाभाव एवेति मन्य इत्यर्थः ॥ ८ ॥

---

1 B भगवान् 2 W adds सर्वज्ञस्य 3 A B omit साक्षात् 4 A B °र्णितेनै° 5 W °या° 6 W adds °रूप°

**विज॰** एवं नारदेन पृष्टः अपरिमितज्ञानस्वरूपोऽपि अज्ञवत् दुष्टजनमोहनाय तत्कारणं तमेव पृच्छतीत्याह — **अस्त्येव** इति। हे नारद! त्वया उक्तं इदं सर्वं मे अस्त्येव, न किञ्चिदवशिष्टमस्ति; तथापि मे आत्मा मनः न परितुष्यते नालम्बुद्धिं प्राप्नोति। तुष्यतीति वक्तव्ये तुष्यते इति प्रयोगात् अज्ञजनमोहनार्थमेव हरिणा प्रश्नः क्रियते न अज्ञानात् इति महान् विशेषः विज्ञायते। आत्मनः विष्णोः भवतीत्यात्मभवः ब्रह्मा, तस्य आत्मनः शरीरात् उद्भूतः उत्पन्नः आत्मभवात्मभूतः[1] ब्रह्मपुत्रः इत्यर्थः; आत्मनि भवतीति वा। त्वा इति त्वां अव्यक्तं सूक्ष्मं तस्य अपरितोषस्य मूलं कारणं पृच्छामहे। अल्पज्ञश्चेत् प्रश्नोत्तरं कथं ब्रूयादिति तत्राह अगाधेति। अपरिमितज्ञानं प्रश्नोत्तरवचनसमर्थं इत्यर्थः। अत्रापि समित्युपसर्गमन्तरेण पृच्छतेरात्मनेपदप्रयोगेण नारदस्य ज्ञानं चुलुकजलपरिमितं व्यासज्ञानं प्रलयसमुद्रवत् अपरिमितमिति तात्पर्यं शब्दज्ञैरेव ज्ञायते। आत्मभुवात्मभूतमिति केचित् पठन्ति तत्र उवङादेशः छान्दसः ॥ ५ ॥

नारदस्य स्वात्मानलम्बुद्धिहेतुवेदनकारणं वक्ति इत्याह — **स वा** इति। यः गुणैः विरचितशरीर-गतसुखदुःखफलसङ्गरहितः विश्वं मनसैव स्वतन्त्रसाधनान्तरनिरपेक्षतया सृजति अवति संहरति सः परावरेशः मुक्तामुक्तप्रपञ्चयोः ईशः इति परावरेशः। जगदुत्पत्तेः पुराप्यस्तीति पुराणः, पुरं अणतीति वा, पुरूणि कर्मफलानि सनोति ददाति इति पुरुषः उपासित इति। अतः भवान् समस्तगुह्यं वेद इत्येकान्वयः एतदुक्तं भवति — चतुर्मुखप्रियपुत्रत्वात् तवैव सर्वजगत्सृष्ट्यादिकर्तृभगवदुपासकत्वेन सर्वज्ञत्वात् तत्प्रसादात् अस्मदनलम्बुद्धिहेतुवेदनमस्तीति ॥ ६ ॥

तव भगवत्प्रसादेन जनितापरोक्षज्ञानेन सर्वत्र अव्याहतगतिकर्मणा च योगप्रभावेन सर्वप्राणिशरीरान्तश्चरणेन च अनलम्बुद्धिहेतुवित्त्वमित्याह — **त्वम्** इति। त्रिलोकीं पर्यटन् अर्क इव त्रिलोक्यां अव्याहतगतिः सर्वप्राण्यन्तश्चरः वायुरिव आत्मसाक्षी सर्वजीवबुद्धिवर्तिवृत्तज्ञः त्वं परे ब्रह्मणि तथा अवरे तत्प्रतिपादकवेदाख्यशब्दब्रह्मणि धर्मतः वेदोक्तभगवद्धर्मानुष्ठानेन तदधिकारोपपादकवेदव्रतादिभिश्च अनुष्ठापितैः लोकमोहाय च मया अनुष्ठितैः स्नातस्य कृतकृत्यस्य मे अवतारप्रयोजनं न्यूनं नितरां उर्वरितं अलं यथा भवति तथा विचक्ष्व विशिष्टतया ब्रूहीत्येकान्वयः ॥ ७ ॥

नारदोऽपि सर्वज्ञस्य व्यासस्य हृदि स्थिताभिप्रायं विद्वान् तत्प्रसादमादित्सुरवतारप्रयोजनं[2] वक्तीत्याह — **भवता** इति। हे व्यास! भवता भगवतः हरेः अमलं यशः अनुदितप्रायं बहुत्वेन न प्रतिपादितं, येन अनुदितेन यशःप्रतिपादकशास्त्रेण असौ भवत आत्मा नैव तुष्येत, अहं तस्य यशसः प्रतिपादकं शास्त्रं खिलं उर्वरितं मन्य इत्यन्वयः ॥ ८ ॥

---

1 M ˚त˚ 2 K ˚रूनावतार˚

**रा० कृ०** तदा व्यासः नारदं एवमाह। हे नारद! त्वया उक्तं सर्वं इदं मे मम **अस्त्येव। तथापि मे आत्मा** शारीरः मानसः अपीति भावः, न परितुष्यते। तन्मूलं तस्य अपरितोषस्य मूलं कारणं अव्यक्तं अस्फुटम्। **अतः आत्मभवात्मभूतम्।** अत्र आत्मभवात्मभूतशब्दस्य यद्यपि ब्रह्मात्मज इत्येवार्थः प्राचीनैः सर्वैः कथितः, तथापि **आत्मभवस्य स्वयम्भुवः** परमात्मनः आत्मभूतं तत्स्वरूपभूतं **निरन्तरब्रह्मतादात्म्यभावनया ब्रह्मभूतं** इत्यर्थोऽपि **ग्रहीतुं शक्यते।** "ब्रह्म वेद ब्रह्मैव भवति" (मुण्ड. उ. 3-2-9) इत्युक्तेः। अपि च एते नारदादयः अयोनिजाः **केवलप्रज्ञामयरूपिणः** तत्तल्लोकेषु तत्तद्द्रव्यनिर्मितदेहानपि कार्यवशात् धारयन्ति। निर्वृत्ते च कार्ये विसंहिताकृतयः **परमाणुभावं प्राप्य सर्वत्र सञ्चरन्ति** नारदस्यायं सार्वत्रिकः सञ्चारः अनन्तरश्लोके स्फुटीभविष्यति। **अगाधबोधं गम्भीरज्ञानं** त्वा त्वां **पृच्छामहे।** पृच्छामह इति बहुवचनं विनेयजनबाहुल्यद्योतकम्॥ ५॥

**यः परावरेशः** परे ब्रह्मरुद्रादयः उत्कृष्टाः। अवरे अस्मदादयः न्यूनाः। तेषां ईशो नियन्ता **मनसैव** सङ्कल्पमात्रेणैव **विश्वं सृजति,** अवति रक्षति, **अत्ति** संहरति। तथापि **गुणैः असङ्गः** सङ्गरहितः वर्तत इति शेषः। **सः पुराणः** सर्वकारणभूतः **पुरुषः यत्** यस्मात् **उपासितः** त्वया इति शेषः। **स वै भवान्** समस्तगुह्यं **सर्वमपि** रहस्यं **वेद** जानाति। अत्र पुराणपुरुषः नानावतारधारी भगवान् विष्णुरेव। तदुपासनञ्च सामगानधर्मोपितः भक्तियोगः॥ ६॥

**त्वं त्रिलोकीं पर्यटन् अर्क इव** सर्वदर्शीति शेषः। **वायुरिव** योगबलेन प्राणवायुरिव **सर्वभूतानां अन्तश्चरन् आत्मसाक्षी** बुद्धिवृत्तिज्ञः असीति शेषः। **अतः** परावरे परे ब्रह्मणि अवरे वेदात्मके ब्रह्मणि च क्रमेण **धर्मतः** ध्यानयोगेन **व्रतैः** स्वाध्यायनियमैः **स्नातस्य** निष्णातस्य **मे** मम **यत् न्यूनं** अपरितोषकारणं तत् **अलं** सम्यक् **विचक्ष्व** कथय।

अत्र अर्कचरिता त्रिलोकी भौतिकमानसिकाध्यात्मिकमयी। सैव भूर्भुवस्सुवर्लोकसंज्ञया यथाक्रमं व्यवह्रियते। एतांश्च लोकान् अध्यासते यथाक्रमं वसुरुद्रादित्यनामकदेवताः।

प्रज्ञामयाकृतिः नारदश्च **उच्छ्वासनिश्वासद्वारेण** ओङ्काराकारः प्राणिनां अन्तः प्रविशति। एवं सः प्रणवोपासनया नारायणत्वं प्रापितेषु असंख्याकप्राणिषु युगपन्नारायणमयः वर्तते। इत्थं श्रीकृष्णः वेणुगानमहिम्ना गोगोपालकादिभ्यः अपि स्वसान्निध्यमन्वग्रहीत्। एवमेव गौतमबुद्धः क्रीस्तुप्रभुरपि यथायथं स्वनिर्याणसमये स्वस्मै सर्वं समर्प्य समाश्रितेभ्यः स्वसान्निध्यं अयच्छत् इति ज्ञायते। तथा च प्रागुक्तरीत्या ब्रह्मविदः नारदस्य ब्रह्मभूतत्वसिद्धिः पुनरपि दृढीकृता। तेन अस्य सर्वान्तर्यामिता अत्र निरूपिता। इत्थं सर्वान्तर्यामिताप्रयुक्तसर्वज्ञताशाली नारदः "किं वा भागवता धर्मा न प्रायेण निरूपिताः" (भाग. 1-4-31) इति **व्यासोत्प्रेक्षितमेव** तावत् असन्तोषकारणं ब्रवीति॥ ७॥

अमलं दुरितापहं **भगवतः** यशः भवता अनुदितप्रायं प्रायशः अनुक्तमित्यर्थः। अतः **सन्तोषः** न जात इति शेषः। **येनैव** धर्मादिज्ञानेन असौ सर्वान्तर्यामी भगवान् न तुष्येत्। तद्दर्शनन्तु **तज्ज्ञानन्तु** खिलं शून्यं **मन्ये॥ ८॥**

**यथा धर्मादयश्[1]चार्था मुनिवर्यानुकीर्तिताः[2] ।**
**न तथा वासुदेवस्य महिमा ह्यनुवर्णितः ॥ ९ ॥**
**न यद्[3]वचश्चित्रपदं हरेर्यशो जगत्पवित्रं प्रगृ[4]णी[5]त कर्हिचित् ।**
**तद्वायसं तीर्थमुशन्ति मानसाः न यत्र हंसा नि[6]रमन्त्युशिक्क्षयाः ॥ १० ॥**
**[7]तद्वाग्विसर्गो जनताघविप्लवो यस्मिन् प्रतिश्लोकमबद्धवत्यपि ।**
**नामान्यनन्तस्य यशोङ्कितानि यत् शृण्वन्ति गायन्ति गृणन्ति साधवः ॥ ११ ॥**
**नैष्कर्म्यमप्यच्युतभाववर्जितम् न शोभते ज्ञानमलं निरञ्जनम् ।**
**कुतः पुनश्शश्वदभद्रमीश्वरे न चार्पितं कर्म यदप्यकारणम् ॥ १२ ॥**

1. K,M °योह्यर्थाः 2 H,V °वर्णिताः 3 K,W त° 4 K,M न 5 W °ही° 6 V वि°, K,M न्यपतन्विमङ्क्षया 7 K,M स वाग्वि°

**श्रीध॰** ननु भगवद्यश एव तत्र तत्रानुवर्णितं तत्राह — **यथा** इति। चशब्दाद्धर्मादिसाधनानि च। तथा धर्मादिवत् प्राधान्येन वासुदेवस्य महिमा न ह्युक्त इत्यर्थः॥ ९॥

वासुदेवव्यतिरिक्तान्यविषयज्ञानवदेव अन्यविषयं वाक्चातुर्यं च खिलमेवेत्याह — **न** इति। चित्रपदमपि यद्वचः हरेः यशः न प्रगृणीत, तद्वायसं तीर्थं काकतुल्यानां कामिनां रतिस्थानं उशन्ति मन्यन्ते। कुतः ? मानसाः **सत्त्वप्रधाने** मनसि वर्तमाना हंसा यतयः यत्र न [1]निरमन्ति कर्हिचिदपि नितरां न रमन्ते। उशिक्क्षयाः उशिक् कमनीयं ब्रह्म क्षयः निवासः येषां ते। यथा [2]प्रसिद्धा हंसा मानसे सरसि चरन्तः [3]कमनीयपद्मखण्डनिवासाः त्यक्तविचित्रान्नदियुक्तेऽपि उच्छिष्टगर्ते काकक्रीडास्थाने न [4]निरमन्त इति श्लेषः॥ १०॥

विनापि पदचातुर्यं भगवद्यशःप्रधानं वचः पवित्रमित्याह — **तत्** इति। तद्वाग्विसर्गः स चासौ वाग्विसर्गः[5] वाचः प्रयोगः। जनानां समूहः जनता तस्या अघं विप्लावयति नाशयति इति तथा सः। यस्मिन् वाग्विसर्गे अबद्धवत्यपि अपशब्दादियुक्तेऽपि प्रतिश्लोकं अनन्तस्य यशसा अङ्कितानि नामानि भवन्ति। तत्र हेतुः। यत् यानि नामानि साधवः महान्तः वक्तरि सति **शृण्वन्ति,** श्रोतरि सति गृणन्ति, अन्यदा[6] तु स्वयमेव गायन्ति कीर्तयन्ति॥ ११॥

भक्तिहीनं [7]ज्ञानं कर्म [8][9]शून्यमेवेति कैमुत्यन्यायेन दर्शयति — **नैष्कर्म्यं** इति। निष्कर्म ब्रह्म तदेकाकारत्वात् निष्कर्मतारूपं नैष्कर्म्यम्। अज्यते अनेन इत्यञ्जनमुपाधिः। तन्निवर्तकं निरञ्जनम्। एवम्भूतमपि ज्ञानं उच्यते। भावः भक्तिः तद्वर्जितं चेत् अलं अत्यर्थं न शोभते, सम्यगा[10]परोक्ष्याय न कल्पत इत्यर्थः। तदा शश्वत् साधनकाले फलकाले च अभद्रं दुःखरूपं यत्काम्यं कर्म यदप्यकारणं अकाम्यं तच्चेति चकारस्यान्वयः। तदपि कर्म ईश्वरे नार्पितं चेत् कुतः पुनः शोभते बहिर्मुखत्वेन सत्त्वशोधकत्वाभावात् ॥ १२॥

1 V वि° 2 V adds अद्धा 3 H,V कमनीयाब्जषण्डानि विहाय वायसा इव परित्यक्तोच्छिष्टविविधचित्रान्नयुक्ते 4 H,V omit नि° 5 B,H,V °र्गश्च 6 H,V °था 7 A,B omit ज्ञानं 8 B adds तावत्; H,V add च 9 H,V न्यून° 10 B,H,V °गपरोक्षाय

**वीर०** 'प्राय' शब्दाभिप्रेतं व्यनक्ति — **यथा** इति। हे मुनिवर्य! धर्मादयः धर्मार्थकामादयः अर्थाः पुरुषार्थाः यथा ससाधनैः अनुकीर्तिता भारते इति शेषः। तथा वासुदेवस्य महिमा ते त्वया नानुवर्णितः॥ ९॥

एवं **तदुत्प्रेक्षितमेवासन्तोषहेतुं दृढीकृत्याऽऽह**[1] — "प्रियाः परमहंसानां त एव ह्यच्युतप्रियाः" (भाग. 1-4-31) **इति तदुत्प्रेक्षितमेव दृढीकर्तुं** भागवतधर्मा[2]प्रतिपादकस्य प्रबन्धस्य परमहंसैरनादरणीयत्वं इत्याह — **न** इति। तच्चित्राणि पदानि यस्मिन्। अर्थवैचित्र्यस्याप्युपलक्षणमेतत्। एवंविधमपि यद्वचः वाक्यं, प्रबन्ध इति यावत्। पवित्रं शृण्वतां वदतां च पवित्रत्वापादकं हरेः यशः क्वचिदपि न प्रगृहीत नोपाददीत चेत्, न प्रगृणीतेति पाठे न वदेत् चेत्; प्रबन्धयितृगतं वदनं प्रबन्धे आरोप्य न गृणीत इत्युक्तम्। यद्वा यच्चित्रपदमपि वचः तत्र हरेः यशः न प्रगृणीत चेत् प्रबन्धकर्तेति शेषः। तद्वचः प्रबन्धं वायसं तीर्थं उशन्ति वायसतीर्थतुल्यं इच्छन्ति। तीर्थं विशिंषन्निच्छाफलमाह — यत्र वायसे तीर्थे मानसा हंसा उशिकक्षयाः कमनीयनिवासाः न निरमन्ति। मानसाख्यसरोवर कमनीयनिवासस्थानविहारिणः मानसहंसा यथा वायसं तीर्थं **उच्छिष्टपात्रादियुतरथ्योदकयुक्तं** क्षेत्रं वायससञ्चारयोग्यं उशन्ति[3] मन्यन्त इति यावत्। यत्र न निरमन्ति न नितरां रमन्ते क्षणमात्रमपि न तत्र अवतिष्ठन्त इत्यर्थः। तथा उशिक् कमनीयं निरतिशयप्रियं ब्रह्मैव क्षयं आश्रयः येषां मानसाः मनस इमे मानसा ब्रह्मानन्दानुभावकाः हंसाः विशुद्धान्तःकरणाः परमहंसा इति यावत्। तद्वचः वायसं तीर्थं उशन्ति, वायसतुल्यानां कामुकानां अनुभवयोग्यं मन्यन्ते। यत्र न निरमन्ति नाद्रियन्ते न तत्र कर्णं दत्वा शृण्वन्तीत्यर्थः। **उ शिक्षयेति पाठे** उशब्दः अवधारणे परप्रेरणयापीत्यर्थः॥ १०॥

तदेवं भगवद्यशोऽनङ्कितप्रबन्धस्य शब्दतः अर्थतः चित्रपदस्यापि भागवतानुपादेयत्वं उक्तम्। अथ तदङ्कितस्य वैचित्र्यरहितस्यापि प्रत्युत शब्दतः अर्थतश्च दुष्टस्याप्यतीव तदुपादेयत्वमाह — **तत्** इति। प्रतिश्लोकं अबद्धवत्यपि शब्दतः अर्थतश्च दोषवत्यपि यस्मिन् प्रबन्धे अनन्तस्य भगवतः यशसा **अङ्कितानि** चिह्नितानि भगवद्गुणप्रत्यायकानि नामानि नारायणवासुदेवकृष्णादिनामानि दृश्यन्ते इति शेषः, तद्वाग्विसर्गः स वाक्सृष्टिरूपः प्रबन्धः। जनता जनानां समूहः "ग्रामजनबन्धुभ्यस्तल्" (अष्टा. 4-2-42) इति समूहार्थे तल्प्रत्ययः। 'तलन्तं स्त्रियाम्' (तलन्तः पा. लि. शि. 17) इति स्त्रीत्वम्। तस्या अघं पापं विप्लवयति नाशयतीति विप्लवः, अन्तर्भावितण्यर्थात् प्लवेः पचादित्वादच्। यद्वा भावे "ऋदोरप्" (अष्टा. 3-3-57) इत्यप्। जनतायाः अघस्य विप्लवः नाशः यस्मात् स तथा। अत एव भागवता उपाददत इति वदन् विशिनष्टि **यच्छृण्वन्ति** इति। यद्वाग्विसर्गं साधवः शृण्वन्ति श्रावयितृसद्भावे, गृणन्ति कथयन्ति श्रोतृसद्भावे, तदुभयाभावे केवलं स्वयं गायन्ति। सामान्याभिप्रायेण यत्तदिति[4] नपुंसकनिर्देशः। शब्ददोषो नाम अनुपस्थाप्यार्थाभिप्रायेण प्रयोगः, यथा **'स्वे'** इत्यस्य ज्ञातिधनाभिप्रायेण प्रयोगः। अर्थदोषः नामानुपस्थापकशब्दोपस्थाप्यत्वं यथा आत्माऽऽत्मीययोः स्वशब्दोपस्थाप्यत्वम्। तदेवं त्रिवर्गतत्साधनप्रतिपादकं प्रबन्धं भागवतानुपादेयं निन्दित्वा भगवद्यशःप्रतिपादकस्यैव तदुपादेयत्वमुक्तम्॥ ११॥

नन्‌ धर्मादितत्साधनानां अपि पुरुषाभिलषितत्वेन हितत्वात् तन्निरूपणमप्यर्थवदेव इत्याशङ्कायां विषमिश्रपयःप्रशंसातुल्यं तन्निरूपणं इत्यभिप्रायेणैश्वर्यकैवल्यतत्साधनानां पुरुषार्थत्वतत्साधनत्वं प्रतिक्षिपति — **नैष्कर्म्यं** इति। निर्गतं कर्मणः निष्कर्म निष्कर्मैव नैष्कर्म्यं स्वार्थे ष्यञ्। कर्मणः बहिर्भूतं कर्मेतरत् आत्मयाथात्म्योपासनात्मकज्ञानं इत्यर्थः। तन्निरञ्जनं रागद्वेषाद्यञ्जनरहितं रागादिभिः अनुपप्लुतं अपि अच्युतस्य भगवतः भावेन भक्तियोगेन वर्जितं चेत्[5] ज्ञानानां मध्ये मलवत् हीनं, अत एव न शोभते। यद्वा नैष्कर्म्यं निरञ्जनं ज्ञानमप्यच्युतभाववर्जितं चेत् नालं शोभते नातीव शोभते इत्यर्थः। "सर्वे च्यवनधर्माणः प्रतिबुद्धस्तु मोक्षभाक्" (भार. 12-328-31) इति केवलिनः अपि पुनः च्यवनधर्मोक्तिः तावत् कैवल्यस्य न पुरुषार्थत्वं, नापि तत्साधन[6]योगस्य पुरुषार्थसाधनत्वमिति भावः। यतः नैष्कर्म्यं[7] ज्ञानयोगमेव न शोभते कुतः पुनः तत्कर्म शोभते किं यत्तत्कर्म ईश्वरे न चार्पितं अनर्पितं अभिसंहितार्थकामादिफलं अच्युतभाववर्जितं च इत्यर्थः। अत एव शश्वत् सदा फलानुभवदशायां अनुष्ठानदशायां चाभद्रं दुःखं यस्मिन् तदनुष्ठानदशायां अभद्रवत्त्वं कायक्लेशाद्यावहत्वेन दुष्टमेव फलदशायामपि पुनःपतनभयशङ्कया अभद्रवत्त्वं अवगन्तव्यम्। यदप्यकारणं निष्कामकर्माप्यच्युतभाववर्जितं चेत् न शोभते। अयमर्थः — ज्ञानयोगः कर्मयोगश्च भगवद्भक्तिवर्जितः न शोभते काम्यं कर्म न शोभते इति कैमुत्यन्यायसिद्धमिति॥ १२॥

---

1 B,W °थ 2 W अभागवतधर्मप्रतिपादकस्य 3 W adds इच्छन्ति 4. W adds च 5 W च ज्ञानमलं 6 W adds °ज्ञान° 7 W °र्म्यज्ञानमेव

**विज॰** भारतादिशास्त्रेषु हरियशसः बहूदितत्वात्, कथं खिलं मन्ये इत्युच्यत इति तत्राह — **यथा** इति। हे मुनिवर्य! सर्वज्ञतम! मुनिभिः व्रियत इति वा[1] मुनिवर्य! धर्मादयः पुरुषार्थाः यथा अनुवर्णिताः तथा वासुदेवस्य महिमा नानुवर्णितः, हि यस्मात् तस्मात् अनुवर्णनीयः। धर्मादीनां अल्पकथनेनापि पूर्तिः स्यात् न तथा वासुदेवस्य महिम्नः भारतादौ अतिकथितस्यापि सतां तत्र तात्पर्यातिशयात् फलाधिक्याच्च। न हि सूर्योदयं आकाङ्क्षमाणस्य खद्योतोदयेनेच्छा निवर्तत इत्येतदर्थं हिशब्देनाह, द्वितीयः हिशब्दः हेत्वर्थः॥ ९॥

धर्मादीनां अल्पकथनेन कथं पूर्तिः स्यादिति तत्राह — **न** इति। यद्वचः जगत्पावनकरं हरेः यशः न गृणीत कर्हिचिदपि न प्रतिपादयेत् तच्चित्रपदमपि चित्राणि पदानि यस्मिन् तत् तथोक्तं तद्वचः शास्त्रं न भवतीत्यर्थः। कुतः? तद्वायसं वयोमात्रानुजीवितार्थं शास्त्रं उशन्ति इच्छन्ति। यत्र काकोच्छिष्टतीर्थे मानसाः प्रेक्षावन्तः मानसाख्यसरोविहारिणो वा हंसाः परमहंसाः धवलपक्षाः वा जलपयोविवेककारिणः मिमङ्क्षया विचारलक्षणस्नानेच्छया न न्यपतन् न निपतन्ति न प्रविशन्तीति यथा तथा। यत्र यस्मिन् तीर्थे मानसाः ब्रह्मणः मनसः जाताः सनकादयः हंसाः निर्लेपा इति वा। तस्मात् सज्जनानादरणीयत्वेन धर्मादीनां अल्पकथनेन पूर्तिरिति भावः। विरमन्त्युशिक्षया उशिक् शुद्धं क्षयं स्थानं येषां ते तथोक्ताः। शुद्धं ब्रह्म तदेव क्षयः येषां ते तथोक्ताः इति वा इति पठित्वा केचिद्व्याचक्षते तत् चिन्त्यम्॥ १०॥

वासुदेवमहिम्नः अतिकथितस्यापि कथं न पूर्तिरिति तत्राह — **स वाक्** इति। यस्मिन् निबन्धे प्रतिश्लोकं अपशब्दाद्यबद्धवत्यपि शाब्दिकैः जुगुप्सिते देशकालगुणैः अनन्तस्य हरेः **पारिजातहरणाद्यात्मकयशोलाञ्छितानि** नारायणादिनामानि सन्ति, साधवः परमभागवताः शुकादयः यच्च **शृण्वन्ति** गायन्ति गृणन्ति स जनतायाः जनसमूहस्य अघं पापं विप्लवयति नाशयतीति जनताघविप्लवः वाचां विसर्गः विशिष्टरचनाविशेषः **इत्येकान्वयः**। यस्मिन् सति प्रशस्तानि अनन्तस्य नामानि साधवः **शृण्वन्ति** इति यत् यस्मात् तस्मात् स एव वाग्विसर्गः इति वा। जनतापापविनाशहेतुत्वात् सज्जनगृहीतत्वाच्च वासुदेवमाहात्म्यप्रतिपादकमेव शास्त्रं, नान्यत्। अतः तदेव शास्त्रप्रणेतृभिः रचनीयमिति भावः॥ ११॥

न केवलं वासुदेवमहिमद्योतकयशोङ्कविधुरशास्त्ररचनमेव मोघं, किन्तु हरिभक्तिविरहितनिर्निमित्तज्ञानकर्मणी अपि **निष्फले** एव इति विज्ञापयतीत्याह — **नैष्कर्म्यं** इति। नैष्कर्म्यं स्वतः निष्कर्मणः मुक्तेः साधनम्। अलं निरञ्जनं विषयसम्मार्जनमलरहितं अत्यन्तविरक्तिमत् वेदार्थविषयं परोक्षज्ञानमपि अच्युतभाववर्जितं भगवद्भक्तिरहितं हरौ अच्युततया निरन्तरभावनया मनोयोजनेन रहितं वा न शोभते, अधिकारिणः अभीष्टफलं न प्रकाशयति बन्धकतया शश्वत् सर्वदा अभद्रं अमङ्गलं ईश्वरे हरौ न चार्पितं कर्म न शोभते इति, कुतः पुनः किमु वक्तव्यम्? यद्यपि अकारणं फलकामनादिविधुरं तथापीत्यर्थः। शश्वदभद्रं अनुष्ठानकाले फलकाले वा मङ्गलं यत्काम्यं कर्म न शोभते इति कुतः पुनः यदप्यकारणं नित्यं कर्म हरौ नार्पितं चेत् तत्र शोभते इति किं वक्तव्यमिति वा। अच्युतभाववर्जितमित्यनेन अपरोक्षज्ञानस्य भक्तिसाधनत्वात् परोक्षोपपदमेवात्र ज्ञानं विवक्षितमिति ज्ञायते॥ १२॥

1 B,K,M add मुनिवरप्राप्य इति वा

**रा० कृ०** हे, मुनिवर्य, व्यास, किञ्च धर्मादयः धर्मार्थकाममोक्षाख्याः अर्थाः पुरुषार्थाः यथा अनुवर्णिताः पुनः पुनः वर्णिताः, तथा वासुदेवस्य सर्वान्तर्यामिणः भगवतः महिमा न अनुवर्णितः धर्मादिवत् प्राधान्येन नोक्तः।

अत्र वासुदेवपरितोषजनकं ज्ञानं व्यर्थं इति कथितम्, किं तद्भवति? उच्यते — सर्वकारणस्य सर्वान्तर्यामिणः वासुदेवस्य पार्थक्येन न कस्यापि वस्तुनः अस्तित्वम्। तथा च धर्मादीनां वासुदेवमयत्वेन ज्ञानमेव सार्थकम्, तदेव वासुदेवतोषनिदानं च।

अपि च व्यासेन धर्मादयः पुरुषार्थत्वेन पाद्मब्रह्माण्डादिपुराणेषु वर्णिताः पुरुषार्थशिरोमणिः वासुदेवमहिमा तु पुरुषार्थत्वेनापि न वर्णितः। किन्तु पुरुषार्थभूत मोक्षसाधनत्वेनैव वर्णितः सोऽयं महान् प्रमादः एव चित्तस्य अप्रसादं जनयति।

यद्यपि धर्मादीनां पुरुषार्थानां अनुष्ठेयतया अनुवर्णनं समुचितं, तथापि वासुदेवमहिमानुप्रवेशेनैव सार्थक्यं तदनुवर्णनस्य। तस्मात् वासुदेवमहिमानुवर्णनं उपसर्जनीकृत्य प्रधानतया धर्मादिवर्णनं अनुचितमेव। तदेवं कर्तव्याकरणमेव चित्ताप्रसत्तेः कारणम्।

अत्रेदं अनुसन्धेयम् — वासुदेवमहिमानुवर्णनं नाम आनन्दघनस्य वासुदेवस्य सर्वान्तर्यामिणः महिम्नः अस्तित्वरूपस्य अनुवर्णनं अनुसन्धानमेव। विना च नैरन्तर्येण तादृशवासुदेवास्तित्वानुसन्धानं केवलधर्माद्यनुवर्णनं न चित्तप्रसादमावहति पार्यन्तिकसुखस्वरूपवासुदेवमयधर्मानुसन्धानस्यैव चित्तप्रसत्तिहेतुत्वात्। न खलु स्मृतमात्रं मधुगतं माधुर्यं विना आस्वादनं जिह्वया अनुभवविषयीभवति।

एवं वासुदेवमहिमा तद्भक्तेषु गुणत्वेन आत्मानं अभिव्यनक्ति। तेन च भगवत्सान्निध्यसिद्धिः। लोके च सज्जनगुणानुसन्धानेन तद्रूपनारायणश्च सन्निधत्ते अस्माकम्। तेन चित्तप्रसादः समाध्यपरपर्यायः प्राप्यते। एतदनुसन्धानव्यतिरेकिणः केचित् साधून् अविगणय्य केवलसमाधिमहत्त्वमनुचिन्तयन्तः तत्साधने च परिश्रान्ताः सन्तः विना समाधिसुखं कालान्तं भजन्ते। केवलविज्ञानापेक्षया शास्त्राध्ययनं कुर्वतां विदुषां एषैव गतिः। कदाचित् अभ्यासवशेन प्रवृद्धे अभिमानेऽपि ते आनन्दभ्रमं कुर्वन्ति। तथाहि — सुरापानादिकं अभ्यासबलेन आनन्दाभासं जनयति। ईदृशाभ्यासानुबन्ध एव सङ्गः। अथवा कर्मबन्ध इति कथ्यते। एतस्मात् मानवान् विमोचयितुं सत्साङ्गत्यसज्जनगुणश्रवणकीर्तनादिकं प्रभवति न तु धर्मानुवर्णनम्।

एवमत्रापि "भारतादिग्रन्थेषु तत्तत्कथामुखेन केवलधर्मवर्णनपरायणो भवान् चित्तप्रसादनिदानं भागवतधर्मानुवर्णनं नाकरोत्" इति नारदः व्यासं वासुदेवमहिमानुवर्णने अवहितं विदधाति॥ ९॥

चित्रपदं यमकोत्प्रेक्षाद्यलङ्कारयुक्तमपि यद्वचः जगत्पवित्रं हरेः हरेः यशः कर्हिचित् कुत्रापि न प्रगृणीत न वदेत् चेत् तद्वचः -काव्यं इत्यर्थः। वायसं काकतुल्यकामिसम्बन्धि तीर्थं रतिस्थानं उशन्ति मन्यन्ते। कुत इति चेत्, यत्र काव्ये मानसाः भगवन्मये सत्त्वप्रधाने मनसि स्थिताः उशिक्क्षयाः कमनीयनिवासाः ब्रह्मनिवासा इत्यर्थः। हंसाः यतयः न निरमन्ति तरां न रमन्ते। अन्यार्थस्तु — मानसाः मानससरसि चरन्तः उशिक्क्षयाः कमनीयकमलषण्डवासिनः हसाः यत्र काकक्रीडास्थाने परित्यक्तविविधचित्रान्नयुक्ते अपि उच्छिष्टगर्ते न रमन्ते इति॥ १०॥

अबद्धवत्यपि अपशब्दादिसहितेऽपि यस्मिन् वाग्विसर्गे प्रतिश्लोकं श्लोके श्लोके अनन्तस्य श्रीविष्णोः यशोऽङ्कितानि यशसा चिह्नितानि नामानि सन्ति यत् यानि नामानि साधवः सत्पुरुषाः शृण्वन्ति वक्तरि सतीति शेषः। गृणन्ति कथयन्ति श्रोतरि सति इत्यध्याहार्यम्। गायन्ति अन्यदा तु स्वयमेव कीर्तयन्ति। तद्वाग्विसर्गः सः वाक्प्रबन्धः जनताघविप्लवः जनसमूहपापनाशकः भवति।

शास्त्राणि तावत् विधिनिषेधबहुलानि। तत्र शब्दसाधुत्वासाधुत्वनिर्णायकं व्याकरणम्। तच्च "प्रयोगशरणाः वैयाकरणाः" इति न्यायेन प्रयोगाधीनम्। यत्पदं बहुभिः प्रयुक्तं रूढं भवति तत् सदिति तदन्यदसत् इति तन्निर्णयः। वस्तुतस्तु शास्त्रदृशा अपशब्दोऽपि भगवद्भक्तिप्रबोधकश्चेत् साधुरेव। शास्त्राणां मान्यता च ईश्वरतत्त्वज्ञानैकनिबन्धना॥ ११॥

नैष्कर्म्यं निष्कर्मतारूपं निरञ्जनं अविद्यारहितमपि ज्ञानं अच्युतभाववर्जितं भगवद्भक्तिशून्यं चेत् अलं अत्यन्तं न शोभते। शश्वत् सदा साधनसमये फलकाले च अभद्रं दुःखात्मकं यत्कर्म काम्यं इति शेषः। यदप्यकारणं काम्यभिन्नं तदुभयविधं कर्म ईश्वरे नार्पितं चेत् कुतः पुनः शोभते नैव शोभत इत्यर्थः॥ १२॥

**अथो[1] महाभाग! भवानमोघदृक् शुचिश्रवाः सत्यरतो धृतव्रतः।**
**उरुक्रमस्याखिलबन्धमुक्तये समाधिनानुस्मर[2] तद्विचेष्टितम्॥ १३॥**

**ततो[3]ऽन्यथा किञ्चन यद्विवक्षतः[4] पृथग्दृशस्तत्कृतरूपनामभिः।**
**न कुत्रचित्[5] क्वापि च दुःस्थिता मतिः लभेत वाताहतनौरिवास्पदम्॥ १४॥**

**जुगुप्सितं धर्मकृतेऽनुशासतः[6] स्वभावरक्तस्य महान् व्यतिक्रमः।**
**तद्वाक्यतो धर्म इतीरितः स्थितः न मन्यते तस्य निवारणं जनः॥ १५॥**

**विचक्षणो[7]स्याऽर्हति वेदितुं विभोः अनन्तपारस्य निवृत्तितस्सुखम्।**
**प्रवर्तमानस्य गुणैरनात्मनः ततो भवान् दर्शय चेष्टितं विभोः[8]॥ १६॥**

---

1 H,K,M,V °तो; W °हो 2 H,K,M,V य° 3 K,M,W अ° 4 K,M °क्षितं 5 B,H,I,K,M,V कर्हि° 6 K,M °नं 7 H,V °णः-कोऽर्हति 8 B,N भो!

**श्रीध॰** तदेवं भक्तिशून्यानि ज्ञानवाक्चातुर्यकर्मकौशलानि व्यर्थान्येव यतः, अतः हरेः चरितमेव अनुवर्णय इत्याह — **अथो** इति। अथो अतः कारणात्। अमोघा यथार्था दृक् धीः यस्य, शुचि शुद्धं श्रवः यशो यस्य, सत्ये रतः, धृतानि व्रतानि येन सः भवान् एवं महागुणस्तावत्। अतः उरुक्रमस्य विविधं चेष्टितं लीलां[1] समाधिना चित्तैकोग्र्यण अखिलस्य बन्धमुक्तये त्वं अनुस्मर स्मृत्वा वर्णय इत्यर्थः। एतच्च वाक्यान्तरमिति मध्यमपुरुषप्रयोगः नानुपपन्नः॥ १३॥

विपक्षे दोषान्तरमाह — **तत** इति। ततः उरुक्रमचेष्टितात् पृथक्दृशः अत एव अन्यथा प्रकारान्तरेण यत्किञ्चत् अर्थान्तरं विवक्षतः तया विवक्षया। कृतैः स्फुरितैः रूपैः नामभिश्च वक्तव्यत्वेन उपस्थितैः **दुःस्थिता अनवस्थिता** सती मतिः कदाचित् क्वापि विषये आस्पदं स्थानं न लभेत, वातेन आहता आघूर्णिता नौरिव। तदुक्तं **गीतासु** "व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन। बहुशाखा ह्यनन्ताश्च **बुद्धयोऽव्यवसायिनाम्**"॥ (भ. गी. 2-41) इत्यादि॥ १४॥

तदेवं हरियशो विना भारतादिषु कृतं धर्मादिवर्णनं अकिञ्चित्करं इत्युक्तं, प्रत्युत विरुद्धमेव जातमित्याह — **जुगुप्सितम्** इति। जुगुप्सितं निन्द्यं काम्यकर्मादि स्वभावत एव रक्तस्य तत्र रागिणः पुरुषस्य धर्मकृते धर्मार्थमनुशासतः तव महानयं व्यतिक्रमः अन्याय्यः [2]। कुत इत्यतः आह। यस्य वाक्यतः अयमेव मुख्यः

**धर्मः इति** स्थितः इतरः प्राकृतः जनः तस्य काम्यकर्मादेः अन्येन तत्त्वज्ञेन क्रियमाणं निवारणं स्वयमेव वा त्वया क्रियमाणं यद्वा "न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः" (म. ना. उ. 10-5) इति श्रुत्या क्रियमाणं निवारणं, यथार्थमेतदिति न मन्यते। किन्तु प्रवृत्तिमार्गानधिकृतविषयं तदिति कल्पयति। तदुक्तं मतान्तरोपन्यासे भाट्टैः "तत्रैवं शक्यते वक्तुं येऽन्धपङ्ग्वादयो नराः। गृहस्थत्वं न शक्ष्यन्ति कर्तुं तेषामयं विधिः। नैष्ठिकब्रह्मचर्यं वा परिव्राजकतापि वा। तैरवश्यं ग्रहीतव्या[6] तेनादावेतदुच्यते" इत्यादि ॥ १५ ॥

ननु यद्येवं प्रवृत्तिमार्गः निन्द्यते तर्हि निवृत्तिमार्गे सर्वक्रियात्यागेनैव पारमेश्वरसुखस्वरूपानुभूतेः[7] किं तद्यशःकथनेनापि, तत्राह — **विचक्षण** इति। विचक्षणः [8] निपुणः कश्चिदेव निवृत्तितः सर्वक्रियानिवृत्त्या अस्य विभोः सुखं निर्विकल्पकसुखात्मकं स्वरूपं वेदितुं ज्ञातुमर्हति, न पुनः अविचक्षणः प्रवृत्तिस्वभावः। विभुत्वे हेतुः, अनन्तः [9]कालतः देशतश्च पारं न यस्य तस्य विभोः चेष्टितम्। ततः कारणात् हे विभो![10] अनात्मनः देहाद्यभिमानिनः अत एव गुणैः सत्त्वादिभिः प्रवर्तमानस्य जनस्य दर्शय। भवानिति त्वमित्यर्थः। पाठान्तरे हे भवन्निति सम्बोधनम् ॥ १६ ॥

---

1. H,V लीलावैचित्र्यं 2 H,V add शास्त्रोल्लङ्घनमित्यर्थः। 3. H,V add तव 4 H,V add अग्रे 5. H,V एतदिति 6. H,V गृहीतव्यं
7 B °तिः 8 B adds °ऽति° 9 H,V नास्त्यन्तः कालतः पारं च देशतः यस्य 10 H,V भोः

**वीर॰** तदेवं लोकहितार्थं प्रवृत्तस्य तव केवलत्रिवर्गतत्साधननिरूपणं उचितं इत्युक्तं भवति। यतः त्रैवर्गिककर्मणः अनर्थगर्भत्वं अतः त्वं अखिलानिष्टपरिहारेष्टप्रापणक्षम[1] भगवद्भक्तियोगनिष्पादक तच्चेष्टितज्ञानजनकं प्रबन्धं कुरु इत्याह — **अहो** इति। हे महाभाग! भाग्यमत्र भगवदंशभूतत्वं, अखिलनिगमद्रष्टृत्वं च। भवान् सत्यरतः सत्यं भूतहितं तस्मिन् रतः, न केवलं सत्यरतः एव अपि तु अमोघदृक् सत्यं[2]मूलममोघमवितथं पश्यतीति तथाभूतहिताचरणोपयुक्तज्ञानसम्पन्नश्च इत्यर्थः। न केवलं अमोघदृगेव अपितु धृतव्रतः धृतं सङ्कल्पितं व्रतं सत्यार्थदीक्षारूपं येन सः भूतहिताचरणाय बद्धदीक्ष इत्यर्थः। *'कथमेवमहो[3] भाग्यं ज्ञायते' इत्यतः विशिनष्टि — शुचिश्रवाः, शुचि विशुद्धं श्रवः "लोकहितार्थं अवतीर्णः व्यासः" इत्येवंविधा प्रथा यस्य सः। हेतुगर्भाणि एतानि विशेषणानि एवंविधस्यानर्थगर्भत्रैवर्गिकनिरूपणं अनुचितं इति भावः। उक्तविधस्त्व उरुक्रमस्य उरवः विपुलाः क्रमाः पादविन्यासाः त्रिलोके[4] यस्य तस्य भगवतः यद्विचेष्टितं [5] तदेव नृणां अखिलानां बन्धानां गर्भजन्ममरणादिरूपाणां मुक्तये बन्धेभ्यः मुक्तये वा समाधिना अनुस्मर सम्यक् आलोचनपूर्वकं प्रबधान इत्यर्थः ॥ १३ ॥

एवं चेत् त्वदात्मनि असन्तोषः निवर्तेत[6] नान्यथा इत्याह — **अत** इति। अतोऽन्यथा उरुक्रमचेष्टकथनात् अन्यथा वैपरीत्येन तत्कृतरूपनामभिः पृथग्दृशः पृथग्भूतान् सम्बन्धरहितान् अर्थान् विवक्षतः वर्णयतः तव अत एव दुसःस्थिता मतिः कदाचिदपि क्वचिदपि यत्किञ्चिदपि आस्पदं प्रतिष्ठां[7] अव्याकुलतामिति यावत्; न लभेत प्रत्युत व्याकुलैव भवतीत्यर्थः। यद्वा ततो[8]ऽन्यथा यत्किञ्चन विवक्षसे चेन्[9]नानावि[10]धार्थदर्शिनः ते मतिः क्वापि तत्कृतरूपनामभिः। कृतमिति[11] भावे क्तः, कर्म इत्यर्थः। तस्य उरुक्रमस्य कर्मरूपनामभिः हेतुभिः आस्पदं प्रतिष्ठां न लभते। बुद्धेः

अव्याकुलत्वं नाम भगवत्कर्मरूपनामगोचरत्वं तत् न सिध्यतीत्यर्थः। यथा वातेन वायुना आहता उत्पथं नीता **नौः** आस्पदं न लभते तद्वत्। यद्वा अतः उरुक्रमात् अन्यथासत्त्वेन[12] उरुक्रमानात्मकत्वेन अब्रह्मात्मकस्वतन्त्रवस्तुत्वेनेति यावत्। यत्किञ्चन वस्तु विवक्षतः वर्णयितुं इच्छतः अत एव तत्कृतैः उरुक्रमकृतैः देवमनुष्यादिरूपनामभिः **हेतुभिः** **पृथग्दृशः** पृथग्दृष्टेः तव अत एव दुसःस्थिता **मतिः** क्वापि कर्हिचिदपि आस्पदं न लभेत[13]। यत्किञ्चन विवक्षितं चेत् तदुरुक्रमात्मकतया तद्विभूतित्वेनैव वर्णयेः[14] चेत् तव मतिः सुस्था सती आस्पदं लभेत[15]। अतदात्मकतया स्वतन्त्रवस्तुत्वेन वर्णयितुं उद्युक्तं[16] चेत् तर्हि अत एव पृथग्दृष्टेः तव दुसःस्थिता सती मतिः आस्पदं न लभेत[17] इत्यर्थः। प्राधान्येन उरुक्रमचेष्टितं वर्णनीयं तत्प्रसङ्गादपि यत्किञ्चिद्वस्तु वर्णयितुं इष्टं, तदपि तद्विभूतितयैव वर्णनीयम्। एवं चेत् मतिः अव्याकुला अन्यथा तु व्याकुला भवतीति भावः॥ १४॥

भूतहिताचरणार्थे[18] प्रवृत्तः त्वं अहितं एव कृतवान् असि इत्याह — **जुगुप्सितं** इति। स्वभावरक्तस्य इत्यर्थकामयोः[19] इत्यादिः अर्थकामयोः स्वभावतः एव रक्तस्य जनस्य धर्मकृते अर्थकामसाधनधर्मार्थं अनुशासतः भारतनिर्माणद्वारा बोधयतः तव अयं महान् व्यतिक्रमः चिकीर्षितविपरीतानुष्ठानरूपः आपतितः। भूतहितं चिकीर्षितं अधुना तद्विपरीतमेव कृतं इत्ययं महान् व्यतिक्रमः इत्यर्थः। अतः इदं जुगुप्सितं निन्दितं कृतम्। स्वभावतः एव अर्थकामपारवश्यमूलक तापत्रयाभिहतं जनं प्रति पुनरर्थकामसाधनमेव अनुतिष्ठ इत्यनुशासनं निन्दितं इति भावः। ननु मयैवं अनुशासने कृतेऽपि स्वरुच्यनुसारात् लोकः निःश्रेयससाधन एव प्रवर्तताम्। भारतेऽपि क्वचित् अर्थकामयोः हेयत्वेन उक्तत्वात् न दोषश्च इत्यतः[20] आह यद्वाक्यत इति। परः कृत्स्नवेदीतरः[21] ततः अर्वाचीनः **कृत्स्नवित्** जनः **यस्य** **तव** **वाक्यात्** अर्थकामसाधनमेव **धर्म** इति **स्थितः**। अर्थकामौ एव निरतिशयपुरुषार्थौ तत्साधनमेव निरतिशय धर्म इत्यध्यवसाययुक्तः[22]। तस्य त्रिवर्गस्य निवारणं न मन्यते। त्वया त्रिवर्गस्य विस्तरेण प्रतिपादितत्वात् त्रिवर्गस्य निवारणं त्वदभिप्रेतं इति जनो न जानातीत्यर्थः॥ १५॥

ननु अकृत्स्नवित् जनः न जानातु नाम कृत्स्नवित्तु मम अभिप्रायं जानात्येव इत्यत आह — **विचक्षण** इति। यदपि अस्य विभोः भगवतः अनन्तपारस्य, कर्मणि षष्ठीयम्। अपारं चेष्टितं विचक्षणः निपुणबुद्धिः निवृत्तिधर्मरतः[23] निवृत्तिधर्मनिष्ठतया सुखं यथा तथा वेदितुं अर्हति। निवृत्तिधर्मनिष्ठः भगवद्वैभवाभिज्ञः दुर्लभ इति भावः। तथापि गुणैः रजआदिगुणमूलकैः रागादिभिः प्रवर्तमानस्य अनात्मनः आत्मज्ञानरहितस्य जनस्य विभोः चेष्टितं दर्शय प्रबन्धनिर्माणेन वर्णय[24] इत्यर्थः। शासनं नाम अज्ञातज्ञापनरूपम्। तत्र अर्थकामयोः क्वचिदपि हेयत्वानुक्तौ अपि विचक्षणः जनः जानात्येव। अतस्तम्प्रति[25] क्वचिदपि अर्थकामयोः हेयत्वज्ञापनं व्यर्थमेव। अविचक्षणं त्वदभिप्रायानभिज्ञं प्रत्यपि तद्व्यर्थमेव। अतः विचक्षणजनस्यापि सुखप्रतिपत्तये अर्थकामयोः हेयत्वं भगवच्चेष्टितज्ञानस्य निरतिशयपुरुषार्थ-साधनत्वं च विपुलप्रबन्धनिर्माणेन दर्शय इति भावः॥ १६॥

---

1 A.B परिहारेण प्रायेण भगव° 2 W °त्त्व° 3 W °महं ज्ञाये इत्यतो 4 W त्रिलोकी सङ्ग्राहका यस्य 5 W adds तत् 6 W निवर्तते 7. A,B omit प्रतिष्ठां 8. W अ° 9 W त° 10. W °विषशास्त्रार्थ° 11. A,B °इम° 12. W अन्यत्वेन 13. W लभते 14. W

वर्णनीयंचे° 15. W लभते 16 W °क्तः 17. W लभते 18 W °र्थं 19 B,W °त्यस्या° 20 W °त्र 21 W °वेदितुः त्वत्तोऽर्वाचीनः 22. W °न° 23. W °धर्मतः 24 W दर्श° 25 W °स्सं° * इदं वाक्यं प्रायशः "कथमेवं महाभाग्यं ज्ञायते" इति भवितुमर्हति इति सम्भाव्यते।

**विज॰** अधुना अलम्बुद्धिहेतुं विज्ञापयीत्याह — **अत** इति। हे महाभाग! अपरिमितभाग्यनिधे! उक्तप्रकारेण कर्मज्ञानयोः हरिभक्तिरहितयोः निष्फलत्वात् धर्मादीनां अल्पकथनेनापि पूर्तिः। भगवन्महिम्ना अतिकथितेनापि अपूर्तिरेव इति यतः साक्षात् शुचिश्रवाः विष्णुरेव अत एव सत्ये निर्दुःखानन्दानुभवे रतः शरणागतपालनादिधृतं व्रतं येन स तथा अत एव अमोघज्ञानः अत एव भवान् पूज्यः त्वं सकलसज्जनसंसारबन्धनविध्वंसनाय उरुक्रमस्य बहुपराक्रमस्य तव यत् जगत्सृष्टिपालनादिविशिष्टचेष्टितं तत् समाधिना दर्शनगुह्यसमाधिभेदेन त्रिधा भिन्नानां भाषाणां मध्ये यथास्थितवस्तुकथनलक्षणया समाधिभाषया अनुस्मर भगवन्महिमप्रतिपादकश्रीभागवताख्यग्रन्थं कुरु। तेन कृतावतारप्रयोजनालम्बुद्धिः भविष्यतीति भावः। अखिलधर्मगुप्तये इति पाठे समस्तभागवतधर्मरक्षणाय इत्यर्थः॥ १३॥

केवलधर्मादिविषयशास्त्रकृत्यानर्थोपि भवतीति ज्ञापयतीति आह — **अतोऽन्यथा** इति। अत एव भगवन्महिम्नः अन्यथा विरुद्धतया यद्धर्मादिपुरुषार्थकथनाय विवक्षितं तत्किञ्चन यत्किञ्चि त्र पुरुषार्थोपयोगी कुतः तत्कृतरूपनामभिः तस्मिन् ग्रन्थे धर्मादिफलत्वेन प्रतिपादितस्वर्गादिगतलावण्यादिरूप मदनकलिकेत्यादिनामवत्पदार्थैः पृथग्दृशः ते मम सुखहेतवः इति वस्त्वयथार्थज्ञानिनः रागादिदोषदुष्टत्वेन दुःस्थिता मतिः कर्हिचित् क्वापि कस्मिंश्चिद्विषयेऽपि समुद्रे वातेन वायुना आहत्ता विघटिता नौः तरीव आस्पदं आश्रयं न लभेत इत्येकान्वयः। तस्मात् केवलधर्मादिविषयशास्त्रकृतिरनर्थकारीति भावः। अतोऽन्यथा श्रीभागवतकृतिमन्तरेण यत्किञ्चन ग्रन्थकरणं विवक्षितं तद्ग्रन्थतत्कल्पितरूपनामभिः मुग्धस्य इति वा। चशब्दान्नरकपातफलमेव स्यादिति सूचयति॥ १४॥

न केवलं अनर्थकार्येव भवेत् अन्येषां निन्दिताधर्मकारी च इति ज्ञापयति — **जुगुप्सितम्** इति। स्वत एव प्रवृत्तिधर्मादिषु रागिणः अज्ञस्य प्रवृत्तिधर्मादिकृते अनुशासनं कुरु इति प्रेरणं जुगुप्सितं त्वादृशैः इति शेषः; न केवलं निन्दितं, किन्तु महान् व्यतिक्रमः वृक्षात् अधःपतितस्य दण्डेन ताडनवन्निस्सीमः अन्यायः। कुतः "स यत्प्रमाणं कुरुते" (भ. गी. 3-21) इति न्यायात् यद्वाक्यतः धर्म इति तस्य जनस्य इतरः स्थितः जनः निवारणं न मन्यत इत्यन्वयः। यस्य भवादृशस्य वचनात् धर्मोऽयं इत्यनुतिष्ठतस्तस्य प्रवृत्तिमार्गस्थितस्य जनस्य इतरस्मिन् निवृत्तिमार्गस्थितः जनः शुकादिः नायं धर्मः न चरतेति निवारणं न करोति। तस्मात् तादृशग्रन्थकृतिः अनपेक्षिता इति भावः। यद्वाक्यत इति यस्य भवादृशस्य श्रेष्ठस्य वाक्यतः वचनात् प्रतीत एव धर्मः मुख्यपुरुषार्थहेतुः इति यदुत्तरः जनः अधिकारी स्थितः विश्वस्तः तस्य जनस्य कुमार्गप्रवर्तमानस्य निवारणं स न मन्यते चेत् तस्य श्रेष्ठस्य महान् व्यतिक्रमः अन्यायः यतः, अतः जुगुप्सितं इति सम्बन्धः। कुमार्गासक्ताः स्वस्मिन् विश्वस्ताः चेत् तस्मात् ते वारणीयाः एव, न पुनः प्रवर्तनीया इति कृपालोः धर्म एव इति भावः॥ १५॥

समाधिभाषात्मकग्रन्थे अधिकार्यभावात् उपरम्यत इति न वक्तव्यं इति विज्ञापयति — **विचक्षण** इति। निवृत्तितः गुणैः प्रवर्तमानस्य अनात्मनः अस्य अनन्तपारस्य विभोः सुखं विचक्षणः वेदितुं अर्हति; यस्मात् ततः भवान् पूज्यः त्वं विभोः चेष्टितं दर्शय इत्येकान्वयः। अनुष्ठितनिवृत्तिधर्मात् सत्त्वादिगुणैः जगत्सृष्ट्यादौ प्रवर्तमानस्य अनात्मनः अस्वामिकार्यस्य जीवस्य अपरिमितमूर्तेः विभोः भगवतः सकाशात् यत् भविष्यत्सुखं भवति तत्सुखं विचक्षणः विशिष्टाचार्यः सात्त्विकप्रकृतिः ज्ञातुं योग्य इति यस्मात् तस्मात् विभोः सर्वगस्य हरेः चरितं समाधिभाषात्मकग्रन्थकरणेन ज्ञापय इत्यतः अधिकार्यभावात् न उपरन्तव्यं इति भावः। अनात्मनः बुद्ध्यादेः गुणैः सत्त्वादिभिः शब्दादिषु प्रवर्तमानस्य जनस्य सुखाय विभोः चेष्टितं दर्शय इति वा॥ १६॥

**रा० कृ०** हे महाभाग! अतः भवान् अमोघदृक् यथार्थदृष्टिः शुचिश्रवाः शुद्धयशस्कः सत्यरतः, धृतव्रतश्च आस्ते। तस्मात् उरुक्रमस्य विष्णोः यद्विचेष्टितं लीलावैचित्र्यं वर्तते, तत् अखिलबन्धमुक्तये समाधिना चित्तैकाग्र्येण अनुस्मर। त्वं स्मृत्वा वर्णय इति यावत्॥ १३॥

ततः विष्णुचेष्टितात् पृथग्दृशः पृथवस्तुतात्पर्यवतः अतः एव अन्यथा प्रकारान्तरेण यत्किञ्चन यत्किमप्यर्थान्तरं विवक्षतः वक्तुमिच्छतः तव तत्कृतरूपनामभिः तया विवक्षया कृतैः स्फुरितै रूपैः नामभिः दुःस्थिता अनवस्थिता मतिः वाताहतनौरिव कर्हिचित् कदाचित् क्वापि च कुत्रापि विषये आस्पदं स्थानं न लभेत॥ १४॥

स्वभावरक्तस्य स्वभावत एव अर्थकामयोः रागवतः पुंसः धर्मकृते भागवतधर्मग्रहणार्थं जुगुप्सितं निन्द्यं काम्यकर्मादिकं अनुशासतः भारतनिर्माणद्वारेण बोधयतः तव महान् व्यतिक्रमः चिकीर्षितविपरीतानुष्ठानरूपः अन्यायः आपतितः। कथमिति चेत् यद्वाक्यतः यस्य तव वाक्यात् "देवान् पितॄन् समभ्यर्च्य खादन् मांसं न दोषभाक्" (मनु. स्मृ. 5-32) इत्यादिरूपात् धर्म इति अर्थकामादिसाधनमेव मुख्यः धर्मः इत्येवं स्थितः निश्चयवान् इतरः प्राकृतः जनः तस्य अर्थकामसाधनभूतधर्मस्य निवारणं "सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज" (भ. गी. 18-66) इति भगवता भारते एव क्रियमाणं न मन्यते यथार्थमेतत् इति न मन्यते॥ १५॥

विचक्षणः अतिनिपुणः कश्चिदेव निवृत्तितः सर्वकार्यनिवृत्त्या अनन्तपारस्य देशकालानवच्छिन्नस्य अस्य विभोः सुखं निर्विकल्पकसुखात्मकं आनन्दस्वरूपं वेदितुं ज्ञातुं अर्हति। ततः तस्मात् कारणात् हे विभो! अनात्मनः आत्मरहितस्य देहाद्यभिमानिनः अत एव गुणैः सत्त्वादिभिः प्रवर्तमानस्य कार्यव्यापृतस्य जनस्य चेष्टितं भगवतः लीलाविशेषान् भवान् त्वमित्यर्थे अयंशब्दः प्रयुक्तः। दर्शय वर्णय इत्यर्थः।

अत्र देहाद्यभिमानवतः सत्त्वादिगुणसङ्गेन कार्यव्यापृतस्य जनस्य आनन्दस्वरूपदर्शनाय भगवच्चेष्टानुवर्णनं कर्तव्यं इत्युक्तं भवति। तत्कथम्? उच्यते — गृहदारधनादिषु आत्मीयभावं अपहाय सर्वान्तर्यामिणः विष्णोः सत्तां अनुसन्धाय तत्समर्पणधिया तेषु स्वकर्तव्यं आचरतः जनस्य सर्वत्र भगवद्भावना सिध्यति। तया च सर्वचेष्टासु भगवल्लीलानुसन्धानं, तेन रागद्वेषोपरमः, ततश्च निर्विकल्पसुखानुभवः। सोऽयं विष्णूपासनाक्रमः। उक्तं च भगवता — "तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः। गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः॥" (भ. गी. 5-17) ॥ १६॥

**त्यक्त्वा स्वधर्मं चरणाम्बुजं हरे भजन्नपक्वोऽथ पतेत्ततो यदि ।**
**यत्र क्व वाऽभद्रमभूदमुष्य किं[1] को वाऽर्थ आप्तोऽभजतां स्वधर्मतः[2] ।। १७ ।।**

**तस्यैव हेतोः प्रयतेत कोविदो न लभ्यते यद्भ्रमतामुपर्यधः ।**
**तल्लभ्यते दुःखवदन्यतस्सुखं कालेन सर्वत्र गभीररंहसा ।। १८ ।।**

**न[3] वै जनो जातु कथञ्चनाव्रजेत् मुकुन्दसेव्यन्यवदङ्ग[4]! संसृतिम् ।**
**स्मरन्मुकुन्दाङ्घ्र्युपगूहनं पुनः विहातुमिच्छेन्न रसग्रहो यतः[5] ।। १९ ।।**

**इदं[6] हि विश्वं भगवानिवेतरो यतो जगत्स्थाननिरोधसम्भवाः[7] ।**
**तद्धि स्वयं वेद भवांस्तथापि वै[8] प्रादेशमात्रं[9] भवतः प्रदर्शितम् ।। २० ।।**

---

1 K,M omit किं 2 K,M °र्मम् 3 H,V स 4 K,M °ही 5 H,I,K,M,V जनः 6 H,V च 7 K,M °वः 8 H,V,W मे; I ते; K,M omit वै 9 AF प्र°

**श्रीध०** एवं तावत् काम्यधर्मादेः[1] अनर्थहेतुत्वात् तं[2] विहाय हरेः लीलैव वर्णनीया इत्युक्तम्। इदानीं तु नित्यनैमित्तिकस्वधर्मनिष्ठामप्यनादृत्य केवलं हरिभक्तिरेव उपदेष्टव्या इत्याशयेनाह — **त्यक्त्वा** इति। ननु स्वधर्मत्यागेन भजन् भक्तिपरिपाकेन यदि कृतार्थो भवेत् तदा न काचित् चिन्ता। यदि पुनः अपक्व एव म्रियेत ततः भ्रश्येद्वा तदा स्वधर्मत्यागनिमित्तः अनर्थः स्यात् इत्याशङ्क्याऽऽह। ततः भजनात् कथञ्चित् पतेत् भ्रश्येत् म्रियेत वा यदि तदपि[3] भक्तिरसिकस्य कर्मानधिकारात् नानर्थशङ्का[4], अङ्गीकृत्याप्याह। वाशब्दः कटाक्षे यत्र क्व वा नीचयोनौ अपि अमुष्य भक्तिरसिकस्य अभद्रं अभूत् किम्? नाभूदेव इत्यर्थः। भक्तिवासनासद्भावादिति भावः। अभजद्भिस्तु केवलं स्वधर्मतः को वा अर्थः आप्तः[5]? अभजतां इति षष्ठी तु सम्बन्धमात्रविवक्षया ।। १७ ।।

ननु स्वधर्ममात्रादपि "कर्मणा पितृलोकः" (बृह. उ. 1-5-16) इति श्रुतेः पितृलोकप्राप्तिः फलं अस्त्येव इति तत्राह — **तस्यैव** इति। तस्यैव हेतोः तदर्थं यत्नं कुर्यात्। यदुपरि ब्रह्मपर्यन्तं अधः स्थावरपर्यन्तं च भ्रमद्भिः जीवैः न लभ्यते। षष्ठी तु पूर्ववत्। भगवद्भक्तिसुखार्थमेव[6] प्रयतेत तस्य दुर्लभत्वात्। तत्तु विषयसुखं अन्यत एव प्राचीनकर्मणा सर्वत्र नरकादावपि लभ्यते दुःखवत्; यथा दुःखं प्रयत्नं विनापि लभ्यते तद्वत्। तदुक्तं "अप्रार्थितानि दुःखानि यथैवायान्ति देहिनाम्। सुखान्यपि तथा मन्ये दैन्यमत्रातिरिच्यते[7]" इति ।। १८ ।।

यदुक्तं "यत्र क्ववाऽ भद्रमभू" दिति तदुपपादयति — **न[8] वा** इति। मुकुन्दसेवी जनः जातु कदाचित् कथञ्चन कुयोनिगतः अपि संसृतिं नाव्रजेत् नाविशेत् अङ्ग! अहो! अन्यवत् केवलकर्मनिष्ठवत् इति वैधर्म्ये दृष्टान्तः। कुत इत्यत आह — मुकुन्दाङ्घ्रेः[9] उपगूहनं आलिङ्गनं पुनः स्मरन् विहातुं नेच्छेत्। यतः अयं जनः रसग्रहः रसेन रसनीयेन गृह्यते वशीक्रियते। यद्वा, रसे रसनीये ग्रह आग्रहः यस्य। तदुक्तं भगवता "यतते च ततो भूयः संसिद्धौ कुरुनन्दन!. पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः" (भ. गी. 6-43) इति ।। १९ ।।

तदेवं भगवल्लीलां प्राधान्येन वर्णय[10] इत्युक्तम्। तत्र कः भगवान् काश्च तस्य लीलाः इत्यपेक्षायामाह — **इदं** इति। इदं विश्वं भगवानेव। स तु अस्मात् विश्वस्मात् इतरः। ईश्वरात् प्रपञ्चः न पृथक्, ईश्वरस्तु प्रपञ्चात् पृथक् इत्यर्थः। तत्र हेतुः, यतः भगवतः हेतोः जगतः स्थित्यादयः भवन्ति, अनेनैव लीलाः अपि दर्शिताः। यद्वा इदं विश्वं भगवान्। इतर इव यः सः जीवोऽपि[11] भगवान्। चेतनाचेतनप्रपञ्चः तद्व्यतिरेकेण नास्ति। स एवैकः तत्त्वं इत्यर्थः। हिशब्देन "सर्वं खल्विदं ब्रह्म" (छान्दो. उ. 1-14-1) इत्यादिश्रुतिप्रमाणं सूचितम्। तद्धि स्वयमेव भवान् वेद। प्रादेशमात्रं एकदेशमात्रं "आचार्यवान् पुरुषो वेद" इत्यादिश्रुत्यर्थसम्पादनाय[12] प्रदर्शितम् ॥ २० ॥

---

1 B,H,V °क° 2 H,V °तत् 3 H,V तथापि 4 H,V °न्नानर्थक्यमङ्गीकृत्याह 5 B,H,V add प्राप्तः 6. A,H,V omit भगवद्भक्तिसुखार्थमेव प्रयतेत, तस्य दुर्लभत्वात् इत्यर्थः। 7 B °व° 8 H,V स 9 H,V °ह्ण्यो° 10. B,H,V अनुवर्ण° 11 H,V जीवो भगवानेव 12 H,V add मे मया

**वीर॰** यदुक्तं "कुतः पुनश्शश्वदभद्रमीश्वरे न चार्पितं कर्म" (भाग. 1-5-12) इति कर्मणः अभद्रगर्भत्वं भगवद्भक्तियोगस्य[1] शश्वद्भद्रगर्भत्वं च तदुभयमुपपादयति — **त्यक्त्वा** इति। पतेत् इति शरीरपातोक्तिः। ईश्वरे न चार्पितं स्वधर्मं स्वसमीहितं[2] फलसाधनं धर्मं त्यक्त्वा हरेः चरणाम्बुजं भजन् भजनोद्यतस्सन्[3] यः सन् अपक्वः अपक्वकषायः पतेत् म्रियेत[4] यदि, अमुष्य यत्र क्वापि किमभद्रं भविष्यति न किञ्चिदपीत्यर्थः। "न हि कल्याणकृत्कश्चित् दुर्गतिं तात गच्छति" (भ. गी. 6-40) "प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीस्समाः। शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते" (भ. गी. 6-41)। "अथवा योगिनामेव कुले भवति धीमताम्" (भ. गी. 6-42) इति भगवदुक्तेः इति भावः। अभजताम् इति च्छेदः। हरेः चरणाम्बुजं अभजताम्। यद्वा स्वधर्मत इति सार्वविभक्तिकः तसिः। स्वधर्मं भजताम् स्वधर्ममनुतिष्ठताम्। कर्तरि षष्ठीयम्। कोवाऽर्थः आप्तः प्राप्तः न कोऽपि इत्यर्थः। "ते तं भुक्त्वा स्वर्गलोकं विशालम् क्षीणे पुण्ये मर्त्यलोकं विशन्ति" (भ. गी. 9-21) इति भगवदुक्तेरिति भावः। अन्तवदेवास्य तद्भवति — 'तद्यथेह कर्मजितो लोकः क्षीयते। एवमेव अमुत्र पुण्यजितो लोकः क्षीयते" (छान्दो. उ. 8-1-6) "प्लवाह्येते अदृढा यज्ञरूपाः" (मुण्ड. उ. 1-2-7) इत्यादिश्रुतेश्च इति भावः ॥ १७ ॥

एवं भगवद्भक्तिस्वधर्मयोः शश्वद्भद्रगर्भाभद्रगर्भत्वे प्रतिपादिते। अथ तत्फलयोः उपायान्तरालभ्यत्वलभ्यत्वे वदन् उपायान्तरेभ्यस्तु[5] सुखसाधनोपयुक्तमेव भूतहितं कार्यं इत्याह — **तस्यैव** इति। उपरि ब्रह्मलोकादिषु अधः पातालादिषु भ्रमतां जीवानां यत् सुखं परब्रह्मानन्दानुभवात्मकं न लभ्यते तस्यैव हेतोः तत्सुखसाधनोपयुक्तोपायदर्[6]शनार्थमेव कोविदः निपुणबुद्धिः तादृशः यतेत। एवं चेत् भूतहितकारित्वं नान्यथेति भावः। तत्सुखं वैषयिकसुखं तु सर्वत्र उपर्यधश्च गभीररंहसा दुर्लक्ष्यवेगेन[7] कर्मणोऽप्युपलक्षणमिदं; भ्रमतां इत्यनुषङ्गः। कालेन तदुद्बोधेन प्राचीनेन कर्मणा च भ्रमतां जायमानानां जनानां इत्यर्थः। अन्यतः उपायान्तरादेव कालकर्मादिरूपात् लभ्यते; दुःखवत् यथा दुःखं तद्वत्, अप्रार्थितमपि दुःखं कालकर्मादिहेत्वन्तरेण[8] एव भवति। तद्वैषयिकसुखमपि इत्यर्थः। यद्वा,

भक्तिसाध्यनैश्श्रेयससुखस्याभूतपूर्वत्व दुःखासम्भिन्नत्वज्ञापनाय भक्तिव्यतिरिक्तोपायान्तरसाध्यस्य सर्वस्यापि दुःखमिश्रत्वमाह तदिति। अन्यत अनभिसंहितफलवर्णाश्रमधर्मोपकृत भगवद्भक्तिव्यतिरिक्तोपायात् यत्सुखं महता कालेन सर्वत्र लभ्यते तद्दुःखवत् दुःखमिश्रमेव दुःखासम्भिन्नं तु प्रागुक्तोपायादेव इत्यर्थः॥ १८॥

"यत्र क्व वाऽभद्रमभूदमुष्य किम्" (भाग. 1-5-17) इति काक्वा सूचितमभिप्रायं सिंहावलोकनन्यायेन विवृणोति — **न वा** इति। अङ्ग! हे बादरायण! मुकुन्दसेवी मुकुन्दभक्तः जनः कदाचिदपि कथञ्चिदपि संसृतिं नाऽऽव्रजेत्; किन्तु; ततः मुंच्येतैव इत्यर्थः। इदं निष्पन्नभक्तियोगनिष्ठपुरुषाभिप्रायकं "तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्यै" (छान्दो. उ. 6-14-2) इति श्रुतेः। अनिष्पन्नभक्तियोगोऽपि जनः अन्यवत् केवलकाम्यकर्मिवत् न संसृतिं व्रजेत्। "नहि कल्याणकृत्कश्चित्" (भ. गी. 6-40) इत्याद्युक्तरीत्या कर्मिविलक्षणमेव जन्म प्राप्नोतीति भावः। तदेव विशदयति — स्मरन् इति। मुकुन्दाङ्घ्र्युपगूहनम्। गुहू संवरणे इति धातुः। मुकुन्दाङ्घ्र्योः संवरणं सम्यक् वरणं प्रपदनमिति यावत्। तत् स्मरन् पौर्वदैहिकं स्मरन्नित्यर्थः। तत्पुनः विहातुं त्यक्तुं नैच्छेत्। कुतः, यतः मुकुन्दसेवी जनः रसग्रहः "रसो वै सः रसंह्येवायं लब्ध्वाऽऽनन्दी भवति" (तैत्ति. उ. 2-7) इत्युक्तरीत्या निरतिशयानन्दात्मकरसरूपपरमात्मानं गृहीतवान् इत्यर्थः। तथा चोक्तं भगवता — "तत्र तं बुद्धिसंयोगं लभते पौर्वदैहिकम्। यतते च ततो भूयः संसिद्धौ कुरुनन्दन! पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः" (भ. गी. 6-43,44) इत्यादिना॥ १९॥

ननु [10] के ते भगवद्गुणा ये मया वर्णनीया इत्यपेक्षायां तेषां आनन्त्यात् न मया उपदेष्टुं, साकल्येन त्वया वर्णयितुं वा शक्याः। किन्तु सङ्ग्रहेण तान् दर्शयामीत्याह — **इदं** इति। यतः यस्मात् जगत्स्थितिसंहारसर्गाः प्रवर्तन्ते। स भगवान् इदं विश्वं एवं [11] इतर इव इतर एव "वद्वा यथा तथैवैवं (साम्ये)" (अम. को. 3-420) इति इवशब्दस्यापि एवशब्दपर्यायत्वानुशासनात् विश्वाभिन्नोऽपि विश्वविलक्षण इत्यर्थः। यत इति "जन्माद्यस्य यतः" (ब्र. सू. 1-1-2) इत्यत्रेव हेतौ पञ्चमी। भगवानिदं इत्यनेन "सर्वं खल्विदं ब्रह्म तज्जलान्" (त्रि. म. ना. उ. 1-3) इति श्रुत्यर्थो[12]ऽभिप्रेतः। एवं जगदुपादानत्वजगन्निमित्तत्वतदुभयाक्षिप्तसर्वशक्तित्वं[13] उपादानकारणाक्षिप्तसर्वान्तरात्मत्वचिदचिद्विशिष्टत्वतन्मूलकजगदभिन्नजगद्विशेष्यत्व तन्मूलकतद्विलक्षणत्वकारणत्वाक्षिप्तोपास्यत्वमोक्षप्रदत्वादयः गुणाः सामर्थ्यात् अत्र फलिताः। एवमादयः त्वया वर्णनीया इति भावः। तद्धि उक्तगुणादिजातं भवान् स्वयं आत्मना वेद। तथापि [14] मया भवतः प्रादेशमात्रं प्रेदश एव प्रादेशः स्वार्थे अण् [15] प्रादेशमात्रं गुणानामेकदेशमात्रमेव प्रदर्शितम्। यद्यपि जगदुपादानत्वादीनां भगवद्गुणानां आनन्त्यं भवान् जानात्येव, तथापि पृष्टेन मया दिङ्मात्रं प्रदर्शितं इत्यर्थः॥ २०॥

---

1. W adds तु 2. W °त° 3 A,B भजमानः 4. B,W °म्रियते 5. W °रालभ्यसुख° 6. W प्रदर्शना° 7. W °णेत्युप° 8 W adds प्रयत्नमन्तरेण 9. W मुच्यत एवे° 10. W adds तर्हि 11. W adds अपि 12. W °र्थोऽत्रा° 13. W °शक्तित्वसर्वज्ञत्वस्थानकारणत्वाऽऽक्षिप्तसर्वान्तरात्मत्वचिदचिद्विशिष्टत्व तन्मूलकजगद्विशेष्यत्व तन्मूलक तद्विलक्षणत्व निरोधकारणत्वाक्षिप्तोपास्यत्वमोक्षदत्वादयो 14. W adds मे 15. W adds प्रादेश एव

**विज**० इतोऽपि प्रवृत्तिधर्मोपदेशात् निवृत्तिधर्मोपदेशः वरीयान् इत्याह — **त्यक्त्वा** इति। अथ **स्वधर्मं त्यक्त्वा हरेः चरणाम्बुजं भजंस्ततः यद्यपक्वः पतेत् तदा अमुष्य यत्र क्व वाऽभद्रमभूत्, स्वधर्मं भजतां को वा अर्थ आप्तः** एव, इत्येकान्वयः। भगवदविषयस्वधर्मानुष्ठानात्मकप्रवृत्तिधर्मं त्यक्त्वा[1] निवृत्तिधर्मविधायकशास्त्रोक्ताचारैः हरेः पादपद्मं सेवमानः पुरुषः तस्मात् अनधिगातापरोक्षज्ञानादिः तत्फलपरिपाके रागाद्यन्तरायविहतः स्खलेत्, तथापि अमुष्य पुंसः "क्षिप्रं भवति धर्मात्मा" (भ. गी. 9-31) इत्यादिप्रमाणात्, यत्र क्व वा जन्मान्तरे श्रीमदादिकुलोद्भूतस्य निवृत्तिधर्मात्मकं भद्रमेष्यतु यत्तदतीतत्वेन भण्यत इति वचनात्। अभूत् भविष्यत्येव। केवलं प्रवृत्तिधर्मं भजतां अनुतिष्ठतां अस्खलनेऽपि धर्मादिषु को वा पुरुषार्थ आप्तः न कोऽपीति भावः। तस्मात् निवृत्तिधर्मविधायकशास्त्रं भवान् करोतु इति प्रार्थये॥ १७॥

तस्मात् विवेकिना प्रवृत्तिधर्मं विहाय निवृत्तिधर्म एव अनुष्ठेय इत्याह — **तस्य** इति। **कोविदः तस्यैव हेतोः प्रयतेत। उपर्यधः भ्रमतां यत् न लभ्यते गभीररंहसा कालेन अन्यतः सर्वत्र दुःखवत् सुखं लभ्यते** इत्येकान्वयः। अनन्तपारस्य इति हरेः मुख्यप्रसादलभ्यं यत् सुखं उक्तं तस्यैव हेतोः नान्यस्य तत्सुखहेतुनिवृत्तिधर्माख्यसाधनस्यार्थे प्रयत्नं कुर्यात्। यत्सुखं भूस्वर्गादिषु प्रवर्तमानानां प्रवृत्तिधर्माणां पुरुषाणां न सुलभं, निरन्तरं निवृत्तिधर्मं सेवमानानां अव्यक्तवेगेन अनेकजन्मपरिमितेन कालेन अन्यतः सर्वदेवेभ्यः अत्यन्तभिन्नात् हरेः सर्वदेशकालेषु निर्दुःखं स्वरूपसुखं अभिव्यज्यते। तस्मात् निवृत्तिधर्म एव श्रेयान् इति भावः। यथा पापिनां प्रयत्नमन्तरेण दुःखं लभ्यते तथा निवृत्तिधर्माणामपि साधनसामग्रीं विना निरायासेन सुखं लभ्यते इत्यस्मिन्नर्थे दुःखवत् इति दृष्टान्तो वा। स्वर्गादौ भ्रमतां यत्सुखं न लभ्यते, विवेकी तस्यैव हेतोः प्रयतेत। एवशब्दव्यावर्त्यमाह — तदिति। अन्यतः विषयभोगात् यत् दुःखोपेतं सुखं गभीररंहसा कालेन सर्वत्र लभ्यते। तस्मात् तादृशसुखार्थं न यतनीयं, किन्तु तद्व्यतिरिक्तस्य नित्यस्य केवलस्य स्वरूपसुखस्य इति वा॥ १८॥

इतोऽपि निवृत्तिधर्म एव श्रेयान् इत्याह — **न वा** इति। **अङ्ग**! हे भगवान्! **मुकुन्दसेवी जनः अन्यवत्** मुकुन्दासेवमानवत् जातु कदाचिदपि कथञ्चन कस्माच्चित् निमित्तात् **संसृतिं न व्रजेत्**। वैशब्देन "न हि कल्याणकृत्कश्चित् दुर्गतिं तात! गच्छति" (भ. गी. 6-40) इति वाक्यं प्रमाणयति कुत इति तत्राह — स्मरन्निति। **मुकुन्दस्य** मनसा **चरणारविन्दालिङ्गनसुखं स्मरन्** अनुभवन् **रसज्ञः जनः पुनः विहातुं** नेच्छेत् इत्यन्वयः॥ १९॥

मुकुन्दरूपमाह — **इदं** इति। **स भगवान् इदं विश्वमिव न तु विश्वं** किन्तु **इतरः** विलक्षणलक्षणः कुतः **जगत्स्थाननिरोधसम्भवाः** इति यतः जगत् स्थापयति निरोधयति संहरति सम्भावयति उत्पादयतीति तथोक्तः। **जगत्स्रष्टृत्वादिलक्षणलक्षितसार्वज्ञ्यसर्वस्वातन्त्र्य सर्वशक्तिसर्वस्वामित्वादिगुणपूर्णत्वादसर्वसत्वादिगुणविशिष्टात्[2] जगतः** भेदः अनुभवसिद्ध इति हिशब्दः। किञ्च **भगवान् स्वयं** तद्वैलक्षण्यं **वेद** जानाति। हि **यस्मात्**[3] ऐक्यकथनं प्रमाणविरुद्धमिति **भावः**। यद्यपि **भवतः** सर्वं सिद्धं न मया वक्तव्यांशः अस्ति, तथापि उपाध्यायपुरः बालवत् अव्याकृताकाशसदृशज्ञानवतः भवतः केवलप्रादेशाकाशपरिमितं **ज्ञानं प्रदर्शितं** मया इति शेष इत्यन्वयः॥ २०॥

---

1. B,K,M °को 2. K जगद्विलक्षण° 3 K,M यस्मात्तस्मादैक्य°

**रा० कृ०** स्वधर्मं स्ववर्णाश्रमादिप्राप्तं धर्मं त्यक्त्वा हरेः चरणाम्बुजं भजन् अथ अपक्वः भगवत्प्राप्तियोग्योऽपि तमलभमानः एव ततः तद्भजनात् यदि पतेत् रोगादिना म्रियेत चेत्, अथवा विषयान्तरासक्त्या कथञ्चित् भ्रश्येत् चेत् अस्य भगवद्भक्तिशीलस्य यत्र क्व वा यत्र कुत्रापि वा किमभद्रं अभूत्? न किमपीत्यर्थः। उक्तं च भगवता — "न हि कल्याणकृत्कश्चित् दुर्गतिं तात! गच्छति"। (भ. गी. 6-40) "पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः" (भ. गी. 6-44) इति। अभजतां अभजद्भिः इति यावत् स्वधर्मतः को वा अर्थः आप्तः न कोऽपीत्यर्थः।

यद्यपि स्वधर्माचरणं ईश्वरभक्तिश्च परस्परं न विरुध्यतः, तथापि तयोः भक्तिरेव गरीयसी। भक्तियुक्तस्य कर्माचरणं ईश्वराराधनतया परिणमते; तदयुक्तस्य तु बन्धकारणमेव॥ १७॥

उपरि ब्रह्मलोकपर्यन्तं अधः स्थावरपर्यन्तं भ्रमतां, भ्रमद्भिः इति यावत्। यत् न लभ्यते तस्यैव भगवदनुभवजन्यपरमानन्दस्यैव हेतोः कोविदः विवेकी प्रयतेत प्रयत्नं कुर्यात्। तत्सुखं विषयसुखं तु दुःखवत्। अन्यतः प्राकृतकर्मवशात् सर्वत्र पश्वादियोनावपि गभीररंहसा अलक्षितवेगेन कालेन लभ्यते॥ १८॥

अङ्ग! हे व्यास! मुकुन्दसेवी जनः अन्यवत् अन्यजन इव केवलकर्मनिष्ठ इव जातु कदाचित् कथञ्चन केनापि प्रकारेण संसृतिं नाव्रजेत् नाविशेत्। मुकुन्दाङ्घ्र्युपगूहनं विष्णुपादालिङ्गनं पुनः स्मरन् रसग्रहः रसनीये भगवति आग्रहवान् जनः विहातुं तदालिङ्गनं त्यक्तुं नेच्छेत्।

"न लभ्यते यद्भ्रमतां उपर्यधः" (भाग. 1-5-18) इत्यत्र प्रज्ञामयलोकास्सूचिताः। मानवप्रज्ञायाः उपरि सप्तप्रज्ञास्सन्ति। मानवप्रज्ञा देहस्य अन्तः बहिश्च वर्तते। ऊर्ध्वलोकेषु सप्तमः ब्रह्मलोकः इति कथ्यते। एवं मानवप्रज्ञायाः अधश्च सप्तप्रज्ञामयलोकाः वर्तन्ते। तेषु सप्तमं पातालं इत्युच्यते। एतच्चतुर्दशलोकवर्तिनः जीवाः अस्मत्सहचरा एव। मानुषमनसः अधस्तनलोकेषु जान्तवप्रज्ञा, ततोऽप्यधः वृक्षादीनां प्रज्ञाः सन्ति। वृक्षखनिजादयः स्थावरा इति, जन्तुनरादयः जङ्गमा इति च कथ्यन्ते।

मानवमनसः उपरि अन्तरिक्षप्रज्ञा, तदुपरि पञ्चभूतमहदादीनां प्रज्ञाः तत्तत्प्रज्ञाचारिणः जीवाश्च विद्यन्ते। त एव देवगन्धर्वकिन्नरकिम्पुरुषसिद्धसाध्यादयः ये तावत् द्रव्यलोकधर्मप्रवर्तकाः। तैरेव द्रव्याणां वर्णगन्धादयः जायन्ते। मानवमनस्तु ऊर्ध्वाधोलोकानां द्वारायते। तस्मादेव मानवलोकस्य मध्यमलोक इति संज्ञा। मानवप्रज्ञा च कामक्रोधाद्यभ्यासवशात् अधोलोकेषु तपोब्रह्मचर्याद्यभ्यासबलेन ऊर्ध्वलोकेषु च वर्तते। सर्वेष्वेतेषु लोकेषु कार्यकारणसम्बन्धप्रयुक्तकर्मफलानुभवः अनिवार्यः येषु अन्तर्यामित्वेन ईश्वरः वर्तते। यस्मिन् कस्मिन्नपि लोके वर्तमानाः जनाः यदि भगवदर्पितमनस्काः तर्हि तेषां प्रज्ञा ब्रह्मलोकं अतीत्य वर्तते। अतीते च तल्लोके कार्यकारणसम्बन्धः तत्प्रयुक्तकर्मफलानुभवश्च नैव भवतः। ब्रह्मलोकातिक्रमपर्यन्तं साधकप्रज्ञा प्रमादवशात् पतयालुः वर्तते। अनन्तरं प्रज्ञायाः भगवन्मयत्वावस्थानेन न पुनरावृत्तिः। तदुक्तं भगवता — "आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन! मामुपेत्य तु कौन्तेय! पुनर्जन्म न विद्यते" (भ. गी. 8-16) इति।

ननु भुवादिलोकत्रयमुक्तं इतः प्रागेव। केयं इदानीं चतुर्दशलोकोक्तिः? उच्यते — उभयविधविभागेऽपि न कापि विप्रतिपत्तिः। तथाहि — पाटलकुसुमवर्णरुचिगन्धादिकं एकस्मिन् ग्रन्थे वर्ण्यते, अन्यस्मिन् तत्कुसुमस्य रसायनविभागादयः कथ्यन्ते, परस्मिन् तस्य विकासनविधानानि निरूप्यन्ते, अपरस्मिन् तस्य औषधगुणाः प्रकाश्यन्ते। तथाऽपि एतत्सर्वग्रन्थगताः विषयाः न केवलं परस्पराविरुद्धाः किन्तु तत्कुसुमविज्ञानसर्वस्वप्रतिपादकाः। एवं सृष्टिरहस्यप्रकाशनाय प्राचीनैः कृताः पूर्वोक्तलोकविभागादयोऽपि अन्योन्यं न विरुध्यन्ते।

यदुक्तं — "मुकुन्दसेवी जनः अन्यवत् संसृतिं न गच्छेत्", इति तत्रापि किञ्चिदुच्यते। सर्वत्र हरिभावनया तत्सेवाभ्यसनशील एव मुकुन्दसेवी। सः जननादिकं उपेत्यापि प्राकृत इव न बध्यते संसारेण। जन्मादिकञ्च देहादेरेव, न तु नित्यस्य आत्मनः। उक्तं च भगवता — "अन्तवन्त इमे देहा नित्यस्योक्ताश्शरीरिणः" (भ. गी. 2-18)। अपि च मुकुन्दसेविनः देहादीनामपि ईश्वरमयत्वात् न जननमरणरूपसंसृतिबन्धः। जातस्य तु तस्य शरीरादेरपि हरिभक्तिसाधनत्वात् जननमपि महते प्रयोजनाय कल्पते। तच्च जननं तात्कालिकमेव। उक्तं च भगवता — "मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम्। नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः" (भ. गी. 8-15) इति। न खलु हरिचरणभजनपरवशः हरिमयजीवनः जनः तदन्यस्थितिं प्राप्नोति॥ १९॥

इदं च विश्वं भगवानिव भगवानेव। इवेत्येवार्थे। स भगवांस्तु इतरः, अस्मात् विश्वस्मात् इतरः। यतः भगवतः जगत्स्थाननिरोधसम्भवाः जगतः स्थितिलयसम्भवाः भवन्ति स भगवान् इति पूर्वेणान्वयः। तद्धि स्वयं भवान् वेद जानाति, तथाऽपि प्रादेशमात्रं दिङ्मात्रं मे मया भवतः तव दर्शितं सूचितम्॥ २०॥

**त्वमात्मनाऽऽत्मानमवेह्यमोघदृक् परस्य पुंसः परमात्मनः कलाम्।**
**अजं प्रजातं जगतः शिवाय तन्महानुभावाभ्युदयोऽधि[1]गणयताम्॥ २१॥**

**इदं हि पुंसः तपसः श्रुतस्य वा[2] स्विष्टस्य सू[3]क्तस्य च[4] बुद्धिदत्तयोः।**
**अविच्यु[5]तोऽर्थः कविभिर्निरूपितः यदु[6]त्तमश्लोकगुणानुव[7]र्णनम्॥ २२॥**

**अहं पुरातीतभवेऽभवं मु[8]ने दास्यास्तु कस्याश्चन वेदवादिनाम्।**
**निरूपितो बालक एव योगिनां शुश्रूषणे प्रावृषि निर्विवि[9]क्षताम्॥ २३॥**

**ते मय्यपेताखिलचापलेऽर्भके दान्ते[10]ऽधृतक्रीडनकेऽनुवर्तिनि।**
**चक्रुः कृपां यद्यपि तुल्यदर्शनाः शुश्रूषमाणे मुनयोऽल्पभाषिणि॥ २४॥**

---

1. K,M °नु° 2. H omits वा 3. B,H,V,W पूर्तस्य 4. K,M,W च बुद्ध°; H,V सुसूक्त° 5. K,M °प्लु° 6. B ठ° 7. AF °कीर्त°
8. H,V सुतो 9. H,V °व° 10. H,N,V °न्ते धृत°; K,M °न्ते यत°

**श्रीध०** न च तवाचार्यापेक्षा[1] ईश्वरावतारत्वात् इत्याह — **त्वम्** इति। हे अमोघदृक्! त्वं आत्मना स्वयमात्मानं अजमेव सन्तं[2] जगतः शिवाय प्रजातमवेहि। कुतः ? परस्य पुंसः कलां अंशभूतम्। तत् तस्मात् महानुभावस्य हरेः अभ्युदयः पराक्रमः अधि अधिकं गण्यतां निरूप्यताम् ॥ २१ ॥

अनेनैव तपआदिसर्वं तव सफलं स्यात् इत्याह — **इदं हि** इति। श्रुतादयः भावे निष्ठा। इदमेव हि तपश्श्रवणादेः अविच्युतः नित्यः अर्थः फलम्। किं तत्? उत्तमश्लोकस्य गुणानुवर्णनमिति यत् ॥ २२ ॥

सत्सङ्गतः हरिकथाश्रवणादिफलं स्ववृत्तान्तेन प्रपञ्चयति — **अहम्** इति। अहं पुरा पूर्वकल्पे अतीतभवे पूर्वजन्मनि वेदवादिनां दास्याः सकाशात् अभवं जातोऽस्मि। निरूपितः नियुक्तः। क्व? योगिनां[3] शुश्रूषणे। प्रावृषि वर्षोपलक्षिते चातुर्मास्ये निर्विवक्षतां निर्वेशं एकत्र वासं कर्तुमिच्छताम् ॥ २३ ॥

**त** इति। अपेतानि गतानि अखिलानि चापलानि यस्मात् तस्मिन्। दान्ते नियतेन्द्रिये। अधृतक्रीडनके त्यक्तक्रीडासाधने। अनुवर्तिनि अनुकूले ॥ २४ ॥

---

1. B,H,V add अपि  2. H,V सन्ततं  3 H,V add सन्यासिनां

**वीर०** नाहं जानामि इति माऽवोचः इति वक्तुं त्वं आत्मानं भगवदंशसञ्जातं जानीहि इत्याह — **त्वम्** इति। अमोघदृक् अमोघं सत्यं सर्वं यथावत् पश्यतीति अमोघदृक् त्वम्। परस्य पुंसः परमपुरुषस्य कलाम् अंशम्[1] अजं कर्मायत्तोत्पत्तिरहितं अथापि जगतः शिवाय हिताय स्वेच्छया जातं आत्मानं आत्मना स्वयमेव अवेहि। कलाशब्दस्य नित्यस्त्रीत्वात् स्त्रीपुंसयोरपि विशेषणविशेष्यभाव उपपन्नः। यतः अमोघदृक् भगवदंशसम्भूतः[2] तस्मादे-[3] वम्भूतेन त्वया महानुभावस्य भगवतः अभ्युदयः जन्मकर्मगुणादीनामप्युपलक्षणमिदं जन्मकर्मगुणादिः अधिगण्यताम्; कथ्यतां, प्रबध्यतामिति यावत्। एवं चेत् कृतकृत्यस्य तव आत्मनि असन्तोषः निश्शेषं निवर्तत इति भावः ॥ २१ ॥

ननु महानुभावाभ्युदयाधिगणनमात्रेण कथं कृतकृत्यत्वं, कथन्तरां असन्तोषनिवृत्तिश्च इत्यत आह — **इदं** इति। उत्तमश्लोकस्य गुणानुवर्णनं इति यत् तदिदमेव कृतार्थीभवितुं इच्छतः पुंसः सम्बन्धिनां तपआदीनां अविच्युतः च्यवनरहितः प्रतिहतिरहितोऽर्थः। प्रयोजनं कविभिः निरतिशयप्रयोजनयाथात्म्यविद्भिः निरूपितः। अत्र तपः अनशनादि, मन्त्रजपो वा, श्रुतं अध्ययनं, स्विष्टं यागादि, पूर्तं वापीकूपतटाकखननादि, बुद्धिः ज्ञानं, दत्तं दानं। भारतादेः अतिविस्तृतत्वात् तत्र सारग्रहणं जलधिमथनात् सुधाग्रहणकल्पं अविचक्षणैः दुष्करम्। तस्मात् मुमुक्षूणां अतीव सेव्यं सारं अर्थजातं सङ्कल्य्य दर्शय। एतावत् कर्तव्यं इत्युक्तं भवति। उत्तमश्लोकगुणानुवर्णनश्रवणस्याप्युपलक्षणं तपआदीन् अनुतिष्ठतः पुंसः यद्युत्तमश्लोकगुणानुवर्णनश्रवणयोः रुचिः जायते तदैव तेषां साफल्यम्। अन्यथा तु तपआदीनां वैयर्थ्यमिव इत्युक्तम् ॥ २२ ॥

ननु भगवद्गुणवर्णनादेरपि [7]तपआदिवत् क्रियारूपस्य न स्वतः पुरुषार्थरूपत्वं इति कथं तस्य अविच्युतार्थत्वं इति शङ्कायां स्वतः प्रयोजनरूपत्वाभावेऽपि भगवद्भक्तियोगरुचि जननद्वारा तन्निष्पादनद्वारा च निश्श्रेयससाधनत्वात् अविच्युतार्थत्वं अस्त्येव इति वक्तुं तत्र दृष्टान्ततया स्वस्य पौर्वदैहिकं वृत्तान्तमाह — **अहं** इत्यादिना यावदध्यायसमाप्ति। हे मुने! पुरा पूर्वस्मिन् कल्पे अतीतभवे जन्मनि अहं कस्याश्चित् वेदवादिनां दास्या अभवं पुत्र आसम् इत्यर्थः। वेदवादिनां गृहेषु प्रावृषि वर्षर्तौ निर्विविक्षतां नितरां वेष्टुं प्रवेष्टुं इच्छतां चातुर्मास्यदीक्षां प्रवेष्टुं इच्छतां योगिनां सन्न्यासिनां शुश्रूषणे निमित्ते शुश्रूषणार्थं बालक एव सन् अहं वेदवादिभिः निरूपितः नियोजितोऽस्मि इत्यर्थः ॥ २३ ॥

ततः किं अत आह — **ते मयि** इति। यद्यपि ते योगिनः तुल्यदर्शनाः समदर्शिनः, तथापि मयि कृपां चक्रुः। कृपाकरणे हेतुं वदन् आत्मानं विशिनष्टि। अर्भके बाले, अथापि अपेतं त्यक्तं अखिलं चापलं [8]जैह्म्यादिकं येन। अधृतक्रीडनके इति च्छेदः। अधृतानि अपरिगृहीतानि क्रीडनकानि बालक्रीडासाधनानि भावे वा ल्युट्। क्रीडा वा येन अनुवर्तिनि अनुकूले शुश्रूषमाणे तदनुशासनशुश्रूषापूर्वकसेवां कुर्वति अल्पभाषिणि मितभाषिणि ॥ २४ ॥

---

1. W °अंशजमपि 2. W adds च तत् 3. W °देव एतेन 4 W बुद्धं 5. W सङ्कलय्य 6. W °येत 7. A तपआदि तत्तत्क्रियारूपत्वं न स्वतः पुरुषाराधनत्वादविच्युतार्थत्वमस्येति चेत् तत्प्रतिवक्तं तत्र 8 W जैह्मया°

**विज°** तद्धि स्वयं वेद इत्युक्तं विविच्य विज्ञापयति — **त्वम्** इति। हे अमोघदृक्! त्वं अजं आत्मानं परमात्मनः परस्य पुंसः कलां जगतः शिवाय प्रजातं आत्मना अवेहीत्यन्वयः। आदानादिकर्तुः परमपुरुषस्य अंशं अवतीर्णं स्वत एव परोपदेशमन्तरेण जानासि। अत्र लोट् लडर्थे। अन्यथा अमोघदृक्त्वमेव अनुपपन्नं स्यात्। तद्धि स्वयं वेद इति च विरुद्धं स्यात्। तन्महानुभावाभ्युदयः तस्य तव महासामर्थ्यलक्षणचरितोदयः त्रिलोकहिताय गण्यतां प्राधान्येन सङ्ख्याय कथ्यताम्। तेन जगतः शिवं भवतीत्यभिप्रायः ॥ २१ ॥

भगवन्महिमाऽभ्युदयवर्णनात् कथं जगतः शिवं स्यात् इति तत्राह — **इदम्** इति। यदुत्तमश्लोकस्य हरेः गुणानुवर्णनम्, इदं हि पुंसः तपआदे अपरोक्षज्ञानद्वारा मोक्षसाधनत्वात् कविभिः अविनष्टफलात्मकः अर्थः निरूपितः। हिशब्दः अवधारणे, हेतौ वा। तपः कायक्लेशलक्षणम्। श्रुतं शास्त्रश्रवणम्। स्विष्टं उत्तमकल्पतया यजनम्। सूक्तं अध्ययनम्। बुद्धं ज्ञातम्। दत्तं दानम्। एवं हरिमहिमानुवर्णनेन सर्वस्य शिवसम्भवात्, तदेव त्वया कर्तव्यमिति भावः ॥ २२ ॥

इदानीं हरिकथाश्रवणादि शिवकरमिति वक्तुं स्वातीतजन्मकथनपूर्वकं स्वस्य भागवतसङ्गतिप्रकारमाह — **अहम्** इति। पुराशब्दस्य अतीतकालसामान्यवाचित्वेन निश्चयानुदयात् तदर्थं अतीतेत्युक्तं अनन्तरातीतजन्मनि इत्यर्थः। तुशब्दः इतरदासीजातिवैशिष्ट्यद्योतनार्थः। योगिनां सन्नयासिनाम्। कप्रत्ययः प्रशंसायाम्, लौल्यादिदोषरहितः बालः। प्रावृषि वर्षाकाले निर्विविक्षतां एकत्र स्थितिमिच्छताम् ॥ २३ ॥

शिष्यगुणेन तेषां प्रवृत्तिमाह — **त इति**। निरस्तसमस्तचञ्चलस्वभावे जिह्वादीन्द्रियनिग्रहवति अत एव निरस्तबालक्रीडासाधने अनुकूलवर्तिनि परिचरति अत्यल्पबालविग्रहधारिणि मयि ते योगिनः अनुग्रहलक्षणां कृपां चक्रुः इत्यन्वयः। किंविशिष्टाः ? तुल्यदर्शनाः, यद्यपि तुल्यं गुणक्रियारूपैः समं ब्रह्म पश्यन्तः यथास्थितवस्तुदर्शिनो वा, तथापीति शेषः ॥ २४ ॥

---

1. K ज्ञानं

**रा॰ कृ॰** हे अमोघदृक्! हे अमोघदर्शन! व्यास! त्वं आत्मना स्वयं आत्मानं स्वं अजं जन्मरहितमपि जगतः शिवाय प्रजातं परस्य पुंसः परमपुरुषस्य परमात्मनः कलां अंशभूतं अवेहि जानीहि। तत् तस्मात् महानुभावाभ्युदयः महानुभावस्य हरेः अभ्युदयः पराक्रमः अधिगण्यतां अधिकं निरूप्यताम् ॥ २१ ॥

उत्तमश्लोकगुणानुवर्णनं उत्तमश्लोकस्य अज्ञाननिवर्तकयशसः भगवतः गुणानां अनुवर्णनं यद्वर्तते तदिदमेव पुंसः सम्बन्धिन इति शेषः। तपसः श्रुतस्य शास्त्रश्रवणस्य स्विष्टस्य अग्निष्टोमादेः यागस्य, पूर्तस्य तटाकादेः, सूक्तदत्तयोः अध्ययनदानयोः वा। "सूक्तस्य च बुद्धिदत्तयोः" इति पाठे बुद्धिः नाम ज्ञानम्। अविच्युतः अविनाशः नित्य इति यावत्। अर्थः प्रयोजनमिति कविभिः याथार्थ्यवेदिभिः विद्वद्भिः निरूपितः। हि इति निश्चये ॥ २२ ॥

हे मुने! अहं पुरा पूर्वकल्पे अतीतभवे पूर्वजन्मनि वेदवादिनां ब्राह्मणानां दास्याः कस्याश्चन स्त्रियः अभवं जातोऽस्मि। तदा प्रवृषि प्रावृट्कालोपलक्षिते चातुर्मास्ये निर्विविक्षतां एकत्र निर्वेशं निवासं कर्तुं इच्छतां योगिनां शुश्रूषणे बालक एव निरूपितः नियोजितः।

स्वयं वेदं पठन्तः बहून् पाठयन्तः वेदपुरुषं स्मरन्तः स्मारयन्तश्च सन्तः भगवद्भक्तिसाधनदीक्षिताः वेदवादिनः इत्युच्यन्ते। तेषामेव 'ब्रह्मवादिसंज्ञा'। एतद्वेदवादिसम्प्रदायः नितरां प्राचीनः। "एते ब्रह्मवादिनो वदन्ति" इति श्रुतिः ॥ २३ ॥

यद्यपि तुल्यदर्शनाः ते मुनयः अपेताखिलचापले दान्ते नियतेन्द्रिये अघृतक्रीडनके अनुवर्तिनि शुश्रूषमाणे अल्पभाषिणि अर्भके मयि कृपां चक्रुः ॥ २४ ॥

**उच्छिष्टलेपान्[1]नुमोदितो द्विजैः सकृत् स्म[2] भुञ्जे तदपास्तकिल्बिषः ।**
**एवं प्रवृत्तस्य विशुद्धचेतसः तद्धर्म एवात्म[3]रुचिः प्रजायते ॥ २५ ॥**

**तत्रान्वहं कृष्णकथा[4]ः प्रगायतामनुग्रहेणाशृण्वं मनोहराः ।**
**ताश्श्रद्धया मेऽनुप[5]दं विशृण्वतः प्रियश्रवस्यङ्ग! मं[6]माभवद्रु[7]चिः ॥ २६ ॥**

तस्मिंस्तदा लब्धरुचेर्महा[8]मुने प्रियश्रवस्यस्खलिता मतिर्मम ।
यथाह[9]मेतत्सदसत्स्वमायया पश्ये मयि ब्रह्मणि कल्पितं परे ॥ २७ ॥

इत्थं शरत्प्रावृषिकावृतू हरेः विशृण्वतो मेऽनुसवं यशोऽमलम् ।
सङ्कीर्त्यमानं मुनिभिर्महात्मभिः भक्तिः प्रवृत्ताऽऽत्मरजस्तमोपहा ॥ २८ ॥

1 K,M °द्य° 2. K,M °च्च 3. B,K,M °भि° 4. H °थां 5. H,K,M,V,W °सवं 6. K,M तदा° 7. B,H,V,W °द्रतिः; K,M °न्मतिः 8 H,I,V °मते 9. H,V ममै°

**श्रीध॰ उच्छिष्टेति**। उच्छिष्टस्य लेपान् [1]पात्रलग्नान् तैः द्विजैः अनुज्ञातः सन्[2] भुङ्क्ते स्म। तेन भोजनेन अपास्तकिल्बिषः जातोऽस्मि। तेषां धर्मे परमेश्वरभजने एव आत्मनः मनसः रुचिः प्रजायते स्म इत्यनुषङ्गः॥ २५॥

**तत्रेति**। अशृणवं श्रुतवानस्मि। मे श्रद्धया ममैव स्वतस्सिद्धया न त्वन्येन बलात् जनितया। अतः ममेत्यस्य अपौनरुक्त्यम्। अनुपदं प्रतिपदम्। प्रियं श्रवः यशः यस्य तस्मिन्॥ २६॥

**तस्मिन्** इति। प्रियं श्रवः यस्य तस्मिन् भगवति लब्धरुचेः मम अस्खलिता अप्रतिहता मतिः अभवत् इत्यनुषङ्गः। यया मत्या परे प्रपञ्चातीते ब्रह्मरूपे मयि सदासत् स्थूलं सूक्ष्मञ्चैतच्छरीरं स्वमायया स्वाविद्यया कल्पितं, न तु वस्तुतोऽस्तीति [3]तत्क्षणमेव पश्ये पश्यामि॥ २७॥

एवं शुद्धे त्वम्पदार्थे ज्ञाते देहादिकृतविक्षेपनिवृत्तेः तत्कारणभूतरजस्तमोनिवर्तिका दृढा भक्तिः जाता इत्याह — **इत्थं** इति। हरेः यशः अनुसवं त्रिकालम्॥ २८॥

1. B.भिक्षापात्र° 2. H,V add भुङ्क्ष्व इत्यनुशिष्टस्सन् 3. H,V एतत्क्ष°

**वीर॰** कृपाफलं वदन् आत्मानं विशिनष्टि — **उच्छिष्टेति**। द्विजैः योगिभिः अनुमोदितः तैः दत्तान् उच्छिष्टलेपान् भुक्तावशिष्टान् अन्नादीन् सकृत् भुङ्क्ते स्म भुक्तवान् अस्मि। तेन भोजनेन अपास्तानि किल्बिषाणि भागवत-धर्मरुचिप्रतिबन्धकानि यस्य तथाभूत आसम्। एवं भागवतशुश्रूषणे प्रवृत्तस्य अत एव विशुद्धं भागवतधर्मरुचिप्रतिब[1]न्धरहितं चेतः यस्य तस्य मम तद्धर्मे एव आत्मनि अन्तःकरणे रुचिः प्रजायते प्राजायत॥ २५॥

तत्र आत्मरुचौ जातायां सत्यां अन्वहं अनुदिनं कृष्णस्य भगवतः कथाः प्रगायतां कथयताम् योगिनां अनुग्रहेण मनोहरा[2] मनोज्ञाः[3] कथाः अशृणवं श्रुतवान् अस्मि। ताः कृष्णकथाः अनुसवं त्रिकालं श्रद्धया विशृण्वतः मम अङ्ग! हे व्यास! प्रियं श्रोतॄणां प्रीत्यावहं श्रवः कीर्तिः यस्य तस्मिन् भगवति रतिः अनुरागः अभवत् बभूव॥ २६॥

तदा तस्मिन् प्रियश्रवसि बद्धा[4] रुचिः येन तस्य मम हे महामते[5]! प्रियश्रवसि मतिः अस्खलिगा स्थिरा बभूव। अस्खलितां मतिं विशिनष्टि — यया मत्या परे ब्रह्मणि परब्रह्मधार्ये मयि वर्तमानं एतत् सदसत्कार्यकारणात्मकं जगत् स्वमायया स्वसम्बन्धिन्या प्रकृत्या कल्पितं निष्पादितं न तु स्वतः इत्यर्थः। पश्ये दृष्टवानस्मि। "तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता, एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिता प्रज्ञामात्रा प्राणेऽर्पिताः" (कौषी. उ. 3-9) "जीवभूतां महाबाहो ययेदं धार्यते जगत्" (भार. 6-29-5) इत्युक्तप्रकारेण प्रकृति श्चेतनधार्या, चेतनः परमात्मधार्यः इति देहात्मभेदं आत्मपरमात्मसम्बन्धश्च ज्ञातवान् अस्मि इत्यर्थः ॥ २७ ॥

इत्थं शरत्प्रावृषिकौ शरत्प्रावृषौ ऋतू अनुसवं अमलं महात्मभिः मुनिभिः सङ्कीर्त्यमानं हरेः यशः विशृण्वतः मम आत्मनि ये रजस्तमसी तयोरपहन्त्री[6] भक्तिः प्रवृत्ता बभूव ॥ २८ ॥

---

1. W °बन्धक° 2 W adds अति 3 W adds कृष्ण° 4. W लब्धा 5. W °मुने 6. W °रपहा

**विज°** किं तच्छुश्रूषाकर्मेति तत्राह — **उच्छिष्टेति**। ब्रह्मकुलोद्भवानामेव चतुर्थाश्रम इति प्रकाशनाय द्विजैरिति कथितम्। उच्छिष्टपात्रोद्धरणं[1] गोमयोदकेन मार्जनं वा तत्स्थले। लेपनं तत्रानुज्ञातः न हि शूद्रस्य तदनुज्ञानाभावे उच्छिष्टस्पर्शनं सुतरां तद्भक्षणं वा शक्यम्, लिप्यन्ते उपलिप्यन्ते[2] सिध्यन्ते प्राणा एतैः इति लेपाः ओदनाः तद्भुक्तोच्छिष्टानां ओदनानां अदनं प्रति अभ्यनुज्ञात इति वा। अनेन स्वशरीरयात्रानिर्वाहमाह, तदनुवर्तित्वं स्पष्टमाह — सकृदिति। चशब्दः एवार्थे। यतयः सकृदेव भुञ्जते तथा अहमपि सकृदेव भुञ्जे। तत्फलमाह — तदिति। तेन कर्मणा सकृद्भोजनेन अपास्तं निरस्तं किल्बिषं पापं यस्य स तथा। ततः किमभूत् इति तत्राह — एवमिति। एवं उक्तप्रकारेण प्रवर्तमानस्य विशेषेण शुद्धान्तःकरणस्य तेषां परमहंसानां धर्मे विषयवैराग्यलक्षणे भगवत्कथाश्रवणाद्यभ्यासलक्षणे वा अभिरुचिः उत्कण्ठा प्रजायते इत्यन्वयः। सन्ततानुवृत्तिसूचनाय लट्प्रयोगः ॥ २५ ॥

अभिरुच्या किं जातमिति तत्राह — **तत्र** इति। तत्र तत्सकाशे मनोहरा कृष्णकथा अनुदिनं प्रातस्सवनादनन्तरं प्रगायतां कीर्तयतां परमहंसानां अनुज्ञालक्षणानुग्रहेण अशृणवं इत्यन्वयः। अङ्ग! श्रीवेदव्यास! तदा श्रद्धया अनुसवं त्रिसन्ध्यमपि ताः कथाः विशृण्वतः मे मतिः ध्यानलक्षणोपासना प्रियश्रवसि परममङ्गलकीर्तौ हरौ अभवदित्यन्वयः ॥ २६ ॥

अखण्डस्मरणोपासनाफलामाह — **तस्मिन्** इति। रागाद्यवद्यैरनुपहतत्वादस्खलिता निरन्तरं स्थिरतया अखण्डोपासनं अभवत् इत्यन्वयः। अहं यया। अखण्डोपासनया एतत्सदसत्कार्यकारणात्मकं जगत् मयि स्थिते बिम्बभूते ब्रह्मणि पूर्णे हरौ तत्सृष्टं तत्पालितं तत्संहृतं च इति पश्ये। कथम्भूतं? स्वमायया स्वेच्छया मदनुग्रहाभिमुख्या यत्र स्थीयतां इति कल्पितं सङ्कल्पितं इत्यन्वयः। ब्रह्मणि अध्यस्तं जगत् पश्य इत्यङ्गीकारे मिथ्याज्ञानित्वं प्रसज्जते, न हि शुक्त्यध्यस्तरजतं पश्यन् यथार्थज्ञानी भवति। किन्तु नेदं रजतं शुक्तिरेवेति पश्यंस्तथा नेदं जगत् किन्तु ब्रह्मैवेति; न चात्र तथेत्यलमतिप्रसङ्गेन ॥ २७ ॥

भक्त्युपासनयोः अन्योन्यनिमित्तकभावः अस्ति इत्यभिप्रेत्याह — **इत्थं** इति। इत्थं उक्तप्रकारेण मुनिभिः [3] सम्यक् कीर्त्यमानं अमलं हरेः यशः अनुसवनं शरत्प्रावृषिकावृतू **विशेषेण शृण्वतः** मम हरौ तदितरविरागवती आत्मनः मनसः रजोगुणतमोगुणनिमित्तरागाद्यन्यथाज्ञानादिदोषहरा महत्त्वज्ञानलक्षणा भक्तिः प्रवृत्ता अभूत् इत्यन्वयः ॥ २८ ॥

---

1 K adds तद्लक्षणं च 2 B,K,M °दिश्यन्ते 3 K,M add सर्वज्ञैः योगिभिः

**रा० कृ०** द्विजैः अनुमोदितः भुङ्क्ष्व इति अनुज्ञातः सन् उच्छिष्टलेपान् तद्भुक्तावशिष्टस्य पात्रलग्नान् अन्नादीन् सकृत् एकवारं भुञ्जे स्म भुक्तवान् अस्मि। तत् तस्मात् अपास्तकिल्बषः निरस्तभागवतधर्मरतिप्रतिबन्धकपापः अभवं इति शेषः।

एवं प्रवृत्तस्य नित्यं तत्परिचर्यापूर्वकं तदुच्छिष्टभोजनादिरतस्य विशुद्धचेतसः निर्मलान्तःकरणस्य मम इति शेषः। तद्धर्मे एव तेषां महात्मनां परमेश्वरभजनरूपे धर्म एव आत्मरुचिः मनोरतिः प्रजायते स्म इति शेषः ॥ २५ ॥

अङ्ग! व्यास! तत्र तद्देशे अन्वहं प्रतिदिनं कृष्णकथाः प्रगायतां प्रकर्षेण गायतां तेषां मुनीनां अनुग्रहेण मनोहराः ताः कृष्णकथाः अशृणवम्। अनुपदं मे श्रद्धया विशृण्वतः मम प्रियश्रवसि भगवति रतिः अभवत् ॥ २६ ॥

हे महामते! व्यास! तदा तस्मिन् प्रियश्रवसि भगवति लब्धरुचेः मम अस्खलिता अप्रतिहता मतिः अभवत् इति शेषः। यया मत्या परे प्रपञ्चातीते ब्रह्मणि ब्रह्मस्वरूपे मयि सत् स्थूलं असत् सूक्ष्मं च एतच्छरीरं स्वमायया कल्पितं न तु वस्तुतः मयि अस्तीति पश्ये पश्यामि जानामि ॥ २७ ॥

इत्थं शरत्प्रावृषिकौ ऋतू वर्षाशरदृतू अनुसवं त्रिकालं महात्मभिः मुनिभिः सङ्कीर्त्यमानं अमलं हरेः यशः विशृण्वतः मे आत्मरजस्तमोऽपहा भक्तिः प्रवृत्ता उत्पन्ना।

अत्र प्रपञ्चातीतत्वं नाम न प्रपञ्चपरित्यागः; किन्तु विश्वस्मिन् विष्णुदर्शनमेव। ब्रह्मत्वं च विश्वस्मिन् नैरन्तर्येण ब्रह्मभावनया सिध्यति। "नाहं स्थूलसूक्ष्ममयं शरीरमाश्रितवान् किन्तु तदेव मामाश्रित्य वर्तते, तच्च मायाकल्पितम्" इति नारदः ज्ञातवान्।

नन्वेतत् सर्वमपि महाभारतयुद्धानन्तरं कलियुगप्रारम्भात् प्राक् श्रीकृष्णावतारसमाप्तिसमये नारदेन व्यासाय कथितं हि! तर्हि पूर्वकल्पप्रवृत्तां स्वकथां कथयता तेनैव नारदेन "मुनयः श्रीकृष्णकथासङ्कीर्तनं अकुर्वन्" इति कथं उक्तम्? अत्रोच्यते — प्रतिवत्सरं ऋतुधर्माः यथा पुनः पुनः आवर्तन्ते। तथा भगवतः मुख्यावताराः प्रतिकल्पं पुनः आवर्तन्ते। इयं च युगानां पुनःपुनः आवृत्तिः सूतेन शौनकादिभ्यः भारतकथाप्रस्तावनायां उक्तैव। तस्मात् नारदपूर्वजन्मकथोपवर्णितः श्रीकृष्णावतारः पूर्वकल्पप्रवृत्त इति अनुमीयते ॥ २८ ॥

**तस्यैवं मेऽनुरक्तस्य प्रश्रितस्य हतैनसः ।**
**श्रद्दधानस्य बालस्य दान्तस्यानुचरस्य च ॥ २९ ॥**

**ज्ञानं गुह्यतमं यत्तत् साक्षाद्भगवतोदितम् ।**
**अन्ववोचन् गमिष्यन्तः कृपया दीनवत्सलाः ॥ ३० ॥**

**येनैवाहं भगवतो वासुदेवस्य वेधसः ।**
**मायानुभावमविदं येन गच्छन्ति तत्पदम् ॥ ३१ ॥**

**एतत्संसूचितं ब्रह्मंस्तापत्रयचिकित्सितम् ।**
**यदीश्वरे भगवति कर्म ब्रह्मणि भावितम् ॥ ३२ ॥**

**श्रीध॰ तस्येति ।** तस्य ज्ञातशुद्धत्वम्पदार्थस्य दृढभक्तिमतः मे प्रश्रितस्य विनीतस्य ॥ २९ ॥

**ज्ञानमिति ।** गुह्यतममिति साधनभूतधर्मतत्त्वज्ञानं गुह्यं तत्साध्यं[1] विविक्तात्मज्ञानं गुह्यतरं तत्प्राप्येश्वर[2]ज्ञानं गुह्यतमम् । भगवतोदितं भागवतं शास्त्रं अन्ववोचन् उपदिष्टवन्तः ॥ ३० ॥

तदेव ज्ञानं पूर्वोक्तत्वम्पदार्थज्ञानात् विवेकेन दर्शयति — **येनैव** इति। अविदं ज्ञातवानहम् ॥ ३१ ॥

तत्साधनधर्मरहस्यं च सूचितमित्याह — **एतत्** इति। तापत्रयस्य आध्यात्मिकादेः चिकित्सितं भेषजं निवर्तकं[3] तत्त्व[4]शोधकमिति यावत् । किं तत्? भगवति भावितं समर्पितं यत्कर्म तत् । कथम्भूते भगवति? ईश्वरे सर्वनियन्तरि। एवमपि च ब्रह्मणि अप्रच्युतपूर्णरूपे ॥ ३२ ॥

1. H,V add देहद्वय° 2. H,V add ° तत्त्व 3 B तन्निव° 4. B,H,V स°

**वीर॰** तस्य प्रवृत्तभक्तेः अनुरक्तस्य बालस्यापि प्रश्रितस्य विनीतस्य हतं एनः पापं यस्य श्रद्धायुक्तस्य दान्तस्य जितेन्द्रियस्य अनुचरस्य अनुवर्तिनः मे मह्यम् ॥ २९ ॥

यद्भगवता साक्षात् उदितं ज्ञानं तद्गमिष्यन्तः गन्तुं उद्यताः दीनवत्सलाः योगिनः कृपया अन्ववोचन् उपदिदिशुः इत्यर्थः ॥ ३० ॥

ज्ञानं विशिनष्टि — येन ज्ञानेनाहं भगवतः वेधसः विश्वविधातुः वासुदेवस्य मायानुभावं त्रिगुणात्मकप्रकृतिमहिमानं अविदं ज्ञातवान् अस्मि अनेन विरोधिस्वरूपज्ञानं उक्तम् । येन च ज्ञानेन तस्य वासुदेवस्य पदं स्थानं गच्छन्ति। अनेन प्राप्यप्रापकविषयज्ञानं उक्तम् । अर्थपञ्चकज्ञानं उपदिदिशुः इति फलितम् ॥ ३१ ॥

तदेवं स्वपूर्वजन्मवृत्तान्तदृष्टान्तेन **भगवद्गुणश्रवणादेः तद्भक्तियोगसाधनत्वं उक्तम्। भक्तियोगस्य शश्वद्ब्रह्मगर्भ-त्वं पूर्वमेव** प्रतिपादितम्। धर्मकृतेऽनुशासतः **स्वभावरक्तस्य** इत्यनेन **त्रैवर्गिककर्ममूलकतापत्रयाभिहतजनोद्देशेन** पुनः **त्रैवर्गिकधर्मानुशासनं** तापत्रयनिमित्तधर्मार्थत्वेन निन्दितं इत्युक्तम्। तेन **ईश्वरे** न **चार्पितं कर्म** इत्यनेन च अनभिसंहितफलस्य कर्मणः **भक्तियोगनिष्पादनद्वारा** तापत्रयनिवृत्तिहेतुत्वं वदन् **त्रैवर्गिकस्य कर्मणः** पुनः पुनः तापत्रयहेतुत्वमेव सदृष्टान्तं उपपादयति — **एतदिति** त्रिभिः। हे ब्रह्मन्! तापत्रयचिकित्सितं तापानां[1] आध्यात्मिकाधि-भौतिकाधिदैविकानां दुःखानां त्रयं तापत्रयं तच्चिकित्सितं प्रतिकृतं भवति येन तापत्रयचिकित्सितं तापत्रयप्रतीकारं[2] इत्यर्थः। तदेतदेव संसूचितं श्रुतिस्मृत्यादिभिः इति शेषः। किं यत् **ब्रह्मणि** ईश्वरे भगवति भावितं समर्पितं[3] कर्मैव तापत्रयचिकित्सितं इति सूचितं इत्यर्थः। "धर्मेण पापं अपनुदति" (म. ना. उ. 17-6) **"अविद्यया मृत्युं तीर्त्वा"** (ईशा. उ. 11) इत्यादिका **श्रुतिः,** स्मृतिश्च "यज्ञो दानं तपः कर्म पावनानि मनीषिणां" (भ. गी. 18-5) इत्यादि-का। तापत्रयं हि पापमूलकं **अनभिसंहितफलेन**[4] कर्मणा पापनिवृत्ति भक्तियोगनिष्पत्तिद्वारा तापत्रयं निवर्तत इति श्रुति स्मृतिभिः सूच्यते॥ ३२॥

---

1 A,B omit तापानां ............ तापत्रयचिकित्सितं 2 W प्रतिकारकं 3 B,W add कर्मेति ईश्वरार्पितं 4 W adds धर्मेण पापे निवृत्ते भक्तियोग°

**विज°** ननु सद्गुरूपदेशमन्तरेण केवलं यशश्श्रवणेनैव कथं ज्ञानोदयः इति चेत्तत्राह — **तस्य** इति॥ २९॥

ज्ञायते[1] अनेनेति ज्ञानं **शास्त्रम्**। भगवतोदितं भगवत्सम्प्रदायात् आगतं अन्ववोचन् समग्रानुग्रहपूर्वकं उपदिष्टवन्तः। गमिष्यन्तः चातुर्मास्यानन्तरम्॥ ३०॥

**तदुपदिष्टशास्त्रेण**[2] किं त्वया लब्धं इति अत आह — **येनैवेति**। वेधसः **सर्वजगत्कर्तुः** मायानुभावं इच्छासामर्थ्यम्॥ ३१॥

एतत् मया उक्तं ज्ञानं तापत्रयात्मकसंसारनिवर्तकौषधं समीचीनं सूचितं **लोकस्य** इति शेषः। तस्मात् एतादृशं ज्ञानमेव आपाद्यं इति भावः। तर्हि **कर्मकरणं** व्यर्थमिति तत्राह — यदिति। यायजूकैः क्रियमाणं अग्निष्टोमादि तदपि यदि ब्रह्मणि अपरिच्छिन्नगुणे **ईश्वरे** ईशादपि परे हरौ भावितं अर्पितं **तर्हि ज्ञानं उत्पद्यते।** तेन तापत्रयचिकित्सितं एतदुक्तं भवति — ब्रह्मार्पणबुद्ध्या क्रियमाणेन कर्मणा शुद्धान्तःकरणस्य विषयविरक्तिद्वारा **भगवति तीव्रया भक्त्या** जनितापरोक्षज्ञानेन तापत्रयात्मकः संसारः निवर्तत इति यत् **ब्रह्मणि भावितं यत्कर्म तदेतत्तापत्रयचिकित्सितं संसूचितमिति** एकान्वयो वा॥ ३२॥

---

1. A,B,M omit ज्ञायते ......... मुपदिष्टवन्तः 2. A,B,M omit तदुपदिष्ट ......... सामर्थ्यम्॥ ३१॥

**रा० कृ०** एवं अनुरक्तस्य मुनिसेवासक्तस्य प्रश्रितस्य विनीतस्य हतैनसः पापरहितस्य श्रद्दधानस्य **श्रद्धायुतस्य** बालस्य दान्तस्य जितेन्द्रियस्य अनुचरस्य स्वसेवकस्य तस्य मे गमिष्यन्तः **चातुर्मास्यसमाप्त्यनन्तरं** गन्तुं उद्यताः दीनवत्सलाः मुनय इति शेषः। कृपया साक्षात् भगवता यदुदितं ब्रह्मादीन् प्रयुक्तं तत् गुह्यतमं ज्ञानं **ईश्वरतत्त्वज्ञानं** अन्ववोचन् उपादिशन्॥ २९, ३०॥

येनैव पूर्वोक्तज्ञानेन वेधसः सर्वस्रष्टुः भगवतः वासुदेवस्य मायाऽनुभावं लीलाप्रभावं अविदं ज्ञातवान् अस्मि येन ज्ञानेन वासुदेवमायानुभावज्ञानेन तत्पदं भगवतः स्थानं गच्छन्ति भागवता इति शेषः। तन्मुनयः मह्यं अवोचन् इति पूर्वेणान्वयः॥ ३१॥

हे ब्रह्मन् यत्कर्म भगवति ब्रह्मणि ईश्वरे भावितं समर्पितं वर्तते इति शेषः। तदेतत् कर्म तापत्रयचिकित्सितं तापत्रयस्य आध्यात्मिकादेः भेषजं निवर्तकम् इति यावत् संसूचितं ज्ञापितं इत्यर्थः॥ ३२॥

**आमयो यश्च[1] भूतानां जायते येन सुव्रत।**
**तदेव ह्यामयं[2] द्रव्यं न[3] पुनाति चिकित्सितम्॥ ३३॥**
**एवं नृणां क्रियायोगाः सर्वे[4] संसृतिहेतवः।**
**त एवात्मविनाशाय कल्पन्ते कल्पिताः परे॥ ३४॥**
**यदत्र क्रियते कर्म भगवत्परितोषणम्।**
**ज्ञानं यत्तदधीनं हि भक्तियोगसमन्वितम्॥ ३५॥**
**कुर्वाणा यत्र कर्माणि भगवच्छिक्षयाऽसकृत्।**
**गृणन्ति गुणनामानि कृष्णस्यानुस्मरन्ति च॥ ३६॥**

---

1 K,M श्यं च  2 K,M °य°  3 K,M तत्  4 V परे

**श्रीध०** ननु संसारहेतोः कर्मणः कथं तापत्रयनिवर्तकत्वम्? सामग्रीभेदेन घटत **इति सदृष्टान्तमाह** द्वाभ्यां — **आमय** इति। यश्च आमयः रोगः येन घृतादिना जायते तदेव केवलं आमयकारणभूतं द्रव्यं तं **आमयं** न पुनाति न निवर्तयतीत्यर्थः। किन्तु चिकित्सितं द्रव्यान्तरैः भावितं सत् पुनात्येव यथा॥ ३३॥

**एवमिति।** तथाऽऽत्मविनाशाय कर्मनिवृत्तये कल्पन्ते समर्था भवन्ति, परे ईश्वरे कल्पिता अर्पिताः सन्तः। अत्र च प्रथमं महत्सेवा ततश्च तत्कृपा तत तद्धर्मश्रद्धा ततः भगवत्कथाश्रवणं ततः भगवति रतिः तया च देहद्वयविवेकात्म[2]ज्ञानं ततः दृढा भक्तिः ततः भगवत्तत्त्व[3]ज्ञानं ततः तत्कृपया **सर्वज्ञत्वादिभगवद्गुणाविर्भाव इति क्रमः** दर्शितः॥ ३४॥

ननु च ज्ञानेन अज्ञानप्राप्तकर्मनाशः तच्च ज्ञानं भक्तियोगात् भवति। कथं कर्मणा कर्मनाशः स्यात् तत्राह — **यदत्र** इति॥ ३५॥

भगवदर्पणेन क्रियमाणं कर्म भक्तियोगं जनयतीति[4] सदाचारेण दर्शयति — **कुर्वाणा** इति। यत्र यदा भगवतः शिक्षया कर्माणि कुर्वाणा भवन्ति तदा श्रीकृष्णस्य गुणनामानि गृणन्ति अनुस्मरन्ति च कृष्णं इत्यर्थः। इयञ्च भगवच्छिक्षा "यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्। यत्तपस्यसि कौन्तेय! तत्कुरुष्व मदर्पणम्" (भ. गी. 9-27) इति॥ ३६॥

1 H समर्पि° 2 H,V °विविक्ता° 3 H,V विज्ञानं 4 H,V add तच्च

**वीर०** त्रैवर्गिककर्मणः तापत्रयहेतुत्वं वक्तुं तावत् दृष्टान्तमाह — **आमय** इति। यद्यपि उदाहृतश्रुतिस्मृतिवचोभिः पापस्यैव तापत्रयमूलत्वं सूचितं, तथापि त्रैवर्गिककर्मणः[1] अन्ततोऽनिष्टावहत्वेन पापवत् अनिष्टसाधनत्वात् तदपि तापत्रयनिमित्तमेव। हे सुव्रत! यथा येन अपथ्यान्नादिना भूतानां यः आमयः रोगः जायते, तदामयकारणं द्रव्यं चिकित्सितमपि प्रतीकारत्वेन सेवितमपि आमयं न पुनाति न शोधयति। चिकित्सितोऽपि व्याधिः अपथ्यादिना पुनः वर्धत इत्यर्थः। चिकित्सितं इति आमयविशेषणं वा। आमयकारणेन चिकित्सितं प्रतिकृतं अपि आमयं व्याधिं तदामयकारणं द्रव्यं न पुनातीत्यर्थः॥ ३३॥

दृष्टान्तेन अभिमतं अर्थं दार्ष्टान्तिके[2]ऽनुगमयति — **एवम्** इति। एवं अपथ्यान्नादेः आमयकारणवत्[3] नृणां सर्वे क्रियायोगा अनभिसंहितफलकर्मव्यतिरिक्ताः सर्वे त्रैवर्गिकाः क्रियायोगाः संसृतेर्हेतवः [4]अत एव परस्मिन् आत्मनि अकल्पिताः असमर्पिताः आत्मविनाशाय कल्पन्ते। आत्मनः अन्ततः स्थावरत्वरूपविनाशाय कल्पन्ते सम्पन्ना भवन्ति॥ ३४॥

तर्हि परस्मिन् कल्पिताः क्रियायोगाः किं वा साक्षात् निःश्रेयसहेतवः न भक्तियोगनिष्पादनद्वारा इत्याह — **यत्** इति। भगवान् परितुष्यते भक्तियोगोत्पत्तिप्रतिबन्धकनिरसनोपयुक्तपरितोषयुक्तो भवति, येन तदाराधनरूपेण कर्मणा तद्भगवत्परितोषणं यत् कर्म अत्र लोके क्रियते। अनुक्रियत इति पाठे अनुस्यूततयाऽऽशरीरपातं क्रियते। तदधीनं यत्कर्माधीनं तन्निष्पाद्यमेव भक्तियोगसमन्वितं ज्ञानम्। अत्र ध्यानसाध्यं दर्शनात्मकं विवक्षितं, "भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन! ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप॥" (भ. गी. 11-54) इत्युक्तत्वात्॥ ३५॥

न केवलं भगवत्परितोषणात्मकं कर्मैव भक्तियोगानुग्राहकं, अपि तु भगवद्गुणश्रवणादिकमपि इत्याह — **कुर्वाणा** इति। भगवच्छिक्षया "यत्करोषि यदश्नासि यज्जुहोषि" (भ. गी. 9-27), "मयि सर्वाणि कर्माणि सन्न्यस्य" (भ. गी. 3-30) इत्याद्युक्तभगवच्छिक्षया असकृत् कर्माणि वर्णाश्रमानुरूपणि कुर्वाणाः कृष्णस्य भगवतः गुणान् नामानि च कल्याणगुणप्रकाशकानि[5] वा गा[6]यन्ति अनुस्मरन्ति च। नामानि गृणन्ति गुणान् अनुस्मरन्ति च

इत्यर्थः। भक्तियोगनिष्पत्तिकामा इति कर्तृपदं अध्याहर्तव्यम्। **यथा भगवच्छिक्षया** असकृत् कृतानि कर्माणि भक्तियोगानुग्राहकाणि तथा गुणानामानुस्मरणादिकमपि इति भावः॥ ३६॥

1. A,B °र्णि° 2. W °केनानु° 3. W °त्वा° 4. W तत 5. B,W add नामानि 6. W गृणन्ति

**विज॰** ननु कर्मणां बन्धस्वभावात् कथं तापत्रयभैषज्यमिति तत्राह — **आमय** इति। सुखमेव व्रतं येन सः तथा तस्य सम्बुद्धिः, हे सुव्रत! सत्यसङ्कल्पादिव्रतोपेत! इति वा। येन द्रव्येण भूतानां आमयं आमयः श्लेष्माद्यः जायते तदेव आमयकारणं द्रव्यं चिकित्सितं औषधीकृतं तद्रोगलक्षणं पुनाति परिहरति हि। तदिदं अनुभवसिद्धं इति हिशब्दार्थः। एवकारस्तु तस्य प्राधान्यद्योतनार्थः न तु द्रव्यान्तरनिषेधार्थः, कुतः? औषधीकरणाय द्रव्यान्तरसंयोगदर्शनात्। नशब्दः उपमार्थः, स यथा॥ ३३॥

एवं तथा नृणां संसारिणां क्रियालक्षणा योगा उपायाः स्वतः संसारहेतवः त एव क्रियायोगाः परे पूर्णे ब्रह्मणि कल्पिताः आत्मविनाशाय अर्पिताः। अनेकजन्मसञ्चितदुष्कर्मस्वरूपनाशाय कल्पन्ते। तस्मात् केवलं कर्मबन्धकं ब्रह्मार्पणेन ओषधीकृतं भक्तिज्ञानद्वारा संसाराख्यरोगनिवर्तकम् इति भावः॥ ३४॥

ज्ञानद्वारा कर्मणः मोचकत्वं आह — **यत्** इति। अत्र कर्मभूमौ भगवदर्पणेन भगवत्परितोषणं यत्कर्म जीवैः क्रियते यद्भक्तियोगसमन्वितं परोक्षापरोक्षोपपदं ज्ञानं, तज्ज्ञानं तस्य कर्मणः अधीनं हि, "कर्मणा ज्ञानमातनोति ज्ञानेनामृतीभवति अथामृतानि कर्माणि" इति श्रुतेः कर्मणा ज्ञानं जायते हि यस्मात् तस्मात् कर्म ज्ञानद्वारा बन्धनिवर्तकमिति भावः। अत्र अग्निष्टोमादिकर्मसु यत्कर्म भगवत्परितोषणं इति वा॥ ३५॥

कथङ्कारं कर्मणा ज्ञान उत्पद्यत इति तत्राह — **कुर्वाणा** इति। यत्र यस्य यजमानस्यार्थे यस्मिन् यज्ञे हवनादीनि कर्माणि कुर्वाणा वैदिका ऋत्विगादयः "स्मर्तव्यः सततं विष्णुः विस्मर्तव्यो न जातुचित्" भगवच्छिक्षया असकृत् निरन्तरं आदिमध्यावसानेषु वा कृष्णस्य गुणान् स्मरन्ति नामानि गृणन्ति॥ ३६॥

**रा॰ कृ॰** हे सुव्रत! यः आमयः रोगः येन घृतादिना भूतानां प्राणिनां जायते तदेव द्रव्यं रोगकारणभूतं द्रव्यं चिकित्सितं द्रव्यान्तरैः प्रतिकृतमपि तं आमयं न पुनाति न निवर्तयतीत्यर्थः। एवं सर्वे क्रियायोगाः फलेच्छया कृताः यज्ञादयः संसृतिहेतवः संसारस्यैव कारणभूता भवन्तीति शेषः। त एव क्रियायोगाः परे ब्रह्मणि कल्पिताः समर्पिताः चेत् आत्मविनाशाय कर्मविनाशाय कल्पन्ते समर्था भवन्ति॥ ३३, ३४॥

भगवत्परितोषणं यत् कर्म अत्र क्रियते भक्तियोगसमन्वितं यत् ज्ञानं विद्यते तज्ज्ञानं इति शेषः। तदधीनं हि भगवत्परितोषककर्माधीनं हि। भक्तियोगसहितं ज्ञानं भगवत्प्रीतिजनककर्मायत्तमिति भावः॥ ३५॥

यत्र यदा भगवच्छिक्षया असकृत् कर्माणि कुर्वाणा ये तावत् वर्तन्ते इति शेषः। ते कृष्णस्य गुणनामानि गृणन्ति उच्चारयन्ति अनुस्मरन्ति च पश्चात् स्मरन्ति च ॥ ३६ ॥

**[1]नमो भगवते तुभ्यं वासुदेवाय धीमहि।**
**प्रद्युम्नायानिरुद्धाय नमस्सङ्कर्षणाय च ॥ ३७ ॥**

**इति मूर्त्यभिधानेन मन्त्रमूर्तिममूर्तिकम्।**
**यजते यज्ञपुरुषं स सम्यग्दर्शनः पुमान् ॥ ३८ ॥**

**इमं स्वनि[2]गमं ब्रह्मन्नवेत्य मदनुष्ठितम्।**
**अदान्मे ज्ञानमैश्वर्यं स्वस्मिन् भावं च केशवः ॥ ३९ ॥**

**त्वमप्यदभ्रश्रुत! विश्रुतं विभोः समाप्यते येन विदां बुभुत्सितम्।**
**[3]आख्याहि दुःखैर्मुहुरर्दितात्मनां [4]संक्लेशनिर्वाणमुशन्ति नान्यथा ॥ ४० ॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
प्रथमस्कन्धे व्यासनारदसंवादे पञ्चमोऽध्यायः ॥ ५ ॥

1 B,I,K,M,W add ओं 2 K,M °धर्मनियममवे° 3. B,H,K,M,N,V,W प्र°; I प्रा° 4. N यत्°

**श्रीध॰** कीर्तनस्मरणरू[1]पभक्तिहेतुत्वं उक्तम्। ज्ञानहेतुत्वमाह द्वाभ्यां — [2] **नम** इति। नमः धीमहि मनसा नमनं कुर्वीमहि ॥ ३७ ॥

**इति** इति। [3] अमूर्तिकं मन्त्रोक्तव्यतिरिक्तमूर्तिशून्यम्। यजते पूजयति स पुमान् सम्यग्दर्शनः भवति ॥ ३८ ॥

एवं कृतवति मयि हरिः स्वसदृशं ज्ञानादिकं दत्तवान् इत्याह — **इमं** इति। इमं स्वनिगमं स्वोपदेशं मदनुष्ठितं मया अनुष्ठितं अवेत्य ज्ञात्वा। भावं च प्रीतिं च ॥ ३९ ॥

अतः त्वमपि एवं कुरु इत्याह — **त्वम्** इति। अदभ्रं अनल्पं श्रुतं यस्य हे अदभ्रश्रुत! विभोः विश्रुतं यशः प्रख्याहि कथय। येन विश्रुतेन बुद्धेन विदां विदुषां बुभुत्सितं बोद्धुं इच्छा समाप्यते[4]। यत् यतः दुःखैः पीडिता[5]नां [6]क्लेशशान्तिं प्रकारान्तरेण न मन्यन्ते ॥ ४० ॥

इति श्रीमद्भागवते प्रथमस्कन्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां पञ्चमोऽध्यायः ॥ ५ ॥

1 H,V °रूपयोः 2 B adds ओं 3. H,V add अमुना मन्त्रेण 4. H,V add सम्यक् प्राप्यते 5. B °तात्मनां 6. B संक्लेश°

**वीर०** गुणनामस्मरणादिपूर्वकं अनभिसंहितफलकर्मानुष्ठानप्रकारमेव दर्शयन् तथा कुर्वाण एव उत्तमाधिकारी इत्याह — **ओं** इति द्वाभ्याम्। ओं ब्रह्मणः "ओं तत्सदिति निर्देशः ब्रह्मणः त्रिविधः स्मृतः" (भार. 6-39-23) इति भगवदुक्तेः वासुदेवादिव्यूहचतुष्टयरूपेण अवस्थिताय भगवते नमो नमः इति नामोच्चारणप्रकारदर्शनं धीमहि, ओमादिशब्दप्रकाशितकल्याणगुणविशिष्टं परमात्मानं ध्यायेम स्मरेम इति गुणस्मरणप्रकार प्रदर्शनं, तत्र अवतेर्धातोः निष्पन्नेन ओं इत्यनेन सर्वरक्षकत्वं अकारोकारमकाराणां संहितावशात् निष्पन्नेन ओं इत्येनेन तु सर्वकारणत्वसर्वशेषित्वादिकं — उभयविधेन ओं इत्यनेन प्रत्यभिज्ञापितब्रह्मशब्देन स्वरूपतः गुणतः च कल्याणगुणानन्त्यं अबृहतामपि बृहत्वावहत्वं च — वासुदेवपदेन सर्वाधारत्वं सर्वान्तरात्मत्वं च प्रद्युम्नशब्देन "न तत्र सूर्यो भाति" (कठ. उ. 5-15) इत्युक्तविधनिरतिशयदीप्तियुक्तत्वं, अनिरुद्धपदेन सर्वव्यापकत्वं, सङ्कर्षणपदेन अतीन्द्रियार्थविषयकज्ञानापादकत्वं च फलितम्। उपलक्षणमिदं एतत्प्रभृतयः गुणा अनुसन्धेया इत्यर्थः। सङ्कर्षणशब्दनिरुक्तिः पञ्चमे वक्ष्यते ॥ ३७ ॥

इति इत्थं अमूर्तिकं कर्मवश्यप्राकृतमूर्तिरहितं मन्त्रमूर्तिं ओमित्याद्युक्तमन्त्रप्रकाश्या मूर्तिः अप्राकृता अकर्ममूला स्वेच्छोपात्ता च यस्य तं मन्त्रशरीरकं वा अभिध्यायन् ओमादिनामानि अनुगृणंश्च यज्ञाराध्यं परमपुरुषं यो यजते स्वधर्मेणाराधयति[1] स एव पुमान् सम्यग्दर्शनः "ज्ञानीत्वात्मैव मे मतः" (भ. गी. 7-10) इत्युक्तविधः अधिकारी इत्यर्थः ॥ ३८ ॥

एवं यजतां आशु भक्तियोगः निष्पद्यते इत्यभिप्रायेण आत्मानं दृष्टान्तयति — **इमम्** इति। हे ब्रह्मन्! मदनुष्ठितं इमं स्वस्य भगवतः निगमं अनुशासनं अवेत्य दृष्ट्वा केशवः स्वस्मिन् भावं भक्तिं तत्साध्यं दर्शनात्मकं ज्ञानं ऐश्वर्यञ्च देवर्षित्वोचितं अदात् ददौ इत्यर्थः ॥ ३९ ॥

उत्तरमुपसंहरति — **त्वम्** इति। हे अदभ्रश्रुत! अनल्पकीर्ते! त्वं विभोः भगवतः विश्रुतं यशः प्रख्याहि प्रबध्नीहि। येन विश्रुतप्रख्यानेन विदां बोद्धॄणां बुभुत्सितं बोद्धुं इष्टं समाप्यते आपूर्यते न निरवशिष्यत इति यावत्। पृच्छतस्य तस्य जिज्ञासितव्यं नावशिष्यते तथाविधं आख्यानं कुरु इत्यर्थः। किञ्च दुःखैः त्रिभिः तापैः मुहुः मुहुः अर्दितः पीडितः आत्मा मनो येषां [2] [3] क्लेशनिर्वाणं क्लेशा आध्यात्मिकादयः ते निर्वाप्यन्ते अपनोद्यन्ते येन — अन्यथा उपायान्तरेण तु न निर्वाप्यन्ते। तथाविधं यथाशान्ति अतीवाद्रियन्ते, तादृशं प्रख्याहि इत्यन्वयः ॥ ४० ॥

इति श्रीमद्भागवते, प्रथमस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां पञ्चमोऽध्यायः ॥ ५ ॥

---

1. W °धर्मेरा° 2. B,W add तेषां 3. W यत् क्लेश°

**विज०** यो यजमानः स्वयं च नित्यं ओं नमो भगवते इत्यादिमूर्त्यभिधानेन मूर्तिवाचकेन मन्त्रेण मन्त्रप्रतिपाद्यं अमूर्तिकं प्रकृतिवैकृतिविग्रहविधुरं वासुदेवादिरूपं यज्ञपुरुषं "चत्वारि शृङ्गा त्रयो अस्य पादा" (ऋ. सं. 4-58-3) इत्यादि ऋक्प्रतिपाद्याकारं भगवन्तं उद्दिश्य यजते स पुमान् यजमानः परोक्षापरोक्षज्ञानवान् भवति। ते च ऋत्विगादयः सम्यग्दर्शनाः समीचीनशास्त्र[1]विज्ञानाः सर्वज्ञाश्च सम्यक् भगवन्तं दर्शयन्ति ज्ञापयन्तीति सम्यग्दर्शनाः। सर्वेषां हरिपरायणत्वात् ओं सर्वगुणपूर्णसर्वजनरञ्जक इति वा, ओमित्येवंरूपभगवते षड्गुणपूर्णाय तुभ्यं नमः। सर्वत्र वसति, दीव्यतीति वासुदेवः, बलज्ञानरूपत्वात्, दैत्यनिरसनशीलत्वात् क्रीडाशीलत्वाद्वा। तस्मै धीमहि स्मरेम। प्रकृष्टं द्युम्नं हिरण्यमेव रूपं यस्य सः प्रद्युम्नः "हिरण्यश्मश्रुर्हिरण्यकेशः आप्रणखात् सर्व एव सुवर्णः" (छान्दो. उ. 1-6-6) इति श्रुतेः, तस्मै। न केनापि निरुद्ध इति अनिरुद्धः। अनः मुख्यप्राणः सोऽस्यास्तीति अनी तेन अनिना मुख्यप्राणप्रसादवता पुरुषेण रुद्धः वशीकृत इति वा, अनिरुधः संसारमुक्ताः तान् दधाति धारयति पोषयतीति वा, अनिरस्तं उदाख्यं नाम धत्त इति वा। "तस्योदिति नाम" (छान्दो. उ. 1-6-7) इति श्रुतेः, तस्मै। सम्यक् पापकर्षणशीलत्वात् सङ्कर्षणः। समीचीनं करं सनोति ददातीति वा तस्मै। चशब्दः प्रत्येकं पृथङ्नत्वद्योतनार्थः। इतिशब्दः प्रभृतिवचनः तस्मादृत्विगादिभिः वैष्णवैः यजमाना भगवन्तं ईजाना ज्ञामवन्तः भवन्तीति भावः॥ ३७, ३८॥

स्वानुभवसिद्धमेतदिति विज्ञापयति — **इमम्** इति। केशवः मदनुष्ठितं इमं स्वधर्मनियमं अवेत्य ऐश्वर्यं ईश्वरविषयं ज्ञानं स्वस्मिन् भावं भक्तिञ्च मे मह्यं अदात् इत्यन्वयः॥ ३९॥

इदानीं अवतारप्रयोजनालम्बुद्धिकारणविज्ञापनं उपसंहरति — **त्वम्** इति। हे अदभ्रश्रुत! "श्रोता मन्ता" इत्यादेः सम्पूर्णश्रोतृत्वादिगुणसम्पन्नः त्वं ईश्वरोऽपि ऐश्वर्यादि गुणसम्पन्नत्वेन आप्तव्यार्थविधुरोऽपि सज्जनवात्सल्यादेव येन तत्कीर्तिगर्भग्रन्थकरणेन, विदुषां विदन्तीति विदः ज्ञानलाभकामाः तेषां वा विचारकाणां वा बुभुत्सितं ज्ञातुं इष्टं समाप्यते सम्पूर्णं भवति तादृशं श्रीभागवतलक्षणं विभोः समर्थस्य तव विश्रुतं यशः प्रख्याहि प्रख्यापय इत्यन्वयः। तस्मात् अन्येषां भागवतकरणशक्त्यभावात् तत्कृतिरेव अलम्बुद्धिकारणमिति भावः॥ ४०॥

इति श्रीमद्भावगवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
प्रथमस्कन्धे पञ्चमोऽध्यायः॥ ५॥

---

1. K,M शास्त्रीय ज्ञा°

**रा० कृ०** तुभ्यं भगवते निरतिशयैश्वर्यादिमते नमः धीमहि मनसा नमस्कुर्वीमहि। एवं वासुदेवाय प्रद्युम्नाय अनिरुद्धाय सङ्कर्षणाय च तुभ्यं नमः धीमहि। इत्येवंप्रकारेण मूर्त्यभिधानेन मूर्तिवाचकं अन्तरेण यः जनः मन्त्रमूर्तिं मन्त्रमयाकृतिं अमूर्तिकं प्राकृताकृतिरहितं यज्ञपुरुषं यजते स पुमान् सम्यग्दर्शनः सम्यग्ज्ञानवान् भवतीति शेषः॥ ३७, ३८॥

हे ब्रह्मन्! व्यास! इमं पूर्वोक्तं स्वनिगमं स्वोपदेशं मदनुष्ठितं अवेत्य ज्ञात्वा केशवः मे मह्यं ज्ञानं तत्त्वज्ञानं ऐश्वर्यं अणिमाद्यैश्वर्यं भावं च स्वस्मिन् भक्तिं च अदात् दत्तवान्॥ ३९ ॥

हे अदभ्रश्रुत! अनल्पज्ञानयुत! व्यास! येन ज्ञातेन विश्रुतेन विदां विदुषां बभुत्सितं बोद्धुं इच्छा समाप्यते सम्यक् आप्यते। तद्विभोः विश्रुतं यशः त्वमपि प्रख्याहि कथय। कुत इति चेत् दुःखैः आध्यात्मिकादिभिः त्रिभिः अर्दितात्मनां पीडितानां जनानां इति शेषः। सङ्क्लेशनिर्वाणं क्लेशोपशमं अन्यथा प्रकारान्तरेण न उशन्ति विज्ञाः न मन्यन्ते ॥ ४० ॥

इति श्रीमद्भागवते प्रथमस्कन्धे
श्रीराधाकृष्णप्रणीतायां सुधीसुधायां व्याख्यायां
पञ्चमोऽध्यायः ॥ ५ ॥



# षष्ठोऽध्याय:

## सूत उवाच

एवं निशम्य भगवान् देवर्षेर्जन्म कर्म च ।
भूयः पप्रच्छ तं ब्रह्मन् व्यासः सत्यवतीसुतः ॥ १ ॥

## व्यास उवाच

भिक्षुभिर्विप्रवसिते विज्ञानादेष्टृभिस्तव ।
वर्तमानो वयस्याद्ये ततः किमकरोद्भवान् ॥ २ ॥

स्वायम्भुव! कया वृत्त्या वर्तितं ते परं वयः ।
कथं [1]चेदमुदस्राक्षीः काले प्राप्ते कलेबरम् ॥ ३ ॥

प्राक्कल्पविषयामेतां स्मृतिं ते [2]सुरसत्तम!
न ह्ये[3]षं व्यव[4]धात् काल एष सर्वनिराकृतिः ॥ ४ ॥

1 K M वे° 2 I.W मुनि° 3 H.K.M V °व 4 H V °दा°

## श्रीधरस्वामिविरचिता भावार्थदीपिका

व्यासस्य प्रत्ययार्थञ्च षष्ठे प्राग्जन्मसम्भवम् ।
स्वभाग्यं नारदः प्राह [1]कृष्णसंकीर्तनोद्भवम् ॥

स्वयमपि तथा चिकीर्षुः गुरूपदेशानन्तरभावि तच्चरितं पृच्छति **भिक्षुभि** रिति [2]त्रिभिः। **विप्रवसिते** दूरदेशगमने कृते सति **विज्ञानस्याऽऽदेष्टृभिः** [3]ब्रह्मतत्त्वोपदेशं [4]कृतवद्भिः ॥ १, २ ॥

**स्वायम्भुवेति।** परं वय उत्तरमायुः ते त्वया कथं वर्तितं नीतम्। इदमिति दासीपुत्रभूतं कलेवरम्[5] उदस्राक्षीः उत्सृष्टवानसि ॥ ३ ॥

**प्रागिति।** एष कल्पान्तरलक्षणः कालः ते स्मृतिं कथं न [6]व्यवदात् न खण्डितवान्। **अडागमाभाव-स्त्वार्षः।** हि, यत एष [7]कालः सर्वस्य निराकृतिः [8]अपलापो यस्मात् सः ॥ ४ ॥

1 A °कथनो° 2 A.H.V omit त्रिभिः 3 A.B उपदेशकर्तृभिः 4 A.B omit कृतवद्भिः 5 B adds कथं 6 A,B °धा° 7 A,H,V omit कालः 8 H V प्रलोपो

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

"अन्ववोचन् गमिष्यन्तः कृपया दीनवत्सलाः" (भाग. 1-5-30) इत्युक्तम्। तत उपरितनं देवर्षिवृत्तान्त जिज्ञासुः पृच्छति व्यासः इत्याह सूतः **एव** मिति। इत्थं वर्णितं देवर्षेः जन्म कर्म च पौर्वदैहिकं निशम्य स सत्यवत्याः सुतो भगवान् श्रीव्यासः तं देवर्षिं हे ब्रह्मन्! शौनक! भूयः पुनः पप्रच्छ॥ १॥

प्रश्नमेवाऽऽह — **भिक्षुभि** रिति। ते तव विज्ञानादेष्टृभिः विज्ञानोपदेष्टृभिः भिक्षुभिः सन्न्यासिभिः विप्रवसिते चातुर्मास्यान्ते अन्यत्र गते सति ततः पश्चात् भवानाद्ये वयसि वर्तमानः किं कृतवान्?॥ २॥

हे! स्वायम्भुव! ते त्वया परं वयः भिक्षुविप्रवासप्रभृतिवयः कया वृत्त्या वर्तितं नीतम्? कथं वा प्राप्ते काले इदं कलेबरमुदस्राक्षीः उत्सृष्टवानसि? प्राक्कल्पीयमपि[2] कलेबरं वृत्तान्तकथनमुखेन प्रस्तुतत्वात् इदमिति सन्निहिततया परामृश्यते॥ ३॥

हे मुनिसत्तम! प्राक्कल्पविषयां पूर्वकल्पीयामेतां भिक्षूपदेशप्राप्तां भगवत्स्मृतिं एष कालो न व्यवधात् न तिरोहितवान्। अडभाव आर्षः। आगमशास्त्रस्यानित्यत्वाद्वा। न व्यवधात् किमिति प्रश्नो विवक्षितः। व्यवधायकत्वसूचनाय कालं विशिनष्टि। एष कालः सर्वनिराकृतिः सर्वविनाशकः॥ ४॥

---

1 A °प्तका° 2 A,B °क्कालीय°

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

इदं व्यासनारदसंवादोपाख्यानं सूतः शौनकादिभ्योऽब्रवीदिति विज्ञापयितुमाह — **एव** मिति। हे ब्रह्मन्! सत्यवतीसुतो व्यासो देवर्षेर्जन्म कर्म च एवं श्रुत्वा पुनरपि तं नारदं पप्रच्छेत्येकान्वयः॥ १॥

नारदस्नेहपाशात् तद्यशःख्यापनाय च सर्वज्ञोऽपि व्यासः तद्वयश्शेषवृत्तिं पृच्छति — **भिक्षुभि** रिति। तव विशिष्टज्ञानोपदेष्टृभिः भिक्षुभिः ज्ञानभिक्षादानशीलैः विप्रवसिते देशान्तरं गते आद्ये बाल्ये वयसि वर्तमानो भवान् तदनन्तरं किमकरोत् इत्येकान्वयः॥ २॥

तदेव विविच्य पृच्छति — **स्वायम्भुवेति**। स्वयम्भुवो ब्रह्मणः पुत्र! ते तव परं ज्ञानोपदेशोत्तरकालीनं वयः कया वृत्त्या वर्तितम्। मरणकाले प्राप्ते इदं शरीरं वा उदस्राक्षीः उत्सृष्टवानसि इत्येकान्वयः॥ ३॥

सर्वेषां पूर्वजन्मसंज्ञादीनां निराकृतिः निराकरणं यस्मात् सर्वनिराकृतिरेष कालः। सुरसत्तम! ज्ञानिश्रेष्ठ! तव अतीतब्रह्मकल्पविषयामेतां स्मरणशक्तिं नैव व्यवधात् तिरोहितां नैवाकरोत्। आश्चर्यमेतदित्यस्मिन्नर्थे हिशब्दः। एवकारस्त्ववधारणार्थः॥ ४॥

## श्रीराधाकृष्णप्रणीता सुधीसुधा

हे ब्रह्मन्! सत्यवतीसुतो भगवान् व्यासः एवं पूर्वोक्तदिशा देवर्षेर्नारदस्य जन्म कर्म च निशम्य श्रुत्वा भूयः पुनः तं नारदं पप्रच्छ पृष्टवान् ॥ १ ॥

तव विज्ञानादेष्टृभिः ब्रह्मज्ञानस्य उपदेष्टृभिः, भिक्षुभिः विप्रवसिते दूरदेशगमने कृते सति ततः अनन्तरमाद्ये वयसि बाल्ये वर्तमानः भवान् किमकरोत्? हे स्वायम्भुव! ब्रह्मपुत्र! ते तव परम् उत्तरं वयः कया वृत्त्या जीविकया वर्तितं नीतम्? किञ्च कालेऽन्तकाले प्राप्ते इदं कलेबरं दासीपुत्रभूतं शरीरं कथमुदस्राक्षीः त्यक्तवानसि? हे सुरसत्तम! देवश्रेष्ठ! सर्वनिराकृतिः सर्वविनाशहेतुः एष कालः प्राक्कल्पविषयां पुरातनकल्पसम्बन्धिनीं भिक्षूपदेशरूपिणी मेतां ते स्मृतिं न व्यवदादेव हि कथं वा न खण्डितवान्? न व्यवधादिति पाठे तु स्मृतिं न तिरोहितां चकारेत्यर्थः।

अत्र भिक्षवः सन्न्यासिन एव। तैरनुष्ठेयौ मुख्यधर्मौ द्वौ — (१) भैक्ष्येण जीवनम्, (२) अपरिग्रहश्चेति। अनयोस्तु स्वभोजनावश्यकव्ययाभ्यधिगुणलोकसेवनयाञ्चालब्धभोजनाभ्यामविरोधः ॥ २, ३, ४ ॥

नारद उवाच

भिक्षुभि र्विप्रवसिते विज्ञानादेष्टृभिर्मम ।
वर्तमानो वयस्याद्ये तत एतदकार[1]षम् ॥ ५ ॥

एकात्मजा मे जननी योषिन्मूढा च किङ्करी ।
मय्यात्मजेऽनन्यगतौ चक्रे स्नेहानुबन्धनम् ॥ ६ ॥

साऽस्वतन्त्रा न कल्पा[2]ऽऽसीद्योगक्षेमं ममेच्छती ।
ईशस्य हि वशे लोको योषा दारुमयी यथा ॥ ७ ॥

अहं च तद्ब्रह्मकुले [3]ऊषिवांस्तदपे[4]क्षया ।
दिग्देशकालाव्युत्पन्नो बालकः पञ्चहायनः ॥ ८ ॥

1 H,K,V °रिषम्; W. °र्षम् 2 H,V °ल्या° 3 H,V उ° 4 B,N,W °वे°

**श्रीध०** **भिक्षुभि** रिति। अकारिषम् कृतवानहम्। रेफषकारयोः विश्लेषः छन्दोऽनुरोधेन [2]इत्यवगन्तव्यम्॥ ५ ॥

[3]ततः तावत् किञ्चित्कालं तत्रैव मातृस्नेहयन्त्रितो न्यवसम् इत्याह त्रिभिः **एकेति**। एक एवाहमात्मजः यस्यास्सा। योषिदिति मूढेति च स्नेहानुबन्धे हेतुः ॥ ६ ॥

किङ्करी इत्यस्यार्थं प्रपञ्चयति — **सेति**। अस्वतन्त्रा सा अतो न कल्या[4] योगक्षेमविधाने[5] न समर्था आसीत्। दारुमयी योषा इत्यतिपारवश्ये[6] दृष्टान्तः ॥ ७ ॥

तदेवं सा स्नेहं चक्रे, अहञ्च दिगादिष्वनभिज्ञः अतस्तत्रैव न्यवसमित्याह — **अह** मिति। अहं च तस्मिन् ब्रह्मकुले तस्याः मातुः स्नेहानुबन्धस्यापेक्षया[7] कदा विरमेदिति प्रतीक्षयेत्यर्थः। ऊषिवान्[8] वासं कृतवान्। पञ्चहायनः पञ्चवर्षः ॥ ८ ॥

---

1 A,B °र° 2 A,B omit इत्यवगन्तव्यम् 3 A,B तत्र 4 A,B कल्पा 5 A,B omit योगक्षेमविधाने 6 H,V °पि 7 A °वे° 8 H,V उ°

**वीर॰** एवमापृष्टः यथावत् स्ववृत्तान्तं वक्तुमारेभे नारदः — **भिक्षुभि** रिति। तत इत्यन्तस्य पूर्ववदेवार्थः। एतद्वक्ष्यमाणम् अकारषम् अकार्षम् कृतवानिति ॥ ५ ॥

तदेवाऽऽह — **एकात्मे** त्यादिना कल्पान्त इत्यतः प्राक्तनेन ग्रन्थेन। एकोऽहम् आत्मजः पुत्रो यस्याः सा। मम जननी माता योषिदिति स्वभावोक्तिः। जननी इत्यनेनैव स्त्रीत्वोक्तेः, अत एव मूढा किङ्करी अनेन पराधीनत्वमुक्तम्। अनन्यगतौ गतिः पोषणोपायः अनन्यपोषके मय्यात्मजे स्नेहानुबन्धनं स्नेहपारवश्यं चक्रे ॥ ६ ॥

सा मम जननी अस्वतन्त्रा किङ्करीत्वात्। अत एव मम योगक्षेममिच्छत्यपि न कल्पा न समर्था बभूव। योगश्च क्षेमश्च तयोः समाहारः। योगः अलब्धलाभः, लब्धपरिरक्षणं रक्षितविवर्धनं, तस्य पात्रे प्रतिपादनं च क्षेमः ॥ ७ ॥

अहं च तदा पञ्चहायनः पञ्चवर्षवयस्को बालकः। अत एव दिग्देशकालाव्युत्पन्नः दिग्देशकालस्वभावानभिज्ञः तदवेक्षया मात्रवेक्षया तद्देहावसानप्रतीक्षणेन हेतुना इत्यर्थः। तस्मिन् ब्रह्मकुले ब्राह्मणगृहे उषितवानस्मि ॥ ८ ॥

**विज॰** विज्ञातस्वकीर्तिवितरणव्यासाभिप्रायो नारदः तत्प्रश्नं परिहरति — **भिक्षुभि** रिति। उक्तार्थश्लोकोऽयम् ॥ ५ ॥

स्वस्य सन्न्ययासिनामनुगमने कारणमाह — **एकात्मजेति**। अहमेक एव आत्मजोऽपत्यं यस्याः सा, तथा योषितो मध्ये मूढा विवेकज्ञानशून्या किङ्करी दासी च एवंविधा मम जननी। नान्या गतिः आश्रयो यस्य सोऽनन्यगतिः तस्मिन् आत्मजे मयि स्नेहानुबन्धनं चक्रे इत्येकान्वयः ॥ ६ ॥

केवलं स्नेहमेव बद्धवती न तु अशनवसनादिदानपूर्वकमित्याह — **सेति**। मम योगक्षेममप्राप्तस्य प्राप्त्युपायं योगं, प्राप्तस्य परिपालनं क्षेममिच्छती अस्वतन्त्रा पराधीना कल्पा समर्था नासीत् इत्येकान्वयः। कुतो

लोकः सेवको जनः ईशस्य स्वामिनो वशे हि यस्मात्तस्मादित्यर्थः। "ईशावास्यम्"(ईश. उ. 1) इति श्रुतेः ईशस्य परमेश्वरस्येति वा। कथमिव? दारुमयी काष्ठनिर्मिता योषा यथा जडप्रवर्तकयन्त्रपुरुषाधीना तथेत्यन्वयः॥ ७॥

तर्हि किमिति तत्र वास इति तत्राऽऽह — **अह** मिति। चशब्द एवार्थः, पूर्वेण समुच्चयार्थो वा। **अहं** तस्याः मातुरपेक्षया तस्मिन् ब्रह्मकुले एव ब्राह्मणगृहे एव ऊषिवानित्यन्वयः। "कुलं वंशे गृहे नार्थे जातिसाङ्कर्ययोरपि" इत्यभिधानात्। तत्र वासे हेत्वन्तरमाह दिगिति। दिगाद्यनभिज्ञाने कारणमाह बालक इति। **पञ्च** हायनाः संवत्सराः यस्य स तथोक्तः। योऽहं दिगाद्यनभिज्ञः पञ्चहायनो बालकः सोऽहमित्येकान्वयः॥ ८॥

---

1 A.B प्रति°

**रा° कृ°** मम विज्ञानादेष्टृभिः भिक्षुभिः विप्रवसिते विप्रोषिते आद्ये वयसि वर्तमानः अहं ततः एतद्वक्ष्यमाणं कार्यमकार्षम्॥ ५॥

एकात्मजा एकपुत्रा योषित् मूढा किङ्करी पराधीनवृत्तिः मे जननी अनन्यगतौ रक्षकान्तररहिते आत्मजे मयि स्नेहानुबन्धनं चक्रे कृतवती॥ ६॥

मम योगक्षेमम्, अप्राप्तलाभो योगः, प्राप्तपरिरक्षणं क्षेमः, तयोस्समाहारः योगक्षेमं तदिच्छती काङ्क्षन्त्यपि अस्वतन्त्रा किङ्करीत्वात् पराधीना सा कल्पा मम योगक्षेमसम्पादनसमर्था न आसीत् नाभूत्। तथा हि दारुमयी योषिद्यथा योषेव लोकः ईशस्य वशे वर्तत इति शेषः॥ ७॥

पञ्चहायनः पञ्चवत्सरः दिग्देशकालाव्युत्पन्नः दिग्देशकालेष्वनभिज्ञः, बालकः अहंच तदपेक्षया तन्मातृ-स्नेहानुबन्धदृशा तद्ब्रह्मकुले तद्ब्राह्मणगृहे ऊषिवान् वासमकरवम्। "अहं च तद्ब्रह्मकुले ऊषिवांस्तदपेक्षया" इत्यत्र बालकस्यापि तस्य विलक्षणं वैराग्यमुक्तं भवति। अत्र पुत्रप्रेमबद्धा मातैव, न तु पुत्रो मातृप्रेमबद्धः। तथाऽपि पुत्रव्यामोहं जहीहीति मातरं शासितुमपि नायमर्हति; शासनस्यापि चित्तवृत्त्यन्तर्भावेन बन्धहेतुत्वात्; विशिष्य विष्णुधर्मे निरवकाशत्वाच्च। तथा हि — सर्वत्र दृश्यमानो विष्णुः किं न दृश्यते स्वमातरि? ततश्च तां त्युक्तुं शासितुं वा नैवावसरः। काम इव तत्त्यागकामोऽपि बन्धहेतुरेव। तस्मादयं विलक्षणवैराग्यशाली बालकः मातृस्नेहानुबन्धपरित्याग-प्रयत्नमपहाय केवलं तदनुबन्धविरतिं प्रतीक्षमाणः आसीदिति ज्ञायते। अत एव च अग्रे मातृमरणमपि ईश्वरानुग्रहं मनुते॥ ८॥

**एकदा निर्गतां गेहाद्दुहन्तीं निशि गां पथि।**
**सर्पोऽदशत् पदा स्पृष्टः कृपणां कालचोदितः॥ ९॥**

तदा तदहमीशस्य भक्तानां शं[1]मभीप्स[2]तः ।
अनुग्रहं मन्यमानः प्रातिष्ठं दिशमुत्तराम् ॥ १० ॥

स्फीताञ्जनपदांस्तत्र पुरग्रामव्रजाकरान् ।
[3]खेटखर्वटवाटीश्च वनान्युपवनानि च ॥ ११ ॥

[4]चित्रधातुविचित्राद्रीनिभभग्नभुजद्रुमान् ।
जलाशयाञ्छिवजलान्नलिनीस्सुरसेविताः ॥ १२ ॥

चित्रस्वनैः पत्ररथैः विभ्रमद्भ्रमरश्रियः ।
[5]नलवेणुशरस्तम्बकुशकीचक[6]गह्वरम् ॥ १३ ॥

एक एवाति[7]यातोऽहमद्राक्षं विपिनं महत् ।
घोरं प्रतिभयाकारं व्यालोलूकशिवाजिरम् ॥ १४ ॥

परिश्रान्तेन्द्रियात्माऽहं तृट्परीतो बुभुक्षितः ।
स्नात्वा पीत्वा ह्रदे नद्या उपस्पृष्टो गतश्रमः ॥ १५ ॥

तस्मिन्निर्मनुजेऽरण्ये पिप्पलोपस्थ आस्थि[8]तः ।
आत्मनाऽऽत्मानमात्मस्थं यथाश्रुतमचिन्तयम् ॥ १६ ॥

*स्वप्नो माया ग्रहश्शय्या जाग्रदाभास आत्मनः ।
नाम रूपक्रियावृत्तिः संविच्छास्त्रं परं पदम् ॥

नेन्द्रियार्थं न च स्वप्नं न सुप्तं न मनोरथम् ।
न निरोधश्चानुगच्छेच्चित्रंतद्भगवत्पदम् ॥

स एको भगवानग्रे क्रीडिष्यन्निदमात्मनः ।
सृष्ट्वा विहृत्य तज्जग्ध्वा उदास्ते केवलः पुनः ॥

1. B,K,M स° 2. K,M °प्सितम् 3 H,V खेटान् खर्पट°; K,M खेटान् पट्टण° 4 K,M विचित्रधातुचित्रा° 5 AF, GF रत्नरेणु° 6 AF, GF °मस्करी 7. AF,GF °भि° 8 B,H,I,K,M,V,W °श्रि° *Three additional Verses between VV.16 & 17 are found in K,M The commentary of Vijayadwaja on them is to be found in their proper place.

**श्रीध० एकदा** इति। गेहान्निर्गतां गां दुहन्तीम्। हेतौ शतृप्रत्ययः। दोग्धुं[1] निर्गतामित्यर्थः। पदा पादेन आस्पृष्टः ईषदाक्रान्तोऽदशत् अखादत् ॥ ९ ॥

**तदेति।** तन्मातुर्मरणं भक्तानां शं कल्याणमभीप्सतः ईशस्यानुग्रहं मन्यमानः प्रातिष्ठम् प्रस्थितोऽस्मि ॥ १० ॥

**स्फीतानिति ।** स्फीतान् जनपदादीनतियातस्सन् महद्विपिनमद्राक्षमिति चतुर्थेनान्वयः । जनपदादिषु नानागुणदोषयुक्तेषु[1] समदृष्टिस्सन् गतोऽहमिति तात्पर्यार्थः । स्फीतान् समृद्धान् जनपदान् देशान् । तत्र तस्यां दिशि । पुरग्रामव्रजाकरान् । तत्र पुराणि राजधान्यः । ग्रामाः भृग्वादिप्रोक्ताः[2] "विप्राश्च विप्रभृत्याश्च यत्र चैव वसन्ति ते[3] । स तु ग्राम इति प्रोक्तः शूद्राणां वास एव च[4]" ॥ इति । "शूद्राश्च[5] शूद्रभृत्याश्च यत्र सर्वे वसन्ति हि । स तु ग्राम इति प्रोक्तो द्विजानां वास एव वा" ॥ इति । व्रजाः गोकुलानि आकराः रत्नाद्युत्पत्तिस्थानानि तान् । खेटाः कर्षकग्रामाः । खर्पटाः[6] गिरितटग्रामाः ; भृगुप्रोक्ता वा "एकतो यत्र तु ग्रामो नगरं चैकतः स्थितम् । मिश्रं तत्[7] खर्पटं नाम नदागिरिसमाश्रयम्" इति । वाट्यः पूगपुष्पादीनां[8] वाटिकास्ताः । वनानि स्वतस्सिद्धवृक्षाणां समूहाः । उपवनानि आरोपितवृक्षाणां[9] समूहाः तानि च ॥ ११ ॥

**चित्रेति ।** चित्रैः धातुभिः स्वर्णरजताद्यैः विचित्रान् अद्रींश्च । इभैर्भग्नाः भुजाः शाखाः येषां ते द्रुमाः येषु तान् । शिवानि भद्राणि जलानि येषु[10] तान् जलाशयान्[11] सुरैस्सेविताः नलिनीः सरसीः ॥ १२ ॥

**चित्रेति ।** चित्राः स्वनाः येषां तैः पत्ररथैः पक्षिभिः तन्नादप्रतिबुद्धैरित्यर्थः[12] । विभ्रमद्भिः भ्रमरैः श्रीः शोभा यासां ताः नलिनीः अतियातोऽतिक्रम्य गतस्सन् महद्विपिनं वनमद्राक्षम् । कीदृशम् ? नलवेणुशराणां स्तम्बैः कुशैः कीचकैश्च गह्वर दुर्गमम् । तत्र नलानि तृणविशेषाः, सूक्ष्मरन्ध्राः वेणवः वेणुजातय एव । विपुलान्तरालगर्भाः सच्छिद्राः[13] कीचकाः । शराः दर्भविशेषाः । स्तम्बाः तृणादिगुच्छविशेषाः, तैः गह्वरं दुर्गमप्रदेशम् । घोरं दुस्सहं प्रतिभयाकारं भयङ्कररूपं व्यालादीनामजिरं क्रीडास्थानम् ॥ १३, १४ ॥

**परिश्रान्तेति ।** परिश्रान्तानि इन्द्रियाणि चक्षुरादीनि[14] आत्मा देहश्च यस्य तृषा परीतो व्याप्तस्सन्[15] उपस्पृष्टः आचान्तः ॥ १५ ॥

**तस्मिन्निति ।** पिप्पलोपस्थे अश्वत्थमूले आश्रितः उपविष्टः । आत्मना बुद्ध्या मनसा वा आत्मस्थं हृदिस्थमात्मानं परमात्मानम् ॥ १६ ॥

---

1 B adds (दोहयितुं) 2 A,B भृपुप्रो° 3 H,V हि 4 H,V वा 5 A,B omit शूद्रा . . . इति 6 A,B °र्व° 7 A,B तु खर्वटं 8 H,V पूगपुष्पोद्यानानि ताः 9 A,B रोपित° 10 A,B येषां 11 A,B omit जलाशयान् सुरैस्सेविताः 12 A,B प्रबु° 13 A,B omit सच्छिद्राः 14 A,B omit चक्षुरादीनि 15 A,B omit सन्

**वीर°** एवं स्थिते कदाचिन्निशि गेहात् निर्गतां गां दुहन्तीं दोग्धुं प्रवृत्तां कृपणां मम मातरं पथि मार्गे पदा पादेन स्पृष्टः कालचोदितः कालशरीरकेण दैवेन चोदितः सर्पः अदशत् ददंश । सा अम्रियत इत्यर्थतो द्रष्टव्यम् ॥ ९ ॥

तदाऽहं तन्मरणं भक्तानां शं सुखमभीप्सतः कामयमानस्य ईशस्य भगवतोऽनुग्रहरूपं मन्यमानः उत्तरां दिशं प्रति प्रातिष्ठं प्रस्थितवानस्मि ॥ १० ॥

तत्र प्रस्थाने स्फीतान् समृद्धान् जनपदान् देशान् द्वितीयान्तानामतियात इत्युपरिष्टादन्वयः। पुराणि पट्टणानि ग्रामान् अट्टरहितान्[1] व्रजान् गोपालनिवासान् आकरान् रत्नाद्युत्पत्तिस्थानानि खेटान् कृषीवलग्रामान् खर्वटान् निषादादिग्रामान् वाटीः पुष्पवाटिकाः वनानि अरण्यरूपाणि उपवनानि कृत्रिमवनानि च॥ ११॥

तथा चित्रैः नानाविधैः धातुभिः गैरिकादिभिः विचित्रानद्रीन् पर्वतान् इभैर्गजैर्भग्नाः भिन्नाः[2] भुजाः शाखा येषां तान् द्रुमान्, शिवानि विशुद्धानि जलानि येषु तान् जलाशयान् सरांसि, तथा सुरैस्सेविताः क्रीडिताः नलिनीः पद्माकरान् कथम्भूताः चित्राः नानाविधाः स्वना येषां तैः, पत्ररथैः पत्राणि तद्रूपात्मकाः पक्षा रथाः रथवत् गमनसाधनानि येषां तैरित्यर्थः। पक्षिभिः सङ्कुला इति शेषः। भ्रमद्भिः भ्रमरैः श्रीः शोभा यासां ताः॥ १२, १३॥

अतियातोऽतिक्रान्तः एकोऽसहाय एवाहं नलादिभिर्गह्वरं महद्विपिनं वनम् अद्राक्षं दृष्टवानस्मि। तत्र नलो ग्रन्थिपर्णी, वेणवः स्थूलवंशाः। सशब्दाः कीचकाः। सूक्ष्माः सचित्राः शरस्तम्बाः अश्ववालाः। कुशाः प्रसिद्धाः। विपिनमेव विशिनष्टि। घोरमुग्रं दुष्प्रवेशम्। अत एव व्यालानां दुष्टगजानां अजगराख्यसर्पविशेषाणां[3] वा उलूकानां घूकानां[4] शिवानां शृगालविशेषाणां च अजिरं क्रीडास्थानम्। अतीव प्रतिभयाकारं प्रतिमुखं गच्छतां भयापादकम्॥ १४॥

तत्राहं परिश्रान्तानि इन्द्रियाणि आत्मा देहश्च यस्य। तृषा पिपासया परीतः व्याप्तः बुभुक्षितः क्षुधितश्च नद्याः ह्रदे स्नात्वा उपस्पृष्टः कर्तरि क्तः आचान्तः। पीत्वा जलमिति शेषः। गतः श्रमो यस्य तथाभूतः॥ १५॥

तस्मिन्निर्मनुजेऽरण्ये पिप्पलस्य अश्वत्थस्य उपस्थे मूले आश्रितः उपविष्टः। आत्मस्थं जीवात्मनि स्थितं, हृदयकमलस्थं वा आत्मानं परमात्मानं आत्मना मनसा अचिन्तयम् ध्यातवानस्मि॥ १६॥

---

1 A,B हट्ट° 2 A,B विच्छिन्नाः 3 A,B सर्पाणां 4 A,B omit घूकानां

**विज॰** कियन्तं कालमवात्सीदिति प्रश्नस्य मातृमरणपर्यन्तमवात्समिति परिहारमभिप्रेत्य आह — **एकदेति।** 'स्पृश-उपताप' इति धातोः आक्रमणेन तप्तो गां गोमतल्लिकामदशत् अभक्षयत्। कालेन मृत्युना चोदितः प्रेरितः॥ ९॥

सोऽहं तदा मातुरन्त्यं कर्म कृत्वा तन्मरणं भक्तानामभीष्टमीशस्यानुग्रहं मन्यमानः उत्तरां दिशं प्रति प्रातिष्ठमित्यन्वयः॥ १०॥

एक एव सहायरहितोऽहं तत्र उत्तरस्यां दिशि देशान् समेतानतीत्य यात इति चतुर्थश्लोकेनान्वयः। व्यालाश्च, दुष्टगजाश्च, उलूकाश्च, शिवाः शृगाल्यश्च, व्यालोलूकशिवाः, तासामजिरं क्रीडास्थानम् प्रतिभयाकारं मृत्युमाह्वयदिव स्थितम् अत एव घोरं महदपारं विपिनमद्राक्षमित्येकान्वयः। सर्वर्तुसम्पत्त्या स्फीतान् समृद्धान् पुराणि

ग्रामाश्च व्रजाश्च आकराश्च पुरग्रामव्रजाकराः। पुरं राजाश्रयो, ग्रामो बहुजनाकीर्णः। गोपालानां गवाञ्च निवासस्थानं व्रजः। रत्नाद्युत्पत्तिस्थानमाकरः। खेटान् मृगयोपजीवनप्रदेशान्। पट्टनानि वाट्यश्च तास्तथोक्ताः ताः पट्टनवाटीः जलस्थलायतिस्थिता राजधानी पट्टनम्। पुष्पोपजीविनां निवासस्थानं वाटी। वृक्षसमुदायः वनम्। आरोपितः उपवनम्॥ ११ ॥

इभैः गजैः भग्नाः भुजद्रुमाः भूर्जवृक्षा येषु ते तथोक्ताः। "भूर्जपत्रे भुजो भूर्जे मृदुत्वक् चर्ममल्लिकौ" (वैज. को. 3-3-45) इति यादवः। इभभग्नाः भुजाः शाखा येषां ते तथोक्ताः इभभग्नभुजद्रुमाः येषु ते तथोक्ता इति वा तान्। विचित्रधातुभिः नानाविधगैरिकहरितालादिभिः चित्रा आश्चर्यरूपाः अद्रयो गिरयः तान्, शिवजलान् गुरुत्वादिदोषरहितान् जलाशयान् सरोवरादिजलाधारान्। देवनिषेविता नलिनीः पुष्करिणीः॥ १२ ॥

चित्रस्वनैः नानाविधस्वरमधुरैः पत्ररथैः पक्षिभिः सह विभ्रमन्तः इतस्ततश्चलन्तो भ्रमरा भृङ्गाः विभ्रमद्भ्रमराः विभ्रमद्भ्रमराणां श्रीः शोभा समृद्धिर्वा यासु तास्तथोक्ताः ताः, शराणां स्तम्बाः शरस्तम्बाः नलानि च वेणवश्च शरस्तम्बाश्च कुशाश्च ते तथोक्ताः तैः गह्वरो निबिडोऽरण्यविशेषः। वायुना उद्धूतस्वतस्स्वनाः वेणवः कीचकाः उच्यन्ते॥ १३, १४ ॥

तृषा परीतः पानीयपानेच्छुः बुभुक्षितोऽन्नकामः अत एव परिश्रान्तेन्द्रियदेहोऽहं तत्र महारण्ये नद्याः ह्रदे उपस्पृष्टः कृतपादप्रक्षालनादिकः स्नात्वा तर्पणादिसकलाः क्रियाः विधाय स्वादूदकं पीत्वा तेन हेतुना गतश्रमोऽपगताल-स्यो भूत्वा॥ १५ ॥

मनुष्यसञ्चाररहितेऽरण्ये पिप्पलोपस्थे अश्वत्थमूले आश्रितः स्वस्तिकासने उपविष्टः समाहितचित्तो भूत्वा आत्माना विषयेभ्यः आहृतेन मनसा हृदि संस्थितमात्मानं प्रत्यगात्मानं यथा परमहंसेभ्यः श्रुतं तथा अचिन्तयमित्येका-कान्वयः ॥ १६ ॥

*यथाश्रुत मचिन्तयमित्येतद्दर्शयितुं जाग्रदाद्यवस्थास्वरूपं निरूपयति — **स्वप्न** इति। स्वप्नाद्यवस्था आत्मनः परमात्मनः सकाशादात्मनो जीवस्योत्पद्यन्ते इत्यन्वयः। तन्त्रेण उपात्तत्वादात्मशब्दस्य द्विरावृतिः कर्तव्या। जीव-मनःस्थितमायाख्यदृष्टश्रुत वस्तुसंस्कारोपादानको जाग्रत्पदार्थसदृशकरितुरगाद्यनेकपदार्थदृष्टिरूपः स्वप्नः सर्वेन्द्रियोपरतिरूप-त्वात् स्वप्नजागरितविषयग्रहणरहिता शय्यापरपर्यायसुषुप्तिः नामरूपक्रियासु वृत्तिर्यस्य स तथोक्तः, आभासः प्रत्ययः नामरूपक्रियाविषयप्रत्ययो जाग्रत् एतदवस्थात्रयकारणं ब्रह्म न मृदादिवत् कार्यनुस्यूतम्; किन्तु, ततो विलक्षणं तदित्यभिप्रेत्याह संविदिति। समीचीना प्रकृतिप्राकृतमिश्ररहिता वित् ज्ञानं यस्य तत्तथोक्तं, सम्यक् निर्दोषमात्मानं वेत्तीति संवित्, तदात्मानमेव "वेदाऽहं ब्रह्मास्मि" (बृह. उ. 1-4-10) इति श्रुतेः। शास्त्रं सर्वनियन्तृ। पद्यत इति पदम्, परममुत्तमं, प्राप्तव्योत्तमम्। एवं जाग्रदाद्यवस्था कर्तृत्वेन आत्मादिभ्यः अत्यन्तोपकारकम् विशिष्टज्ञानघनं सर्वान्तर्यामि प्राप्तव्योत्तमं तुर्यं ब्रह्मस्वरूपं श्रुतम्। तदेव अचिन्तय मिति भावः॥

**एतदेव** विविच्य दर्शयति **नेति**। चित्र माश्चर्यरूपं, चित्रमविमिश्रं अज्ञानात्मकं वा चित्तं चेतनं जीवं त्रायत इति वा चित् ज्ञानं, तनोति राति ज्ञानिनां बहुलीकरोति तदन्येषु ददाति गुरुमुखेनेति वा चित्तरतं वा "सहि सर्वमनोवृत्ति-प्रेरक स्समुदाहृतः" इति स्मृतेः। चिनोतीति चित्। चेता स्रष्टा ब्रह्मा तं तरति अतीत्य वर्तते। चिनोति सृजति रमयति वा तस्मादुत्तममिति वा भगवदैश्वर्यादिगुणसामग्रीमत्पदं रूपं, हरेरिति शेषः। तत्ततं व्याप्तं भगवतः हरेः पदं वा। एवंविधं तत्प्रकृत्यादिसम्बन्धविधुरत्वादिन्द्रियार्थं जाग्रदवस्थां नानुगच्छेत् न स्वप्नावस्थां, न सुषुप्त्यवस्थां 'चिन्तितोऽर्थो मनोरथ' इत्यभिधानात् न मनोरथम्, अत एव न निरोधं मरणं अनुगच्छेत् इत्यस्य प्रत्येकमन्वयः। चशब्दो मिथः समुच्चयार्थे॥

ननु कालतोऽपि स्वप्नाद्युत्पत्तिदर्शनात् तत्कर्तृत्वं हरेः कथमित्याशङ्क्य सकलप्रपञ्चकर्तृत्वेन मुख्यकर्तृत्वात् तदन्तःपातिस्वप्नाद्यवस्थाकर्तृत्वं किं वक्तव्यमित्यभिप्रेत्य **प्रपञ्चसृष्ट्यादिकर्तृत्वमाह स** इति। सृष्ट्यग्रे स एको भगवान् आसीदिति अवान्तरान्वयः। स पुनः सिसृक्षुः अन्तर्यामितया अवतारैश्च क्रीडिष्यन् क्रीडितुमिच्छन् आत्मनः स्वस्मात् स्वोदरात् ब्रह्मादिपरमाणुपर्यन्तमिदं जगत् सृष्ट्वा अन्तर्यामितया प्रविश्य प्रादुर्भावैश्च विहृत्य पुनश्च तज्जग्ध्वा संहृत्य प्रलये केवल एकाकी उदास्ते जीवप्रवृत्तिं प्रति उदासीनो वर्तत इत्यन्वयः। जग्ध्वा उदास्त इति सन्ध्यभावः। प्रकृत्यादिसाधनान्तर मन्तरेणापि स्रष्टुं शक्त इति माहात्म्यं द्योतयितुं सृष्टिस्थितिसंहारकर्तृत्वमेव, न ज्ञानादिकर्तृत्वं च अस्तीति॥

---

1 A omits वनम्। आरोपितः

**रा॰ कृ॰** एकदा एवं संस्थिते कदाचित् निशि रात्रौ गां दुहन्तीं गोदोहनहेतोरित्यर्थः। गेहात् निर्गतां कृपणां मद्योगक्षेमानुषक्तां मातरमिति शेषः। पथि मार्गे पदा तस्याः पादेन स्पृष्टः कालचोदितः कालेन भगवद्रूपिणा चोदितः प्रेरितस्सर्पः अदशत् ददंश॥ ९॥

तदाऽहं तन्मातृमरणं भक्तानां शं भद्रम् अभीप्सतः अभिलषतः ईशस्यानुग्रहं मन्यमानः उत्तरां दिशं प्रातिष्ठम् प्रस्थितवानस्मि। अत्र मातृमरणमपि ईश्वरानुग्रहमेव मन्यमानेन बालकेन भगवन्मयजीवनस्य परा काष्ठा प्रदर्शिता। तस्य जीवनमरणे भगवल्लीलाविशेषौ। उक्तं च भगवता — "मृत्युस्सर्वहरश्चाहमुद्भवश्च भविष्यताम्" (भ. गी. 10-34) इति। अनेनास्य मातरि न मातृत्वप्रयुक्तो व्यामोहः, किन्तु विष्णुत्वप्रयुक्तः प्रेमैव; तस्मात् मातृमरणं न दुःखकारणमभवत्॥ १०॥

तत्र तस्यां दिशि स्फीतान् समृद्धान् जनपदान् देशान् पुरग्रामव्रजाकरान् पुराणि राजधानीः, ग्रामान्, व्रजान् गोकुलानि, आकरान् रत्नाद्युत्पत्तिस्थानानि, खेटान् कर्षकग्रामान्, खर्पटान् गिरितटग्रामान्, वाटीः पुष्पोद्यानानि, वनानि स्वतस्सिद्धवृक्षसमूहान्, उपवनानि आरोपितवृक्षसमूहान्, चित्रधातुविचित्राद्रीन् चित्रैः स्वर्णरजताद्यैः धातुभिः विचित्रानद्रींश्च, इभभग्नभुजद्रुमान् गजच्छिन्नशाखान् वृक्षान्, शिवजलान् जलाशयान् सरोवरान्, सुरसेविताः चित्रस्वनैः पत्ररथैः पक्षिभिः

सङ्कुला इति शेषः विभ्रमद्भ्रमरश्रियः विभ्रमतां भ्रमराणां श्रीः शोभा यासु ताः नलिनीः सरसीः, एक एवातियातः अतिक्रम्य गतस्सन् अहं नलवेणुशरस्तम्बकुशकीचकगह्वरं, नलवेणुशराणां स्तम्बैः कुशैः कीचकैश्च गह्वरं दुर्गमं घोरं दुस्सहं प्रतिभयाकारं भयङ्कररूपं व्यालोलूकशिवाजिरं सर्पघूकसृगालानां क्रीडास्थानं महद्विपिनं काननमद्राक्षम् अपश्यम् ॥ ११, १२, १३, १४ ॥

परिश्रान्तेन्द्रियात्मा परिश्रान्तानि चक्षुरादीनि इन्द्रियाणि आत्मा देहश्च यस्य सः, तृट्परीतः तृषा व्याप्तः बुभुक्षितश्च सन् अहं नद्याः ह्रदे कुण्डे स्नात्वा पीत्वा उपस्पृष्टः कृताचमनः अत एव गतश्रमः तस्मिन् निर्मनुजेऽरण्ये पिप्पलोपस्थे अश्वत्थवृक्षमूले आश्रितः उपविष्टः आत्मना बुद्ध्या आत्मस्थं हृद्गतं आत्मानं परमात्मानं यथाश्रुतं भिक्षुमुखश्रुतप्रकारानुसारेण अचिन्तयम् ध्यातवानस्मि।

अत्र बालकप्रस्थानेन जीवप्रस्थानं, क्रूरमृगसञ्चारभीकरेण दुर्गमारण्येन संसारः, परिश्रान्तेन्द्रियात्मना तेन जीवात्मा च व्यज्यन्ते।

"यथाश्रुतमचिन्तयम्" इत्यत्र ध्यानविधानं सूच्यते। साधकः प्रणवमनुश्रुत्य मनसा ध्यायेत्। आत्मस्थः आत्मा च प्राणहृदयस्पन्दनश्वासस्थानभूतः साधकावशः वशीकृतसाधकजीवनहेतुः परमात्मैव ॥ १५, १६ ॥

**ध्यायतश्चरणाम्भोजं भावनिर्जितचेतसा[1] ।**
**औत्कण्ठ्याश्रुकलाक्षस्य हृद्यासीन्मे शनैर्हरिः ॥ १७ ॥**
**प्रेमातिभरनिर्भिन्न[2] पुलकाङ्गोऽतिनिर्वृतः ।**
**आनन्दसम्प्लवे लीनो नापश्यमुभयं मुने! ॥ १८ ॥**
**रूपं भगवतो यत्तन्मनःकान्तं शुचापहम्[3] ।**
**अपश्यन् सहसोत्तस्थौ[4] वैक्लव्याद्[5]दुर्मना इव ॥ १९ ॥**
**दिदृक्षुस्तदहं भूयः प्रणिधाय मनो हृदि ।**
**वीक्षमाणोऽपि नापश्यमवितृप्त इवातुरः ॥ २० ॥**

1 K,M निर्वृतचेतसः 2 W °शय° 3 K,M सुखावहम् 4 A,B,G,I,N °स्थे 5 K,M कैवल्या°

**श्रीध०** ध्यानफलमाह — **ध्यायत** इति। भावेन **भक्त्या** निर्जितं वशीकृतं यच्चेतः तेन। **औत्कण्ठ्येन अश्रु**कलायुक्ते अक्षिणी यस्य ॥ १७ ॥

**प्रेमेति**। प्रेम्णोऽतिभरेण, निर्भिन्नपुलकानि अङ्गानि यस्य। आनन्दानां सम्प्लवे महापूरे **परमानन्दे** उभयमात्मानं परं च॥ १८॥

**रूप** मिति। मनसः कान्तमभीष्टम्। शुचा शोकः तामपहन्तीति तथा तत्। उत्तस्थौ[2] उत्थितोऽस्मि[3]॥ १९॥

**दिदृक्षु** रिति। हृदि मनः प्रणिधाय स्थिरीकृत्य अवितृप्तोऽहम् आतुर इव अभवमिति शेषः॥ २०॥

1. A,B omit ध्यानफलमाह 2. A,B °त्तस्थे 3 A व्युत्थितोऽस्मि; B उत्थितवानस्मि

**वीर०** भावनिर्जितेन अभ्यासवशीकृतेन चेतसा चरणाम्भोजं ध्यायतः चिन्तयतः **औत्कण्ठयात् प्रेमपूर्वकानुध्यानाद्धेतोः अश्रूणामानन्दजनेत्रजलानां कला** बिन्दवो ययोस्ते अक्षिणी यस्य तस्य मे मम हृदि शनैः हरिरासीत् आविरासीत्॥ १७॥

तदा प्रेमाधिक्येन हेतुना निर्भिन्नाः अभिव्यक्ताः पुलकाः रोमाञ्चाः यस्मिंस्तदङ्गं शरीरं यस्य सः, अतीव निर्वृतः सुखितः। आनन्दसम्प्लवे आनन्दप्रवाहे[1] लीनो मग्नः। हे मुने! उभयं देहमात्मानं च नापश्यम् न दृष्टवानस्मि॥ १८॥

यदाविर्भूतं मनःकान्तं मनसोऽतीव प्रियम्, अत एव शुचापहं शुचायाः शोकस्यापहन्तृ भगवतो रूपं तत् पुनरपश्यन् वैक्लव्यात् अदर्शनकृतात् अधाष्टर्यात् दुःखितमनाः सहसा आशु उत्तस्थौ उत्थितवानस्मि। कैवल्यादिति पाठान्तरम्, तदाऽसहायत्वात्॥ १९॥

तद्रूपं भूयः पुनः द्रष्टुमिच्छुरहं हृदि मनः प्रणिधाय स्थिरीकृत्य वीक्षमाणः चिन्तयन्नपि नापश्यम्। अत एवातुर इव **विषयातुर इव** वितृप्तोऽभवमिति॥ २०॥

1. W °परीवाहे

**विज०** इदानीमुपास्तिफलमाह — **ध्यायत** इति। भावेन भक्त्या निर्वृतं परमानन्दमाप्तं चेतो यस्य स तथा। तस्या उत्कण्ठायाः जातानामश्रूणां बाष्पाणां कलाभिः बिन्दुभिः युक्तेऽक्षिणी यस्य स तथा तस्य शनैः अव्यग्रेण स्वचरणकमलं ध्यायते मे हृदि हरिरासीत् प्रत्यक्षोऽभूदित्येकान्वयः॥ १७॥

प्रेम्णा अतिशयितभारेण निर्भिन्नः समुल्लसन् जातः पुलको रोमाञ्चः प्रेमातिभरनिर्भिन्नपुलकोऽङ्गे यस्य स तथा आनन्दसम्प्लवे सुखप्रलयोदके मग्नोऽहं तमेवापश्यमुभयं द्वितीयं समाधिकं वा नापश्यं सर्वोत्तमत्वादित्यन्वयः॥ १८॥

ततःपरं किमभूदिति तत्राऽऽह — **रूप** मिति। मनःकान्तं मनोहरं हरेः यद्रूपमद्राक्षं तत् सहसा अपश्यन् अचक्षाणो दुर्मनाः दुःखितान्तःकरणः मुक्तिं प्राप्तः कैवल्यात् मोक्षादिव उत्तस्थौ उदतिष्ठमित्यन्वयः ॥ १९ ॥

पुनः हरेः रूपं दिदृक्षुः हृदि मनःप्रणिधाय स्थितः आतुरो रोगी वा अवितृप्तोऽसन्तुष्टो वीक्षमाणोऽप्यहं नापश्यमित्यन्वयः ॥ २० ॥

**रा० कृ०** भावनिर्जितचेतसा भक्तिवशीकृतेन मनसा चरणाम्भोजं भगवतः पादपद्मं ध्यायतः **औत्कण्ठया-श्रुकलाक्षस्य** उत्कण्ठया अश्रुबिन्दुयुक्ते अक्षिणी यस्य तस्य मे मम हृदि शनैः हरिः आसीत् आविरासीदित्यर्थः ॥ १७ ॥

हे मुने! प्रेमातिभरनिर्भिन्नपुलकाङ्गः प्रेम्णः अतिभरेण आधिक्येन निर्भिन्नाः अभिव्यक्ताः पुलकाः रोमाञ्चाः यस्मिन् तदङ्गं शरीरं यस्य सः, अतिनिर्वृतः अत्यन्तं सुखितः ततश्चानन्दसम्प्लवे आनन्दप्रवाहे लीनः निमग्नः अहमिति शेषः। उभयमात्मानं परमात्मानं च नापश्यम् ॥ १८ ॥

यदाविर्भूतं शुचापहं दुःखनाशकं मनःकान्तं मनोहरं भगवतो रूपं वर्तत इति शेषः। तद्रूपमपश्यन् पुनरपश्यन् वैक्लव्यात् व्याकुलत्वात् दुर्मना इव दुःखित इव सहसा उत्तस्थौ ध्यानात् उत्थितवानस्मि ॥ १९ ॥

तत् भगवद्रूपं भूयः पुनः दिदृक्षुः द्रष्टुमिच्छुः अहं हृदि हृदये मनःप्रणिधाय स्थिरीकृत्य वीक्षमाणोऽपि ध्यायन्नपि नापश्यम्, अत एवावितृप्तः असन्तुष्टः आतुर इव व्याकुल इवाभवमिति शेषः ॥ २० ॥

**श्रीभगवानुवाच**

**एवं यतन्तं विजने मामाहागोचरो गिराम् ।**
**गम्भीरश्लक्ष्णया वाचा शुचः प्रशमयन्निव ॥ २१ ॥**

**हन्तास्मिन् जन्मनि भवान् मा मां द्रष्टुमिहार्हति ।**
**अविपक्वकषायाणां दुर्दर्शोऽहं कुयोगिनाम् ॥ २२ ॥**

**सकृद्यद्दर्शितं रूपमेतत्कामाय तेऽनघ !**
**मत्कामश्शनकैस्साधुं सर्वान्मुञ्चति हृच्छयान् ॥ २३ ॥**

**सत्सेवयाऽदीर्घया ते जाता मयि दृढा मतिः ।**
**हित्वाऽवद्यमिमं लोकं गन्ता मज्जनतामसि ॥ २४ ॥**

**मतिर्मयि निबद्धेयं न विपद्येत कर्हिचित् ।**
**प्रजासर्गनिरोधेऽपि स्मृतिश्च मदनुग्रहात् ॥ २५ ॥**

---

1 K.M प° 2 H.V °पि° 3 K.M न 4 B.H.N.V मा 5 W रूपं मत्कामाय तवानघ ! 6 A.B.N °धुः 7 W °च्छ्र°
8 G.H.K.M दीर्घया 9 B.I °ऽपि; K.M वै

**श्रीध॰ एव** मिति। गिरामगोचरः [1]संवेदनस्याविषयभूत ईश्वरः ॥ २१ ॥

**हन्ते** ति। हन्तेति सानुकम्पसम्बोधने। मेति मां द्रष्टुं [2]माऽर्हति नार्हति, यतः [3]अविपक्वाः [4]अदग्धाः कषायाः मलाः कामादयो येषां तेषां कुयोगिनाम् अनिष्पन्नयो[5]गानाम् ॥ २२ ॥

कुतस्तर्हि दृष्टोऽसि, तत्राऽऽह — **सकृ** दिति। सकृद्दर्शितं मयेति यदेतत्कामाय मय्यनुरागाय। त्वत्कामेन किमित्यत आह मत्कामः पुमान् हृच्छयान् कामान् ॥ २३ ॥

**सदि** ति। अदीर्घयाऽपि सतां सेवयाऽवद्यं निन्द्यं [6]दोषसम्पादकमिति यावत्। इमं लोकं देहं [7]दासीपुत्रकलेबरं मज्जनतां मत्पार्षदतां गन्ताऽसि ॥ २४ ॥

**मति** रिति। प्रजानां सर्गे सृष्टौ, निरोधे संहारेऽपि प्रजासर्गस्य निरोधे इति वा ॥ २५ ॥

---

1 H.V वेदवचसामप्यविषयस्सः 2 A omits माऽर्हति 3 A न वि° 4 A omits अ° 5 V °गि° 6 A.B omit दोषसम्पादकमिति यावत्
7 A.B omit दासीपुत्रकलेबरं

**वीर॰** एवं द्रष्टुं पुनःपुनः यतन्तं यत्नं कुर्वन्तं मामुद्दिश्य गिरामगोचरः "यतो वाचो निवर्तन्ते" (तैत्ति. उ. 2-4-5) इत्युक्तरीत्या वागविषयः, अपरिच्छेद्यत्वादिति भावः। अदृश्यस्सन् इति तात्पर्यम्। भगवान् इति विशेष्यमध्याहर्तव्यम्। गगने गम्भीरया वाचा शुचः शोकान् प्रशमयन्निवाऽऽह ॥ २१ ॥

उक्ति[1]मेवाऽऽह — **हन्ते** ति चतुर्भिः। इह लोके अस्मिन् जन्मनि भवान् मां द्रष्टुं माऽर्हति नार्हतीति, माशब्दोऽयं नञ्पर्यायः। अतो "माङि लुङ्" (अष्टा. 3-3-175) इति लुङभावः। दर्शनानर्हत्वे हेतुं वदन् आत्मानं विशिनष्टि। अविपक्वोऽविनष्टः [2]कषायः दर्शनप्रतिबन्धकः पुण्यपापात्मकः कषायः कषायवत् दुरपनेयः कर्मोपाधिः येषां तेषां कुयोगिनामहं दुर्दर्शः दुःखेनापि द्रष्टुमशक्यः ॥ २२ ॥

तर्हि सकृत् कथं दृष्टोऽसीत्यत्र आह — **सकृ** दिति। हे अनघ! सकृद्रूपं मदीयं दर्शितमिति यत् तत्तव मत्कामाय मद्विषयकदिदृक्षायै। एतत् कामय ते इति पाठान्तरम्। तत्र ते तुभ्यं सकृद्दर्शितं रूपं एतत्कामय, द्रष्टुमिति

**शेष**:। निवृत्तप्रेरणात् स्वार्थे[3] णिजन्तात् कमेर्हेतुमण्णिचि, "णिचश्च" (अष्टा. 1-3-74) इति **वैकल्पिकं परस्मैपदम्**। **किं** काममात्रेणेत्यत आह मत्कामः मां द्रष्टुं कामयमानः साधुः साधुचरितः पुमान् शनैः सर्वान् हृच्छ्रयान्[4] हृद्गतान् रागादिदोषान् मुञ्चति निरस्यति ॥ २३ ॥

यतः ते तव अदीर्घया अल्पकालिक्यैव[5] सतां सेवया मयि दृढा मतिः जाता ततः[6] त्वमिममवद्यम्, लोक्यत इति लोको देहः तं शूद्रदेहमित्यर्थः। हित्वा त्यक्त्वा मज्जनतां मद्भृत्यतां गन्ता गमिष्यसि कल्पान्तरे इति **शेष**: ॥ २४ ॥

मदनुग्रहाद्धेतोः कर्हिचित् प्रजासर्गनिरोधे प्रलयकालेऽपि तव[7] मयि निबद्धा निश्चितेयं मतिः स्मृतिश्च न विपद्येत न नश्येत्[8] । कर्हिचिन्मयि निबद्धा मतिः प्रजासर्गनिरोधेऽपि मयि[9] स्मृतिश्च न विपद्येत इति वाऽन्वयः ॥ २५ ॥

---

1 A,B °क्त° 2 A omits कषायः 3 A,B °**र्थिणि**° 4 A,B °च्छ° 5 A B °कयैव 6 A,B तस्मादिम° 7 A omits तव 8 A,B °त
9 A,B omit मयि

**विज**° हरे र्भक्तवात्सल्य माश्चर्य मिति दर्शयति — **एव** मिति। गिरां वाचामगोचरः अविषयः अदृश्यः गम्भीरया अगाधया श्लक्ष्णया मधुरया वाचा मानसीः शुचः प्रशमयन्निव नष्टाः कुर्वन्निव स्थितो हरिरेवं विजने जनसञ्चाररहिते द्रष्टुं यतमानमाह इत्येकान्वयः ॥ २१ ॥

किमाह हरिरिति तत्राऽऽह — **हन्ते** ति। हन्त विस्मये। भवान् इह भूलोकेऽस्मिन् जन्मनि शूद्रयोनौ मां द्रष्टुं नार्हति, कुतः कषेण भोगेन अयते गच्छतीति कषायः पापम्। अभुक्तपापफलानां कुयोगिनां जन्मना अनभिज्ञानेन वा कुत्सितो योगो ध्यानादिकः एषामस्तीति कुयोगिनः। तेषां पुंसां दुर्दर्शः द्रष्टुमशक्यः ॥ २२ ॥

तर्हि किमिति दर्शितम् इति तत्राऽऽह — **सकृ** दिति। अनघ! सांसारिकदुःखरहित! ते तव कामायाथ कदानु पश्येयमित्युत्कण्ठायै। तया किं फलमभूदिति तत्राऽऽह मत्काम इति। मद्भक्तः पुरुषः क्रमेण सर्वान् हृच्छयान् प्राकृतान् कामान् साधु मुञ्चतीत्यन्वयः ॥ २३ ॥

परमहंससेवाफलमाह — **सदि** ति। दीर्घया बहुकालीनया सतां परमहंसानां सेवया परिचर्यया मयि दृढा मतिः मननलक्षणा भक्तिर्जाता, वै यस्मात् अतोऽवद्यं दोषरूपशूद्रजातित्वादिमं लोकं देहं हित्वा पश्चाद्ब्रह्मपुत्रत्वेन जातः त्वं मज्जनतां मम जनतां परमभागवतत्वं गन्ताऽसीत्यन्वयः ॥ २४ ॥

मयि निबद्धेयं मतिः कदाचिदपि न विपद्येत न नश्येत्, प्रजानां सर्गः सृष्टिः, निरोधः संहारः एतयोः स्मृतिनाशकयोः स्मृतिः जातिस्मरणशक्तिश्च न विपद्येत। कस्मात्, मदनुग्रहात्। अनेन भगवद्भक्तसङ्गः अभिमतफल इत्युक्तं भवति ॥ २५ ॥

**रा॰ कृ॰** विजने एकान्ते एवं भगवद्दर्शनार्थं यतन्तं प्रयत्नं कुर्वन्तं मामुद्दिश्य गिरां वाचाम् अगोचरः अविषयः भगवान् गम्भीरश्लक्ष्णया गम्भीरया सुस्वरया श्लक्ष्णया मधुरया वाचा शुचः निजादर्शनजन्यशोकान् प्रशमयन्निव आह अब्रवीदित्यर्थः।

ननु "हृद्यासीन्मे शनैर्हरिः" (भाग. 1-6-17) इत्यनेन हरेराविर्भावः उक्तः, तथाऽपि "नापश्यमुभयं मुने" (भाग. 1-6-18) इति तददर्शनं तत्सन्दर्भ एव कथितम्। कथमिदं सङ्गच्छते? श्रूयतां तावत्— ध्यायतो बालकस्य मनो भगवद्भक्त्या वशीकृतम्, अर्थात् भगवन्मयमभूत्। ततश्च मनसो भगवन्मयत्वावस्थानेन मनोनिरूप्यस्य आत्मनोऽपि आनन्दघने भगवति **लयः**। तेन ज्ञातृज्ञेययोरभावात् केवलसंविद्रूपसत्तामात्रावस्थितिः। एवं च "नापश्यमुभयम्" इत्युक्ति र्युक्तिसहैव।

**नन्वेवं** चेत् "वीक्षमाणोऽपि नापश्यम्" (भाग. 1-6-20) इत्युक्तिः असमाधेयैव। **तथाहि**—वस्तुदर्शिन एव वीक्षमाणत्वोक्तिर्युज्यते; उक्ते च वीक्षमाणत्वे अदर्शनोक्तिः दूरापास्तैव। एवमत्र अन्योऽन्याश्रयदोषो दुर्निवारः। अत्रोच्यते— पूर्वत्र ध्यायतो मनसो भक्तिवशात् भगवन्मयत्वमयत्नलब्धम्। न तत्रेच्छा न वा प्रयत्नः। अत्र तु **दिदृक्षुवीक्षमाणपदाभ्यां** यथाक्रमं दर्शनेच्छाप्रयत्नरूपचित्तवृत्तिप्रसङ्गात् चित्तवृत्तिनिरोधरूपयोगाप्रसङ्गः। तेन **च** मनोलयाप्रसङ्गः। ततश्च भगवद्दर्शनाभावः। तस्मादत्र दर्शनेच्छया वीक्षमाणस्य दर्शनप्रयत्न एव दृष्टिः; न तु दर्शनमात्रे। दर्शनञ्चात्र ज्ञानमेव। तस्मात् "वीक्षमाणोऽपि नापश्यम्" इति वचनं न केवलमदुष्टमविरुद्धञ्च, किन्तु सारवदेव।

अत्रेदमवधेयम्— विष्णोरनुग्रहेण अयत्नलब्धतन्मयीभवनदशायां देहात्मभ्रमोत्थानेन विष्णुदर्शनेच्छापरवशस्य तस्य सर्वत्र नारायणत्वज्ञानमेव। न तु तन्मयत्वानुभवः। तस्मात् सर्ववाञ्छावियोगाय केवलविष्णुभक्तिरेव विवर्धनीया॥ २१॥

हन्त! अनुकम्पापरोऽयं शब्दः। इह स्थानेऽस्मिन् जन्मनि वाञ्छापरीतेऽस्मिन् शरीरे इत्यर्थः। भवान् **बद्ध** इति शेषः। मां द्रष्टुं माऽर्हति नार्हति। अविपक्वकषायाणां अदग्धकामादिमलानां कुयोगिनामहं दुर्दर्शः दुःखेनापि द्रष्टुमशक्यः॥ २२॥

हे अनघ! सकृत् एकवारं यद्रूपं दर्शितं तुभ्यं मयेति शेषः। तदेतत् ते कामाय मयि अनुरागाय। मत्कामः मदनुरागवान् पुरुषः शनकैः साधुः विरक्तस्सन् सर्वान् हृच्छयान् हृद्गतान् कामक्रोधादिदोषान् मुञ्चति त्यजति।

यद्यपि कामो बन्धहेतुः तथाऽपि स एव भगवद्विषयकश्चेत् बन्धविमुक्तिहेतुरेव, तद्भक्तिजनकत्वात्॥ २३॥

अदीर्घया अल्पकालिकयाऽपि सत्सेवया साधूनां सेवनेन ते तव मयि दृढा मतिः भक्तिः जाता। अवद्य निन्द्यं दोषभूयिष्ठमिति यावत्। इमं लोकं देहं हित्वा त्यक्त्वा मज्जनतां मद्भृत्यतां गन्ताऽसि गमिष्यसि॥ २४॥

मयि निबद्धा इयं मतिः कर्हिचित् कदाऽपि न विपद्येत न विनश्येत्। च अपिच मदनुग्रहात् प्रजासर्गनिरोधेऽपि प्रलयेऽपि स्मृतिश्च मदीयस्मृतिश्च न विपद्येत इति शेषः ॥ २५॥

**एतावदुक्त्वोपरराम तन्महद्भूतं नभोलिङ्गमलिङ्गमी[1]श्वरम् ।**
**अहं च तस्मै महतां महीयसे शीर्ष्णा[2]वनामं विदधेऽनुकम्पितः ॥ २६ ॥**

**नामान्यनन्तस्य ह[3]तत्रपः पठन् गुह्यानि भद्राणि कृतानि च स्मरन् ।**
**गां पर्यटंस्तुष्टमना गतस्पृहः कालं प्रतीक्षन् वि[4]मदो विमत्सरः ॥ २७ ॥**

**एवं कृष्णमतेर्ब्रह्मन्नसक्तस्यामलात्मनः ।**
**कालः प्रादुरभूत् काले त[5]डित्सौदाम[6]नी यथा ॥ २८ ॥**

**[7]प्रयुज्यमाने मयि तां शुद्धां भागवतीं तनुम् ।**
**आ[8]रब्धकर्मनिर्वाणो न्यपतत् पाञ्चभौतिकः ॥ २९ ॥**

**कल्पान्त इदमादाय शयानेऽम्भस्युदन्वतः ।**
**शिशयिषो[9]रनुप्राणं वि[10]विशेऽन्तरहं विभोः ॥ ३० ॥**

**सहस्रयुगपर्यन्ते उत्थायेदं सिसृक्षतः ।**
**मरीचिमिश्रा ऋषयः प्राणेभ्योऽहं च जज्ञिरे ॥ ३१ ॥**

**अन्तर्बहिश्च लोकांस्त्रीन् पर्येम्यस्कन्दितव्रतः ।**
**अनुग्रहान्म[11]हाविष्णो र[12]विघातगतिः क्वचित् ॥ ३२ ॥**

---

1 H,V °मै° 2 W °र्षा° 3 H,K,M,V,W ग° 4 K,M अ! पटो; AF, GF अमदो; WF अपदो 5 AF, GF विद्युत्सौ°, H,V,W तटित्सौ° 6 K,M °मि° 7 K,M एवं मयि प्रयुञ्जाने 8 H,K,M,V प्रा° 9 K,M °ष्णो° 10 K,M विवेशा° 11 AF, GF °दहं 12 H,V °रव्याहत°

**श्रीध॰ एताव**दिति। तत् प्रसिद्धं महद्भूतम्। "अ[1]स्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदः" (बृह. उ. 2-4-10) इत्यादिश्रुतेः। कीदृशम्? ईश्वरं सर्वनियन्तृ नभसि लिङ्गं मूर्तिः यस्य नभोलिङ्गम्, "आ[2]काशशरीरं ब्रह्म" इति श्रुतेः। सन्निहितमपि न लिङ्ग्यते इत्यलिङ्गं तस्मै अदृष्टाय अवनामं प्रणामं विदधे कृतवान् अहं तेनानुकम्पितस्सन् ॥ २६ ॥

**नामानि** इति। अनन्तस्य नामानि पठन् अनवरतं गृणन् हतत्रपः त्यक्तलज्जः विमत्सरो जातः[3] इति शेषः ॥ २७ ॥

**एव** मिति। काले स्वावसरे काले मृत्युः प्रादुरभूत् आविर्बभूव। अकस्मात् प्रादुर्भावे दृष्टान्तः [4]तडिदिति। सौदामनीति विशेषणं स्फुटत्वप्रदर्शनार्थम्। तथाहि — सुदामा माला तत्र भवा सौदामनी मालाकारेत्यर्थः। यद्वा [5]सुदामनामा कश्चित् स्फटिकपर्वतः। ततः "तेनैकदिक्" (अष्टा. 4-3-112) इति सूत्रेणाण्। स्फटिकादिमयपर्वतप्रान्त-भवा हि विद्युदिति स्फुटा भवति तद्वदित्यर्थः। यद्वा तडिदित्यन्तिके इत्यर्थः। "तडिदित्यन्तिक[6]बन्धयोः" इति नैरुक्तस्मरणात् ॥ २८ ॥

**प्रयुज्यमाने मयि ता** मिति। अयमर्थः — "हित्वाऽवद्यमिमं लोकं गन्ता मज्जनतामसि" (भाग. 1-6-24) इति या **भागवती** भगवत्पार्षदरूपा शुद्धा सत्त्वमयी तनुः प्रतिश्रुता[7] तां प्रति भगवता मयि प्रयुज्यमाने नीयमाने [8]सति [9]प्रारब्धं यत् कर्म तन्निर्वाणं समाप्तिः[10] यस्य। आरब्धकर्मणो निर्वाणे[11] एव निर्वाणं यस्येति वा, [12]पाञ्चभौतिकः पञ्चभूतात्मको देहो न्यपतत्। अनेन पार्षदतनूनाम् अकर्मारब्धत्वं शुद्धत्वं नित्यत्वमित्यादि सूचितं भवति ॥ २९ ॥

**कल्पान्त** इति। इदं त्रैलोक्यम् आदाय उपसंहृत्य उदन्वतः एकार्णवस्याम्भसि शयाने श्रीनारायणे शिशयिषोः शयनं कर्तुमिच्छोः विभोः ब्रह्मणः अन्तर्मध्यम् अनुप्राणं निश्वासेन सह विविशे प्रविष्टोऽहम्। "ततोऽवतीर्य विश्वात्मा देहमाविश्य चक्रिणः। अवाप वैष्णवीं निद्रामेकीभूयाथ विष्णुना" (कूर्म. पु. 1-10-9) इति [13]कूर्मोक्तेः। स्वायनेऽम्भसीति पाठे स्वायने स्वस्यायने आश्रयेऽम्भसि शिशयिषोः ब्रह्मण इति श्रीनारायणेन अभेदविवक्षया उक्तमित्यवगन्तव्यम् ॥ ३० ॥

**सहस्रेति।** प्राणेभ्यः इन्द्रियेभ्योऽहं मरीचिमिश्राः तन्मुख्याः ऋषयश्च जज्ञिरे ॥ ३१ ॥

**अन्त** रिति। ये कर्मिणः ते **बहिर्न** यान्ति। ये च तपआदिभिः ब्रह्मलोकं गताः ते **त्वन्तर्न** यान्ति। अहं तु महाविष्णोरनुग्रहात् अस्कन्दितव्रतः अखण्डितब्रह्मचर्यव्रतस्सन् अन्तर्बहिश्च पर्येमि पर्यटामि। क्वचिदपि अविघाता अप्रतिहता गतिः यस्य सः ॥ ३२ ॥

---

1 H,V एतस्य वा अक्षरस्य 2 A,B omit आकाश ... ..... श्रुतेः 3 B,H,V add अस्मि 4 B तटिद्विद्युदिवेति 5 A,B सुदामा नाम 6 B °वज्र°, H,V °वध° 7 H °तां 8 A,B omit सति 9 A,B आ° 10 A,B °प्तं 11 A,B °णमेव 12 A,B सः 13 A कौ°

**वीर॰** अलिङ्गं कर्म[1]कृतदेहरहितं नभोलिङ्गम् आकाशशरीरकम् ईश्वरं सर्वनियन्तृ। ऐश्वरमिति पाठे ईश्वरशब्दवाच्यं तन्महत् सर्वव्यापकं भूतं [2]स्वाधीनसत्तादिमत् ब्रह्म "तस्य ह वा एतस्य महतो भूतस्य निःश्वसितम्" (सुबा. उ. 2-1) इति श्रुतेः। एतावदुक्त्वा विरराम तूष्णीमास। ततो महतां तेजस्विनामपि महीयसे तस्मै महते भूताय तेनानुकम्पितोऽहमवनामं प्रणामं विदधे कृतवानस्मि ॥ २६ ॥

ततोऽनन्तस्य भगवतो नामान्यहं गतलज्जः पठन् भद्राणि लोकानां मङ्गलावहानि गुह्यानि वेदगुह्यानि जन्मानि कर्माणि च स्मरन् गां भूमिं पर्यटन् तुष्टं मनो यस्य, गता स्पृहा शब्दादिविषया यस्य, विगतो मत्सरो भूतविषयको

**यस्य**, विगतः मदो देहपारवश्यरूपो यस्य सः। अपद इति पाठे **अनिकेतः। कालं देहावसानकालं प्रतीक्षन्**, आसमिति क्रियापदम् अध्याहार्यम्। यावत् कल्पावसानं जीवितवानस्मीत्यर्थः ॥ २७ ॥

हे **ब्रह्मन्**! कृष्णे भगवत्येव मतिः यस्य, अत एवामलो विशुद्धः आत्मा मनो यस्य, अत एव **शब्दादिविषयेषु** असक्तस्य मम काले तद्देहारम्भकप्रारब्धावसानकाले कालः मृत्युकालः **प्रादुरभूदुपस्थितो बभूव**। मृत्युकालस्य क्षणिकत्वद्योतनाय दृष्टान्तमाह — सौदामनी सुदाम्नः पर्वतस्य अदूरभवा **सौदामनी चातुरर्थिकेऽणि** "अन्" (अष्टा. 6-4-167) इति प्रकृतिभावे अण्णन्तत्वात् ङीप्। **सौदामिनी इत्यपपाठः** ॥ २८ ॥

तदा तां प्रसिद्धां सर्वजीवलयाधारभूतामित्यर्थः। **शुद्धामप्राकृतां भागवतीम् अनिरुद्धाख्यां तनुं प्रति मयि प्रयुज्यमाने** संश्लिष्यमाणे लयं प्राप्तुमुद्युक्ते सतीत्यर्थः। **आरब्धकर्मनिर्वाणः तद्देहावस्थितिनिमित्तस्य प्रारब्धकर्मणः** निर्वाणम् अवसानं यस्य स **पाञ्चभौतिको देहो** न्यपतत् ॥ २९ ॥

एवं प्राकृतीयशरीरपातावधिवृत्तान्तः कथितः। अथ तदुपरितनवृत्तान्तमाह — **कल्पान्त** इत्यादिना। तदा कल्पान्ते इदं जगत् आदाय स्वस्मिन् प्रविलाप्य उदन्वतः प्रलयार्णवस्य अम्भसि शयाने अनिरुद्धाख्ये भगवति शिशयिषोः तन्नाभिपद्मे शिशयिषोः विभोः चतुर्मुखस्य अन्तःप्राणम् अनुविविशे अनुप्रविष्टवानस्मि। **सन्नर्थ-स्त्वविवक्षितः** ॥ ३० ॥

सहस्रयुगावसाने उत्थाय नाभिकमलात् इति शेषः। इदं **व्यष्ट्यात्मकं** जगत् सिसृक्षोः चतुर्मुखस्य **प्राणेभ्यः प्राणादिभ्यः** मरीचिसहिता ऋषयो वशिष्ठादयः अहं नारदश्च जज्ञिरे **उद्बभूवुः**। अहं च जज्ञे इति पुरुषविपरिणामेन **अन्वयः** ॥ ३१ ॥

ततो महाविष्णोः अनुग्रहात् **क्वचिदप्यविघाता** अप्रतिहता गतिः यस्य अस्कन्दितम् **अखण्डितं व्रतं ब्रह्मचर्यं यस्य सः** अहं त्रिलोकान् अन्तर्बहिश्च **पर्येमि** परितः **सञ्चरामि** ॥ ३२ ॥

---

1 A,B omit °कृत° 2. A,B °**समाधिकरहितं महद्ब्रह्म** 3. A,B देहा° 4 A,B °कोऽण् 5. A,B °नान्तत्वात् 6. W **प्राक्कल्पीयवृत्तान्तः** 7. A,B °मिश्रा

**विज**० ईश्वरमीशनशीलं सकलजनप्रवर्तनशक्तिमत् अलिङ्गं जडशरीररहितं रुद्रादन्यद्वा। ईश्वरमित्युक्त्या भूतविग्रहवान् हर इति **शङ्कानिरासार्थं** वा अलिङ्गमित्युक्तम्। नभोलिङ्गं गमकं दृष्टान्तत्वेन यस्य तत् तथोक्तम्; आकाशवत् सर्वगमित्यर्थः। तत् महत् भूतं ब्रह्म। एतावदुक्त्वा विरराम। तेनानुकम्पितः कृपापात्रीकृतः अहञ्च महतां महीयसे तस्मै महाभूताय शीर्ष्णा शिरसा अवनामं नमस्कारं विदधे **कृतवानित्यन्वयः** ॥ २६ ॥

गतत्रपो लज्जारहितः अनन्तस्य हरेः कृतानि कर्माणि विक्रमलक्षणानि गां **भूमिं तुष्टमनाः** यदृच्छालाभेन अलम्बुद्धिमान् गतस्पृहः परवस्तुस्पृहारहितः। "पट गतौ" इति धातोः, पटो **गतिः** न विद्यते गतिः **ईश्वरादन्यो यस्य**

सः अपटः, अनन्यगतिरित्यर्थः। **असङ्गतो** विरक्त इति वा। कन्थादिप्रावरणरहितो वा। "अ आ अं अः पुराणर्षिः" इति वाक्यात् अ इति सम्बोधनं वा। हे व्यास! पटः समर्थः। अपटो निकेतरहित इति केचित्; तच्चिन्त्यम्। विमत्सरो विगतमात्सर्यः। एवंविधोऽहं मरणकालं प्रतीक्षमाणोऽभवमिति शेषः॥ २७॥

**कृष्णे** परमानन्दबलात्मके हरौ मतिः यस्य स तथा। तस्य कालो मरणाख्यः प्रावृट्काले प्राप्ते सौदामन्याख्या विद्युत् यथा सहसा पद्यते तथेत्यर्थः। "तडिद्दीप्ता[1] शतह्रदा, सौदामन्यैरावती च तद्भेदेऽप्यभिमन्त्रणम्" (वैज. को. 2-2-4,5) इति वचनात्। कुरुपाण्डववत् पृथगुक्तिः युज्यत इति भावः॥ २८॥

मयि शुद्धां निर्दोषां भागवतीं तनुं हरिमूर्तिम् एवं प्रयुञ्जाने ध्यायति सति **फलदानाय प्रारब्धकर्मविनाशवान्** पञ्चभिः भूतैः निर्मितो देहो न्यपतत् इत्यन्वयः॥ २९॥

हरिं ध्यायन् मुक्तस्त्वं कं लोकं गत इति तत्राऽऽह — **कल्पान्त** इति। अहं कल्पावसाने स्वसृष्टमिदं विश्वम् आदाय स्वोदरे निवेश्य उदन्वतः अम्भसि शेषपर्यङ्के शयाने हरौ शिशयिषोः[2] शयितुमिच्छोः विरिञ्चस्य अन्तः अनुप्राणम् अन्तर्गच्छच्छ्वासम् अनुविवेश प्रविष्टवानस्मीत्यन्वयः॥ ३०॥

सहस्रयुगपर्यन्ते चतुर्युगसहस्रपरिमितस्वनिशावसाने विष्णोरुत्थाय उत्पाद्यमिदं सिसृक्षतो विरिञ्चस्य अङ्गात् **अहं जज्ञे मरीच्यत्रिमुख्या ऋषयश्च तस्य प्राणेभ्यो जज्ञिर इत्येकान्वयः**॥ ३१॥

विष्णुनाम्नो यजमानादपि महतो विष्णोः अनुग्रहात् अप्रतिहतगमनः अस्खलितब्रह्मचर्यादिव्रतोऽहं त्रीन् लोकान् अन्तर्बहिश्च पर्येमि पर्यटामीत्येकान्वयः॥ ३२॥

---

1. A,B °प्त° 2. K,M °ष्णोः

**रा० कृ०** एतावत् पूर्वोक्तमात्रमुक्त्वा महत् व्यापकं भूतं सत्तात्मकं नभोलिङ्गम् आकाशशरीरं अलिङ्गम् प्राकृतरूपरहितम् ईश्वरं सर्वनियामकं तत् ब्रह्म उपरराम तूष्णीमासीत्। अहञ्च अनुकम्पितः **तस्याऽऽश्वासनेन** दयाविषयीकृतः। महतां महात्मनां ब्रह्मादीनामपि महीयसे महत्तराय शीर्ष्णा मस्तकेन अवनामं प्रणामं विदधे कृतवानस्मि॥ २६॥

हतत्रपः त्यक्तलज्जः। अहमिति शेषः। अनन्तस्य **अविच्छिन्नस्य** भगवतो नामानि पठन् गुह्यानि रहस्यानि भद्राणि मङ्गलरूपाणि कृतानि च चेष्टितानि च स्मरन् भावयन् गां भुवं पर्यटन् गतस्पृहः विगतकामः तुष्टमनाः सन्तुष्टान्तरङ्गः विमदः मदरहितः विमत्सरः मत्सररहितः कालं भौतिकशरीरवियोगकालं प्रतीक्षन् प्रतीक्षमाणः आसमिति शेषः॥ २७॥

हे ब्रह्मन्! एवं पूर्वोक्तप्रकारेण असक्तस्य प्रापञ्चिकविषयेषु अनासक्तस्य अमलात्मनः निर्मलान्तःकरणस्य ममेति शेषः। काले वर्षाकाले सौदामनी तटित् यथा मालाकारा विद्युदिव कालः मृत्युकालः प्रादुरभूत् गोचरोऽभूदित्यर्थः ॥ २८ ॥

तां पूर्वं भगवता प्रतिश्रुतां शुद्धां शुद्धसत्त्वात्मिकां भागवतीं भगवत्सेवानुकूलां तनुं शरीरं प्रति मयि प्रयुज्यमाने नीयमाने सति भगवतेति शेषः। प्रारब्धकर्मनिर्वाणः प्रारब्धकर्मनाशकः पाञ्चभौतिकः पञ्चभूतनिर्मितः देहः न्यपतत् भुवि पतितोऽभूत् ॥ २९ ॥

कल्पान्ते प्रलये इदम् एतत्त्रैलोक्यम् आदाय उपसंहृत्य उदन्वतः एकार्णवस्य अम्भसि जले शयाने श्रीमन्नारायणे शिशयिषोः शेतुमिच्छोः विभोः व्यापकस्य ब्रह्मणः अन्तः मध्यम् अनुप्राणं : उच्छ्वसनिशश्वासात्मकप्राणवायुम् अनुसृत्य अहं विविशे प्रविष्टोऽस्मि ॥ ३० ॥

सहस्रयुगपर्यन्ते चतुर्युगसहस्रस्य समाप्तौ उत्थाय इदं विश्वं सिसृक्षतः स्रष्टुमिच्छतः ब्रह्मणः प्राणेभ्यः प्राणवायुभ्यः मरीचिमिश्राः मरीचिप्रभृतयः ऋषयः प्रजापतयः अहं च जज्ञिरे जाताः स्मः ॥ ३१ ॥

अस्कन्दितव्रतः अखण्डितब्रह्मचर्यव्रतस्सन् महाविष्णोः अनुग्रहात् क्वचित् कुत्रापि अव्याहतगतिः अनिरुद्धगतिस्सन् त्रीन् लोकान् अन्तर्बहिश्च पर्येमि पर्यटामि ॥ ३२ ॥

**देवदत्तामिमां वीणां स्वरब्रह्मविभूषिताम् ।**
**मूर्छयित्वा हरिकथां गायमानश्चराम्यहम् ॥ ३३ ॥**

**प्रगायतस्स्ववीर्याणि तीर्थपादः प्रियश्रवाः ।**
**आहूत इव मे शीघ्रं दर्शनं याति चेतसि ॥ ३४ ॥**

**एतद्ध्यातुरचित्तानां मात्रास्पर्शेच्छया मुहुः ।**
**भवसिन्धुप्लवो *दृष्टो हरिचर्यानुवर्णनम् ॥ ३५ ॥**

**यमादिभिर्योगपथैः कामलोभहतो मुहुः ।**
**मुकुन्दसेवया यद्वत् तथाऽऽत्माऽद्धा न शाम्यति ॥ ३६ ॥**

**सर्वं तदिदमाख्यातं यत् पृष्टोऽहं त्वयानघ!**
**जन्मकर्मरहस्यं मे भवतश्चात्मतोषणम् ॥ ३७ ॥**

**सूत उवाच**

**एवं सम्भाष्य भगवान् नारदो वासवीसुतम् ।**
**आमन्त्र्य वीणां रणयन् ययौ यादृच्छिको मुनिः ॥ ३८ ॥**

**अहो देवर्षिर्धन्योऽयं यत्[5] कीर्तिं शार्ङ्गधन्वनः ।**
**गायन् माद्यन्निदं[6] तन्त्र्या रमयत्यातुरं जगत् ।। ३९ ।।**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
प्रथमस्कन्धे व्यासनारदसंवादे षष्ठोऽध्यायः ।। ६ ।।

---

1. K,M,ॐ °श्च 2. H,K,M,V एतदातुर° *'अदृष्ट' इति पाठः वीरराघवव्याख्यानुसारी 3 H,V °दैः 4 K,M यतिः
5. H,K,M,V,W यः की° 6 K,M माध्व्या गिरा; H,V माद्यन् गिरा

**श्रीध॰** नन्[1]ु किमिति पर्यटनम्[2]? ईश्वराज्ञया लोकमङ्गलार्थमित्याह — **देवदत्ता** मिति चतुर्भिः। देवेन ईश्वरेण दत्ताम्। स्वराः "**निषादर्षभगान्धारषड्जमध्यमधैवतपञ्चमाः**" इति सप्त। त एव ब्रह्म, ब्रह्माभिव्यञ्जकत्वात्। तेन विभूषिताम्। स्वतस्सिद्धसप्तस्वरामित्यर्थः। मूर्च्छयित्वा मूर्च्छनालापवतीं कृत्वा ।। ३३ ।।

स्वप्रयोजनमाह — **प्रगायत** इति ।। ३४ ।।

परप्रयोजनमाह — **एतद्[3]दिति**। मात्रा विषयाः तेषां स्पर्शाः भोगाः, तेषामिच्छया आतुराणि चित्तानि येषां तेषाम्। हरिचर्यानुवर्णनम् इति यत् एतदेव भवसिन्धोः[4] प्लवः पोतः। न केवलं श्रुतिप्रामाण्येन, किन्तु अन्वयव्यतिरेकाभ्यां दृष्ट एवेत्यर्थः ।। ३५ ।।

एतदेवेत्युक्तमवधारणम् अनुभवेन द्रढयति — **यमादिभिः** इति। यमादिभिः तथा न शाम्यति, यद्वत् मुकुन्दसेवया अद्धा साक्षादात्मा मनः शाम्यति। कथञ्चित् मुकुन्दसेवामात्रेण शाम्यति किं पुनः तिद्गुणवर्णनेनेति भावः ।। ३६ ।।

**सर्व** मिति। भवतो मनसः[5] परितोषकरं मम जन्मकर्मरहस्यं चाख्यातम्[6] ।। ३७ ।।

**एव** मिति। आमन्त्र्य अनुज्ञाप्य[7]। यादृच्छिकः स्वप्रयोजनसङ्कल्पशून्यः ।। ३८ ।।

हरिकथागायकनारदभाग्यं श्लाघते — **अहो** इति। माद्यन् हृष्यन्। तन्त्र्या वीणया ।। ३९ ।।

इति श्रीमद्भागवते प्रथमस्कन्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां षष्ठोऽध्यायः ।। ६ ।।

---

1 A,B omit ननु 2. A,B °सि 3 A,B °द्धीति 4 A °न्धौ 5 A मनःपरितोषकं; B मनःपरितोषकारणं 6 B च व्याख्यातम् 7 B °य

**वीर॰** देवेन भगवता ब्रह्मणा वा दत्ताः स्वराः **निषादर्षभगान्धारषड्जमध्यमधैवतपञ्चमाख्याः** सप्त, ते[1] एव ब्रह्म। तेन विभूषितां स्वरैः सन्निधापितेन ब्रह्मणा भगवता वा[2] विभूषितामिमां पाणिस्थां वीणां मूर्छयित्वा वादयित्वा

**मूर्छा** वीणादिवादनम् "वादने मूर्छना मता" इति वैजयन्तीकोशात् (3-9-131) हरिकथां गायमानोऽहम् एवं **चरामि** ॥ ३३ ॥

प्रियं भक्तानां प्रीत्यावहं श्रवः यशो यस्य। **तीर्थौ** पवित्रौ गङ्गादितीर्थाश्रयौ वा पादौ यस्य, तीर्थं पादे यस्येति वा। स भगवान् स्ववीर्याणि यशांसि प्रगायतो मम चेतसि आहूत इव शीघ्रं दर्शनं याति दृष्टो भवतीत्यर्थः ॥ ३४ ॥

तदेवमापृष्टं यथावत् अनुवर्ण्य अथ सर्वथा त्वं हरिचरित्राण्येव अनुवर्णय इत्यभिप्रायेण तापत्रयातुरजनानां भगवद्गुणवर्णनानुश्रवणम् अन्तरेण तापत्रयविघातुकं नोपायान्तरमस्तीत्याह — **एतदिति** द्वाभ्याम्। असकृत् **मात्रास्पर्शेच्छया** मात्राः शब्दादिविषयाः तासां स्पर्शेच्छया अनुभवतृष्णया आतुरं पीडितं चित्तं येषां तेषां जनानां भवसिन्धोः प्लवः पूरः। स हि यस्मात् कारणात् अदृष्टो नष्टो भवति, त[3]देतदेव किम्? हरिचर्याया अनुवर्णनमिति ॥ ३५ ॥

मुहुः कामलोभाभ्यां हत आत्मा मनः यद्वत् यथा मुकुन्दसेवया गुणानुश्रवणादिरूपया अद्धा स्फुटं शाम्यति कामादिरहितो भवति, तथा यमादिभिः योगमार्गैः न शाम्यति ॥ ३६ ॥

प्रश्नस्य उत्तरमुपसंहरति — **सर्वमिति**। हे अनघ! त्वया अहं यत् प्रतिपृष्टः तदेतत् सर्वमाख्यातम्। आख्यातमेव सङ्गृह्य दर्शयति। मे मम जन्मकर्मणोः रहस्यं तथा भवतः तव आत्मा मनः तुष्यते येन, तच्च तत्सर्वम् आख्यातमित्यन्वयः ॥ ३७ ॥

व्यासनारदसंवादमुपसंहरति सूतः **एव**मिति। एवम् इत्थं सम्भाष्य भगवान् नारदो मुनिः वासवीसुतम् उपरिचरवसुवीर्यजायाः सत्यवत्याः सुतं व्यासं आमन्त्र्य आपृच्छ्य, वीणां रणयन् ध्व[4]नयन् यादृच्छिकः स्वेच्छानुचारी ययौ ॥ ३८ ॥

देवर्षिं स्तौति — **अहो** इति। धन्यत्वं स्वस्य परस्य च सुखापादकत्वम्। तदेवाऽऽह यो देवर्षिः **शार्ङ्गधन्वनो** भगवतः कीर्तिं गायन् **तन्त्र्या** वीणया माद्यन् मदं प्राप्नुवन् स्वयं वीणास्वनजहर्षमग्नस्सन् इत्यर्थः; आतुरं तापत्रयातुरं जगदपि रमयति सुखयति ॥ ३९ ॥

इति श्रीमद्भागवते प्रथमस्कन्धे
श्रीवीरराघवविदुषा लिखितायां श्रीभागवतचन्द्रचन्द्रिकायां
व्याख्यायां षष्ठोऽध्यायः ॥ ६ ॥

---

1. A omits ते 2. A,B omit वा 3. A,B तदेव 4. A,B omit ध्वनयन्

**विज॰** तदेवाऽऽह — **देवे**ति। स्वरब्रह्मविभूषितां सप्तस्वरलक्षणां वेदेनालङ्कृतां नाम्ना देवदत्ताम् इमां वीणां मूर्च्छयित्वा स्वराणाम् आरोहणावरोहणक्रमो मूर्च्छा, मूर्च्छनां गतिं कारयित्वा हरिकथां गायमानोऽहं चरामि **इत्यन्वयः** ॥ ३३ ॥

तीर्थं गङ्गाख्यं पादे यस्य स तीर्थपात् तस्य। वीर्याणि चरितलक्षणानि प्रकृष्टं गायतः चशब्दः एवार्थे। **एवमुपासकस्यैव मम चेतसि** प्रियश्रवाः भगवान् आहूत इव शीघ्रमविलम्बितं दर्शनं याति अपरोक्षो **भवतीत्यन्वयः** ॥ ३४ ॥

हरिचर्यानुवर्णनं समाधिभाषया भगवच्चरितवर्णनं यत् तदेतत्, मुहुः मात्रास्पर्शेच्छया तत्प्राप्तिनिमित्तम् आतुरचित्तानां क्लिष्टमनसां पुंसां भवसिन्धुप्लवः संसारसागरतरीविशेषो दृष्टः साक्ष्यादिप्रमाणैरिति शेषः, इति यस्मात् **तस्मात् सात्त्विकहिताय सैव** वर्णनीयेति भावः ॥ ३५ ॥

**तर्हि यमादियोगानुष्ठानविधानं व्यर्थम्** इति, तत्राऽऽह — **यमादिभि** रिति। मुकुन्दकथासेवया यथा आत्मा जीवः **अञ्जसा शाम्यति** भगवन्निष्ठबुद्धिमान् भवति, तथा कामलोभाभ्यां वैरिभ्यां हतः पीडितः अनुष्ठितैः योगमार्गैः **यमादिभिः अद्धा** न शाम्यति। तस्मात् हरिकथासेवैव संसारतरी इत्येकान्वयः ॥ ३६ ॥

उपसंहरति **सर्व** मिति। अतीतजन्मविषयत्वात् रहस्यं मम जन्म, कर्म प्रत्यहं त्वया पृष्टः तदिदं सर्वमाख्यातं **तुभ्यमिति** शेषः। कीदृशम्? नित्यसन्तुष्टस्य तवापि भवतः आत्मनो मनस्तोषणं तुष्टिजनकं भवतः आख्यातमिति वा। **चशब्दो** जन्मकर्मणोः समुच्चये। **श्रोतॄणामात्मनां** जीवानां तृप्तिजनकमिति वा ॥ ३७ ॥

**सूतो** व्यासनारदसंवादं शौनकादीन् ब्रूत इत्याह — **एव** मिति। वासवीसुतं सत्यवत्याः पुत्रं व्यासम् एवं **पूर्वोक्तप्रकारेण सम्भाष्य** उक्त्वा, गच्छामि इत्यामन्त्र्य, आज्ञां गृहीत्वा, वीणां रणयन् ध्वनयन् ययौ। यादृच्छिकः **अतर्कित**[1]**गमनागमनो** यतिः निर्जितेन्द्रियग्रामः ॥ ३८ ॥

**शार्ङ्गधन्वनो** हरेः **कीर्तिं माध्व्या** मधुरया गिरा **तन्त्र्या** वीणया गायन् आतुरं क्लिष्टं जगत् रमयति यः, **सोऽयं देवर्षिः नारदो** धन्यः कृतकृत्यः। अहो आश्चर्यमेतत्, शूद्रयोनेरपि एतादृशमाहात्म्यमभूदिति। नारं ज्ञानं ददातीति नारदः। अरदो **दोषदो** न भवतीति वा। आरवत् अङ्गारकवत् आयुःखण्डको न भवतीति वा। दो अवखण्डने ॥ ३९ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
**श्रीविजयध्वजतीर्थविरचितायां** पदरत्नावल्यां टीकायां
**प्रथमस्कन्धे षष्ठोऽध्यायः** ॥ ६ ॥

---

1. A,B add तत्

**रा० कृ०** देवदत्तां भगवद्दत्तां स्वरब्रह्मविभूषितां स्वराः निषादादयः त एव ब्रह्म तेन विभूषितामिमां वीणां सप्ततन्त्रीं मूर्च्छयित्वा स्वराणां मूर्छनाः प्रापय्य हरिकथां विष्णुकथां गायमानोऽहं चरामि ॥ ३३ ॥

**स्ववीर्याणि** स्वस्य यशांसि प्रगायतः प्रकर्षेण गायतः **मे** मम **चेतसि** मनसि **प्रियश्रवाः** भक्तप्रीतिकरकीर्तिमान् **तीर्थपादः** पादे गङ्गादितीर्थवान् भगवान् इति शेषः। आहूत इव शीघ्रं दर्शनं याति दृष्टो भवतीत्यर्थः ॥ ३४ ॥

मुहुः पुनःपुनः **मात्रास्पर्शेच्छया** विषयभोगेच्छया **आतुरचित्तानां** तदेकानुरक्तमनसां, जनानामिति शेषः। **एतत् हरिचर्यानुवर्णनं** हरिलीलानिरन्तरवर्णनं **भवसिन्धुप्लवः** संसारसागरतरणे पोतः इति **दृष्टः** ज्ञातः॥ ३५॥

मुहुः **कामलोभहतः** कामलोभाभ्यां मलिनीकृतः **आत्मा** अन्तःकरणं, **यद्वत्** यथा **मुकुन्दसेवया शाम्यति** शान्तिं प्राप्नोति, तथा **यमादिभिः** यमनियमादिभिः **योगपथैः** योगमार्गैः **अद्धा** साकल्येन **न शाम्यति**॥ ३६॥

हे **अनघ!** भवतः तव **आत्मतोषणं** मनस्सन्तोषकारणं **मे** मम **जन्मकर्मरहस्यं** जन्मकर्मणोः रहस्यं **प्रति यदहं** त्वया पृष्टः, तदिदं **सर्वम् आख्यातं** तुभ्यं कथितमित्यर्थः।

अत्र महद्भूतं ओंकारस्वरूपं ब्रह्मैव। तस्य **निश्श्वसितं** ऋग्वेद इति **वेदे** कथ्यते। यथा — "एतस्य वाऽक्षरस्य महतो भूतस्य निश्श्वसितमेतदृग्वेदः" (मैत्रा. उ. 6-32) इति, शिरसा अवनाममकरवम् इत्यनेन समीकृतजयापजयः साधनमार्गः सूच्यते। अयमेव योगः। उक्तं च भगवता — "योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय! सिद्ध्यसिद्ध्योस्समो भूत्वा समत्वं योग उच्यते॥" (भ. गी. 2-47)। गतत्रपः इत्यनेन प्रयत्नवैफल्यजनितलज्जा गलितेति ज्ञायते। अनन्तस्य नामानीत्यनेन सृष्टिनामान्येव भगवतो नामानीत्युक्तं भवति। अन्तर्यामिणो भगवतः आनन्दमयत्वज्ञानेन स्वस्यापि तुष्टमनस्त्वं, ततश्च शुद्धसत्त्वमयात्मनः कृष्णमयबुद्धेः तस्य इन्द्रियविषयेष्वपि असङ्गः।

भागवतदेहश्च शुद्धसत्त्वमयः भगवदनुभवपरिपूर्णः अभौतिकः सर्वान्तर्यामी च। सत्यवसरे सः भौतिकोऽपि भवति। "न्यपतत् पाञ्चभौतिकः" (**भाग. 1-6-29**) इत्यनेन तस्य अनायासमरणं, निरन्तरभगवत्स्मृतिप्रवाहश्च सूच्येते। एकार्णवस्य जलेन प्राणिप्रज्ञासमाहारः प्रलयकालोपसंहृतः गम्यते। तादृशनरसम्बन्धिज्ञानस्य अयनत्वादेव भगवतो नारायणसंज्ञा अन्वर्था।

"अनुप्राणं विभोरन्तरहं प्राविशम्" इत्यत्र निश्श्वासः ब्रह्माविर्भावस्य, **उच्छ्वासः** नारायणलीनतायाश्च **सङ्केतौ।** तेन ब्रह्मणा सह नारदो लीनोऽभूदिति व्यज्यते। पुनरपि स नारदः **अन्तर्यामिशीलभागवतदेहधारी व्यक्तसृष्टौ** प्रतिव्यक्ति प्रज्ञारूपेण अन्तर्वर्तते। ब्रह्मणः प्राणेभ्यो जाताः सप्तर्षयः, जीवकण्ठनिर्गतानां सप्तस्वराणां, तदुत्पत्तिकारणान्तर्यामिप्रज्ञानां च सङ्केताः। तथा च हरिनामगानपरवशानाम् अन्तः नारदप्रज्ञया सम्बन्धः। नारदवाद्यमानवीणया जीवस्य कशेरुका (मेरुदण्डः) सूच्यते। पृष्ठास्थिसमाश्रितनाडीमण्डलजायमानाः शब्दाः सङ्कल्पतया सम्भवन्ति। उच्छ्वसनिश्श्वाससाहाय्येन कण्ठनादः उदेति। एतद्विषयसामग्रीपर्यालोचनया प्रणवोपदेशवेलायाम् उपदेशकोपदिष्टयोः अन्तः नारदो वर्तते। सर्वप्राणिषु विष्णुं पश्यताम् अन्तः नारदप्रज्ञा जागरूका वर्तते।

अस्कन्दितव्रतं च ब्रह्मचर्यमेव। तच्च ब्रह्मप्रज्ञायाः सङ्केतः। भगवतो दयया नारदः प्राणिषु **ब्रह्मप्रज्ञाकारणान्तः** चरति। अन्तर्बहिश्च **पर्यटति** इत्यनेन अन्तस्स्फूर्त्या मनसि, भौतिकस्वरूपसन्दर्शनेन बहिश्च प्राणिनां

हरिपदं दर्शयति। त्रिषु लोकेषु महाविष्णोः कृपया अयमव्याहतगतिः इत्यनेन साधकस्य आत्मनः मनसः भौतिकदेहस्य च गोचरीभवतीति ज्ञायते। एवं नारदवीणावादनेन प्राणिनामन्तः ब्रह्मप्रज्ञाप्रबोधनं गम्यते॥ ३७॥

भगवान् नारदः मुनिः एवं पूर्वोक्तप्रकारेण वासवीसुतं कृष्णद्वैपायनं सम्भाष्य कथयित्वा, आमन्त्र्य गच्छामीति आपृच्छ्य वीणां रणयन् वादयन् यादृच्छिकः स्वप्रयोजनसङ्कल्पशून्यस्सन् ययौ अगच्छत्॥ ३८॥

यः नारदः शार्ङ्गधन्वनः भगवतो हरेः कीर्तिं गायन् माद्यन् स्वयं हृष्यन् आतुरं विषयव्याकुलमिदं जगत् तन्त्र्या रमयति सुखयति। अहो इत्याश्चर्यम्। सोऽयं देवर्षिः नारदः धन्यः कृतकृत्यः॥ ३९॥

इति श्रीमद्भागवते प्रथमस्कन्धे

श्रीराधाकृष्णप्रणीतायां सुधीसुधायां व्याख्यायां

षष्ठोऽध्यायः॥ ६॥



# सप्तमोऽध्यायः

## शौनक उवाच

निर्गते नारदे सूत! भगवान् बादरायणः ।
श्रुतवांस्तदभिप्रेतं ततः किमकरोद्विभुः ॥ १ ॥

## सूत उवाच

ब्रह्मनद्यां[1] सरस्वत्यां[2]माश्रमः पश्चिमे तटे ।
शम्याप्रास इति प्रोक्त[3] ऋषीणां सत्त्रवर्धनः ॥ २ ॥

तस्मिन् स्वे[4] आश्रमे व्यासो[5] बदरीषण्ड[6]मण्डिते ।
आसीनोऽप उपस्पृश्य प्रणिदध्यौ मनः स्वयम्[7] ॥ ३ ॥

भक्तियोगेन मनसि सम्यक् प्रणिहितेऽमले ।
अपश्यत् पुरुषं पूर्वं[8] मायां च तद[9]पाश्रयाम्[10] ॥ ४ ॥

यया सम्मोहितो जीव आत्मानं त्रिगुणात्मकम् ।
परोऽपि मनुतेऽनर्थं तत्कृतं चाभिपद्यते ॥ ५ ॥

अनर्थोपशमं साक्षाद्भक्तियोगमधोक्षजे ।
लोकस्याजानतो विद्वांश्चक्रे सात्वतसंहिताम् ॥ ६ ॥

यस्यां वै श्रूयमाणायां कृष्णे परमपूरुषे ।
भक्तिरुत्पद्यते पुंसः[11] शोकमोहभयापहा ॥ ७ ॥

स संहितां भागवतीं कृत्वाऽनुक्रम्य चात्मजम् ।
शुकमध्यापयामास निवृत्तिनिरतं मुनिः[12] ॥ ८ ॥

---

1 H.K.M.V °द्याः 2 H.K.M.V °त्या आ° 3 H V ख्यात 4 H V मुख्याश्रमे 5 W रम्ये 6 K.M °ख° 7 K.M चिरम्
8 B.I.K.M °र्णं 9 B.H.N.V °दु° 10 I °यम् 11 K.M W °सां 12 H.K.M V.W °निम्

## श्रीधरस्वामिविरचिता भावार्थदीपिका

अथ भागवतश्रोतुर्जन्म वक्तुं परीक्षितः ।
सुप्तबालवधाद्द्रौणेर्दण्डस्सप्तम उच्यते ॥

**निर्गत** इति। [1]विभुः समर्थः तस्य नारदस्य अभिप्रेतं [2]तत्तात्पर्यविषयार्थं श्रुतवान् सन्॥ १॥

**ब्रह्मेति।** [3]ब्रह्मनद्याः [4]ब्रह्मदैवत्यायाः ब्राह्मणैः [5]अन्विताया वा। सत्त्वं कर्म वर्धयतीति तथा॥ २॥

**तस्मिन्निति।** बदरीणां षण्डेन समूहेन मण्डिते [6]आश्रमे स्वीयाश्रमे मनः प्रणिदध्यौ स्थिरीचकार, "समाधिनाऽनुस्मर तद्विचेष्टितम्" (भाग. 1-5-13) इति नारदोपदिष्टं ध्यानं कृतवानित्यर्थः॥ ३॥

**भक्तीति।** प्रणिहिते निश्चले। अत्र हेतुः — भक्तियोगेन अमले। पूर्वं प्रथमं पुरुषम् ईश्वरमपश्यत्। पूर्णमिति वा पाठः। [7]तदुपाश्रयाम् ईश्वराश्रयां तदधीनां मायां चापश्यत्॥ ४॥

ईशमायाकृतां च जीवानां. संसृतिमपश्यत् इत्याह — **ययेति**। यया [8]सम्मोहितः स्वरूपावरणेन विक्षिप्तः परोऽपि [9]गुणत्रयाद्व्यतिरिक्तोऽपि तत्कृतं त्रिगुणत्वाभिमानकृतम् अनर्थञ्च कर्तृत्वादिकं प्राप्नोति॥ ५॥

**अनर्थेति।** अनर्थमुपशमयति यः अधोक्षजे साक्षाद्भक्तियोगः, तं च अपश्यत्। एतत्सर्वं स्वयं दृष्ट्वा एवमजानतो लोकस्यार्थे सात्वतसंहितां श्रीभागवताख्यां चक्रे। तदनेन [10]श्लोकेन भागवतार्थः संक्षेपतो दर्शितः। एतदुक्तं भवति — "[11]विद्याशक्तिः मायानियन्ता नित्याविर्भूतपरमानन्दस्वरूपः सर्वज्ञः सर्वशक्तिरीश्वरः तन्मायया सम्मोहितः तिरोभूतस्वरूपः तद्विपरीतधर्मा जीवः तस्य च **ईश्वरभक्त्या** लब्धज्ञानेन मोक्ष" इति। तदुक्तम् विष्णुस्वामिना "ह्लादिन्या संविदाश्लिष्टः सच्चिदानन्द ईश्वरः। स्वाविद्यासंवृतो जीवः [12]सः क्लेशनिकराकरः॥" तथा "स ईशो यद्वशे माया स जीवो यस्तयाऽर्दितः। स्वाविर्भूतपरानन्दः स्वाविर्भूतसुदुःखभूः॥ स्वादृगुत्थविपर्यासभवभेदजभीशुचः। यन्मायया जुषन्नास्ते तमिमं नृहरिं नुमः" इत्यादि॥ ६॥

संहितायाः अनर्थोपशामकत्वं दर्शयति — **यस्या** मिति। यस्यां वै श्रूयमाणायामेव, किं पुनश्श्रुतायामित्यर्थः॥ ७॥

**स** इति। अनुक्रम्य शोधयित्वा॥ ८॥

---

1 A,B omit विभुः समर्थः 2 A,B omit तत्तात्पर्यविषयार्थं 3 A,B °द्यां 4 A,B °यां 5 A आश्रितायां च; B अन्विताया वा 6 A,B omit आश्रमे स्वीयाश्रमे 7 B °द° 8 B adds मायया · 9 A,B °द्य° 10 A,B श्लोकत्रयेण 11 A B °शक्त्या 12 A,B संक्ले°

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

वासवीसुतम् आमन्त्र्य नारदो ययौ इत्युक्तम्, ततः उपरितनं व्यासवृत्तान्तं पृच्छति शौनकः — **निर्गत** इति। हे सूत! तदभिप्रेतं "किं वा भागवता धर्मा न प्रायेण निरूपिताः" (भाग. 1-4-31) इत्युत्प्रेक्षितमेव। नारदस्याभिप्रेतं श्रुतवान् भगवान् मुनिः बादरायणो नारदे निर्गते सति [1]ततः **किमकरोत्?**॥ १॥

इत्थमापृष्ट आह सूतः — **ब्रह्मनद्या** मित्यादिभिः सप्तभिः। ब्रह्मनद्यां ब्रह्मर्षिभिः सेवितायां नद्यां सरस्वत्याख्यायां पश्चिमे तटे शम्याप्रास इति प्रसिद्धो व्यासस्याश्रमः, स[2] च ऋषीणां सत्त्ववर्धनः सत्त्वाणि वर्धन्तेऽस्मिन्निति तथा ॥ २ ॥

तस्मिन् बदरीणां वृक्षाणां षण्डैः[3] मण्डिते आश्रमे शम्याप्रासे व्यासः अप उपस्पृश्य आचम्य स्वयमात्मना **मनः** प्रणिदध्यौ, विषयान्तरेभ्यः प्रत्याहृत्य आत्मस्थमकरोदित्यर्थः ॥ ३ ॥

भगवद्भक्तियोगेन अमले मनसि सम्यक् प्रणिहिते समाहिते पूर्वं तावत् पुरुषं परमपुरुषमपश्यत्। ततः तदपाश्रयां पुरुषापाश्रयां त[4]दाधारां तच्छरीरभूतामिति यावत्। मायामपश्यत् ॥ ४ ॥

मायां विशिनष्टि — **ययेति**। परोऽपि मायाख्यप्रकृतेः विलक्षणोऽपि जीवो यया मायया मोहितः त्रिगुणात्मकं गुणत्रयपरिणामात्मकं शरीरमेव आत्मानं मनुते मन्यते, तत्कृतं देहात्मभ्रमकृतम् अनर्थं च तापत्रयस्वरूपं प्रतिपद्यते ॥ ५ ॥

किञ्च अनर्थोपशमं तापत्रयरूपानर्थोपश[5]ामकात्मकम् उपायम् अजानतो लोकस्य **अधोक्षजे भक्तियोगमेवानर्थोपशमं** विद्वान् सर्वज्ञानवान् व्यासः अपश्यदित्यनुषङ्गः। भगवद्भक्तियोगमेव अनर्थोपशमनोपायत्वेन निश्चितवानित्यर्थः। ततः सात्वतसंहितां श्रीभागवतरूपां संहितां चक्रे। संहिता सन्दर्भविशेषः, सात्वतशब्दस्तु पुरस्तादेव निरुक्तः ॥ ६ ॥

तामेव विशिनष्टि — **यस्या** मिति। यस्यां सात्वतसंहितायां श्रूयमाणायां शोकाद्यपहर्तरि परमपुरुषे कृष्णे भक्तिरुत्पद्यते। तत्र मोहो नाम "अनात्मन्यात्मबुद्धिर्या अस्वे स्वमिति या मतिः" (विष्णु. पु. 6-7-11) इत्युक्तविधः। शोको बाह्यक्लेशः, दुःखमान्तरः, भयमागामिदुःखदर्शनजं प्रतिकूलं ज्ञानम्। पूरुष इति **दीर्घश्छान्दसः** ॥ ७ ॥

स व्यासोऽनुक्रम्य विवक्षितार्थान् क्रमविशेषेण विन्यस्य तदनुक्रमेणैव इमां संहितां कृत्वा सुतं शुकमध्यापयामास। प्रश्नावसरदानाय शुकं विशिनष्टि। निवृत्तिनिरतं सांसारिकधर्मवैमुख्यद्वारा केवलचित्तैकाग्र्यावह[6]ः शमदमादिर्निवृ[7]त्तिः तत्र निरतं मुनिं **परब्रह्मयाथात्म्यमननशीलम्** ॥ ८ ॥

---

1 A,B omit ततः 2 A,B सर्वर्षी° 3 A,B ख° 4 A,B तदाधेयां 5 A,B °शमना° 6 A °वहश° 7 A,B °दिभिर्नि°

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

भागवतकरणापदेशेन भगवति भक्तिः तन्माहात्म्यञ्च प्रतिपाद्यते अस्मिन्नध्याये — **निर्गत** इति। तदभिप्रेतं भागवतकारणं तस्य नारदस्य वा, ततो नारदनिर्गमनानन्तरम् ॥ १ ॥

लकुटीकृतशम्यानामयज्ञीयतरुशाखापतितस्थले कृतशालान्तर्यज्ञकरणात् शम्याप्रास इति लोके रूढिः। सत्त्वं वर्धयति अधिकफलं करोतीति सत्त्ववर्धनः ॥ २ ॥

ऋष्य्[1]युपयोगयोग्यफलबदरीवृक्षसमूहालङ्कृते ऋषिसामान्याश्रमे अतीतानागतवर्तमानानन्तकोटि ब्रह्माण्डबाह्याभ्यन्तरवर्त्यपरिमितपदार्थान् अशेषविशेषैस्सह करतलामलकवत् सततमपरोक्षीकुर्वतश्चिरं मनः प्रणिधानमसुरजनमोहनायेति **बोद्धव्यम्** ॥ ३ ॥

ध्यानेन किं लब्धमभूदिति तत्राऽऽह — **भक्तीति**। भक्तियोगेन सम्यगेकाग्रतया हरौ प्रणिहिते सम्यक् स्थापिते अमले रागादिदोषरहिते सतां पुरुषाणां मनसि प्रत्यक्षीभवन्तं पूर्णं देशतः कालतो गुणतश्च अपरिच्छिन्नं पुरुषं परमात्मानं जीवानां संसारकरीं मायां बन्धकशक्तिञ्च तदपाश्रयां तस्य हरेः अधीनां अपश्यदित्येकान्वयः। प्रकृतिपुरुषौ विविक्ततया द्रष्टुं लोकानां मनसि सम्यक् प्रणिहिते सति शक्यौ इत्यपश्यदिति वा। एतदभिप्रायेण तदपाश्रयामित्युक्तम्। ततोऽपगत्य आश्रित्य स्थितां "स्थातुमीक्षापथेऽमुया" (भाग. 2-5-13) इति वक्ष्यति ॥ ४ ॥

अनिर्वाच्या अविद्या माया नाम। अतः कथं बन्धकशक्तिः इयमित्याशङ्क्य अनिर्वाच्यायाः अर्थक्रियायोगात् अस्याः तद्दर्शनादत्र बन्धकशक्तिरेवोच्यत इत्यभिप्रेत्याऽऽह — **ययेति**। परोऽपि त्रिगुणात्मकप्रकृतेरन्योऽपि यया सम्मोहितो जीव आत्मानं त्रिगुणात्मकं त्रिगुणोपादानकदेहरूपं मनुते, तत्कृतं मायाकृतं तादृशमानकृतं वा जननमरणाद्यनर्थमहं कर्तेत्यनर्थं चाभिपद्यत इत्यन्वयः। तस्मादेवंविधमायाबन्धनिवर्तकमपरोक्षज्ञानद्वारा भक्तियोगमद्राक्षीदिति भावः ॥ ५ ॥

ततः किमकरोदिति तत्राऽऽह — **अनर्थेति**। तन्निवृत्तिसाधनमाहेति वा अनर्थेति। साक्षादाहेति इष्टानिष्टप्राप्तिपरिहारोपायमजानतो लोकस्य सात्त्विकप्रकृतेः बन्धकशक्तिनिमित्तमनर्थमुपशमयति नाशयति **इत्यनर्थोपशममधोक्षजे भक्तियोगं विद्वान्** महत्त्वज्ञानपूर्वकप्रेमलक्षणभक्तियोगप्रदर्शनाय सात्वतसंहितां चक्रे इत्येकान्वयः ॥ ६ ॥

अनया कथं भक्तिरुत्पद्यत इति तत्राऽऽह — **यस्या** मिति ॥ ७ ॥

अनुक्रम्य संशोध्य न त्ववद्यबुद्ध्या। निवृत्तिनिरतमित्यस्य फलाभिसन्धिरहितमित्यर्थः ॥ ८ ॥

---

1. K ऋषिभक्षणयो°

## श्रीराधाकृष्णप्रणीता सुधीसुधा

हे सूत! नारदे निर्गते स्वाश्रमात् अन्यत्र गते सति विभुः समर्थः भगवान् बादरायणः तदभिप्रेतं तस्य नारदस्य अभीप्सितं भगवल्लीलावर्णनरूपं श्रुतवान् सन् ततः तदनन्तरं किमकरोत्? ॥ १ ॥

ब्रह्मनद्याः ब्रह्मदैवत्यायाः सरस्वत्याः नद्याः पश्चिमे तटे तीरे ऋषीणां सत्त्ववर्धनः शम्याप्रास इति ख्यातः आश्रमोऽस्तीति शेषः ॥ २ ॥

बदरीषण्डमण्डिते बदरीणां षण्डेन समूहेन मण्डिते अलङ्कृते तस्मिन् स्वीयाश्रमे आसीनो व्यासः अप उपस्पृश्य स्वयं परप्रेरणं विनैव मनः प्रणिदध्यौ स्थिरीचकार॥ ३॥

भक्तियोगेन अमले निर्मले विषयवासनारहिते इत्यर्थः। अत एव सम्यक् प्रणिहिते निश्चले मनसि पूर्वं प्रथमं पुरुषम् ईश्वरमपश्यत्। अनन्तरं यया मायया सम्मोहितः स्वरूपावरणेन विक्षिप्तः जीवः परोऽपि गुणत्रयात् व्यतिरिक्तोऽपि आत्मानं त्रिगुणात्मकं गुणत्रयकार्यभूतं देहेन्द्रियादिरूपं मनुते। तत्कृतं त्रिगुणत्वाभिमानकृतम् अनर्थं च कर्तृत्वादिकं चाभिपद्यते प्राप्नोति। तां तादृशीं तदुपाश्रयाम् ईश्वराधीनां मायां चापश्यत्।

शरीरेन्द्रियाणाम् उत्पत्तिविकासवयःपरिणामभावनाशक्त्यादयः सर्वप्राणिसाधारणाः न स्वायत्ताः। न वा स्वयं जीवः तेषां कर्ता। नापि स्वाश्रयभूतः आकाशस्स्वीयः। एवं सः साकल्येन पराधीनः। सर्वमपि सर्वान्तर्याम्यधीनमेव स्वकर्तव्यकर्माण्यपि ईश्वराधीनमायाजन्यानि। स्वभुक्ताहारः शरीराङ्गेषु अभिव्याप्य शक्तिं प्रयच्छति। सा शक्तिः कार्यान्ते स्वशरीरादनुपदं बहिरागत्य, स्वनिवासमाकाशमाश्रयति। एवं स्थिते चाऽऽत्मना क्रियमाणानां कर्मणां तत्फलानां च कर्तृत्वभोक्तृत्वादेः आत्मन्यारोपणमहङ्कारविमूढत्वमेव।

लोके हि कस्यचिद्धनिनः विपणौ नियुक्तः, तत्परोक्षे क्रयविक्रयादिव्यवहारनिमित्तभूतो जनः न स्वतन्त्रः। यदि स्वातन्त्र्यमवलम्ब्य तद्व्यवहारं स्वायत्तीकरोति, तर्हि सः बध्यते बाध्यते च। एवम् आत्मजीवनाश्रयभूता सृष्टिः सर्वान्तर्यामिसम्बन्धिनी। अन्तर्यामिणश्चादर्शनात् कर्तृत्वभोक्तृत्वादेः आत्मन्यारोपणं बन्धदुःखयोः कारणं भवति॥ ४, ५॥

अनर्थोपशमं पूर्वोक्तानर्थनिवर्तकम् अधोक्षजे भगवति साक्षात् भक्तियोगम् अपश्यदिति पूर्वेणान्वयः। एतत्सर्वं स्वयं दृष्ट्वा विद्वान् व्यासः एवमजानतो लोकस्यार्थे सात्वतसंहितां श्रीमद्भागवतं चक्रे॥ ६॥

यस्यां भागवतसंहितायां श्रूयमाणायां सत्यामेव पुंसः शोकमोहभयापहा भक्तिः परमपूरुषे कृष्णे उत्पद्यते। एतादृशीं भागवतीं संहितां स व्यासः कृत्वा अनुक्रम्य आनुपूर्व्येण संशोध्य निवृत्तिनिरतं मुनिम् आत्मजं शुकम् अध्यापयामास॥ ७, ८॥

**शौनक उवाच**

**स वै निवृत्तिनिरतस्सर्वत्रोपेक्षको मुनिः।**
**कस्य वा बृहतीमेतामात्मारामस्समभ्यसत्॥ ९॥**

**सूत उवाच**

**आत्मारामाश्च मुनयो निर्ग्रन्था[1] अप्युरुक्रमे।**
**कुर्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरिः॥ १०॥**

हरेर्गुणाक्षिप्तमतिर्भगवान् बादरायणिः ।
अध्यगान्महदाख्यानं नित्यं विष्णुजनप्रियः[2] ॥ ११ ॥

परीक्षितोऽथ राजर्षेर्जन्मकर्मविलापनम्[3] ।
संस्थां[4] च पाण्डुपुत्राणां वक्ष्ये कृष्णकथोदयम्[5] ॥ १२ ॥

---

1. K,M निर्ग्राह्या 2. K,M °यम् 3. H,N,V °य° 4. H,V,W संस्थानं पा° 5. K,M °याम्; WF °यात्

**श्रीध०** **स** इति। कस्य वा हेतोः बृहतीं विततताम् ॥ ९ ॥

**आत्मेति**। निर्ग्रन्थाः ग्रन्थेभ्यो निर्गताः। तदुक्तम् गीतासु — "यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति। तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥" (भ. गी. 2-52) इति। यद्वा ग्रन्थिरेव ग्रन्थः, निवृत्तः[1] क्रोधाहङ्कारूपो ग्रन्थिः येषां ते निवृत्तहृदयग्रन्थय इत्यर्थः। ननु मुक्तानां किं भक्त्या इत्यादिसर्वाक्षेपपरिहारार्थमाह इत्थंभूतगुण इति ॥ १० ॥

ननु भक्तिं कुर्वन्तु नाम, एतच्छास्त्राभ्यासे शुकस्य किं कारणमित्यत आह — **हरे** रिति। अध्यगात् अधीतवान्। विष्णुजनाः प्रियाः यस्येत्यर्थः। एतद्[2]व्याख्यानादिप्रसङ्गेन तत्सङ्गा[3]भिकाम इति भावः। एतेन "तस्य पुत्रो महायोगी" (भाग. 1-4-4) इत्यादिना शुकस्य व्याख्याने प्रवृत्तिः कथमिति यत् पृष्टं तस्योत्तरमुक्तम् ॥ ११ ॥

यदन्यत्पृष्टं परीक्षितः प्रायोपवेशं[4]श्रयणं "तस्य जन्म महाश्चर्यम्" (भाग. 1-4-9) इत्यादिना तस्योत्तरं वक्तुमाह — **परीक्षित** इति। विलयनं[5] मुक्तिं मृत्युं वा। संस्थां महाप्रस्थानं, श्रीकृष्णकथानामुदयो यथा भवति तथा ॥ १२ ॥

---

1. A,H,V omit निवृत्तः ..... ग्रन्थिः येषां ते 2. A,B omit एतत् 3. A,B °त्सङ्गति° 4. A,B °शेन श्रवणं 5. B °प°

**वीर०** तत्र लब्धावसरः पृच्छति शौनकः — **स** इति। वा इत्यवधारणे। निवृत्तिनिरतः मुनिः, अत एव सर्वत्र श्रोतव्येषु अध्येतव्येषु चोपेक्षकः आदररहितः आत्मारामः परमात्मैकपरः एवंविधः। कस्य वा हेतोरिति शेषः। कस्माद्धेतोः बृहतीं विपुलामेतां संहिताम् अभ्यसत् अधीतवान्। कथमेकाग्रचित्तो भगवन्मननपरः तद्विरोधिनीमेतां बृहतीं संहितां अभ्यसदिति प्रश्नाशयः ॥ ९ ॥

नेयं संहिता भगवन्मननविरोधिनी, प्रत्युत तदुपयुक्तभगवत्स्वरूपरूप[1]गुणविवरणरूपत्वात् अतोऽधीतवान् इत्युत्तरं वक्तुं तावद्भक्तेः[2] स्वरूपगुणविषयकतामाह सूतः — **आत्मारामा** इति। यद्यपि मुनयः आत्मारामाः परमात्मैकनिष्ठाः, अत एव निर्ग्रन्थाः लौकिककार्थप्रबन्धधारणरहिताः। अनिर्ग्राह्या इति पाठे अशिक्षणीया अपरप्रेष्या[3]ः

निरपेक्षाः[4] इत्यर्थः। तथाऽपि ते उरुक्रमे भगवति अहैतुकीम् अनन्यप्रयोजनां **भक्तिं** कुर्वन्ति। **सविषयाया भक्तेः स्वरूपमाह — इत्थमिति।** इत्थम्भूता एवंविधा गुणा यस्य तथाविधो हरिरिति, एवंविधां भक्तिं कुर्वन्तीत्यन्वयः। हरिः एवंविधगुणैकैतत्स्वरूपक[5] इति इत्थं[6] समनुध्यानात्मकत्वात् भक्तेः तत्र भजनीयस्वरूपगुणविषयकज्ञानस्य अपेक्षितत्वात् तद्विवरणरूपामिमां संहितामधीतवानिति भावः॥ १०॥

तदेवाऽऽह — **हरे** रिति। हरेः गुणैः वेदान्तेभ्यः अवगतैः अनुभूयमानैः गुणैः आक्षिप्ता आकृष्टा मतिः यस्य स भगवान् बादरायणिः शुकः नित्यं विष्णुजनप्रियः अहर्दिवमाख्यानमध्यगात्[7] अधीतवान्। हरेरिति हरेः गुणाक्षिप्तमतिः विष्णुजनप्रियः इतीदं विशेषणद्वयं हेतुगर्भम्। विष्णोर्जना भक्ताः प्रिया यस्येति बहुव्रीहिः। अयं भावः — यद्यपि अनुभाव्याः[8] भगवद्गुणाः वेदान्तेभ्योऽवगताः, तथाऽपि "स्वाध्यायाद्योगमासीत योगात् स्वाध्यायवान् भवेत्" इत्युक्तरीत्या भगवद्गुणप्रतिपादकप्रबन्धसंशीलनस्य अवश्यापेक्षितत्वात् कार्त्स्न्येनास्य प्रबन्धस्य भगवद्गुणप्रतिपादकत्वात् सावतारतद्गुणकसविभूतिकसंभक्ततद्गुणस्यैव* भगवतोऽनुभाव्यत्वात् अवतारतद्गुणभक्ततद्गुणाना विशिष्य वेदान्तेभ्योऽनवगतानां वेदान्तावगतगुणेभ्योऽपि अतिशयितानाम् अस्मादाख्यानादवगमात् इदमध्यगादिति अनेन **प्रबन्धप्रशस्त्यं सूचितम्**॥ ११॥

तदेवं "कस्मिन् युगे प्रवृत्तेयम्" (भाग. 1-4-3) इत्यादिप्रश्नानामुत्तरमुक्तम्। अथ "तस्य पुत्तो महायोगी" (भाग. 1-4-4) इत्यादिप्रश्नस्योत्तरं विवक्षिष्यंस्तावत् "अभिमन्युसुतं सूत! प्राहुर्भागवतोत्तमम्। तस्य जन्म महाश्चर्यं कर्माणि च गृणीहि नः॥" (भाग. 1-4-9) इत्यादि प्रश्नानामुत्तरं सोपोद्घातं वक्तुं प्रतिजानीते **परीक्षित** इति। परीक्षितो राजर्षेः जन्म कर्माणि विलापनं[9] विलयं च तेषां समाहारः, तदुपोद्घातरूपपाण्डुपुत्राणां संस्थानं स्थितिं वृत्तान्तमिति यावत्। तदेतत्सर्वं कृष्णस्य भगवतः कथायाः उदयः अनुप्रसक्तिः यस्मिन् तद्वक्ष्ये। संस्थां च कृष्णकथोदयामिति च पाठान्तरम्। तदा कृष्णकथोदयामिति संस्थाविशेषणं, संस्थाशब्दस्य यथोक्तएवार्थः। तत्र पाण्डुपुत्राणां संस्थानं[10] परीक्षिज्जन्मकर्माद्युपोद्घातरूपां[11] परीक्षिज्जन्मकर्मादिकं तु इतःप्रभृति प्रधानप्रतिपाद्यम्। तदुभयानुप्रसक्ता कृष्णकथा। सर्वोऽयं स्कन्धः कृत्स्नप्रबन्धोपोद्घातरूप[12] इति विवेकः॥ १२॥

---

1 A,B omit रूप 2 A,B तद्भक्तेः 3 A,B °क्षाः 4 A,B omit निरपेक्षाः 5. A,B °गुणकचित्स्वरूप 6. A,B omit इत्थं 7 A,B महदिदमा° 8 A,B omit अनुभाव्याः *A's version सभक्ति तद्गुणभगवतोऽस्यैवानुभाव्यत्वादवतारतद्गुणानां विशिष्य वेदान्तेभ्योऽवगतानां is replaced by W's version which is more correct 9 A,B °य° 10 A,B संस्था 11 A,B °पं 12 A,B कृष्ण°

**विज०** अविद्वानिव शौनकश्चोदयति — **स वा** इति। आत्मनि रमते इति आत्मारामो मुनिः, सर्वज्ञो मौनी वा। अत एव सर्वत्र शिष्यसङ्ग्रहणादौ उपेक्षकोदासीनबुद्धिः निवृत्तिनिरतः शुकः कस्य फलस्यार्थे बृहतीं महतीमेतां समभ्यसद्वा इत्यन्वयः। चतुर्षु पुरुषार्थेषु कस्य पुरुषार्थस्येति विकल्पार्थो वाशब्दः। 'शुक-गता' विति धातोः परब्रह्मणि अव्याहतबुद्धिगतित्वात् शुकः॥ ९॥

परिहरतीत्याह — **आत्मारामा** इति। चशब्दोऽप्यर्थे। आत्मारामाः स्वरूपसुख एव रममाणा अपि अत एव निर्ग्राह्याः निरुपादेयाः मुनयः उत्तमाधिकारिणः उरुक्रमे उरवः क्रमाः पादविक्षेपाः यस्य स तथा, तस्मिन्नहैतुकीं प्रयोजनविधुराम् आनन्दरूपां भक्तिं कुर्वन्ति, *किं पुनः बहुजन्मस्वपरोक्षितपरतत्त्वाः ये भक्त्यादिसाधनातिशयेन मुक्तौ आनन्दातिशयमाकाङ्क्षमाणाः शुकादयः उरुक्रमे भक्तिं कुर्वन्तीति किं वर्णनीयमित्येकान्वयः। इत्थम्भूतगुणो निरपेक्षमुक्तमनोवशीकरणक्षमः, किमुत अमुक्तमनोवशीकरणक्षमगुण इति वाच्यमिति भावः॥ १०॥

अतः शुकेन भागवताभ्यसनं कृतमित्याह — **हरे** रिति। हरेरतिशयज्ञानानन्दादिगुणैः आक्षिप्ता आकृष्टा मतिर्यस्य स तथोक्तः बादरायणसुतो भगवान् नित्यं भागवतजनहृदयङ्गमं महदाख्यानम्। आख्यायते भगवन्महिमा अनेनेत्याख्यानं भागवतपुराणमध्यगात् अन्यांश्चाख्यापयामास च इत्येकान्वयः॥ ११॥

कस्मिन् युगे इत्यादिशौनकप्रश्नं [1]परिहृत्य तस्य जन्मेति प्रश्नं परिहरतीत्याह — **परीक्षित** इति। अथ परीक्षितो राजर्षेः जन्म कर्म विलापनं मरणं वक्ष्ये। तदर्थे प्रथमतः पाण्डुपुत्राणां संस्थां स्वर्गारोहणं युद्धादुपरितनमहाभिषेकादिमहाप्रस्थानान्तां संस्थां स्थितिं च वक्ष्ये। कीदृशीं संस्थाम्? कृष्णकथाया उदयो यस्यां सा तथोक्ता, ताम्॥ १२॥

---

* Here किंपुनः ..... उरुक्रमे is added since this line is found in B,K and M and forms part of the original commentary 1 A,B omit परिहृत्य .... प्रश्नं

**रा० कृ०** निवृत्तिनिरतः सर्वत्रोपेक्षकः आत्मारामः स वै मुनिः शुकः कस्य वा हेतोः बृहतीं विपुलामेतां भागवतसंहिताम् अभ्यसत् अधीतवान्? नित्यमुक्तस्य शुकयोगिनः प्रयोजनाभावात् भागवताध्ययने कारणं किमिति प्रश्नार्थः॥ ९॥

आत्मारामाः परमात्मन्यनुरक्ताः मुनयो मननशीलाः निर्ग्रन्था अपि निवृत्तहृदयग्रन्थयोऽपि उरुक्रमे भगवति अहैतुकीं निष्कारणां भक्तिं कुर्वन्ति। कुत इति चेत्? हरिः इत्थम्भूतगुणो विषयविरक्तजनवशीकरणनिपुणगुण इत्यर्थः।

मोक्षकाङ्क्षया भागवताध्येतॄणां न तत्प्राप्तिः। काङ्क्षयैव हि नारदो विष्णुसान्निध्यं न प्रापत् पूर्वजन्मनि। तां विना विष्णुं ध्यायतां मनः तस्मिन् लीयते स एष मनोलयो मोक्षः। विष्णुश्च निष्कामः स्वाभिलाषं विनैव स्वस्मान्निर्गतायां त्रिगुणात्मकसृष्टौ आत्मानं पश्यन् बाल इव क्रीडति।' एवमेव निष्कारणसाधनतत्परा एव भागवतोत्तमाः मुनयः इति पूर्वोक्तप्रश्नस्य समाधानम्॥ १०॥

भगवान् नित्यं विष्णुजनप्रियः विष्णुजनाः प्रियाः यस्य सः। बादरायणिः व्यासपुत्रः शुकः हरेः गुणाक्षिप्तमतिः गुणैः आक्षिप्ता आकृष्टा मतिः यस्य सः तथाभूतस्सन्, महद्विपुलमाख्यानं भागवताख्यानम् अध्यगात् अधीतवान्॥ ११॥

अथ राजर्षेः राजत्वे ऋषिवद्वर्तमानस्य परीक्षितः जन्म जननं कर्म कलिनिग्रहादिरूपं विलायनं मोक्षं कृष्णकथोदयं कृष्णकथाविर्भावसहितं पाण्डुपुत्राणां युधिष्ठिरादीनां संस्थानं महाप्रस्थानं वक्ष्ये कथयिष्यामि। अत्र राजर्षिपदेन द्रष्टा राजा गृह्यते तेन राजयोगीत्यर्थः निष्पद्यते। समदर्शनो योगी राजा भवितुमर्हतीति व्यज्यते॥ १२ ॥

यदा मृधे कौरवसृञ्जयानां वीरेष्वथो वीरगतिं गतेषु।
वृकोदराविद्धगदाभिमर्शभग्नोरुदण्डे धृतराष्ट्रपुत्ते ॥ १३ ॥

भर्तुः [1]प्रियं द्रौणिरिति स्म पश्यन् कृष्णासुतानां स्वपतां शिरांसि।
[2]उपाहरद्वि[3]प्रियमेव तस्य [4]जुगुप्सितं कर्म विगर्हय[5]न्ति ॥ १४ ॥

माता शिशूनां निधनं सुतानां निशम्य घोरं परितप्यमाना।
[6]तदारुदद् बाष्पकलाकुलाक्षी तां सान्त्वय[7]न्नाह किरीटमाली ॥ १५ ॥

[8]तदा शुचस्ते [9]प्रमृजामि भद्रे! यद् ब्रह्मबन्धोः शिर आततायिनः।
गाण्डीवमुक्तैर्विशिखैरुपाहरे त्वाऽऽक्रम्य यत्[10]स्नास्यसि [11]दग्धपुत्रा ॥ १६ ॥

इति प्रियां वल्गुविचित्रजल्पैः स सान्त्वयित्वाऽच्युतमित्रसूतः।
[12]अन्वाद्रवद्दंशित उग्रधन्वा कपिध्वजो गुरुपुत्रं रथेन ॥ १७ ॥

तमापतन्तं स वि[13]लक्ष्य दूरात् कुमारहोद्विग्नमना रथेन।
पराद्रवत् प्राणपरीप्सुरुर्व्यां यावदमं रुद्रभया[14]द्यथाऽर्कः ॥ १८ ॥

यदाऽशरणमात्मान[15]मैक्षत श्रान्तवा[16]जिनम्।
अस्त्रं ब्रह्मशिरो मेने [17]आत्मत्राणं द्विजात्मजः ॥ १९ ॥

अथोपस्पृश्य सलिलं सन्द[18]धे तत् समाहितः।
अजान[19]न्नुपसंहारं प्राणकृच्छ्र उपस्थिते ॥ २० ॥

---

1 B °ये 2. H,K,M,V अ° 3. M °मेतदस्य 4. N तज्जुगु° 5 K,M °न्ती 6 K,M य°; W तदा तु तद्बा° 7. W °यन् प्रा° 8 K,M तन्मा 9. H वि° 10. H,V °स्था° 11. K,M नेत्रजैर्जलैः 12 K,M अभ्यद्र° 13. K,M °लोक्य 14. K,M °द्यथाऽऽर्किः; H,N,V,W °द्यथा कः 15. H,V °मवैक्षत् 16. K.M,W °ह° 17. H,V ह्या° 18. H,K,M,V °धेऽस्त्रं स° 19. I,K,M,W °न्नपि

**श्रीध०** तत्र परीक्षितः जन्म निरूपयिष्यन् आदौ तावत् गर्भस्थ एव अश्वत्थाम्नो ब्रह्मास्त्रात् कृष्णेन [1]परिरक्षित इति वक्तुं कथां प्रस्तौति — यदे[2]त्यादिभिस्त्रिभिः। यदा द्रौणिरश्वत्थामा कृष्णासुतानां द्रौपदीपुत्राणां शिरांसि [3]उपाहरत् तदा तन्माता अरुदत्। तां च सान्त्वयन् किरीटमाली अर्जुन आहेति तृतीयेनान्वयः। किमिति? बालानां शिरांसि [4]आनीतवानित्यपेक्षायामाह। मृधे युद्धे यद्यपि पाण्डवा अपि कौरवा एव। तथाऽपि सृञ्जयवंशजः धृष्टद्युम्नः

पाण्डवानां सेनापतिरिति सृञ्जयानामित्युक्तम्। वीरगतिं स्वर्[5]गगतिम्। अथो अनन्तरम्। वृकोदरेण आविद्धायाः क्षिप्तायाः गदायाः अभिमर्शेन अभिघातेन भग्नौ ऊरुदण्डौ यस्य। तथाभूते धृतराष्ट्रपुत्रे दुर्योधने सति॥ १३॥

**भर्तु** रिति। भर्तुः दुर्योधनस्य। स्मेति वितर्के। इति एवं प्रियं स्यादिति पश्यन् तस्य तद्विप्रियमेवेति वाक्यान्तरम्। विप्रियत्वे हेतुः — जुगुप्सितम[6]त्यन्तजुगुप्साविशिष्टमिति॥ १४॥

**मातेति।** घोरं दुस्सहं यथा भवति [7]तथा बाष्पस्य कलाभिः बिन्दुभिः आकुले [8]व्याप्ते अक्षिणी यस्याः [9]सा। किरीटस्य एकत्वेऽपि तदग्राणां [10]बाहुल्यात् किरीटमाली इत्युक्तम्॥ १५॥

**तदेति।** शुचः शोकाश्रूणि [11]विमृजामि परिमार्जयामि यत् यदा ब्रह्मबन्धोः ब्राह्मणाधमस्य। आततायिन इति। "अग्निदो गरदश्चैव शस्त्रपाणिर्धनापह[12]ः। क्षेत्रदा[13]रहरश्चैव षडेते ह्याततायिनः" (वसि. स्मृ. 1-19) इति स्मरणादत्र आततायी शस्त्रपाणिः, तेन च पुत्रहन्तृत्वं लक्ष्यते। गाण्डीवात् धनुषः मुक्तैः विशिखैः बाणैः उपाहरे त्वत्समीपमानयामि। यत् शिर आक्रम्य आसनं विधाय दग्धपुत्रा स्[14]थास्यसि। स्नास्यसीति पाठान्तरम्॥ १६॥

**इतीति।** वल्गवः रम्याः विचित्राः जल्पाः भाषणानि तैः सः अर्जुनः अच्युत एव मित्रं सूतश्च यस्य स[15]ः। दंशितो बद्धकवचः। उग्रं धनुः चापं यस्य। कपिः हनुमान् ध्वजे यस्य सः। गुरोः पुत्रं रथेन अन्[16]वद्रवत् अन्वधावत्॥ १७॥

**तमिति।** आपतन्तम् आधावन्तं सः द्रौणिः। कुमारहा बालघाती। उद्विग्नमनाः कम्पितहृदयः। प्राणपरीप्सुः प्राणान् लब्धुमिच्छुः, न तु कीर्तिम्। **याव**[17]**द्गमं** यावद्गन्तुं शक्यं तावत्। उर्व्यां पराद्रवत् पलायितः। को ब्रह्मा मृगो भूत्वा सुतां [18]यब्धुमुद्यतस्सन् रुद्रस्य भयात् यथा पलायते स्म। अर्क इति पाठे वामनपुराणकथा सूचिता। तथाहि — विद्युन्माली नाम कश्चिद्राक्षसो[19]ऽभूत् माहेश्वरः। तस्मै रुद्रेण सौवर्णं विमानं दत्तम्। ततोऽसौ अर्कस्य पृष्ठतो [20]भ्राम्यन् विमानदीप्त्या रात्रिं विलोपितवान्। ततोऽर्केण निजतेजोभिः द्रावयित्वा तद्विमानं पातितम्। तच्छ्रुत्वा कुपिते रुद्रे भयादर्कः पराद्रवत्। ततो रुद्रस्य क्रूरदृष्ट्या दन्दह्यमानः पतन् वाराणस्यां पतितो लोलार्कनाम्ना [21]भुवि विख्यातः [22]जात इति॥ १८॥

**यदेति।** अशरणं रक्षकरहितम्। ननु पलायनमेव रक्षकमस्ति? न, तस्यापि कुण्ठितत्वात् इत्याह — श्रान्ता वाजिनो यस्य तम्। ब्रह्मशिरोऽस्त्रं ब्रह्मास्त्रम्। द्विजात्मज इति अदीर्घदर्शितामाह॥ १९॥

**अथेति।** तत् ब्रह्मास्त्रम्। समाहितः कृतध्यानः। उपसंहारमजानतोऽपि सन्धाने हेतुः — प्राणकृच्छ्र इति॥ २०॥

---

1. A,H,V omit परिरक्षित 2. A,B °त्यादिना।य° 3 V अपा° 4 B उपाहृतवा° 5 A,B,V स्वर्गम् 6. A,B °मिति॥ १४॥ 7 A,B omit तथा 8. A,H,V omit व्याप्ते 9. A omits सा 10 A बहुत्वात् 11 A,B प्रमृ° 12 B °हा 13 B दारापहारी च 14 A,B सत्ती॥ १६॥ 15. A,B omit सः 16. A,B °न्वा° 17 A,B °यत। 18 H यभितु°, B जृम्भितु° 19 A,B omit ऽभूत् 20 B भ्रमन् 21. A,B omit भुवि 22. A,B omit जात

**वीर॰** तावत्परीक्षितो जन्मकर्मादिकं वक्तुं पाण्डुपुत्राणां संस्थानमाह — **यदे** त्यादिना यावत्पञ्चदशाध्यायसमाप्ति। तत्र परीक्षितो जन्म उपोद्घात एवान्तर्भाव्य उच्यते, कर्मादिकं तु ततः उपरितनग्रन्थेनेति विवेकः। यदेत्यस्य "तदा" इति तृतीयेनान्वयः। मृधे युद्धे कौरवाणां सृञ्जयानां च वीरेषु वीरगतिं वीराणां गतिं स्वर्गतिं[1] गतेषु प्राप्तेषु सत्सु। धृतराष्ट्रपुत्रे दुर्योधने वृकोदरेण भीमेनापविद्धायाः प्रयुक्ताया गदाया अभिमर्शेन घातेन भग्नौ ऊरू एव दण्डौ यस्य तथाभूते सति॥ १३॥

द्रौणिः अश्वत्थामा स्वचिकीर्षितं भर्तुः धृतराष्ट्रस्य अप्रियमपि प्रियमिति पश्यन् मन्यमानः स्वपतां शयानानां कृष्णायाः द्रौपद्याः सुतानां शिरांसि अपाहरत् छित्वा आनीतवान्। इदं कर्म तस्य धृतराष्ट्रस्य विप्रियमेव। यद्वा, तस्य अश्वत्थाम्नः कर्म विप्रियमेव सर्वलोकस्यापीति शेषः। अत एव जुगुप्सितं विगर्हयन्ते अधुनाऽपि विनिन्दन्ति[2]॥ १४॥

यदैवं तदा माता द्रौपदी शिशूनां सुतानां घोरं निधनं मरणं निशाम्य[3] दृष्ट्वा परितप्यमाना बाष्पैः आकुले अक्षिणी यस्याः तथाभूता बभूवेति शेषः[4]। तदा तां द्रौपदीं सान्त्वयन् उपच्छन्दयन् किरीटमाली किरीटानां[5] माला सेवमानानां अस्यास्तीति किरीटमाली अर्जुनः। व्रीह्यादेः आकृतिगणत्वात् "व्रीह्यादिभ्यश्च" (अष्टा. 5-2-116) इति मत्वर्थीय इनिः। इदं वक्ष्यमाणमाह॥ १५॥

तदेवाऽऽह — हे भद्रे! ब्रह्मबन्धोः ब्राह्मणाधमस्य आततायिनः "अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः। क्षेत्रदारापहर्ता च षडेते ह्याततायिनः[6]" (वसि. स्मृ. 1-19) इति शस्त्रपाणेराततायित्वस्मरणात् आततायिन इत्युक्तम्। शस्त्रपाणिर्नाम शस्त्रधारणेन निरपराधिप्राणिघातुकः। तस्य शिरो गाण्डीवेन मुक्तैः विशिखैः बाणैः, यद्यदा आहरेयं यद्यदा च[7] आहृतं शिरः पादेन आक्रम्य दग्धपुत्रा त्वं स्नास्यसि[8]। तदा ते तव शुचः विमृजामि मार्जयामि॥ १६॥

इतीत्थं वल्गुभिः सुन्दरैः विचित्रैश्च जल्पैः भाषणैः प्रियां द्रौपदीं सान्त्वयित्वा, अच्युतः कृष्णो मित्रं सूतः सारथिश्च यस्य सारथीकृताच्युत इत्यर्थः। दंशितः कवचितः उग्रं धनुः गाण्डीवं यस्य। कपिध्वजः हनुमच्चिह्नितः ध्वजो यस्य सोऽर्जुनः। रथेन साधनेन गुरोः द्रोणाचार्यस्य पुत्रमश्वत्थामानम् अन्वाद्रवत् अन्वधावत्॥ १७॥

आपतन्तं तमर्जुनं दूरादेव विलक्ष्य प्रत्यभिज्ञाय कुमारहा कुमारघाती सोऽश्वत्थामा उद्विग्नं भीतं मनो यस्य तथाभूतः प्राणपरीप्सुः प्राणान् आप्तुमिच्छुः जिजीविषुरित्यर्थः। उर्व्यां भूमौ यावदमं यावदन्तुं शक्यं तावद्रथेन साधनेन पराद्रवत् पलायितवान्। को दक्षः यथा रुद्रभयात्, तद्वत्॥ १८॥

यदाऽशरणं रक्षकरहितं श्रान्ता वाजिनो यस्य तमात्मानमैक्षत पर्यालोचितवान्। तदा स द्विजात्मजो द्रौणिः। आत्मा त्रायते अनेनेत्यात्मत्राणं स्वरक्षणोपायं ब्रह्मशिरोनामकमस्त्रं मेनेऽबुध्यत। ब्रह्मशिरोऽस्त्रेण अर्जुनं हत्वा आत्मानं रक्षिष्यामि इत्यध्यवसितवानित्यर्थः॥ १९॥

अथ सलिलमुपस्पृश्य आचम्य समाहितः अस्त्रप्रयोगोपयुक्तमनःप्रणिधानयुक्तः संहारम् अस्त्रोपसंहारमजानन्नपि प्राणकृच्छ्रे प्राणापद्युपस्थितायां तद् ब्रह्मशिरोऽस्त्रं सन्दधे प्रयुयोज॥ २०॥

---

1. A,B omit स्वर्गतिं 2 A,B विनिन्दयन्ति 3. A,B °श° 4. A,B omit शेषः 5 A,B किरीटानां राजान्तरकिरीटानां आज्ञा एव माला अस्यास्तीति 6 A,B आ° 7. A,B वा हृतं 8. A,B स्था°

**विज०** अथो कथान्तरं निरूप्यते — **यदेति**। कौरवपाण्डवानां मृधे युद्धे भीष्मादिषु वीरेषु वीरगतिं स्वर्गं गतेषु धृतराष्ट्रपुत्रे दुर्योधने वृकोदरेण आविद्धायाः भ्रान्तायाः गदायाः अभिमर्शेन सम्यक्ताडनेन भग्नः ऊरुदण्डो यस्य स तथोक्तः, तस्मिन् सति दुर्योधनपातमारभ्य॥ १३॥

भर्तुः स्वस्वामिनो दुर्योधनस्य मया प्रियं कार्यम् इति स्म पश्यन् निरूपयन् द्रौणिः यदा स्वपतां निद्रां कुर्वतां कृष्णासुतानां द्रौपदीपुत्राणां शिरांसि अपाहरत् तदा॥ १४॥

सुतानां माता द्रौपदी शिशूनां सुतानां निधनं निशम्य घोरं यथा भवति तथा परितप्यमाना निधनं विश्रम्भणं वा तस्य द्रौणेः जुगुप्सितं निन्दितम् एतच्छिशुनिधनाख्यं कर्म निगर्हयन्ती अरुददित्येकान्वयः। कीदृशं कर्म? द्रौणेरेव विप्रियं न तु **दुर्योधनस्य,** भारते पांस्वभिषेकादिना अप्रियत्वोक्तेः। इदानीं द्रौणिना शिश्वादिवधात् पूर्वदृष्टं स्वप्नमाह — तामिति। किरीटमाली अर्जुनः सान्त्वयन् दुःखं शमयन् तां द्रौपदीमाह॥ १५॥

गाण्डीवनिस्सृतैः विशिखैः विविधशिखैः शरीरं खनित्वा विशन्तीति वा शरैराततायिनो हनिष्यन् मरिष्यामीति क्रूरक्रियाकारिणो ब्रह्मबन्धोः ब्राह्मणाधमस्य द्रौणेः शिर उपाहरे छेत्स्यामि। त्वं तच्छिरः पुरतः स्थितं पदा आक्रम्य पुत्रवधदुःखनिमित्तनयनजातैः जलैः स्नास्यसि स्नानं करिष्यसीति यस्मात् तस्मात् हे भद्रे! मा शुचः शोचनं मा कुरु। अश्रु पाणिना निरुजन्, हे भद्रे! मा रुद इत्यसान्त्वयत् इत्यन्वयः। शुचो नैवेति वा। "अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः। क्षेत्रदारहरश्चैव षडेते ह्याततायिनः" (वसि. स्मृ. 1-19) इति "आततायिनमायान्तं हन्यादेवाविचार-यन्" (मनु. स्मृ. 8-350) इति स्मृतेः॥ १६॥

स कपिध्वज इति। वल्गवो मनोहरा विचित्रा विविधाश्चर्यभूता जल्पा वाग्विशेषा ये ते तथोक्ताः। तैः प्रियां भार्यां सान्त्वयित्वा रथेन गुरुपुत्रमभ्यद्रवत् इत्यन्वयः। अच्युत एव मित्रम् अनिमित्तबन्धुः सूतो यन्ता यस्य स तथोक्तः, दंशितः कवचितः, उग्रं भयङ्करं धनुः यस्य स तथोक्तः॥ १७॥

कुमारहा कुमारान् हतवान् द्रौणिः उर्व्यां भूमौ यावद्गमं यावद्गन्तुं शक्यं तावद्रथेन पराद्रवदित्यन्वयः। किं कृत्वा? आपतन्तं तमर्जुनं दूराद्विलोक्य उद्विग्नमनाः संभ्रान्तचेताः प्राणपरीप्सुः जीवनलाभेप्सुः। क इव? रुद्रस्य भयात् आर्किः अर्कपुत्रः शनैश्चरः। पुरा यथा रुद्रस्य तृतीयनेत्रस्य तेजसो भयादार्किः परिधावति तथेति वायुपुराणान्तरप्रसिद्धमिदम्। "यथा क" इति केचित् पठन्ति। ब्रह्मपञ्चमशिरश्छेदनाय प्रवृत्तं रुद्रं दृष्ट्वा ब्रह्मा परिधावति इत्येतदसुरजनमोहायेति ज्ञातव्यम्॥ १८॥

अशरणं पालकरहितम् आत्मत्राणम् आत्मानं त्रायत इति ब्रह्मशिरोनामास्त्रम्॥ १९॥

ब्रह्मास्त्रप्रयोगे इतिकर्तव्यतामाह — **अथेति**। अथ ईक्षणानन्तरमुपस्पृश्य आचम्य संहारमुपसंहारम्। अपिशब्देन विद्याया असङ्कल्पं दर्शयति। तर्हि किमर्थं सन्दध इति तत्राऽऽह प्राणेति॥ २०॥

**रा० कृ०** कौरवसृञ्जयानां कौरवाणां पाण्डवानां च मृधे युद्धे वीरेषु वीरगतिं स्वर्गं गतेषु। अथो अनन्तरम्। धृतराष्ट्रपुत्रे दुर्योधने वृकोदराविद्धगदाभिमर्शभग्नोरुदण्डे वृकोदरेण आविद्धायाः क्षिप्तायाः गदायाः अभिमर्शेन अभिघातेन भग्नौ ऊरुदण्डौ यस्य तथाभूते सति। भर्तुः ममेति शेषः। प्रभोः दुर्योधनस्य प्रियमिति स्म पश्यन् आलोचयन् द्रौणिः अश्वत्थामा स्वपतां कृष्णासुतानां द्रौपदीपुत्राणां शिरांसि यदा उपाहरत् छित्वा आनीतवान्। तस्य तत्कर्म सर्वस्यापि विप्रियमेव जातमिति शेषः। अपि च तत्कर्म जुगुप्सितमिति विगर्हयन्ति। अधुनाऽपि सर्वे जनाः निन्दन्ति। तदा माता द्रौपदी शिशूनां सुतानां घोरं निधनं मरणं निशम्य श्रुत्वा परितप्यमाना बाष्पकलाऽऽकुलाक्षी बाष्पकलाभिः अश्रुबिन्दुभिः आकुले अक्षिणी यस्याः सा तथाभूता सती अरुदत् रोदनं कृतवती। तां तादृशीं द्रौपदीं सान्त्वयन् किरीटमाली अर्जुनः आह॥ १३, १४, १५॥

हे भद्रे! यत् यदा गाण्डीवमुक्तैः विशिखैः बाणैः ब्रह्मबन्धोः ब्राह्मणाधमस्य आततायिनः शस्त्रपाणेः अश्वत्थाम्नः इति शेषः। शिरः त्वा त्वां प्रति उपाहरे त्वत्समीपमानयामि; यत् शिरश्च आक्रम्य दग्धपुत्रा मृतसुता स्थास्यसि त्वमिति शेषः। तदा ते तव शुचः शोकाश्रूणि विमृजामि परिमार्जयामि॥ १६॥

सः अर्जुनः इत्येवं वल्गुविचित्रजल्पैः मनोहरैः विचित्रैश्च जल्पैः भाषणैः प्रियां द्रौपदीं सान्त्वयित्वा अच्युतमित्रसूतः अच्युत एव मित्रं सूतश्च यस्य तथाभूतः। दंशितो बद्धकवचः उग्रधन्वा कपिध्वजस्सन् रथेन गुरुपुत्रमश्वत्थामानम् अन्वाद्रवत् अन्वधावत्। अत्र पार्थसारथेः मित्रत्वकथनेन तत्कृतं सारथ्यं भारतप्रधनकालिकात् दुष्टशिक्षणशिष्टरक्षणधर्मसंस्थापनप्रयोजनकात् सारथ्यात् भिन्नमिति ज्ञेयम्॥ १७॥

आपतन्तम् आधावन्तं तमर्जुनं दूराद्विलक्ष्य प्रत्यभिज्ञाय कुमारहा बालघाती सः अश्वत्थामा उद्विग्नमनाः कम्पितमानसः प्राणपरीप्सुः प्राणान् प्राप्तुमिच्छुः रुद्रभयात् कः यथा ब्रह्मेव यावद्गमं यावद्गन्तुं शक्यं तावत्, उर्व्यां पराद्रवत् पलायितवान्॥ १८॥

द्विजात्मजः द्रौणिः यदा श्रान्तवाजिनमात्मानमशरणं रक्षकरहितमैक्षत पर्यालोचितवान् तदेति शेषः। आत्मत्राणम् आत्मरक्षकं ब्रह्मशिरः तन्नामकमस्त्रं मेनेऽबुध्यत॥ १९॥

अथ अनन्तरं प्राणकृच्छ्रे प्राणानां कष्टे उपस्थिते प्राप्ते सति उपसंहारम् अस्त्रोपसंहारम् अजानन्नपि सलिलमुपस्पृश्य आचम्य समाहितः एकाग्रमनस्कः अस्त्रं ब्रह्मशिरोनामकास्त्रं सन्दधे प्रयुक्तवान्॥ २०॥

**ततः प्रादुष्कृतं तेजः प्रचण्डं सर्वतोदिशम्।**
**[1]प्राणापदमभिप्रेक्ष्य[2] विष्णुं जिष्णुरुवाच ह॥ २१॥**

**अर्जुन उवाच**

**कृष्ण! कृष्ण! महाभाग[3]! भक्तानामभयङ्कर!।**
**त्वमेको दह्यमानानामपवर्गोऽसि संसृतेः॥ २२॥**

त्वमाद्यः पुरुषस्साक्षादीश्वरः प्रकृतेः परः ।
मायां व्युदस्य चिच्छक्त्या [4]कैवल्ये स्थित आत्मनि ॥ २३ ॥

स [5]एवं जीवलोकस्य मायामोहितचेतसः ।
[6]विधत्से स्वेन वीर्येण श्रेयो धर्मादिलक्षणम् ॥ २४ ॥

[7]तथाऽयं चावतारस्ते भुवो भारजिहीर्षया ।
स्वानां चानन्यभावानामनुध्यानाय चासकृत् ॥ २५ ॥

किमिदं स्वित्कुतो वेति देवदेव! न वेद्म्यहम् ।
सर्वतोमुखमायाति तेजः परमदारुणम् ॥ २६ ॥

श्रीभगवानुवाच

वेत्थेदं द्रोणपुत्रस्य ब्राह्ममस्त्रं प्रदर्शितम् ।
नैवासौ वेद संहारं प्राणबाध उपस्थिते ॥ २७ ॥

नह्यस्यान्यतमं किञ्चिदस्त्रं प्रत्यवक[8]र्शनम् ।
जह्यस्त्रतेज उन्नद्धमस्त्रज्ञो [9]ह्यस्त्रतेजसा ॥ २८ ॥

---

1. K,M प्रापतत् तदभि° 2. B °त्य 3. B,H,I,V,W °बाहो 4 H,V केवले 5. K,M °ष 6 K,M विधित्सुः 7. K,M य° 8 B,K,M °कर्षणम्; W °मर्शकम् 9. H,V °ऽस्य°

**श्रीध०** **तत** इति। ततः अस्मात् सर्वतोदिशं प्रादुष्कृतं प्रकटीभूतं तेजः अभिप्रेक्ष्य समन्ताद्विलोक्य ततः **प्राणापदं** **चाभिप्रेक्ष्य** अर्जुनः कृष्णमुवाच ॥ २१ ॥

प्रस्तुतं विज्ञापयितुं प्रथमं स्तौति — **कृष्णेति** चतुर्भिः। संसृतेर्हेतोः दह्यमानानां तस्याः अपवर्गः **अपवर्जयिता** नाशक इत्यर्थः ॥ २२ ॥

**त्वमिति**। यतः त्वमीश्वरस्साक्षात्। कुतः ? यतः प्रकृतेः परः पुरुषः। तत्कुतः ? यतः आद्यः कारणम्। **कारणत्वे**[1]**ऽविकारितामाह**। मायां व्युदस्य अभिभूय कैवल्यरूपे आत्मन्येव स्थितः ॥ २३ ॥

त्रिवर्गदाताऽपि त्वमेवेत्याह — **स** इति। यस्त्वं मायामभिभूय स्थितः स एव मायाऽभिभूतस्य जनस्य **धर्मादिफलमुपासितस्सन्** विधत्से स्वेन वीर्येण प्रभावेण ॥ २४ ॥

तथाच अनेनावतारेण तव साधुपक्षपातो ल[2]क्षित इत्याह — **तथेति**। किं भूभारभ[3]रणं मदिच्छामात्रेण न **भवति ? तत्राऽऽह** — स्वानां ज्ञातीनामनुध्यानाय च तथा अनन्यभावानाम् एकान्तभक्तानां च ॥ २५ ॥

एवं स्तुत्वा प्रस्तुतं वि[4]ज्ञापयति — **किमिति**। किमात्मकमिदं कुतो वा आयातीति। स्विद्वितर्के ॥ २६ ॥

**वेत्थेति।** इदं द्रोणपुत्रस्य ब्राह्मस्त्रं तेन च प्राणबाधे उपस्थिते प्राप्ते प्रदर्शितं केवलं न तु तत्प्रयोगे कुशल इत्यर्थः। यतोऽसौ उपसंहारं न वेद। एतच्च त्वं तु वेत्थ जानासि॥ २७॥

**नहीति।** प्रत्यवकर्शनं कृशत्वकरं निवर्तकमित्यर्थः। अतः तदस्त्रतेजः उन्नद्धमुत्कण्ठं विजृम्भितमित्यर्थः[5]। ब्रह्मास्त्रतेजसैव जहि घातय। त्वत्प्रयुक्तं चास्त्रं तदुपसंहृत्य स्वयमुपशाम्येत्[6]; यतः **त्वमस्त्रज्ञोऽसि** सर्वास्त्रप्रयोगकुशलोऽसि[7]॥ २८॥

---

1 A,B °ऽप्य° 2 A,B °क्ष्य° 3 A,B °ह° 4 B ज्ञापयति 5 A,B omit विजृम्भितमित्यर्थः 6 A °त 7 A,B omit सर्वास्त्रप्रयोगकुशलोऽसि

**वीर॰** ततः सर्वतोदिशं सर्वदिक्षु प्रादुष्कृतं प्रादुर्भूतं प्रचण्डमुग्रं तेजः प्राणापदमभिप्रेक्ष्य प्राणविपत्तिकारित्वेन उत्प्रेक्ष्य जिष्णुरर्जुनो विष्णुं श्रीकृष्णमुवाच॥ २१॥

तदेवाऽऽह — **कृष्ण! कृष्णेत्यादि** पञ्चभिः। प्रादुष्कृतं तेजो याथात्म्यात् तदुपसंहारानभिज्ञः[*] तदुभयज्ञापनाय भगवन्तं कृष्णं प्रष्टुकामो नाहमपि वेद्मीति मा वोच इत्यभिप्रायेण तावत् भगवन्तं **स्वाभाविकैः धर्मैः** स्तौति चतुर्भिः। हे कृष्ण! कृष्ण! "कृषिर्भूवाचकशब्दो णश्च निर्वृतिवाचकः[☆]" इति निरुक्तकृष्णशब्दोपस्थापित-सर्वलोकसुखावहत्वरूपगुणानुसन्धानकृतसम्भ्रमात् द्विरुक्तिः। हे महाबाहो! "बाहू राजन्यः कृतः" (पु. सू. 1-5) इत्युक्तरीत्या राजन्यकुलप्रभवबाहो! भक्तानाम् अभयं करोतीति तथाभूतः, तस्य सम्बोधनम्। दह्यमानानां तापत्रयेण[2] दह्यमानानां जनानां संसृतेरपवर्गः पारभूतः संसारात् विमोचक इति यावत्। त्वमेक एव कृत्स्नजगत्सुखावहस्य, तत्रापि भक्तानामभयङ्करस्य संसृतिरूपमहाभयक्षेपणक्षमस्य तव कियानेतदुपस्थितभयापनयने प्रयास इति भावः॥ २२॥

नन्वेवंविधस्त्वीश्वरो नाहमित्यत आह — **त्वमिति**। त्वमेव साक्षादीश्वरः यत्किञ्चिदीशितव्यंवस्त्वपेक्षया[3] सर्वोऽपि लोक ईश्वर एवेत्यनितरसाधारणैः धर्मैः अभिप्रेतमीश्वरमितरस्मात् व्यावर्तयति। आद्यः आदौ भवः निखिलजगत्कारणत्वेनावस्थितः पुरुषः सर्वान्तरात्मतया सर्वप्रशासितृत्वेन सर्वहृदयान्तर्वर्तीत्यर्थः। अथापि प्रकृतेः परः "भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च" (भ. गी. 7-4) "अपरेयमितस्त्वन्याम्" (भ. गी. 7-5) इत्यादिश्लोकद्वयोक्तप्रकृतिद्वयाद्विलक्षणः पुरुषशब्देन "पूःसंज्ञे वै शरीरेऽस्मिन् शयनात् पुरुषो हरिः" इति निरुक्तेन सर्वान्तरात्मत्वं सर्वाधारत्वं च फलितम्। प्रकृतेः परः इत्यनेन प्रकृतिगतधर्मास्पर्शश्च। नन्वीश्वरश्च सर्वाधारकश्चेत् तस्य किं धारकम्? देहाद्विलक्षणस्यापि जीवस्य देवोऽहं मनुष्योऽहम् इति देहधर्मस्पर्शदर्शनात् कथं तस्य प्रकृतिधर्मा-स्पर्शश्चेत्यतो विशिनष्टि — चिच्छक्त्या शक्तिशब्दः सर्वत्र कार्योपयोग्यपृथक्सिद्धविशेषणवाची। चिच्छक्त्या ज्ञानशक्त्या नित्याविर्भूतापरिच्छिन्नधर्मभूतज्ञानशक्त्या मायां प्रकृतिं चेतनाचेतनात्मिकां व्युदस्य; मायाशब्दोऽत्र उपचारात् मायाधर्मपरः। मायाधर्मान् व्युदस्य मायाधर्मैरस्पृष्ट इत्यर्थः। केवल एव कैवल्यः। स्वार्थे ष्यञ्। केवले आत्मनि स्थितः "स्वे महिम्नि प्रतिष्ठितः" (मैत्रा. उ. 6-25) इत्युक्तरीत्या आधारान्तरानपेक्ष इत्यर्थः। जीवस्तु कर्मणा सङ्कुचितज्ञानत्वात्

देहात्मभ्रमेण देहधर्मानात्मन्यध्यस्यति। ईश्वरस्तु चिच्छक्त्या तान् व्युदस्य तत्तज्जीवान्तरात्मतया तत्तज्जीवकर्मानुरूपं फलं प्रयच्छन् अनितरधार्योऽवतिष्ठत इति भावः ॥ २३ ॥

तदेवाऽऽह — **स एवेति**। उक्तविध ईश्वर एव त्वम्। मायया देहात्मभ्रमस्वतन्त्रात्मभ्रमादिरूपमायाकार्येण मोहितं चेतो यस्य तस्य जीवलोकस्य धर्मादिलक्षणं धर्मार्थकाममोक्षरूपपुरुषार्थचतुष्टयरूपं श्रेयः, तद्विपर्ययरूपम् अश्रेयश्च तत्तत्कर्मानुगुण्येन स्वेन स्वेन वीर्येण स्वाभाविकेनाप्रच्युतेन माहात्म्येन उपलक्षितः विधत्से प्रयच्छसि ॥ २४ ॥

न केवलमन्तरात्मतया एवं विधत्से, अपितु अवतारमुखेनापि इत्यभिप्रायेण[5] आह — **तथेति**। भुवो भारभूतानां दुष्कृतां जिहीर्षया संहारेच्छया अनन्यभावानाम् अनन्यप्रयोजनभक्तियोगनिष्ठानां स्वानां स्वकीयानामसकृदनुध्यानाय चायं तवावतारः ॥ २५ ॥

एवं संस्तुत्य प्रकृतं पृच्छति — **किमिति**। इदं तेजः किंस्विदिति याथात्म्यप्रश्नः। कुतो वेति हेतुप्रश्नः। कुतो वा आगच्छति, कुतश्च शमिष्यतीत्यर्थः। स्वस्य तु एतदज्ञानमावेदयति न वेद्मयहमिति। तर्हि किं जानासीत्यत्राऽऽह। सर्वतोमुखं परमदारुणं तेजः आयातीत्येतावदेव[6] वेद्मीत्यर्थः ॥ २६ ॥

इत्थं संस्तुतो विज्ञापितश्च भगवान् सर्वज्ञ आह — **वेत्थेति** द्वाभ्याम्। प्राणबाध उपस्थिते सति द्रोणपुत्रस्येति कर्तरि षष्ठी। तेन प्रदर्शितं प्रयुक्तं ब्राह्ममस्त्रमिदं तेजो वेत्थ जानीहि। असौ द्रोणपुत्रः संहारं प्रयुक्तब्रह्मास्त्रोपसंहारं न वेद न जानाति ॥ २७ ॥

तर्हि कथमिदमुपसंहर्तव्यमित्यत्राऽऽह — **नेति**। अस्य द्रोणपुत्रप्रदर्शितस्य ब्रह्मास्त्रस्य प्रत्यवमर्शकं[7] प्रतिभटमस्त्रं ततोऽन्यतमं किञ्चिदपि न विद्यते अतोऽस्त्रज्ञः ब्रह्मास्त्रप्रयोगोपसंहाराभिज्ञः त्वमस्त्रतेजसा ब्रह्मास्त्रतेजसैव उन्नद्धमुद्रिक्तम् अस्त्रतेजः ब्रह्मास्त्रतेजः जहि, त्वमपि ब्रह्मास्त्रेणैव तदभिभावयेत्यर्थः ॥ २८ ॥

---

* W's Version is preferred to A's Version – तदुपसंहाराणामज्ञस्तदुपज्ञापनाय ✫ भट्टविरचितविष्णुसहस्रनामभाष्ये उद्धृतः 1 A,B इत्युक्त° 2. A,B omit तापत्रयेण .... जनानां 3 A,B °व्यत्वापे° 4 A भ्रमे देह° 5. A,B °प्रेत्य 6 A,B आयाति एता° 7. A,B °कर्षकं

**विज०** ततः तस्मात् अस्त्रादुत्पन्नं सर्वतोदिशं प्रापतद्व्याप्नुवत् प्रचण्डमभिप्रेक्ष्य दृष्ट्वा जिष्णुरर्जुनः। हेत्यनेन मनस्याश्चर्यं कृत्वेति दर्शयति ॥ २१ ॥

कृष्ण! सदानन्दात्मक! कृष्ण! दुःखकर्षणशील! संसृतेर्जातेन तापाग्निना दह्यमानानां पुंसां त्वमेक एव संसृतेरपवर्गोऽसि दुःखनाशकरोऽसीत्यन्वयः ॥ २२ ॥

अनिष्टपरिहारसामर्थ्यं तवास्तीत्याह — **त्वमिति**। पापानि औषत् अदहदिति पुरुषः, "सर्वान् पाप्मन औषत्तस्मात् पुरुषः" (बृह. उ. 1-4-1) इति श्रुतेः। पुरुषः पुरु बहु सरतीति वा। सर्वेषामादौ भवनादाद्यः साक्षादीश्वरः निरुपचरितैश्वर्योपेतः। तत्कथमिति तत्राऽऽह — प्रकृतेरिति। चित्प्रकृतेरप्युत्तम एवंविधस्त्वं चिच्छक्त्या

स्वरूपज्ञानशक्त्या मायां बन्धकशक्तिं निरस्य कैवल्ये प्रकृतिप्राकृतबन्धरहिते आत्मनि स्वरूपे स्थितो यतोऽत इत्यन्वयः। स भगवान् कस्मिन् प्रतिष्ठित इति "स्वे महिम्नि" (मैत्रा. उ. 6-25) इति श्रुतेः ॥ २३ ॥

स प्रकृतिप्राकृतसम्बन्धरहित एव बन्धकशक्त्या मोहितबुद्धेर्जीवलोकस्य स्वरूपवीर्येण धर्मादिलक्षणं श्रेयो विधित्सुरवतरतीत्यन्वयः ॥ २४ ॥

भगवदवतारास्ते यथा पुंसामनुध्यानादिना मोक्षहेतवस्तथा भुवो भारजिहीर्षया कृतोऽयं चावतारश्चानन्यभक्तानां स्वानामसकृदनुध्यानाय स्यादित्यतो मोक्षं साधयतस्तव भक्तैहिकदुःखनिवारकत्वं किं वर्णनीयमिति भावः। भूभारानुध्या-नयोः समुच्चये चशब्दः ॥ २५ ॥

यत्तेजः परमं दारुणं सर्वतोमुखमायाति हे देव! तदिदं किंस्वित् कुतो वेति अहं न वेद्मि इत्यन्वयः ॥ २६ ॥

यत्तेजः तदिदं द्रोणपुत्रस्य ब्राह्ममस्त्रं वेत्थेत्यन्वयः। कीदृशम्? प्राणबाधे जीवाधिष्ठितदेहनाशे उपस्थिते आसन्ने सति प्रदर्शितम्। प्राणबाध इत्येतत्कुतो वाऽवगतमिति तत्राऽऽह — नेति। असौ द्रौणिः अस्यास्त्रस्य संहारं न वेदेति यस्मादतो ज्ञायते प्राणबाधे मुक्तमिति ॥ २७ ॥

अस्त्राणामन्यतमं किञ्चिदस्त्रमस्य प्रत्यवकर्षणं प्रतीकारसमर्थं निवर्तकं न हि। अतोऽस्त्रज्ञो विसर्गोपसंहारपूर्वकमस्त्रज्ञः त्वमस्त्रतेजसा उन्नद्धमुद्धतमस्त्रतेजो जहीत्यन्वयः। हिशब्दो हेतौ ॥ २८ ॥

**रा० कृ०** ततः ब्रह्मशिरोनामकास्त्रात् सर्वतोदिशं प्रादुष्कृतं प्रादुर्भूतं प्रचण्डमुग्रं प्राणापदं प्राणविपत्तिहेतुभूतं तेजः अभिप्रेक्ष्य जिष्णुः अर्जुनः विष्णुं कृष्णमुवाच ॥ २१ ॥

महाबाहो! कृष्ण! कृष्ण! भक्तानामभयङ्कर! संसृतेः जननमरणरूपात् संसाराद्धेतोः दह्यमानानां जीवानां अपवर्गः मोक्षस्वरूपः त्वमेकोऽसि ॥ २२ ॥

त्वं प्रकृतेः मायारूपिण्याः परः अतीतः साक्षादीश्वरः आद्यः पुरुषस्सन् चिच्छक्त्या ज्ञानशक्त्या मायाम् अहन्ताममताकारणभूताम् अविद्यां व्युदस्य तिरस्कृत्य केवले कैवल्यरूपे आत्मनि स्वरूपे स्थितः स्थितवान् ॥ २३ ॥

स एव पूर्वोक्तः ईश्वर एव त्वं मायामोहितचेतसः मायया अविद्यया मोहितं देहेन्द्रियाद्यात्माभिमानवत् चेतः यस्य तथाभूतस्य जीवलोकस्य स्वेन वीर्येण अचिन्त्यप्रभावेण धर्मादिलक्षणं धर्मार्थकाममोक्षादिलक्षणं श्रेयः पुरुषार्थं विधत्से प्रयच्छसीत्यर्थः ॥ २४ ॥

तथा भुवः भारजिहीर्षया भारभूतानां दुष्टानां संहारेच्छया अनन्यभावानाम् एकान्तभक्तानां स्वानां स्वाश्रितानाम् असकृत् निरन्तरम् अनुध्यानाय च अयं तेऽवतारः कृत इति शेषः ॥ २५ ॥

हे देवदेव! सर्वतोमुखं परमदारुणं तेजः आयाति। तदिदं किंस्वित् परमार्थतः, किं रूपं कुतो वेति कुतो हेतोरायातीति अहं न वेद्मि ॥ २६ ॥

इदं द्रोणपुत्रस्य ब्राह्ममस्त्रं, जानीहीति शेषः। प्राणबाधे उपस्थिते प्रदर्शितं तेनेति शेषः। असौ द्रौणिः संहारम् अस्त्रोपसंहारं नैव वेद नैव जानाति। वेत्थ त्वं जानासि॥ २७॥

अस्य ब्रह्मशिरोनामकास्त्रस्य प्रत्यवकर्शनं कृशत्वापादकं निवर्तकमिति यावत्। अन्यतमं ततो भिन्नं किञ्चिदस्त्रं न हि, नास्ति खलु। अस्त्रज्ञोऽसि त्वमिति शेषः। उन्नद्धमुत्कटमस्त्रतेजः ब्रह्मास्त्रतेजः अस्त्रतेजसा स्वप्रयुक्तब्रह्मास्त्रतेजसा जहि उपसंहर॥ २८॥

सूत उवाच

श्रुत्वा भगवता प्रोक्तं फल्गुनः[1] परवीरहा ।
स्पृष्ट्वाऽपस्तं परिक्रम्य ब्राह्मं ब्राह्मायं[2] सन्दधे ॥ २९ ॥

संहत्यान्योन्यमुभयोस्तेजसी शरसंवृते ।
आवृत्य रोदसी खं च ववृधातेऽर्कवह्निवत् ॥ ३० ॥

दृष्ट्वाऽस्त्रतेजस्तु तयोस्त्रीन् लोकान् प्रदहन्महत् ।
दह्यमानाः प्रजास्सर्वाः सांवर्तक ममंसत ॥ ३१ ॥

प्रजोपप्लवमालक्ष्य[3] लोकव्यतिकरं[4] च तम् ।
मतं च वासुदेवस्य सञ्जहारार्जुनो द्वयम् ॥ ३२ ॥

तत आसाद्य तरसा दारुणं गौतमीसुतम् ।
बबन्धामर्षताम्राक्षः पशुं रशनया यथा ॥ ३३ ॥

शिबिराय निनीषन्तं दाम्ना[5] बद्ध्वा रिपुं बलात् ।
प्राहार्जुनं प्रकुपितो भगवानम्बुजेक्षणः ॥ ३४ ॥

मैनं[6] पार्थार्हसि त्रातुं ब्रह्मबन्धुमिमं जहि ।
योऽसावनागसस्सुप्तानवधीन्निशि बालकान् ॥ ३५ ॥

मत्तं प्रमत्तमुन्मत्तं सुप्तं बालं स्त्रियं जडम् ।
प्रपन्नं विरथं भीतं न रिपुं हन्ति धर्मवित् ॥ ३६ ॥

---

1. A,B,G,I,K,M,N फा° 2. I °स्त्रं 3 H,I,V °द्र° 4 H,V °लोक्य 5. B,H,I,K,M,N,V,W रज्ज्वा 6 B,W नै°

**श्रीध० श्रुत्वेति।** परे शत्रवः त एव वीराः तान् हन्तीति तथाविधः। फल्गुनः[1] अर्जुनः अपः स्पृष्ट्वा आचम्य तं श्रीकृष्णं परिक्रम्य प्रदक्षिणीकृत्य ब्राह्माय ब्रह्मास्त्रं निवर्तयितुम्॥ २९

**संहत्येति।** ततश्च उभयोः ब्रह्मास्त्रयोः तेजसी शरैः संवृते संवेष्टिते परस्परं मिलित्वा ववृधाते अवर्धेताम्। किं कृत्वा? रोदसी द्यावापृथिव्यौ खमन्तरिक्षं च आवृत्य। यथा प्रलये सङ्कर्षणमुखाग्निः, उपरि स्थितोऽर्कश्च संहत्य वर्धेते तद्वत्॥ ३०॥

**दृष्ट्वेति।** तयोः द्रौणिफ[2]ल्गुनयोः त[3]तः तेन दह्यमानाः सांवर्तकं प्रलयाग्निम् अमंसत मेनिरे॥ ३१॥

**प्रजेति।** लोकानां व्यतिकरं व्यत्ययं नाशमित्यर्थः। वासुदेवस्य मतं च आलक्ष्य ब्रह्मास्त्रद्वयमुपसंहृतवान्॥ ३२॥

**तत इति।** गौतमवंशजा गौतमी कृपी तस्याः सुतम्। अमर्षेण कोपेन ताम्रे अक्षिणी यस्य सः। नि[4]र्घृणत्वे दृष्टान्तः — पशुं यथेति। तस्य बन्धनं धर्म इत्यत्र वा[5] दृष्टान्तः। यथा याज्ञिकः[6] पशुमिव[7] रशनया रज्ज्वा **बध्नाति**॥ ३३॥

शोकरोषादियुक्तस्याप्यर्जुनस्य धर्मनिष्ठाख्यापनाय श्रीकृष्णवाक्यं; तदाह षड्भिः — **शिबिराय** इति। शिबिराय राजनिवेशाय नेतुमिच्छन्तम् अ[8]र्जुनं प्रकुपितः त[9]द्वधाभावेनामर्षं प्राप्तः इवेति॥ ३४॥

**मेति।** अनागसो निरपराधान्। ब्रह्मबन्धुं ब्राह्मणाभासम्॥ ३५॥

रिपोरपि सुप्तस्य बालस्य च वधो न धर्मः इत्यन्यार्थैः दर्शयति — **मत्त**मिति। मत्तं मद्यादिना। प्रमत्तमनवहितम्। उन्मत्तं ग्रहवातादिना। जडम् अनुद्यमम्। प्रपन्नं शरणागतम्। विरथं भग्नरथम्॥ ३६॥

---

1. A,B फा° 2. A,B फा° 3. A,B omit ततः 4. A,B °ष्कृपत्वे 5 A,B omit वा 6 V °कं 7 A,B °ति 8 B,H,V omit अर्जुनं
9. A,B omit तद्वधा ... प्राप्तः

**वीर॰** इत्थं भगवता प्रोक्तमस्त्रोपसंहारोपायं श्रुत्वा परवीरहा फ[1]ल्गुनोऽर्जुनः अप आचम्य तं कृष्णं परिक्रम्य प्रदक्षिणीकृत्य ब्राह्माय ब्रह्मास्त्राय प्रतिभटं ब्राह्ममेवास्त्रं सन्दधे प्रयुयोज॥ २९॥

ततः तयोरुभयोरस्त्रयोः तेजसी शरैः व्याप्तेऽन्योन्यं संहत्य सङ्गत्य रोदसी द्यावापृथिव्यौ खमाकाशं च आवृत्य आवेष्ट्य अर्कवह्नी इव ववृधाते वृद्धिं गते॥ ३०॥

किञ्च ततः त्रीन् लोकान् प्रदहत् तयोः द्रौण्यर्जुनयोः अस्त्रतेजः तत्प्रयुक्तास्त्रतेजो दृष्ट्वा तेन दह्यमानाः सर्वाः प्रजाः सांवर्तकं प्रलयाग्निममंसत अमन्यन्त॥ ३१॥

लोकव्यतिकरं लोकोपमर्दनरूपं प्रजोपद्रवं वासुदेवस्य मतमभिप्रायं च आलक्ष्यार्जुनः द्वयं ब्रह्मास्त्रद्वयं सञ्जहार उपसंहृतवान्॥ ३२॥

तत आसाद्य समीपमेत्य दारुणमुग्रं गौतम्याः द्रोणपत्न्याः कृप्याः सुतं द्रौणिम् अमर्षेण क्रोधेन ताम्रे अक्षिणी यस्य सः अर्जुनः। **तरसा** बलेन बबन्ध यथा रज्ज्वा पशुं तद्वत्॥ ३३॥

रिपुं द्रौणिं बलात् रज्ज्वा बद्ध्वा शिबिराय राजनिवेशाय[2] शिबिरं प्रति निनीषन्तं नेतुमिच्छन्तम् अर्जुनं भगवानम्बुजेक्षणः कृष्णः प्रकुपित आह धर्मपरीक्षार्थमिति भावः ॥ ३४ ॥

तदेवाऽऽह — **नैनमिति** पञ्चभिः। हे पार्थ! इमं ब्रह्मबन्धुं त्रातुं जीवयितुं नैवार्हसि किन्तु जहि। "आततायिनमायान्तं हन्यादेवाविचारयन्" (मनु. स्मृ. 8-350) इति स्मृतेरिति भावः। तदेवाऽऽह — योऽसौ ब्रह्मबन्धुः निशि बालकान् तत्रापि सुप्तानवधीत् ॥ ३५ ॥

धर्मवित् पुमान् मत्तादिरूपं रिपुं न हन्ति। एवं तु धर्मस्थितिरित्यर्थः। तत्र मत्तं मधुना, प्रमत्तमनवहितं, उन्मत्तं पित्तादिना, जडं केवलमज्ञम् ॥ ३६ ॥

1 A.B फा° 2 A.B °शमयं

**विज**° परेषां शत्रूणां सम्बन्धिनो वीरान् हन्तीति परवीरहा, शत्रुवीराननिति वा। तं कृष्णं परिक्रम्य प्रदक्षिणीकृत्य ॥ २९ ॥

उभयोः शरसंवृते तेजसी अन्योन्यं संहत्य सङ्घट्टनं कृत्वा रोदसी द्यावापृथिव्यौ खमाकाशं च आवृत्य अर्कवह्निवत् ववृधाते इत्यन्वयः ॥ ३० ॥

सांवर्तकं प्रलयकालीनदाहममंसत न्यरूपयन् ॥ ३१ ॥

व्यतिकरो नाशोऽस्त्रोपसंहारलक्षणं वासुदेवमतम् ॥ ३२ ॥

गौतमीसुतं कृपीपुत्रं, रशनया रज्ज्वा ॥ ३३ ॥

शिबिराय स्कन्धावाराय सेनानिवेशनस्थानायेति यावत्। निनीषन्तं नेतुमिच्छन्तम् ॥ ३४ ॥

हे पार्थ! ब्रह्मबन्धुं ब्राह्मणाधममेनमश्वत्थामानं त्रातुं नार्हसि, किन्तु योऽसौ निशि रात्रौ सुप्तान् बालकान् अवधीदितीमं जहि हनेत्यन्वयः। अनागसोऽकृतापराधान्। तत्राश्वत्थाम्नो वध्यत्वेऽनागस्त्वं सुप्तत्वं बालकत्वमिति हेतुत्रयमनादृत्य तद्धननं कारणमिति ज्ञातव्यम् "अनागसं प्रसुप्तं च बालकं हन्ति यो नरः। स खण्डशो विधातव्य[1] इत्येवं मनुरब्रवीत्" इति स्मृतेः ॥ ३५ ॥

रिपुणा नैते हन्तव्या इत्याह — **मत्त** मिति। मत्तं मद्यादिपानेन मदान्धं, प्रमत्तं विस्मृतिमन्तम्, उन्मत्तं ग्रहग्रस्तं, जडं स्वतो विवेकज्ञानशून्यं, सुप्तं निद्रितं, बालं विशेषानभिज्ञं, स्त्रियं, बाल्ये तारुण्ये वार्धके च पराधीनवृत्तिं, प्रपन्नं शरणागतं, विरथं रथादिसाधनरहितम्। विपथं युद्धमार्गादपक्रान्तमिति केचित् पठित्वा व्याचक्षते; तत्, भयचलनयोः इति धातोः भीतं चलितं युद्धमार्गादपसृतमित्यनेन पुनरुक्तम्। न च कम्पितार्थत्वं, पाठविरोधात्। अतोऽनुपासितगुरुचरणैः उत्प्रेक्षितमुपेक्षणीयम् ॥ ३६ ॥

1. B,K,M निशातव्य

**रा० कृ०** भगवता श्रीकृष्णेन प्रोक्तम् अस्त्रोपसंहारोपायं श्रुत्वा परवीरहा शत्रुवीरहन्ता फल्गुनः अर्जुनः अपः स्पृष्ट्वा आचम्य तं श्रीकृष्णं परिक्रम्य प्रदक्षिणीकृत्य ब्राह्माय ब्रह्मास्त्रोपसंहाराय ब्राह्ममस्त्रं सन्दधे प्रयुयोज ॥ २९ ॥

उभयोः ब्रह्मास्त्रयोः तेजसी शरसंवृते शरैस्संवेष्टिते अन्योन्यं संहत्य रोदसी द्यावापृथिव्यौ खमन्तरिक्षं च आवृत्य अर्कवह्निवत् ववृधाते वृद्धिं गते ॥ ३० ॥

तत स्त्रीन् लोकान् प्रदहत् महत् तयोः अश्वत्थामार्जुनयोः अस्त्रतेजः दृष्ट्वा तेनेति शेषः। दह्यमानाः सर्वाः प्रजाः सांवर्तकं प्रलयाग्निं अमंसत अमन्यन्त ॥ ३१ ॥

लोकव्यतिकरं लोकनाशरूपं तं प्रजोपप्लवं प्रजानामुपद्रवं वासुदेवस्य मतम् आशयं च आलक्ष्य विलोक्य अर्जुनः द्वयं ब्रह्मास्त्रद्वयं सञ्जहार उपसंहृतवान्।

ब्रह्मास्त्रं तत्प्रयोक्तृभिः अनुध्याता संकल्पिता च आत्मशक्तिः या तेजोरूपेण व्याप्नोति, अश्वत्थामा तद्यथाविधि प्रयुक्तवान्। अर्जुनस्तु कृष्णं प्रदक्षिणीकृत्य तमनुस्मृत्य च तत् प्रायुङ्क्त। प्रयोगभेदेन प्रयुक्तयोरस्त्रयोः तारतम्यम्। तथाहि — द्रौणिप्रयुक्तमस्त्रं सूर्यसमम्, अर्जुनप्रयुक्तमस्त्रं वह्निसमम्। ते द्वे परस्परं प्राहरताम्। परमात्मना सृष्टो बहिर्व्यक्तरूपो भानुः तदन्तर्यामिरूपोऽग्निरिति ऋग्वेदोक्तिः। ब्रह्मास्त्रतेजोमयं कृष्णमनुस्मरता परिक्रमता च किरीटिना प्रयुक्तेऽस्त्रे तदनुषक्तं द्वितीयमस्त्रं द्रौणिप्रयुक्तं प्रशमं प्रापत्। सेयमर्जुनकृता अस्त्रद्वयोपसंहारप्रक्रिया ॥ ३२ ॥

ततः अस्त्रोपसंहारानन्तरम् अमर्षताम्राक्षः पुत्रवधजातेनासहनेन रक्ताक्षः अर्जुन इति शेषः। तरसा वेगेन दारुणं क्रूरं गौतमीसुतं कृपीसुतं द्रौणिम् आसाद्य समीपं गत्वा रशनया रज्ज्वा पशुं यथा पशुमिव बबन्ध बद्धवान् ॥ ३३ ॥

रज्ज्वा रिपुं बलात् बद्ध्वा शिबिराय निनीषन्तं नेतुमिच्छन्तमर्जुनं प्रति प्रकुपितः प्रकोपं गतो भगवानम्बुजेक्षणः प्राह अवोचत् ॥ ३४ ॥

हे! पार्थ! योऽसौ द्रौणिरनागसः निरपराधान् सुप्तान् निद्रितान् तत्रापि बालकान् तानपि निशि रात्रौ अवधीत् तमेनं ब्रह्मबन्धुं ब्राह्मणाधमं त्रातुं रक्षितुं माऽर्हसि। इमं जहि। अत्र "प्रकुपितः अम्बुजेक्षणः" इति कथनेन भगवतो दुष्टचेष्टासु प्रकोप एव न तु आत्मविकारहेतुः रोषः। अत एव सोऽन्तः कृपामय इति अम्बजेक्षणपदेन व्यज्यते। एतेन भगवत्कृतं दुष्टशिक्षणं प्रेममूलकं न तु द्वेषकृतमित्युन्नेयम् ॥ ३५ ॥

धर्मवित् धर्मज्ञः मत्तं मद्यादिना विवशं, प्रमत्तं कार्यान्तरव्यग्रतया अनवहितम्, उन्मत्तं पिशाचादिभिः पीडितं, सुप्तं बालं जडं प्रयत्नरहितं, स्त्रियं, प्रपन्नं शरणागतं विरथं भग्नरथं भीतं भयेन पलायमानम् एतादृशं रिपुं न हन्ति न हन्यादित्यर्थः। अयं तावत् राजसामान्यधर्मः। तेन लोकक्षेमार्थं कृष्णकृतः पूतनावधः निर्दोष एव ॥ ३६ ॥

**स्वप्राणान् यः परप्राणैः प्रपुष्णात्यघृणः खलः ।**
**तद्वधस्तस्य हि श्रेयो यद्दोषाद्यात्यधः पुमान् ॥ ३७ ॥**

**प्रतिश्रुतं च भवता पाञ्चाल्यै[1] शृण्वतो मम ।**
**आहरिष्ये शिरस्तस्य यस्ते मानिनि! पुत्रहा ॥ ३८ ॥**

**तदसौ वध्यतां पाप आतताय्यात्मबन्धुहा ।**
**भर्तुश्च विप्रियं वीर! कृतवान् कुलपांसनः ॥ ३९ ॥**

**सूत उवाच**

**एवं परीक्षता धर्मं पार्थः कृष्णेन चोदितः ।**
**नैच्छद्धन्तुं गुरुसुतं यद्यप्यात्महनं[2] महान् ॥ ४० ॥**

**अ[3]थोपेत्य स्वशिबिरं गोविन्दप्रियसारथिः ।**
**न्यवेदयत्तं प्रियायै शोचन्त्या आत्मजान् हतान् ॥ ४१ ॥**

**तथाऽऽहृतं पशुवत् पाशबद्धमवाङ्मुखं कर्मजुगुप्सितेन ।**
**निरीक्ष्य कृष्णापकृतं गुरोस्सुतं वामस्वभावा कृपया ननाम च[4] ॥ ४२ ॥**

**उवाच चासहन्त्यस्य बन्धनानयनं सती ।**
**मुच्यतां मुच्यतामेष[5] ब्राह्मणो नितरां गुरुः ॥ ४३ ॥**

---

1. H,V °ल्याः 2. W अप्यात्मजहनं 3 H,V ततोऽभ्येत्य 4 K,M omit च 5 H °व

**श्रीध० स्वेति।** तद्वधो दण्डरूपः तस्यैव श्रेयः पुरुषार्थः। यत् यतः दण्डप्रायश्चित्तरहितात् दोषात् स **पुमान्** **अधो** **याती**ति न[1]रकादिकं प्राप्नोति। तथा च स्मृ[2]तिः — "राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः। विधूतकल्मषा यान्ति स्वर्गं सुकृतिनो यथा।" (मनु. स्मृ. 8-318) इति ॥ ३७, ३८, ३९ ॥

**एवमिति।** यद्यपि चोदितः; तथाऽपि हन्तुं नैच्छत्। आत्महनं पुत्रहन्तारमपि "आ[3]त्मा वै पुत्रनामासि।" इति श्रुतेः। आ[4]त्मशब्देन पुत्रपरामर्शः। यतः महान् ॥ ४० ॥

**तत इति।** गोविन्दः प्रियः सारथिः च[5] यस्य सः। आत्मजान् शोचन्त्यै ॥ ४१ ॥

**तथेति।** तथा परिभवेन आहृतमानीतम्। कर्मणः जुगुप्सितेन दोषेण अवाङ्मुखम्। अपकृतम् अपकारिणम्। कृपया निरीक्ष्य। वामः शोभनः स्वभावः यस्यास्सा ॥ ४२ ॥

ननाम चोवाच चेति चकाराभ्यां सम्भ्रमस्सूचितः — **उवाचेति।** बन्धनेन आनयनमसहमाना ॥ ४३ ॥

1. A,B omit नरकादिकं प्राप्नोति 2. A,B स्मरन्ति 3. A,B omit आत्मा वै ... पुत्रपरामर्शः 4. H omits आत्मश ... परामर्शः 5. A omits च

**वीर॰** योऽघृणः निष्कृपावान् अत एव खलो दुरात्मा यः पुमान् परेषां प्राणैः स्वप्राणान् प्रपुष्णाति तस्य वधः तस्यैव श्रेयस्करः अन्यथा यस्मात् अकृतप्रायश्चित्तात् दोषात् पुमान् अधः नरके पतति ॥ ३७ ॥

किञ्च मम शृण्वतस्सतो भवता पाञ्चाल्यै द्रौपद्यै प्रतिश्रुतं प्रतिज्ञातं किमिति ? हे मानिनि! यस्तव पुत्रहन्ता तस्य शिर आहरिष्ये आहरिष्यामीति ॥ ३८ ॥

तत् तस्मादसौ पापात्मा आततायात्मनस्तव बन्धुहा कुमारघाती हे वीर! भर्तुः धृतराष्ट्रस्य विप्रियमिदं कर्म कृतवान्। कुलपांसनः कुलदूषकश्चातो वध्यताम् ॥ ३९ ॥

इत्थं धर्मं परीक्षता धर्मपरीक्षार्थमेवं ब्रुवता[1] कृष्णेन चोदितोऽपि इत्यर्थः[2] पार्थोऽर्जुन आत्मजहनमपि सुतहनमपि तं गुरुसुतं द्रौणिं हन्तुं नैच्छत्। यतोऽर्जुनो महान् गुरुकृतोपकाराभिज्ञः ॥ ४० ॥

ततो गोविन्दः प्रियः सारथिश्च यस्य सोऽर्जुनः स्वशिबिरमागत्य हतानात्मजान् प्रति शोचन्त्यै प्रियायै द्रौपद्यै तं द्रौणिं न्यवेदयत् ॥ ४१ ॥

तथा आहृतमानीतं पशुना तुल्यं पशुवत् पाशेन बद्धम्। पशुर्यथा पाशेन बध्यते तद्वद्बद्धम्। कर्मणः स्वकृतस्य जुगुप्सितेन जुगुप्साशब्दात् स्वार्थसन्नन्तात् भावे क्तः। निन्दया हेतुना अवाङ्मुखम्। अधोमुखम्[3] अपकृतमपकारिणम् अर्जुनेनापकृतं वा, गुरोस्सुतमश्वत्थामानं निरीक्ष्य दृष्ट्वा द्रौपदी वामस्वभावा हेतुगर्भमिदं सुस्वभावत्वात् ननाम ॥ ४२ ॥

अस्य गुरुसुतस्य बन्धनेन आनयनं बन्धनपूर्वकमानयनं बन्धनमानयनं च वा अस्य अर्जुनस्य वा अर्जुनकर्तृकबन्धनानयनमिति वा। असहन्ती सती द्रौपदी उवाच। उक्तिमेवाऽऽह — मुच्यतामित्यादिभिः सार्धैः पञ्चभिः। एष द्रौणिर्मुच्यतां मुच्यताम्; त्वरया द्विरुक्तिः। मोचनीयत्वे हेतुं दर्शयन्ती विशिनष्टि। ब्राह्मणस्तत्रापि गुरुः ॥ ४३ ॥

1. A,B कृतवता 2 A,B omit इत्यर्थः 3 A,B omit अधोमुखं

**विज॰** खल इन्द्रियारामोऽघृणो दयारहितः तद्वधः तस्य हिंसकस्य हननं श्रेयः साधु, कुतो येषां हिंसादिदोषादधो नरकं यातीति यस्मात्तस्मादिति ॥ ३७ ॥

प्रतिज्ञा च रक्षणीयेत्याह — **प्रतिश्रुतमिति।** हे मानिनि! मानार्हे! यः ते तव पुत्रान् हतवान् तस्य शिर आहरिष्य इति मम शृण्वतः सतः पाञ्चाल्यै द्रौपद्यै प्रतिज्ञातञ्च यस्मात्तस्मादित्यन्वयः ॥ ३८ ॥

आत्मबन्धुस्सुतस्तोकः पुत्रोऽङ्गज उदाहृतः" इत्यभिधानात् आत्मबन्धून् सुतान् हतवानित्यन्वयः। तस्मादसौ पापः। विप्रियं तु लोकदृष्ट्यैवेति ज्ञातव्यम् ॥ ३९ ॥

हरिणा अर्जुनं प्रति द्रौणिवधप्रतिपादनमर्जुनस्य धर्मपरीक्षणाभिप्रायमेव, न तु वधाभिप्रायमिति कथनपूर्वकमर्जुनस्य भक्त्यतिशयं कथयति — **एव** मिति। पार्थो गुरुसुतं हन्तुं नैच्छदित्यन्वयः। कथम्भूतः? यद्यप्येवं धर्मं परीक्षता कृष्णेन चोदितः, तथाऽपि नैच्छत्। कथम्भूतम्? आत्मानं हतवन्तम् अयमपि कश्चिद्धेतुः। पुनरपि कथम्भूतः? महान् महापुरुषः महत्त्वात् नैच्छदिति भावः ॥ ४० ॥

अथ गोविन्दः प्रियश्च सारथिश्च यस्य स तथोक्तः; स पार्थः स्वशिबिरमुपेत्य द्रौणिना हतान् आत्मजान् पुत्रान् प्रति शोचन्त्यै प्रियायै द्रौपद्यै तं न्यवेदयदित्येकान्वयः ॥ ४१ ॥

वामस्वभावा मृदुस्वभावा चारुतरशीलेति यावत्। कृष्णा तथाऽऽहृतं, तदेवाऽऽह पशुत्वात् पाशेन बद्धं, कर्मजुगुप्सितेन, कर्मणा लज्जया अवाङ्मुखम् अपकृतं पुत्रहत्यया अपकर्तारमपि गुरोः सुतं निरीक्ष्य कृपया ननामेत्येकान्वयः ॥ ४२ ॥

न केवलं नत्वा तूष्णीमभूत्, किन्तु वचनं चोवाचेत्याह — **उवाचेति।** अस्य द्रौणेः बन्धनेन नयनमसहमाना सती प्रशस्तसौशील्यादिगुणवती ब्राह्मण एव वर्णानां गुरुः अयञ्च नितरां युष्माकं गुरुः ॥ ४३ ॥

**रा० कृ०** यः अघृणः दयारहितः खलः दुष्टः परप्राणैः स्वप्राणान् पुष्णाति रक्षति, तद्वधः तादृशदुष्टस्य वधः तस्य हि तस्यैव श्रेयः श्रेयस्करः। अन्यथा यद्दोषात् यतो दोषात् पुमान् स इति शेषः। अधः नरकादिकं याति प्राप्नोति ॥ ३७ ॥

हे मानिनि! द्रौपदि! यः ते पुत्रहा पुत्रान् हतवान् तस्य शिरः आहरिष्ये त्वत्समीपमानेष्यामीति मम शृण्वत एव सतः भवता पाञ्चाल्यै प्रतिश्रुतं प्रतिज्ञातम् ॥ ३८ ॥

हे वीर! हे अर्जुन! पापः आततायी निष्कारणमन्यघातुकः आत्मबन्धुहा तव पुत्रघाती कुलपांसनः ब्राह्मणकुलदूषकः अश्वत्थामा भर्तुश्च दुर्योधनस्यापि विप्रियमप्रियं कृतवान्। तत् तस्मादसौ वध्यताम् हन्यताम् ॥ ३९ ॥

एवं धर्मं परीक्षता कृष्णेन चोदितः प्रेरितः महान् पार्थः आत्महनं यद्यपि आत्मभूतपुत्रघातिनमपि गुरुसुतमश्वत्थामानं हन्तुं नैच्छत् ॥ ४० ॥

अथ अनन्तरं गोविन्दप्रियसारथिः गोविन्दः प्रियः सारथिश्च यस्य सः अर्जुनः स्वशिबिरमुपेत्य आगत्य हतान् आत्मजान् उद्दिश्येति शेषः। शोचन्त्यै विलपन्त्यै प्रियायै द्रौपद्यै तमश्वत्थामानं न्यवेदयत् प्रादर्शयत् ॥ ४१ ॥

तथा अवमानेन आहृतमानीतं पशुवत् पाशबद्धं कर्मजुगुप्सितेन निन्दितकर्मणा अवाङ्मुखमधोमुखम् अपकृतं कृतापकारमपि गुरोस्सुतमश्वत्थामानं वामस्वभावा शोभनस्वभावा कृष्णा द्रौपदी कृपया निरीक्ष्य ननाम च

नमस्कृतवती। अत्र द्रौपद्याः परिणतमातृवात्सल्यातिशयः सूचितः। कृप्यपि पुत्तदुःखपीडिता माभूदिति पुत्रघातिन्यपि अश्वत्थामनि द्रौपदी दयां प्रदर्शितवती ॥ ४२ ॥

किञ्चास्य द्रौणेः बन्धनानयनं बन्धनेनानयनं असहमाना सती द्रौपदी "ब्राह्मणो नितरां गुरुश्च एष मुच्यतां मुच्यताम्।" सम्भ्रमे द्विरुक्तिः। इति अर्जुनमुवाच ॥ ४३ ॥

सरहस्यो धनुर्वेदः सविसर्गोपसंयमः ।
अस्त्रग्रामश्च भवता शिक्षितो यदनुग्रहात् ॥ ४४ ॥

स एष[1] भगवान् द्रोणः प्रजारूपेण वर्तते ।
तस्यात्मनोऽर्धं पत्न्यास्ते नान्वगाद्वीरसूः कृपी ॥ ४५ ॥

तद्धर्मज्ञ! महाभाग! भवद्भिर्गौरवं कुलम् ।
वृजिनं नार्हति प्राप्तुं पूज्यं वन्द्यमभीक्ष्णशः ॥ ४६ ॥

मा रोदीद[2]स्य जननी गौतमी पतिदेवता ।
यथाऽहं मृतवत्साऽऽर्ता रोदिम्यश्रुमुखी मुहुः ॥ ४७ ॥

यैः कोपितं ब्रह्मकुलं राजन्यैरजि[3]तात्मभिः ।
तत्कुलं प्रदहत्याशु सानुबन्धं शुचा[4]र्पितम् ॥ ४८ ॥

सूत उवाच

धर्म्यं न्याय्यं सकरुणं निर्व्यलीकं समं महत् ।
राजा धर्मसुतो राज्ञ्याः प्रत्यनन्दद्वचो द्विजाः! ॥ ४९ ॥

नकुलस्सहदेवश्च युयुधानो धनञ्जयः ।
भगवान् देवकीपुत्त्रो ये चान्ये याश्च योषितः ॥ ५० ॥

---

1. B °व 2 H,V °त्त° 3 K,M,N °कृ° 4 AF,GF °र्दि°

**श्रीध० सरहस्य** इति। सरहस्यः गोप्यमन्त्रसहितः। विसर्गः अस्त्रप्रयोगः, उपसंयमः उपसंहारः, ताभ्यां सहितः अस्त्रसमूहश्च य[1]दनुग्रहात् यस्य द्रोणस्यानुग्रहात् प्रसादात् ॥ ४४ ॥

**स** इति। किञ्च, तस्य द्रोणस्य आत्मा देहः तस्यार्धं कृपी आस्ते। अर्धत्वे हेतुः — पत्नी। "अर्धो वा एष आत्मनो यत्पत्नी" (तैत्ति. ब्रा. 3-3-3) इति श्रुतेः। "जायापती अग्निमादधीयाताम्" इति श्रुतेरुभयोरेकाकारत्वावगमाच्च। ननु भर्तरि मृते सा कथं जीवति? तत्राऽऽह — नान्वगाद्भर्तारम् यतः वीरसूः पुत्रवती ॥ ४५ ॥

**तदिति।** तत्तस्मात् गौरवं गुरोः कुलं कौरवं[2] वा भवद्भिः कर्तृभिः वृजिनं दुःखं प्राप्तुं नार्हति। किन्तु पूज्यं वन्द्यञ्च॥ ४६॥

**मा रोदीत्** इति। मृतवत्सा मृतपुत्रा॥ ४७॥

विपक्षे दोषमाह — **यैरिति।** तेषां राजन्यानां कुलम्। कर्म कथम्भूतम्? सानुबन्धं सपरिवारम्। शुचा शोकेन अर्पितं व्याप्तं च ब्रह्मकुलं कर्तृ प्रदहति॥ ४८॥

**धर्म्यमिति।** धर्म्यमित्यादयो वचसः षड्गुणाः पूर्वश्लोकषट्के द्रष्टव्याः। तत्र धर्म्यं धर्मादनपेतम्। मुच्यतां मुच्यतामिति। न्याय्यं न्यायादनपेतम्। सरहस्य इत्यादि। सकरुणं तस्यात्मनोऽर्धमित्यादि[3]। निर्व्यलीकं तद्धर्मज्ञेति। समं मा रोदीदिति दुःखसाम्योक्तेः। महत् यैः कोपितमिति निष्ठुरोक्त्या हितोपदेशात्। एवम्भूतं राज्ञ्याः वचो हे द्विजाः। प्रत्यनन्दत् अनुमोदितवान्॥ ४९॥

**नकुल** इति। नकुलादयश्च प्रत्यनन्दन्। युयुधानः सात्यकिः॥ ५०॥

---

1. A,B omit यदनुग्रहात् ... प्रसादात्॥ ४४॥ 2 A,B omit कौरवं वा 3 A °नोऽर्धमिति; B नोऽर्धं पत्नीति।

**वीर°** न ह्येष गुरुः अपित्वस्यायं पितेत्यत्र[1] आह — **सरहस्य** इति। भवता यस्यानुग्रहात् रहस्येन सहितो धनुर्वेदः सविसर्गोपसंयमः प्रयोगोपसंहारसहितोऽस्त्रग्रामः अस्त्रसमुदायश्च शिक्षितः॥ ४४॥

स भगवान् द्रोण **एवैष** प्रजारूपेण वर्तते। एतच्छब्दो द्रोणस्यैवाकारान्तरेण अवस्थितिपरामर्शकः "आत्मा वै पुत्रः" (कौषी. उ. 2-11) इति श्रुतेरिति भावः। पुत्रविषयापकारेण पितैवापक्रियते इति भावः। ननु स स्वर्गतः इत्यत्राऽऽह — **तस्येति।** तस्य द्रोणस्यात्मनः शरीरस्यार्धम् अर्धांशरूपा तत्पत्नी कृपी वीरसूः पुत्रवती सती[2] आस्ते, नान्वगात् न साऽनुमरणं कृतवती। अर्धमिति। समांशाभिप्रायेण नपुंसकनिर्देशः। "अर्धो वा एष आत्मनो[3] यत्पत्नी" (तैत्ति. ब्रा. 3-3-3) इति श्रुत्यभिप्रायेणार्धमित्युक्तम्। द्रोणस्य स्वर्गतत्वेऽपि तदर्धशरीरभूता तत्पत्न्यपक्रियत एवेति भावः॥ ४५॥

तत् तस्मात् हे धर्मज्ञ! मदुक्तधर्माभिज्ञ! हे महाभाग! गुर्वपमानराहित्यरूपमहाभाग्ययुक्त! भवद्भिः गुरूणां बहुमन्तृभिः गौरवं कुलं गुरोः सम्बन्धि कुलं वृजिनं दुःखं प्राप्तुं प्रापयितुं, भवद्भिर्हेतुभिः वृजिनं प्राप्तुमिति वा नार्हति, किन्त्वभीक्ष्णशः पौनःपुन्येन पूज्यं वन्दनीयं च भवद्भिरित्यनुषङ्गः॥ ४६॥

एतद्विषया[4]पकृत्या कृपी नितरामहमिव दुःखिता स्यात्, तत्तवानुचितमित्यभिप्रायेण आह। मृता वत्साः पुत्रा यस्यास्सा अत एव आर्ताऽहं मुहुर्मुहुरश्रुमुखी यथा रोदिमि तथाऽस्य ब्राह्मणस्य जननी पतिरेव देवता यस्यास्सा गौतमी गौतमस्य दुहिता कृपी मा रोदीत्॥ ४७॥

किञ्च इदं कर्म अस्मत्कुलस्याप्यनर्थकारीत्याह — **यैरिति**। अजितात्मभिः अजितः क्रोधपरवश आत्मा मनो येषां तैः यै राजन्यैः ब्रह्मकुलं विप्रकुलं कोपितं, कोपविषयीकृतम्, अत एव शुचा शोकेन अर्पितं प्रापितं दुःखितं सदित्यर्थः। तेषां राजन्यानां कुलं सानुबन्धमनुबन्धसहित माशु दहति। अत्र प्रदहनक्रियाकर्तृ ब्रह्मकुलं, कर्म तु राजन्यकुलम् ॥ ४८ ॥

हे द्विजाः! इत्थं धर्म्यं धर्मादनपेतं, न्याय्यं न्यायात् नीतेः अनपेतं, सकरुणं करुणायुक्तं निर्व्यलीकम् अनृताप्रियरहितं समम् अविषममनुरूपं महत् आशयगम्भीरं च राज्ञ्या द्रौपद्या वचो निशम्य धर्मसुतो युधिष्ठिरः प्रत्यनन्दत् ॥ ४९ ॥

तथा नकुलादयः ये चान्ये तद्व्यतिरिक्ताः पुरुषाः, याश्च स्त्रियः सर्वे ते प्रत्यनन्दन्निति वचनविपरिणामेन पूर्वेणान्वयः ॥ ५० ॥

---

1. A,B °त 2. A,B omit सती 3 A,B °क्रियेतैवेति 4. A,B °यात् कृत्यात्।

**विज०** अतिशयितगुरुत्वमाह — **सरहस्येति**। सरहस्यः सकीलको धनुर्वेदः सविसर्गोपसंयमः प्रयोगोपसंहारसहितः अस्त्रग्रामो ब्रह्माद्यस्त्रसमूहो यस्य द्रोणस्यानुग्रहात् भवता शिक्षितः अभ्यस्तः ॥ ४४ ॥

स एष द्रोणो भगवान् प्रजारूपेण "आत्मा वै पुत्रनामासि" (कौषी. उ. 2-11) इति श्रुतेः पुत्ररूपेण वर्तते यतो गुरुपुत्रस्य गुरुवत्पूजार्हत्वादिति भावः। किन्तु अन्योऽपि हेतुरस्तीत्याह — **तस्येति**। तस्य द्रोणस्यात्मनः शरीरस्यार्धमर्धाङ्गी सती वीरसूः वीरपुत्रवती कृपी सम्प्रत्यास्ते, पतिं नान्वगात् अनुगमनं न कृतवती यतः, अतो गुरुपत्नीभक्त्या च मुच्यतामिति भावः ॥ ४५ ॥

न केवलं गुरुभक्तिरेवात्र हेतुः अन्योऽप्यस्तीत्याह — **तदिति**। गुरौ गुरुपुत्रेषु वा आचारनमनलक्षणो यो धर्मः तं जानातीति धर्मज्ञः। हे धर्मज्ञ! भगानां भाग्यानां समुदायो भागः। महान् भागो यस्य स तथा, तस्य सम्बुद्धिर्महाभाग! अश्वत्थाम्नो दुःखे सति तन्मातुरपि दुःखं स्यात् तेन तत्कोपे न[1] अस्मत्कुलस्यापि पापं भवेदिति। यस्मात्तस्मादभीक्ष्णशः सर्वदा सर्वैः पूज्यं वन्द्यं गौरवं कुलं भवद्भिर्वृजिनं पापं तन्निमित्तं दुःखं वा प्राप्तुं नार्हति योग्यं न भवति ॥ ४६ ॥

यथा अश्रुमुखी मृतवत्सा मृतपुत्रा अत एव आर्ताऽहं मुहुरनिशं रोदिमि तथा पतिरेव देवता यस्यास्सा तथा गौतमी कृपी अस्याश्वत्थाम्नो जननी माता मा रोदीदित्येकान्वयः। तस्मादस्मत्कुलहिताय वा मुच्यतामयं गुरुपुत्र इत्यर्थः ॥ ४७ ॥

विपक्षे बाधकमाह — **यैरिति**। अकृतात्मभिः अशिक्षितबुद्धिभिः यै राजन्यैर्ब्राह्मणकुलं कोपितं तत्कुपितं शुचाऽर्पितं प्राप्तशोकं सानुबन्धं समूलभूतं तेषां राज्ञां कुलं तत्क्षणमेव प्रदहतीत्यन्वयः ॥ ४८ ॥

धर्म्यं धर्मादनपेतं, न्याय्यं न्यायादनपेतं, दयासहितं निर्व्यलीकं समं शत्रुमित्रभावशून्यं सर्वशास्त्रानुसृतं वाऽर्थतो महत् ॥ ४९ ॥

एते नकुलादयश्च प्रत्यनन्दन् इत्यध्याहृत्य अन्वयः। युयुधानः सात्यकिः ये चान्येऽनुजीविनः ते च, याश्च स्त्रियः ताश्च ननन्दुरिति भावः ॥ ५० ॥

---

1. A मा

**रा० कृ०** सरहस्यः रहस्यमन्त्रसहितः धनुर्वेदः सविसर्गोपसंयमः प्रयोगोपसंहारसहितः अस्त्रग्रामश्च यदनुग्रहात् यस्य द्रोणस्यानुग्रहात् प्रसादात् भवता शिक्षितः अधीतः, स एष भगवान् द्रोणः प्रजारूपेण "आत्मा वै पुत्रनामासि" (कौषी. उ. 2-11) इति श्रुतेः वर्तते। अपि च तस्य द्रोणस्य आत्मनः देहस्य अर्धं पत्नी वीरसूः वीरमाता कृपी आस्ते नान्वगात् सा पतिं नान्वगच्छत् ॥ ४४, ४५ ॥

तत्तस्मात् धर्मज्ञ! महाभाग! अर्जुन! गौरवं गुरोस्सम्बन्धि कुलं भवद्भिः वृजिनं दुःखं प्राप्तुं नार्हति। अभीक्ष्णशः पुनः पुनः पूज्यं वन्द्यं च भवतीति शेषः ॥ ४६ ॥

मृतवत्सा मृतपुत्त्रा अत एव आर्ता दुःखिता अश्रुमुखी अहं यथा मुहुः रोदिमि तथाऽस्याश्वत्थाम्नो जननी पतिदेवता गौतमी कृपी मा रोदीत् रोदनं न कुर्यात् ॥ ४७ ॥

अजितात्मभिः अनिगृहीतमनस्कैः यैः राजन्यैः ब्रह्मकुलं ब्राह्मणकुलं कोपितं भवति तत् ब्रह्मकुलमिति शेषः। शुचा शोकेनार्पितं व्याप्तं सत् सानुबन्धं सपरिवारं तत्कुलं राजन्यकुलम् आशु दहति भस्मसात्करोति। अत्र श्रीकृष्णं प्रपन्नायाः कृष्णायाः संसारातीतचित्तवृत्तिः सूचिता ॥ ४८ ॥

हे द्विजाः! धर्मसुतो राजा युधिष्ठिरः राज्ञ्याः द्रौपद्याः धर्म्यं धर्मादनपेतं, न्याय्यं न्यायसहितं, सकरुणं, निर्व्यलीकम् अनृताप्रियरहितं समं दुःखसाम्यसूचकं महत् निष्ठुरोक्त्या हितोपदेशात् पूज्यं वचः वचनं प्रत्यनन्दत् अनुमोदितवान् ॥ ४९ ॥

एवं नकुलः सहदेवः युयुधानः सात्यकिः धनञ्जयः अर्जुनः भगवान् देवकीपुत्रः श्रीकृष्णः ये चान्ये पुरुषाः, याश्च योषितः, ते सर्वे, ताः सर्वाश्च द्रौपदीवचनं प्रत्यनन्दन्निति शेषः ॥ ५० ॥

**तत्राऽऽहामर्षितो भीमस्तस्य श्रेयान् वधः स्मृतः ।**
**न भर्तुर्नात्मनश्चार्थे[1] योऽहन् सुप्तान् शिशून् वृथा ॥ ५१ ॥**

**निशम्य भीमगदितं द्रौपद्याश्च चतुर्भुजः ।**
**आलोक्य वदनं सख्युरिदमाह[2] हसन्निव ॥ ५२ ॥**

**श्रीकृष्ण उवाच**

**ब्रह्मबन्धुर्न हन्तव्य[3] आततायी वधार्हणः[4] ।**
**मयैवोभयमाम्नातं परिपाह्यनुशासनम् ॥ ५३ ॥**

**कुरु प्रतिश्रुतं सत्यं यत्तत्सान्त्वयता प्रियाम् ।**
**प्रियञ्च भीमसेनस्य पाञ्चाल्या मह्यमेव च ॥ ५४ ॥**

**सूत उवाच**

**अर्जुनस्सहसाऽऽज्ञाय[5] हरेर्हार्दमथासिना ।**
**मणिं जहार मूर्धन्यं द्विजस्य सहमूर्धजम् ॥ ५५ ॥**

**विमुच्य रशना[6]बद्धं[7] बालहत्याहतप्रभम् ।**
**तेजसा मणिना हीनं शिबिरान्निरयापयत् ॥ ५६ ॥**

**वपनं[8] द्रविणादानं स्थानान्निर्यापणं तथा ।**
**एष हि ब्रह्मबन्धूनां वधो नान्योऽस्ति दैहिकः ॥ ५७ ॥**

**पुत्रशोकातुरास्सर्वे पाण्डवास्सह कृष्णया ।**
**स्वानां मृतानां यत्कृत्यं चक्रुर्निर्हरणादिकम् ॥ ५८ ॥***

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
प्रथमस्कन्धे द्रौणिनिग्रहो नाम सप्तमोऽध्यायः ॥ ७ ॥

---

1 H V.W °रा° 2 W स्मय° 3 B °व्यो ह्या° 4 AF.GF °कः 5 AF.GF ज्ञात्वा 6 B °स° 7 H.V °बन्धं 8. K.M बन्धनं

* This comes at the beginning of VIII chapter in K&M

**श्रीध० तत्रेति ।** तस्य तथाविधस्य द्रौणेः वध एव श्रेष्ठः । अन्यथा अस्य नरकपातप्रसङ्गात्[1] । तदाह — न भर्तुरिति । अहन् जघान ॥ ५१ ॥

**निशम्येति ।**. चतुर्भुज[2] इत्युक्तेः अयं भावः — भीमे तं हन्तुं प्रवृत्ते, द्रौपद्यां च अनिच्छन्त्यां[3] सहसा तन्निवारणे प्रवृत्तायाम् उभयोः संनिवारणाय[4] आविष्कृतचतुर्भुज इति । सन्दिहानस्य सख्युरर्जुनस्य ॥ ५२ ॥

**ब्रह्मबन्धु** रिति । वधार्हणः वधार्हः । मयैव शास्त्रकृता "ब्राह्मणो न हन्तव्यः" तथा, "आततायिनमायान्तमपि वेदान्तपारगम् । जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत्" ॥ (भार. 4-651* 3 post) इति च वदता । तदुभयमप्यनुशासनं परिपालय ॥ ५३ ॥

तव च प्रतिज्ञां पूरयेत्याह — **कुर्विति**। प्रियां सान्त्वयता त्वया यत् प्रतिश्रुतं हननं तच्च सत्यं कुरु प्रियं च कुरु। मह्यं मम तत्र वधे भीमस्य प्रियं भवति, अवधे द्रौपद्याः प्रि[5]यं द्वये श्रीकृष्णस्य प्रि[6]यमिति च॥ ५४॥

**अर्जुनमिति**। हरेः श्रीकृष्णस्य हार्दमभिप्रायमाज्ञाय ज्ञात्वा न ह्यशक्यमुभयं विदध्यात्; अतोऽस्यायमभिप्राय इति ज्ञात्वेत्यर्थः। असिना खड्गेन। मूर्धन्यं मूर्धनि जातम्। सहमूर्धजं सकेशम्॥ ५५॥

**विमुच्येति**। मणिना च हीनं निरयापयन्निस्सारितवान्॥ ५६॥

अनेन श्रीकृष्णोक्तं सर्वं सम्पा[7]दितमित्याह — **वपनमिति**॥ ५७॥

**पुत्रेति**। निर्हरणं दाहार्थं नयनम्॥ ५८॥

इति श्रीमद्भागवते प्रथमस्कन्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां सप्तमोऽध्यायः॥ ७॥

---

1 B प्रसङ्गः स्यात् 2 A.B °जोक्तेः 3 A.B omit अनिच्छन्त्यां 4 A.B सवरणाय 5 A.B omit प्रिय 6 A V omit प्रियमिति च
7 B °दितवानि°

**वीर०** तत्र भीमस्त्वमर्षित आह — **किमिति**। तस्य ब्रह्मबन्धोः द्रौणेः वध एव श्रेयान् स्मृतः। कुतः? यतोऽयं भर्तुः धृतराष्ट्रस्य आत्मनः स्वस्य चार्थे प्रयोजनाय न सुप्तान् शिशून् हतवान्, किन्तु वृथैव हतवानिति॥ ५१॥

भीमस्य द्रौपद्याश्च गदितं व[1]चः श्रुत्वा चतुर्भुजो भगवान् श्रीकृष्णः सख्युरर्जुनस्य वदनमालोक्य स्म[2]यन् ईषद्धसन्निवेदं वक्ष्यमाणमाह॥ ५२॥

तदेवाऽऽह — **ब्रह्मबन्धुरिति** द्वाभ्याम्। ब्रह्मबन्धुरिति हेतुगर्भम्। ब्रह्मबन्धुत्वादयं न हन्तव्यः। आततायीत्यपि हेतुगर्भम्। आततायित्वादयं वधार्हणः वधमर्हतीति वधार्हणः। नन्द्यादित्वात् कर्तरि ल्युः। मयैवमुभयमाम्नातं वधार्हत्वमनर्हत्वं चेत्युभयमपि सहेतुकमिति अनुशासनं मदनुशासनम्। न ब्राह्मणं हन्यात्। "आततायिनमायान्तं हन्यादेवाविचारयन्" (मनु. स्मृ. 8-350) इत्यादिशास्त्रानुमतमिदमुभयं पाहि, पालय नातिक्रमस्व, यथैतदुभयं पालितं स्यात्तथा कुर्वित्यर्थः॥ ५३॥

तत्रान्यतरकरणेऽन्यदकृतं स्यात्, तत् तवानुचितमित्यभिप्रायेणाऽऽह — **कुर्वति**। प्रियां द्रौपदीं सान्त्वयता त्वया यत्प्रतिश्रुतं प्रतिज्ञातं शिरश्छिन्द्यामिति तदपि सत्यं यथार्थं कुरु; भीमादीनां प्रियं च कुरु॥ ५४॥

तत एवमुक्तोऽर्जुनो भावज्ञो हरेर्हार्दं हृद्गतमभिप्रायमाज्ञाय असिना **खड्गेन** साधनेन द्विजस्य द्रौणेः मूर्धन्यं मूर्ध्नि धारितं मणिं मूर्धजैः केशैः सहितं यथा तथा जहार हृतवान्॥ ५५॥

ततो रश[3]नां विमुच्य पूर्वमेव बालानां हत्यया हता प्रभा यस्य तं तेजसा तेजःपदेन मणिना च हीनं रहितं सुतरां हतप्रभं शिबिरान्निरयापयत् बहिः निस्सारयामास॥ ५६॥

नन्वेवमपि स्वप्रतिश्रुतं भीमगदितं च न कृतमेवेत्याशङ्कमानं शौनकं प्रत्याह सूतः — **वपन** मिति। वपनं मुण्डनं द्रविणादानं धनापहरणं स्थानान्निर्यापणं चेत्येष एव हि ब्रह्मबन्धूनां वधः, अन्यो दैहिकः शिरःपाण्यादिच्छेदरूपः नास्ति हि। तत्रैतत् त्रयमपि कृतमेव, तेनैव वधोऽपि कृतप्राय एवेति भावः॥ ५७॥

ततस्सर्वे पाण्डवा युधिष्ठिरादयः कृष्णया द्रौपद्या सह शोकपीडिताः सन्तो मृतानां स्वानां पुत्रबन्धूनां यत् कर्तव्यं निर्हरणादिकं तच्चक्रुः॥ ५८॥

इति श्रीमद्भागवते प्रथमस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां सप्तमोऽध्यायः॥ ७॥

---

1. A.B वाक्यं 2 A B omit स्मयन् 3 B °स°

**विज**० तत्र तस्यामवस्थायाममर्षितो भीम आहेत्यन्वयः। यो भर्तुः दुर्योधनस्यात्मनः स्वस्य च नार्थे सुप्तान् शिशून् वृथा अहन् हतवान्। वृथाशब्दोऽवध्यविषयो वध्यानामर्थे च न भवति, तस्य वधस्तस्यैव श्रेयान् स्मृतो नास्माकं पापमिति भावः॥ ५१॥

चतुर्भुजो भीमगदितं श्रुत्वा द्रौपद्याश्च वचनमिति शेषः। सख्युरर्जुनस्य वदनमवलोक्य मन्दस्मितं कुर्वन्निदमाहेत्येकान्वयः॥ ५२॥

हन, न हनेत्युभयं मयैव आम्नातमभिहितं यस्मात्तस्मादनुशासनम् आत्मवचनं परिपाहीत्यन्वयः॥ ५३, ५४॥

अर्जुनः सहसा झटिति हरेर्हृदि स्थितमाज्ञाय सम्यक् ज्ञात्वा क्षुरधारेणासिना द्विजस्य सहमूर्धजं केशैस्सहितं मूर्धन्यं मूर्ध्ना सहोत्पन्नं मणिं जहारेत्यन्वयः॥ ५५॥

तेजसा सामर्थ्येन शरीरकान्त्या वा रत्नेन च रहितं शिशूनां वधेन हतप्रभम् अलक्ष्मीनिधानं रज्ज्वा बद्धं विमुच्य शिबिरान्निरयापयत् शवनिर्गमनवत् निष्कासयामासेत्येकान्वयः॥ ५६॥

ब्रह्मबन्धूनां प्राणत्यागलक्षणमरणप्रतिनिधिरयं वध इत्याह — **बन्धन** मिति। ब्रह्मबन्धूनामेष एव वधो वधप्रतिनिधिः। अन्यो दैहिको नेत्रोत्पाटनादिको नास्तीत्यन्वयः। शास्त्रविहितो नास्तीति भावः। कोऽसाविति तदाह बन्धनमिति। पाशेन करौ पृष्ठे कृत्वा बन्धनं, द्रविणादानं हिरण्याहरणं, स्थानान्निर्यापणं स्वदेशान्निर्यापणम्। तथाशब्दः प्रत्येकमभिसम्बन्धयितव्यः। सान्त्वयन्नित्यारभ्य नान्योऽस्ति दैहिक इत्यन्तं यदुक्तं तदिदं द्रौणिना स्वप्ने दृष्टं सङ्कथितम्। अन्यथा ग्रन्थान्तरविरोधः। तत्र भीमेन कृतमित्युक्तत्वादिति ज्ञातव्यम्॥ ५७॥

*भक्तिविधानार्थं भक्तवात्सल्याद्यचिन्त्यमाहात्म्यं मुरारे र्निरूप्यतेऽस्मिन्नध्याये। तदर्थं मृतानां यत्कर्तव्यं लौकिकं तदुच्यते — **पुत्र शोकेति**। सर्वे पाण्डवाः मृतानां प्राणवियोगं प्राप्तानां स्वानां बन्धूनां यत्कृत्यं निर्हरणादिकं तच्चक्रुरित्यन्वयः॥ ५८॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
प्रथमस्कन्धे सप्तमोऽध्यायः ॥ ७ ॥

---

1 A omits मूर्धन्यं *This comes at the beginning of the VIII Chapter in K & M

**रा॰ कृ॰** तस्मिन् समयेऽमर्षितः तत्कृतं प्रतिनन्दनमसहमानः भीमः न भर्तुरर्थे न दुर्योधनप्रयोजनाय वा, न चात्मनोऽर्थे नाप्यात्मप्रयोजनाय वा, यो वृथा सुप्तान् शिशून् अहन् अवधीत्; सुप्तशिशुवधः न प्रभुप्रयोजनसाधकः नापि स्वप्रयोजनसाधक इत्यर्थः। तस्य द्रौणेर्वधः श्रेयानित्याह ॥ ५१ ॥

भीमगदितं भीमस्य वचनं द्रौपद्याश्च वचनमिति शेषः। निशम्य श्रुत्वा चतुर्भुजो भगवान् सख्युरर्जुनस्य वदनमालोक्य हसन्निवेदं वक्ष्यमाणमिति शेषः। आह ॥ ५२ ॥

ब्रह्मबन्धुः ब्राह्मणाधमोऽपि न हन्तव्यः, किन्तु आततायी वधार्हणः वधार्हः इति मयैवोभयमाम्नातं, तदनुशासनं ममेति शेषः। परिपाहि परिपालय। प्रियां द्रौपदीं सान्त्वयता अनुनयता त्वयेति शेषः। यत्प्रतिश्रुतं प्रतिज्ञातं तत्सत्यं कुरु। किञ्च भीमसेनस्य पाञ्चाल्याः मह्यमेव मम च प्रियं कुरु।

नन्वश्वत्थामा आततायी ब्रह्मबन्धुरिति प्रत्यक्षतः प्रमाणीकृतोऽयमर्थः, तथाऽपि मुच्यतां मुच्यताम् एष ब्राह्मणो नितरां गुरुः, "यैः कोपितं ब्रह्मकुलं ..... प्रदहत्याशु" (भाग. 1-7-48) इत्यादिना तद्वधो द्रौपद्या बहुधा प्रतिषिद्धः। तद्वचनं धर्मराजादयः प्रत्यनन्दन्। अनन्तरं भगवता च "ब्रह्मबन्धुर्न हन्तव्यः" इत्यादिकं कथयता तदेव समर्थितम्। तथा सति दण्ड्यानामदण्डने लोकरक्षणव्यवस्था कथं सुप्रतिष्ठिता भवति? तर्हि ब्राह्मणत्वमात्रप्रयुक्तोऽयं द्रौणिवधनिषेध इति चेत्, मैवम् "आततायिनमायान्तं हन्यादेवाविचारयन्" (मनु. स्मृ. 8-350) इति, "आततायिनमायान्तमपि वेदान्तपारगम्। जिघांसन्तं जिघांसीयात्रतेन ब्रह्महा भवेत्॥" (भार. 4-651 3 pr.) इति चोक्तत्वात्। सत्यम्। अत्रोच्यते — ब्राह्मणैः क्षत्त्रियैः अन्योऽन्यरक्षकैः अवशिष्टाः सर्वाः प्रजाः सुरक्षिता भवेयुरिति भागवताशयः। किञ्च ब्राह्मणापेक्षया भागवतोत्तमेषु क्षत्त्रियेष्वेव नैसर्गिको भक्तियोगः। वेदशास्त्राध्ययनपरब्रह्मज्ञानपरायणेभ्योऽपि भक्तिरहितेभ्यो ब्राह्मणेभ्यो नारदादिभिः कृतो मोक्षसाधनसामग्र्यां गरीयस्याः भक्त्याः समुपदेशो दरीदृश्यते। तथा भागवते च राजर्षीणामेव कथाः प्रायशो दृश्यन्ते। तस्मात् कृतापराधेऽपि ब्राह्मणे तत्कोपनं लोकरक्षादीक्षादक्षेण राज्याश्रममुनिना राजर्षिणा समाहितचेतसा परिहर्तव्यम्। कुपितात् क्षत्त्रियादपि ब्राह्मणादेव महीयान् लोकव्युत्क्रमः। तथाहि — पुरा परशुरामेण क्षत्त्रियाणामविनयं निजिघृक्षता क्षत्त्रिया अपि निश्शेषं निर्मूलिताः। ततश्च आश्रीरामावतारं नानाराष्ट्रप्रजाः धर्मपालनप्रच्युताः अशरणाश्च बभूवुः। ईदृशदुरवस्थातो लोकमुद्धर्तुकामो रामः प्रथमं परशुरामगर्वभङ्गं विधाय पश्चात् लोके वेदधर्मं प्रतिष्ठापितवान्॥ ५३, ५४ ॥

अर्जुनस्सहसा झटिति हरेः हार्दमभिप्रायमाज्ञाय सम्यक् ज्ञात्वा अथ अनन्तरम् असिना खड्गेन मूर्धन्यं मूर्ध्नि जातं, सहमूर्धजं केशसहितं द्विजस्य द्रौणेः मणिं जहार छित्वा आहृतवानित्यर्थः॥ ५५॥

ततः रशनाबन्धं रज्जुकृतं बन्धं विमुच्य बालहत्याहतप्रभं तेजसा मणिना हीनं द्रौणिमिति शेषः। शिबिरात् स्वकीयात् निरयापयत् निष्कासयामास॥ ५६॥

वपनं मुण्डनं, द्रविणादानं धनापहरणं तथा स्थानात् निवासस्थानात् निर्यापणं निस्सारणं च इत्येष एव हि ब्रह्मबन्धूनां वधः; अस्मादन्यः दैहिकः शिरश्छेदनादिरूपः वधः नास्ति॥ ५७॥

कृष्णया द्रौपद्या सह पुत्रशोकातुराः पुत्रशोकेन पीडिताः सर्वे पाण्डवाः मृतानां स्वानां बन्धूनां निर्हरणादिकं दाहार्थनयनादिकं यत्कृत्यं वर्तते तत्सर्वं चक्रुः॥ ५८॥

इति श्रीमद्भागवते प्रथमस्कन्धे
श्रीराधाकृष्णप्रणीतायां सुधीसुधायां व्याख्यायां
सप्तमोऽध्यायः॥ ७॥



# अष्टमोऽध्यायः

सूत उवाच

*अथो निशामयामास कृष्णायै भगवान् पुरा ।
पतितायाः पादमूले रुदन्त्या यत् प्रतिश्रुतम् ॥

पश्य राज्यरिदारांस्ते रुदतो मुक्तमूर्धजान् ।
आलिङ्ग्य स्वपतीन् भीमगदाभग्नोरुवक्षसः ॥

अथ ते[1] सम्परेतानां स्वानामुदकमिच्छताम् ।
दातुं सकृष्णा गङ्गायां पुरस्कृत्य ययुः स्त्रियः ॥ १ ॥

ते निनीयोदकं सर्वे विलप्य च भृशं पुनः ।
आप्लुता हरिपादाब्जरजःपूत[2]सरिज्जले ॥ २ ॥

तत्रासीनं कुरुपतिं धृतराष्ट्रं सहानुजम् ।
गान्धारीं पुत्रशोकार्तां पृथां कृष्णां च माधवः ॥ ३ ॥

सान्त्वयामास मुनिभिः हतब[3]न्धून् शुचार्[4]पितान् ।
भूतेषु कालस्य गतिं दर्शयन्नप्रतिक्रियाम् ॥ ४ ॥

---

*These two following verses are found in K & M and commented upon by विजयध्वजतीर्थ । The commentary is to be found in its proper place 1 AF,GF तेषां प° 2 W °पूते 3 K,M °पुत्रान् 4 H,V °र्दि°

## श्रीधरस्वामिविरचिता भावार्थदीपिका

अष्टमे कुण्तिद्रौणेरस्त्राद्रक्षा परीक्षितः ।
श्रीकृष्णेन[1] स्तुतिः कुन्त्या राज्ञश्शोकश्च कीर्त्यते ॥

**अथेति** । ते पाण्डवाः सम्परेतानां मृतानां गङ्गायां उदकं[2] दातुं सकृष्णाः कृष्णेन सहिताः स्त्रियः स्त्रीः पुरस्कृत्य अग्रतः कृत्वा। तस्मिन् कार्ये स्त्रीपुरस्सरत्वविधानात् ॥ १ ॥

**त** इति। उदकं निनीय[3] दत्वा। हरिपादाब्जरजोभिः पूता या सरित् गङ्गा तस्या जले। पुनर्ग्रहणात् आदावपि स्नाता इति गम्यते ॥ २ ॥

**तत्रेति** । कुरुपतिं युधिष्ठिरं सहानुजं भीमादिभिः सहितम् । पुत्रशोकार्तां इति तिसृणां विशेषणम् ॥ ३ ॥

**सान्त्वयामासेति** । मुनिभिः सहितः ॥ ४ ॥

---

1 B कृष्णेन तत्स्तुतिः ; H,V श्रीकृष्णसंस्तुतिः 2 H,V add निवापोदकं 3 H,V add निवापोदकं

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अथ ते पाण्डवाः सम्परेतानां[1] स्वानां उदकं तिलोदकम् । एतच्छ्राद्धादीनामप्युपलक्षणम् । इच्छतां प्रेतरूपेण कामयमानानां दातुं उदकं दातुं स्त्रियः द्रौपद्यादिस्त्रीः पुरस्कृत्य कृष्णेन सहिताः गङ्गां ययुः ॥ १ ॥

तत्र ते सर्वे पाण्डवादयः भृशं पुनः पुनः विलप्य सम्परेतानां उदकं निनीय प्रदाय हरेः कृष्णस्य पादाब्जयोः रजसा पूते सरितः गङ्गायाः जले आप्लुताः स्नात्वा[2] विशुद्धा बभूवुः इत्यर्थः ॥ २ ॥

तत्र गङ्गातीरे आसीनं उपविष्टं सहानुजं कुरूणां पतिं धृतराष्ट्रं पुत्रशोकार्तामिति गान्धारीकृष्णयोः विशेषणम् । तत्र गान्धारी धृतराष्ट्रभार्या, पृथा कुन्ती, कृष्णा द्रौपदी, माधवः कृष्णः सान्त्वयामास इत्युत्तरेण अन्वयः । सहानुजम् इत्यत्र अनुजशब्दः पाण्डुसुतधर्मराजादीनां उपलक्षकः । तेषामपि अत्र शोकार्तत्वेन सान्त्वनीयत्वात्, न तु विदुरपरः तस्य पूर्वमेव धृतराष्ट्रेण निर्यापितत्वात् । यादवक्षयानन्तरं आगामिनः तदा अवस्थानासम्भवात्, एतच्च अस्मिन् तृतीये स्कन्धे स्फुटीभविष्यति ॥ ३ ॥

हता बन्धवः येषां तान् अत एव शुचा शोकेन अर्पितान् अर्दितान् धृतराष्ट्रादीन् बन्धून् भूतेषु लोकेषु न विद्यते प्रतिक्रिया प्रत्युपायः यस्याः तां कालस्य गतिं जन्ममरणाद्युत्पादनरूपां[3] दर्शयन् मुनिभिः सह सान्त्वयामास । माधव इति कर्तृपदं अनुषङ्गेण योजनीयम् । एव मुत्तरत्राऽपि ज्ञेयम् ॥ ४ ॥

---

1 W adds मृतानां 2 W स्नाताः आप्लुत्य शुद्धा बभू° 3 W °द्यापादन°

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

*भीमहतान् दर्शय इति पुरा यत् प्रतिश्रुतं तदस्यै द्रौपद्यै निशामयामास दर्शयाञ्चकारेत्वन्वयः ॥

हे राज्ञि! ते तव अरिदारान् शत्रुभार्याः मुक्तमूर्धजान् मुक्तकेशीः । भीमस्य गदया भग्नाः ऊरवः उत्सङ्गाश्च वक्षांसि च येषां ते तथोक्ताः । उरूणि विस्तीर्णानि वक्षांसीति वा ॥

स्त्रियः पुरस्कृत्य सम्परेता युद्धे मृताः सकृष्णाः द्रौपद्या सहिताः कृष्णेन यादवेन्द्रेण सहिता वा ॥ १ ॥

ते पाण्डवाः तिलोदकं निनीय दत्वा भृशं विलप्य परिवेदनलक्षणं रोदनं कृत्वाा पश्चात् हरेः पादपद्मपरागेण पूते शुद्धे सरितः गङ्गायाः जले आप्लुताः स्नाताः अभूवन् इत्यन्वयः ॥ २ ॥

अनुजेन सञ्जयेन सह वर्तमानम् ॥ ३ ॥

मुनिभिः सह। हताः पुत्राः येषां ते तथा तान्। भूतेषु प्राणिषु कालरूपस्य हरेः गतिं विक्रमप्रतिक्रियां अपरिहार्यां दर्शयन् ॥ ४ ॥

---

1. M °देवन° * Commentary on additional V

## श्रीराधाकृष्णप्रणीता सुधीसुधा

अथ अनन्तरं ते पाण्डवाः सम्परेतानां मृतानां, अत एव उदकं इच्छतां स्वानां स्वबन्धूनां तदुदकं गङ्गायां दातुं सकृष्णाः कृष्णेन सहिताः सन्तः, स्त्रियः स्त्रीः पुरस्कृत्य ययुः जग्मुः ॥ १ ॥

ते सर्वे उदकं निवापोदकं निनीय मृतेभ्यः दत्वा भृशं विलप्य पुनश्च हरिपादाब्जरजःपूतसरिज्जले विष्णुपादपद्मपरागैः पवित्रीकृते गङ्गाजले आप्लुताः स्नाताः बभूवुः इति शेषः ॥ २ ॥

तत्र गङ्गातीरे आसीनं सहानुजं कुरुपतिं युधिष्ठिरं धृतराष्ट्रं पुत्रशोकार्तां गान्धारीं कृष्णां द्रौपदीं च अनन्तरं पृथां कुन्तीं च माधवः श्रीकृष्णः मुनिभिः सह सान्त्वयामास। ततः हतबन्धून् अत एव शुचा दुःखेन अर्दितान् पीडितान् गान्धारीधृतराष्ट्रादीन् भूतेषु लोकेषु अप्रतिक्रियां प्रतीकाररहितां कालस्य गतिं दर्शयन् माधवः सान्त्वयामासेति पूर्वेण अन्वयः ॥ ३, ४ ॥

**साधयित्वाऽजातशत्रोः स्वं[1] राज्यं कितवैर्हृतम् ।**
**घातयित्वा[2]ऽसतो राज्ञः[3] कचस्पर्शक्षता[4]युषः ॥ ५ ॥**

**याजयित्वाऽश्वमेधैस्तं त्रिभिरुत्तमकल्पकैः ।**
**तद्यशः पावनं दिक्षु शतमन्योरिवातनोत् ॥ ६ ॥**

**आमन्त्र्य १ पाण्डुपुत्रांश्च शैनेयोद्धवसंयुतः ।**
**द्वैपायनादिभिर्विप्रैः पूजितैः प्रतिपूजितः ॥ ७ ॥**

**गन्तुं कृतमतिर्ब्रह्मन्! द्वारकां रथमास्थितः ।**
**उपलेभेऽभिधावन्तीमुत्तरां भयविह्वलाम् ॥ ८ ॥**

**उत्तरोवाच**

**पाहि पाहि महायोगिन् देव देव जगत्पते !**
**नान्यं[5] त्वदभयं पश्ये यत्र मृत्युः परस्परम् ॥ ९ ॥**

**अभिद्रवति मामीश! शरस्तप्तायसो विभो !**
**कामं दहतु[6] मां नाथ! मा मे गर्भो निपात्यताम् ॥ १० ॥**

सूत उवाच

उपधार्य वचस्तस्या भगवान् भक्तवत्सलः ।
अपाण्डवमिदं कर्तुं द्रौणेरस्त्रमबुध्यत ॥ ११ ॥
तर्ह्येवा[7]थ मु[8]निश्रेष्ठ! पाण्डवाः पञ्च सायकान् ।
आत्मनोऽभिमुखान् दीप्तानालक्ष्यास्त्राण्युपाददुः ॥ १२ ॥

1 K.M.N.W स्व° 2 H.V अजीहनद्याज्ञसेन्याः 3 W राज्ञ्याः 4 K.M °ह° 5 Af.Gf नान्यत्र त्वभयं 6 Af.Gf °ति 7. B,W °व च 8 H.K.M.V भृगु°

**श्रीध० साधयित्वेति ।** कितवैः धूर्तैः दुर्योधनादिभिः। द्रौपद्याः कचग्रहणादिना क्षतं नष्टं आयुः येषां तान् ॥ ५ ॥

**याजयित्वेति ।** याजयित्वेत्या[1]दि भाविकथासङ्क्षेपः। शतमन्योः शतक्रतोरिव ॥ ६ ॥

**आमन्त्र्येति ।** शैनेयः शिनेः नप्ता सात्यकिः तेन चोद्धवेन च संयुतः ॥ ७ ॥

**गन्तुमिति ।** रथमास्थितः सन् उत्तरां परीक्षिन्मातरं भयेन विह्वलां व्याकुलां अभिमुखं धावन्तीं उपलेभे ददर्श ॥ ८ ॥

उत्तरा श्रीकृष्णं प्रार्थयते — **पाहि पाहीति** द्वाभ्याम्। अन्यस्तु प्रार्थनायोग्यो नास्तीत्याह — नेति। त्वत् त्वत्तः अन्यं अभयं भयरहितं न पश्यामि। यत्र लोके। परस्परं अन्योन्यं मृत्युः भवति ॥ ९ ॥

तत्र प्रस्तुतं भयं आवेदयति — **अभिद्रवतीति**। अभिद्रवति अभिमुखमायाति। तप्तं आयसं लोहमयं शल्यं यस्य सः। अतिकार्पण्येनाह — काममिति। कामं यथेच्छं, मा निपात्यतां न भ्रश्यतु ॥ १० ॥

**उपधार्येति ।** पराभवेन अतिकुपितस्य द्रौणेः अस्त्रं अपाण्डवं पाण्डवशून्यं इदं विश्वं कर्तुं प्रवृत्तं ब्रह्मास्त्रं अबुध्यत ॥ ११ ॥

अत एव बहुमुखं[2] तदागतं इत्याह — **तर्ह्येवेति**। तर्ह्येव तदानीमेव ॥ १२ ॥

1 B °त्यादिना 2 B adds ब्रह्मास्त्र

**वीर०** कितवैरक्षद्यूताद्युपायेन वञ्चकैः दुर्योधनादिभिः हृतं अजातशत्रोः युधिष्ठिरस्य स्वं[1] राज्यं साधयित्वा राज्ञ्या द्रौपद्याः कचस्पर्शेन केशपाशग्रहणेनैव क्षतं क्षीणं आयुः येषां तान् असतः दुष्टान् दुश्शासनादीन् घातयित्वा अर्जुनादिभिरिति शेषः ॥ ५ ॥

**उत्तमकल्पकैः** मुख्यकल्पैः **अन्यूनमन्त्रदक्षिणैः** त्रिभिः **अश्वमेधैः**[2] युधिष्ठिरं याजयित्वा पावनं पवित्रं तस्य **युधिष्ठिरस्य** यशः शतमन्योः शक्रस्य यश इव **व्यतनोत्** विस्तारयामास ॥ ६ ॥

ततः **पाण्डुपुत्रान्**, चशब्दात् अन्यांश्च। **आमन्त्र्य** आपृच्छ्य शैनेयः शिनेः नप्ता सात्यकिः **शैनेयोद्धवाभ्यां** सात्यक्युद्धवाभ्यां सहितः आत्मना पूजितैः **द्वैपायनः आदिः** मुख्यः येषां तैः **विप्रैः प्रतिपूजितः** ॥ ७ ॥

**द्वारकां प्रति गन्तुं कृतमतिः** निश्चितमतिः हे **ब्रह्मन्**! **रथं आस्थितः** अधिष्ठितः तदा **अभिधावन्तीं**[3] **भयेन विह्वलां उत्तरां** अभिमन्युपत्नीं इत्थं विज्ञापयन्तीं इति शेषः। **उपलेभे** पथि ददर्श इत्यर्थः। यद्वा अभिधावन्तीं विज्ञापनपूर्वकं अनुवर्तमानां उपलेभ इत्यन्वयः ॥ ८ ॥

विज्ञापनमेवाह — **पाहीति** द्वाभ्याम्। हे **देवानामपि देव**! हे **जगत्पते** निखिलजगत्त्रातः! हे **महायोगिन्** सूक्ष्मार्थदर्शिन्! **पाहि पाहि**। न विद्यते **भयं** यस्मात् तथाभूतं **त्वत्** त्वत्तः **अन्यं न पश्ये**। अदर्शने हेतुं वदन्ती अन्यान् विशिनष्टि — **यत्र** त्वद्व्यतिरिक्तेषु **परस्परं मृत्युः** मृत्युग्रस्ता इत्यर्थः। न हि स्वयं मृत्युवश्यः अन्यं मृत्योः त्रातुं प्रभुः इति भावः ॥ ९ ॥

ननु किं तव भयमुपस्थितं, यस्मात् त्वं मया रक्षणीया इत्यत्राह — **अभिद्रवतीति**। हे **ईश**! **विभो**! **तप्तश्च असौ आयसः**। अयसः विकारः **शरः** **मां अभिद्रवति**। अभिमुखं आगच्छति। हे **नाथ**! स शरः मां **कामं** यथेच्छं **दहतु**। **मे** मम **गर्भश्च** यथा **मा निपात्यतां** तथा अनुगृहाण इत्यर्थः ॥ १० ॥

तस्याः उत्तरायाः **वचः** **अवधार्य** आकर्ण्य **भक्तवत्सलः भगवान् अबुध्यत** अध्यवस्यत्। किमिति? **अपाण्डवं** पाण्डवाभावं कर्तुं इदं शररूपेण **द्रवत्** **द्रौणेः अस्त्रं** द्रौणिप्रयुक्तं ब्रह्मास्त्रं इति ॥ ११ ॥

[5]यथा भगवान् एवं अबुध्यत **तर्हि** **तथैव**[6] हे **भृगुश्रेष्ठ**! शौनक! **पाण्डवा** अपि **आत्मनः अभिमुखान्** अभिमुखं आगच्छतः **दीप्तान् पञ्च सायकान्** शरान् **आलक्ष्य** **अस्त्राणि उपाददुः** जगृहुः ॥ १२ ॥

---

1 W स्व॰ 2 W adds तं 3 W adds अनुधावन्तीं 4 W मदभि॰ 5 W यदा 6 W ॰द्वै॰

**विज॰** घातयित्वा वधं कारयित्वा पाण्डवैः इति शेषः। कचानां केशानां स्पर्शेन हतानि नष्टानि आयूंषि येषां ते तथा तान्। अजातः सुयोधनः शत्रुः यस्य सः तथोक्तः। तथाचोक्तं — "सुयोधनादयस्सर्वे त्वजाता जज्ञिरे घटात्। व्यासेनानन्तवीर्येण मार्तण्डाधिकतेजसा"॥ इति प्रयोगात्। न जातः शत्रुः यस्य स तथोक्त इति केचित्। कितवैः चोरप्रायैः दुर्योधनादिभिः ॥ ५ ॥

मध्यमाधमकल्पयोरुत्तमकल्पकैः। शतं मन्यवः क्रतवः यस्य सः तथा, तस्य इन्द्रस्य यशः वामनावतारे हरिः यथा ततान तथा अतनोत्। तनु विस्तारे ॥ ६, ७ ॥

भगवान् यदा द्वारकां गन्तुं कृतमतिः रथं आस्थितः तदा पाहि पाहि इत्यादिवादिनीं भयेन विवशां आत्मानं उद्दिश्य आगच्छन्तीं उत्तरां उपलेभे ददर्श इत्यन्वयः। यत्र मर्त्यलोके परस्परं मृत्युः तत्र त्वदन्यं अभयप्रदञ्च न पश्ये। स्वस्याभिमतप्रकाशनाय आत्मनेपदप्रयोगः॥ ८, ९॥

अयसः विकारः आयसः तप्तश्चासौ आयसश्च इति तथोक्तः। शरः हननशीलः बाणः। शरीरविनाशनशक्तिप्रकाशनाय आयस इति। अपरिच्छिन्नस्य तव गर्भरक्षणं शक्यसाधनं इति द्योतनाय विभो! इति, नाथ! ऐश्वर्यशक्तियुक्त! मां यथेष्टं दहतु। किं तर्हि, मम गर्भः मा निपात्यतामिति॥ १०॥

भगवान् अस्याः उत्तरायाः वचः उपधार्य श्रुत्वा निश्चित्य इदं अवनिमण्डलं अपाण्डवं पाण्डुपुत्ररहितं कर्तुं मुक्तं द्रौणेः अस्त्रं अबुध्यत इत्यन्वयः॥ ११॥

हे भृगुश्रेष्ठ! अथ तर्ह्येव तदानीमेव पञ्च पाण्डवाः आत्मनः अभिमुखान् ज्वलितान् पञ्च सायकान् अन्तकरान् बाणान् आलक्ष्य अनन्तरमेव अस्त्राणि उपाददुः इत्येकान्वयः। षो अन्तकर्मणि इति धातोः समन्तं कुर्वन्तीति सायकाः; ण्वुल् आयादेशश्च॥ १२॥

**रा० कृ०** अपि च माधवः कितवैः धूर्तैः दुर्योधनादिभिः हृतं अपहृतं राज्यं अजातशत्रोः साधयित्वा राज्ञ्याः द्रौपद्याः कचस्पर्शक्षतायुषः केशाकर्षणपापेन नष्टायुषः असतः दुश्शसनादीन् दुष्टान् घातयित्वा तं युधिष्ठिरं उत्तमकल्पकैः अन्यूनमन्त्रदक्षिणैः मुख्यकल्पैः त्रिभिः अश्वमेधैः याजयित्वा पावनं तद्यशः युधिष्ठिरयशः शतमन्योः इव शतमन्योः यश इव दिक्षु अतनोत् विस्तारयामास।

ननु बन्धुमरणातुरान् धृतराष्ट्रादीन् उद्दिश्य प्राणिषु कालस्य अप्रतिक्रियां गतिं दर्शयन् भगवान् श्रीकृष्णः अनन्तरं युधिष्ठिरस्य राज्यं साधयित्वा पाञ्चालीकचाकर्षणनष्टायुषः दुष्टान् घातयित्वा पुनः तं धर्मराजं अश्वमेधैः याजयित्वा तत्कीर्तिं दिक्षु विस्तारितवान् इत्युक्तम्। प्राणिकोट्यनुभूयमानसुखदुःखादीनां कारणं किं कालः वा आहोस्वित् भगवान् वा? नाद्यः, राज्यसाधनादीनां भगवत्कर्तृत्वोक्तेः। नापि द्वितीयः बन्धुमरणादिदुःखस्य कालकृतत्वकथनात्। घटादीनामिव निमित्तादिकारणबाहुल्यं इष्टमेव इति चेत् मैवम्। कारणशब्देन प्रधानकारणस्यैव विवक्षितत्वात्। तस्मात् एकस्य कार्यस्य कारणद्वयकल्पना नोपपद्यते। अत्रोच्यते — भगवान् कालस्वरूप एव "कालः कलयतामहम्" (भ. गी. 10-30) इति, "कालोऽस्मि लोकक्षयकृत् प्रवृद्धः" (भ. गी. 11-32) इति च भगवतैव गीतासु उक्तत्वात्। अतः नात्र कारणद्वयकल्पना। वस्तुतस्तु भगवान् ईश्वरः जीवकृतकर्मफलेषु न व्याप्रियते "नादत्ते कस्यचित्पापं नचैव सुकृतं विभुः" (भ. गी. 5-15) इत्युक्तत्वात् प्रकृतिगुणैः क्रियमाणानि कर्माणि आत्मनि आरोप्य तैः अहङ्कृतः जीवः बद्धः भवति। बद्धजीवस्य कर्मफलप्राप्तिरेव दैवगतिरिति, कालगतिरिति च व्यवह्रियते। ईदृशकर्मफलप्राप्तिं निमित्तीकृत्य कृष्णः दुष्टशिक्षणशिष्टरक्षणधर्मरक्षणव्यूहं प्रावर्तयत्। दुष्कर्मबद्धाः धार्तराष्ट्राः महाभारतयुद्धे क्षयमापुः। प्रकृतिरहस्यवेदिनः अथवा भगवन्मायातत्त्वज्ञाः पाण्डवाः कृष्णं शरणं गताः विजयं आपुः। एवं प्रकृतिनियामकस्य ईश्वरस्य अनुध्यानेन लोकयात्रां कुर्वन् अपि जनः बन्धविमुक्तः भवति। यद्यपि

कृतकर्मफलानुषङ्गः अनुभवैकक्षयिष्णुः तथापि तत्त्ववित् न तत्कर्मभिः बध्यते; तदिदं कौशलं योग इत्युच्यते इति सर्वं अनवद्यम् ॥ ५, ६ ॥

हे ब्रह्मन्! अथ च माधवः पाण्डुपुत्त्रान् आमन्त्र्य शैनेयोद्धवसंयुतः सात्यकिना उद्धवेन सहितः पूजितैः आत्मना इति शेषः। द्वैपायनादिभिः विप्रैः प्रतिपूजितस्सन् द्वारकां गन्तुं कृतमतिः रथं आस्थितः अधिष्ठितः सन् भयविह्वलां भयेन व्याकुलां अभिधावन्तीं अभिमुखं आगच्छन्तीं उत्तरां उपलेभे ददर्श॥ ७, ८ ॥

हे महायोगिन्! योगीश्वर! देवदेव! जगत्पते! श्रीकृष्ण! पाहि पाहि! सम्भ्रमे द्विरुक्तिः। मां रक्ष। यत्र लोके परस्परं मृत्युः भवतीति शेषः। तत्र लोके त्वत् त्वत्तः अन्यं अभयं भयरहितं भयनिवर्तकमिति यावत्। न पश्ये न पश्यामि॥ ९ ॥

ईश! सर्वेश्वर! विभो! सर्वव्यापक! तप्तायसः तप्तं लोहमयं शल्यं यस्य सः शरः मां अभिद्रवति मम अभिमुखं आयाति। हे नाथ! हे रक्षक! स शरः कामं यथेच्छं मां दहतु; मे गर्भः मा निपात्यतां न भ्रंशं नीयताम् ॥ १० ॥

भक्तवत्सलः भगवान् श्रीकृष्णः तस्याः उत्तरायाः वचः उपधार्य सम्यग्विचार्य इदं विश्वं अपाण्डवं पाण्डवरहितं कर्तुं प्रयुक्तमिति शेषः। द्रौणेः अश्वत्थाम्नः अस्त्रं ब्रह्मास्त्रं अबुध्यत अवगतवान् ॥ ११ ॥

हे मुनिश्रेष्ठ! अथ अनन्तरं तर्ह्येव तदानीमेव। पाण्डवाः आत्मनः अभिमुखान् अभिमुखमागतान् दीप्तान् दीप्यमानान् पञ्च सायकान् आलक्ष्य विलोक्य अस्त्राणि स्वीयास्त्राणि उपाददुः परिजगृहुः॥ १२ ॥

**व्यसनं वीक्ष्य तत्तेषां अनन्यविषयात्मनाम् ।**
**सुदर्शनेन स्वास्त्रेण स्वानां रक्षां व्यधाद्विभुः ॥ १३ ॥**

**अन्तस्स्थः सर्वभूतानां आत्मा योगेश्वरो हरिः ।**
**स्वमाययाऽऽवृणोद्गर्भं वैराट्याः कुरुतन्तवे ॥ १४ ॥**

**यद्यप्यस्त्रं ब्रह्मशिरस्त्वमोघं[1] चाप्रतिक्रियम् ।**
**वैष्णवं तेज आसाद्य समशाम्यद्भृगूद्वह! ॥ १५ ॥**

**मा मंस्था ह्येतदाश्चर्यं[2] सर्वाश्चर्यमयेऽच्युते ।**
**य इदं मायया देव्या[3] सृजत्यवति हन्त्यजः ॥ १६ ॥**

1 B °शिर अमो° 2 H,V ए° 3 H,V दै°

**श्रीध० व्यसनमिति।** ब्रह्मास्त्रस्य अस्त्रान्तरैः अनिवर्त्यत्वात् तत् दुष्परिहरं[1] व्यसनं वीक्ष्य अनन्यविषयः[2] आत्मा येषां स्वैकनिष्ठानां इत्यर्थः॥ १३ ॥

**अन्तस्स्थ** इति। वैराट्याः उत्तरायाः अन्तस्थस्सन् गर्भं आवृतवान्। तत्र हेतुः, यतः आत्मा **अन्तर्यामी**। योगेश्वर इति बहिःष्ठस्यापि प्रवेशघटनार्थं उक्तम्। कुरूणां तन्तवे सन्तानाय पाण्डवानामपि कुरुवंशजत्वात् एवं उक्तम् ॥ १४ ॥

**यदीति**। अमोघं अप्रतिक्रियश्च समशाम्यत् संशान्तं आसीत् ॥ १५ ॥

**मेति**। एतद् ब्रह्मास्त्रशमनं आश्चर्यं मा मंस्थाः मा मन्यस्व। इदं जगत् ॥ १६ ॥

1 H °हा° 2 B न अन्यविषयः

**वीर॰** तदा अनन्यविषयः आत्मा मनः येषां तेषां अनन्यरक्षकाणां[1] पाण्डवानां तद् व्यसनं दुःखं आलोक्य विभुः कृष्णः स्वासाधारणेन सुदर्शनेन अस्त्रेण स्वानां पाण्डवानां रक्षां व्यधात् अकरोत्। सुदर्शनेन तान् सायकान् निरस्य पाण्डवान् ररक्ष इत्यर्थः ॥ १३ ॥

ततः अन्तस्स्थः सर्वान्तरात्मतया अवस्थितः आत्मा अन्तः प्रविश्य धारकश्च भगवान् अत एव योगेश्वरः निरतिशयसूक्ष्मार्थदर्शी उत्तरागर्भप्रविष्टापाण्डवास्त्रदर्शीत्यर्थः। हरिः कृष्णः। कुरुतन्तवे कुरुवंशविस्तारार्थं वैराट्याः विराटपुत्र्याः उत्तराया गर्भं स्वयं आत्मनैव आवृणोत् वैराट्या उदरं स्वयं प्रविश्य तद्गर्भो यथा ब्रह्मास्त्रेण न हंसेत्[2] तथाऽऽवृणोत्। गर्भमासाद्य[3] सुदर्शनेन अस्त्रं चिच्छेद इत्यर्थः ॥ १४ ॥

कथं अप्रतिभटं ब्रह्मास्त्रं सुदर्शनेनापि निरस्तं इति शौनकाभिप्रेतं दोषं[4] अनूद्य तं[5] प्रतिक्षिपति — **यद्यपीति**। ब्रह्मशिरोनामास्त्रं अप्रतिक्रियं केनापि अनिवार्यम्। अत एव अमोघं अप्रतिहतं, तथापि हे भृगूद्वह! वैष्णवं विष्णोः सम्बन्धि तेजः तेजोरूपं सुदर्शनं आसाद्य सम्यक् अशाम्यत् सुदर्शनेतराप्रतिक्रियं ब्रह्मास्त्रम्। सुदर्शनमेव सर्वाप्रतिक्रियमिति भावः ॥ १५ ॥

तत्र विस्मयः न कार्य इत्याह — **मेति**। सर्वेभ्यः अपि आश्चर्येभ्यः आश्चर्यमये आश्चर्यशक्तिप्रचुरे अच्युते स्वाश्रितास्त्रभूषणगुणविभूत्यादीन् न च्यावयति न पृथक्[6] करोतीत्यच्युतः। तथाभूते भगवति एतत्सुदर्शनेन ब्रह्मास्त्रं निरस्तं इत्येतदाश्चर्यं मा मंस्थाः न मन्यस्व। सर्वाश्चर्यमयत्वमेव व्यञ्जयितुं विशिनष्टि — यः भगवान् अच्युतः अजः स्वयं कर्मायत्तोत्पत्त्यादिषड्भावविकाररहितः। इदं चिदचिदात्मकं कृत्स्नं जगत् मायया देव्या देवस्य स्वस्य सम्बन्धिन्या मायया आश्चर्यशक्त्या सृजति अवति हन्ति च कृत्स्नजगत्सृष्टिस्थितिलयलीलस्य कियदेतत् सुदर्शननिरस्तं ब्रह्मास्त्रं इत्यतः नाश्चर्यं कार्यमित्यर्थः ॥ १६ ॥

1. A,B अत्र च 2. W हन्येत 3. W °च्छा° 4. W चोद्यं 5. W तत् प्रतिवक्ति 6. W विहतां

**विज॰** न अन्यः विषयः आत्मा येषां ते अनन्यविषयात्मानः तेषां अन्येषु भगवद्वार्तारहितेषु विषयेषु शब्दादिषु आत्मा मनः न गच्छति येषां ते तथोक्ताः तेषां इति वा। पाण्डवानां तद् व्यसनं वीक्ष्य विभुः सुदर्शनाख्यस्वास्त्रेण स्वानां पाण्डवानां रक्षां व्यधात् इत्येकान्वयः ॥ १३ ॥

सर्वप्राणिनां अन्तः हृदि संस्थितः आत्मा आदानादिकर्ता योगैश्वर्यवान् सहजाणिमादियोगैश्वर्यवान् सर्वोपायानां ईश्वरः वा हरिः संसारदुःखहरणशीलः कुरूणां सन्तत्यविच्छेदाय वैराट्याः विराटपुत्र्याः उत्तरायाः गर्भं स्वमायया स्वयोगसामर्थ्येन यथा ब्रह्मास्त्रं न दहेत् तथा आवृणोत् आत्मना गूहितं अकरोत् इत्येकान्वयः ॥ १४ ॥

यद्यपि ब्रह्मशिरोऽस्त्रं त्वमोघं अव्यर्थं अप्रतिक्रियं प्रतिकाररहितञ्च,[1] तथाऽपि वैष्णवं तेजः आसाद्य सम्यक् अशाम्यत् इत्येकान्वयः ॥ १५ ॥

यो मायया देव्या दीप्यमानया इच्छया ब्रह्मादिजगत् सृजति रक्षति संहरति स्वयं जन्मादिरहितः तस्मिन् सर्वाश्चर्यस्वरूपे अच्युते विनाशरहिते हरौ एतत् ब्रह्मास्त्रोपशमनलक्षणं आश्चर्यं मा मंस्था न चिन्तय इत्येकान्वयः॥ १६ ॥

---

1. B,K,M °ती°

**रा॰ कृ॰** विभुः भगवान् श्रीकृष्णः अनन्यविषयात्मनां अनन्यायत्तमनस्कानां भगवदेकचित्तानां इत्यर्थः। स्वानां स्वभक्तानां तेषां पाण्डवानां तत् ब्रह्मास्त्रजन्यं व्यसनं दुःखं वीक्ष्य स्वास्त्रेण सुदर्शनेन रक्षां व्यधात् अकरोत्। शत्रुप्रयुक्तबाणान् निरस्य पाण्डवान् अरक्षत् इत्यर्थः ॥ १३ ॥

सर्वभूतानां अन्तस्थः आत्मा आत्मस्वरूपः योगेश्वरः हरिः कृष्णः कुरुतन्तवे कुरूणां सन्तानाय वैराट्याः विराटपुत्र्याः उत्तरायाः गर्भं स्वमायया स्वशक्त्या आवृणोत् आवृत्य ररक्ष ॥ १४ ॥

हे भृगूद्वह! भृगुवंशतिलक! यद्यपि ब्रह्मशिरः तन्नामकं अस्त्रं अमोघं अप्रतिक्रियं प्रतीकाररहितं च। तथापि तदस्त्रं वैष्णवं तेजः सुदर्शनरूपं आसाद्य समशाम्यत् सम्यक् शान्तं अभूत् ॥ १५ ॥

यः अजः जन्मरहितः दैव्या देवसम्बन्धिन्या। देव्या इति पाठे स्वयं प्रकाशमानया इत्यर्थः। मायया स्वशक्त्या इदं जगत् सृजति अवति रक्षति हन्ति संहरति, तस्मिन् यत्तदोर्नित्यसम्बन्धात् सर्वाश्चर्यमये सर्वेषामपि आश्चर्यजनके अच्युते भगवति कृष्णे एतत् सुदर्शनेन ब्रह्मास्त्रशमनं आश्चर्यं आश्चर्यकरं मा मंस्थाः न मन्यस्व ॥ १६ ॥

**ब्रह्मतेजोविनिर्मुक्तै रात्मजैस्सह कृष्णया।**
**प्रयाणाभिमुखं कृष्णमिदमाह पृथा सती ॥ १७ ॥**

**कुन्त्युवाच**

**नमस्ये पुरुषं त्वाऽऽद्यमीश्वरं प्रकृतेः परम्।**
**अलक्ष्यं सर्वभूतानामन्त[1]र्बहि[2]रवस्थितम् ॥ १८ ॥**

**माया[3]जवनिका[4]च्छन्नमज्ञाधोक्षजमव्ययम् ।**
**न लक्ष्यसे मूढदृ[5]शा नटो नाट्यधरो यथा ॥ १९ ॥**

**तथा परमहंसानां मुनीनाममलात्मनाम् ।**
**भक्तियोगविधानार्थं कथं पश्येम हि स्त्रियः ॥ २० ॥**

**कृष्णाय वासुदेवाय देवकीनन्दनाय च**
**नन्दगोपकुमाराय गोविन्दाय नमो नमः ॥ २१ ॥**

**नमः पङ्कजनाभाय नमः पङ्कजमालिने ।**
**नमः पङ्कजनेत्राय नमस्ते पङ्कजाङ्घ्रये ॥ २२ ॥**

**यथा हृषीकेश! खलेन देवकी कंसेन रुद्धातिचिरं [7]शुचार्पिता ।**
**विमोचिताहं च सहात्मजा विभो! त्वयैव नाथेन मुहुर्विपद्गणात् ॥ २३ ॥**

**विषान्महाग्नेः पुरुषाद[8]दर्शनात् असत्सभायाः वनवासकृच्छ्रतः ।**
**मृधे मृधेऽनेकमहारथास्त्रतो द्रौण्यस्त्रतश्चास्म हरेऽभिरक्षिताः ॥ २४ ॥**

---

1 K,M °भावाना° 2 K,M °रपि ध्रुवम् 3 H,V,W °य° 4 K,M °च्छन्नो मयाऽधोक्षज! मर्त्यया 5 H,V °शां 6. K,M °व°
7 B,H,V सु° 8 K,M °दंशना°

**श्रीध०** **ब्रह्मेति**। कृष्णया च सह॥ १७॥

**नमस्य** इति। त्वा त्वां नमस्ये नमस्करोमि। ननु कनिष्ठं मां कथं नमस्करोषि तत्राह— आद्यं पुरुषं कुतः प्रकृतेः परम्। तत्कुतः? [1]ईश्वरं प्रकृतेरपि नियन्तारम्। अत एव सर्वभूतानां अन्तर्बहिश्च पूर्णत्वेनावस्थितं, तथाप्यलक्ष्यम्॥ १८॥

तत्र हेतुः **मायेति**। मायैव जवनिका तिरस्करिणी तयाऽऽच्छन्नं प्रतिच्छन्नम्। अतोऽहं अज्ञा भक्तियोगानभिज्ञा केवलं नमस्यामि। अधोक्षजं अधःकृतं इन्द्रियजं ज्ञानं यस्मात् तम्। अव्ययं अपरिच्छिन्नम्। तत्प्रपञ्चयति नेति। नटः यथा नट इव मूढदृ[4]शा देहाभिमानि[5]नां पुंसां न त्वं लक्ष्यसे॥ १९॥

किञ्च **तथेति**। परमहंसानां आत्मानात्मविवेकिनां ततो मुनीनां मननशीलानामपि ततश्च अमलात्मनां निवृत्तरा[7]गादीनामपि तथा तेन निजमहिम्ना न लक्ष्यसे अतः भक्तियोगं विधातुं त्वां वयं स्त्रियः कथं हि पश्येम। यद्वा परमहंसादीनामपि भक्तियोगविधानार्थं त्वाम्, [8]आत्मारा[9]माणामप्यचिन्त्यनिजगुणैः आकृष्य भक्तियोगं विधातुं कारयितु[10]मवतीर्णमित्यर्थः॥ २०॥

ज्ञानभक्त्योः अशक्यत्वं उक्त्वा पुनः केवलं नमस्करोति— **कृष्णाय** इति द्वाभ्याम्॥ २१॥

**नम** इति। पङ्कजं नाभौ यस्य, पङ्कजानां माला अस्ति यस्य, पङ्कजवत् प्रसन्ने नेत्रे यस्य, पङ्कजाङ्कितौ अङ्घ्री यस्य तस्मै ॥ २२ ॥

तत्कृतोपकारान् अनुस्मरति — **यथेति** द्वाभ्याम्। अयमर्थः — मातृतोऽपि मय्यधिका तव प्रीतिः। तथाहि — हे हृषीकेश! यथा देवकी कंसेन रुद्धा त्वया विमोचिता अहं च तथैव किं विमोचितेति काक्का महान् विशेष उक्तः। तं दर्शयति साऽतिचिरं रुद्धा सती तस्मादेव[11] सकृद्विमोचिता। तथा शुचार्पिता च सती। न च तस्याः पुत्राः रक्षिताः। अस्ति चान्यः नाथः तस्याः। अहं तु विपद्गणात् तत्रापि मुहुः शीघ्रं च सात्मजा च त्वयैव च नाथेन इति ॥ २३ ॥

विपद्गणमेव दर्शयति — **विषादिति**। विषात् भीमस्य विषमोदकदानात्। महाग्नेः जतुगृहदाहात्। पुरुषादाः हिडिम्बादयः राक्षसाः तेषां दर्शनात्। असत्सभायाः द्यूतस्थानात्। अभितः रक्षिता आस्म अभवाम ॥ २४ ॥

---

1 H,V add प्रकृतेः 2 B °स्करिणीरूपा 3 H त्वद्भक्ति° 4 H,V °शां 5 H,V °नां 6 H,V °सां 7 H,V °रागादिदोषाणामपि
8. H,V add अयं भावः 9 B °रामान् मुनीनप्य° 10 H,V °मवतीर्णं त्वां स्त्रियो वयं कथं पश्येमेत्यर्थः। 11 H,V °देकस्मादेव

**वीर॰** ततः ब्रह्मतेजसा ब्रह्मास्त्रेण विनिर्मुक्तैः आत्मजैः युधिष्ठिरादिभिः कृष्णया द्रौपद्या च सह सती पृथा कुन्ती प्रयाणाभिमुखं कृष्णमिदं वक्ष्यमाणमाह ॥ १७ ॥

तदेवाह — **नमस्ये** इति षड्विंशत्या। प्रयाणाभिमुखं कृष्णं आलोक्य तद्विश्लेषं असहमाना तं ततः निवर्तयितुं लौकिकोऽपि कश्चिद् गुणाढ्यः पुमान् आश्रितान् न हातुं उत्सहते। परमकारणस्य सर्वान्तरात्मनः अचिन्त्यविविधविचित्रशक्तेः स्वेच्छोपात्ताप्राकृताश्चर्यदिव्यतनोः आश्रितवात्सल्यजलधेः आश्रितार्तिहरस्य निरतिशयसुखदस्य योगपरिशुद्धमनसैव गोचरस्य अविज्ञातचिकीर्षितस्य सर्वशरीरकस्य सर्वसुहृदः अचिन्त्यविविधविचित्रचेष्टितस्य अवितर्क्यावतारस्य तव पदाम्बुजं अन्तरेण नास्माकं शरणमस्ति। अतः कथं अनन्यात्मनः अस्मान् विहाय गन्तुं उद्युङ्क्षे इति विज्ञापयति। तत्र तावत् लौकिकपुरुषवैजात्यज्ञापनाय अनितरसाधारणैः धर्मैः विशिष्टं नमस्करोति नमस्य इति। आद्यं सर्वजगत्कारणं प्रकृतेः परं पुरुषं ईश्वरं त्वां नमस्ये नमस्करोमि नमस्कारेण पूजयामीत्यर्थः। नमश्शब्दात् "शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे" (अष्टा. 3-1-17) इत्यतः करण इत्यनुवर्तमाने "नमो वरिवश्चित्रङः क्यच्" (अष्टा. 3-1-19) इति करोत्यर्थे क्यचि आर्षत्वादात्मनेपदम्। साङ्ख्याभिमतपुरुषव्यावृत्त्यर्थं ईश्वरमित्युक्तम्। सापेक्षं ईश्वरत्वं ब्रह्मादिसाधारणमिति तद्व्यावृत्त्यर्थं सर्वभूतानां अन्तर्बहिश्च अवस्थितं इत्युक्तम्। अनेन "यच्च किञ्चिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा। अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" (म. ना. उ. 9-5) इति श्रुतिरुपबृंहिता भवति। अनेन देवताविशेषत्वं च फलितम्। सर्वभूतानां ब्रह्मादिस्थावरान्तानां अन्तर्बहिश्च व्याप्य नियन्तृतया अवस्थितं इत्यर्थः। प्रकृतेः परत्वे हेतुः अलक्ष्य इति प्रकृतिवन्न लक्ष्यते न दृश्यते इत्यलक्ष्यम्[1]। यद्वा अन्तर्बहिश्च अवस्थितमपि अलक्ष्यमदृश्यम् ॥ १८ ॥

तत्र हेतुः मायाजवनिकाच्छन्नं मायैव जवनिका नेपथ्यं तद्वत् तिरोधायकत्वात्। तया जीवाज्ञानरूपया हेतुभूतया छन्नं तिरोहितं इन्द्रियाविषयं इति यावत्। किं सर्वेषामप्यतीन्द्रियम्? नेत्याह— **अज्ञेति**। अक्षजा इन्द्रियवृत्तयः अधः अक्षजा यस्मात् सः अधोक्षजः इन्द्रियवृत्त्यविषयः अज्ञानां अनुपासकानां अधोक्षजं अज्ञाधोक्षजम्। तत्र हेतुः अव्ययं इति — न व्येति विविधं विकारं गच्छतीत्यव्ययम्। विविधविकारभागेव ह्यज्ञाक्षजविषयः त्वं त्वव्ययत्वात् अज्ञाधोऽक्षज इत्यर्थः। अनेन एतत् सूच्यते योगविशुद्धमनसा अनुग्राह्य इति; तथा च श्रूयते "न चक्षुषा पश्यति कश्चनैनं" (कठ. उ. 6-9), "न मांसचक्षुरभिवीक्षते तम्" "दृश्यते त्वग्रयया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः" (कठ. उ. 3-12) "हृदा मनीषा मनसाऽभिक्लृप्तय एनं विदुः" (कठ. उ. 6-9) इत्यादि। तदेवाऽऽह न लक्ष्यसे मूढदृशेति योगापरिशुद्धधिया न लक्ष्यसे न दृश्यसे। ननु सर्वैरपि दृश्य एवासौ इत्यत्राह — नटो नाट्यधरो यथा। नटो यथा दृश्यते तथा दृश्यसे इत्यर्थः। यद्वा मूढदृशा अजानता पुंसा नाट्यधरः नटः यथा न लक्ष्यते अयं एवंविध इति न ज्ञायते। किन्तु नाट्योपयुक्तवेषविशिष्टतयैव दृश्यते, तद्वत्। अनेनाज्ञाधोक्षज इत्यनेन च योगपरिशुद्धमनोग्राह्यः अपरिशुद्धमनसा त्वग्राह्यः इति तत्र न लक्ष्यसे इत्यनेन अग्राह्यत्वं उपपादितम्॥ १९॥

अथ परिशुद्धमनोग्राह्यत्वं वदन्ती, योगानधिकारिण्यः अपरिशुद्धमनसः स्त्रियः वयं कथं जानीम इत्याह — **तथेति**। तथा तथापीत्यर्थः। मुनीनां सदा त्वत्स्वरूपमननशीलानां अमलात्मनां विशुद्धमनसां परमहंसानां भक्तियोगविधानार्थम्। अर्थशब्दोऽत्र विषयीभूतपदार्थवाची। भक्तियोगविधानस्य भक्तियोगप्रपञ्चस्यार्थं विषयभूतं भक्तियोगदृश्यं त्वां स्त्रियो वयं कथं पश्येम हि जानीम हि। तर्हि किं जानासीत्यपेक्षायां नटं नाट्यधरं नाट्योपयुक्तनामरूपादिविशिष्टतयैव जानते न तु तत्त्वतः अयमेतज्जातिनामरूपगुणक इति। तद्वत् अस्मिन्नवतारे यानि कृष्णवासुदेवदेवकीनन्दनादिनामानि, यच्च पङ्कजनाभाद्यवयवोपेतं तान्येतान्येव सर्वेषां अवभासमानानि केवलं जानीम इत्यभिप्रायेण उक्तनामरूपविशिष्टं नमस्करोति कृष्णायेति। श्लोकद्वयं निगदेनैव व्याख्यातम्॥ २०, २१, २२॥

नन्वतारदशायां अयोगपरिशुद्धमनोभिः अपि सर्वैः दृश्यमानस्य भगवतः कथं अलक्ष्यत्वं अज्ञाधोक्षजमव्ययं, न लक्ष्यसे मूढदृशा इत्युक्तम्। "न मांसचक्षुरभिवीक्षते तं", "न चक्षुषा पश्यति कश्चनैनं" (कठ. उ. 6-9) इत्यादिभिः श्रुतं चादृश्यत्वं इति चेन्न, सर्वैः देवमनुष्यादिसाजात्येन दृश्यमानत्वेऽपि तद्विलक्षणत्वेन अदृश्यत्वात्। विलक्षणदर्शनमेव हि अलक्ष्यं इत्यादिभिः प्रतिषिध्यते नटदृष्टान्तेनापि तदेवावगन्तव्यम्। जानन्त्या अपि कथं पश्येम हि स्त्रिय इत्युक्तिः लोकपरिपाट्यभिप्रायिका। यतस्त्वं साक्षात् प्रकृतेः परः परमपुरुष ईश्वरः तत एवास्यां अवतारदशायामपि स्वभावमजहत् स्वासाधारणान् धर्मान् दर्शयसीत्यभिप्रायेणाह — **यथेति**। हे हृषीकेश! खलेन दुरात्मना कंसेन चिरं शुचा शोकेनार्पिता निधापिता शोकं प्रापिता इति यावत्। रुद्धा या च देवकी यथा विमोचिता तथा अहमपि सपुत्रा हे विभो! सर्वशक्ते! त्वयैव नाथेन विपदां गणात् मुहुः विमोचिता किं, किमित्यस्य नेत्यादिः विमोचितैवेत्यर्थः। अनेन स्वार्थनिरपेक्षपरदुःखनिराचिकीर्षारूपं कृपालुत्वं, आश्रितानिष्टपरिहर्तृत्वं, निम्नोन्नतानादरेण आश्रित-मात्रपक्षपातित्वञ्च प्रदर्शितमिति फलितम्॥ २३॥

कोऽसौ विपद्गणः यस्मात् त्वं विमोचिता इत्यत्राह — **विषादिति**। महाग्नेः लाक्षागृहाग्नेः पुरुषादानां राक्षसानां दर्शनात् दर्शनजात्[17] भयात् वनवासकृच्छ्रतः वनवासक्लेशात् मृधे मृधे प्रतियुद्धं महारथानां अस्त्रेभ्यः द्रौण्यस्त्रतः ब्रह्मास्त्रात् हे हरे! रक्षिताः स्म अभवाम। विषादिभ्यः रक्षणप्रकारः महाभारतात् अवगन्तव्यः, विस्तरभयात् नात्र लिख्यते ॥ २४ ॥

---

1 W °क्ष्यः 2 W °य° 3 W य° 4 W अधः अधोभूताः 5 A.B विविधविकारभाज एवाज्ञाक्षजविषयत्वात् अज्ञाधोक्षज इत्यर्थः।6 W °प्तो य 7. W adds नटयाथात्म्यं 8 B.W °ही° 9 W °य° 10 W तान्येव सर्वेषां समानानि 11 W °ष्यत्वादि° 12 W त° 13 W एतदेवावगतम् 14 W °स्वस्वभा° 15 A,B नित्यार्पिता 16 A,B किमेतस्य नेत्यादि 17 A,B omit दर्शनजात्

**विज॰** ब्रह्मास्त्रतेजोमुक्तैः आत्मजैः युधिष्ठिरादिभिः पुत्रैस्सह। सती साध्वी ॥ १७ ॥

संसारव्यावृत्तये आद्यं पुरुषमिति, हिरण्यगर्भव्यावृत्तये ईश्वरमिति, जगत्सृष्ट्याद्यैश्वर्यवत्त्वं न ततः व्यावृत्तं इत्यतः प्रकृतेः परमिति। एतत्सर्वं कुत इत्युक्तमलक्ष्यं इति, लक्षणया वृत्त्यापि ज्ञातुं अशक्यं; तर्हि शून्यप्रायं इत्यत उक्तं सर्वभावनां "अन्तर्बहिश्च तत्सर्वं" (म. ना. उ. 9-5) इति श्रुतेः। आद्यस्य कथं अन्तर्बहिश्च व्याप्य स्थितत्वं इत्यत उक्तं भूतप्रलयेऽपि ध्रुवं नित्यं अविनाशिनम् ॥ १८ ॥

त्वां नमस्ये इत्यपरोक्षतया उक्तस्य कथं अलक्ष्यत्वं इति तत्राह — **मायेति**। हे अधोऽक्षज! वशीकृतेन्द्रिय! जीवगुणाच्छादकपरमाच्छादकोभयविधमायाख्यतिरस्करिण्या[1] छन्नः त्वं मूढदृशा विपरीतज्ञानया मर्त्यया मया लक्ष्यमणोऽपि न लक्ष्यसे; यथा नाट्यधरो[2] नटः दृश्यमानोऽपि तदङ्गुल्याद्यभिनयलक्षितकथाविशेषाज्ञेन नरेण न लक्ष्यते तथा। तस्मात् अलक्ष्यः त्वं इत्यर्थः ॥ १९ ॥

इतोऽपि मादृशीनां त्वद्दर्शनं असुशकं इत्याह — **तथेति**। अमलात्मनां अविद्याकामकर्मादिमलरहितमनसां मुनीनां सर्वज्ञानां परमहंसानां सनकादीनां भक्तियोगविधानार्थं भक्तियोगकरणविषयं त्वां तेऽपि पश्यन्ति। तथा रागादिमत्यः स्त्रियः वयं कथं त्वां पश्येमहीत्येकान्वयः। स्त्रीषु तारतम्यविशेषद्योतनार्थं आत्मनेपदप्रयोगः ॥ २० ॥

तर्हि स्त्रीणां भगवदुपासनाभावेन तज्ज्ञानाभावात् मोक्षाभाव इत्याशङ्क्य तत्स्तुतिरेव अपरोक्षज्ञानजनकतया मोक्षसाधिकेत्यभिप्रेत्य कृष्णं स्तौति — **कृष्णेति**। कृषति विलिखति दारयति मोहपटलमिति कृष्णः। तस्मै नमो नमः। नीलोत्पलदलश्यामलाय वा। वसुना दीव्यतीति वसुदेवः आनकदुन्दुभिः तस्य पुत्रः वासुदेवः तस्मै इति। वस आच्छादने इति धातोः इदं जगत् आच्छाद्य दीव्यतीति वासुदेवः तस्मै इति वा। बलात् दैत्यनिरसनशीलक्रीडादिगुणसम्पन्नाय वासुदेवायेति वा। देवकी लक्ष्मीः तां नन्दयितुं शीलमस्येति देवकीनन्दनः तस्मै। नन्दगोपनाम्नः राज्ञः कुत्सितं कुष्ठं मारयति नाशयतीति नन्दगोपकुमारः तस्मै। पुराणान्तरसिद्धार्थं अवलम्ब्य कथितः अयं अर्थः। अन्यः प्रसिद्धः। गवां विदः लाभः यस्य स तथा तस्मै; गवा वेदेन लभ्यत इति गोविन्द इति वा ॥ २१ ॥

पङ्कजं नाभौ यस्य स तथा तस्मै। पङ्काज्जनं जननं यस्य तत्पङ्कजनं पद्मं तत् आभवति अभिभवति आभातीतिवा पङ्कजनाभः तस्मै। पङ्कजैः रचिता माला अस्यास्तीति पङ्कजमाली तस्मै। पङ्कजदलवन्नेत्रे यस्य स तथा तस्मै। पङ्कजैः रचिता रेखा तद्युक्तः अङ्घ्रिः यस्य स तथोक्तः तस्मै॥ २२॥

हृषीकेश! इन्द्रियगणनाथ! कसि हिंसायां इति धातोः कंसेन हिंसाशीलेन[4] इन्द्रियारामेण अतिचिरं कारागृहे रुद्धा शुचार्पिता देवकी त्वया यथा विमोचिता हे विभो! सहात्मजा पुत्रैः सहिताऽहं त्वयैव नाथेन विपद्गणात् मुहुः विमोचिता इत्येकान्वयः॥ २३॥

विपद्गणं विविच्याह — **विषादित्यादिना**। हे हरे! वयं भीमाय दत्तात् कालकूटविषात्, जतुगृहदाहप्रयुक्त-महाग्नेः, पुरुषादानां हिडिम्बबककिर्मीरादीनां दंशनात् भक्षणात्, असतां दुर्योधनादीनां द्रौपदीकेशग्रहणादिनिन्दितकर्मणां सभायाः, वनवाससङ्कटात्, मृधे मृधे रणे रणे अनेकेषां महारथानां नागाद्यस्त्रतः, तथा अश्वत्थाम्नः ब्रह्मास्त्राच्च त्वया अभिरक्षिता आस्म इत्येकान्वयः। तस्मात् अहमद्य त्वां शरणं गतास्मीति वाक्यशेषः॥ २४॥

---

1. B,K,M °स्कारिण्या 2. K,M °व° 3 B,K,M अङ्घ्रिता 4. B,K,M add खलेन

**रा॰ कृ॰** ब्रह्मतेजोविनिर्मुक्तैः ब्रह्मशिरोनामकास्त्रतेजसः विमुक्तैः आत्मजैः कृष्णया द्रौपद्या च सह सती पृथा कुन्ती प्रयाणाभिमुखं कृष्णं इदं वक्ष्यमाणं आह॥ १७॥

ईश्वरं सर्वनियामकं प्रकृतेः परं अतीतं सर्वभूतानां अन्तर्बहिरवस्थितं तथापि अलक्ष्यं मायायवनिकाच्छन्नं मायैव यवनिका तिरस्करिणी तया छन्नं आच्छादितं अधोक्षजं अधःकृतेन्द्रियज्ञानं अव्ययं नित्यं आद्यं पुरुषं त्वा त्वां अज्ञा अहमिति शेषः। नमस्ये नमस्करोमि। अपि च त्वं नाट्यधरो नटो यथा नट इव मूढदृशा देहाभिमानिना पुंसा न लक्ष्यसे न ज्ञायसे॥ १८, १९॥

तथा परमहंसानां आत्मानात्मविवेकिनां मुनीनां मननशीलानामपि अमलात्मनां निवृत्तरागादिदोषतया निर्मलान्तःकरणानां भक्तियोगविधानार्थं भक्तियोगविधानमेव अर्थः प्रयोजनं यस्य तथाभूतं भक्तियोगविधानाय अवतीर्णं इत्यर्थः। त्वां इति शेषः। स्त्रियः वयमिति शेषः। कथं पश्येमहि पश्येम॥ २०॥

वासुदेवाय वसुदेवतनयाय देवकीनन्दनाय देवकीहर्षवर्धनाय नन्दगोपकुमाराय नन्दगोपस्य कुमाराय गोविन्दाय नमो नमः॥ २१॥

पङ्कजनाभाय ते नमः। पङ्कजमालिने नमः। पङ्कजनेत्राय नमः। पङ्कजाङ्घ्रये नमः।

"तथा परमहंसानां मुनीनाममलात्मनां भक्तियोगविधानार्थम्" (भाग. 1-8-20) इत्यत्र किञ्चिदुच्यते। भक्तियोगविरहिताश्चेत् साधकाः विष्णुं साकारं न पश्यन्ति। ततः तेषां कृष्णेऽपि विष्णोः अदर्शनं सम्भाव्यम्।

संसारिणस्तु जीवाः आर्तिपीडिताः कृष्णं भजन्ते, येन तेषां मध्ये स भगवान् नृत्यन् वर्तते। ततश्च अमुकरूपो देवः सहायः अस्माकं अभवत् इति वदतां संसारिणां वचनस्य याथार्थ्यं केवलयोगसाधकैः भक्तियोगविरहितैः नावगम्यते।

नन्वेवं चेत् रागद्वेषादिरहितानां आत्मानात्मविवेकिनां मननशीलता व्यर्थैव ? न, तेऽपि अव्यक्तोपासकाः भगवन्तं प्राप्नुवन्ति; किन्तु अधिकतरः तेषां क्लेशः। उक्तं च भगवता — "क्लेशोऽधिकतरस्तेषां अव्यक्तासक्तचेतसाम्। अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते" (भ. गी. 12-5) इति। ये तावत् अनन्यमनस्काः स्वसंस्मरणपरायणाः तेषां स भगवान् सुलभः। तथा चोक्तं भगवता — "ये तु सर्वाणि कर्माणि मयि सन्न्यस्य मत्पराः, अनन्येनैव योगेन मां ध्यायन्त उपासते" (भ. गी. 12-6) इति। ततश्च "कथं पश्येमहि स्त्रियः" (भाग. 1-8-20) इति कुन्त्याः प्रश्नः 'कथमपि पश्येम' इति समाधानगर्भित इति व्यज्यते। एवमत्र कुन्तीस्तुत्या भक्तियोगपुरस्कृतसर्वसमर्पणबुद्धिसमुपलब्ध्यं भगवद्दर्शनं मार्गान्तरैः असुलभं इत्युपदिश्यते॥ २२ ॥

हे हृषीकेश! इन्द्रियनियामक! विभो! खलेन कंसेन सुचिरं रुद्धा शुचा पुत्रशोकेन अर्पिता व्याप्तैव देवकी यथा त्वया विमोचिता तथा अहं च सहात्मजा सती नाथेन रक्षकेण त्वयैव मुहुः विपद्गणात् विमोचिता रक्षिताऽस्मीति शेषः।

मात्रादिसम्बन्धः जीवस्यैव; न तु देवस्य। स्वभक्तं जनं सर्वमपि समं संरक्षति भगवान्। तेन निर्गुणपरब्रह्मान्वेषणादपि वरं भगवतः रक्षणभरणादिकल्याणगुणानुकीर्तनं येन तत्सान्निध्यप्राप्तिः सुलभा। सगुणनिर्गुणविभागोऽपि जीवकृत एव। न खलु दुष्टशिक्षणशिष्टरक्षणादयः सद्गुणाः भगवद्व्यतिरेकिण इति केनापि ज्ञानिना वक्तुं शक्यते। एतन्निरूपणायैव भगवता विभूतियोगः समुपदिष्टः॥ २३ ॥

किञ्च हे हरे। विषात् भीमस्य विषान्नदानात् महाग्नेः जतुगृहदाहात् पुरुषाददर्शनात् पुरुषादाः नरमांसभक्षकाः हिडिम्बादयः राक्षसाः तेषां दर्शनात् असत्सभायाः द्यूतस्थानात् वनवासकृच्छ्रतः अरण्यवासक्लेशात् मृधे मृधे प्रतियुद्धं अनेकमहारथास्त्रतः अनेकेषां महारथानां भीष्मादीनां अस्त्रेभ्यः द्रौण्यस्त्रतः साम्प्रतमश्वत्थामप्रयुक्तब्रह्मास्त्रतः अभिरक्षिताः आस्म सर्वतः संरक्षिताः अभवाम॥ २४ ॥

*सुयोधननिसृष्टो नः शापायामर्षणो मुनिः।
पत्न्यैश्चातृप्यत सह त्रिलोकैश्चरतां वने ॥
विपदस्सन्तु नः शश्वत्तत्र तत्र जगद्गुरो।
भवतो दर्शनं यत्स्यादपुनर्भवदर्शनम् ॥ २५ ॥

जन्मैश्वर्यश्रुतश्रीभिरेधमानमदः पुमान्।
नैवार्हत्यभिधातुं वै त्वामकिञ्चनगोचरम् ॥ २६ ॥

नमोऽकिञ्चनवित्ताय निवृत्तगुणवृत्तये ।
आत्मारामाय शान्ताय कैवल्यपतये नमः ॥ २७ ॥

मन्ये त्वां कालमीशानमनादिनिधनं [5]विभुम् ।
समं चरन्तं सर्वत्र भूतानां यन्मिथः कलिः ॥ २८ ॥

न वेद कश्चिद्भगवंश्चिकीर्षितं तवेहमानस्य नृणां विडम्बनम् ।
न यस्य कश्चिद्दयितोऽस्ति कर्हिचित् द्वेष्यश्च यस्मिन् विषमा मतिर्नृणाम् ॥ २९ ॥

जन्म कर्म च विश्वात्मन्नजस्याकर्तुरात्मनः ।
[6]तिर्यङ्नृषिषु यादस्सु तदत्यन्तविडम्बनम् ॥ ३० ॥

गोप्याददे त्वयि कृतागसि दाम तावत् या ते [7]दशाऽश्रुकलिलाञ्जनसम्भ्रमाक्षम् ।
वक्त्रं निनीय भयभावनया स्थितस्य सा मां विमोहयति भीरपि यद्बिभेति ॥ ३१ ॥

केचिदाहुरजं जातं पुण्यश्लोकस्य कीर्तये ।
यदोः प्रियस्यान्ववाये मलयस्येव चन्दनम् ॥ ३२ ॥

अपरे वसुदेवस्य देवक्यां याचितोऽभ्यगात् ।
[8]अजस्त्वमस्य क्षेमाय वधाय च सुरद्विषाम् ॥ ३३ ॥

---

*This additional verse is found in H & V and not commented by any commentator 1. H,I,V ता: 2. K,M जगत्पते 3. N °ति° 4. H,V न चार्हत्यभि° ; K,M नार्ह इत्यभि° 5 K,M परम् 6. H,V तिर्यङ्नरर्षि° ; W तिर्यग् ऋषिनृ° ; K,M तिर्यङ्नृपशु; AF,GF तिर्यङ्नृष्वपि 7. AF,GF मृषाऽश्रु° 8. K,M यं बि° 9. W अर्भत्व°

**श्रीध॰ विपद** इति। यत् यासु विपत्सु कीदृशं दर्शनं? नास्ति पुनरपि [1]भवदर्शनं यस्मात्[2] ॥ २५ ॥

सम्पदस्तु श्रेयःपरिपन्थिन्य इत्याह — **जन्मेति**। जन्म सत्कुले। जन्मादिभिरेधमानः मदः यस्य सः अभिधातुं श्रीकृष्ण! गोविन्द! इति वक्तुमपि अकिञ्चनानां गोचरं विषयभूतम् ॥ २६ ॥

प्रस्तुतमनोरथपूरणाय पुनः प्रणमति — **नम** इति। अकिञ्चनाः भक्ता एव वित्तं सर्वस्वं यस्य तस्मै। ततः किं? निवृत्ताः गुणवृत्तयः धर्मार्थकामविषयाः यस्मात् तस्मै। तत्कुतः? आत्मारामाय। तत्कुतः? शान्ताय रागादिरहिताय। किञ्च कैवल्यपतये कैवल्यं दातुं समर्थाय ॥ २७ ॥

ननु देवकीपुत्रं मां कथं एवं स्तौषि, तत्राह — **मन्य** इति। मन्ये त्वां कालं न तु देवकीपुत्रम्। तत्र हेतवः — ईशानं नियन्तारं, अनादिनिधनं आद्यन्तशून्यं, विभुं प्रभुं, समं यथा भवति तथा सर्वत्र चरन्तम्। ननु

**पार्थसारथेः** मम कथं साम्यं तत्राह — यत् यतः त्वत्तः निमित्तभूतात् भूतानामेव मिथः कलिः कलहो भवति ननु स्वतः त्वयि वैषम्यम् ॥ २८ ॥

ननु निग्रहानुग्रहरूपं मयि प्रसिद्धं वैषम्यं, अत आह — **न वेदेति**। नृणां विडम्बनं अनुकरणं, ईहमानस्य कुर्वतः यस्मिन् त्वयि विषमा मतिः अनुग्रहनिग्रहरूपा भवति ॥ २९ ॥

**जन्मेति**। ते अजस्य जन्म अकर्तुः कर्म। तिर्यक्षु वराहादिरूपेण। नृषु रामादिरूपेण। ऋषिषु वा[3]मनादिरूपेण। यादस्सु मत्स्यादिरूपेण ॥ ३० ॥

नरविडम्बनं त्व[4]यि अत्याश्चर्यं इत्याह — **गोपीति**। गोपी यशोदा त्वयि कृतागसि दधिभाण्डस्फोटनं कृतवति यावत् दाम रज्जुं आददे जग्राह, तावत् तत्क्षणमेव या ते दशा अवस्था सा मां विमोहयति। किंभूतस्य? अश्रुभिः कलिलं व्यामिश्रं अञ्जनं ययोः ते च ते स[5]म्भ्रमे व्याकुले अक्षिणी यस्मिन् तद्वक्त्रं निनीय अधःकृत्वा ताडयिष्यतीति भयस्य भावनया स्थितस्य। यत् यतः त्वत्तः भीरपि स्वयं बिभेति तस्य ते दशा ॥ ३१ ॥

अत एव जगन्मोहनतया दुर्ज्ञेयत्वात् तव जन्मादि[6] बहुधा वर्णयन्तीत्याह — **केचिदिति** चतुर्भिः। पुण्यश्लोकस्य [7]प्रियस्य युधिष्ठिरस्य कीर्तये यदोरेव कीर्तय इति वा यदोः प्रियस्यान्ववाये वंशे मलयस्य कीर्तये व[8]ने वा चन्दनं यथा ॥ ३२ ॥

**अपर** इति। तथा वसुदेवस्य भार्यायां देवक्यां अज एव त्वं अभ्यगात्। पुत्रत्वमिति शेषः। प्रथमपुरुषस्त्वार्षः। अ[9]भ्यगा इति वा पाठः सुगमः। ताभ्यामेव पूर्वं सुतपःपृश्निरूपाभ्यां याचितः सन्। अस्य जगतः क्षेमाय ॥ ३३ ॥

---

1. H,V भवस्य संसारस्य दर्शनं 2. B adds तत् 3. B नरनारायणादिरूपेण 4. A,B omit त्वयि 5. H,V सम्भ्रमेण 6 H,V °नि 7 A omits प्रियस्य 8. A,B वंशे 9. A,B अर्भत्वमिति

**वीर०** यदेतत् विपद्गणनिवारकत्वं तदेतत् तव कियत्? अर्थादेव तन्निवृत्तेः इत्यभिप्रायेणाह — **विपद** इति। हे जगद्गुरो! तत्र तत्र शश्वत् सदा ताः त्वया निरसनीयाः नः[1] आश्रितानां विपदः सन्तु असतां न तन्निरासाय यत्नः त्वया कार्यः इति भावः। यत् यदि अपुनर्भवदर्शनं भवतः दर्शनं स्यात्। न विद्यते पुनर्भवस्य संसृतेः दर्शनं यस्मात् तत् तथाभूतं भवद्दर्शनं यदि स्यात्; सम्भावनायां लिङ्। सकलापन्मूलसंसृतिपरिहारक्षमं तद्यदि स्यात्। विपदः सन्तु नाम अर्थादेव तन्निवृत्तेः इति भावः ॥ २५ ॥

नन्वहमीश्वरश्चेत् तर्हि त्वमिव सर्वेऽपि मामेवंविधं किं न वदन्तीत्यत आह — **जन्मेति**। ऐश्वर्यशब्दः धनपरः, श्रुतशब्दः विद्यापरः जन्मैश्वर्यश्रुतानां सत्कुलप्रसवधनविद्यानां श्रीभिः समृद्धिभिः एधमानः मदः यस्य स पुमांस्त्वां अभिधातुं न च अर्हति। त्रिमदोन्मत्तत्वेन स्व[2]परयाथात्म्यविवेकाभावादिति भावः। अनर्हतामेव सूचयितुं विशिनष्टि अकिञ्चनगोचरं नास्ति किञ्चन येषां ते अकिञ्चनाः निष्कामाः तेषां गोचरम् ॥ २६ ॥

अन्यैश्च चिदचिद्व्यावर्तकैः ईश्वरासाधारणधर्मैः विशिंषन्ती नमस्करोति — **नम** इति। अकिञ्चनानां वित्ताय विद्लृ लाभे इति धातुः, विद्यते लभ्यते इति वित्तः तस्मै। निवृत्ताः गुणानां रजआदीनां वृत्तयः कामक्रोधादयः यस्य तस्मै। अनेन अचिद्व्यावृत्तिः। शान्ताय ऊर्मिषट्करहिताय अशनायापिपासाशोकमोहजरामृत्यवः षडूर्मयः। अनेन बद्धजीवव्यावृत्तिः। तत्र हेतुः, आत्मारामाय, स्वानुभवैकपराय[3]। कैवल्यं प्रकृतिसम्बन्धराहित्यं मोक्ष इति यावत् तस्य पतिः तस्मै. मोक्षप्रदाय। अनेन मुक्तनित्यजीवव्यावृत्तिः ॥ २७ ॥

ननु ब्रह्मरुद्रेन्द्राद्यन्यतमः कश्चिदुक्तविधः, नत्वहं इत्यत्राह — **मन्य** इति। ईशानं ब्रह्मादीनपि च[5] वशीकुर्वाणं कालं त्वां मन्ये कालशरीरकं त्वां मन्ये इत्यर्थः। अत एव कालकृतजन्ममरणादिरहितम्।. नन्वहमपि प्राकृतवद्वैषम्यादिमानेव; [6]ततः कालं विशिनष्टि। सर्वत्र समं चरन्तं कालयन्तं यत् यस्मात् [7]कालनिमित्तात् भूतानां मिथः कलिः कलहः भवति। समं चरन्तं इत्यनेन कालशरीरकस्य तव न वैषम्यनैर्घृण्यादिकं अस्तीति सूचितम्, यन्मिथः कलिरित्यनेन। अथापि तत्तज्जीवकर्मानुसारेण सुखदुःखादीन् प्रति [8]निमित्तमात्रत्वमस्तीति सूचितम्॥ २८ ॥

नन्वहमपि कांश्चिदनुगृह्णन् कांश्चिन्निगृह्णन् कथं वैषम्यादिरहित इत्यत आह — **नेति**। हे भगवन्! नृणां **विडम्बनं** अनुकारं ईहमानस्य कुर्वाणस्य तव चिकीर्षितं न कोऽपि वेद। क्वचित् निग्रहोऽपि[9] अन्ततः अनुग्रहरूपतया फलतीति न वैषम्यादिकमस्ति। पूतनाशकटयमलार्जुनधेनुककेशिकुवलयापीड चाणूरमुष्टिककोसलकंसादिविषयनिग्रहस्य अन्ततः तेषां निरतिशयपुरुषार्थरूपमुक्तिहेतुत्वदर्शनात् इति भावः। यत एवं अत एव त्वयि वैषम्यादिरहिते तदापादयता नृणां मतिरेव विषमेत्याह न यस्येति। कर्हिचिदपि दयितः प्रियः द्वेष्यश्च नास्ति। यस्मिन् नृणां मतिः विषमा रजस्तमोन्वयात् अयथार्था भवति। नृणां विडम्बनं ईहमानस्य इत्यनेन नरचेष्टानुकारमात्रमेव, न तु सर्वथा तत्सजातीयचेष्टितम्। "जन्म कर्म च मे दिव्यं" (भ. गी. 4-9) इति भगवतैवोक्तत्वात् इति सूचितम् ॥ २९ ॥

विडम्बनत्वमेव अन्यथानुपपत्त्या द्रढयति — **जन्मेति**। अजस्य जन्मरहितस्य कर्मायत्तोत्पत्तिरहितस्य अकर्तुः प्राचीनकर्मानुरूपप्रवृत्तबुद्ध्यधीनकर्मरहितस्य आत्मनः सर्वान्तरात्मनः तव तिर्यगादिषु जन्म तत्सजातीयं कर्म च इति यत् तदत्यन्तविडम्बनमेव। अन्यथा अजस्य अकर्तुः आत्मनश्च तत्र घटत इति भावः। तत्र तिर्यक्षु वराहादिषु ऋषिषु [10]भार्गवदत्तात्रेयकार्दमादिषु नृषु राघवयादवादिषु यादस्सु मत्स्यकूर्मादिषु जलौकस्सु [11]विडम्बनमात्रम् ॥ ३० ॥

[12]विडम्बनमात्रं चेदिदं न घटते इत्यभिप्रायेणाह — **गोपीति**। तावद्यथा त्वयि कृतं आगः अपराधः येन तथाभूते सति गोपी यशोदा दाम रज्जुं आददे त्वद्बन्धनार्थं परिज[13]गृहे, तदा अश्रुभिः कलिलं कलुषितं अञ्जनं ययोस्ते सम्भ्रमे भयसूचकाटोपयुक्ते अक्षिणी यस्य तद्वक्त्रं निनीय उन्नीय [14]उन्नाम्य। अश्रुकलिलेत्यादिक्रियाविशेषणं वा, अश्रुकलिलाञ्जनसम्भ्रमाक्षं यथा तथा वक्त्रं निनीय प्रापय्य इत्यर्थः। यस्माद् [15]यतः भीरपि बिभेति तस्य तव भयभावनया भयाभिनयेन स्थितस्य या दशा सा मां विमोहयति। अत्र भीशब्देन सर्वेषां भयहेतुः मृत्युः लक्ष्यते "भीषास्माद्वातः पवते भीषोदेति सूर्यः भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः" (तैत्ति. उ. 2-8) इत्युक्तविधस्या[16]सम्भावितभयस्य तवेत्यर्थः। तावद्विमोहयति मूढां करोति। पश्चात्तु नरचेष्टानुकारमात्रमिदमिति ज्ञापयतीति तावच्छब्दाशयः ॥ ३१ ॥

यतो विडम्बनमात्रं न तु तात्त्विकं अत एव त्वदवतारप्रयोजननिमित्तं च इदमेवेति निश्चेतुं अशक्त्या[17] तत्र नाना तर्कयन्तीत्याह — **केचिदिति** पञ्चभिः। केचित्त्वं[18]दवतारप्रयोजननिर्णय[19]प्रवृत्तानां मध्ये अजमपि त्वां प्रियस्य भक्तस्य पुण्यश्लोकस्य यदोः कीर्तये तद्वंशे जातमाहुः। यदुवंशकीर्तिजननाय तत्र त्वां जातमाहुरित्यर्थः। यथा मलयस्य पर्वतस्य कीर्तये चन्दनं जातं वदन्ति तद्वत् ॥ ३२ ॥

अपरे त्वत्रै[20] साधुलोकस्य क्षेमाय सुरद्विषां वधाय च जातस्त्वं[21] वसुदेवस्य देवक्याम्। ताभ्यां पूर्वजन्मनि याचितः अभ्यगात्। पुत्रत्वं प्राप्त इत्याहुः। वसुदेवस्य इत्यपादानस्यैव शेषत्वविवक्षया षष्ठी ॥ ३३ ॥

---

1. A,B omit नः 2. A,B ईश्वर° 3. W °दा° 4. W कश्चित्त्व° 5 W स्व° 6. W इत्यतः 7. W कालान्त्रि° 8. A,B भिन्नतया निमित्तमिति सूचितम्। 9. A,B तो° 10 W भार्गवात्रेय° 11. W omits विडम्बनमात्रं 12 A,B न चेदं घटते 13. W °जग्राह 14. A,B उत्ताम्य 15. W त्वत्तः 16. A,B °स्याभयस्य 17. W °क्तास्तन्नाना 18. A,B °त्त° 19 W निर्णयाय 20. W °स्य 21. W अजस्त्वं

**विज०** भगवत्स्मरणविरोधिसम्पत्परम्परायाः भगवद्दर्शनकरविपत्परम्परैव श्रेयसी भगवद्दर्शनहेतुत्वात्। अतः सम्पद्भ्यः भ[1]गवद्दर्शनकरविपद एव अस्माकं सन्त्विति विज्ञापयति — **विपद** इति। हे जगत्पते! नः अस्माकं तत्र तत्र सांसारिकव्यापारेषु निरन्तरं विपदः सन्तु, यासु यासु विपत्सु अपुनर्भवं मोक्षं दर्शयतीत्यपुनर्भवदर्शनं भवतः दर्शनं स्यादिति यत् यस्मात् तस्मात् ताः स्युः इति वा[2]क्यशेषः ॥ २५ ॥

सम्पद्भ्यो विपदां श्रेयस्त्व कुत इति तत्राऽह — **जन्मेति**। अभिजनैश्वर्यशास्त्रश्रवणजनितविद्याधनश्रीमदैः वर्धमानमदः पुमान् अकिञ्चनानां परमहंसानां विषयं ज्ञातुं योग्यं त्वां इतीत्थं त्वां अभिधातुं वक्तुम्, उपलक्षणमेतत्; स्मर्तुं वा नार्हः। वै यस्मात् तस्मात् स्मरणहेतुविपद एव श्रेयस्यः सम्पद्भ्य इति भावः ॥ २६ ॥

श्रीकृष्णादन्यत् किञ्चन उपादेयं न विद्यते येषां ते अकिञ्चनाः ते एव वित्तं यस्य स तथा तस्मै। निवृत्ताः सत्त्वादिगुणानां वृत्तयः जाग्रदाद्यवस्था यस्मात् स तथोक्तः तस्मै। अकिञ्चनैः ज्ञाताय इति वा। निरन्तरं वृत्ताज्ञानादिगुणानां वृत्तिः स्थितिः यस्मिन् सः तथोक्तः तस्मै वा। अत एव आत्मनि आरमते इत्यात्मारामः तस्मै। आत्मनां चेतनानां आरामाय क्रीडाकृत्रिमभ[3]वनाय अत एव शान्ताय सुखपूर्णाय अत एव कैवल्यपतये मुक्तिनाथाय नम इत्यन्वयः ॥ २७ ॥

न विद्येते आदिनिधने यस्य स तथा तं अनादिनिधनम्, अनस्य प्राणस्य जन्मलयकर्तारं इति वा। ईशं शिवमानयति चेष्टयतीति ईशानः, तं सर्वेश्वरं वा। जगच्चेष्टाशक्तिमन्तं वा। परं सर्वस्मात् अन्यं सर्वत्र स्वपरेषु समं यथायोग्यं चरन्तं त्वां कालं संहर्तारं मन्ये। कुरुपाण्डवादिभूतानां यत् यस्मात् त्वं मिथः अन्योन्यं कलिः कलहः तं त्वामिति वाक्यशेषः ॥ २८ ॥

समं चरन्तं इत्येतत् विवेचयति — **न वेद** इति। यस्य तव योग्यतातिरेकेण कर्हिचित् कश्चिद्दयितो नास्ति, कश्चित् द्वेष्यः नास्तीति शेषः। एवमपि यस्मिन् त्वयि नृणां असुरप्रकृतीनां मतिः विषमा। अर्जुनः अनुग्राह्यः, अयं

**दुर्योधनः** द्वेष्यः इति ताभ्यां उभाभ्यां **बहूपचितपुण्यद्वेषनिचयौ** अवगणय्य हे **भगवन्**! **नृणां विडम्बनं** अनुकरणं **ईहमानस्य** चेष्टमानस्य 'द्विषन्तं नैव भोजयेत्' (भार. 5-409-1) इत्यादिवचनात्, **तस्य तव** कश्चित्पुरुषः **चिकीर्षितं** कर्तुं **इष्टं न वेद** न जानातीत्येकान्वयः। अथवा लोके यस्मिन् पुंसि योग्यतातिरेकेण स्नेहद्वेषकारिणि नृणां **मतिः विषमा अस्य** दयितोऽयं अस्य द्वेषीति, न भवांस्तादृशः इत्यतः समचारीति वैदिका इति॥ २९॥

अधुना अनादिनिधनत्वं समर्थयते — **जन्मेति**। हे **विश्वात्मन्**! सर्वान्तर्यामिन्! **अजस्य** अजातस्य **अनायासेन** फलानपेक्षया अकर्तुः **आत्मनः** स्वामिनः तव **तिर्यङ्नृपशुषु यादस्सु** जलजन्तुषु **यज्जन्म** तज्जात्यनुकारि **कर्म च** तदतिशयेन **विडम्बनं** अतः अनादिनिधनः असीति भावः। अजस्य आत्मनः तिर्यगादिषु यज्जन्म अकर्तुः आत्मनः तज्जात्यनुसारि यत्कर्म तदुभयं अत्यन्तविडम्बनं इति वा योजना॥ ३०॥

इदं चातिविडम्बनं विदुषामपि मोहकं इत्यभिप्रेत्याह — **गोपीति**। त्वयि **कृतागसि** दधिभाण्डं भित्त्वा नवनीतापहारिणि सति **यदा गोपी** नाम्ना यशोदा नित्यमुक्तं त्वां बद्धुं **दाम आददे तावत्तदा यं** त्वां प्रति भीः सर्वजनस्य भयकारिणी दुर्गापि **बिभेति** यस्य भयभावनया **अश्रुभिः कलिलं** कलुषं **अञ्जनं** यस्य तत् तथोक्तं **अश्रुकलिलाञ्जनञ्च** तत् **सम्भ्रमयुक्तं अक्षि** यस्य तत् तथोक्तं **वक्त्रं विनम्य** अवाचीनतया कृत्वा स्थितस्य ते तव **या दशा** अवस्था **सा मां विमोहयति** इत्येकान्वयः। तस्मात् तदनुकरणं विदुषामपि मोहकं इति भावः॥ ३१॥

इदानीं एवंविधस्य तव देवक्यां जन्मानुकरणे निमित्तं विद्वांसोऽनेकधा वदन्तीति विज्ञापयति — **केचित् इत्यादिना**। **केचित्** विद्वांसः पुण्यकीर्तेः भगवद्भक्तस्य **यदो** राज्ञः **अन्ववाये** तस्य **कीर्तये जातं** त्वां **आहुः** इत्यन्वयः। नाम्ना **मलयस्य** पर्वतस्य कीर्तये **चन्दनमिव**॥ ३२॥

**अपरे** बुधाः देवैः **याचितः अजः** त्वं **अस्य** सज्जनस्य **क्षेमाय सुरद्विषां वधाय च वसुदेवस्य** सकाशात् **देवक्यां अभ्यगात्** आविर्भूत इति **ब्रुवते**॥ ३३॥

---

1. B,K,M भवद्दर्शन॰ 2 K,M वाक्यविशेषः 3 K,M वनाय 4. K,M तस्य

**रा॰ कृ॰** हे **जगद्गुरो**! **यत्** यत्र, **अपुनर्भवदर्शनं** पुनः संसारसन्दर्शनरहितं **भवतः** तव **दर्शनं स्यात्** भवेत् **ताः विपदः नः** अस्माकं **तत्र तत्र** सांसारिकेषु व्यापारेषु **शश्वत्** सदा **सन्तु** भवन्तु।

अहङ्कारममकारमयजीवितसन्निवेशेषु निरन्तरं अन्तर्यामिणः भगवतः प्रेरणां अनुसन्दधानाः भक्ताः तदनुग्रह-भाजः संसृतिं सन्तरन्ति। भक्तियोगविकसितविवेकवतां भागवतानां हि विपदोऽपि भगवत्प्रसादायन्ते॥ २५॥

किञ्च, **जन्मैश्वर्यश्रुतश्रीभिः जन्म** सत्कुले प्रसूतिः, **ऐश्वर्यं** धनादिसम्पत्, **श्रुतं** विद्या, तेषां **श्रीभिः** समृद्धिभिः **एधमानमदः** वर्धमानमदः **पुमान् अकिञ्चनगोचरं** श्रीकृष्णादन्यत् न किञ्चन उपादेयं वस्तु येषां ते अकिञ्चनाः भागवताः, तेषां गोचरं **त्वां अभिधातुं** तव नाम वक्तुं **नार्हति**।

आभिजात्यैश्वर्याद्यभिमानिनः जनाः तन्मयं भगवन्तं आकलय्य तदर्थमेव तं प्रार्थयन्ते। अनन्यचित्तास्तु तदाभिजात्यादिकं सर्वमपि भगवन्मयं पश्यन्तः भगवत्येव समर्प्य भक्तिं अनन्यां भजन्ते। विना स्वभावसमर्पणं भगवान् अगोचर इति कुन्त्याः परमाशयः॥ २६॥

अकिञ्चनवित्ताय अकिञ्चनाः भक्ताः एव वित्तं सर्वस्वं यस्य तस्मै, निवृत्तगुणवृत्तये निवृत्ताः गुणवृत्तयः धर्मार्थकामविषयाः यस्मात् तस्मै आत्मारामाय आत्मनि आनन्दस्वरूपे रममाणाय शान्ताय शान्तचित्ताय कैवल्यपतये कैवल्यं दातुं समर्थाय भवते इति शेषः। नमो नमः।

अनन्यया भक्त्या भगवत्सन्निधिसाधका भक्ताः एव भगवतः वित्तभूताः। भगवांस्तावत् धर्मार्थ-कामसाध्यविषयशून्यः। ततश्च तदाश्रितानां निष्कामकर्माचरणपरायणानामपि धर्मादयः मोक्षसाधनपर्यवसायिनः एवेति गम्यते। आत्मारामपदेन निर्हेतुकानन्दस्वरूपः देव इति व्यज्यते। शान्तपदेन सङ्गराहित्यं सूच्यते। कैवल्यं च देशकालादिषु सर्वेष्वपि केवलात्मभावनैव; तां दातुं भगवानेव समर्थः तस्मात् अयं कैवल्यपतिः॥ २७॥

यत् येषु भावेषु भूतानां प्राणिनां मिथः परस्परं कलिः कलहः भवतीति शेषः। तेषु सर्वत्र समं चरन्तं त्वां ईशानं सर्वनियन्तारं अनादिनिधनं जननमरणरहितं विभुं सर्वव्यापकं कालं मन्ये।

सृष्टिधर्माणां अभिव्यञ्जकः परस्परसम्बन्धनिबन्धनः भगवतः व्यक्तरूपात्मकः कालः। सः अनादिनिधनः तदभिज्ञातुः जीवस्य जननात् प्राक् मरणात् पश्चादपि तस्य विद्यमानत्वात्। नहि मानदण्डेन मध्यवर्तिना कुड्यादिकस्य प्रमात्रा सर्वाभिव्यापकः आकाशः प्रमातुं शक्यते। सर्वक्षेत्रसाधारणं वर्षाजलं यथा कृष्यनुरूपं फलं प्रयच्छति तथैव भगवानपि जीवेभ्यः स्वभावानुगुणं फलं वितरति। तस्मादयं सर्वत्र समः॥ २८॥

हे भगवन्! यस्मिन् त्वयि नृणां मतिः विषमा विभिन्ना भवति यस्य च तव न कश्चित् दयितः प्रियः, कर्हिचित् कदापि द्वेष्यश्च भवति। तादृशस्य नृणां विडम्बनं अनुकरणं ईहमानस्य कुर्वतः तव चिकीर्षितं कश्चित् कोऽपि न वेद न जानाति॥ २९॥

हे विश्वात्मन्! विश्वरूप! अजस्य जन्मरहितस्य अकर्तुः अकर्मवश्यतया पुण्यपापयोः अकर्तुः आत्मनः सर्वान्तर्यामिणः तव तिर्यङ्नृर्षियादस्सु वराहादिरूपेण तिर्यक्षु, रामादिरूपेण नरेषु, वामनादि रूपेण ऋषिषु, मत्स्यादिरूपेण यादस्सु जन्म कर्म च यदस्ति तदत्यन्तविडम्बनं अनुकरणमात्रमेव।

यदुक्तं "न वेद कश्चिद्भगवंश्चिकीर्षितं तवेहमानस्य नृणां विडम्बनम्" (भाग. 1-8-29) इति। तत्रोच्यते कार्पासं यथाक्रमं सूत्रवस्त्रकूर्पासात्मना परिणतं पूर्वपूर्वस्थितिप्रत्यभिज्ञाविरहितं च केनापि देहिना धृतं मदीयं इदं कूर्पासमिति व्यवह्रियते। तच्च जर्जरितं सत् स्वं धृतवतो मनः व्यथयति। एवं विविधभूतशक्तिसम्मेलनवशात् उद्भूतः जीवः तच्छक्तिभिन्नं आत्मानं प्रत्यभिज्ञाय, स्वभिन्नैर्जनैः सम्बन्धं व्यवस्थाप्य, सुखदुःखादिकं अनुभवति। यद्यपि इयं नानादशावैचित्रीमयी दैवी माया भगवति प्रवर्तते; तथापि द्वन्द्वव्यवहितज्ञानेन तेन जीवेन सर्वान्तर्यामी भगवान् नैव स्मर्यते, भगवतस्त्वेषा क्रीडासाधनी माया तदधीनैव।

भगवतः तिर्यङ्नरर्षियादस्सु जन्मादिकं अत्यन्तविडम्बनम् इत्यत्र किञ्चिदुच्यते। अत्र भगवदवतारतत्त्वं निरूपितम्। वराहावतारः वराहादिनानाविधभूचरजन्तूत्पत्तिं, मत्स्यावतारः मत्स्यादिविविधजलचरोत्पत्तिं च सूचयति। एवं भगवान् स्वक्रीडानुसारेण प्रकृतिं उत्पाद्य तदनुरूपप्राणित्वेन अवतरति। नित्यं च वयं पश्यामो यत् तण्डुलेषु पत्रादिषु च तदनुगुणक्रिमिकीटकादीनां आविर्भावम्। एवमेव तत्तद्बीजात् तत्तद्वृक्षादीनां आविर्भावः दृश्यते। तथैव भूदेवलोकादिषु मावनदेवादीनां उत्पत्तिः भवति। सैषा सर्वा भगवतः अवतारलीला॥ ३०॥

गोपी यशोदा त्वयि कृतागसि कृतापराधे दधिभाण्डस्फोटनरूपापराधं कृतवति सति इत्यर्थः। दाम रज्जुं यावत् आददे जग्राह, तावत् तत्क्षणे एव अश्रुकलिलाञ्जनसम्भ्रमाक्षं अश्रुभिः कलिलं व्यामिश्रं अञ्जनं ययोः ते सम्भ्रमान्विते अक्षिणी यस्मिंस्तद्वक्त्रं निनीय अधःकृत्वा भयभावनया आस्थितस्य यत् यस्मात् त्वत्तः भीरपि बिभेति। भयाभिमानदेवतापि त्रस्यति तथाभूतस्य ते तव या दशा वर्तत इति शेषः। सा अवस्था मां विमोहयति अद्यापीति शेषः॥ ३१॥

अजमपि त्वां प्रियस्य पुण्यश्लोकस्य युधिष्ठिरस्य कीर्तये यदोः अन्ववाये वंशे मलयस्य तन्नामकपर्वतस्य कीर्तये चन्दनमिव जातं त्वां केचिदाहुः॥ ३२॥

अपरे वसुदेवस्य देवक्यां याचितः; ताभ्यां पुरा सुतपःपृश्निरूपाभ्यां याचितः सन् अस्य विश्वस्य क्षेमाय, सुरद्विषां राक्षसानां वधाय च अजः कालकर्माद्यधीनजन्मरहितः त्वं अभ्यगाः पुत्रत्वं स्वीकृतवानसि इत्याहुः इति पूर्वेणान्वयः॥ ३३॥

**भारावतारणायान्ये भुवो नाव इवोदधौ।**
**सीदन्त्या भूरिभारेण जातो ह्यात्मभुवार्थितः॥ ३४॥**

**भवेऽस्मिन् क्लिश्यमानानां अविद्याकामकर्मभिः।**
**श्रवणस्मरणार्हाणि करिष्यन्निति केचन॥ ३५॥**

**शृण्वन्ति गायन्ति गृणन्त्यभीक्ष्णशः स्मरन्ति नन्दन्ति तवेहितं जनाः।**
**त एव पश्यन्त्यचिरेण तावकम् भवप्रवाहोपरमं पदाम्बुजम्॥ ३६॥**

**अप्यद्य नस्त्वं स्वकृतेहित! प्रभो! जिहाससि स्वित् सुहृदोऽनुजीविनः।**
**येषां न चान्यद्भवतः पदाम्बुजं परायणं राजसु योजितांहसाम्॥ ३७॥**

**के वयं नामरूपाभ्यां यदुभिस्सह पाण्डवाः।**
**भवतोऽदर्शनं यर्हि हृषीकाणामिवेशितुः॥ ३८॥**

**नेयं शोभिष्यते तत्र यथेदानीं गदाधर!**
**त्वत्पदैरङ्किता भाति स्वलक्षणविलक्षितैः॥ ३९॥**

**इमे जनपदाः स्वृद्धाः सुपक्वौषधिवीरुधः ।**
**वनाद्रिनद्युदन्वन्तो ह्येधन्ते तव वीक्षितैः ॥ ४० ॥**

---

1. H,N,V °त° 2. AF,GF °ष्य इति 3. AF,GF वदन्त्य° 4. K,M,W °तः 5. W यज्ञि° 6. K,M ते 7. K,M,W दर्शनं 8. H,V धात्री; W भूमिः 9. K,M °ताः

**श्रीध०** **भारेति** । आत्मभुवेति ब्रह्मप्रार्थनस्य[1] प्राधान्यविवक्षया ॥ ३४ ॥

मतान्तरं **भव** इति। परमानन्दस्वरूपाज्ञानं अविद्या। ततो देहाद्यभिमानात् कामः, ततः कर्माणि तैः क्लिश्यमानानां तन्निवृत्तये श्रवणाद्यर्हाणि कर्माणि करिष्यन् ॥ ३५ ॥

अस्य पक्षस्य सिद्धान्ततां अभिप्रेत्य श्रवणादिफलमाह[2] — **शृण्वन्तीति** । नन्दन्ति अन्यैः कीर्त्यमानं अभिनन्दन्ति[3] ये जनाः तव ईहितं चरितं तावकं त्वदीयं पदाम्बुजं, त एव पश्यन्त्येव अचिरेणैव इति च सर्वत्र अवधारणम् । कीदृशम्? भवप्रवाहस्य जन्मपरम्पराया उपरमः[4] यस्मिंस्तत् ॥ ३६ ॥

इदानीं तव अस्मत्परित्यागः अनुचितः इत्याशयेनाह — **अपीति** चतुर्भिः। हे प्रभो! सुहृदः अतिस्निग्धान् अनुजीविनश्च नः अस्मान् अद्यापि स्वित् किंस्वित् त्वं जिहाससि[5] येषां अस्माकं अन्यत् परायणं नैवास्ति। तत्कुतः। राजसु योजितं अंहो दुःखं यैस्तेषां स्वानां कृतं ईहितं अपेक्षितं येन[6] तस्य सम्बोधनम्। विसर्गान्तपाठे त्वम्पदविशेषणम् ॥ ३७ ॥

ननु तव बन्धवः यदवः[7] पुत्राश्च पाण्डवाः शूराः समर्थाश्च तत्किं कार्पण्यं भाषसे अत आह — **के वयम्** इति। यर्हि भवतोऽदर्शनं यदा त्वं अस्मान् न पश्यसि तदा नामरूपाभ्यां नाम्ना विख्यात्या रूपेण समृद्ध्या च यदुभिः सहिताः पाण्डवाः नाम के वयम्? न केऽपि; अतितुच्छा इत्यर्थः। हृषीकाणां इन्द्रियाणां ईशितुः जीवस्य अदर्शने यथा न किञ्चित् नाम च रूपं च तद्वत् ॥ ३८ ॥

**नेति** । किञ्च, यथेदानीं इयं अस्मत्पाल्या भूमिः स्वैः असाधारणैः वज्राङ्कुशादिभिः लक्षणैः विलक्षितैः चिह्नितैः त्वत्पदैः अङ्किता सती भाति तत्र तदा त्वयि निर्गते सति न शोभिष्यते ॥ ३९ ॥

**इमे** इति । अपि च इमे जनपदा देशाः स्वृद्धाः सुसमृद्धाः सन्तः तव वीक्षितैः एधन्ते ॥ ४० ॥

---

1. H,V °नायाः 2. H,V श्रवणसङ्कीर्तनादिभिरेव त्वत्पदाम्बुजप्राप्तिरित्याह 3. H,V add किञ्च 4. H,V add निवारणं 5. H,V add हातुमिच्छसि 6. H,V add स्वाश्रितकृतसर्वाभीष्ट इत्यर्थः। 7 B,H,V यादवाः

**वीर०** अन्ये तु उदधौ अर्णवे नाव इव भूरिभारेण सीदन्त्याः क्लिश्यन्त्याः भुवः भारापहाराय आत्मभुवा च चतुर्मुखेनार्थितः भगवान् जातः[1] इत्याहुः ॥ ३४ ॥

केचन तु अस्मिन् लोके अविद्यादिभिः क्लिश्यमानानां जनानां श्रवणस्मरणाद्यर्हाणि चेष्टितानि करिष्यन् कर्तुं जात इत्याहुरित्यर्थः। अविद्या देहात्मभ्रमादेः निमित्तं अज्ञानम्। कामः तन्मूलकशब्दादिविषयाभिलाषः, कर्माणि तत्तदनुकूलव्यापारात्मकानि ॥ ३५ ॥

अविद्यादिभिः क्लिश्यमानानां जनानां श्रवणाद्यर्हाणि इत्यनेन भगवच्चेष्टितानां क्लेशापहर्तृत्वं[2] सूचितम्। तच्च न साक्षात्, किन्तु संसृतिनिवर्तकभगवच्चरणारविन्दसाक्षात्कारावहभक्तियोगनिष्पादनद्वारा इत्यभिप्रायेण भगवच्चेष्टितश्रवणादिपराणां एतच्चरणाम्बुजसाक्षात्कारः नान्येषां इत्याह **शृण्वन्तीति**। ये जनाः तव ईहितं चेष्टितं **शृण्वन्ति** वक्तृसान्निध्ये गृणन्ति श्रोतृसान्निध्ये तदुभयासन्निधौ च स्वयं गायन्ति स्मरन्ति नन्दन्ति। त एव भवप्रवाहस्य संसारप्रवाहस्य उपरमः यस्मात् तत्तावकं[3] त्वदीयं पदाम्बुजं अचिरेण पश्यन्ति ॥ ३६ ॥

तदेवं संस्तुत्य अधुना प्रयाणं उपसंहर इति सूचयितुं त्वत्पदाम्भोजैकशरणान्[4] अस्मान् हातुं उत्सहसे किम्? इति काक्वाऽऽह — **अपीति** षड्भिः। स्वकृते स्वार्थे त्वमपीहितः ईहितः किम्? प्रवृत्तः किम् इत्यर्थः। यत् यस्मात् हे प्रभो! सुहृदः अनुजीविनः भृत्यांश्च नः अस्मान् अधुना जिहाससि स्वित् हातुं इच्छसि हि। त्यागानर्हतां सूचयितुं आत्मनो विशिनष्टि। येषां भगवतः पदाम्बुजात् अन्यत् परायणं श्रेयः प्रापकं प्राप्यं च नास्ति। अत एव राजसु राज्ञां मध्ये योजितांहसां[5] योजितदुःखानां[6] येषां अन्यत् परायणं नास्ति तानस्मानित्यन्वयः ॥ ३७ ॥

सर्वमिदं निर्हेतुकया त्वत्कृपयैव सम्पन्नं, नत्वस्मद्गतगुणनिरीक्षणेन इत्यभिप्रायेणाह — **के** इति। नामरूपाभ्यां उपलक्षितस्य इति शेषः। मनुष्यसजातीयनामरूपाभ्यां उपलक्षितस्य तव दर्शनं हृषीकाणां इन्द्रियाणां ईशितुः करणाधिपस्य क्षेत्रज्ञस्य दर्शनमिव यर्हि यदा येषां जातं ते पाण्डवा वयं यदुभिस्सह के? न केऽपि। न केनापि त्वद्दर्शनहेतुना गुणेन युक्ताः, किन्तु त्वत्कृपयैव इत्थं जातमिति भावः। ते वयं नामरूपाभ्यां क इति वा अन्वयः। *न त्वद्दर्शनहेतुना ऋष्यादिनाम्ना तापसादिरूपेण चान्विता इत्यर्थः ॥ ३८ ॥

हे गदाधर! अधुना इयं भूमिः स्वैः स्वासाधारणैः लक्षणैः चिह्नैः ध्वजवज्राङ्कुशादिरेखारूपैः विलक्षिता[7] अभिज्ञैः त्वत्पदैः अङ्किता सती भाति तथा तत्र त्वद्गमनानन्तरकालेन शोभिष्यते हि ॥ ३९ ॥

तव वीक्षितैरेव इमे जनपदा देशा अधुना स्वृद्धाः सुसमृद्धाः। स्वृद्धत्वमेवाह सुपक्वौषध्यो[8] वीरुधः गुल्मानि च येषु तथा वनानि च अद्रयश्च नद्यश्च उदन्वन्तः कमलाकराश्च[9] तद्वत् वर्धन्ते हि ॥ ४० ॥

---

1. W जज्ञे 2. W °हन्तृत्वं 3. W तस्माता° 4. W °म्बु° 5. W जितांहसां 6. W जितदुःखानां *A,B किन्त्वदर्शना ऋष्यादिनाम्ना तापसादिरूपेण वा अन्विता इत्यर्थः। Here W's version is adopted as shown above 7. W °विलक्षितानि तैः 8. W सुपक्वा ओषध्यः 9. W जला°

**विज०** अन्ये प्राज्ञा उदधौ हिरण्याक्षादिभूरिभारेण[1] सीदन्त्या आसन्नमज्जनाया नाव इव दुस्सहासुरजनभारेण परिखिन्नायाः भुवः आत्मभुवा[2] प्रार्थितः भारावतारणाय जातोऽसि इत्याचक्षते ॥ ३४ ॥

केचन पण्डिताः अस्मिन् भवे संसारे आविद्याकामकर्मभिः क्लिश्यमानानां दुःखेन परिभूयमानानां श्रवणार्हाणि नामानि स्मरणार्हाणि रूपाणि करिष्यन् अवातरत् इति वदन्ति॥ ३५॥

कर्मणां श्रवणस्मरणैः किं फलं इति तत्राह — **शृण्वन्तीति**। ये जनाः तव ईहितं चेष्टितं अभीक्ष्णशः शृण्वन्ति गायन्ति गृणन्ति स्मरन्ति नन्दन्ति ते एवाचिरेण क्षिप्रं भवप्रवाहोपरमं संसारप्रवाहस्य उपरमः निवृत्तिः विनाशः यस्मिन् तत् तावकं पदाम्बुजं पश्यन्तीत्येकान्वयः। तस्मात् त्वत्कर्मश्रवणादिफलं मुक्तिरेव इति भावः॥ ३६॥

स्वात्मादिभ्यः अत्यन्तहितकरत्वात् त्वद्विरहः अस्माकं अतिदुस्सहः इत्यभिप्रेत्याह — **अप्यद्येति**। प्रभो! राजसु योजितांहसां कृतापराधानां येषां अस्माकं भवतः पदाम्बुजात् अन्यत् परायणं नास्ति, त्वं ता॰[1] सुहृदः अनुजीविनः किङ्करान् त्वद्भुक्तभोजनसिक्थसेविनः नोऽस्मान् जिहाससि अपिस्वित् द्वारकागमनव्याजेन त्यक्तुमिच्छसि किंस्वित्? कीदृशस्त्वं? स्वकृतेहितः स्वतन्त्रचेष्टितः स्वार्थे भृत्यार्थे हितो वा भृत्यप्रयोजनाय कृतचेष्टो वा। चशब्दः एवार्थे॥ ३७॥

तत्कुत इति तत्राह — **त** इति। यदा ईशितुः इन्द्रियस्वामिनः दर्शनं तदैव हृषीकाणां इन्द्रियाणां दर्शनादिशक्तिः अन्यदा नास्तीति यथा तथा यदूनां अस्माकं यर्हि यदा भवतः दर्शनं यदा ते तव सकाशात् यदुभिः सह पाण्डवाः कथं नामरूपाभ्यां युधिष्ठिरादिनाम्ना शुक्लादिरूपेण च युक्ता इति शेषः इत्यन्वयः। यदा येषां यदूनां अस्माकं च भवतः दर्शनं तदा ते यादवाः वयं पाण्डवाश्च ते वयं नामरूपवन्त इति वा। के वयं इति केचित् पठन्ति। यर्हि भवतः अदर्शनं तदा नाम्ना यशसः बलेन रूपेण बलकोशाद्यात्मना यदुभिस्सह वयं के, असत्कल्पा एवेति। तस्मात् त्वद्विरहः अस्माकं मरणकल्पः इत्यर्थः॥ ३८॥

भो गदाधर! इयं राजधानी इदानीं ध्वजादिलक्षणैः विशेषेण चिह्नितैः त्वत्पदैः अङ्किता यथा भाति, त्वयि द्वारकां गते तथा न शोभिष्यत इत्येकान्वयः। अथवा इयं भूः त्वत्पदैरङ्किता यथा भाति त्वयि वैकुण्ठं गते तथा न शोभिष्यते इति वा। न केवलं अस्माकमेव त्वद्गमनं दुःखकरं, एषां जनपदादीनामपीत्याह — **इम** इति। इमे जनपदादयः तव सन्निधानात् सुष्ठु ऋद्धाः त्वत्कारुण्यामृतदृष्ट्या वीक्षिता एधन्ते हि यस्मात् इत्येकान्वयः॥ ३९,४०॥

---

1. K,M हिरण्यादि ° 2. K,M add ब्रह्मणा

**रा॰ कृ॰** आसन्नमज्जनायाः नाव इव भूरिभारेण दुष्टजनभारेण सीदन्त्याः, अन्ये, भूरिभारेण उदधौ समुद्रे सीदन्त्याः भुवः भारावतरणाय आत्मभुवा ब्रह्मणा अर्थितः प्रार्थितस्सन् भवान् जातो हीति आहुरिति पूर्वेणान्वयः॥ ३४॥

केचन अस्मिन् भवे संसारे अविद्याकामकर्मभिः अज्ञानमूलककामकृतपुण्यपापरूपकर्मभिः क्लिश्यमानानां पीड्यमानानां श्रवणस्मरणार्हाणि तादृशसंसारक्लेशनिवर्तकश्रवणस्मरणयोग्यानि कर्माणीति शेषः। करिष्यन् भवान् जातः इत्याहुरिति पूर्वेणैवान्वयः।

पञ्चेन्द्रियपरितृप्तिसाधनानि अविद्याकामकर्माणि, यदनुष्ठानेन प्राणिनः यज्ञार्थकर्मभ्रष्टाः स्वार्थैकपरायणाः पापिनः भवन्ति। निष्कामकर्मरूपं यत् ज्ञानादिकमपि स्वर्गादिफलेच्छया पशुबलिप्राधान्येन च परिणामविरसमेव। ईदृशकर्मानुष्ठानविपदः लोकमुद्धर्तुं समर्थानि भगवता कृतानि श्रवणाद्यर्हाणि कर्माणीति भावः॥ ३५॥

ये जनाः अभीक्ष्णशः नैरन्तर्येण तवेहितं चरितं वक्तरि सति शृण्वन्ति गायन्ति रसाविभविन स्वयं गायन्ति। गृणन्ति श्रोतरि सति कीर्तयन्ति स्वयं स्मरन्ति। नन्दन्ति अन्यैः कीर्त्यमानं अभिनन्दन्ति। त एव जनाः अचिरेण शीघ्रमेव भवप्रवाहोपरमं जननमरणादिपरम्परानिवर्तकं तावकं त्वदीयं पदाम्बुजं पश्यन्ति।

भक्तियोगेनैव भौतिकशरीरधारिण्यपि भगवति दिव्यत्वमनुभवितुं शक्यते। तदैव जन्मकर्मबन्धच्छेदः। न खलु मार्गान्तरैः प्रत्ययविषयीभवति परमेश्वरस्य भौतिकी तनुः॥ ३६॥

राजसु दुर्योधनादिषु योजितांहसां कृतपापानां येषां अस्माकमिति शेषः। भवतः पदाम्बुजात् अन्यत् परायणं च शरणं च नैवास्ति। तादृशान् सुहृदः अनुजीविनः तवेति शेषः। नः अस्मान् स्वकृतेहित! स्वाश्रितेभ्यः कृतसर्वाभीष्ट! हे प्रभो! त्वं अद्य अपिस्वित् किमिति हेतोः जिहाससि हातुमिच्छसि?॥ ३७॥

हृषीकाणां इन्द्रियाणां ईशितुरिव प्राणभूतस्य जीवस्येव भवतः अदर्शनं दर्शनाभावः यर्हि यदा भवतीति शेषः। तदा नामरूपाभ्यां यदुभिश्च सह सहिताः पाण्डवाः वयं के? न केऽपि। व्यर्था इत्यर्थः॥ ३८॥

हे गदाधर! इयं अस्मत्पालनीया भूमिः स्वलक्षणविलक्षितैः स्वीयैः असाधारणैः वज्राङ्कुशादिभिः लक्षणैः विलक्षितैः चिह्नितैः त्वत्पदैः तव चरणविन्यासैः अङ्किता सती यथा इदानीं भाति तत्र तदा त्वयि निर्गते सति न शोभिष्यते॥ ३९॥

तव वीक्षितैः इमे जनपदाः सुपक्वौषधिवीरुधः सुष्ठु पक्काः ओषधयः व्रीह्यादयः वीरुधः द्राक्षादिलताश्च येषां ते तथोक्ताः स्वृद्धाः सुसमृद्धाः सन्तः एधन्ते वर्धन्ते। तथा वनाद्रिनद्युदन्वन्तः वनपर्वतनदीसमुद्राश्च वर्धन्ते॥ ४०॥

**अथ विश्वेश! विश्वात्मन्! विश्वमूर्ते! स्वकेषु मे।**
**स्नेहपाशमिमं छिन्धि दृढं पाण्डुषु वृष्णिषु॥ ४१॥**

**त्वयि मेऽनन्यविषया मतिर्मधुपतेऽसकृत्।**
**रतिमुद्वहतादद्धा गङ्गेवौघमुदन्वति॥ ४२॥**

**श्रीकृष्ण! कृष्णसख! वृष्ण्यृषभावनिध्रुग्राजन्यवंशदहनानपवर्गवीर्य!**
**गोविन्द! गोद्विजसुरार्तिहरावतार! योगेश्वराखिलगुरो! भगवन्नमस्ते॥ ४३॥**

**सूत उवाच**

**पृथयेत्थं कलपदैः परिणूताखिलोदयः।**
**मन्दं जहास वैकुण्ठो मोहयन्निव मायया॥ ४४॥**

तां बाढमित्युपामन्त्र्य प्रविश्य गजसाह्वयम् ।
स्त्रियश्च स्वपुरं यास्यन् प्रेम्णा राज्ञा निवारितः* ॥ ४५ ॥

व्यासाद्यैरीश्वरेहाज्ञैः कृष्णेनाद्भुतकर्मणा ।
प्रबोधितोपीतिहासैर्नाबुध्यत शुचार्पि[10]तः ॥ ४६ ॥

आह राजा धर्मसुतश्चिन्तयन् सुहृदां वधम् ।
प्राकृतेनात्मना विप्राः स्नेहमोहवशं गतः ॥ ४७ ॥

---

1. Af,Gf °तां तद्वत् 2. K,M वृष्णिवृषावनि° 3. H,V °द्रु° 4. K,M °नामरवन्द्य° 5. H,V °गी° 6. K,M °गी° 7. K,M मोहयन् योग°
8. W प्राविशत् * Here this chapter ends in K & M. 9. W °र्नान्वबुध्यत् 10. Af,Gf °र्दि°

**श्रीध॰** गमने पाण्डवानाम्[1]कुशलम् अगमने च यादवानां इत्युभयतः व्याकुलचित्ता सती तेषु स्नेहनिवृत्तिं प्रार्थयते **अथेति**। विश्वेश! इत्यादीनि सम्बोधनानि स्नेहपाशच्छेदे सामर्थ्यख्यापनाय। दृढं सं[2]ततम् ॥ ४१ ॥

ततः किं, अत आह **त्वयीति**। अनन्यविषया सती मे मतिः रतिं उद्वहतात्। अनवच्छिन्नां प्रीतिं करोत्वित्यर्थः। ओघं पूरम्। यथा गङ्गा प्रतिबन्धं न गणयति एवं मतिरपि विघ्नान् मां[3] गणयत्विति भावः ॥ ४२ ॥

एवं अभ्यर्थ्य पुनः प्रणमति **श्रीकृष्णेति**। हे श्रीकृष्ण! ते नमः। उपकारान् अनुस्मरन्ती[4] बहुधा सम्बोधयति। कृष्णसख! अर्जुनस्य सखे! वृष्णीनामृषभ! श्रेष्ठ! अवन्यै भूम्यै द्रुह्यन्ति ये राजन्याः तेषां वंशस्य दहन! एवमपि अनपवर्गवीर्य! अक्षीणप्रभाव! गोविन्द! प्राप्तकामधेन्वैश्वर्य! गोद्विजसुराणां आर्तिहरः अवतारः यस्य इति ॥ ४३ ॥

**पृथयेति**। कलानि मधुराणि पदानि येषु तैः वाक्यैः परिणूतः स्तु[5]तः अखिलः उदयः महिमा यस्य सः। **णु स्तुतौ** इत्यस्मात्। परिणुत इति वक्तव्ये दीर्घः छन्दोऽनुरोधेन[6]। मन्दं ईषत्। तस्य हास एव माया। वक्ष्यति हि "हासो जनोन्मादकरी च माया" (भाग. 2-1-31) इति ॥ ४४ ॥

**तामिति**। त्वयि मे अनन्यविषया मतिः इति यत् प्रार्थितं तद् बाढं इत्यङ्गीकृत्य रथस्थानात्[7] गजसाह्वयमागत्य पश्चात् तां च अन्याश्च सुभद्राप्रमुखाः स्त्रियः उपामन्त्र्य अनुज्ञाप्य स्वपुरं यास्यन् राज्ञा युधिष्ठिरेण प्रेम्णा अत्रैव कञ्चित्कालं निवसेति सम्प्रार्थ्य निवारितः ॥ ४५ ॥

अथ भीष्मनिर्याणोत्सवं वक्तुं उपोद्घातकथां प्रस्तौति **व्यासेति**। व्यासाद्यैः प्रबोधितोऽपि शुचा व्याप्तस्सन् नाबुध्यत विवेकं न प्राप। कुतः? ईश्वरेहायाः अज्ञैः स्वभक्तभीष्मनिर्याणमहोत्सवाय राज्ञा सह कुरुक्षेत्रं गन्तव्यं तत्र तन्मुखेनैवायं प्रबोधनीय इति ईश्वराभिप्रायः कार्यद्वयविधायकः तं अजानद्भिः इत्यर्थः। श्रीकृष्णेनापि प्रबोधितः नाबुध्यत। अत्र हेतुः अद्भुतकर्मणेति। यथा कुरुपाण्डवसन्धानार्थं गतोऽपि यथोचितमेव वदन्नपि विग्रहमेव दृढीकृतवान् एवमत्रापि प्रबोधयन् अबोधमेव दृढीचकार इत्यर्थः ॥ ४६ ॥

अबोधमेव प्रपञ्चयति — **आहेति** षड्भिः। प्राकृतेन अविवेकव्याप्तेन आत्मना चित्तेन हे विप्राः! ॥ ४७ ॥

---

1. H,V °माकुलम् 2. H,V सततम् 3. B,H,V न 4. H,V °ति; बहु° 5. H,V प्रकटीकृतः 6. H,V add इति ज्ञेयः 7. H,V add पश्चात् 8. H,V °हया

**वीर०** मदभिप्रायं जानास्येव इत्यभिप्रायेण सम्बोधयन्तीत्याह। अथशब्दः प्रश्नद्योतकः। हे विश्वेश! सर्वान्तःकरणनियन्तः! हे विश्वात्मन्! सर्वान्तरात्मन्! विश्वशरीरक! स्वकेषु पाण्डवेषु मे मयि विभक्तिव्यत्यय आर्षः। वृष्णिषु यादवेषु चेमं दृढं स्नेह एव पाशः तं छिन्धि[1]। यद्वा वृष्णिषु पाण्डवेषु च त्वत्सनेहपाशः[2] इत्यभिप्रायेण मे इत्युक्तम्॥ ४१ ॥

तदेवं[3] व्यञ्जयन्ती प्रार्थयते **त्वयीति**। हे मधुपते! यादवानामेव माधवा इति नामान्तरं तच्च नवमे स्फुटीभविष्यति। त्वय्यनन्यविषया त्वदितराविषया मम मतिः असकृत् अद्धा[4] उदन्वति समुद्रे गङ्गाजलौघमिव उद्वहतात्। यथा गङ्गा समुद्रमप्राप्यैव[5] स्वजलौघं वोढुं[6]मक्षमा समुद्रं प्राप्यैव स्वजलौघं वहति, एवं त्वां अप्राप्य रन्तुं अक्षमा मे मतिः त्वय्येव रतिं उद्वहतात् इत्यर्थः॥ ४२ ॥

स्वाभिप्रेतविज्ञप्त्यनुमता "अञ्जलिः परमा मुद्रा क्षिप्रं देवप्रसादनी" (भा. सं.) इत्युक्तविधाञ्जलिरेव उपायः, न ततोऽन्यः अस्तीत्यभिप्रायेण केवलमि[7]तरसाधारणगुणविशिष्टं सम्बोध्य नमस्करोति — **श्रीकृष्णेति**। हे श्रीकृष्ण! सर्वलोकसुखकर! कृष्णोऽर्जुनः तस्य सखा कृष्णसखः। तत्सम्बोधनम्। वृष्णीनामृषभ! श्रेष्ठ! अवनिद्रुहां अवन्युपलक्षितलोकोपद्रवकारिणां राजन्यानां वंशस्य दहनः[8] यथा वेणूनां दहनः अग्निः नाशकः तद्वद्राजन्यकुलनाशक[9]! अनपवर्गं अनन्तं वीर्यं यस्य हे गोविन्द! गवां द्विजानां सुराणां च आर्तिहरः अवतारः यस्य योगेश्वर! सूक्ष्मदर्शिन्! अखिलगुरो! हितोपदेष्टः! ॥ ४३ ॥

इत्थं कलानि मधुराणि पदानि वचांसि तैः पृथया कुन्त्या कर्त्र्या परिणूतः परिगीतः अखिलः उदयः महिमा यस्य स वैकुण्ठः श्रीकृष्णः मायया हासात्मिकया आश्चर्यशक्त्या लोकं मोहयन्निव मन्दं ईषत् जहास हसितवान् मन्दमिति क्रियाविशेषणम्॥ ४४ ॥

तावत् स्वपुरं यातुमुद्युक्तो भगवांस्तां पृथां अन्याः स्त्रीश्च बाढं ओं इत्युपामन्त्र्य अङ्गीकारपूर्वकं अनुज्ञाप्य प्रेम्णा राज्ञा युधिष्ठिरेण च निवारितः गजसाह्वयं हस्तिनापुरमेव पुनः प्राविशत्। प्रविश्येति पाठे प्रविश्य तत्रैव कञ्चित्कालं उवासेति शेषः॥ ४५ ॥

तदा ईश्वरेहाज्ञैः ईश्वरचेष्टाभिज्ञैः व्यासाद्यैः अद्भुतं कर्म चेष्टितं यस्य तेन श्रीकृष्णेन भगवता च इतिहासैः प्रतिबोधितोपि धर्मसुतः अत एव शुचार्पितः[10] [11]नाबुध्यत कालस्य गतिः ईदृशीति न विजज्ञे॥ ४६ ॥

किन्तु हे विप्राः! बन्धुषु स्नेहमोहयोः वशं प्राप्तः। अत एव प्राकृतेन देहे तदनुबन्ध्यादिप्रवणेन आत्मना मनसा सुहृदां वधमेव चिन्तयन् धर्मसुतः राजा युधिष्ठिरः अब्रवीत्॥ ४७ ॥

---

1. W adds अथ छिन्धि किम्? 2. W adds त्वयि तु मत्स्नेहपाशः 3. W °व 4. W adds तत्त्वतः 5. W adds न 6. W °ढुं क्षमा 7. W °मनितरसाधा° 8. W °नं 9. W °कं 10. W adds बन्धुनाशजशुचार्पितः 11. W नान्वबुध्यत्

**विज०** पाण्डवयादवेषु भागवतत्वेन स्नेह आवश्यक इति जानन्त्यपि पुत्रमित्रादिस्नेहः संसारहेतुत्वात् हेयः इति ज्ञापयितुं आह **अथेति**। अथ अनन्तरं एतदनुगृहाण। किं तदिति, हे विश्वेश! विश्वात्मन्! विश्वव्यापिन्! विश्वमूर्ते! अनन्तविग्रह! स्वकेषु स्वीयत्वेनाभिमतेषु पाण्डवेषु पाण्डवसम्बन्धिषु यादवेषु च मम गाढं पुत्रमित्रादिस्नेहपाशं छिन्धीत्यन्वयः। पुत्रादिस्नेह एव च्छेद्यो न तु भागवतस्नेहः, तस्य शास्त्रे कर्तव्यत्वेन विहितत्वात् इत्यभिप्रेत्य उक्तं इममिति ॥ ४१ ॥

न केवलं विषयविरक्त्या अलं किन्तु त्वयि अनपायिनीं रतिं त्वं वितरेत्याह **त्वयीति**। हे मधुपते! आनन्दनाथ! नान्यविषया रुद्रादिविषया अनन्यविषया ओघं जलप्रवाहवेगं उदन्वति समुद्रे ॥ ४२ ॥

स्तुतिमुपसंहरति — **श्रीकृष्णेति**। श्रिया अतसिकाकुसुमसदृश्या कृष्ण! नीलवर्ण! कृष्णसख! अर्जुनसख! वृष्णिवृषभ! वृष्णिकुलश्रेष्ठ! वृष्णिवत् मेघवत् भक्ताभिमतवर्षण! "वृष्णिः कुलविशेषेतु वर्षन्मेघेऽपि कथ्यते" इत्यभिधानम्। अवनिद्रुहां भूकण्टकानां राज्ञां वंशं अन्वयं दहतीति अवनिध्रुग्राजन्यवंशदहन! अवनिध्रुग्राजन्याख्यवेणु-दाहक! इति वा तस्य सम्बुद्धिः। अवनिध्रुग्राजन्यवंशदहन! अमरवन्द्यवीर्य! देवस्तुत्यपराक्रम! गोविन्द! वेदवाणीलब्धविभव! गवां द्विजानां सुराणां आर्तिहरः अवतारः यस्य स तथोक्तः, तस्य सम्बुद्धिः गोद्विजसुरार्तिहराव-तार! योगैश्वर्ययुक्ताखिलगुरो! यथायोग्यं ज्ञानोपदेशकर्तः! ते तुभ्यं नम इत्यन्वयः ॥ ४३ ॥

विकुण्ठा नाम काचिदृषिपत्नी। तत्पुत्रत्वेन जातः। वैकुण्ठपुरनाथोऽपि वैकुण्ठ इति वा। पृथया कुन्त्या कलपदैः स्त्रीत्वाव्यक्त[1]वर्णमधुरपदैः योगमायया स्वरूपशक्त्या ॥ ४४ ॥

यत्त्वदभीष्टं तत् तथास्त्विति बाढमिति तामुक्त्वा द्रौपदीपूर्वाः स्त्रियश्च द्वारकां गमिष्यामीत्युपामन्त्र्य गङ्गातीरात् गजसाह्वयं प्रविश्य स्वपुर द्वारकां यास्यन् गमिष्यन् प्रेम्णा सम्प्रति न गन्तव्यमिति राज्ञा निवारितः पाण्डववात्सल्यात् तत्रैवावात्सीदित्येकान्वयः ॥ ४५ ॥

स्वानन्दानुभवलक्षणो 'मोक्षः सकलपुरुषार्थोत्तमः। स च भगवदपरोक्षज्ञानलब्धविष्णुप्रसादलभ्य इत्ययमर्थः प्रतिपाद्यते अस्मिन्नध्याये। तत् ज्ञापयितुं उपोद्घातं रचयति **व्यासाद्यै** रित्यादिना। स्वराज्ये अभिषिक्तोऽपि ज्ञातितदनुबन्धिव-धात् पापबुद्ध्या राज्यानिच्छुः युधिष्ठिरो राजा नाबुध्यत अयं धर्म इति ज्ञानं नावैदित्यन्वयः कथम्भूतः? ईश्वरस्य ईहां सृष्ट्यादिलक्षणां चेष्टां जानन्तीति ईश्वरेहाज्ञाः तैः व्यासाद्यैः मुनिभिः अद्भुतपराक्रमेण कृष्णेन च इतिहासैः पुरावृत्तकथाविशेषैः प्रकर्षेण बोधितोऽपि ज्ञात्यादिमरणनिमित्तशुचा आविद्धः ॥ ४६ ॥

इत्थं बोधितोऽपि धर्मेऽधर्मबुद्धिः किं चकारेति तत्राह **आहेति**। हे विप्राः! शृणुतेति शेषः। प्राकृतेनात्मना धर्माधर्मविवेकविधुरेण मनसा तत्कारणमाह — स्नेहात् जातः मोहः भ्रमः स्नेहमोहः तस्य वशङ्गतः। तस्मात् तन्निमित्तमाह सुहृदां ज्ञातितदनुबन्धिना वधमहर्निशं चिन्तयन् धर्मसुतः इत्थं आह इत्येकान्वयः स्नेहमोहवशङ्गतः इत्यनेन धर्मात्मनः धर्मसुतस्य कथं धर्मे हरिविमखदुष्टतदनुबन्धिवधलक्षणे तु अधर्मत्वशङ्का अभूदित्येतत् दूरतोऽपास्तम् ॥ ४७ ॥

---

1. K,M °दव्यक्त° * Here ends the 8th Chapter in K & M

**रा॰ कृ॰** अथ अस्या दशायां हे विश्वेश! सवजगन्नियामक! विश्वात्मन्! सर्वान्तरात्मन्! विश्वमूर्ते! विश्वरूप! स्वकेषु स्वीयेषु पाण्डुषु पाण्डवेषु वृष्णिषु दृढं इमं मे स्नेहपाशं छिन्धि संहर।

स्वपुत्रानुभूतक्लेशस्मारकस्य स्नेहपाशस्य कृष्णचरणकमलध्यानान्तरायत्वेन तच्छेदं प्रार्थयते कुन्ती। इयं च कुन्तीप्रार्थना स्थिरजीवनसुखितसन्ततीनां अपि संसारसक्तचेतसां प्राणिनां भगवद्भक्तिसूचनैव॥ ४१॥

हे मधुपते! यादवविभो! अनन्यविषया अनन्यगामिनी गङ्गा उदन्वति सागरे ओघमिव प्रवाहमिव अनन्यविषया विषयान्तरसङ्कल्परहिता मे मतिः अद्धा साक्षात् त्वयि असकृत् निरन्तरं रतिं प्रीतिं उद्वहतात् उत्कर्षेण वर्धमानां करोतु।

यथा गङ्गा यत्र कुत्रापि सञ्चरिता अन्ते सागरेण सङ्गता भवति तथा ममापि मतिः त्वयि भगवति लग्ना भवत्विति कुन्त्याशयः॥ ४२॥

श्रीकृष्ण! कृष्णसख! अर्जुनमित्र! वृष्ण्यृषभ! वृष्णिश्रेष्ठ! अवनिध्रुग्राजन्यवंशदहन! भूमिद्रोहिराजवंशवैश्वानर! अनपवर्गवीर्य! अक्षीणप्रभाव! गोविन्द! सम्प्राप्तकामधेन्वैश्वर्य! गोद्विजसुरार्तिहरावतार! योगीश्वर! अखिलगुरो! भगवन्! ते नमः।

गोधान्यादिग्रामसहजसम्पदं कृत्रिमधनाधिकारबलेन विनाशयितुं कंसः प्रायतत। तस्मात् तस्य तदाश्रयात् जरासन्धशिशुपालादीनां अपि अवनीद्रोहित्वम्। ततश्च कृष्णः तेषां अवनीध्रुग्राजन्यानां संहाराय निमित्तमभूत्। भगवतः वंशदहनत्वरूपेण न तत्कृतकंसादिदुष्टवधः तज्जीवितसन्निवेशैः कार्यकारणसम्बन्धानुगत इति व्यज्यते। तथाहि वेणुवनप्रविष्टः अग्निः इतस्ततः विजृम्भमाणः सर्वमेव काननं दहति॥ ४३॥

पृथया कुन्त्या कलपदैः मधुरशब्दैः इत्थं पूर्वोक्तप्रकारेण परिणूताखिलोदयः संस्तुताखिलमहिमा वैकुण्ठः श्रीकृष्णः मायया मोहयन्निव मन्दं जहास हसितवान्।

अत्र भगवतो मन्दहासः तन्मायायाः जगन्मोहिन्याः सूचकः। माया लोकव्यवहारहेतुभूता परमेश्वरक्रीडासाधनी नैव दुष्टा। सा च स्वस्याः ईश्वरपरतन्त्रतां अभिजानतां अकिञ्चित्करा। अन्येषां तु बाधिका। यद्यपि इयं लोके बान्धव्यादिबन्धकारणम्। तथापि विना परस्परानुबन्धं जीवानां न भगवत्प्रेमतत्त्वास्वादावकाशः। ततश्च भगवान् वासुदेवः नानाविधानुभवमाधुर्यमहितस्वसर्वान्तर्यामित्वज्ञानप्रदानेन जीवान् अनुग्रहीतुं तेषु मायां विस्तारयति॥ ४४॥

स्वपुरं यास्यन् भगवान् वासुदेवः तां इत्थं कथयन्तीं कुन्तीं स्त्रियश्च अन्या महिलाश्च बाढं इत्युपामन्त्र्य अङ्गीकारपूर्वकं अनुज्ञाप्य गजसाह्वयं हस्तिनापुरं प्रविश्य राज्ञा धर्मराजेन प्रेम्णा निवारितः अभवदिति शेषः॥ ४५॥

ईश्वरेहाज्ञैः भगवदभिप्रायानभिज्ञैः व्यासाद्यैः महर्षिभिः अद्भुतकर्मणा कृष्णेन इतिहासैः पुरावृत्तैः प्रबोधितोऽपि धर्मजः शुचार्पितः शोकेन व्याप्तस्सन् नाबुध्यत विवेकं न प्राप ॥ ४६ ॥

हे विप्राः! प्राकृतेन अविवेकपूरितेन आत्मना मनसा सुहृदां मित्रबान्धवादीनां वधं चिन्तयन् स्नेहमोहवशं गतः तेषु सुहृत्सु स्नेहप्रयुक्तकिङ्कर्तव्यतामौढ्ययुक्तस्सन् धर्मसुतो राजा युधिष्ठिरः आह वक्ष्यमाणरीत्या जगाद ॥ ४७ ॥

**अहो मे पश्यताज्ञानं हृदि रूढं दुरात्मनः ।**
**पारक्यस्यैव देहस्य बह्व्यो मेऽक्षौहिणीर्हताः ॥ ४८ ॥**

**बालद्विजसुहृन्मित्रपितृभ्रातृगुरुद्रुहः ।**
**न मे स्यान्निरयान्मोक्षो ह्यपि वर्षायुतायुतैः ॥ ४९ ॥**

**नैनो राज्ञः प्रजाभर्तु[1]र्धर्मयुद्धे वधो द्विषाम् ।**
**इति मे न तु बोधाय कल्पते शा[2]सनं वचः ॥ ५० ॥**

**स्त्रीणां मद्धतबन्धूनां द्रोहो योऽसाविहो[3]त्थितः ।**
**कर्मभिर्गृ[4]हमेधीयैर्नाहं कल्पो[5] व्यपोहितुम् ॥ ५१ ॥**

**यथा पङ्केन प[6]ङ्काम्भः सुरया वा सुराकृतम् ।**
**भूतहत्यां तथै[7]वैकां न य[8]ज्ञैर्मार्ष्टुमर्हति ॥ ५२ ॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
प्रथमस्कन्धे कुन्तीस्तुतियुधिष्ठिरानुतापो नामाष्टमोऽध्यायः ॥ ८ ॥

---

1 K,M °धर्मो ; H,V °धर्मे 2. K,M शाश्वतं 3. K,M °ह्यन्वितः 4 K,M °र्हय° 5 H,V,W °ल्यो 6. AF,GF पङ्कोत्थं; W पङ्कजं; WF पङ्काङ्कं, पङ्काङ्कः 7 H,V °वैनां ; K,M °वैतां 8. H,K,M,V यज्ञो मा°

**श्रीध० अहो** इति। पारक्यस्यैव श्वशृगालाद्याहारस्यैव देहस्यार्थे। मे मया। अक्षौहिणीः अक्षौहिण्यः। [1]अक्षौहिणीप्रमाणन्तु व्यासेनोक्तम्— "अक्षौहिणी प्रसङ्ख्याता रथानां द्विजसत्तमाः। सङ्ख्यागणनतत्त्वज्ञैः सहस्राण्येकविंशतिः॥ शतान्युपरि चैवाष्टौ तथा भूयश्च सप्ततिः। गजानाञ्च प्रसङ्ख्यानमेतदेव प्रकीर्तितम्॥ ज्ञेयं शतसहस्रन्तु सहस्राणि नवैव तु। नराणामपि पञ्चाशच्छतानि त्रीणि चैव हि॥ पञ्च षष्टिसहस्राणि तथाश्वानां शतानि च। दशोत्तराणि षट्प्राहुः सङ्ख्यातत्त्वविदो जनाः॥ एतामक्षौहिणीं प्राहुः यथावदिह सङ्ख्यया" इति ॥ ४८ ॥

**बालेति।** सुहृदः सम्बन्धिनः। मित्राणि सखायः। पितरः [2]पितृव्याः ॥ ४९ ॥

स्मृत्याद्यनुशासनाद्धर्मयुद्धे न दोष इति चेत्तत्राह **नैनो राज्ञ** इति। द्विषां वधः एनः पापं न भवतीति यच्छासनं शिक्षारूपं वचः कुतः न[3] कल्पते? यतस्तद्वचः प्रजाभर्तुरेव। अयं भावः स्वप्रजानामन्यतो[4] बाधे प्रसक्ते तद्वधोऽनुज्ञातः। दुर्योधनेन तु प्रजायां पाल्यमानायां मया केवलं राज्यलोभेन हतत्वात् पापमेवेदमिति॥ ५०॥

**स्त्रीणामिति**। किञ्च, युद्धे पुंसां वधो भवतु नाम धर्मः, स्त्रीणां तु मया हता बन्धवः यासां तासां योऽसौ द्रोहः अनुद्दिष्टोप्युत्थितः[5] तं व्यपोहितुं अपाकर्तुं कल्पः[6] समर्थो नाहम्[7]। गृहमेधीयैः गृहाश्रमविहितैः॥ ५१॥

ननु "सर्वं पाप्मानं तरति तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उ चैनमेवं वेद" (तैत्ति. सं. 5-3-12) इति श्रुतेः पापमश्वमेधेन नश्येदेवेत्याशङ्क्याविवेकविजृम्भितं हेतुवादमाश्रित्य निराकरोति **यथेति**। यथा घन[8]पङ्केन पङ्काम्भो न मृज्यते, यथा वा सुरालेपं[9]वृतं अपावित्र्यं[10] बह्व्या सुरया न मृज्यते तथैव भूतहत्यामेकां[11] प्रमादतः जातां बुद्धिपूर्वहिंसा[12]प्रायैर्यज्ञैः[13] मार्ष्टुं शोधयितुं नार्हतीति॥ ५२॥

इति श्रीमद्भागवते प्रथमस्कन्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां
*व्याख्यायां अष्टमोऽध्यायः॥ ८॥*

---

1 H,V add आर्षत्वात् प्रथमार्थे द्वितीया। 2 H,V add अत्र 3. H,V नु 4. H,V °मप्यन्यतो 5. H,V °प्युपस्थितः 6. H,V °ल्पः 7 H,V न भवामि। 8 B,H,V omit घन° 9. A,B °श° 10. H,V अपवित्रत्वं 11. H,V °नां 12. B °पूर्वक° 13. H °प्रायो यज्ञो

**वीर०** तदेवाह यावत्समाप्ति। अहो दुरात्मनः मम हृदि रूढं अज्ञानं पश्यत। तदेव दर्शयति पारक्यस्य श्वशृगालादिभक्ष्यस्य देहस्यैव देहसुखार्थमेव मे मया बह्व्यः अक्षौहिणीः अक्षौहिण्यः हताः॥ ४८॥

बालादिद्रुहः बालादिहन्तुः मम वर्षायुतानां अयुतैरपि निरयान्मोक्षः न हि भवेत्॥ ४९॥

ननु "शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्" (भ. गी. 18-43) "धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते" (भ. गी. 2-31) इत्यादिशास्त्रैः धर्म्ययुद्धस्य धर्मत्वावबोधनात् त्वं[1] हतान् प्रति किं शोचसे इत्यत आह **नेति**। प्रजाभर्तुः प्रजापोषणाधिकृतस्य राज्ञः युद्धे द्विषां वधः धर्मादनपेतः नैनः न पापं, किन्तु धर्म एवेति यदनुशासनात्मकं वचः भगवद्वचः तन्मम बोधाय विवेकाय न कल्पते विवेकं जनयितुमसमर्थमित्यर्थः। धर्म्ययुद्धस्य[2] धर्मत्वेऽपि तदनुबन्धितया महतः पापस्यैव प्राप्तत्वात् इति भावः॥ ५०॥

ननु धर्मार्थं यतमानस्यावर्जनीयतया प्रसक्तमपि पापं वर्णाश्रमधर्मैरपोहितुं शक्यमेव। "धर्मेण पापमपनुदति" (म. ना. उ. 17-6) इति शास्त्रात् इत्यत आह **स्त्रीणामिति**। मया हता बन्धवः पतयः यासां तासां स्त्रीणां योऽसौ द्रोहः [3]पापात्मकः इह धर्मयुद्धे प्रवृत्ते मय्युत्थितः तमहं गृहमेधीयैः गृहाश्रमिणः कर्तव्यैः धर्मैः व्यपोहितुं न कल्पः[4] न प्रभुः। बहुकालानुभाव्यफलो विपुलो द्रोहः अल्पकालनिर्वर्त्यैः गृहमेधीयैः कर्मभिः नापोहितुं कल्पः[5] कर्मणा कर्मनिर्हारश्च अयुक्त इति भावः॥ ५१॥

एतदेव सदृष्टान्तमुपपादयति **यथेति**। पङ्काङ्गं सपङ्कमङ्गं पङ्केनैव यथा मार्ष्टुं शोधयितुं नार्हति लोकः, यथा च सुराकृतं सुराकृतदोषदूषितं भाण्डं पुनः सुरयैव मार्ष्टुं नार्हति तथा यज्ञैरेकामपि भूतहत्यां न मार्ष्टुमर्हति। पङ्काङ्क इति पाठे पङ्काङ्कितपादाद्यवयवः पुमान् पङ्केनैव आत्मानं मार्ष्टुं नार्हति तद्वदित्यर्थः। पङ्काङ्कमिति द्वितीयान्तपाठे पङ्कस्याङ्को यस्मिंस्तदङ्गं पङ्केन मार्ष्टुं नार्हति तद्वत् ॥ ५२ ॥

इति श्रीमद्भागवते प्रथमस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां अष्टमोऽध्यायः ॥ ८ ॥

---

1 W तत्र 2 B.W °र्म्य° 3 W adds तद्विषयको यो द्रोहः 4 W °ल्यः 5 W °ल्यः 6 W °कलित° 7 A.B यतः

**विज°** किमाहेति तत्राह **अहो** इति। मे हृदि रूढं अङ्कुरितं अज्ञानं तत्तु पश्यत। अहो आश्चर्यम्। कथं मे पारक्यस्य परकीयस्य श्वशृगालभोग्यस्य मे देहस्यार्थे बह्व्यः अक्षौहिणीः अक्षौहिण्यः हता एव यस्मात्तस्मात् इति शेषः ॥ ४८ ॥

तत्फलमाह **न मे** इति। मे निरयान्मोक्षः वर्षाणामयुतायुतैः न स्याद्धि। कथम्भूतस्य मे? बालान् सौभद्रादीन् द्विजान् द्रोणादीन् सुहृदः द्रुपदादीन् मित्राणि धनदानेनेष्टान् भटविशेषान् पितॄन् भूरिश्रवःप्रभृतीन् भ्रातॄन् दुर्योधनादीन् गुरून् भीष्मादीन् द्रोहितवान् हिंसितवानिति बालद्विजसुहृन्मित्रपितृभ्रातृगुरुध्रुक् तस्य ॥ ४९ ॥

प्रजाभर्तुः प्रजापालकस्य राज्ञः हरिद्विषां वधो नैनः पापं न भवति, प्रत्युत युद्धे वैरिणां राज्ञां वधो धर्मः धर्मसाधनं इति यत् "यः पदातिं हन्ति स भवति चातुर्मास्ययाजी" इत्यादि शाश्वतं नित्यं वेदवचः मे बोधाय भ्रमं निरस्य यथार्थज्ञानाय न कल्पत इत्यन्वयः। तुशब्द एवार्थे ॥ ५० ॥

कुतो न कल्पत इति तत्राह **स्त्रीणामिति**। मद्धतबन्धूनां मया हता बन्धवो यासां ताः तथा तासां मन्निमित्तहता बन्धवो यासामिति वा स्त्रीणाम्। योऽसौ द्रोहो हिंसालक्षणः वैधव्यप्राप्त्या मय्यन्वितः सम्पृक्तः तमहं हयमेधीयैः अश्वमेधसम्बन्धिभिः कर्मभिः व्यपोहितुं न कल्पो न समर्थ इत्येकान्वयः ॥ ५१ ॥

तत्र दृष्टान्तमाह — **यथेति**। पङ्काम्भः कर्दमजलं पङ्केन कर्दमेन युक्तं द्रव्यं शोधयितुं यथा न शक्नोति, यथा सुरा सुरया मिश्रीकृतं दोषं व्यपोह्य, शुद्धं कर्तुं न शक्ता स्वयमशुद्धत्वात्, तथैव यज्ञः हिंसादिरूपत्वात् एतां भूतहत्यां मार्ष्टुं मार्जयितुं नार्हतीत्येकान्वयः। ज्ञानपक्षमाश्रित्य युधिष्ठिरेण यज्ञः निन्दितः न तु अकर्तृकत्वबुद्ध्या, "ब्रह्मार्पणं ब्रह्महविः" (भ. गी. 4-24) इत्यादौ ब्रह्मार्पणबुद्ध्या कर्तव्यत्वेन विहितत्वात्, "कर्मणा ज्ञानमातनोति" इत्यादेश्च ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां
टीकायां प्रथमस्कन्धे अष्टमोऽध्यायः ॥ ८ ॥

रा॰ कृ॰ अहो दुरात्मनः मे हृदि रूढं अज्ञानं पश्यत, यत् पारक्यस्य परकीयस्य श्वसृगालादिभक्ष्यस्येत्यर्थः। देहस्य कृते बह्व्यः अक्षौहिणीः अक्षौहिण्यः मे मया हता निहताः॥ ४८॥

बालद्विजसुहृन्मित्रपितृभ्रातृगुरुद्रुहः बालादीनां घातुकस्य मे मम वर्षायुतायुतैरपि निरयात् नरकात् मोक्षः निस्तारः न स्यात्॥ ४९॥

धर्मयुद्धे द्विषां वधः राज्ञः एनः पापं न भवतीति यत् शासनं शिक्षारूपं वचः, तन्मे बोधाय विवेकाय न कल्पते समर्थं न भवति। कुत इति चेत् तद्वचः प्रजाभर्तुरेव प्रजाभरणशीलस्यैव विषये सार्थकं भवतीति शेषः॥ ५०॥

मद्धतबन्धूनां मया हता बन्धवः यासां तासां स्त्रीणां योसौ द्रोहः इह उत्थितः अनुद्दिष्टोप्युपस्थितः तं तद्द्रोहजन्यं कलुषं गृहमेधीयैः गृहस्थाश्रमविहितैः हिंसाप्रायैः कर्मभिः व्यपोहितुं दूरीकर्तुं अहं न कल्पः न समर्थः॥ ५१॥

यथा पङ्केन पङ्काम्भः कर्दमजलं न मृज्यते, सुरया वा सुराकृतं अपवित्रत्वं न मृज्यते तथैव एनां भूतहत्यां यज्ञैः हिंसामयैः मार्ष्टुं शोधयितुं न कोऽप्यर्हति योग्यो भवति।

गीतोपदेशात् प्राक् अर्जुनेन यः विषादः अनुभूतः सोऽयं मोहजातः अधुना धर्मजेनाप्यनुभूयते। उक्तं च भगवता "प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः। अहङ्कारविमूढात्मा कर्ताहमिति मन्यते।" (भ. गी. 3-27) इति॥ ५२॥

इति श्रीमद्भागवते प्रथमस्कन्धे
श्रीराधाकृष्णप्रणीतायां सुधीसुधायां व्याख्यायां
अष्टमोऽध्यायः॥ ८॥



# नवमोऽध्यायः

## सूत उवाच

इति भीतः प्रजाद्रोहात् सर्वधर्मविवित्सया[1] ।
ततो विनशनं[2] प्रागाद्[3]यत्र देवव्रतोऽपतत् ॥ १ ॥

तदा ते[4] भ्रातरस्सर्वे सदश्वैस्स्वर्णभूषितैः ।
अन्वगच्छन् रथैर्विप्रा व्यासधौम्यादयस्तथा ॥ २ ॥

भगवानपि विप्रर्षे! रथेन सधनञ्जयः ।
स तैर्व्यरोचत नृपः कुबेर इव गुह्यकैः ॥ ३ ॥

दृष्ट्वा निपतितं भूमौ दिवश्च्युतमिवामरम् ।
प्रणेमुः पाण्डवा भीष्मं सानुगास्सह[5] चक्रिणा ॥ ४ ॥

तत्र ब्रह्मर्षयस्सर्वे देवर्षयश्च[6] सत्तम[7]!
राजर्षयश्च तत्रासन् द्रष्टुं भरतपुङ्गवम् ॥ ५ ॥

पर्वतो नारदो धौम्यो भगवान् बादरायणः ।
बृहदश्वो भरद्वाजस्सशिष्यो रेणुकासुतः ॥ ६ ॥

वसिष्ठ इन्द्रप्रमदस्त्रितो गृत्समदो[8]ऽसितः ।
कक्षीवान् गौतमोऽत्रिश्च कौशिकोऽथ सुदर्शनः ॥ ७ ॥

अन्ये च मुनयो ब्रह्मन्! ब्रह्मरातादयोऽमलाः ।
शिष्यैरुपेता आजग्मुः कश्यपाङ्गिरसादयः[9] ॥ ८ ॥

---

1. W °बुभुत्सया 2 H.K.M.V.W विशसनं 3. K.M.W °या° 4 H.K.M.V तद्° 5. W °जाः 6 H.V तथा देवर्षिसत्तमाः 7 B °माः 8 H.V °त्स्न° 9. H.V का°

## श्रीधरस्वामिविरचिता भावार्थदीपिका

युधिष्ठिराय भीष्मेण सर्वधर्मनिरूपणम् ।
कृष्णस्तुतिश्च[1] मुक्तिश्च नवमे तस्य वर्ण्यते ।'

यदर्थं तस्य विवेकः श्रीकृष्णेन संवर्धितः तद्दर्शयति — इति इति । सर्वेषां धर्माणां विवित्सया वेदितुमिच्छया[2] विशसनं[3] कुरुक्षेत्रं देवव्रतो भीष्मः ॥ १ ॥

**तदेति**। सन्तः श्रेष्ठाः अश्वाः येषु तैः रथैः ॥ २, ३ ॥

**दृष्ट्वेति**। सानुगाः परिवारसहिताः ॥ ४ ॥

**तत्रेति**। तत्र तदा तत्रासन्। तत्क्षणं एव आगता इत्यर्थः। भरतपुङ्गवं भीष्मम्॥ ५ ॥

**पर्वत** इति। रेणुकासुतः परशुरामः ॥ ६ ॥

**वशिष्ठ** इति। कौशिको विश्वामित्रः ॥ ७ ॥

**अन्य** इति। ब्रह्मरातः शुकः आङ्गिरसो बृहस्पतिः ॥ ८ ॥

---

1 H.V श्रीकृष्णस्य स्तुतिर्मुक्तिः 2 H.V वेत्तु° 3 A.B विनशनं 4 A.B °णमेव

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

ततः इतीत्थं प्रजाद्रोहाद्भीतो युधिष्ठिरः स्वंर्म्यान् धर्मान् बोद्धुमिच्छया विशसनं विशसिता हिंसिता यत्र बन्धवः तद्विशसनं कुरुक्षेत्रं, प्रायात् प्रतस्थे। विशसनं विशिनष्टि यत्र देवव्रतो भीष्मोऽपतत् भीष्मात् धर्मान् बोद्धुं प्रययावित्यर्थः ॥ १ ॥

तदा तस्य युधिष्ठिरस्य भ्रातरो भीमादयस्सर्वे सन्तोऽश्वा येषां तैः, स्वर्णभूषितै रथैरन्वगच्छन्। तथा हे विप्राः! व्यासधौम्यादयश्च अन्वगच्छन्॥ २ ॥

हे विप्रर्षे! सधनञ्जयः सार्जुनो भगवान् श्रीकृष्णोऽपि रथेनान्वगच्छत् तदा स नृपो युधिष्ठिरो व्यरोचत यथा गुह्यकैर्यक्षैः कुबेरस्तद्वत् ॥ ३ ॥

दिवः स्वर्गात् च्युतममरमिव स्थितं भूमौ निपतितं भीष्मं दृष्ट्वा सानुगाः सभृत्याः पाण्डवाः चक्रिणा श्रीकृष्णेन सह प्रणेमुः ॥ ४ ॥

तत्र भरतपुङ्गवं भरतवंशश्रेष्ठं देवर्षिप्रभृतय आसन् आगत्य स्थितवन्तः ॥ ५ ॥

तानेव कांश्चिदाह — **पर्वत** इति द्वाभ्याम्। रेणुकासुतो भार्गवो रामः। कौशिको विश्वामित्रः ॥ ६, ७ ॥

हे ब्रह्मन्! अन्ये च, ब्रह्मरातः आदिर्येषां ते अमला मुनयः शिष्यैरुपेताः कश्यपादयश्च आजग्मुः ॥ ८ ॥

---

1 A.B स्वाज्ञातधर्मान् 2 A.B °श्य°

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

**प्रजाद्रोहात्** इति। भीतो युधिष्ठिरः सर्वधर्मज्ञानेच्छया ततो हस्तिनपुरात् विशसनं युद्धस्थानं कुरुक्षेत्रं प्रायात्, तत्रापि यत्र देवव्रतो भीष्मोऽपतत् इत्येकान्वयः ॥ १ ॥

तस्य युधिष्ठिरस्य भ्रातरो भीमादयः सन्तः प्रशस्ता अश्वा येषां ते तथा तैः। तथा व्यासादयो विप्राः[1] **अन्वगच्छन्नित्यन्वयः** ॥ २ ॥

सधनञ्जयः सार्जुनो गुह्यकैर्यक्षैः कुबेरो वैश्रवणः। व्यरोचत[2] अराजत। रुच दीप्तौ ॥ ३ ॥

सह चक्रिणा कृष्णेन सहिताः दिवः स्वर्गात् च्युतं समागतं देवमिव द्योतमानम् ॥ ४ ॥

तत्र तदा सर्वे देवर्षयो नारदादयो ब्रह्मर्षयो व्यासादयः राजर्षयो विश्वामित्रादयः। भरतपुङ्गवं भीष्मं द्रष्टुमायाता आसन्नित्यन्वयः ॥ ५ ॥

तेषां नामान्याह — **पर्वत** इत्यादिना। रेणुकासुतः श्रीपरशुरामः ॥ ६ ॥

कौशिको विश्वामित्रः ॥ ७ ॥

ब्रह्मरातः शुकः, पर्वताद्या आङ्गिरसान्ता मुनयः आजग्मुरित्यन्वयः ॥ ८ ॥

---

1 A.B द्विजाः 2 A.B स्व°

## श्रीराधाकृष्णप्रणीता सुधीसुधा

इति पूर्वोक्तप्रकारेण प्रजाद्रोहात् द्रोहजनितात् पापादित्यर्थः। भीतः युधिष्ठिरः सर्वधर्मविवित्सया सर्वेषां धर्माणां वेदितुमिच्छया, ततो हस्तिनापुरात् यत्र देवव्रतो भीष्मः अपतत् तत् विनशनम्, विशसनमित्यपि पाठः। कुरुक्षेत्रं प्रागादगच्छत् ॥ १ ॥

तदा **तद्भ्रातरस्तस्य** युधिष्ठिरस्य भ्रातरस्सर्वे **सदश्वैः** योग्याश्वैः स्वर्णभूषितैः **सुवर्णालङ्कृतैः** रथैः **अन्वगच्छन्** युधिष्ठिरमिति शेषः। तथा व्यासधौम्यादयः विप्रा **अन्वगच्छन्** ॥ २ ॥

हे विप्रर्षे! भगवानपि श्रीकृष्णोऽपि सधनञ्जयः अर्जुनसहितः रथेन धर्मजम् **अन्वगच्छदिति शेषः**। स नृपः युधिष्ठिरः तैः भ्रात्रादिभिस्सहितः गुह्यकैः यक्षैस्सहितः कुबेर इव व्यरोचत व्यराजत ॥ ३ ॥

भूमौ निपतितमत एव दिवः स्वर्गात् च्युतं निपतितममरमिव स्थितं भीष्मं दृष्ट्वा सानुगाः सानुचराः पाण्डवाः चक्रिणा श्रीकृष्णेन सह प्रणेमुः प्रणामं चक्रुः ॥ ४ ॥

तत्र तदा सर्वे ब्रह्मर्षयः भृग्वादयः, तथा देवर्षिसत्तमाः नारदादयः, राजर्षयश्च भरतपुङ्गवं भरतकुलश्रेष्ठं भीष्मं, द्रष्टुं तत्र आसन् समागता इत्यर्थः ॥ ५ ॥

हे! ब्रह्मन्! पर्वतः, नारदः, धौम्यः भगवान् बादरायणो व्यासः, बृहदश्वः, भरद्वाजः सशिष्यः रेणुकासुतः परशुरामः, वशिष्ठः, **इन्द्रप्रमदः**, त्रितः, **गृत्समदः**, **असितः**, कक्षीवान्, गौतमः, किञ्च अत्रिः कौशिकः अथ सुदर्शनः अपि चान्ये ब्रह्मरातादयः **अमला** मुनयः शिष्यैरुपेताः। काश्यपाङ्गिरसादयः तत्राऽऽजग्मुरागताः ॥ ६, ७, ८ ॥

तान् समेतान् महाभागा[1]नुपलभ्य वसूत्तमः ।
पूजयामास धर्मज्ञो देशकालविभागवित् ॥ ९ ॥

कृष्णं च तत्प्रभावज्ञ आसीनं जगदीश्वरम् ।
हृदिस्थं पूजयामास माययोपात्तविग्रहम् ॥ १० ॥

पाण्डुपुत्रानुपासीनान् प्रश्रयप्रेमसङ्ग[2]तान् ।
अभ्या[3]चष्टानुरागास्रै[4]रन्धीभूतेन चक्षुषा ॥ ११ ॥

भीष्म उवाच

अहो कष्टमहोऽन्याय्यं यद्यूयं धर्मनन्दना[5]ः ।
जीवितुं नार्हथ क्लि[6]ष्टं विप्रधर्माच्युताश्रयाः ॥ १२ ॥

संस्थितेऽ[7]तिरथे पाण्डौ पृथा बालप्रजा वधूः ।
युष्मत्कृते ब[8]हून् क्लेशान् प्राप्ता तोकवती मु[9]हुः ॥ १३ ॥

सर्वं कालकृतं मन्ये भवतां च यदप्रियम् ।
सपा[10]लो यद्वशे लोको वायोरिव घनावलिः ॥ १४ ॥

यत्र धर्मसुतो राजा गदापाणिर्वृकोदरः ।
कृष्णोऽस्त्री गाण्डिवं[11] चापं सुहृत्कृष्णस्ततो विपत् ॥ १५ ॥

नह्यस्य कर्हिचिद्राजन्! पुमान् वेद वि[12]धित्सितम् ।
यद्विजिज्ञासया युक्ता मुह्य[13]न्ति कवयोऽपि हि ॥ १६ ॥

---

1 K.M °ग उ° 2 K.M °न्न° 3 H.V °भ्य° 4 I °श्रै° 5 H.K.M.V.W °न! 6 AF GF कृच्छ्रं 7 AF.GF विरथे 8. K,M बहुक्ले° 9 K.M यथा 10 H.K.M.V.W का° 11 H.V °वश्चापः 12 B चिकित्सितम् 13 N °न्ते

**श्रीध॰ तानिति**। वसूत्तमो भीष्मः देशकालविभागवित् इत्युत्थातुमशक्यत्वात् शयान एव मनसा वाचा च **पूज**यामासेत्यभिप्रायः ॥ ९ ॥

**कृष्ण** मिति। हृदिस्थं सन्तं पुरतश्चासीनं पूजयामास ॥ १० ॥

**पाण्डुपुत्रानिति**। उपासीनान् समीप उपविष्टान् प्रश्रयो विनयः, प्रेम स्नेहः, ताभ्यां सङ्गतान् उपप[2]न्नान् **पाठान्तरे** ताभ्यां सन्नतान् अवनतान् अभ्य[3]चष्ट अभ्यभाषत। अनुरागास्रैः स्नेहाश्रुभिः, अन्धीभूतेन चक्षुषा उपलक्षितो **ददर्शेति** वा ॥ ११ ॥

अभिभाषणमाह — **अहो** इत्येकादशभिः। हे धर्मनन्दन! क्लिष्टं यथा भवत्येवं जीवितुं नार्हथ यूयमिति यदेतदहो कष्टं जुगुप्सितम्। अहो अन्याय्यं चैतत्। यतो यूयं विप्राः धर्मोऽच्युतश्चाश्रयो येषां ते॥ १२॥

**किञ्च, संस्थितेति**। पाण्डौ संस्थिते मृते बालाः प्रजाः पुत्राः यस्यास्सा। वधूश्चेति दैन्यं दर्शितम्। तोकान्यपत्यानि तद्वती। अपत्यैस्सह क्लेशान् प्राप्तेत्यर्थः॥ १३॥

कालकृतत्वेन शोकं वारयति — **सर्व**मिति द्वाभ्याम्। भवतामपि। यद्वशे यस्य वंशे[5] वर्तते॥ १४॥

अहो दुर्घटघटनापटुः काल इत्याह — **यत्रेति**। कृष्णोऽर्जुनः। अस्त्री **धन्वी**। ततः तत्रापि विपत्। **पुण्यशारीरबलास्त्रैपुण्यशस्त्रदै[6]वसम्पत्तावपि** दुर्वारा विपदित्यर्थः॥ १५॥

ननु श्रीकृष्णं कथं कालोऽतिक्रमेत् इत्यपेक्षायामाह — **नहीति**। न ह्यस्य श्रीकृष्णस्य इत्यङ्गुल्या निर्दि[7]शति। विधित्सितं कर्तुमिष्टम्। यत् यस्य विधित्सितस्य विजिज्ञासया॥ १६॥

---

1. B,H,V omit देश ..... प्रायः 2 A,B °स° 3. A,B °भ्या° 4. A,B °नाः 5 A,B वशवर्ती॥ १४॥ 6 A °देव°; B °देवता°
7. B दर्शयति

**वीर०** तान् ब्रह्मर्षिप्रभृतीन् समेतान् समुदितानुपलभ्य अभिज्ञाय धर्मज्ञो देशकालाभिज्ञश्च वसूत्तमो भीष्मः यथार्हं पूजयामास पूर्वजन्मनि वसुत्वात् वसूत्तम इत्युक्तम्॥ ९॥

तथा कृष्णं च तत्प्रभावाभिज्ञो हृदिस्थं पूजयामास ध्यानेन हृदिस्थं कृत्वा मानसैरुपचारैः पूजयामासेत्यर्थः। कथम्भूतम्? आसीनमग्रत उपविष्टं जगदीश्वरं मायया सङ्कल्परूपज्ञानेन उपात्तो विग्रहो यस्य तम्॥ १०॥

तत्र उपासीनान् उपविष्टान् अनुवर्तमानान् प्रश्रयेण विनयेन प्रेम्णा च सङ्गतान् पाण्डुपुत्रान् अनुरागास्त्रैः अनुरागजैरश्रुबिन्दुभिः अन्धीभूतेन चक्षुषा अभ्याचष्ट ददर्श, उवाच च। चक्षेरुभयार्थकत्वात् अत्र तन्त्रेणोभयमपि विवक्षितम्॥ ११॥

तत्रोक्तिमाह — **अहो** इति द्वादशभिः। हे धर्मनन्दन! अहो इदं कष्टं जीवनमन्याय्यमिति च्छेदः। सन्धिरार्षः। "ओत्" (अष्टा. 1-1-15) इति प्रकृतिभावौ[2]चित्यात्। यद्यस्माद्विप्रा धर्मोऽच्युतो भगवांश्चाश्रयो येषां ते। विप्राद्यनुवर्तिनो यूयं क्लिष्टं कृच्छ्रं यथा तथा जीवितुं नार्हथ॥ १२॥

अतिरथे पाण्डौ संस्थिते प्रेते सति बालाः प्रजाः पुत्राः यस्यास्सा वधूश्च पृथा कुन्ती तोकवती अपत्यवती सत्यपि युष्मदर्थे बहून् मुहुर्मुहुः क्लेशान् प्राप्ता हि॥ १३॥

भवतां यदप्रियं दुःखमभूत् एतत्सर्वं कालकृतं कालोद्बुद्धदैवकृतं मन्ये। कोऽसौ कालः, यत्कृतं मदप्रियम् तत्राऽऽह — वायोर्वशे मेघपङ्क्तिरिव यस्य वशे सर्वो लोको वर्तते स एव कालः॥ १४॥

अत्यन्तासम्भावितमिदमभवदिति विस्मयते — यत्रेति। यत्र धर्मसुतादयः तत्र विपदिति तत् चित्रमित्यर्थः। आद्यः कृष्णशब्दोऽर्जुनपरः, द्वितीयस्तु भगवत्परः; तद्विशेषणं सुहृदिति। धर्मसुतादीनां सुहृत् स्त्रीशब्देन कृष्णा स्त्री द्रौपदी विवक्षिता। धर्मसुतादीनामन्यतम एव सर्वविपक्षक्षपणक्षमे सति सम्भूय सर्वेषामवस्थानेऽपि विपदभवदिति **एतदतिचित्रमिति, इदं सर्वं** कालकृतमेवेति **भावः**। सुहृत् कृष्ण इत्यनेन सुहृदपि कृष्णः कालमेव **अन्ववर्ततेति** सूचितम्। "द्रव्यं **कर्म च कालश्च** स्वभावो जीव एव च। यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया॥" (भाग. 2-10-12) इत्युक्तविधस्य तत्रापि भवतामतीव सुहृदः कृष्णस्य **विपन्निमित्तकर्मोद्बोधककालानुवर्तित्वादिवोपेक्षा** सङ्गता नान्यथेत्याशयः॥ १५॥

**ननु यद्वशे लोकः स कालोऽपि श्रीकृष्णायत्तसत्तादिमांश्चेत्तर्हि कालानुवृत्त्या किमस्य चिकीर्षितमित्यत्राह — नेति। हे राजन्! अस्य कृष्णस्य विधित्सितं चिकीर्षितं न कोऽपि पुमान् वेद। अवेद्यत्वज्ञापनाय विधित्सितं विशिनष्टि, यस्य विधित्सितस्य जिज्ञासया युक्ताः सहिताः विधित्सितं ज्ञातुं प्रवृत्ताः कवयो ब्रह्मादयोऽपि मुह्यन्ति॥ १६॥**

---

1 A.B ह्यभिसंपू° 2. A.B °वत्वात् 3. A.B °श° 4. A.B omit तत् 5. W सकलोऽपि

**विज०** महाभागो **वसूत्तमो** भीष्मः समेतान् सङ्गतान् नृपादीनुपलक्ष्य दृष्ट्वा मनसा प्रतिगम्य वा पूजयामास। **कथम्भूतः**? देशकालविभागवित् देशः कुरुक्षेत्रं कालः शरतल्पशयनलक्षणः तयोर्विभागमौचित्यं वेत्तीति **प्रत्युत्थानादिवन्दनादिपूजायाम् अशक्तत्वात्** मानसीं वाचिकीं आञ्जलिकीं वा पूजां कृतवानित्यर्थः। अन्यत्र तद्देशकालविभागं जानातीति **धर्मज्ञः, आपत्सम्पद्धर्मौ जानातीति** धर्मज्ञः। धर्मशब्दवाच्यं भगवन्तं जानातीति वा धर्मज्ञः॥ ९॥

कृष्णं च पूजयामासेत्येकान्वयः। **कथम्भूतः**? तस्य कृष्णस्य प्रभावं **सामर्थ्यं** जानातीति तत्प्रभावज्ञः। **कथम्भूतम्**? तत्रासीनं जगत ईश्वरं मायया स्वेच्छया पितृत्वेनाङ्गीकृतवसुदेवशरीरं हृदि मनसि स्थितं ध्यानलक्षणोपासनया शरीरमध्ये पुण्डरीककर्णिकायां दीपवद्दीप्यमानं वा॥ १०॥

प्रश्रयगुणेन **प्रेमगुणेन सम्यक्** तान् समीपे निषण्णान् पाण्डोः पुत्रान् तेषु अनुरागयुक्तैरस्रैः बाष्पैः अन्धीभूतेन चक्षुषा युक्तः "इत्थम्भूतलक्षणे तृतीया" (अष्टा. 2-3-27) इति सूत्रात्। अभ्याचष्ट आह आभिमुख्येन **अपश्यदित्यन्वयः॥ ११॥**

भो! **धर्मनन्दन**! युधिष्ठिर! यूयं क्लिष्टं क्लेशयुक्ततया जीवितुं **नार्हथ**। **विप्रादिष्वेकोऽपि** सुखजीवनाय **अलं किमु बहुत्वमित्यभिप्रायेणोक्तं विप्रधर्माच्युताश्रया इति** यत् क्लिष्टं जीवथ, तत् कष्टमन्याय्यमहो **आश्चर्यादप्याश्चर्यम्। 'अहोऽन्याय्यमि' ति प्रगृह्यसंज्ञाभङ्गः।** लोकदृष्टिमपेक्ष्यैवोक्तो न तु पाण्डवानां दुःखमस्तीति तेषां भूभारावतारणाय अवतीर्णानाम् असुरजननिधनेन **वनवासादिष्वपि** नित्यसुखित्वादिति विशेषद्योतनार्थः। धर्मस्य नन्दनो, धर्मं नन्दयतीति वा, धर्म एव नन्दनो **यस्य स** तथेति वा, धर्मेण सुखक्रीडा यस्य स तथेति वा, तस्मात् नन्दनं सुखनन्दनं यस्य स तथेति वा॥ १२॥

अतिरथे पाण्डौ संस्थिते स्वर्गं गतवति सति अतोकवती पुत्ररहिता यथा बहुक्लेशवती भवति तथा बालप्रजा युष्मन्माता पृथा पुत्रवत्यपि युष्मत्कृते युष्मत्पोषणपालनाद्यर्थात् बहुक्लेशान् प्राप्ता। पुत्रबाहुल्येन मतुप्प्रत्ययः। पुत्रवती पुत्रपोषणादावतिक्लेशं प्राप्नोति यथा तथेत्यन्वयदृष्टान्तो। वा इत्येकान्वयः॥ १३॥

एवंविधयुष्मदप्रिये भवदारब्धकर्म नियामको हरिरेव हेतुरित्यभिप्रेत्य आह — **सर्वमिति।** भवतां यदप्रियं दुःखादि तत्सर्वं युष्मत्प्रारब्धकर्म नियामककालाख्य हरिकृतं मन्ये; वायोर्वशंगता घनावलिरिव जडाजडलोको यस्य भगवतो वशे वर्तते स नारायणः सर्वगुणपूर्णत्वात् काल इत्युच्यत इत्येकान्वयः॥ १४॥

अन्यथानुपपत्तितोऽप्ययं हेतुः सिद्ध्यतीत्याह — **यत्रे** ति। यत्र राजा रञ्जको धर्मस्य सुतो यत्र च तस्य राज्ञः कनिष्ठः **क्षितिभारायितदितिसुतशोणितदिग्धां** गदां पाणौ **बिभ्रत्** भक्त्या वशीकृतपरब्रह्मा वृकोदरः तथा यत्र च इन्द्रावतारः कृष्णोऽर्जुनोऽस्त्री द्रोणादुपात्तास्त्रग्रामः तस्य च करे रिपूणां पूयशोणितवमनकारि गाण्डीवाख्यं धनुर्यत्र चैषां सर्वसुपर्वाधिराजो राजपक्षः अनन्तबलवीर्याद्यनन्तगुणार्णवः श्रीमान् वासुदेवो वसुदेवपुत्रः कृष्णः सुहृत् अनिमित्तबन्धुः ततस्तत्र विपत् तेषां प्रारब्धकर्माभावे विपत् कुतः **स्यात्, अस्ति** च तस्मादित्येकान्वयः॥ १५॥

सुहृदस्तस्य विपत्करत्वं कथमिति तत्राऽऽह — **न हीति।** अपरिच्छिन्नत्वाद्यस्य स्वरूपजिज्ञासया युक्ताः कवयोऽपि मुह्यन्ति अयमित्थंभूत इति निर्देष्टुं न जानन्ति। हे राजन्! तस्यास्य विधित्सितं कर्तुमिष्टं कश्चिदपि पुमान् कदाचिन्न वेद। हि यस्मात्तस्मात्सर्वेषां स्वकृतादृष्टानुसारिफलदातुरस्य **भवत्सुहृत्त्वेऽपि प्रारब्धकर्मानुकूल्येन** विपत्करत्वं युक्तमित्येकान्वयः॥ १६॥

---

1. K.M add तथाऽपि 2. K.M °ज्ञाभावः।

**रा० कृ०** धर्मज्ञः देशकालविभागवित् वसूत्तमः भीष्मः महाभागान् महात्मनः तान् मुनीन् समेतान् समागतानुपलभ्य अभिज्ञाय पूजयामास॥ ९॥

**तत्प्रभावज्ञः** तस्य कृष्णस्य प्रभावज्ञः भीष्मः आसीनं पुरतः उपविष्टं हृदिस्थं मायया उपात्तविग्रहं स्वीकृतमानुषदेहं जगदीश्वरं कृष्णं च पूजयामास॥ १०॥

अनुरागास्रैः प्रेमाश्रुभिः अन्धीभूतेन चक्षुषा उपलक्षितः भीष्मः उपासीनान् स्वसमीपे उपविष्टान् प्रश्रयप्रेमसङ्गतान् प्रश्रयप्रेमभ्यां विनयस्नेहाभ्यां उपपन्नान् पाण्डुपुत्रान् अभ्यचष्ट अभ्यभाषत॥ ११॥

हे धर्मनन्दन! युधिष्ठिर! विप्रधर्माच्युताश्रयाः विप्राः धर्मः अच्युतः एते सर्वे आश्रयः येषां ते यूयं यद्यतः क्लिष्टं यथा तथा जीवितुं नार्हथ, तथाऽपि युष्माकं जीवनमहो कष्टम्! अहोऽन्याय्यम्॥ १२॥

अतिरथे महारथसहस्रजेतरि पाण्डौ संस्थिते मृते सति बालप्रजा बालपुत्रा वधूः पृथा कुन्ती तोकवती अपत्यसहिता युष्मत्कृते बहून् क्लेशान् मुहुः प्राप्ता॥ १३॥

वायोर्वशे घनावलिरिव यद्वशे लोको वर्तते सः काल इति कथ्यते। किञ्च, भवतां यदप्रियं **दुःखमभूत्** तत्सर्वं कालकृतं मन्ये॥ १४॥

यत्र पाण्डवपक्षे धर्मजः राजा वृकोदरो गदापाणिः कृष्णः अर्जुनः **अस्त्री अस्त्रवान्** गाण्डीवः चापः सुहृत् कृष्णः भगवान् वासुदेवः ततः तत्पक्षे विपत् आपदिति चित्रमेतदिति शेषः॥ १५॥

राजन्! यद्विजिज्ञासया यस्य कृष्णविधित्सितस्य जिज्ञासया युक्ताः ज्ञातुमुद्युक्ताः कवयोऽपि ब्रह्मादयोऽपि मुह्यन्ति हि मोहं प्राप्नुवन्ति हि। अस्य पुरतो दृश्यमानस्य कृष्णस्य भगवतः विधित्सितं चिकीर्षितं कर्हिचित् कदाऽपि पुमान् पुरुषः न वेद न कोऽपि वेदैवेत्यर्थः।

अनेन **सर्वशास्त्रविदोऽपि** कदा किं भविष्यतीति नैव जानन्तीति ज्ञायते। तस्मात् ज्ञानिनः **शास्त्रज्ञानमधिगत्यापि स्वातन्त्र्यमनवलम्ब्य** स्थितगतिमनुसन्धाय शनैर्जीवितं नयन्ति। ततश्चानुपदं कर्तव्यज्ञानाय ज्ञातेन कर्तव्येन च भगवदाराधनाय जनेन भगवत्समर्पितधिया भवितव्यम्॥ १६॥

**तस्मादिदं[1] दैवतन्त्रं व्यवस्य भरतर्षभ!**
**तस्यानुविहितोऽनाथा नाथ! पाहि प्रजाः प्रभो[2]!॥ १७॥**

**एष वै भगवान् साक्षादाद्यो नारायणः पुमान्।**
**मोहयन् मायया लोकं गूढश्चरति वृष्णिषु॥ १८॥**

**अस्यानुभावं भगवान् वेद गुह्यतमं शिवः।**
**देवर्षिर्नारदस्साक्षाद्भगवान् कपिलो नृप[3]॥ १९॥**

**यं मन्यसे मातुलेयं प्रियं[4] मित्रं सुहृत्तमम्।**
**अकरोस्सचिवं दूतं सौहृदादथ सारथिम्॥ २०॥**

**सर्वात्मनः समदृशो[5] ह्यद्वयस्यानहङ्कृतेः।**
**तत्कृतं मतिवैषम्यं निरवद्यस्य न क्वचित्॥ २१॥**

**तथाऽप्येकान्तभक्तेषु पश्य भूपानुकम्पितम्[6]।**
**यन्मेऽसूंस्त्यजतस्साक्षात् कृष्णो दर्शनमागतः॥ २२॥**

**भक्त्याऽऽवेश्य मनो यस्मिन् वाचा यन्नामकीर्तयन्।**
**त्यजन् कलेबरं योगी मुच्यते कामकर्मभिः[7]॥ २३॥**

स देवदेवो भगवान् प्रतीक्षतां कलेबरं यावदिदं हिनोम्यहम् ।
प्रसन्नहासारुणलोचनोल्लसन्मुखाम्बुजो ध्यानपथश्चतुर्भुजः ॥ २४ ॥

---

1 K,M °ज्जगद्देव° 2. AF,GF वि° 3 AF,GF मुनिः 4 H,V कृष्णं 5. K,M °शोऽप्यद्द° 6 AF.GF °ता° 7. AF,GF सर्व°

**श्रीध॰ तस्मादिति**। इदं सुखादि। दैवतन्त्रमीश्वराधीनं व्यवस्य निश्चित्य तस्येश्वरस्य अनुविहितोऽनुवर्ती सन्। कर्तरि क्तः। हे नाथ! कुलपरम्परागत! स्वामिन्! प्रभो! समर्थ![1] अनाथाः असमर्थाः प्रजाः पाहि॥ १७॥

अनुविधेयः परमेश्वरश्च श्रीकृष्ण एवेत्याह — **एष** इति। एष एव भगवान् सर्वेश्वरः। यतः आद्यः पुमान्। तच्च कुतः? यतो नारायणस्साक्षात्॥ १८॥

तदुपपादयति — **अस्येति**। अनुभावं प्रभावम्॥ १९॥

**यमिति**। त्वमज्ञानाद्यमेवं मन्यसे। मातुलेयं मातुलान्याः[2] देवक्याः सुतम्। प्रियं प्रीतिविषयम्। मित्रं प्रीतिकर्तारम्। सुहृत्तमम् उपकारान् अनपेक्ष्य उपकारकञ्च। सौहृदात् स्नेहात्[3]। अकरोः कृतवानसि। सचिवं मन्त्रिणं च[4]॥ २०॥

ननु ईश्वरश्चेत् कथं नीचे सारथ्यादौ प्रवृत्तस्तत्राऽऽह — **सर्वेति**। तत्कृतं नीचोच्चकर्मकृतं मम योग्यमयोग्यमिति मतेर्वैषम्यं क्वचिदपि नास्ति। कुतः निरवद्यस्य रागादिशून्यस्य तत्कुतोऽनहङ्कृतेः। तच्च कुतोऽद्वयस्य। तदपि कुतः समदृशः। तत्रापि हेतुः सर्वस्यात्मनः। यथेष्टं वा हेतुहेतुमद्भावः॥ २१॥

**तथेति**। तथाऽपि समत्वेऽपि। हे भूप! अनुकम्पितमनुकम्पाम्॥ २२॥

इदानीं स्वदेहत्यागपर्यन्तं श्रीकृष्णावस्थानं प्रार्थयते — **भक्त्येति** द्वाभ्याम्॥ २३॥

**स इति**। यावदिति विलम्बं द्योतयति। अहं हिनोमि त्यजामीति स्वातन्त्र्यम्। इदमित्यनात्मत्वेन ज्ञातम्। प्रसन्नहासेन अरुणलोचनाभ्यां च उल्लसद्रुचिरं[5] मुखाम्बुजं यस्य। ध्यानस्य पन्थाः विषयः। योऽन्यैश्चिन्त्यते[6] केवलं सोऽग्रतः स्थितःस्सन् मां प्रतीक्षतामित्यर्थः॥ २४॥

---

1. A omits समर्थ! 2. A,B omit मातुलान्याः 3. A,B विश्वासात् 4 A,B omit च 5 B °च्छोभमानं 6 B °न्यैरन्तश्चिन्त्यते

**वीर॰** अस्त्वेवं, प्रकृते किमित्यत्राऽऽह — **तस्मा** दिति। तस्मात् सर्वलोकस्य कालायत्तसुखादिमत्त्वात् कर्मादेश्च कृष्णायत्तत्वात् कृष्णस्य कालाद्यनुवर्तितत्वाच्च, हे भरतर्षभ! इदं सुखदुःखादिकं सर्वं दैवतन्त्रं दैवायत्तं व्यवस्य निश्चित्य दैवमत्र कालकर्माद्युद्बोधयिता। तदनुवर्ती चेश्वरः कृष्णो विवक्षितः। तस्य दैवस्यानुविहितः, तस्येति कर्तरि षष्ठी। तेन प्रवर्तितस्त्वं हे प्रभो! नाथ! अनाथाः प्रजाः पाहि पालय॥ १७॥

एवं तमनुशास्य, लोकानुग्रहकाम्यया श्रीकृष्णयाथात्म्यमावेदयति — **एष** इति। एष श्रीकृष्णः साक्षात् **भगवान् षाड्गुण्यपरिपूर्णः** आद्यो जगत्कारणभूतः परमपुरुषो नारायण एव सन् मायया लोकं मोहयन् गूढः तिरोधापितस्वकीयवेषः वृष्णिषु यादवेषु चरति कश्चित् यादव इवानुकरोति॥ १८॥

त्वमेव इममित्थं जानासि, किमन्येऽपीत्यत्र आह — **अस्येति**। अस्य कृष्णस्य गुह्यतममनुभावं माहात्म्यं हे नृप! भगवान् उत्पत्तिप्रलयाद्यभिज्ञः शिवो वेद। तथा देवर्षिर्नारदो भगवान् कपिलश्च वेद॥ १९॥

शिवादयस्**त्वेवं** विदुः त्वं तु अन्यथा जानासि। तथाऽपि न तस्य तत्कृतं वैषम्यमस्तीत्याह — **यमिति** द्वाभ्याम्। यं कृष्णं मातुलेयं मातुलपुत्रं प्रियं प्रीतिविषयं च मित्रं स्वतुल्यं च, सुहृत्तमम् महोपकारकञ्च मन्यसे। यं च त्वं सचिवं मन्त्रिणं च कदाचिद्दूतं कदाचित् सौहृदातिशयात् सारथिं च अकरोः कृतवानसि। तस्यानुभावं भगवान् शिवो वेदेति पूर्वेणान्**वयः**॥ २०॥

यद्यप्येवं मन्यसेऽकरोश्च तत्कृतं दौत्यसारथ्यादिक्रियाकृतं मतिवैषम्यं कदाचिदप्यस्य न विद्यते। मतिवैषम्याभावे हेतुं वदन् विशिनष्टि — **सर्वात्मन** इति। सर्वात्मनः मातुलेयादीन् **मन्वानस्य दूतं** सारथिञ्च कुर्वतः तवाप्यन्तरात्मतया यद्दूतत्वादिकारणाय त्वामप्यचोदयदिति भावः। अथाऽप्यनवद्यस्य नियाम्यगतावद्यासंस्पृष्टस्य। तत्र हेतुः **अनहङ्कृतेर्देहात्मभ्रान्तिरहितस्य**। किञ्चाद्वयस्य द्वितीयवस्तुरहितस्य स्वव्याप्यस्वतन्त्रवस्तुरहितस्येत्यर्थः। अत एव समदृशः सर्वमपि प्रकृतिपुरुषाद्यात्मकम् उच्चावचं स्वशरीरतया स्वनियाम्यतया चैकरूपं पश्यतः। उक्तगुणविपरीतस्यैव हि पुंसो मतिवैषम्यमिति भावः॥ २१॥

सर्वात्मन इत्यनेन सर्वस्य **तत्प्रीतिविषयत्वमवगतं** शरीरं ह्यात्मनः प्रीतिविषयं यद्यपि सर्वं चिदचिदात्मकं जगच्छरीरभूतं प्रियं कृपाविषयं च, तथाऽपि क्षेत्रज्ञानुजिघृक्षया जग**द्व्यापारे** प्रवृत्तस्य स्वस्य वैषम्यनैर्घृ**ण्यादिपरिहाराय** व्याजमात्रापेक्षिणः स्वानुवर्तिनो नितरां प्रियाः कृपाविषयाश्चेति तदेव दर्शयितुं भक्तस्य मुमूर्षोर्मम चक्षुर्विषयतां गत इत्याह — **तथाऽपीति**। यद्यपि सर्वात्मा समदर्शी च तथाऽपि हे भूप! एकान्तभक्तेषु अनन्यप्रयोजनभक्तेषु अनुकम्पितं अनुकम्पाऽस्य सञ्जातेत्यनुकम्पितः। तारकादित्वादितच्। अनुकम्पायुक्तं पश्य अवेहि। तत्र **लिङ्गमाह-यद्यस्मात्** कृष्णोऽसून् प्राणान् त्यजतः त्यक्तुमुद्युक्तस्य मम साक्षाद्दर्शनं प्राप्तः॥ २२॥

किं तव तद्दर्शनजं फलमित्यत्राऽऽह — **भक्त्येति**। यस्मिन् भक्त्या मनो निवेश्य वाचा यस्य भगवतो नाममात्रमेव कीर्तयन् कलेबरं त्यजन् योगी कामकर्मभिः काम्यन्त इति कामाः, शब्दादिविषयास्तेषां निमित्तभूतैः कर्मभिः **पुण्यपापात्मकैः** कामैः कर्मभिश्चेति वा मुच्यते संसृतिबन्धान्मुच्यत इत्यर्थः। यच्छब्दस्य स कृष्ण **इत्यध्याहृततच्छब्दवता पूर्वेणान्वयः**, स देव इत्युत्तरेण वा। नामकीर्तनमेव कामकर्मविमोचनद्वारा निःश्रेयसफलकं; **किमु** साक्षाद्दर्शनमिति भावः॥ २३॥

यत एवमतो **यावन्मत्प्रयाणं** तावद्भगवान् प्रतीक्षतामिति प्रार्थयते — **स** इति। यावदिदं **कलेबरं शरीरं** हिनोमि त्यजामि यावत् बिभर्मीति भावः। **तावत्प्रसन्नेन** **प्रहासेन** अरुणलोचनाभ्यां उल्लसत् **मुखाम्बुजं** यस्य **स**

**चतुर्भुजो भगवान् श्रीकृष्णः देवानामपि देवो ध्यानपथः ध्यानविषयभूतस्सन् प्रतीक्षतां चक्षुष्पथत्वं प्राप्त एव ध्यानपथोऽपि भवत्वित्यभिप्रायेण, ध्यानपथ इत्युक्तम्। यद्वा द्विभुजत्वेन ध्यानपथो भवतु इत्यभिप्रायेण तदुक्तिः। तत्रत्यानां द्विभुजत्वेन। चक्षुष्पथोऽपि स्वस्य चतुर्भुजत्वेन चक्षुष्पथः तेनैव रूपेण ध्यानपथोऽस्त्वित्यभिप्रायेण वा ध्यानपथश्चतुर्भुज इत्युक्तम्** ॥ २४ ॥

---

1. W **अवस्थाय दूतत्वादिकरणाय त्वामपि चोदयत इति भावः**। 2. A,B omit **स्व°** 3 A,B **कर्ममात्रा°** 4. W **°यं** 5 A,B **तत् यद्दर्शनजं फलमाह** 6. A,B omit **कामैः** 7 A,B **विमुक्तो भवामीति भावः**।

**विज°** विवक्षितकथनं निगमयति — **तस्मादिति**। तस्मादुक्तहेतुभ्यो देवस्य हरेस्तन्त्रमधीनं जगन्निश्चित्य तस्य हरेरनुकूलया श्रुतिस्मृतिलक्षणया आज्ञया **भगवद्द्विट्तदनुबन्धिनिग्रहशिष्टजनपरिपालनाख्यं** स्वकर्मविहितं विधिमनुवर्तमानः तत्राधर्मबुद्धिमपहाय हे भरतकुलश्रेष्ठ! प्रभो! समर्थ! नाथ! अनाथाः त्वदन्यनाथरहिताः प्रजाः पाहीत्येका**न्वयः** ॥ १७ ॥

एतावत्कालमीश्वरं परोक्षतया अभिधाय इदानीमपरोक्षतया हस्तग्राहेण निर्दिशन्निव निर्दिशति — **एष वा** इति। यः साक्षादाद्यो नारायणो भगवान् स एष पुमान् लोकमज्ञजनं यथार्थज्ञानाच्छादिकया मायया मनुष्य इति मोहयन् गूढोऽविज्ञातो वृष्णिषु चरति। वै यस्मात्तस्मादयमेव कालाख्य इत्येका**न्वयः** ॥ १८ ॥

तर्हि क एनं यथावद्वेदेति तत्राऽऽह — **अस्येति**। हे नृप! सदाशिवो भगवानस्य हरेर्गुह्यतममनुभावं वेद **तथा** देवर्षिर्नारदः साक्षात्कपिलो भगवानपि जानातीत्येका**न्वयः** ॥ १९ ॥

त्वं यं कृष्णं मातुलस्य वसुदेवस्यापत्यं प्रियं बन्धुं मित्रं सङ्कटेषु मित्वा ज्ञात्वा रक्षितारं **सुहृत्तमम् अतिशयेन** सुहृदं मन्यसे, यञ्च त्वं सौहार्दात् सचिवं मन्त्रिणं दूतं सन्देशहरं सारथिं यन्तारमकरोः तस्यास्येति पूर्वेण सम्बन्धः ॥ २० ॥

*तथाऽप्यस्याहो सर्वोत्तमोऽहमनेन सारथित्वादिषु विहित इति विषमा बुद्धिर्नास्तीत्याह — **सर्वात्मन** इति। सर्वान्तर्यामिणः पिता माता सुहृत् बन्धुरित्यादिवाक्यात् **बन्ध्वादिषु** स्थित्वा **बन्ध्वादीनां बन्ध्वादित्वापादकत्वेन मुख्यबन्ध्वादित्वात् बन्ध्वादिसर्वरूपत्वात्** सर्वात्मनो वा समदृशः यथा वस्तु तथा सर्वपदार्थान् जानतः **अद्वयस्य समाधिकरहितस्य** अनहङ्कृतेः प्राकृतवैकृतशरीररहितत्वात् देहाद्यहम्बुद्धिरहितस्य अत एव निरवद्यस्य **रागादिदोषरहितस्य** इत्येतैः हेतुभिः अस्य कृष्णस्य तत्कृतं सारथित्वादिकृतिनिमित्तं त्वयि मतिवैषम्यं क्वचिदपि नास्ति **अनेकविधानां जीवानां** हि[1] तत् इत्येका**न्वयः** ॥ २१ ॥

एवंविधविषममतिषु अस्मासु अस्य संसर्गकारणं किमित्याशङ्क्य युष्मद्विधभक्तभक्त्या द्रवीकृतमनोऽनुकम्पैव कारणमित्याह — **तथाऽपि** इति। हे! भूप! तथाऽपि एवमुक्तप्रकारेण **कृतकृत्यस्यापि अस्य एकान्तभक्तेषु अव्यभिचीर्णभक्तिमत्सु** युष्मासु **अन्येषु मयि चानुकम्पितम्** अनुकम्पां कृपां **पश्य! कुत इति तत्राऽऽह यदिति।**

प्राणत्यागकाले प्रायः स्वेन पुष्टाः पुत्रादयोऽपि पूर्वमेव विमुखा गच्छन्ति। अहो असून् प्राणांस्त्यजतो मे मम स्वामी श्रीकृष्णः साक्षाद्दर्शनं दृष्टिविषयमागत इति यद्यस्मात् तद्भक्तानुकम्पैव संसर्गकारणमित्येकान्वयः॥ २२॥

प्राणत्यागकाले हरिदर्शनफलमाह — **भक्त्या** इति। भक्त्या हरौ मन आवेश्य वाचा यस्य हरेर्नारायणादिनाम कीर्तयन् कलेबरं शरीरं त्यजन् योगी कामकर्मभिर्मुच्यते मुक्तः स्यात्, तं प्रत्यक्षतो दृष्ट्वा म्रियमाणस्य मे मुक्तिः किं वर्णनीयेति वाक्यशेषः। तस्मात् **तत्प्रीतिकृत्** धर्मोऽतः तदुक्तप्रकारेण स्वधर्मेऽधर्मबुद्धिं हित्वा त्वं राज्यं कुर्विति परमतात्पर्यार्थः॥ २३॥

युधिष्ठिरं प्रत्यभिधाय इदानीं स्वच्छन्दमृत्युर्भीष्म उत्तरायणसमयपर्यन्तं भगवतोऽवस्थानं प्रार्थयते — **स** इति। अहं यावदिदं पञ्चभूतरचितं कलेबरं हिनोमि त्यजामि तावदुत्तरायणपर्यन्तं स देवो भगवान् प्रतीक्षताम्, मयि कृपयाऽनुग्रहं कुर्यादिति प्रार्थये इत्यन्वयः। कथम्भूतः? प्रसन्नहासश्च अरुणे लोचने नेत्रे प्रसन्नहासारुणलोचनानि तैः उल्लसत् मुखमेवाम्बुजं यस्य स तथा ध्यानपथः उपासनाविषयो द्रष्टुं ध्यानमेव पन्था मार्गो यस्य स तथा चत्वारो भुजा यस्य स यथा इदमेव ध्यानविषयं वपुः पुरतः स्थितस्य द्विभुजत्वादयमेव स इति परोक्षतया निर्देशः॥ २४॥

---

1. K हितत्वात् इ*

*According to A and B, the commentary on VV 21, 22 is as follows :

बन्धुरित्यादिवाक्यात् बन्धादिषु स्थित्वा बन्धादीनां बन्धादित्वापादकत्वेन मुख्यबन्ध्वादित्वात् बन्धादिसर्वरूपत्वात् सर्वात्मनो वा समदृशो यथा वस्तु तथा सर्वपदार्थान् जानतोऽद्वयस्य समाधिकरहितस्य अनहङ्कृतेः प्राकृतवैकृतशरीररहितत्वात् देहात्मबुद्धिरहितस्य अत एव निरवद्यस्य रागादिदोषरहितस्य इत्येतैर्हेतुभिः अस्य कृष्णस्य तत्कृतं सारथित्वादिकृतिनिमित्तं त्वयि मतिवैषम्यं क्वचिदपि नास्ति अनेकविधानां जीवानां हि तदित्येकान्वयः॥ २१॥

तथाऽप्यस्य अहो सर्वोत्तमोऽहमनेन सारथित्वादिषु विहित इति विषमा बुद्धिर्नास्तीत्याह — सर्वात्मन इति। सर्वान्तर्यामिणः पिता माता सुहृत् एवंविधविषममतिशून्यस्यास्य संसर्गकारणं किमित्याशङ्क्य युष्मद्विधभक्तभक्त्या द्रवीकृतमनोनुकम्पैव कारणमित्याह — तथाऽपीति। हे भूप! तथाऽपि एवमुक्तप्रकारेण कृतकृत्यस्याप्यस्य एकान्तभक्तेषु अव्यभिचीर्णभक्तिमत्सु युष्मासु अन्येषु मयि चानुकम्पितम् अनुकम्पां कृपां पश्य। कुत इति तत्राऽऽह — यदिति। प्राणत्यागकाले प्रायस्स्वेन पुष्टाः पुत्रादयोऽपि पूर्वमेव विमुखा गच्छन्त्यहो! असून् प्राणांस्त्यजतो मे मम स्वामी श्रीकृष्णः साक्षाद्दर्शनं दृष्टिविषयमागत इति यत् यस्मात् त्वद्भक्तानुकम्पैव संसर्गकारणमित्येकान्वयः॥ २२॥

**रा० कृ०** तस्मात् हे भरतर्षभ! भरतकुलश्रेष्ठ! युधिष्ठिर! इदं सुखदुःखादिकं दैवतन्त्रं दैवाधीनं व्यवस्य निश्चित्य तस्य दैवस्यानुविहितः अनुगतस्सन् त्वं हे नाथ! कुलपरम्परागतस्वामिन्! प्रभो! समर्थ! अनाथाः प्रजाः पाहि॥ १७॥

एष वै अयं दृश्यमानः कृष्ण एव भगवान् आद्यः पुमान् साक्षान्नारायणस्सन् मायया स्वमायया लोकं मोहयन् गूढः अनवगतः वृष्णिषु चरति॥ १८॥

हे नृप! अस्य श्रीकृष्णस्य गुह्यतमम् अनुभावं प्रभावं भगवान् शिवो वेद, देवर्षिर्नारदो वेद, साक्षाद्भगवान् कपिलो वेद॥ १९॥

यं कृष्णं मातुलेयं मातुलपुत्रं मित्रं सुहृत्तमं मन्यसे, अथ यं सचिवं दूतं सौहृदात् सारथिमकरोः तस्यानुभावं भगवान् शिवो वेदेत्यादिपूर्वेणान्वयः ॥ २० ॥

सर्वात्मनः समदृशः अद्वयस्य अनहङ्कृतेः निरवद्यस्य रागादिशून्यस्य अस्य भगवतः तत्कृतं नीचोच्चकर्मकृतं मतिवैषम्यं क्वचित् न, नास्ति ॥ २१ ॥

तथाऽपि तस्य समदर्शित्वेऽपि हे। भूप! एकान्तभक्तेषु अनन्यचित्तेषु भक्तेषु अनुकम्पितम् अनुकम्पां दयामिति यावत्। पश्य। यत् यस्मात् असून् प्राणान् त्यजतो मे मम साक्षात् कृष्णो दर्शनमागतः दर्शनविषयीभूतः ॥ २२ ॥

यस्मिन् श्रीकृष्णे भक्त्या मनः आवेश्य निवेश्य वाचा यन्नाम यस्य नाम कीर्तयन् कलेवरं त्यजन् योगी कामकर्मभिः पुण्यपापात्मकैः संसारबन्धरूपैः कर्मभिः मुच्यते ॥ २३ ॥

अहं यावदिदं कलेबरं हिनोमि त्यजामि, तावत्पर्यन्तं सः देवदेवः भगवान् कृष्णः प्रसन्नहासारुणलोचनोल्ल-सन्मुखाम्बुजः प्रसन्नहासैः अरुणलोचनाभ्यां च उल्लसन्मुखमेव अम्बुजं यस्य तथाभूतः चतुर्भुजः ध्यानपथः मम ध्यानविषयीभूतस्सन् प्रतीक्षतां ममाग्रतः स्थित्वा मां प्रतीक्षतामित्यर्थः।

अन्ये देहान्तसमये भगवतो दिव्यमङ्गलविग्रहमुत्प्रेक्षन्ते। भीष्मस्तु भगवन्तं श्रीकृष्णं स्वलोचनाभ्यां पुरत एव पश्यति। अहो तस्य भाग्यगरिमा। भक्तिमार्गे भगवत्कल्याणगात्रदर्शनमेव हि परमं प्रयोजनम् ॥ २४ ॥

**सूत उवाच**

**युधिष्ठिरस्तदाकर्ण्य शयानं शरपञ्जरे ।**
**अपृच्छद्विविधान् धर्मान् ऋषीणाञ्चानुशृण्वताम् ॥ २५ ॥**

**पुरुषस्वभावविहितान् यथावर्णं यथाश्रमम् ।**
**वैराग्यरागोपाधिभ्या माम्नातोभयलक्षणान् ॥ २६ ॥**

**दानधर्मान् राजधर्मान् मोक्षधर्मान् विभागशः ।**
**स्त्रीधर्मान् भगवद्धर्मान् समासव्यासयोगतः ॥ २७ ॥**

**धर्मार्थकाममोक्षांश्च सहोपायान् यथा मुने!**
**नानाख्यानेतिहासेषु वर्णयामास तत्त्ववित् ॥ २८ ॥**

**धर्मं प्रवदतस्तस्य स कालः प्रत्युपस्थितः ।**
**यो योगिनश्छन्दमृत्योर्वाञ्छितस्तूत्तरायणः ॥ २९ ॥**

**तदोपसंहृत्य गिरस्सहस्रणीर्विमुक्तसङ्गं मन आदिपूरुषे ।**
**कृष्णे लसत्पीतपटे चतुर्भुजे पुरःस्थितेऽमीलितदृग्व्यधारयत् ॥ ३० ॥**

**विशुद्धया धारणया [8]हताशुभस्तदीक्षयैवाऽऽशु गतायुधव्य[9]थः ।**
**निवृत्तसर्वेन्द्रियवृत्तिविभ्रमस्तुष्टाव [10]जन्यं विसृजञ्जनार्दनम् ॥ ३१ ॥**

**श्रीभीष्म उवाच**
**(श्रीभीष्मकृतश्रीकृष्णस्तुतिः)**

**इति मतिरुपकल्पिता वितृष्णा भगवति सात्वतपुङ्गवे विभूम्नि ।**
**स्व[11]सुखमुपगते क्वचिद्विहर्तुं प्रकृतिमुपेयुषि यद्भवप्रवाहः ॥ ३२ ॥**

---

1. H आ° 2. B,H,K,M,N,V,W °मनु° 3. AF,GF मुनिः 4 B,H,V धर्म° 5 H,K,M,V,W धर्मान् 6. K,M °रं स° 7. AF,GF °ङ्गो 8. AF,GF हृ° 9 I °श्रमः 10. K,M जल्पं 11. K,M सुख उप°

**श्रीध॰ युधिष्ठिर** इति। तत्सानुकम्पं वाक्यमाकर्ण्य ॥ २५ ॥

**पुरुष** इति। पुरुषस्वभावेन विहितान् नरजातिसाधारणान्[1] वर्णयामासेति तृतीयेनान्वयः। **यथावर्णं** वर्णधर्मान्। यथाश्रमम् आश्रमधर्मांश्च। वैराग्यरागाभ्यामुपाधिभ्यां क्रमेणाम्नातमुभयं निवृत्तिप्रवृत्तिरूपं लक्षणं येषां तान् ॥ २६ ॥

पुनस्त[2]त्रैव विशेषमाह — **दानेति**। मोक्षधर्मान् शमदमादीन् भगवद्धर्मान् हरितोषणा[3]न् द्वादश्यादि-नियमरूपान्। समासव्यासौ सङ्क्षेपविस्तारौ। तावेव योगावुपायौ। ततस्ताभ्याम् ॥ २७ ॥

**धर्मेति**। धर्मादींश्च यथा यथाधिकारं प्रतिनियतोपायसहितान्। यथा यथावत्। नानाख्यानेषु य इतिहासास्तेषु यथा स[4]न्ति तथा वर्णयामास इति ॥ २८ ॥

**धर्मान्** इति। छन्देन इच्छया मृत्युर्यस्य ॥ २९ ॥

**तदेति**। सहस्रणीर्युद्धे समीपस्थान् सहस्रं रथिनो नयति पालयतीति सहस्रणीर्भीष्मः। सहस्रगीरिति पाठे सहस्रार्थवतीर्गिरः। लसन्तौ पीतौ पटौ यस्य तस्मिन्। अमीलितदृगेव मनो व्यधारयत् ॥ ३० ॥

**विशुद्धयेति**। अनयैव विशुद्धया धारणया ध्या[5]नविशेषेण हतमशुभं यस्य सः। तस्य श्रीकृष्णस्य ईक्षया कृपादृष्ट्यैव ग[6]ता आयुधव्यथा यस्य सः। अत एव निवृत्तः सर्वेन्द्रियवृत्तीनां विभ्रमो विविधं भ्रमणं यस्मात् सः। जन्यं देहम् ॥ ३१ ॥

परमफलरूपां श्रीकृष्णे रतिं प्रा[7]र्थयमानः स्वकृतमर्पयति — **इतीति**। इति नानाधर्माद्युपायैः मतिः मनोधारणलक्षणा उपकल्पिता समर्पिता। **क? सात्वतानां पुङ्गवे श्रेष्ठे भगवति। वितृष्णा निष्कामा**। अवितृष्णेति वा च्छेदः, कृ[8]ष्णेऽवितृप्तेत्यर्थः। विगतो भूमा यस्मात् तस्मिन् यमपेक्ष्यान्यत्र महत्त्वं नास्तीत्यर्थः। तदेव परमैश्वर्यमाह।

स्वसुखं स्वस्वरूपभूतं परमानन्दमुपगते प्राप्तवत्येव। क्वचित् कदाचित् विहर्तुं क्रीडितुं प्रकृतिं योगमायामुपेयुषि स्वीकृतवति। न तु स्वरूपतिरोधानेन जीववत्पारतन्त्र्यमित्यर्थः। विहर्तुमिति यदुक्तं तत्प्रपञ्चयति। यद्यतः प्रकृतेः भवप्रवाहः सृष्टिपरम्परा भवति॥ ३२॥

---

1. B adds धर्मान् 2. B °मे° 3 B °कान् 4. H,V यथाप्रतिपादिताः 5. A,B omit ध्यानविशेषेण 6 A,B गत आयुधश्रमो यस्य 7. A,B प्रार्थयितुं प्रथमं स्व° 8. A,B omit कृष्णे 9. B यदपेक्षया°

**वीर०** तद्भीष्मवचो निशम्य युधिष्ठिरः शरपञ्जरे शयानं भीष्ममृषीणां शृण्वतां सतां नानाविधान् धर्मानपृच्छत्॥ २५॥

धर्मान् विशिनष्टि। पुरुषस्वभावः ज्ञत्वाज्ञत्वशक्तत्वाशक्तत्वादिरूपः तदनुरूपेण विहितान् कर्तव्यतया विधिचोदितान्[1] यथावर्णं यथाश्रमं ब्राह्मणादिवर्णानां ब्रह्मचर्याद्याश्रमाणां च योग्यान् योग्यार्थकयथाशब्दस्याव्ययीभावः। वैराग्यरागावकामकामौ तावेवोपाधी, ताभ्यामाम्नातानुभयलक्षणान् उभयविधान् प्रवृत्तिनिवृत्तिभेदभिन्नान् यथैकस्यैवाग्निहोत्रादिकर्मणः "अग्निहोत्रं जुहोति, जुहुयात् स्वर्गकामः, यावज्जीवमग्निहोत्रं जुहुयात्" इति स्वर्गाधिकारजीवनाधिकाररूपाभ्यामुपाधिभ्यामेव भेदः, एवं वैराग्यरागोपाधिभ्यां प्रवृत्तिधर्मत्वेन निवृत्तिधर्मत्वेन च आम्नातान् वस्तुत एकरूपान् वर्णाश्रमादिधर्मानित्यर्थः॥ २६॥

आम्नातानित्यनेन वैदिकधर्मानपृच्छदिति सूचितम्। तथा स्मार्तधर्मानपृच्छदित्यभिप्रायेणाऽऽह — **दानधर्मान्** **इति**। राजधर्मा नीतिशास्त्रोक्ताः, मोक्षधर्माः पाञ्चरात्रादितन्त्रोक्ताः। तत्राप्यवान्तरभेदाभिप्रायेण पुरुषस्वभावभेदाभिप्रायेण च विभागश इत्युक्तम्। भगवद्धर्माः तच्छ्रवणकीर्तनादयः समासव्यासयोगतः सङ्क्षेपविस्ताराभ्यां युक्ताः शास्त्रेषु प्रतिपाद्यतयेति समासव्यासयोगाः। सार्वविभक्तिकस्तसिः। समासव्यासयोगान्। यद्वा, समासव्यासयोगात् सङ्क्षेपयोगात् विस्तरयोगात् च अपृच्छत्। सङ्क्षिप्तत्वेन विस्तृतत्वेन चापृच्छदित्यर्थः॥ २७॥

द्वितीयान्तानां वर्णयामास इत्युत्तरत्रान्वयः। हे मुने! सहोपायान् ससाधनान् धर्मार्थकाममोक्षानपि यथावत् नानाविधेष्वाख्यानेष्वितिहासेषु च यत्तत्वं तद्भीष्मो वर्णयामास॥ २८॥

एवं पृष्टान् धर्मान् प्रवदतः योगिनः छन्दमृत्योः स्वच्छन्दानुसारी मृत्युर्यस्य तस्य भीष्मस्य यो वाञ्छित उत्तरायणः स कालः प्रत्युपस्थितः। यद्वा तस्य स कालः प्रत्युपस्थितः यश्छन्दमृत्योर्योगिनः वाञ्छितः स चापि कः? उत्तरायण इत्यन्वयः॥ २९॥

**तदेति**। यदा सः कालः प्रत्युपस्थितः तदा सहस्रणीः सहस्राणां कुरुपाण्डवादिरूपाणां नायकः सहस्रं स्ववंश्यानां[3] नयति सद्गतिं प्रापयतीति वा स भीष्मः गिर उपसंहृत्य विरम्य मुक्तः सङ्गो देहतदनुबन्ध्यादिसङ्गो यस्य तत् मनः पुरःस्थिते लसन्तौ विलसन्तौ पीतौ पिशङ्गौ[4] पटौ यस्य तस्मिन् कृष्णे व्यधारयत्। कथम्भूतः? निमीलिते दृशौ दृष्टी येन सः निमेषणमप्यकुर्वन् कृष्णमेव पश्यन्, तद्विग्रहध्यानैकप्रवणं चित्तमकरोदित्यर्थः॥ ३०॥

विशुद्धया धारणया भगवद्विग्रहानुध्यानात्मिकया हतं निरस्तमशुभं भगवत्प्राप्तिविलम्बावहं प्रारब्धं यस्य तदीक्षयैव भगवद्दर्शनेनैवाऽऽशु गता निरस्ता आयुधप्रहारजा व्यथा यस्य निवृत्ताः सर्वेषामिन्द्रियाणां वृत्तयो विभ्रमः देहात्मादिभ्रमश्च यस्य स भीष्मः जन्यं जननयोग्यं देहं विसृजन् त्यक्ष्यन् जनार्दनं सर्वजनदुःखहरं श्रीकृष्णं तुष्टाव ॥ ३१ ॥

स्तुतिमेवाऽऽह — **इति** इत्यादिभिरेकादशभिः। तावत्परमव्योमस्थं वेदान्तवेद्यं दिव्यात्मस्वरूपं प्रकृतावताररूपं तत्प्रयोजनं चानुसन्धाय तस्मिन् स्वमतिदार्ढ्यं प्रार्थयते इतीति। वक्ष्यमाणप्रकारेण मम मतिर्भगवति वितृष्णा अलम्बुद्धिरहिता सती उपकल्पिता प्रतिष्ठिता भवतु। यद्वा, इतिर्हेतौ। मतिर्वितृष्णा इति। यस्मात्तस्माद्भगवत्युपकल्पिता भवत्वित्यर्थः। कथम्भूते? सात्वतपुङ्गवे सात्वतानां यादवानां पुङ्गवे श्रेष्ठे भागवतानां नायके वा विभूम्नि विलक्षणे भूम्नि वागादिभ्यः प्राणशब्दवाच्याज्जीवाच्च विलक्षणेऽपरिच्छिन्ने भूमशब्दवाच्य इत्यर्थः "भूमात्वेव विजिज्ञासितव्यः यो वै भूमा तत्सुखं नाल्पे सुखमस्ति" (छान्दो. उ. 7-23-1) इति हि श्रूयते। तदाह — स्वसुखमुपगत इति। स्वं स्वाभाविकं सुखमुपगतवत्यपरिच्छिन्नस्वाभाविकानन्दशालिनीत्यर्थः। क्वचिद्देशे विहर्तुं प्रकृतिं विग्रहमुपेयुषि यस्माद्भवप्रवाहः संसारप्रवाहो भवति यत्सङ्कल्पमूला क्षेत्रज्ञानां संसारप्रवृत्तिस्तस्मिन्नित्यर्थः ॥ ३२ ॥

---

1 A,B °बोधि° 2. A,B तद्धी° 3. A,B व° 4 A,B omit पिशङ्गौ 5. A,B इति

**विज०** अथ युधिष्ठिरो भीष्मोक्तमाकर्ण्य शरतल्पे शयानं भीष्मं विविधान् धर्मानपृच्छदित्यन्वयः। पृच्छतेर्द्विकर्मकत्वाद्भीष्मं धर्माननिति युज्यते ॥ २५ ॥

धर्माणां तत्त्ववित् भीष्म एतान् धर्मान् नानाख्यानात्मकेष्वितिहासेषु वर्णयामासेत्यन्वयः। तान् कथम्भूतान्? वर्ण्यपुरुषस्यैते[1] निजत्वेन विहिता धर्मास्तदाश्रमिपुरुषस्यैते विहिता[2] इति विविच्य यथावर्णं यथाश्रमं वर्णिनामाश्रमिणां पुरुषाणां स्वभावविहितान्निजत्वेन विहितान् धर्मान् वैराग्योपाधिना रागोपाधिना चैते निवृत्तिधर्मा एते प्रवृत्तिधर्मा इति निष्कामज्ञानपूर्वमित्यादिवचनैः प्रतिपादितोभयविधलक्षणान् ॥ २६ ॥

विभागशः पृथक् पृथक् भगवतः सर्वजगत्स्रष्टृत्वादिधर्मान् ॥ २७ ॥

तथा धर्मार्थकाममोक्षांश्च तत्तत्साधनसहितान् समासव्यासयोगतः सङ्क्षेपविस्ताराभ्यां यथा यथावत् तात्त्विकदेवोत्तमयुधिष्ठिरादिबोधने भीष्मस्यासामर्थ्यात् भीष्मस्य कीर्त्यर्थं तस्मिन् तत्काले विशेषाविष्टश्रीकृष्णश्च पाण्डवप्रश्नान् व्याचख्यावित्यस्यार्थे यथेति ॥ २८ ॥

स्वच्छन्दमृत्योः स्वेच्छया मरणं कुर्वतो योगिनो वाञ्छित उत्तरायणाख्यः कालो यः स भीष्मस्य प्रत्युपस्थित इत्यन्वयः। उत्क्रमिष्यतो ज्ञानिनः काले अनुगुणे किञ्चित्सुखाधिक्यं भवति नान्यथा मुक्त्यभाव इत्यतमर्थं तुशब्दो वक्ति ॥ २९ ॥

तदा उत्तरायणे प्राप्ते सति सहस्रणीः स्वमुक्तिसमये स्वोपदिष्टानेकजननेता। एकादशाक्षौहिणीनायकस्य बलवतां सहस्रसङ्ख्यावतां नायकत्वकथनमनित्यत्वात् उपेक्षणीयम्। अमीलितदृक् प्रफुल्ललोचनः। विशेषत उच्छ्व-सितज्ञानो वा। भीष्मो गिरं विषयसम्बन्धिनीमुपसंहृत्य विमुक्तो विषयसङ्गो येन तत्तथोक्तं तन्मनः पुरःस्थिते प्रत्यक्षे चतुर्भुजे उपलब्धे शोभमानपिशङ्गवस्त्रे आदिपुरुषे नारायणावतारे श्रीकृष्णे व्यधारयत् विशेषेणाचलतयाऽधारयदि-त्येकान्वयः। मीलितदृक् अर्धमुकुलितचक्षुर्वा॥ ३०॥

विशुद्धया फलरागादिदोषरहितया हरौ निरन्तरमनोधारणया हताशुभः निरस्तपापः तस्य कृष्णस्येक्षया निरीक्षणेनैव नान्येन आशु तत्क्षणं विनष्टा युधि निमित्तव्यथा अत एव तदितरो निवृत्तो निरस्तः सर्वेषामिन्द्रियाणां वृत्तीनां व्यापाराणां विभ्रमो विलासो यस्य स तथोक्तः, निवृत्तसर्वेन्द्रियवृत्तिश्चायं विगतभ्रमश्चायमिति वा पद्यमयं जल्पं वचनं विसृजन् रचयन् व्यर्थवचनं मुञ्चन् वा जनं जननमर्दयति विनाशयतीत्युपलक्षणमेतत्। मरणञ्च [4] जननमरणनाशक-त्वेन नित्यमुक्तिदातृत्वात् जनार्दनः तं तुष्टाव इत्येकान्वयः॥ ३१॥

ननु किमियं स्तुतिर्मानसी वाचिकी वा? नाद्यः, परार्थे जीविनः स्वप्रयोजनाय स्तुतेः अनुपपन्नत्वात्। द्वितीयो युक्त इत्यभिप्रेत्य आह — **इति मति** रिति। इतिशब्दो हेत्वर्थः, प्रकरणार्थो वा समाप्तिवचनो वा। यत एवं भगवान् सकलप्रवर्तकः तस्मात् तस्मिन् मतिर्मननशीलबुद्धिरुपकल्पिता तद्विषयीकृता सकलशास्त्रप्रकरणे वक्ष्यमाणप्रक-रणे वा। समाप्तौ मरणकाले। किंविशिष्टे? विभूम्नि परिपूर्णे अपरिच्छेदलक्षणपूर्णत्वं देशकालयोरप्यस्तीति, अत उक्तं भगवतीति। निरवधिकैश्वर्यादिगुणवति यः कश्चिदृषिसत्तमो निर्दिश्यते इति शङ्का मा भूदित्याह, सात्वतपुङ्गवे यादवेश्वरे स्वसुखे स्वरूपानन्दे उपगते आगते अतिनिकटवर्तिनीति वा "निलीनो हि प्रकृतौ संसारमेति" इति श्रुतेः। यस्याः सकाशात् जीवानां संसारप्रवाहो भवति। क्वचित् सृष्टिकाले नानावताररूपैः विहर्तुं महदहङ्कारादिजगत् स्रष्टुकामां तां प्रकृतिं श्रियं जडात्मिकां च उपेयुषि प्राप्तवति, कीदृशी मतिः? वितृष्णा विषयतृष्णारहिता। वौ हरौ तृष्णा यस्याः सा तथा वा। "विः पक्षिपरमात्मनोः" (वैज. को. 8-1-60) इत्यभिधानम्॥ ३२॥

---

1. A,B °र्ध्ये 2. K,M add धर्मा 3. K,M °षणबलतया 4. K,M add जननं च

**रा० कृ०** युधिष्ठिरः तत् भीष्मस्य प्राणत्यागविषयकं वचनमाकर्ण्य शरपञ्जरे शयानं **भीष्मं** ऋषीणा मनुशृण्वतां विविधान् धर्मानपृच्छत्॥ २५॥

हे मुने! पुरुषस्वभावविहितान् पुरुषस्वभावेन विहितान् मानवजातिसाधारणान् यथावर्णं ब्राह्मणादिवर्णयोग्यान् धर्मान् यथाऽऽश्रमं ब्रह्मचर्याद्याश्रमयोग्यान् धर्मान् वैराग्यरागोपाधिभ्यां वैराग्यरागरूपोपाधिभ्यां आम्नातोभयलक्षणान् आम्नातं क्रमेण विहितम् उभयं प्रवृत्तिनिवृत्तिरूपं लक्षणं येषां तान् धर्मान् दानधर्मान् गोदानादीन् राजधर्मान् कार्तिकव्रतादीन् मोक्षधर्मान् स्त्रीधर्मान् पातिव्रत्यादीन् भगवद्धर्मान् हरितोषणान् द्वादश्यादिनियमरूपान्, विभागशः विभागानुसारेण समासव्यासयोगतः सङ्क्षेपतो विस्तरतश्च सहोपायान् ससाधनान् धर्मार्थकाममोक्षांश्च नानाख्यानेतिहासेषु धर्मवित् भीष्मः वर्णयामास।

रागः कामो, वैराग्यं कामाभावः उपाधयः तदुभयाधाराः रागस्योपाधयो विषया ये इन्द्रियार्थाः इति व्यवह्रियन्ते। एतेचानुभूयमानाः उत्तरोत्तरं प्रीतिजनकाः स्वविरहेऽसह्यवेदनां जनयन्ति। तस्मात् आवैराग्योदयमिन्द्रियाणां विषयलाभालाभप्रयुक्ते सुखदुःखे भवतः। स्पष्टीकृतं चैतत् भगवता — "ध्यायतो विषयान् पुंसस्सङ्गस्तेषूपजायते। सङ्गात् सञ्जायते कामः कामात् क्रोधोऽभिजायते॥ (भ. गी. 2-62) "क्रोधाद्भवति सम्मोहः सम्मोहात् स्मृतिविभ्रमः। स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति॥ (भ. गी. 2-63) इति वैराग्योपाधयस्तु सत्सङ्गसद्ग्रन्थाध्ययनसत्कर्माचरणेश्वरप्रणिधानादयः।

रागसहकारिणः प्रवृत्तिधर्माः इन्द्रियसुखदुःखहेतवो विषयभोगाः वैराग्यदोहदकारिणो निवृत्तिधर्माः तपोदानभूतदयानिर्व्याजानन्दादयो मनश्शान्तिहेतवः ॥ २६, २७, २८ ॥

छन्दमृत्योः स्वच्छन्दमरणस्य योगिनो यः उत्तरायणो वाञ्छितः सः कालः धर्मान् प्रवदतस्तस्य भीष्मस्य प्रत्युपस्थितः सम्प्राप्तः ॥ २९ ॥

तदा देहान्तकाले प्राप्ते सति सहस्रणीः युद्धे सहस्ररथिनेता भीष्मः गिरः वाचः उपसंहृत्य विरम्य विमुक्तसङ्गं विमुक्तः देहादिविषयसङ्गः येन तन्मनः पुरःस्थिते चतुर्भुजे लसत्पीतपटे आदिपुरुषे कृष्णे अमीलितदृक् अनिमीलितनयनस्सन् व्यधारयत् ॥ ३० ॥

विशुद्धया निर्मलया धारणया भगवन्मूर्तिध्यानात्मिकया हताशुभः हतमशुभं भगवत्प्राप्तिप्रतिबन्धकं पापं यस्य सः तदीक्षयैव तस्य कृष्णस्य करुणादृष्ट्यैव आशु गतायुधव्यथः गता निवृत्ता आयुधव्यथा आयुधप्रहारजन्यवेदना यस्य तथाभूतः। निवृत्तसर्वेन्द्रियविभ्रमः निवृत्तः सर्वेन्द्रियाणां सर्वेन्द्रियवृत्तीनां विभ्रमः विषयान्तरभ्रमणं यस्य सः भीष्मः जन्यं शरीरं विसृजन् त्यक्ष्यन् जनार्दनं श्रीकृष्णं तुष्टाव स्तुतवान् ॥ ३१ ॥

इत्येवं नानाविधसाधनैः निर्मला वितृष्णा फलाभिसन्धिरहिता मतिः मम बुद्धिः विभूम्नि अनन्यमहिमाश्रये स्वसुखं स्वरूपभूतं परमानन्दं उपगते प्राप्तवति तथाऽपि क्वचित् कदाचित् विहर्तुं क्रीडितुं यत् यस्याः प्रकृतेः भवप्रवाहः सृष्टिपरम्परा भवति तां प्रकृतिं स्वमायाशक्तिमुपेयुषि स्वीकृतवति भगवति सात्वतपुङ्गवे यादवश्रेष्ठे श्रीकृष्णे उपकल्पिता प्रतिष्ठिता भवत्विति शेषः।

विशुद्धया धारणया इत्यत्र धारणापदेन धारणातीतस्थितिरुच्यते, उत्तमकक्ष्याचेयमष्टाङ्गयोगे। योगस्य यम-नियम-आसन-प्राणायामाः पूर्वाङ्गानि, प्रत्याहार-धारण-ध्यान-समाधयः उत्तराङ्गानि। उच्छ्वसनिःश्वाससहायेन शरीर मनइन्द्रियेषु पूर्वाङ्गसिद्धिः। प्रत्याहारश्च प्रत्यानयनं पश्चादानयनमित्यर्थः। प्राणे लीनं मनः प्रज्ञेत्युच्यते। स्वप्रज्ञायाः स्वस्मिन्नानयनं प्रत्याहारः। अत्र साध्या प्रज्ञा, साधकः आत्मा च परस्परं सन्निदधाते। धारणा चान्यस्मिन्नन्यस्य द्रुतिः — यथा वारिणि निहिता शर्करा द्रुता वारितामेति। अनया भगवन्मूर्तिध्यानपर्यवसायिन्या धारणया देवव्रतस्य भगवत्प्राप्तिप्रतिबन्धक्षयः। तेन तस्य सर्वेन्द्रियवृत्तिनिवृत्तिरूपयोगसिद्धिः। एतद्योगसान्तत्यसन्धायिनी तत्कृता श्रीकृष्णस्तुतिश्च ॥ ३२ ॥

**त्रिभुवनक[1]मनं तमालवर्णं रविकरगौरवराम्बरं दधाने ।**
**वपुरलककुलावृताननाब्जं[2] विजयसखे रतिरस्तु मेऽनवद्या ।। ३३ ।।**

**युधि तुरगरजोविधूम्र[4]विष्वक्कचलुलितश्रमवार्यलङ्कृतास्ये ।**
**मम निशितशरैर्विभिद्यमानत्वचि विलसत्कवचेऽस्तु कृष्ण आत्मा ।। ३४ ।।**

**सपदि सखिवचो निशम्य मध्ये निजपरयोर्बलयो रथं नि[5]वेश्य ।**
**स्थितवति परसैनिकायुरक्ष्णा हृतवति पार्थसखे र[6]तिर्ममाऽस्तु ।। ३५ ।।**

**व्यवहि[7]तपृतनामुखं निरीक्ष्य स्वजनवधाद्विमुखस्य दो[8]षबुद्ध्या ।**
**कुमतिमहरदात्मविद्यया यश्चरणरतिः परमस्य तस्य मेऽस्तु ।। ३६ ।।**

**स्वनि[9]गममपहाय मत्प्रतिज्ञामृतमधिकर्तुमवप्लुतो रथस्थः ।**
**धृतरथचरणोऽभ्ययाच्च[10]लद्गुर्हरिरिव हन्तुमिभं गतोत्तरीयः ।। ३७ ।।**

**शितविशिखहतो विशीर्णदंशः क्षतजपरिप्लुत आततायिनो मे ।**
**प्रसभमभिससार मद्वधार्थं स भवतु मे भगवान् ग[11]तिर्मुकुन्दः ।। ३८ ।।**

---

1. B °ग° 2. H,V,W °ब्जे 3. AF,GF म° 4. K,M विध्यत्कच° 5. H,K,V प्र° 6. AF,GF न° 7. K,M °सि° 8. AF,GF धर्म°
9. K,M °य° 10. K,M °द्बलाग्रे हरि° 11. K,M मुदे मु°

**श्रीध०** इदानीं श्रीकृष्णमूर्तिं वर्णयन् रतिं प्रार्थयते — **त्रिभुवनकमनम्** इति। त्रिभुवनकमनं त्रिलोक्यामेकमेव कमनीयं यत्तद्वपुर्दधाने रतिर्मेऽस्तु। कथम्भूतं वपुः ? तमालवत् नीलो वर्णो यस्य तत्। प्रातःकालिका रवेः करा इव स्वत एव गौरे पीते वरे निर्मले चाम्बरे यस्मिंस्तत्। अलककुलैरुपर्यावृतमानननाब्जं यस्मिंस्तत्। **विजयसखे** पार्थसारथौ। अनवद्याऽहैतुकी फलाभिसन्धिरहिता रतिरस्तु।। ३३ ।।

विजयसखित्वमेवानुवर्णयन् रतिं प्रार्थयते — **युधि** इति। युधि युद्धे तुरगाणां खुररजस्तुरगरजस्तेन विधूम्रा धूसरास्ते च ते विष्वञ्च इतस्ततश्चलन्तः कचाः कुन्तलाः तैर्लुलितं विकीर्णं श्रमवारि स्वेदबिन्दुरूपं तेन भक्तवात्सल्यद्योतकेन अलङ्कृतमास्यं यस्य तस्मिन् श्रीकृष्णे ममात्मा मनोऽस्तु रमतामित्यर्थः। पुनः क[1]थम्भूते ? मदीयैर्निशितैः तीक्ष्णैः शरैः विभिद्यमाना त्वक् यस्य तस्मिन्। शरैरेव विलसत् त्रुट्यत् कवचं यस्य तस्मिन् ।। ३४ ।।

किं च **सपदि** इति। "सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत! यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितान्" (भ. गी. 1-21) इति सख्युरर्जुनस्य वचो निशम्य सपदि तत्क्षणमेव स्वपरयोर्बलयोः सैन्ययोर्मध्ये रथं प्र[2]वेश्य स्थिते पार्थसखे मम रतिरस्तु। तत्र स्थित्वा कृतं सख्यं दर्शयति। परस्य दुर्योधनस्य सैनिकानामायुरक्ष्णा कालरू[3]पेण हृतवति। असौ द्रोणः असौ भीष्मः असौ कर्ण इति तत्तत्प्रदर्शनव्याजेन दृष्ट्यैव सर्वेषामायुराकृष्यार्जुनस्य जयं कृतवति ।। ३५ ।।

न केवलमर्जुनस्य सपत्नायुर्हरणेनैव जयमावहतु किन्तु अविद्याहरणेनापीत्याह — **व्यवहिता** इति। व्यवहिता दूरे स्थिता या पृतना तस्या मुखमिव मुखम् अग्रे स्थितान् भीष्मादीन् निरीक्ष्येत्यर्थः। स्वजनवधाद्विमुखस्य निवृत्तस्य। तदुक्तं गीतासु — "एवमुक्त्वाऽर्जुनस्सङ्ख्ये रथोपस्थ उपाविशत्। विसृज्य सशरं चापं शोकसंविग्नमानसः" (भ. गी. 1-46) इति। कुमतिम् अहं [4]ममेत्यादिकुबुद्धिम् ॥ ३६ ॥

मम तु पहान्तमनुग्रहं कृतवानित्याह **स्वनिगमम्** इति द्वाभ्याम्। स्वनिगममशस्त्र एवाहं साहाय्यमात्रं करिष्यामीत्ये[5]वंम्भूतां स्वप्रतिज्ञां हित्वा श्रीकृष्णं शस्त्रं ग्राहयिष्यामीत्येवंरूपां मत्प्रतिज्ञां ऋतं सत्यं यथा भवति तथा अधि अधिकां कर्तुं यो रथस्थः सन्नवप्लुतः सहसैवावतीर्णस्सन् यो [6]माम् अभ्ययात् अभिमुखमधावत्। इभं हन्तुं हरिः सिंह इव। किम्भूतः ? धृतो रथचरणश्चक्रं येन सः [7]तथा च सरम्भेण मानुष्यनाट्यविस्मृते रुदरस्थसर्वभूतभुवन-भारेण प्रतिपदं [8]चलद्गुः चलन्ती गौः पृथ्वी यस्मात् सः। तेनैव संरम्भेण पथि गतं [9]पतितमुत्तरीयं वस्त्रं यस्य सः मुकुन्दो मे गतिर्भवतु इति उत्तरेणान्वयः ॥ ३७ ॥

**शितविशिखेति**। एवं यदाऽभ्ययात्तदा स्मयमानस्याततायिनो धन्विनो मे शितैः तीक्ष्णैः विशिखैः हतोऽतो विशीर्णदंशो विध्वस्तकवचः [10]अत एव क्षतजेन रुधिरेण परिप्लुतो [11]व्याप्ताङ्गस्सन् प्रसभं बलात् वारयन्तमर्जुनमप्यतिक्रम्य मद्वधार्थमभिससार अभिमुखं जगाम। एवं यो लोकप्रतीत्याऽर्जुनपक्षपातीव लक्षितो वस्तुतस्तु [12]मय्येवानुग्रहं कृतवान् यन्मद्भक्तेनोक्तं वचो मा [13]मृषाऽस्त्विति स भगवान् मे [14]गतिर्भवत्वित्यर्थः ॥ ३८ ॥

---

1. A,B किम्भूते 2 A,B नि° 3 A,B °दृष्ट्या 4. A,B हन्तेत्या° 5. H,V °वं रूपां 6 A,B omit माम् 7. A B तदा 8. H,V बहुशः 9 H,V च्युतमु° 10. A,B omit अत एव 11 A,B व्याप्तस्सन् 12. A,B ममैवा° 13 H,V तत्तथा अस्त्विति 14. B adds मम

**वीर०** प्रकृतं रूपमनुभूय मतिदार्ढ्यं प्रार्थयते — त्रिभुवनकमनं त्रिभुवनकमनीयं त्रिभुवनसुन्दरमिति यावत्, तद्वपुर्दधाने विजयसखेऽर्जुनसखे श्रीकृष्णेऽनवद्या निर्दुष्टा अनन्यप्रयोजनेति यावत्। मम रतिरनुरागोऽस्तु। कथम्भूतं वपुः ? तमालस्येव वर्णो नीलो यस्य। रवेः करः किरणसमुदाय इव गौरं वरं चाम्बरं यस्मिन् अलककुलै कुन्तलजालैरावृतमाननाब्जं यस्य तथाभूतम् ॥ ३३ ॥

युद्धदशावस्थितमनुसन्धाय प्रार्थयते — **युधि** इति। कृष्णे भगवति ममात्मा मनः अस्तु दृढं [1]भवतु तिष्ठतु। कथम्भूते ? युधि युद्धे तुरगरजोभिः अश्वशफोत्थितरजोभिः विधूम्रैः विधूसरैः विष्वग्विलम्बमानैः कचैरलकैः लुलितैः स्रवद्भिः श्रमवारिभिः श्रमस्वेदबिन्दुभिश्चालङ्कृतमास्यं यस्य निशितैश्शरैः विभिद्यमाना त्वक् यस्य, अत एव विलसन् क्षतजेन विलसन् कवचो यस्मिन्॥ ३४ ॥

युद्धप्रारम्भदशावस्थं रूपमनुसन्धाय प्रार्थयते — **सपदि** इति। युद्धप्रारम्भसमये सख्युरर्जुनस्य वचः "सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत! यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितान् ॥" (भ. गी. 1-21) इत्यादिरूपं

वचो निशम्य निजपरयोः पाण्डवकौरवयोः बलयोर्मध्ये रथं निवेश्य स्थापयित्वा स्थितवति, अक्ष्णैव दृष्टिमात्रेणैव परसैनिकानां दुर्योधनादीनामायुर्हृतवति, पार्थस्यार्जुनस्य सखा तस्मिन् मम रतिरस्तु॥ ३५॥

गीतोपनिषदुपदेशावस्थं रूपमनुसन्धाय प्रार्थयते — **व्यवहिता** इति। व्यवहितायाः नातिदूरस्थायाः पृतनायाः शत्रुसेनायाः मुखं पुरोभागमवलोक्य दोषबुद्ध्या[2] स्वजनवधाद्विमुखस्यार्जुनस्येति विशेष्यमध्याहर्तव्यम्। कुमतिं "दृष्ट्वेमं स्वजनं कृष्ण!" (भ.गी. 1-28) इत्यादिना तेनैवाविष्कृतां बन्धुहत्यया पापमाशङ्कमानां कुमतिमात्मविद्यया गीतोपनिषदुपदेशेन[3] योऽपहृतवान् तस्य परमस्य परो मा यस्मात् सः परमः, सर्वाभ्यधिकस्य भगवतश्चरणयो रतिर्ममास्तु॥ ३६॥

जिघांसया स्वस्योपर्याधावनदशायाम् अवस्थितं रूपमनुसन्दधानः तमेव तत्प्राप्त्युपायमध्यवस्यति। स्वनिगममित्यादिश्लोकद्वयमेकान्वयम् आततायिनः प्रहरतो मे मम तावत् शितैः विशिखैः बाणैः हतः ताडितः अत एव विशीर्णः शिथिलः दंशः कवचो यस्य सः। क्षतजेन रुधिरेण परिप्लुतः व्याप्तगात्रस्सन् स्वनिगम् आयुधं न गृह्णामीति स्वप्रतिज्ञामपहाय आयुधं ग्राहयामीत्येवंविधां मत्प्रतिज्ञां ऋतं सत्यं[4] कर्तुं स्वप्रतिज्ञामुपेक्ष्य भक्तप्रतिज्ञामेव यथार्थं[5] कर्तुमित्यर्थः। रथस्थः ततोऽवप्लुतः धृतः रथचरणः सुदर्शनाख्यं चक्रं येन सः, चलन्ती गौः भूमिर्यस्मात्। भूमिं चालयन् गतं गच्छदुत्तरीयं यस्य सः। इभं गजं हन्तुं हरिः सिंह इव बलात् मद्वधार्थमभिससार मदभिमुखमागतवान् स मुकुन्दो मोक्षदो[6] भगवान् मम गतिः स्वप्राप्त्युपायो भवतु॥ ३७, ३८॥

---

1. W अव° 2. A,B °वशात् 3. A,B गीतोपदेशेन 4. A,B सत्या 5. A,B °र्था 6. A,B omit मोक्षदो

**विज॰** विजयोऽर्जुनः सखा यस्य सः तथा, तस्मिन् कृष्णे मम अनवद्या रागाद्यवद्यविधुरा रतिरस्तु रतिरनवद्या निर्दुष्टा अस्त्विति वाऽन्वयः। कथम्भूते? त्रिभुवनेषु कमनं कमनीयं, त्रिभुवनानां कमनमिच्छा यस्मिंस्तत्तथोक्तमिति वा। तमालपुष्पवद्वर्णो यस्य तत्तथा तमालवर्णं, वरञ्च तत् अम्बरं च वराम्बरम्। नवस्य रवेरादित्यस्य करः किरण इव गौरमरुणं वराम्बरं यस्य वपुषः तत्तथोक्तम्। 'गौरोऽरुणे सिते पीते स्वच्छे च परिकीर्त्यते'' इत्यभिधानम्। अलककुलैः कुन्तलकुलैः आवृतमाच्छन्नमाननाब्जं यस्य तत् तथा एवंविधं वपुर्दधाने॥ ३३॥

ममात्मा मनः कृष्णे अस्त्वित्यन्वयः।। कथम्भूते? विलसच्छोभमानं कवचं यस्य स तस्मिन्। वि(बि)लसत् सर्पोऽनन्तः कवचं शय्यास्थानीयं यस्य स तथा तस्मिन्निति वा, अच्छेद्यत्वाभेद्यत्वेऽप्यसुरमोहनाय। मम निशितैश्शरैर्विभिद्यमानेव त्वग्यस्य स तथोक्तः तस्मिन्। वीत्युपसर्गाद्भिद्यमानत्वगप्यभिद्यमानैवेति ज्ञातव्यम्। निशितशरैरप्यविभिद्यमानत्वगिति[1] तात्पर्यार्थः, विप्रिय इतिवत्। युद्धे तुरगाणां खुरनिपातोत्थितै रजोभिर्विशेषेण धूम्रवर्णैश्च तैर्विध्यद्भिः परस्परमाग्रद्भिः कचैः केशैर्लुलितैः कलुषितैः श्रमवारिभिः श्रमनिमित्तस्वेदोदबिन्दुभिः अलङ्कृतमास्यं मुखं यस्य स तथोक्तः तस्मिन्॥ ३४॥

पार्थसखे कृष्णे मम रतिरस्त्वित्यन्वयः । "सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत!" (भ.गी. 1-21) इति सख्युरर्जुनस्य वचो निशम्य सपदि वचःश्रवणानन्तरं निजपरयोः पाण्डवकौरवसम्बन्धिबलयोः सैन्ययोर्मध्ये रथं प्रवेश्य स्थितवति। अक्ष्णा निरीक्षणेन परसैन्यानाम् कौरवसैन्यानां[2] आयुर्जीवनलक्षणं[3] हृतवति ॥ ३५ ॥

यः परमो वीरः स्वर्गं प्राप्तुं युद्धाय व्यवस्थितयोः पृतनयोः सेनयोः मुखं भीष्मादिकं निरीक्ष्य "हत्वार्थकामांस्तु गुरूनिहैव" (भ. गी. 2-5) इति दोषबुद्ध्या "न योत्स्ये" (भ. गी. 2-9) इत्युक्त्वा स्वजनहननात् विमुखस्यार्जुनस्य कुमतिं दुष्टनिग्रहशिष्टपरिपालनलक्षणव्यापारबुद्धेः विपरीतबुद्धिम् "अशोच्यानन्वशोचस्त्वम् " (भ.गी. 2-11) इत्यादिरूपया आत्मविद्ययाऽहरत्, "करिष्ये वचनं तव" (भ. गी. 18-73) इति दुष्टनिर्हरणे[4] धर्मे बुद्धिं कारितवान् मे तस्य परमस्य चरणयोः स्मरणेन ज्ञानसाधनयोरवयवविशेषयोः रतिरस्त्वित्यन्वयः ॥ ३६ ॥

**अथ युद्धे आयुधं न ग्रहीष्यामीति स्वनियमं प्रतिज्ञालक्षणं विहाय यो भक्तानुकम्पी, आयुधं ग्राहयिष्यामीति**[1] मत्प्रतिज्ञां ऋतमधि सत्ये स्थितां कर्तुं धृतरथचरणः उद्धृतसुदर्शनचक्रो रथस्थो रथावप्लुतोऽवतीर्णो गतोत्तरीयः श्लथितोत्तरीयवासाः हरिः सिंहः इभं गजमिव बलाग्रे उभयोः सेनयोः पुरतो मां हन्तुमभ्ययात् ॥ ३७ ॥

यश्च आततायिनो मे निशितैस्तेजितैः विशिखैः बाणैः हतो विद्धो विशीर्णदंशः खण्डितकवचः क्षतजेन रुधिरेण परिप्लुतः स्नात इव प्रसभं 'रथा त्रावतर, भीष्मं न प्रतिहर' इत्यर्जुनवाक्यमनादृत्य बलात्कारात् मम वधार्थमभिससार, स मुकुन्दो भगवान् मम मुदे भवत्विति श्लोकान्वयः ॥ ३८ ॥

---

1. A °मिति 2 A,B omit कौरवसैन्यानां 3. B,K,M °र्जीवलक्षणं 4. K,M निग्रहणे

**रा॰ कृ॰** त्रिभुवनकमनं त्रिजगन्मोहनं तमालवर्णं तमालवन्नीलवर्णो यस्य तत्, रविकरगौरवराम्बरं रवेः कराः किरणा इव गौरे पीते वरे निर्मले अम्बरे यस्मिंस्तत्, अलककुलावृताननाब्जं अलकजालैरुपरि आवृतम् आननाब्जं यस्मिंस्तत् वपुः शरीरं दधाने विजयसखे अर्जुनस्य मित्रे पार्थसारथौ मे अनवद्या निर्मला फलाभिसन्धिरहितेति यावत्, रतिरस्तु।

सर्वोत्पत्तिहेतुराकाशो निराकारोऽपि पश्यतो जनस्य नीलवर्णभ्रमं जनयन् नयनमोहनो भवति। एवं भगवान् श्रीकृष्णोऽपीति द्योतयितुं तस्य नीलवर्णत्वमभिवर्ण्यते कविभिः ॥ ३३ ॥

युधि युद्धे तुरगरजोविधूम्रविष्वक्कचलुलितश्रमवार्यलङ्कृतास्ये तुरगाणामश्वानां रजः खुररजः तेन विधूम्राः धूसराः विष्वञ्चः इतस्ततश्चलन्तः कचाः कुन्तलाः तैः लुलितं व्याप्तं, श्रमवारि स्वेदबिन्दुरूपं तेन अलङ्कृतमास्यं मुखं यस्य तथाभूते। अपि च मम निशितशरैः तीक्ष्णबाणैः विभिद्यमानत्वचि ईषद्भिन्नगात्रे विलसत्कवचे विराजमानकवचे कृष्णे आत्मा मम मनः अस्तु समर्पितं भवतु।

यद्यपि सर्वसृष्टिनियामकः ईश्वरः सङ्कल्पमात्रेणैव सकलधार्तराष्ट्रकुलं नाशयिष्यति, किं बहुना, नैव भारतयुद्धावश्यकता च तत्सङ्कल्पेन। तथाऽपि विश्रान्तः कविर्यथा अविश्रान्तपात्रोपचितं नाटकं करोति, तथा भगवान् स्वयं कर्तव्यविरहितोऽपि लीलार्थं कर्मसु प्रवृत्तः स्वसृष्टान् जीवानपि तेषु नियोजयतीति ज्ञेयम् ॥ ३४ ॥

सखिवचः सख्युरर्जुनस्य वचः योद्धुकामान् द्रष्टुं सेनाद्वयमध्ये रथं स्थापय इत्याकारकं निशम्य श्रुत्वा सपदि तत्क्षणमेव निजपरयोः बलयोः सैन्ययोर्मध्ये रथं प्रवेश्य स्थापयित्वा स्थितवति स्थिते परसैनिकायुः परस्य दुर्योधनस्य सैनिकानामायुः अक्ष्णा-दर्शनेन-कालस्वरूपेण, हृतवति पार्थसखे भगवति मम मतिरस्तु।

परसैनिकायुः यद्यपि अर्जुनादय एव हृतवन्तः तथाऽपि ते तत्र निमित्तहेतव एव। कृष्णस्य सङ्कल्पात्मकं दर्शनमेव परेषां मरणे प्रधानं कारणम्। अनन्तरमर्जुनादिभिर्निहता अपि ते पूर्वमेव हतप्रायाः। तथा हि — विपणौ क्रीतं वस्तु सौकर्याय तत्रैव निक्षिप्तमपि क्रेतुरेव न तु विक्रेतुः। अत एव भगवताऽप्युक्तम् — "मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन्!" (भ. गी. 11-33) इति॥ ३५॥

व्यवहितपृतनामुखं व्यवहितायाः दूरे स्थितायाः पृतनायाः कौरवसेनायाः मुखमग्रभागं निरीक्ष्य दोषबुद्ध्या पापाचरणधिया स्वजनवधात् भीष्मादिवधात् विमुखस्य अर्जुनस्येति शेषः। कुमतिम् 'अहं हन्ता, मदीया इमे हन्यमानाः' इत्यकारिकां बद्धबुद्धिं यो देवः आत्मविद्यया गीतोपदेशेन अहरत् न्यवारयत् तस्य परमस्य पुरुषोत्तमस्य चरणरतिः पादभक्तिः मे ममास्तु॥ ३६॥

स्वनिगमम् अशस्त्र एव सहायो भविष्यामीति स्वप्रतिज्ञामपहाय त्यक्त्वा मत्प्रतिज्ञां श्रीकृष्णं शस्त्रं ग्राहयिष्यामीति मम प्रतिज्ञां ऋतं यथार्थं यथा भवति तथा अधिकर्तुं अधिकां कर्तुं रथस्थस्सन् अवप्लुतः हठादवतीर्णः धृतरथचरणः उद्धृतचक्रायुधः गतोत्तरीयः पथि गलितोत्तरीयः चलद्गुः कुक्षिस्थसकलजगद्भारेण प्रतिपदं चलद्भूमिः इभं गजं हन्तुं हरिरिव सिंह इव यः अभ्ययात् ममाभिमुखम् अधावत्। अपि च आततायिनः प्रहरतः मे शितविशिखहतः तीक्ष्णबाणैः प्रहतः विशीर्णदंशः विध्वस्तकवचः क्षतजपरिप्लुतः रक्तसिक्ताङ्गस्सन् प्रसभं बलात् स्वं निवारयन्तमपि अर्जुनमविगणय्य इत्यर्थः। मद्वधार्थं यो मामभिससार अभिजगाम सः तादृशः भगवान् मुकुन्दः मे गतिः भवतु॥ ३७, ३८॥

विजयरथकुटुम्ब आत्ततोत्रे धृतहयरश्मिनि[1] तच्छ्रियेक्षणीये।
भगवति रतिरस्तु मे मुमूर्षोर्यमिह निरीक्ष्य हता गतास्सरूपम्[2]॥ ३९॥

ललितगतिविलासवल्गुहासप्रणयनिरीक्षणकल्पितोरुमानाः।
कृतमनुकृतवत्य उन्मदान्धाः प्रकृतिमगन्[3] किल यस्य गोपवध्वः॥ ४०॥

मुनिगणनृपवर्यसङ्कुलेऽन्तस्सदसि युधिष्ठिरराजसूय एषाम्।
अर्हणमुपपेद[4] ईक्षणीयो मम दृशिगोचर एष आविरात्मा॥ ४१॥

*क्षितिभरमवरोपितुं कुरूणां श्वसन इवासृजदक्षवंशवह्निम्।
तमिममजमनुव्रतार्तिहाङ्घ्रिं हृदि परिरभ्य जहामि मर्त्यनीडम्॥

तमिममहमजं शरीरभाजां हृदि हृदि[6] धिष्ठितमात्मकल्पितानाम्।
प्रतिदृशमिव[7] नैकधार्कमेकं समधिगतोऽस्मि विधूतभेदमोहः॥ ४२॥

सूत उवाच

**कृष्ण एवं भगवति मनोवाग्दृष्टिवृत्तिभिः ।**
**आत्मन्यात्मानमावेश्य सोऽन्तःश्वास उपारमत् ॥ ४३ ॥**

**सम्पद्यमानमाज्ञाय भीष्मं ब्रह्मणि निष्कले ।**
**सर्वे बभूवुस्ते तूष्णीं वयांसीव दिनात्यये[8] ॥ ४४ ॥**

---

1. K,M °जितश्रमेक्षणीये 2 B,I,K,M,W °स्वस्व° 3. K,M °गुः 4. K,M °मभि° * This additional V is found in H & V between VV 41 & 42 but it appears in K & M between VV 42 & 43 and the commentaries on it, by Sridhara and Vijayadhvaja will appear at their proper places. 5 AF, GF विदधे स्थित° 6. K,M वि° 7. AF, GF °दि° 8. AF, GF °वा°

**श्रीध०** तदेवमन्यायैरपि भृत्यरक्षाव्यग्रे कृष्णे रतिमाशास्ते — **विजयेति**। विजयोऽर्जुनः तस्य रथ एव कुटुम्बमकृत्यशतैरपि रक्षणीयं यस्य तस्मिन्। आत्तं तोत्रं प्रतोदो येन तस्मिन्। धृताश्च ते हयानां रश्मयः प्रग्रहास्ते सन्ति यस्य तस्मिन्।। "व्रीह्यादिभ्यश्च" (अष्टा. 5-2-113) इत्यनकारान्तादपि रश्मिशब्दादिनिः। तच्छ्रिया[1] तां-दृक्सारथ्यकरणोपयोगिवेषेणेक्षणीये शोभमाने। मुमूर्षोर्मर्तुमिच्छोः। नन्वन्यायवर्तिनि किमिति रतिः प्रार्थ्यते? अत आह भगवत्यचिन्त्यैश्वर्ये तदाह। इह युद्धे हतास्सर्वे यं निरीक्ष्य सरूपं[2] तत्समानं रूपं गताः प्राप्ता इति दिव्यदृष्ट्या पश्यन्नाह ॥ ३९ ॥

क्षत्रधर्मेण[3] युध्यमानास्तत्सरूपं प्रापुरित्येतन्न चित्रं यतो मदान्धाः[4] अपि प्रापुरित्याह — **ललितेति**। ललितगतिश्च विलासश्च वल्गुहासादिश्च[5] मञ्जुगत्यादिभिरात्मीयैः तदीयैर्वा कल्पित उरुर्मानः[6] पूजा यासां ताः। अत उत्कटेन मदेनान्धाः विवशाः अत एव तदेकचित्तत्वेन तस्य कृतं कर्म गोवर्धनोद्धरणादिकमनुकृतवत्यो[7] गोपवध्वो यस्य प्रकृतिं स्वरूपमगन् अगमन्। मकारलोपस्त्वार्षः। किल प्रसिद्धौ। तस्मिन् मे रतिरस्त्विति पूर्वेणान्वयः ॥ ४० ॥

जगत्पूज्यतामनुस्मरन्नाह — **मुनीति**। मुनिगणैः नृपवर्यैश्च सङ्कुले व्याप्तेऽन्तस्सदसि सभामध्ये युधिष्ठिरस्य राजसूये एषां मुनिगणादीनामीक्षणीयः अहो रूपमहो महः[8] इत्याश्चर्येण विलोकनीयस्सन् अर्हणमुपपेदे प्राप। एष जगतामात्मा मम दृशि गोचरो दृष्टिविषयः सन् आविः प्रकटो वर्तते अहो मे[9] भाग्यमिति भावः ॥ ४१ ॥

* **किञ्च क्षितीति**। वंशानां वह्निः यथा अक्ष एव वंशवह्निः यः तमसृजत्। तं परिरभ्य मर्त्यनीडं जहामि ॥

सोऽहं कृतार्थोऽस्मीत्याह — **तम्** इति। तमिममजं सम्यगधिगतः प्राप्तोऽस्मि। **सम्यक्त्वमाह** — विधूतभेदमोहः तदर्थं भेदस्योपाधिकत्वमाह। आत्मकल्पितानां स्वनिर्मितानां[10] शरीरभाजां प्राणिनां हृदि हृदि प्रतिहृदयं धिष्ठितमधिष्ठितमधिष्ठाय स्थितमिति यावत्। अकारलोपस्त्वार्षः। "तत्सृष्ट्वा[11] तदेवानुप्राविशत्, जजान जाताननुविवेश" इति श्रुतेश्च। नैकधा अनेकधा। अधिष्ठानभेदादनेकधा भान्तमित्यर्थः। अत्र दृष्टान्तः "एकं[12] सन्तं बहुधा कल्पयन्ति" इति श्रुतेः। सर्वप्राणिनां दृशं दृशं प्रत्येकमेवार्कमनेकधा प्रतीतमिवेति ॥ ४२ ॥

**कृष्ण** इति मनोवाग्दृष्टीनां वृत्तिभिः परमात्मनि श्रीकृष्णे। अन्तरेव विलीनः श्वासो यस्य सः ॥ ४३ ॥

**सम्पद्यमान** मिति। निष्कले निरुपाधौ सम्पद्यमानं मिलितमाज्ञाय आलक्ष्य। वयांसि पक्षिण इव ॥ ४४ ॥

---

1. A,B तया सारथ्यश्रियेक्ष° 2 V स्व° 3. B क्षा° 4. B उन्मदान्धाः 5 H,V वल्गुहासादिमञ्जु°; B रासादिः 6 B उरुर्महान् मानः 7 B °द्धा° 8. A,B महिमेत्येवमाश्च° 9. H,V महा° 10. A,B स्वयंनिर्मि° 11. A,B omit तत्सृष्टा ...... श्रुतेश्च 12 A,B omit एकं....... श्रुतेः

**वीर०** सारथ्यदशावस्थितं रूपमनुसन्धायास्मिन् रतिदार्ढ्यं प्रार्थयते — **विजयेति**। विजयस्य अर्जुनस्य रथः कुटुम्बः कुटुम्बवद्रक्षणयोग्यो यस्य, आत्तं तोत्रं वेत्रं येन, धृता हयानामश्वानां रश्मयः प्रग्रहा येन तस्मिन् तच्छ्रिया तोत्रहयरश्मिग्रहणजशोभया ईक्षणीये अतीवेक्षितुमर्हे च भगवति मुमूर्षोर्मर्तुमुद्यतस्य मम रतिरस्तु। [1]द्वन्द्वयुद्धे यं निरीक्ष्य ये हतास्ते च स्वरूपं स्वाभाविकं रूपमपहतपाप्मत्वादिगुणाष्टकविशिष्टं रूपं मुक्तिमिति यावत्। गताः प्राप्ताः तस्मिन् भगवतीत्यन्वयः। सरूपमिति पाठे समानरूपं साधर्म्यमिति यावत् ॥ ३९ ॥

न केवलं तन्निरीक्ष्य युद्धे हता एव स्वरूपं गता अपि तु तत्कामेन तमनुवर्तमाना अपीत्याशयेन आह — **ललितेति**। ललितया सुन्दरया गत्या विलासेन वल्गुहासेन सुन्दरतरहासेन मन्दस्मितेन प्रणयनिरीक्षणेन च कल्पितः उरुः अधिकः मानः बहुमानः यासां ता गोपवध्वः उन्मदेन उद्रिक्तकामेन अन्धाः स्वपरविवेकरहिताः [2]कृष्णमात्मानं मन्यमाना इत्यर्थः। अत एव कृतं भगवत्कृतं भगवतश्चेष्टितं पूतनानिरासादिकमिति यावत्। अनुकृतवत्यः अनुकुर्वत्यः सत्यः [3]एवञ्च स्फुटीभविष्यति। यस्य प्रकृतिं स्वभावं साधर्म्यमगन् अगमन् किलेति प्रसिद्धिर्द्योत्यते, तस्मिन् भगवति रतिरस्त्विति पूर्वेणान्वयः ॥ ४० ॥

युधिष्ठिरराजसूयसभास्थं रूपमनुसन्धाय तस्य स्वचक्षुर्विषयतां प्रार्थयते — **मुनीति**। युधिष्ठिरराजसूये मुनीनां गणैः नृपश्रेष्ठैश्च सङ्कुलेऽन्तस्सदसि सभामध्ये य एषां युधिष्ठिरकृतं मुनिगणाद्यभिमतं चार्हणमग्रपूजादिकम् उपपेदे प्राप्तः एष ईक्षणीयो मदन्तरात्मा श्रीकृष्णः मम दृशि गोचरो दृष्टिविषयस्सन् आविर्भवतु; यावत्तनुत्यागमवतिष्ठत्विति भावः। यद्वा आविरात्मा प्रकाशस्वरूपः दृशि गोचरोऽस्त्वित्यन्वयः ॥ ४१ ॥

अथ सर्वान्तरात्मानमनुसन्धाय उक्तविधं भगवन्तं प्राप्तोऽस्मीत्याह — **तम्** इति। तमुक्तविधमात्मना भगवता स्वेनैव तत्तत्कर्मानुरूपं कल्पितानां देहभाजां हृदि हृदि प्रतिहृदयं वस्तुत एकमेव प्रतिदृशं नैकधा [4]अनेकधा अवस्थितमर्कं सूर्यमिव धिष्ठितमधिष्ठितं समधिगतोऽस्मि [5]सम्प्राप्तोऽस्मि। कथम्भूतः ? विधूतः भेदमोहः अब्रह्मात्मकस्वतन्त्रवस्तुभेदज्ञानात्मको मोह एकरूपे आत्मनि देवमनुष्यादिभेदमोहश्च यस्य तथाभूतः यथा दिविष्ठः सूर्यः एक एव सन् प्रतिदृशं दृशा दृशा वारिगतेनापि [6]नयनेनात्माभिमुखं *जलादौ भासमानः जलादिगतमृद्धिह्रासादिदोषागोचरः व्याप्यवस्तुगतदोषसङ्गरहितोऽर्कस्तमिव हृदि हृदि धिष्ठितमिति दृष्टान्तार्थः। अन्यथाऽर्कदृष्टान्तो न घटते। अतोऽयं निर्दोषत्वे दृष्टान्तः "वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवं दर्शनाच्च" (ब्र. सू. 3-2-20) इति हि सूत्रम्। तत्र हि — "न स्थानतोऽपि परस्योभयलिङ्गम्" (ब्र. सू. 3-2-11) इत्यनेन पृथिव्यादिष्वन्तरात्मतयाऽवस्थितस्यापि परमात्मनो निरस्तनि-

खिलदोषत्वसमस्तकल्याणगुणाकरत्वरूपोभयलिङ्गश्रवणात् पृथिव्यादिगतदोषसंस्पर्शाभावमभिधाय "अत एव तूपमा सूर्यकादिवत्[7]" (ब्र. सू. 3-2-18) इत्यनेन यतो नानाविधेषु स्थानेषु स्थितस्यापि परस्य ब्रह्मणो न तत्प्रयुक्तदोषभा[8]क्त्वमत एव जलदर्पणादिप्रतिबिम्बितसूर्यादिवत् परमात्मा तत्र तत्रावस्थितोऽपि निर्दोष इति शास्त्रेषूपमा क्रियते। "आकाशमेकं हि यथा घटादिषु पृथग्भवेत्। तथाऽत्मैको ह्यनेकस्थो जलाधारेष्विवांशुमान्॥ एक एव हि भूतात्मा भूते भूते व्यवस्थितः। एकधा बहुधा चैव दृश्यते जलचन्द्रवत्॥" इत्यादिष्वित्यभिधाय पुनः "अम्बुवदग्रहणात्तु न तथात्वम्" (ब्र. सू. 3-2-19) इत्यनेन सूत्रेण अम्बुदर्पणादिषु यथा सूर्यमुखादयो गृह्यन्ते न तथा पृथिव्यादिषु स्थानेषु परमात्मा गृह्यते। अम्ब्वादिषु हि सूर्यादयो भ्रान्त्या तत्रस्था इव गृह्यन्ते न परमार्थतः तत्रस्थाः। इह तु "यः पृथिव्यां ति[9]ष्ठन् योऽप्सु तिष्ठन् य आत्मनि तिष्ठन्" *(बृह. उ. 3-7-22) इत्येवमादिना परमार्थत एव परमात्मा पृथिव्यादिषु स्थितो गृह्यते। अतः सूर्यादेरम्बुदर्पणादिप्रयुक्तदोषाननुषङ्गः तत्र तत्र स्थित्यभावादेव अतो न तथात्वं दार्ष्टान्तिकस्य न दृष्टान्ततुल्यत्वमिति परिचोद्य "वृद्धिह्रासभाक्त्वम्" (ब्र. सू. 3-2-20) इत्यादिसूत्रेण पृथिव्यादि-स्थानान्तर्भावात् स्थानिनः परब्रह्मणः स्वरूपतो गुणतश्च पृथिव्यादिस्थानगतवृद्धिह्रासादिदोषभाक्त्वमात्रं सूर्यादिदृष्टान्तेन निरस्यते। कथमित्यवगम्यते उभयदृष्टान्तसामञ्जस्यादेवमिति निश्चीयते। "आकाशमेकं हि यथा घटादिषु पृथग्भवेत्...॥ जलाधारेष्विवांशुमान्" इति दोषवत्स्वनेकेषु[10] अवस्थितेस्तस्य आकाशस्य वस्तुतोऽनवस्थितस्यांशुमतश्च [11]उभयस्य दृष्टान्तस्य उपादानं हि परमात्मनः पृथिव्यादिगतदोषभाक्त्वनिवर्तनमात्रे प्रतिपाद्ये समञ्जसं भवति। घटकरकादिषु यथा वृद्धिह्रासभाक्षु [12]पृथक् पृथक् संयुज्यमानमप्याकाशं वृद्धिह्रासादिदोषैः न स्पृश्यते। यथा च जलाधारेषु विषमेषु दृश्यमानोऽप्यंशुमान् तद्गतवृद्धिह्रासादिभिः न स्पृश्यते, तथाऽयं परमात्मा पृथिव्यादिषु नानाकारेषु अचेतनेषु चेतनेषु च स्थितः तद्गतवृद्धिह्रासादिदोषैरसंस्पृष्टः सर्वत्र वर्तमानोऽप्येक एव अस्पृष्टदोषग[13]न्धः कल्याणगु[14]णाकर एव। यथा जलादिषु वस्तुतः अनवस्थितस्याप्यंशुमतो हेत्वभावात् जलादिदोषानभिष्वङ्गः तथा पृथिव्यादिषु अवस्थितस्यापि परमात्मनो दोषप्रत्यनीकाकारतया दोषहेत्वभावाच्च न दोषगन्ध इति भाषितम्॥ ४२॥

इत्थं भगवति कृष्णे परमात्मनि मनोवाग्दृष्टीनां वृत्तिभिः व्यापारैरात्मानं प्रत्यगात्मानमावेश्य तेन संयुक्तमनुसन्धायेत्यर्थः स भीष्मोऽन्तःश्वासः अन्तर्लीनः प्राणवायुः यस्य सः तथाभूतः उपारमत् शरीरं विहाय अर्चिरादिगत्या परमपुरुषं प्राप्त इत्यर्थः॥ ४३॥

तदा भीष्मं निष्कले निर्दोषे ब्रह्मणि सम्पद्यमानं सर्वोपाधिविधूननपूर्वकं ब्रह्म प्रा[15]प्नुवन्तं [16]प्रत्यभिज्ञाय सर्वे तत्रत्यास्तूष्णीं बभूवुर्यथा दिनात्यये रात्रौ वयांसि पक्षिणस्तद्वत्॥ ४४॥

---

1. A,B इह युद्धे 2. W कृष्णं सामान्यं 3. A,B एतच्च 4. A,B omit अनेकधा 5. A,B omit सम्प्राप्तोऽस्मि 6. A,B नयनेनाभि°
* Here W's version is preferred to A's version तत्त्वादौ 7. B सूर्यकाशादिवत् 8. A,B भाक्त्वमपि तत एव 9. A,B omit तिष्ठन् योऽप्सु *काण्वपाठसम्बन्धिविज्ञानपर्यायस्थाने इदं वाक्यम् उपलभ्यते। बृह. उ. 3-7-22 10. W वस्तुतोऽवस्थितस्य आ° 11. A,B omit उभयस्य 12. A,B पृथग्युज्य° 13. A,B गन्ध° 14. A,B °गुणक° 15. A,B °प्त° 16. A,B अभिज्ञाय

**विज०** इह युद्धे यं निरीक्ष्य हताः, संरूपं वैष्णवं धाम गताः मुमूर्षोः म्रियमाणस्य मे तस्मिन् भगवति रतिरस्त्वित्यन्वयः । कथम्भूते ? विजयस्य अर्जुनस्य रथ एव कुटुम्बं रक्षणीयवर्गो यस्य स तथा तस्मिन्। आत्ततोत्रे गृहीतप्रतोदे धृता हयरश्मयः कविकामुखरज्जवो येन स तथा। जितश्रम इति भावप्रधानो निर्देशः। जितश्रम इति कृष्णविशेषणं वा स्वरूपं मूलरूपं वा॥ ३९॥

यस्य ललितानि गतिविलासादीनि तथोक्तानि ललितगतिश्च विलासश्च वल्गुहासो मन्दस्मितञ्च प्रणयेन निरीक्षणञ्च तथोक्तानि तैः कल्पितमुरु पृथु मानं यासां ताः तथोक्ताः ललितगत्यादिभिः कृष्णे कल्पितं समर्पितमुरुमानं महापूजा याभिस्ताः तथोक्ता इति वा, अत एव उत्कृष्टेन मदेन अन्धाः, कृतं [5] पूतनावधादिपराक्रममनुकृतवत्यः कृष्णायमानत्वेनानुकुर्वाणाः गोपवध्वो गोपस्त्रियो यस्य प्रकृतिं जडशरीरं विहाय स्वभावाविर्भावलक्षणं मोक्षमगुः किल, तस्मिन् कृष्णे रतिरस्त्विति पूर्वेणान्वयः ॥ ४० ॥

मुनीनां गणैः नृपाणां वर्यैश्च सङ्कुले निबिडे युधिष्ठिरराजसूये यज्ञे अन्तस्सदसि येषां ऋष्यादीनां मध्ये योऽर्हणमग्रपूजामभिपेदे प्राप्तवान्, युधिष्ठिरपृष्टभीष्ममुखेन अयमेवाग्रपूज्य इति शास्त्रतः उपपाद्यादत्तेति वा; स एष आत्मा [3] मत्कारुण्यान्मरणसमये मम दृशि गोचरो दृष्टिविषय आविरभूदहो मम भाग्यमिति शेषः। आविरात्मा प्रकाशरूप इति वा॥ ४१॥

आत्मत्वविवरणपूर्वकं स्तौति — **तमिममिति**। चक्षुरभिमानित्वेन प्रतिदृशं दृशं दृशं प्रति नैकधा चक्षुरिन्द्रियनियामकतया अनेकरूपं स्थितमर्कं यथैकमेव समधिगच्छति ज्ञानी तथा अहमप्यात्मना कल्पितानां सृष्टानां शरीरभाजां जीवानां हृदि हृदि [4] धिष्ठितं विविधं बहुरूपं स्थितं तमिममजं कृष्णमेकत्वसङ्ख्याविशिष्टं न द्वित्वोपेतं समधिगतोऽस्मि ज्ञातवानस्मि। कीदृशोऽहम्? विधूतभेदमोहोऽवतारगुणादिषु निरस्तभेदभ्रमबुद्धिः, यथास्थितवस्तुविज्ञानी वा अधिगन्त्रधिगमनाधिगम्यानां भेदस्याबाधितानुभवसिद्धत्वादन्योऽहं कृष्णोऽन्य इति भेदमोहनिरासवचनं निजदर्शनदुराग्रह-विजृम्भितैः अविद्याकल्पितमात्मपदप्रयोगेण निरस्तम्। अन्यथा तस्य वैयर्थ्यं स्यात्। शरीरभाजामित्यनेन चेतनबहुत्वसि-द्धेश्च "नित्यो नित्यानां चेतनश्चेतनानाम्" (श्वेता. उ. 6-13) इति श्रुतेः॥ ४२॥

* स्तुतिमुपसंहरति **क्षितिभरमिति**। श्वसन इव, वायुर्यथा वंशेषु वेणुषु मिथस्सङ्घर्षणात् वह्निं सृजति तथाऽयं श्रीकृष्णः क्षितिभरं भूभारम् असुरबललक्षणमवरोपितुम् अवतारयितुं कुरूणामक्षवंशे वह्निं द्यूताख्यदहनम् असृजत्। तमिममनुव्रतानां भक्तानामार्तिं हतवान् आर्तिहा अङ्घ्रिर्यस्य स तथोक्तः, तमजं श्रीकृष्णं हृदि परिरभ्य मर्त्यनीडं मरणधर्मशरीरं जहामि। स कृष्णः अत्रानुग्रहं करोत्विति वाक्यशेषः॥

कथङ्कारं शरीरमत्याक्षीदिति तत्राऽऽह — **कृष्ण** इति। एवमुक्तप्रकारेण मनसो वाचो दृष्टेर्वृत्तिभिर्हृदि परिरभ्येत्युक्तत्वादात्मनि हृदि स्थिते बहिस्स्थिते च श्रीकृष्णे भगवत्यात्मानं स्वजीवचैतन्यलक्षणमन्तःकरणं नाहं स्वतन्त्रः तदधीन एवेत्यावेश्य निधाय स भीष्मोऽन्तःश्वासो रेचकपूरकैः कृत्वा श्वासोच्छ्वासरूपप्राणापानौ कुम्भके कृत्वा मूलाधारात् ब्रह्मनाड्या नाभिचक्रादिक्रमेण उदानवायुमूर्ध्वं नीत्वा उपारमत्। शरीरमजहदित्येकान्वयः ॥ ४३ ॥

समागतास्ते सर्वे निष्कले षोडशकलावर्जिते ब्रह्मणि हरौ सम्पद्यमानं प्राप्तवन्तं भीष्ममाज्ञाय तूष्णीं बभूवुः। कथमिव? दिनात्यये सन्ध्याकाले वयांसि पक्षिण इव इत्यन्वयः ॥ ४४ ॥

---

1 B,K,M स्व° § Here M' s version is preferred to A' s version 'बलादि' 2 K,M पूजार्हः 3 B,K,M add परमात्मा 4 B,K,M वि°

**रा० कृ०** इह युद्धे यं भगवन्तं निरीक्ष्य हतास्सर्वे तत्सरूपं तत्समानरूपं गताः प्राप्ताः तादृशे विजयरथकुटुम्बे रक्षणीयार्जुनरथे इत्यर्थः। आत्ततोत्रे गृहीतप्रतोदे धृतहयरश्मिनि धृताश्वप्रग्रहे तच्छ्रिया रथसारथ्यशोभया ईक्षणीये दर्शनीये भगवति श्रीकृष्णे रतिः मुमूर्षोर्मर्तुमिच्छोः मे मम अस्तु भवतु।

अत्र विजयरथकुटुम्बपदेन भगवतः शरणागतरक्षणैकपरायणत्वं, धृतहयरश्मिपदेन इन्द्रियमनोधारणाव्यञ्जकेन राजयोगसाधनमार्गश्च सूच्यते ॥ ३९ ॥

ललितगतिविलासवल्गुहासप्रणयनिरीक्षणकल्पितोरुमानाः ललितगतिः सुन्दरगमनं, विलासः रासादिः वल्गुहासः मनोहरहासः प्रणयः स्नेहः तत्पूर्वकनिरीक्षणमेतैस्सर्वैः कल्पितः उरुः मानः सत्कारः यासां ताः उन्मदान्धाः उत्कटमदेनान्धाः स्वपरविवेकरहिताः कृतं तस्य भगवतः गोवर्धनोद्धरणादिकम् अनुकृतवत्यः गोपवध्वः यस्य प्रकृतिं स्वरूपं अगन् अगमन्।-अगुरिति श्रीविजयध्वजस्वीकृतपाठः समुचिततरः-तस्मिन् देवे मे रतिरस्त्विति पूर्वेणान्वयः।

लौकिकास्तावदन्यानपि लौकिकान् याभिः क्षोभयन्ति ताभिरेव चेष्टाभिः लोकातीतोऽपि भगवान् भक्तानां मनांस्यावर्ज्य स्वायत्तीकरोतीति ज्ञेयम् ॥ ४० ॥

युधिष्ठिरराजसूये धर्मराजस्य राजसूययागसन्दर्भे मुनिगणनृपवर्यसङ्कुले अन्तस्सदसि सभामध्ये एषां पूर्वोक्तमुनिगणादीनाम् ईक्षणीयः दर्शनीयः अर्हणमग्रपूजाम् उपपेदे प्राप, स एष आत्मा सकलजगदन्तर्यामी मम दृशि गोचरः दृष्टिविषयः आविः प्रकटो वर्तत इति शेषः ॥ ४१ ॥

प्रतिदृशं सर्वप्राणिनां दृशं दृशं प्रति नैकधा अनेकधा प्रतीतमपि वस्तुतः एकमर्कमिव आत्मकल्पितानां स्वसृष्टानां शरीरभाजां प्राणिनां हृदि हृदि प्रतिहृदयं धिष्ठितमधिष्ठितम् अन्तर्यामिणमिति यावत्। अतः अजं जन्मादिविकाररहितं तमिमं वासुदेवं विधूतभेदमोहः निवृत्तजीवजडान्तर्यामिभेदः अहं समधिगतोऽस्मि सम्यक् प्राप्तोऽस्मि।

प्रतिदृशं भिन्नत्वेन दृश्यमानोऽप्यर्को यथा एक एव भवति तथा प्रतिदेहं विभिन्नोऽप्यात्मा एक एव सर्वान्तर्यामी। तादृशसर्वान्तर्यामिस्वरूपं वासुदेवं भेदबुद्धिविरहितो भीष्म सम्यक् ज्ञातवानिति भावः ॥ ४२ ॥

एवमात्मनि सर्वजगदन्तरात्मनि भगवति श्रीकृष्णे मनोवाग्दृष्टिवृत्तिभिः मनोवाग्दृष्टीनां वृत्तिभिः आत्मानं प्रत्यगात्मानमावेश्य एकीकृत्य अन्तश्श्वासः अन्तर्लीनश्वासः सः भीष्मः उपारमत् उपरतोऽभूत् देहं त्यक्तवानित्यर्थः ॥ ४३ ॥

निष्कले बन्धरहिते ब्रह्मणि श्रीकृष्णाख्ये परब्रह्मणि भीष्मं सम्पद्यमानमैक्यं प्राप्तमाज्ञाय विदित्वा ते तत्रत्यास्सर्वे जनाः, दिनात्यये रात्रौ वयांसीव पक्षिण इव तूष्णीं बभूवुः निश्शब्दा अभवन् ॥ ४४ ॥

**तत्र दुन्दुभयो नेदुर्देवमानववादिताः [1] ।**
**शशंसुस्साधवो राज्ञां [2] खात्पेतुः पुष्पवृष्टयः ॥ ४५ ॥**

**तस्य निर्हरणादीनि सम्परेतस्य भार्गव!**
**युधिष्ठिरः कारयित्वा मुहूर्तं दुःखितोऽभवत् ॥ ४६ ॥**

**तुष्टुवुर्मुनयो हृष्टाः कृष्णं तद्गुह्यनामभिः ।**
**ततस्ते कृष्णहृदयाः स्वाश्रमान् प्रययुः पुनः ॥ ४७ ॥**

**ततो युधिष्ठिरो गत्वा सहकृष्णो गजाह्वयम् ।**
**पितरं सान्त्वयामास गान्धारीं च तपस्विनीम् ॥ ४८ ॥**

**पित्रा चानुमतो राजा वासुदेवानुमोदितः ।**
**चकार राज्यं धर्मेण पितृपैतामहं विभुः ॥ ४९ ॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां प्रथमस्कन्धे
युधिष्ठिरराज्यप्रलम्भो नाम नवमोऽध्यायः ॥ ९ ॥

---

1 B °दानव , K.M °गन्धर्व° 2 AF, GF राजन्!; K.M ब्रह्मन्!

**श्रीध०** **तत्रेति**। देवैः मानवैश्च वादिताः राज्ञां मध्ये ये साधवोऽनसूयवः ॥ ४५ ॥

**तस्येति**। निर्हरणादीनि दाहसंस्कारादीनि सम्परेतस्य सम्यक् [1] परं परमात्मानं इतस्य प्राप्तस्य मुक्तस्यापीत्यर्थः ॥ ४६ ॥

**तुष्टुवु**रिति। तस्य गुह्यनामभिर्वेदोक्तैः कृष्ण एव हृदयं येषां ते कृष्णहृदयाः ॥ ४७ ॥

**तत** इति। पितरं धृतराष्ट्रम्। तपस्विनीं [2] पुत्रशोकजनितसन्तापवतीम् ॥ ४८ ॥

**पित्रेति**। विभुः राजा युधिष्ठिरः अनुमतोऽनुज्ञातः ॥ ४९ ॥

इति श्रीमद्भागवते प्रथमस्कन्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकाया
व्याख्यायां नवमोऽध्यायः ॥ ९ ॥

---

1 A.B **सम्यक् परेतस्य** 2 A.B omit पुत्रशोकजनित°

**वीर॰** तत्र तदा देवैर्मानवैश्च वादिता दुन्दुभयो नेदुः दध्वनुः साधवो भागवताश्शशंसुरहो भीष्मस्य भाग्यं माहात्म्यं चानितरसाधारणमिति तुष्टुवुः। राज्ञां पुष्पवृष्टयः राजभिः कारिताः पुष्पवृष्टयः खादुपरिदेशात् पेतुः पतिता[1] इत्यर्थः ॥ ४५ ॥

हे भार्गव! सम्परेतस्य परलोकं प्राप्तस्य भीष्मस्य निर्हरणादीनि दाहादिकर्माणि कारयित्वा युधिष्ठिरो मुहूर्तं दुःखितो बभूव ॥ ४६ ॥

तथा मुनयो हृष्टाः कृष्णं तस्य कृष्णस्य गुह्यं स्वरूपरूपयाथात्म्यं[2] वेदान्तवेद्यं तत्प्रकाशकैः नामभिस्तुष्टुवुः। ततस्ते मुनयः कृष्ण एव हृदयं येषां तथाभूताः पुनराश्रमान् प्रययुः ॥ ४७ ॥

ततः कृष्णेन सहितो युधिष्ठिरो हस्तिनापुरं गत्वा पितरं धृतराष्ट्रं तपस्विनीं पतिव्रतां गान्धारीं च सान्त्वयामास ॥ ४८ ॥

ततः पित्रा धृतराष्ट्रेणानुज्ञातः वासुदेवेन भगवताऽनुमोदितश्च विभुर्युधिष्ठिरः पित्रादिक्रमप्राप्तं राज्यं धर्मेण चकार शशास ॥ ४९ ॥

इति श्रीमद्भागवते प्रथमस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां नवमोऽध्यायः ॥ ९ ॥

---

1 W पतितवत्यः 2 A,B स्वरूपया॰

**विज॰** तत्र भीष्मस्य निर्याणसमये खात् आकाशात् भीष्ममूर्ध्नीति शेषः ॥ ४५ ॥

सम्परेतस्य मृतस्य निर्हरणादीनि शवसंस्कारपुरस्सराणि कर्माणि कृत्वा भीमादिभिश्च कारयित्वा ॥ ४६ ॥

भगवन्महिम्ना हृष्टरोमाञ्चितसर्वाङ्गाः तस्य कृष्णस्य गुह्यनामभिः वेदशिरोगतात्यन्तरहस्यनामभिः कृष्णहृदयाः कृष्णो हृदये येषां ते तथा, कृष्णे हृदयं मनो येषामिति वा ॥ ४७ ॥

गजाह्वयं गजसमानननामानं हस्तिनापुरम्। पितरं धृतराष्ट्रम् ॥ ४८ ॥

अनुमोदितोऽनुज्ञातः पित्रा धृतराष्ट्रेण च पितृपैतामहं पितृपितामहागतं धर्मेण शास्त्रोक्तवर्त्मना विभू राज्यकरणशक्तिमान् ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां
टीकायां प्रथमस्कन्धे नवमोऽध्यायः ॥ ९ ॥

**रा॰ कृ॰** तत्र तदा भीष्मनिर्याणसमये देवमानववादिताः दुन्दुभयो नेदुः दध्वनुः। राज्ञां मध्ये साधवः शशंसुः तुष्टुवुः स्तुतिमकुर्वन्। खात् आकाशात् पुष्पवृष्टयः पेतुः अपतन् ॥ ४५ ॥

हे भार्गव! सम्परेतस्य मृतस्येति सामान्यार्थः। सम्यक् परं परमेश्वरम् इतस्य प्राप्तस्येति विशेषार्थः। तस्य भीष्मस्य निर्हरणादीनि दाहादीनि कर्माणि युधिष्ठिरः कारयित्वा मुहूर्तं क्षणकालं दुःखितोऽभवत् ॥ ४६ ॥

ततो हृष्टाः मुनयः तद्गुह्यनामभिः तस्य रहस्यनामभिः गूढार्थनामभिरिति यावत्। कृष्णं तुष्टवुः स्तुतवन्तः। पुनश्च ते मुनयः कृष्णहृदयाः कृष्णमयहृदयाः स्वाश्रमान् प्रययुरगच्छन् ॥ ४७ ॥

ततोऽनन्तरं युधिष्ठिरः सहकृष्णः कृष्णसहितस्सन् गजाह्वयं हस्तिनापुरं गत्वा पितरं धृतराष्ट्रं तपस्विनीं पुत्रशोकेन दयनीयां गान्धारीं च सान्त्वयामास विनयोक्तिभिरनुनीतवान् ॥ ४८ ॥

पित्रा धृतराष्ट्रेणानुमतः अनुज्ञातः वासुदेवानुमोदितश्च वासुदेवेन चानुज्ञातः राजा विभुः युधिष्ठिरः पितृपैतामहं पित्रादिपरम्पराप्राप्तं राज्यं धर्मेण चकार शशास ॥ ४९ ॥

इति श्रीमद्भागवते प्रथमस्कन्धे
श्रीराधाकृष्णप्रणीतायां सुधीसुधायां व्याख्यायां
नवमोऽध्यायः ॥ ९ ॥

## दशमोऽध्यायः

### शौनक उवाच

हत्वा स्वरिक्थस्पृधं[1] आततयिनो युधिष्ठिरो धर्मभृतां वरिष्ठः[2] ।
सहानुजैः प्रत्यवरुद्धभोजनः कथं प्रवृत्तः किमकारषीत्ततः[3] ॥ १ ॥

### सूत उवाच

वंशं कुरोर्वंशदवाग्निनिर्हृतं[4] संरोहयित्वा भवभावनो[5] हरिः ।
निवेशयित्वा निजराज्य ईश्वरो युधिष्ठिरं प्रीतमना बभूव ह[6] ॥ २ ॥

* याजयित्वाश्वमेधैस्तं त्रिभिरुत्तमकल्पकैः ।
तद्यशः पावनं दिक्षु शतमन्योरिवातनोत् ॥

निशम्य भीमोक्तमथाच्युतोक्तं[7] प्रवृत्तविज्ञानविधूतविभ्रमः ।
शशास गामिन्द्र इवाजिताश्रयः[8] परिध्युपान्तामनुजानुवर्तितः[9] ॥ ३ ॥

कामं ववर्ष पर्जन्यः सर्वकामदुघा मही ।
सिषिचुः स्म व्रजान्[10] गावः पयसोधस्वतीर्मुदा[11][12] ॥ ४ ॥

नद्यस्समुद्रा गिरयः सवनस्पतिवीरुधः ।
फलन्त्योषधयस्सर्वाः काममन्वृतु[13] तस्य वै ॥ ५ ॥

नाऽऽधयो व्याधयः क्लेशा दैवभूतात्महेतवः[14] ।
अजातशत्रावभवन् जन्तूनां राज्ञि कर्हिचित् ॥ ६ ॥

उषित्वा हास्तिनपुरे[15] मासान् कतिपयान् हरिः ।
सुहृदां च[16] विशोकाय स्वसुश्च प्रियकाम्यया ॥ ७ ॥

आमन्त्र्य[17] चाभ्यनुज्ञातः परिष्वज्याऽभिवाद्य तम्[18] ।
आरुरोह रथं कैश्चित्परिष्वक्तोऽभिवादितः ॥ ८ ॥

---

1 H,V,W °ह 2 K,M गवि स्थिरः 3 H,V °कारुषी°. K,M,W कार्षी° 4 W °र्ह° 5 K,M °तापनो 6. B omits ह * This additonal verse is shown in Vijayadhvaja's commentary, under foot note in K & M The commentary is to be found in its proper place 7 H,K,M,V °तोदितं 8. W °च्यु° 9 K,M प्रणिध्युपात्ता° 10 K,M °जं 11 K,M पयसात्यूधसो मुदा 12. B °हुः 13. AF, GF कामता मृत्युरत्र वै 14 AF GF °ता इहेतयः 15 H,K,M,V ह° 16 H,V शोकनाशाय 17 H,V °न्त्र्याथाभ्य° 18 AF, GF तान्; K,M ताम्

## श्रीधरस्वामिविरचिता भावार्थदीपिका

दशमे कृतकार्यस्य हस्तिनापुरतो हरेः।
स्त्रीभिस्संस्तूयमानस्य वर्ण्यते द्वारकागमः॥

[1]राज्यं चकारेत्युक्तं, तत्र पृच्छति शौनकः — **हत्वेति**। स्वस्य रिक्थे[2] धने स्पर्धन्ते स्म ये ते तथा। यद्वा, स्वरिक्थाय स्पृत्[3] सङ्ग्रामो येषामत[4] एव धनादिहरणादाततयिनः, तान् हत्वा प्रत्यवरुद्धभोजनो बन्धुवधदुःखेन सङ्कुचितभोगो राज्यलाभेन प्राप्तभोगो[5] वा कथं राज्ये प्रवृत्तः, प्रवृत्तो वा ततः **किमकार्षीत्**[6]? [7]॥१॥

राज्यप्राप्तौ श्रीकृष्णस्य प्रीतिं पर्यालोच्य प्रवृत्त इत्याशयेन उत्तर माह — **वंशमिति**। वंशं कुरोः संरोहयित्वा परीक्षिद्रक्षणेन संरोह्य अङ्कुरितं कृत्वा। कथम्भूतम्? वंशदवाग्निनिर्हृतं, वंश एव दवो वनं, तस्मादुद्भूतो यः क्रोधरूपोऽग्निः, तेन निर्हृतं दग्धम्। निजराज्ये निवेश्य च॥२॥

प्रवृत्तौ **हेतुमुक्त्वा, किमकार्षी** दित्यस्य उत्तरमाह — **निशम्येति**। प्रवृत्तं यद्विज्ञानं परमेश्वराधीनं, जगत् न स्वतन्त्रम् इत्येवंभूतं तेन **विधूतो** विभ्रमः, अहं कर्तेत्येवम्भूतो मोहो यस्य सः। अनुजैरनुवर्तितः सेवित स्सन्, अजितः श्रीकृष्ण एव आश्रयो यस्य सः। परिधिः समुद्रः। उपान्तां तत्पर्यन्तां गां पृथ्वीं पालयामास॥३॥

तस्य राज्यमनुवर्णयति — **काममिति** त्रिभिः। मही सर्वकामदुघा[9] बभूव। व्रजान् गोष्ठानि। ऊधस्वती **रूध**-स्वत्यः। ऊधः क्षीराशयः। **तद्वत्यः,**[10] स्थूलोधस इत्यर्थः। सिषिचुः अभ्यषिञ्चन्॥४॥

**नद्य** इति। अन्वृतु ऋत्वावृतौ॥५॥

**नेति**। **आधयो मनोव्यथाः**। **व्याधयो** रोगाः। क्लेशाः शीतोष्णादिकृताः। दैवञ्च **भूतानि** च आत्मा च हेतुर्येषां ते, आधिदैविकाधिभौतिकाध्यात्मिकाः जन्तूनां नाभवन्॥६॥

**इदानीं द्वारकागमनं** निरूपयितुमाह — **उषित्वेति**। स्वसुः सुभद्रायाः, सुहृदां युधिष्ठिरादीनाम्॥७॥

**आमन्त्र्येति** तं युधिष्ठिरम्॥८॥

---

1 H,V add तत्र हस्तिनापुरे 2. H,V धनेऽपि स्पर्धया स्पृहां कुर्वतः, यद्वा 3 H,V स्पृद् **सङ्ग्रामो**; B स्पृधः (स्पृत्) **सङ्ग्रामो** 4 H,V **येषां ते अत एव तद्धरणीहरणा दात**° 5 H,V प्राप्ताधिकभोगो 6 H,V °कारुषीत् 7. H,V add किमकरोत्? अत्र रेफादुडार्षः 8 B रूपं 9. H,V add **सर्वाभीष्टदोग्ध्री** 10 H,V add **प्रथमार्थे द्वितीया**

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

धर्मेण राज्यं चकारेत्युक्तम्, तदेव विस्तरतो बुभुत्सुः उक्तानुवादपूर्वकं पृच्छति शौनकः — **हत्वेति**। **स्वरिक्थस्पृधः** स्वदायलिप्सून्। स्पृह इति पाठेऽपि स एवार्थः। हकारस्य धकार आर्षः। अत एवाऽऽततायिनो दुर्योधनादीन् हत्वा प्रत्यवरुद्धं प्रत्यधिगतं प्रतिप्राप्तं भोजनं राज्यं येन स धर्मभृतां वरिष्ठो युधिष्ठिरः। गविष्ठिर इति

पाठे, गवि वचसि स्थिरो युधिष्ठिरः अनुजैर्भीमादिभिस्सह कथं **प्रवृत्तः?** राज्यशासन इति शेषः। ततो राज्यशासनानन्तरं किमकार्षीदिति **प्रश्नद्वयम्**। रेफविश्लेष आर्षः॥ १॥

तत्र तावत् कथं प्रवृत्त इति प्रश्नस्योत्तरं विवक्षुरुपोद्घाततया[2] भगवतः कृतकृत्यत्वमाह — **वंशमिति**। वंशदवाग्निना वेणुवनसङ्घर्षणजदवाग्नितुल्येन कुलकलहेन दग्धं विनष्टं कुरोर्वंशं संरोहयित्वा, परीक्षिद्रूपेणोत्पादयित्वा भवभावनः, भवो जगत् तं भावयति वर्धयतीति भवभावनः। हेतुगर्भं इदं, भवभावनत्वात्संरोहयित्वा। **हरिः ईश्वरः** श्रीकृष्णो युधिष्ठिरं निजराज्ये निवेशयित्वा प्रीतमना बभूव। कृतकृत्यत्वादिति भावः॥ २॥

प्रश्नस्योत्तरमाह — **निशम्येति** चतुर्भिः। भीष्मोक्तम् अच्युतोक्तञ्च निशम्य प्रवृत्तेन सुप्रतिष्ठितेन विज्ञानेन देहात्मविवेकादिरूपेण विधूतः विभ्रमो देहात्मादिभ्रमो यस्य। अनुजैर्भीमादिभिः अनुवर्तितो युधिष्ठिरः। इन्द्र इवाच्युत एवाश्रयो यस्य। अच्युतमाश्रयते सेवते भजत इति वा तथाभूतः। परिध्युपान्तां दिगन्तावधिं चतुस्समुद्रान्तां पृथिवीं शशास॥ ३॥

अजातशत्रौ राज्ञीत्येत त्काममित्यादि पूर्वश्लोकद्वयेऽपि[4] अपकर्षणीयम्। अजातशत्रौ युधिष्ठिरे राज्ञि सति पर्जन्यः कामं यथेष्टं ववर्ष। सर्वान् कामान् दोग्धि प्रपूरयतीति तथा, मह्यभूत्। गावः पयसा क्षीरेण ऊधस्वतीरूधस्वत्यः। भूम्न्यत्र मतुप्। पृथूधस इत्यर्थः। मुदा व्रजान् व्रजस्थान् प्रति सिषिचुः क्षीरं दुदुहुः॥ ४॥

तस्य युधिष्ठिरस्य सम्बन्धिन्यः नद्यादयः स्वधर्मान्, न तत्यजुः इति शेषः। वनस्पतिभिः वीरुद्भिश्च सहिताः सर्वा ओषधयः। अन्वृतु ऋत्वनुकूलं फलानि[5] फेलुः॥ ५॥

अजातशत्रौ राज्ञि सति, जन्तूनां प्राणिनां कदाचिदप्याधयो मानसिका, व्याधयो दैहिकाश्च, क्लेशाः तानेवाह दैवभूतात्महेतवः। आधिदैविका आधिभौतिका आध्यात्मिका नाभवन्॥ ६॥

कि..नकार्षीत्तत इत्यस्योत्तरं विवक्षिष्यन् पूर्वं प्रस्तुतस्य निवृत्तप्रयाणस्य भगवतो वृत्तान्तमाह — **उषित्वा** इत्यादिना यावदेकादशाध्यायसमाप्ति। सुहृदां युधिष्ठिरादीनां विशोकाय शोकाभावाय। स्वसुश्च स्वभगिन्याः सुभद्रायाः प्रियकाम्यया च हास्तिनपुरे कतिपयान् मासानुषित्वा अवस्थाय॥ ७॥

तं युधिष्ठिरमामन्त्र्य पृष्ट्वा तेनाऽभ्यनुज्ञातः तं परिष्वज्याभिवाद्य च कैश्चिन्न्यूनवयस्कैः परिष्वक्तः आलिङ्गितोऽभिवादितश्च हरिः श्रीकृष्णो रथमारुरोह॥ ८॥

---

1 W °ध ˜ W विवक्षुस्तदुपो° 3 W °द्य 4 W पूर्वोक्तश्लो° 5. W फलन्ति पफलुः

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

हास्तिनपुरात्[1] द्वारकायात्राकथनपूर्वकं भगवत्प्रसादलब्धयुधिष्ठिरराज्यसमृद्धिकथनेन **हरेर्महिमैव वर्ण्यते अस्मिन्न-ध्याये**। तत्र हरितद्भक्तकथायां अवितृप्तमनाश्शौनकः पुनरपि पृच्छतीत्याह — **हत्वेति**। **स्वरिक्थं स्वराज्याख्यद्रव्यम्-**

**स्माकमिति स्पर्धन्त इति स्वरिक्थस्पृधः,** तान् आततायिनः प्रतिवीरं[2] हत्वा मर्तुकामान् दुर्योधनादीन् हत्वा अनुजैस्सह **प्रत्यवरुद्धभोजनः** संक्षिप्तभोगो धर्मभृतां धर्मप्रवर्तकानां व्यासादीनां गवि वाचि स्थिरो निश्चलो युधिष्ठिरः कथं केन प्रकारेण राज्यपालने प्रवृत्तः किं कर्माकार्षीत्? अथ कृष्णश्च तेन सह हस्तिनपुरमागतः किमकृत, तदस्माकं ब्रूहीत्येकान्वयः ॥ १ ॥

पाण्डवानां निरतिशयहरिकृपयैव राज्यादिलाभ इति ज्ञापयन् पाण्डवस्थापनादिकृष्णमहिमानं तावदाह — **वंश** मिति। **ईश्वरो** जगच्चोष्टायां समर्थः हरिः वंशलक्षणदवात् वनात् उत्पन्नाग्निना नितरां हृतं कुरो राज्ञो वंशं **संरोहयित्वा** परीक्षिदङ्कुरेण जनयित्वा, युधिष्ठिरं निजराज्ये निवेशयित्वा प्रीतमना बभूवेत्येकान्वयः। नित्यप्रीतस्य कादाचित्कप्रीत्युक्तिः लौकिकापेक्षयेत्येतमर्थं हशब्देन प्रसिद्धद्योतनेनाह। भवभावन इति पाठे सृष्टिवर्धनं[3] अनेन संरोहणशक्तिरदर्शि। ईश्वर इत्यनेन राज्यस्थापनमाहात्म्यमसूचि। भवतापन इत्यनेन संसारोन्मूलनकर्तुः हरेः पाण्डवरिपुनिबर्हणं किमु वक्तव्यमिति न्यायो दर्शितः ॥ २ ॥

* **याजयित्वा** — इत्ययमुक्तार्थः ॥

किमकार्षीदिति प्रश्नं परिहरति — **निशम्येति**। अथ युधिष्ठिरो भीष्मोक्तं धर्मसर्वस्वं तथाऽच्युतस्य कृष्णस्योदितं वाक्यञ्च निशम्य तदुभयं श्रुत्वा प्रवृत्तमुत्पन्नं यद्विज्ञानं तेन विशेषेण धूतो निरस्तो विविधो **भ्रमः** तत्त्वे नानासंशयो यस्य स तथोक्तः श्रीकृष्णाश्रयोऽनुजैर्भीमादिभिरनुवर्तितः अमात्यादिसप्तप्रणिधिभिः उपात्तां प्राप्तां, गाम् अवनिं स्वर्गमिन्द्रो यथा शशासेत्येकान्वयः। भूमिं स्वर्गसमानां अपालयदिति द्योतनाय गामित्युक्तम्। "अमात्या मन्त्रिणो दूताः श्रेणयश्च पुरोहिताः। पुरं जनपदश्चेति सप्त प्रणिधयः स्मृताः॥" (वैज. को. 3-6-197) इति वचनात् परिधिः समुद्रः स एव उपान्तेऽवसाने यस्याः सा। परिध्युपान्तामिति पाठो बादरायणमतापरिज्ञानात् उच्छ्वसित इति ज्ञातव्यम् ॥ ३ ॥

कृष्णाश्रयफलमाह — **काम** मिति। पर्जन्यो मेघाभिमनी देवः। सर्वेषामभीष्टं दोग्धीति सर्वकामदुघा, गावः सौरभेय्यः पयसा क्षीरेण गोष्ठं सिषिचुः सिक्तवत्यः। अतिस्थूलं ऊधः क्षीरपात्रं यासां ताः अत्यूधसः ॥ ४ ॥

नद्यादयो रत्नानि फलन्ति। वनस्पतयः[4] वीरुधो मातुलिङ्गादयः, ओषधयो व्रीह्यादयः। पर्जन्यादयः तस्य युधिष्ठिरस्य काममिच्छानुसारेण अन्वृतु ऋतावृतौ वृष्ट्यादिमन्तः अभूवन्नित्यन्वयः ॥ ५ ॥

न केवलं इष्टप्राप्तिरनिष्टनिवृत्तिश्च सुतरामित्याह — **नाऽऽधय** इति। अजातशत्रौ युधिष्ठिरे जन्तूनां राज्ञि रञ्जके सति कदाचिदप्या[5]धिदैविकादिहेतवः क्लेशा नाऽऽसुरित्येकान्वयः आधिः मानसी पीडा। व्याधिः भगन्दरादिः। कथम्भूताः? दैवानि भूतानि च आत्मा च हेतुः निमित्तं येषां ते तथोक्ताः अधिदैवहेतुः अनावृष्ट्यादिः, अधिभूतहेतुः उन्मादादिः, अध्यात्महेतुः कुष्ठादिः ॥ ६ ॥

इदानीं कुरुपुरं प्रविष्टः कृष्णः किमकार्षीदित्यभिप्रायिकं प्रश्नं परिहरति — **उषित्वेति**। सुहृदां पाण्डवानां विशोकाय स्वसुः सुभद्रायाश्च प्रियकाम्यया कतिचिन्मासान् हस्तिनापुरे उषित्वा ॥ ७ ॥

आमन्त्र्य च द्वरकां गमिष्यामीति युधिष्ठिरायोक्त्वा शिष्टाचाररक्षणाय युधिष्ठिरं परिष्वज्याभिवाद्य कैश्चिदर्जुनादिभिः आलिङ्गितो वन्दितश्च रथ मारुरोहेत्यन्वयः ॥ ८ ॥

---

1. K,M ह° 2. A,B °वारं 3. B,K,M °नः 4. K adds पनसादयः 5. K,M °प्यधिदैवका° * Commentary on addl V.

## श्रीराधाकृष्णप्रणीता सुधीसुधा

स्वरिक्थस्पृहः स्वधने स्पर्धया स्पृहां कुर्वतः आततायिनः दुर्योधनादीन् हत्वा प्रत्यवरुद्धभोजनः पुनस्स्ववशीकृतभोगः धर्मभृतां वरिष्ठः युधिष्ठिरः अनुजैर्भीमदिभिस्सह कथं प्रवृत्तः? राज्यपालने इति शेषः। ततोऽनन्तरं च किं अकारुषीत्, अकरोत्? ॥ १ ॥

वंशदवाग्निनिर्हृतं वंशदवाग्निना वेणुवनसङ्घर्षणजन्य दवानलतुल्येन कुलकलहेन दग्धं कुरोः वंशं संरोहयित्वा परीक्षिद्रक्षणेनाङ्कुरितं कृत्वा, भवभावनः, भवं भक्तानामभ्युदयं भावयति उत्पादयतीति भवभावनः ईश्वरो हरिः श्रीकृष्णः युधिष्ठिरं निजराज्ये निवेशयित्वा प्रीतमना बभूव ह अभवत् खलु ॥ २ ॥

भीष्मोक्तं, अथानन्तरं अच्युतोदितश्च वचः निशम्य प्रवृत्तविज्ञानविधूतविभ्रमः, प्रवृत्तेन प्ररूढेन विज्ञानेन विधूतो विभ्रमो यस्य सः। अनुजानुवर्तितः सोदरैः स्सेवितः युधिष्ठिरः इन्द्र इव अजिताश्रयः अच्युताश्रयस्सन् परिध्युपान्तां समुद्रपर्यन्तां गां पृथिवीं शशास।

प्रथमं भगवता प्रतिबोधितस्याऽपि धर्मराजस्य पापविषयकः संशयो नैव निवृत्तः। अनिवृत्ते च तस्मिन् सर्वाण्यपि शास्त्राणि श्रुतानि नैव रक्षन्ति। उक्तञ्च गीतासु — "संशयात्मा विनश्यति" (भ. गी. 4-40) इति भगवत्कल्पितभीष्मोपदेशेन विगतसंशयस्य तु युधिष्ठिरस्य अभिमतोऽभूत् श्रीकृष्णोपदेशः।

इन्द्रस्य स्वर्गभ्रंश नारायणाश्रय राक्षससंहार पुनस्स्वर्गलाभाः श्रूयन्ते ह्यस्माभिः इतिहासेषु। तत्र देवराजत्वाभिमानी इन्द्रः स्वर्गात् भ्रश्यति अहङ्कारमयराक्षसाक्रान्तत्वात्। नारायणसमर्पितबुद्धेस्तस्य तु तद्राक्षसापगमेन पुनः स्वर्गप्राप्तिः। अयमर्थो वामनावतारादभिज्ञायते। वेदोपवर्णितः इन्द्रः इन्द्रियनियामकप्रज्ञायाः सङ्केतः। विगलितविष्णुस्मृतिः सा देहेन्द्रियजालं आश्रित्य तदधिदेवताप्राभवप्रमत्ता सती स्वर्गसुखानुभवाय प्रयतते। तदा सा व्यवह्रियते अहङ्कार इति यं परिवृत्य कामक्रोधादिरक्षोगणः तमिन्द्रमानन्दमयस्वर्गात् पातयन्ति। तथापीश्वरे शरणं गता हीन्द्रप्रज्ञा प्रणष्टमानन्दमयं स्वर्गं सर्वसमर्पणजन्यं भजते। एवं भगवता निजराज्ये निवेशितो धर्मजोऽपि भगवत्समर्पितबुद्धिः प्रध्वस्ताहङ्कृतिः परं प्रशान्तचित्तः स्वर्ग मनुबभूवेति तत्त्वम् ॥ ३ ॥

धर्मजे राज्यं शासति सति पर्जन्यो वर्षाभिमानी देवः कामं यथेच्छं ववर्ष। मही सर्वकामदुघा सर्ववाञ्छादात्री अभूदिति शेषः। ऊधस्वतीः स्थूलोधस्वत्यः गावः मुदा सहिताः पयसा क्षीरेण व्रजान् गोष्ठानि सिषिचुः स्म बहुक्षीरं दुदुहुरित्यर्थः ॥ ४ ॥

धर्मजे राज्यं शासति नद्यः समुद्राः गिरयः सवनस्पतिवीरुधः वृक्षलतासहितास्सर्वा ओषधयः तस्य युधिष्ठिरस्य काममिच्छाम् इच्छानुसारेणेत्यर्थः। अन्वृतु ऋतावृतौ। फलन्ति। नदीनां फलं सस्यादिवृद्धिः, समुद्रफलं रत्नादिसम्पत्तिः, गिरीणां फलं धातुसमृद्धिः। वनस्पतिवीरुधां फलं फलपुष्पादिसमृद्धिः। ओषधीनां फलञ्च व्रीहियवगोधूममुद्गमाषादिसमृद्धिः ॥ ५ ॥

अजातशत्रौ धर्मजे राज्ञि सति कर्हिचित् कदाचिदपि जन्तूनां प्राणिनाम् आधयो मनोव्यथाः। व्याधयो रोगा दैवभूतात्महेतवः, दैवं, भूतानि, आत्मा च हेतुर्येषां ते तथाभूताः आधिदैविकाधिभौतिकाध्यात्मिकाः इत्यर्थः। क्लेशाः नाऽभवन्।

यत्र तावत् जनाः दानधर्मपरस्परसम्भावनासहकारादिसल्लक्षणलक्षिताः यज्ञार्थं कर्माऽऽचरन्ति, तत्र वर्षसस्यादिसमृद्धिः सम्पद्यते। अपि च ते स्वयं सुखिताः परेषां सुखसम्पिपादयिषवो यदि स्युः, पञ्चभूतान्यपि सुखाधायकानि भवन्ति। यत्र पुनः शेमुषीविभवाधिकारबलादयः प्राधान्येनाऽऽराध्यन्ते, प्रजाश्च स्वार्थसम्पादनैकपरायणाः भवन्ति, तत्र पञ्चभूतप्रकोपेन अतिवृष्ट्यनावृष्टिदुःखदारिद्र्यरोगादिबाधाः सम्भवन्ति। सार्वकलिकीचेयं व्यवस्था। केचित्तु विप्रतिपन्नमतयः कलियुगे नेयमुपपद्यते, सत्यदूरेति च विवदन्ति। प्रत्यक्षामपीमां द्रष्टुमनिच्छन्तो निमीलितनयनाः केचन वर्तन्ते। किन्त्वयमद्याप्यनुभवसिद्धो विषयः, यत् यज्ञार्थकर्माचरणपराः प्रशान्तसुखमयजीवनाः, तदन्ये दुःखमयजीवना वर्तन्त इति। तस्मा द्भगवन्नियुक्तकर्माचरणपरस्य युधिष्ठिरस्य राज्यं सुखसमृद्धिमयं अभूदिति भावः। आधिदैविकादि-क्लेशास्तु सुगमा एव ॥ ६ ॥

हरिः सुहृदां युधिष्ठिरादीनां मित्राणां शोकनाशाय स्वसुश्च सोदर्यास्सुभद्रायाश्च प्रियकाम्यया कतिपयान् मासान् हास्तिनपुरे उषित्वा, अथ तं युधिष्ठिरमामन्त्र्य पृष्ट्वाऽभ्यनुज्ञातः, तेनानुमतः, परिष्वज्य तं आलिङ्ग्य अभिवाद्य प्रणम्य कैश्चित् परिष्वक्तः आलिङ्गितः अभिवादितः नमस्कृतश्च सन् रथमारुरोह।

सर्वनमस्कार्यो भगवान् नारायणावतारः श्रीकृष्णोऽपि युधिष्ठिरमभ्यवन्दत इत्यत्र किञ्चिदुच्यते — युधिष्ठिरः वयसा कृष्णादपि ज्यायान्। कनिष्ठाः वृद्धान् नमस्कुर्वन्ति। वृद्धाश्च कनिष्ठानाशासत इति शिष्टाचारः। आचारस्य धर्महेतुत्वात् धर्मस्य प्रभुत्वात् अच्युतस्य भगवदवतारस्य च धर्मसंस्थापनार्थत्वात् धर्ममूलमाचारं स्वयमनुसृतवान् भगवान् श्रीकृष्ण इति ज्ञेयम्। तदुक्तं महाभारते — "आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः (भार. 13-107-147) इति ॥ ७, ८ ॥

सुभद्रा द्रौपदी कुन्ती विराटतनया तथा।
गान्धारी धृतराष्ट्रश्च युयुत्सु र्गौतमो यमौ ॥ ९ ॥

वृकोदरश्च धौम्यश्च स्त्रियो मत्स्यसुतादयः।
न सेहिरे विमुह्यन्तो विरहं शार्ङ्गधन्वनः ॥ १० ॥

**[2]सत्सङ्गान्मुक्तदुस्सङ्गो हातुं नोत्सहते बुधः ।**
**कीर्त्यमानं यशो यस्य सकृदाकर्ण्य रोचनम् ॥ ११ ॥**

**[3]तस्मिन् न्यस्तधियः पार्थाः सहेरन् विरहं कथम् ।**
**दर्शनस्प[4]र्शसंलाप शयनासनभोजनैः ॥ १२ ॥**

**सर्वे तेऽनिमिषै[5]रक्षै स्तमनुद्रुतचेतसः ।**
**वीक्षन्तः स्नेहसम्बद्धा[*] विचेलु[6]स्तत्र तत्र ह ॥ १३ ॥**

**न्यरुन्धन्नुद्गलद्बाष्प मौत्कण्ठ्याद्देवकीसुते ।**
**निर्यात्यगारान्नो[8]ऽभद्रमिति [9]स्याद्बान्धव[10]स्त्रियः ॥ १४ ॥**

**मृदङ्गशङ्खभेर्यश्च वीणापणवगोमुखाः ।**
**[11]धुन्धुर्यानकघण्टाद्या नेदुर्दुन्दुभय[12]स्तथा ॥ १५ ॥**

**प्रासादशिखरारूढाः कुरुनार्यो दिदृक्षया[13] ।**
**[14]ववृषुः कुसुमैः कृष्णं[15] प्रेमव्री[16]डास्मितेक्षणाः ॥ १६ ॥**

---

1 H,K,M,V विदुरोऽथ युधिष्ठिरः 2 K,M त° 3 K,M तस्याभ्यस्त° 4 B,H,V °स्पर्शना° 5 B °र्नैत्रै° * W °द्धाद्वि° 6. K,M °रु° 7 AF GF निर्यात्यागारतोऽभद्र° 8 K,M,W °न्नाभद्र°, H,V °न्माभद्र° 9 H,V हृ° 10 AF,GF °वाः स्त्रियः 11. H,V चर्चर्या° 12. B °स्तदा ; H,V °स्समम् 13 H,V °वः 14 AF, GF ववर्षुः 15 K,N,M,W °ष्णो 16 K,M °ड°

**श्रीध॰ सुभद्रेति ।** युयुत्सुः धृतराष्ट्राद्[1]वैश्यायां जातः । गौतमः कृपः । यमौ नकुलसहदेवौ ॥ ९ ॥

**वृकोदर** इति । अन्याश्च स्त्रियः, मत्स्यसुता उत्तरा । तस्याः पुनर्ग्रहणं गर्भरक्षककृष्णविरहे मोहाधिक्यात् । यद्वा मत्स्यसुता सत्यवती ॥ १० ॥

तेषां [2]कृष्णविरहासहनं कैमुत्यन्यायेनाऽऽह — **सत्सङ्गादिति** द्वाभ्याम् । सतां सङ्गाद्धेतोः मुक्तः पुत्त्रादिविषयो दुस्सङ्गो येन सः । सद्भिः कीर्त्यमानं रोचनं रुचिकरं[3] यस्य यशः सकृदप्याकर्ण्य सत्सङ्गं त्यक्तुं न शक्नोति ॥ ११ ॥

**तस्मिन्निति ।** दर्शनादिभिः तस्मिन् श्रीकृष्णे न्यस्ता अध्यस्ता धीर्येषां ते ॥ १२ ॥

**सर्व** इति । अत एवानिमिषैः अक्षैः नेत्रैः तमेव वीक्षमाणः तत्रतत्रा[4]र्हणानयनाद्यर्थं चलन्ति स्म । यतः स्नेहेन सम्यग्बद्धाः । अत एव तमनुद्रुतानि [5]गतानि चेतांसि येषां ते ॥ १३ ॥

**न्यरुन्धन्निति ।**[6] अगारान्निर्याति निर्गच्छति सति । बान्धवस्त्रियः औत्कण्ठयात् आसक्त्यतिशयाद्धेतोः **उद्गलत्** स्रवत् बाष्पम् अश्रु न्यरुन्धन् नेत्रेष्वेव स्तम्भितवत्यः । तत्र हेतुः अभद्रं नो[7] स्यात्, अमङ्गलं मा[8]भूदित्येतदर्थम् ॥ १४ ॥

**मृदङ्गेति ।** मृदङ्गादयो दश वाद्यभेदाः[9] ॥ १५ ॥

**प्रासादेति ।** प्रेमव्रीडा[10]स्मितपूर्वकं ईक्षणं[11] यासां ताः ॥ १६ ॥

---

1 B °द्वै° 2 B adds पुनः श्री° 3 H,V add मनोहरमित्यर्थः 4 H,V °णाद्यानयनार्थं 5 B H V अनुग° 6 B adds देवकी सुते
7 H,V मा 8 H,V मा भवेदि° 9 H,V add समं एककालम् 10 H,V °व्रीडाभ्यां स्मितपूर्वं 11 H,V add अवलोकन

**वीर॰** तदा सुभद्राप्रभृतयः विमुह्यन्तो मोहिताः[1]। **शार्ङ्गधन्वनः** श्रीकृष्णस्य विरहं विश्लेषं न सेहिरे नासहन्त। **मत्स्यसुता** सत्यवती ॥ ९, १० ॥

युक्तञ्चैतदित्यभिप्रायेणाऽऽह — **सत्सङ्गादिति** द्वाभ्याम्। सतां साधूनां सङ्गाद्धेतोर्मुक्तः दुस्सङ्गो[2] दुरात्मसंयोगो येन स बुधः पुमान् अस्य[3] रोचनं रुचिकरं कीर्त्यमानं यश एव सकृदाकर्ण्य हातुं नोत्सहते ॥ ११ ॥

तस्मिन् भगवति कृष्णे दर्शनादिभिर्निहिता धीः येषां ते पार्थाः तस्य विरहं कथं सहेरन्? न सहेरन्नेवेत्यर्थः ॥ १२ ॥

ते पार्थादयस्सर्वे स्नेहश्च सम्बन्धश्च तयोस्समाहारः, तस्मात् स्नेहात् शरीरसम्बन्धाच्च, अनुद्रुतं अनुसृतं चेतो येषां, तथाभूतास्सन्तोऽनिमिषैर्निमेषरहितैः अनन्यपरैरक्षैः अक्षिभिः। अक्षशब्दः इन्द्रियवाच्यप्यौ[4]चित्यात् चक्षुःपरः। तमेव वीक्षन्तः तत्र तत्र चेलुः परिबभ्रमुः ॥ १३ ॥

तदा बान्धवाः कुन्तीप्रभृतयः **स्त्रियः**, अगारात् गृहात् देवकीसुते निर्याति निर्याते सति, अभद्रं न स्यादिति बुद्ध्या[5] प्रेमपूर्वकानुध्यानात् उद्गलदपि बाष्पं न्यरुन्धन् ॥ १४ ॥

मृदङ्गादयः समं युगपत् नेदुः दध्वनुः ॥ १५ ॥

कुरूणां नार्यः कृष्णं द्रष्टुमिच्छवः प्रासादशिखरारूढाः। प्रेमादीन्यासां सन्तीति तथा। **द्वन्द्वान्मत्वर्थीयः** अर्श आद्यच्[6] ॥ १६ ॥

---

1 W मोह गताः 2 W °सङ्गो 3 B W य° 4 W °त्रौ° 5 W adds औत्कण्ठ्यात् 6 W adds प्रेमादिपूर्वकमीक्षणं यासा वा इति वा। कृष्णे कुसुमैर्ववर्षुः

**विज॰** सुभद्रादयः शार्ङ्गधन्वनो हरे विरहं न सेहिरे इत्यन्वयः। युयुत्सुः धृतराष्ट्राद्वैश्यायां जातो दुर्योधनानुजः। गौतमः कृपाचार्यः। यमौ नकुलसहदेवौ। मत्स्यसुतादय उत्तराप्रभृतयो विमुह्यन्तः कर्तव्यतामजानन्तः ॥ ९, १० ॥

पार्था मुकुन्दविरहं न सेहिर इत्येतदाश्चर्यं न भवतीत्याह — **तत्सङ्गादिति**। तस्य हरेः सङ्गात् सेवालक्षणात् मुक्तो दुस्सङ्गोऽन्यत्र पुत्रदारादिषु सङ्गो येन स मुक्तदुस्सङ्गो बुधो विवेकी जनः तं हातुं नोत्सहते

**तस्मादित्यन्वयः**। तत्र कैमुत्यन्यायमाह — कीर्त्यमानमिति। भागवतैः कीर्त्यमानं यस्य कृष्णस्य यशः सकृदाकर्ण्य पुंसां रोचनं रुचिजनकम्॥ ११॥

दर्शनस्पर्शनादिभिः अभ्यस्तधियः पार्थास्तस्य विरहं कथं सहेरन्, नैव सहेरन्निति किमु वक्तव्यमिति भावः॥ १२॥

विरहमसहमानानां तेषां भक्तिप्रसरसम्प्लवातिरेकमाह — **सर्व** इति। अनिमिषैः पक्ष्मव्यापाररहितैः अक्षैर्नेत्रैस्तं वीक्षमाणाः कृष्णानुगतहृदयाः ते सर्वे स्नेहात् तत्र तत्र विचेरुरित्यन्वयः। यावद्यावत् दूरङ्गतः **तावत्तावदुत्तुङ्गं** भूपृष्ठमारुह्य वीक्षमाणाः तस्थुः। अदर्शनं याते तस्मिन् चेतसा तमनुदुद्रुवुरित्यर्थं हशब्दः सूचयति॥ १३॥

**पाण्डवस्त्रियः देवकीसुते** अगारात्, न गारो निगरणं नाशलक्षणं यस्मात् सोऽगारः। अगाः वृक्षा एव अराणि **वंशवंश्यलक्षणानि** यस्येति वा। अगम् अगमनम् **कान्त्यतिशयादेः** अरं अलं यस्मादिति वा। अगानां स्वर्णात्मकानां पर्वतानां आरः प्रवेशलक्षणं गमनं यस्मिन्निति वा। तस्मात्पुरात् निर्याति सति, अभद्रममङ्गलं न स्यादिति भावेनौत्कण्ठ्यादुद्गतं बाष्पं नेत्रजलं न्यरुन्धन्[1] स्तम्भितवत्य इत्येकान्वयः॥ १४॥

मार्दङ्गिकादिभिराहता **मृदङ्गादयो** नेदुरित्यन्वयः। भेरी नाम **चर्मपिहिता,** दीर्घमहद्दारुकृतो वाद्यविशेषः। **घुन्घुरिकाख्यात्मकं वाद्यं दुन्दुभिः तिरश्चीनवाद्यविशेषः।** आनकः पटहः। पणवो **ढक्काविशेषः**॥ १५॥

**प्रेम्णा** व्रीडेन स्मितेन च सहितमीक्षणं, दर्शनं यासां तास्तथोक्ताः। व्रीडाशब्द उभयलिङ्गः। प्रेमव्रीडाभ्यां यत्[2] **स्नेहपूर्वमीक्षणं यासामिति वा कुसुमैः कुसुमानि,** व्यत्ययो भक्त्यतिशयद्योतनर्थम्[3]। पुष्पैः करणैरिति वा॥ १६॥

---

1 B.K.M न्यरुन्धयन् 2 B.K.M यत् स्मित तत्पूर्व॰ 3 B,K,M ॰र्थः

**रा॰ कृ॰** अथ सुभद्रा, द्रौपदी, कुन्ती, विदुरः, युधिष्ठिरः, गान्धारी, **धृतराष्ट्रः,** युयुत्सुः, गौतमः कृपः, यमौ नकुलसहदेवौ, वृकोदरो भीमः, धौम्यः पुरोहितः, मत्स्यसुतादयः सत्यवत्यादयः **स्त्रियः** विमुह्यन्तः मोहं गताः सन्तः शार्ङ्गधन्वनः कृष्णस्य विरहं न सेहिरे। नासहन्त॥ ९, १०॥

सत्सङ्गात् मुक्तदुस्सङ्गः बुधः ज्ञानी कीर्त्यमानं, सद्भिरितिशेषः। **रोचनं** रुचिकरं यस्य भगवतो यशः सकृत् एकवारमप्याकर्ण्य श्रुत्वा हातु सत्सङ्गं त्यक्तु नोत्सहते न **शक्नोति;** तस्मिन् श्रीकृष्णे दर्शनस्पर्शनालापशयनासनभोजनैः न्यस्तधियः **समर्पितबुद्धयः** पार्थाः कुन्तीपुत्राः युधिष्ठिरादयः विरह श्रीकृष्णस्य वियोगं कथं सहेरन्? न कथमपीति भावः॥ ११, १२॥

ते पार्थादयस्सर्वे **स्नेहसम्बद्धाः** अनुद्रुतचेतसः कृष्णमनुसृतचित्ताः अनिमिषैः अक्षैः नेत्रैः तं श्रीकृष्णं वीक्षन्तस्तत्र तत्र विचेलुः सञ्चरन्ति स्म॥ १३॥

देवकीसुते श्रीकृष्णे अगारात् भवनात् निर्याते निर्गच्छति सति, अभद्रममङ्गलं मा स्यात् मा भवेदिति **बान्धवस्त्रियः** **कुन्तीद्रौपद्यादयः** औत्कण्ठ्यात् प्रेमातिशयात् **उद्गलत्** प्रस्रवत् बाष्पं अश्रुजलं न्यरुन्धन् स्तम्भितवत्यः ॥ १४ ॥

श्रीकृष्णप्रयाणकाले मृदङ्गशङ्खभेर्यः वीणापणवगोमुखाः चर्चर्यानकघण्टाद्याः दुन्दुभयः एते सर्वे वाद्यविशेषाः समं युगपत् नेदुः दध्वनुः ॥ १५ ॥

कुरुनार्यो दिदृक्षवः कृष्णं द्रष्टुकामाः प्रासादशिखरारूढाः सौधाग्रमधिरुढास्सत्यः प्रेमव्रीडास्मितेक्षणाः प्रेमलज्जासूचकं यत् स्मितं हासः तेन युक्तमीक्षणमवलोकनं यासां ताः तथाभूतास्सत्यः कृष्णं कुसुमैः ववृषुः ॥ १६ ॥

**सितातपत्रं जग्राह मुक्तादामविभूषितम् ।**
**रत्नदण्डं गुडाकेशः प्रियः प्रियतमस्य ह ॥ १७ ॥**

**उद्धवस्सात्यकिश्चैव व्यजने परमाद्भुते ।**
**विकीर्यमाणः[1] कुसुमैरेजे मधुपतिः पथि ॥ १८ ॥**

**अश्रूयन्ताऽऽशिषस्सत्या स्तत्र तत्र द्विजेरिताः ।**
**नानुरूपानुरूपाश्च निर्गुणस्य गुणात्मनः ॥ १९ ॥**

**अन्योन्यमासीत्सञ्जल्प उत्तमश्लोकचेतसाम् ।**
**कौ[2]रवेन्द्रपुरस्त्रीणां सर्वश्रुतिमनोहरः ॥ २० ॥**

---

1 K,M °णैः 2 H,V पौ°

**श्रीध०** **सितेति**। गुडाका निद्रा। तस्या ईशो जितनिद्रोऽर्जुनः[1] ॥ १७ ॥

**उद्धव** इति। व्यजने चामरे जगृहतुः। म[2]धुपतिः श्रीकृष्णः ॥ १८ ॥

**अश्रूयन्तेति**। सत्याः श्रीकृष्णे तासामव्यभिचारात्, किन्तु, नानुरूपाश्च ताः अनुरूपाश्च आशिषः निर्गुणस्य परमानन्दस्य सुखी भवेत्यादयो नानुरूपाः। गुणात्मनो मा[3]नुष्यनाट्यावतारे अनुरूपाश्चेत्यर्थः। सन्धिरार्षः ॥ १९ ॥

**अन्योन्य** मिति। सर्वासां श्रुतीनां मनोहरः उपनिषदोऽपि मूर्तिमत्यस्तं समजल्पन् अभ्यनन्दन्नित्यर्थः ॥ २० ॥

---

1 B adds (गुडाका धनुर्विद्या तस्या ईश इति वा धनुर्वेदपारग इत्यर्थः) 2 H,V मधूनां देशानां पतिः 3 H,V मानुष्यवतोऽनु°, B मनुष्यनाट्या°

**वीर०** प्रियः प्रीतिविषयः। गुडाकेशः अर्जुनः प्रियतमस्य कृष्णस्य सितातपत्रं श्वेतच्छत्रं जग्राह। कथम्भूतम्? मुक्तानां दामभिस्सरैः विभूषितं, रत्नमयो दण्डो यस्य तत् ॥ १७ ॥

उद्धवस्सात्यकिश्चोभौ परमे श्रेष्ठेऽद्भुते च व्यजने जगृहतुः। पथि कुसुमै र्विकीर्यमाणो मधुपति र्यदुपतिः। यदूना मेव मधव इति नामान्तरम्। तच्च नवमे स्फुटीभविष्यति। रेजे रराज॥ १८॥

निर्गुणस्य सत्त्वादिप्राकृतगुणरहितस्य गुणात्मनः ज्ञानादिषाड्गुण्यस्वभावस्य[1] "सत्त्वादयो न सन्तीशे" (विष्णु. पु. 1-9-44), "तेजोबलैश्वर्य" (विष्णु. पु. 6-5-85) इत्यादिवचनात् नानुरूपाः अवाप्तसमस्तकामत्वात् अनुरूपाः भक्तिस्नेहकारितत्वात्, तत्र तत्र द्विजेरिताः, अत एव सत्या आशिषः अश्रूयन्त॥ १९॥

उत्तमश्लोके कृष्णे एव चेतांसि यासां तासां, कौरवेन्द्रपुरस्त्रीणां अन्योन्यं सर्वेषां श्रुतिमनोहरः सुखकरः श्रोत्राणि मनांसि च हरति वशीकरोतीति तथा वा सञ्जल्पः संवादः आसीत्॥ २०॥

---

1 W ज्ञानशक्त्यादि°

**विज॰** गुडाका निद्रा। "निद्रा गुडाका सम्प्रोक्ता (सुप्तञ्च) प्रमीला (प्रमीया) मृत्युरुच्यते" (वैज. को. 3-6-197) इत्यभिधानम्। तस्या ईशो गुडाकेशो जितनिद्रोऽर्जुन इन्द्रकीलके विनिद्रो भूत्वा तप्ततपाः पशुपतेरेतन्नाम लब्धवान्। गुडवत् रक्तकेशो वा। दीर्घस्तु छान्दसः। मुक्तादामविभूषितं मौक्तिकमालालङ्कृतप्रान्तमण्डलं रत्नखचितदण्डं सितातपत्रं श्वेतच्छत्रं जग्राहेत्यन्वयः। हरेरात्मादेरतिशयेन प्रियत्वं "तदेतत् प्रेयः" (बृह. उ. 1-4-7) इत्यादिश्रुतिप्रसिद्धं हशब्देनाह। अर्जुनस्य कैङ्कर्यातिशयदर्शी वा, स्वसारथ्यकरणलक्षणापराधपरिहारार्थो वा॥ १७॥

उद्धवसात्यकी च व्यजने जगृहतुरिति पूर्वेण सम्बन्धः। एवशब्दः स्वहस्ताभ्यामेव जगृहतुः, न त्वन्याभ्यां स्वदासाभ्यामित्यस्मिन्नर्थे। मधूनां यादवगोत्रविशेषाणां पतिः; मुक्ताधीशो वा। कुसुमैः कुरुपुरन्ध्रिकरकमलमुक्तैरिति शेषः पथि राजमार्गे॥ १८॥

कुरुपुरे तत्र तत्र तत्तन्मार्गे द्विजवरमुखनिस्सृताः "दुष्टान् जहि, साधून् पालय पालय, अस्माननुगृहाण" इत्यादिकाशिषः शुभवाक्यप्रबन्धाः अश्रूयन्तेत्यन्वयः। कीदृश्यः? सत्याः यथार्थविषयाः, निर्गुणस्य सत्त्वादिगुणप्रवृत्त्युदासीनस्य अण्डाद्बहिःस्थितस्य नानुरूपा अननुकूला इति सत्त्वादिगुणकार्याण्डे स्थित्वा सत्त्वादिगुणान् आतयति, सततं प्रवर्तयतीति गुणात्मा। अत सातत्यगमने इति धातोः उणादिप्रत्ययनिमित्तमेतद्रूपम्। तस्य पालनादिकर्तुरनुरूपाः पालनानुग्रहादिगुणात्मनो वा। चशब्दसमुच्चये, इवार्थे वा॥ १९॥

न केवलं कुरुपुरस्त्रियो हरौ पुष्पावकिरणमकुर्वन्, किन्तु स्तुतिमपीति भावेनाह— **अन्योन्यमिति**। उत्तमश्लोकचेतसां कौरवेन्द्रपुरस्त्रीणां सर्वश्रुतीनां वेदाभिमानिनीनां देवतानां मनोहरः सर्वेषां जन्तूनां श्रुतीः श्रवणानि मनांसि च हरतीति वा। परस्परं सञ्जल्पः स्तुतिलक्षणः संलाप आसीदित्येकान्वयः॥ २०॥

**रा॰ कृ॰** प्रियः हरेरिष्टः गुडाकेशः गुडाकायाः निद्राया ईशः जितनिद्रः प्रियतमस्य हरेः कृते मुक्तादामविभूषितं मौक्तिकमालालङ्कृतं रत्नदण्डं रत्नखचितदण्डं सितातपत्रं श्वेतच्छत्रं जग्राह गृहीतवान्॥ १७॥

उद्धवस्सात्यकिश्च परमाद्भुते परमश्रेष्ठे अद्भुते च व्यजने, जगृहतुरिति शेषः। मधुपतिः मधूनां यादवानां पतिः श्रीकृष्णः पथि मार्गे कुसुमैः विकीर्यमाणः रेजे बभासे॥ १८॥

भगवतो निर्गुणस्य नानुरूपाः अननुरूपाः गुणात्मनः तस्य अनुरूपाश्च सत्याः द्विजेरिताः ब्राह्मणोक्ता आशिषः तत्रतत्र अश्रूयन्त श्रुताः॥ १९॥

उत्तमश्लोकचेतसां उत्तमश्लोके पुण्यकीर्तौ भगवति सक्तं चेतः यासां तासां कौरवेन्द्रपुरस्त्रीणां अन्योन्यं सञ्जल्पः संवादः सर्वश्रुतिमनोहरः सर्वेषां श्रोत्रचित्ताकर्षकः. अथवा सर्वश्रुतीनां मनोहरस्सन् आसीत् वक्ष्यमाणप्रकारेण प्रावर्तत॥ २०॥

**स्त्रिय ऊचुः**

**स वै किलाऽयं पुरुषः[1] पुरातनो य एक आसीदविशेष आत्मनि ।**
**अग्रे गुणेभ्यो जगदात्मनीश्वरे निमीलितात्मन्[2]निशि सुप्तशक्तिषु ॥ २१ ॥**

**स एव भूयो निजवीर्यचोदितां स्वजीवमायां प्रकृतिं सिसृक्षतीम् ।**
**अनामरूपात्मनि रूपनामनी विधित्समानोऽनुससार शास्त्र[3]कृत् ॥ २२ ॥**

**स वा अयं यत्पदमत्र सूरयो जितेन्द्रिया निर्जितमातरिश्वनः ।**
**पश्यन्ति भक्त्युत्कलितामलात्मना नन्वेष[4] सत्त्वं परिमार्ष्टुमर्हति ॥ २३ ॥**

**स वा अयं सख्यनुगीतसत्कथो वेदेषु[5] गुह्येषु च गुह्यवादिभिः ।**
**य एक ईशो जगदात्मलीलया सृजत्यवत्यत्ति न तत्र सज्जते ॥ २४ ॥**

**यदा ह्यधर्मेण तमोधियो[6] नृपा जीवन्ति तत्रैष हि सत्त्वतः[7] किल ।**
**धत्ते[8] भगं सत्यमृतं दयां यशो भवाय रूपाणि दधद्युगे युगे ॥ २५ ॥**

**अहो[9] अलं श्लाघ्यतमं यदोः कुलं अहो[10] अलं पुण्यतमं मधोर्वनम् ।**
**यदेष पुंसामृषभः[11] श्रियः[12] पतिः स्वजन्मना[13] चङ्क्रमणेन चाञ्चति ॥ २६ ॥**

---

1. W °षोऽद्वितीयो 2. K,M °तात्मा निशि 3. K,M °स्ति° 4. H,V नह्येष; M नत्वेष 5 K,M वेद° 6. K,M तमोऽधिका; WF तमोजुषो 7. K,M सा° 8. H,K,M,V °र्मं 9. H,V बत 10. K,M त्व° 11 H,K,M,V प्रियश्रवाः 12. N प्रियः 13 AF,GF सु°

**श्रीध०** तत्र तेजस्सौन्दर्याद्यतिशयेन विस्मिताभ्यस्सखीभ्योऽन्याः स्त्रियः कथयन्ति; नात्र विस्मयः कार्यः साक्षादीश्वरात्मत्वादस्येति — **स वै** इत्यादिभिः चतुर्भिः। वै स्मरणे। किलेति प्रसिद्ध्या प्रमाणद्योतकम्[1]। य एक एवाद्वितीयः पुरुषः आसीत् सएवाऽयं श्रीकृष्णः। कुत्राऽऽसीत् अविशेषे आत्मनि निष्प्रपञ्चे निजस्वरूपे कदा अग्रे गुणेभ्यो गुणक्षोभात्पूर्वम्। तथा निशि प्रलये च तस्य लक्षणं जगतामात्मनि जीवे निमीलितात्मनि। निमीलितात्मन् इति

लुप्तसप्तम्यन्तं पदम्। जातावेकवचनम्। ईश्वरे लीनरूपेषु जीवेषु सत्स्वित्यर्थः। ननु जीवानां ब्रह्मत्वात् कथं लयः, तत्राऽऽह — सुप्तासु शक्तिषु सतीषु जीवोपाधिभूतसत्त्वादिशक्तिलय एव जीवलय[2] इत्यर्थः॥ २१॥

तदेवं सृष्टेरादौ प्रलयानन्तरञ्च निष्प्रपञ्चावस्थानं उक्त्वा सृष्टिप्रलययोर्मध्ये स[3]प्रपञ्चावस्थानमाहुः — **स** इति। स एवाप्रच्युतस्वरूपस्थितिरेव प्रकृतिमनुससार अधिष्ठितवान्। भूयः पुनः सृष्टिप्रवाहस्य अनादित्वात्। कीदृशीम्? निजवीर्यचोदितां स्वकालशक्तिप्रेरितां स्वांशभूतानां जीवानां मायां मोहिनीम्। अत एव सिसृक्षतीं, स्रष्टुमिच्छतीम्। किमर्थम् अनुससार? अनामरूप आत्मनि जीवे रूपनामनी विधातुमिच्छन् उपाधिसृष्ट्या जीवानां भोगायेत्यर्थः। कर्माणि च विधातुं वेदान् कृतवानित्याहुः शास्त्रकृदिति॥ २२॥

अस्य दर्शनमतिदुर्लभमस्माभिः लब्ध मित्याहुः — **स** इति। स वै अयम्। यस्य पदं स्वरूप मङ्घ्रिं वा। निर्जितो मातरिश्वा प्राणो यैः। ह्रस्वत्वमार्षम्। ते सूरय एव पश्यन्ति। केन? भक्त्योत्कलित उत्कण्ठितोऽमलो य आत्मा बुद्धिस्तेन। 'दृश्यते त्वग्र्यया बुद्ध्या' (कठ. उ. 3-12) इति श्रुतेः। बुद्धिवैमल्यस्याऽपि अयमेव हेतुरित्याहुः। ननु हे सखि! एष एव नः सत्त्वं बुद्धिं परिमार्ष्टुं सम्यक् शोधयितुमर्हति, न तु योगादय इत्यर्थः। यद्वा नु[4] अहो एष[5] सत्त्वं ज्ञानं परिमार्ष्टुं नाशयितुं दूरगमनेन अप्रत्यक्षीभवितुं नार्हति। किन्त्वनेन सहैव[6] गन्तव्यमित्यर्थः॥ २३॥

पुण्यश्लोकतामाहुः — **स** इति। हे सखि! यो वेदेषु रहस्यागमेषु च रहस्यनिरूपकैः अनुगीतसत्कथः, अनुगीताः स[7]त्यः कथा यस्य स एवायम्। गानप्रकारमाहुः य एक ईश इत्यादिना॥ २४॥

एवम्भूतस्य नानावता[8]रे कारण माहुः — **यदा हीति**। तमोव्याप्ता धी र्येषां ते नृपाः यदाऽधर्मेण जीवन्ति केवलं प्राणान् पुष्णन्ति तत्र तदैष एव भवाय स्थित्यै सत्त्वतो विशुद्ध[9] सत्त्वेन रूपाणि दधत् भगादीनि धत्ते प्रकटयति युगे युगे तत्तदवसरे। भगमैश्वर्यम्। सत्यं सत्यप्रतिज्ञत्वम्। ऋतं यथार्थोपदेशकत्वम्। दयां भक्तकृपाम्। यशोऽद्भुतकर्मत्वम्॥ २५॥

विशेषतः श्रीकृष्णावतारसौभाग्यं वर्णयन्ति[10] — **अहो** इत्यादिभिः पञ्चभिः। यत् यस्मादेष पुरुषोत्तमः श्रियः पतिः स्वजन्मना यदोः कुलमञ्चति पूजयति सत्करोति, अतः श्लाघ्यतमं तत्। चङ्क्रमणेन च मधोर्वनं मधुरां[11] सत्करोत्यतः तत्पुण्यतममिति [12]तमबर्थस्यापि अत्यन्तातिशये अलमिति। तत्राप्याश्चर्ये अहो इत्युक्तम्॥ २६॥

---

1. B,H,V °नम् 2. H,V add इव लक्ष्यते 3. H,V omit स 4. B,H,V हे सखि एष 5 H,V add एव नः 6. B adds (अस्माभिः) 7. H,V सत्कथाः 8. H,V °तारकारणत्व° 9. H,V add °रूपेण 10. H,V °ति 11. B adds अञ्चति 12. B तमप्प्रत्ययार्थस्या°; H,V तमप्प्रत्ययस्यात्यन्तातिशयेन

**वीर०** सङ्कल्पमेवाह — **स वै किल** इत्यादिभिर्दशभिः। तावत् प्रलयदशायां कृत्स्नजगदुपादानत्वेन निमित्तत्वेन च य एकोऽवस्थितः, यश्च ततो "बहु स्यां प्रजायेय", (तैत्ति. उ. 2-6) "नामरूपे व्याकरवाणि" (छान्दो. उ. 6-3-2) इति सङ्कल्पपूर्वकं नामरूपव्याकर्ता यश्च "तस्य ह वा एतस्य महतो भूतस्य

निश्वसितमेतद्यदृग्वेदः, यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" (सुबा. उ. 2-1) इति वेदादिभिः[1] कर्तृत्वेन, तत्प्रवर्तकत्वेन च प्रसिद्धः, यश्च मुमुक्षुभिः ध्येयो दृश्यश्च[2] वेदान्तवेद्यस्वरूपस्वभावः, यश्च जगत्सर्गस्थितिलय-लीलः स एवाऽयं कृष्ण इति जल्पन्ति चतुर्भिः। निशि प्रलयदशायां गुणेभ्यः सत्त्वादिगुणोन्मेषादग्रे पूर्वं[3] सुप्तशक्तिषु सतीषु कर्मरूपशक्तिषु सुप्तासु फलप्रदानाय अप्रवृत्तास्वित्यर्थः। आत्मनि स्वस्मिन् जगदात्मनि सूक्ष्मचिदचिद्रूपजगच्छरी-रके कार्यदशायां जगदन्तरात्मनीति वा ईश्वरे नियन्तरि निमीलितात्मन् आत्मा मतिः निवृत्तसर्गादिसङ्कल्पे स्वस्मिन्नविशेषे सति विशेषाः पृथिव्यादिभूतानि "महदाद्या विशेषान्ता" इति प्रयोगात् तच्च प्रदर्शनार्थं कार्यवर्गरहिते सति नामरूपविभागरहिते सतीति वा[4] एकोऽद्वितीयः एक अविभक्तचिदचिच्छरीरकतया एकः उपादानभूतः। अविभक्तनामरू-पता हि उपादानता। अद्वितीयः निमित्तान्तररहितः। एक इत्यनेन उपादानत्वोक्त्या निमित्तस्यैव धीस्थत्वात् अद्वितीय इत्यनेन निमित्तान्तरनिषेधः। एवंविधो य आसीत् स एवायं किल श्रीकृष्ण इत्यनेनान्वयः ॥ २१ ॥

**स एव भूय** इति। य एकोऽद्वितीयो भूत्वा भूयः निजवीर्यचोदितां "बहु स्याम्" (तैत्ति. उ. 2-6) इत्यादिस्वसङ्कल्पप्रेरितां स्वजीवमायां स्वशेषभूतजीवतिरोधायिकां प्रकृतिं,[5] प्रति सिसृक्षतीं स्रष्टुमुन्मुखीं अनुससार। अन्तरात्मतया प्रविश्य नामरूपे व्याकरोदित्यर्थः। कथम्भूतः? अनामरूपात्मनि, न विद्येते नामरूपे यस्य तस्मिन्नात्मनि जीवे रूपनामनी नामरूपे विधित्समानश्चिकीर्षुः शास्त्रकृद्वेदप्रवर्तको यः, स एवाऽयं श्रीकृष्णे वर्तते इत्यर्थः ॥ २२ ॥

**स वा इति। निर्जितानीन्द्रियाणि अन्तर्बाह्यानि यैः निर्जितः मातरिश्वा प्राणो यैस्ते सूरयः भक्त्योत्कलितं संयुक्तं अत एवाऽमलं चेतस्तेन यस्य पदं स्वरूपं पश्यन्ति योऽयञ्च सत्त्वमन्तःकरणं परिमार्ष्टुं शोधयितुं अर्हति, स एवाऽयं कृष्णः ॥ २३ ॥**

**स** इति। हे सखि! गुह्येषु वेदेषु वेदान्तेषु, गुह्येष्विति विशेषणात्,[6] वेदवादिभिः वेदान्तगुह्यरूपस्वरूपगु णयाथात्म्योपदेष्टृभिश्च अनुगीतासु गीयमाना सती विशुद्धा कथा यस्य यश्चैक[7] एव सन्नात्मनः स्वस्य लीलया लीलार्थं जगत् सृजति अवति रक्षति अत्ति संहरति, तत्र जगति न सज्जते। जगदन्तरात्मतया स्थितः तद्गतदोषैः न सज्जते च, न पक्षपातीति स एवाऽयं कृष्णः ॥ २४ ॥

**नन्वेवंविधश्चेत् किमर्थं यादवान्यतमरूपेण अवतिष्ठत इत्याशङ्कायां दुष्कृद्विनाशाय साधुपरित्राणाय च प्रतियुगमवतीर्यावतीर्य, अधुना एवंरूपेणावतीर्ण इत्यभिप्रायेण जल्पन्ति — यदेति।** यदा तमोधियो नृपाः। **तमोजुष इति च पाठः। तत्र तामसा** अत **एवाधर्मेण जीवन्ति तत्र तदैष उक्तविधो** भगवान् **भवाय दुष्कृद्विनाशपूर्वकं साधूनां अभ्युदयाय सत्त्वतः शुद्धसत्त्वमयानि रूपाणि युगे युगे दधद्बिभ्राणः।** भगमैश्वर्यं, सत्यं वाचिकं **ऋतं पुण्यं कर्म दयां यशश्च धत्ते। स्वाभाविकैर्धर्मैरनपेत एव अवतिष्ठत इत्यर्थः। ऋतशब्दः पुण्यशब्दवाची। "एवं पुण्यस्य कर्मणो दूरादुन्धो वाति"** (म. ना. उ. 9-7) इत्यत्र, **"एवमनृतादात्मानं जुगुप्सेत्"** (म. ना. उ. 8-2) **इति पुण्यप्रतियोगित्वेन अनृतशब्दप्रयोगात्** भगवत्कर्मणां पुण्यं, **तन्नाम वदतां श्रोतृणाञ्च पुण्यावहत्वम् ॥ २५ ॥**

**यतो** भगवानुक्तविधः **श्रीमन्नारायण एव श्रीकृष्णरूपेण यदुकुलेऽवतीर्य मधुवने विहृत्य द्वारकामधिवसन् प्रजाः पालयन् अष्टभिर्महिषीभिरन्याभिश्च विहरति। अतो** यदुकुलमधुवनद्वारकामहिष्यादीनां भाग्यं तपश्चैतावदिति वाचा

मनसा वा अवगन्तुम् अशक्यमित्यभिप्रायेण जल्पन्ति — **अहो** इत्यादिभिः षड्भिः। यदोः कुलं, अलं नितरां श्लाघ्यतमं, मधोः वनं अलं नितरां पुण्यतमञ्च। कुतः? यद्यस्मात् पुंसां सात्त्वता[10] ऋषभो नायकः श्रियो लक्ष्म्याः पतिरेष भगवान् श्रीकृष्णः स्वजन्मना यदुकुलं चङ्क्रमणेन पुनः पुनः सञ्चारेण मधुवनञ्चाञ्चति प्रशस्तं करोतीत्यर्थः ॥ २६ ॥

---

1. W वेदाविष्कर्तृ° 2. W adds यश्च 3. W प्राक् 4. W adds यः 5. W adds विकृतिं 6. W गुह्य° 7. W यश्चेश्वर एक 8 W °त्कर्मणः पुण्यत्वं नाम 9. A,B °कायाम° 10. W सात्वतानां

**विज॰** कोऽसाविति तत्राह — **स वै** इति। हर्यपेक्षया अप्रधानत्वात् गुणशब्दवाच्येभ्यो महदादि-तत्त्वेभ्योऽग्रे निशि महाप्रलये सुप्तशक्तिषु, शक्यत्वात् तदधीनत्वात् शक्तिशब्दवाच्यासु सत्त्वादिगुणाभिमानिनीषु श्रीभूदुर्गासु सुप्तासु जगद्व्यापारान् विहाय हरौ रममाणासु सतीषु य एकः प्रधानो जगदात्मनि जगदादानकर्तरि जगत्संहर्तरि न विशेषोऽधिको यस्मात्सोऽविशेषः। तस्मिन् ईश्वरे ईशानादिशक्तिमति "स भगवः कस्मिन् प्रतिष्ठितः" (छान्दो. उ. 7-24-1) इति श्रुतेः स्वरूपाधारे स्थितो निमीलितात्मा "तुच्छ्येनाभ्यपिहितं यदासीत्" इति श्रुतेः गुणतोऽल्पतया तमआदिरूपया प्रकृत्या निगूहित आसीत्स पुरातनः पुरुषो विष्णुरयं कृष्णः किल परमार्थः सत्यम्। नैवानयोः कश्चिद्विशेष इत्यन्वयः ॥ २१ ॥

स परमपुरुष एव भूयः पुनः सृष्टिदशायां स्वजीवमायां प्रकृतिं स्वभार्यां महालक्ष्मीमनुससार। तस्यां वीर्यमधादित्यन्वयः। कथम्भूताम्? निजवीर्यचोदितां स्वसामर्थ्येन प्रेरितां सिसृक्षतीं सृष्टीच्छावतीम्। कथम्भूतः सः? अप्रसिद्धगुणत्वात् अप्राकृतरूपत्वाच्च अनामरूपात्मरूपात्मनि स्वस्मिन्नाधारे रूपनामनी विधित्समानो रूपनामात्मकं प्रपञ्चं स्रष्टुमिच्छन् शास्त्र[1]कृत् सकलनियमनकर्ता य एवंविधः स हरिरयं किलेत्यन्वयशेषः ॥ २२ ॥

अत्र कर्मभूमौ जितेन्द्रियाः प्राणायामेन निर्जितमातरिश्वानो वशीकृतप्राणाः सूरयो भक्त्या उत्कलितेन विकसितेन उत्कण्ठितेन वाऽमलेन रागादिमलरहितेन आत्मना स्वरूपान्तःकरणेन यत्पदं यस्य स्वरूपं पश्यन्ति, सवाऽयं कृष्णः किलेत्यन्वयः। एष कृष्णः सात्त्विकानामनुग्राहकः अस्माकं सत्त्वं स्वविषयकं ज्ञानं परिमार्ष्टुं नाशयितुं नार्हति। परिपूर्वोमार्ष्टिर्वर्जनार्थः। नन्वित्यनेन "अपपरी वर्जने" (अष्टा. 1-4-88) इति सूत्रं प्रमाणयति। न त्विति पाठः सुगमः। कर्मणा अन्तःकरणशुद्धिः किं न स्यादिति तत्राह — **न त्विति**। एष कर्मणा सत्त्वं अन्तःकरणं परितः सर्वतो मार्ष्टुं शोधयितुं नार्हति, किन्तु भक्त्या श्रवणाद्युपायसंस्कृतया यावदन्तःकरणं शुध्यति, तावन्न कर्मणेति भावः ॥ २३ ॥

यो वेदवादिभिरनन्तवेदेषु गुह्येषु उपनिषत्सु च अनुगीतसत्कथः निरन्तरोदितसच्चरितो यश्चैक एव ईशः, यश्चात्मलीलया जगत् सृजति, सृष्टमवति, तत्तद्योग्यकर्मफलभुक्तये, अत्ति संहरति, यश्च जगति न सज्जते आप्तकामत्वात्फलं नाऽऽदित्सति। हे सखि! स एवाऽयं कृष्ण इत्येकान्वयः। गुह्यवादिभिरिति पाठे उपनिषद्विचारकुशलै-रित्यर्थः ॥ २४ ॥

तमोधिकास्तामसा असुरप्रकृतयो नृपा अधर्मेण धर्मविरुद्धेन श्रुतिस्मृत्यविहित प्राणिहिंसादिकर्मणा यदा जीवन्ति स्वशरीरयात्रां कुर्वन्ति, तत्र तदैष हरिः सात्त्वतः सात्त्विकान् देवादीन् अनुगृह्णन् धर्मादिनामवन्ति रूपाणि युगे युगे दधत् दधानो वर्तते इति शेषः। वराहमत्स्यादिरूपस्य भूम्युद्धरणकर्मणा धर्माख्या, कपिलादेः अणिमाद्यष्टैश्वर्ययोगात् षड्गुणपूर्णत्वात् भगाख्या, कल्क्यादेः तमो विनाश्य सत्त्वगुणमभिसम्बध्यानन्तगुणाभिव्यञ्जकतया विशेषानन्दरूपत्वात् सत्याख्या, व्यासादेः ज्ञानप्रवर्तकत्वेन ज्ञानविशिष्टत्वादृताख्या, किमर्थं भवाय चरणप्रणतजनाभिवृद्धये। तस्मादिदानीं अधर्मप्रवर्तकान् जरासुतादीन्निगृह्णन् देवावतारान् युधिष्ठिरादीन् अनुगृह्णन् कृष्णात्मना अवतीर्णः किलेत्यर्थः ॥ २५ ॥

प्रियश्रवाः मनोहरकीर्तिः पुंसामृषभः पुरुषोत्तम एष कृष्णो यदोः श्लाघ्यं स्तुत्यं मधुवनं च अलमत्यर्थमतिशयेन पुण्यमहो अहो आश्चर्यादाश्चर्यम्। चशब्दः समुच्चये ॥ २६ ॥

---

1 K,M °स्ति°

**रा० कृ०** यः एकः अद्वितीयः पुरातनः सर्वहेतुनिदानभूतः पुरुषः गुणेभ्यः गुणक्षोभात् अग्रे सृष्टिप्रारम्भात् पूर्वमित्यर्थः। सुप्तशक्तिषु सुप्तासु शक्तिषु सतीषु सत्त्वादिशक्तिलये सति निशि प्रलये च जगदात्मनि सर्वजगज्जीवे ईश्वरे सकलजगदन्तर्यामिणि निमीलितात्मनि प्रसुप्ते मति अविशेषे निष्प्रपञ्चे सत्त्वादिगुणविशेषरहिते आत्मनि निजस्वरूपे आसीत्, स वै किलायं स एवाऽयं श्रीकृष्णः किल।

सृष्टिप्रारम्भात् पूर्वं जीवनोपाधिभूतसत्त्वादिशक्तिलये सति प्रलये च सकलजीवेष्वीश्वरे लीनरूपेषु सत्सु निष्प्रपञ्चे निजरूपे यः पुराणपुरुषः अद्वितीयः एवाऽऽसीत् स एवायं कृष्ण इति भावः ॥ २१ ॥

शास्त्रकृत् श्वासनिष्क्रमक्षण एव वेदशास्त्राद्याविर्भावकारी स एव अप्रच्युतस्वरूपस्थितिरेव भगवान् अनामरूपात्मनि नामरूपरहिते आत्मनि जीवे रूपनामनी व्यत्ययेन नामरूपे विधित्समानः विधातुमिच्छन् भूयः पुनः निजवीर्यचोदितां निजवीर्येण स्वकालशक्तिरूपेण चोदितां प्रेरितां स्वजीवमायां निजांशभूतानां जीवानां मोहिनीं सिसृक्षतीं स्रष्टुमिच्छन्तीं प्रकृतिमनुससार अनुगतवान्॥ २२ ॥

अत्र संसारे निर्जितमातरिश्वनः निर्जितात् मातरिश्वनः प्राणवायोः, प्राणजयादित्यर्थः। जितेन्द्रियास्सूरयः ज्ञानिनः भक्त्युत्कलितामलात्मना भक्त्या उत्कलितः उत्कण्ठितः अत एव अमलः रागादिमलरहितः आत्मा बुद्धिः तेन यत्पदं यस्य भगवतः स्वरूपं पश्यन्ति जानन्ति स वा अयं स एवायं श्रीकृष्णः। ननु हे सखि, एष भगवान् सत्त्वं नः अन्तःकरणं परिमार्ष्टुं शोधयितुं अर्हति, न तु योगादिः ॥ २३ ॥

हे सखि! वेदेषु गुह्येषु वेदानुसारिरहस्यागमेषु गुह्यवादिभिः तत्त्वनिरूपकैः महर्षिभिः अनुगीतसत्कथः अनुगीताः अनवरतगानविषयीकृताः सत्कथाः यस्य सः, यः ईशः एक एव सन् आत्मलीलया आत्मनः स्वस्य लीलया मायया जगत् सृजति, अवति रक्षति, अत्ति संहरति। किन्तु तत्र जगत्सृष्ट्यादौ न सज्जते न सक्तो भवति। अहंममेत्यभिमानं न करोति, स वा अयं स एवायं श्रीकृष्णः ॥ २४ ॥

**यदा हि तमोधियः तमसा श्रद्धाजाड्येन व्याप्ता धीर्येषां ते तथोक्ताः। 'श्रद्धा चास्तिक्यबुद्धि' रिति अभिज्ञैर्निरुक्ता। नृपाः अधर्मेण जीवन्ति प्रजापरिरक्षणरूपराज्योपासनं परित्यज्य स्वप्राणान् केवलं पुष्णन्ति। तत्र तदा एष हि पूर्वोक्तो भगवान् वासुदेवो भवाय लोकस्थित्यै सत्त्वतः नियमसङ्ग्राहित्यधृत्युत्साहादिरूपेण शुद्धसत्त्वेन रूपाणि नानाविधानि दधत् युगे युगे प्रतियुगं भगमैश्वर्यं सत्यं सत्यसन्धत्वं ऋतं शिष्टाचारं दयां दीनेष्वनुकम्पां यशोऽद्भुतकर्मत्वं धत्ते।**

अत्र भगवदवतारकारणकथनव्याजेन सामान्यतो मानवजात्यै विशिष्य पालकेभ्यश्च भगवद्दिव्यगुणानुवर्णनोपबृंहितयज्ञार्थकर्माचरणप्राशस्त्यमुपदिश्यते व्यङ्ग्यमर्यादया ॥ २५ ॥

**यत् यस्मात् पुंसां ऋषभः पुरुषोत्तमः एष पुरो दृश्यमानः श्रियः पतिः लक्ष्मीनाथः। प्रियश्रवाः इति पाठे श्रोतृप्रियकीर्तिः श्रीकृष्णः यथाक्रमं स्वजन्मना निजावतारेण चङ्क्रमणेन सञ्चारेण च अञ्चति सत्करोति। तस्माद्धेतोः यदोः कुलं श्लाघ्यतमम्। अहो बताश्चर्यकरम्। एवं मधोर्वनञ्च अलमतिशयेन पुण्यतमं, भवतीति शेषः ॥ २६ ॥**

**अहो बत स्वर्यशसस्तिरस्करी कुशस्थली पुण्ययशस्करी भुवः।**
**पश्यन्ति नित्यं यदनुग्रहे[1]षितं स्मितावलोकं स्वपतिं स्म यत्प्रजाः ॥ २७ ॥**

**नूनं व्रतस्नानहुतादिनेश्वरः समर्चितो ह्यस्य गृहीतपाणिभिः।**
**पिबन्ति याः स[2]ख्यधरामृतं मुहुर्व्रजस्त्रियः सम्मुमुहु र्यदाशया[3]ः ॥ २८ ॥**

**या वीर्यशुल्केन हतास्स्वयंवरे प्रमथ्य चैद्यप्रमुखान् हि[4] शुष्मिणः।**
**प्रद्युम्नसा[5]म्बाम्बसुतादयोऽपरा याश्चाऽऽहृता भौमवधे सहस्रशः ॥ २९ ॥**

**एताः प[6]रं स्त्रीत्वम[7]पास्तपेशलं निरस्तशौ[8]चं बत साधु कुर्वते।**
**यासां गृ[9]हात्पुष्करलोचनः पतिर्नजात्वपैत्याहृ[10]तिभिर्हृदि स्पृशन् ॥ ३० ॥**

**एवं विधा ग[11]दन्तीनां स गिरः पु[12]रयोषिताम्।**
**निरीक्षणेनाऽभिनन्दन् सस्मितेन ययौ हरिः ॥ ३१ ॥**

---

1 H,W °होषितं, K,M °हे क्षित° 2 AF,GF सख्यमृताधरं 3 K,M °या 4 H,K,M,V वि° 5 H,V,W °साम्बप्रसवादयो°, K,M °साम्बप्रमुखात्मजाः परा 6 K,M पुरा 7 K,M °मवाप्तये समं 8 K,M °शोकं 9 W गृहान् पु ° 10 K,M °कृ°, W °हु° 11 H,V व° 12 K,M पुण्य°

**श्रीध॰** द्वारकां श्लाघन्ते — **अहो** इति। अहो बताश्चर्यम्। किं तत्? कुशस्थली द्वारका। स्वर्ग उत्कृष्ट इति यद्यशस्तस्य तिरस्करी परिभवकर्त्री। भुवश्च पुण्ययशस्करी पुण्ययशःकर्त्री भवति। यत् यतः यत्प्रजा यत्रत्यास्सर्वाः प्रजाः स्वानुग्रहेणे[1]षितं प्रेषितम्। स्मितपूर्वकः अवलोकः यस्य तम्। यद्वा अनुग्रहार्थमि[2]षितमिष्टम्।

अनुग्रहोषितमिति पाठे स्वानुग्रहार्थं उषितं कृतनिवासम्। ऐकपद्य पाठे तु अनुग्रहेणेषितं प्रेषितं यत् स्मितं तत्पूर्वकोऽवलोको यस्य तम्। स्वस्याऽऽत्मनः पतिं श्रीकृष्णं न त पित्रादिवद्देहमात्र[3]पतिं नित्यं पश्यन्ति स्म। नैतत् स्वर्गे अस्तीत्यर्थः ॥ २७ ॥

**नून** मिति। हे सखि! अस्य गृहीतपाणिभिः पत्नीभिरीश्वरोऽयमेव नूनं जन्मान्तरेषु समर्चितः। यस्मिन्नधरामृते आशयश्चित्तं यासां ताः सम्मुमुहुः। सम्मोहं प्राप्ता इति मनोहरत्व मुक्तम् ॥ २८ ॥

एतत् प्रपञ्चयति — **या** इति द्वाभ्याम्। वीर्यं प्रभाव एव शुल्कम् मूल्यं येन शुष्मिणो बलिष्ठान्। प्रद्युम्नश्च साम्बश्च अम्बश्च सुता यासां रुक्मिणी-जाम्बवती-नाग्नजितीनां ता आदिर्यासां सत्यभामादीनां ताः, याश्चापराः। अस्य श्लोकस्य उत्तरश्लोकेनान्वयः ॥ २९ ॥

**एता** इति। एताः स्त्रीत्वमेव परं केवलं साधु शोभनं कुर्वते। किम्भूतम्? अपास्तं गतं पेशलं भद्रं स्वातन्त्र्यं यस्मात् तत्। निरस्तं शौचं शुचित्वं यस्मात्तथाभूतमपि जातु कदाचिदपि नापैति न निर्गच्छति। आहृतिभिर्व्याहारैः[5]। यद्वा पारिजातादिप्रियवस्त्वाहरणैः हृदि स्पृशन् आनन्दयन् ॥ ३० ॥

**एवंविधा** इति। एवंविधा विचित्रा गिरः सस्मितेन निरीक्षणेनाभिनन्दन् स हरिर्ययौ ॥ ३१ ॥

---

1 B स्मितपूर्वावलोकम्; H,V स्मितपूर्वावलोकनम्। 2. H,V °मी° 3 H,V °मात्रस्य पतिं 4 H,V विशुष्मि° 5 B °र्व्यवहारैः

**वीर० अहो बतेति।** कुशस्थली द्वारका। स्वर्यशसः कर्मणि षष्ठी। स्वर्लोकयशसः[1] तिरस्करी। भुवो भूमेः पुण्यं यशश्च करोत्यावहतीति तथा। तदेव व्यञ्जयितुं विशिंषन्ति। यत्प्रजाः यद्यस्यां कुशस्थल्यां प्रजा, यत् यस्मात् अनुग्रहेणोषितं अधिवसन्तं स्मितयुक्तोऽवलोको यस्य तं स्वपतिं आत्मनायकं नित्यं पश्यन्ति स्म। यदनुग्रहार्थं यत्प्रजाविषयकानुग्रहार्थं उषितमिति वा अन्वयः ॥ २७ ॥

**नूनमिति।** अस्य कर्तरि षष्ठी। अनेन कृष्णेन गृहीताः पाणयो यासां ताभिः कर्त्रीभिर्व्रतैः उपवासादिभिः स्नानैः पुण्यजल[2]स्नानहोमैः आदिशब्देन दानादिभिश्च। व्रतादीनां समाहारद्वन्द्वेन एकत्वम्। एभिस्साधनैः नूनं ईश्वरः समर्चितः, पूर्वजन्मनीति शेषः। कुत एतदनुमीयत इत्यतो विशिंषन्ति। या अस्य गृहीतपाणयः स्त्रियः हे सखि! अधरामृतं मुहुर्मुहुः पिबन्ति अनाराधितेश्वराणां एतद्दुर्लभमिति भावः। कस्याधरामृतम्? यस्मिन्नाशयो मनो यासां ता व्रजस्त्रियः सम्मुमुहुः। तस्य श्रीकृष्णस्य अधरामृतमित्यन्वयः ॥ २८ ॥

**या** इति। या इत्यस्यैताः इत्युत्तरेणान्वयः। शुष्मिणो मत्तान् चैद्यप्रमुखान् शिशुपालप्रभृतीन् स्वयंवरे प्रमथ्य मथनपूर्वकं विजित्य वीर्यमेव शुल्कमुपायनत्वेन देय[3] तेन या आहृताः प्रद्युम्नसाम्बप्रसवादयः स्त्रियः। तत्र प्रद्युम्नप्रसवा रुक्मिणी। साम्बप्रसवा जाम्बवती। आदिशब्देन सत्यभामादिसङ्ग्रहः। तथाऽपरा अन्याश्च याः स्त्रियः भौमवधे नरकासुरवधे सहस्रशः षोडशसहस्रसङ्ख्याका आहृताः ॥ २९ ॥

एता स्सर्वाः निरस्तं शौचं पवित्रता येन अपास्तपेशलं मार्दवं येन तथाभूतमपि स्त्रीत्वं परं केवलं साधु यथा तथा कुर्वते कुर्वन्ति। बत इत्याश्चर्ये। तदेव दर्शयितुं विशिंषन्ति। यासां स्त्रीणां गृहात्पतिर्जन्ममरणक्लेशात् रक्षणकर्ता पुष्करलोचनः कमलनयनः श्रीकृष्णः कदाचिदपि नापैति न त्यजति। कथम्भूतस्सन्? आहूतिभिः हे रुक्मिणि! एहीत्यादिभिराहूतैः हृदि स्पृशन् हृदयङ्गमस्सन्। सोऽयं श्रीकृष्णो यातीत्यर्थः ॥ ३० ॥

वदन्तीनां जल्पन्तीनां पुरयोषितां एवंविधाः गिरः उक्तीः सस्मितेन निरीक्षणेनैवाभिनन्दन् स हरिर्ययौ ॥ ३१ ॥

---

1. W °यशः तिरस्करेतीति तथा 2. W °जलानां हुतैः होमैः 3 B,W add द्रव्यं 4 W गृहान् प° 5 W °हु° 6. W °राह्वानैः

**विज॰** अनुग्रह इति[1] तादर्थ्ये सप्तमी भक्तानुग्रहार्थे क्षितं उषितं मुखे स्थितं यत् स्मितं तेन युक्तोऽवलोको यस्य स तथोक्तः, तम्। क्षि-निवासगत्योरिति धातुः। भक्तेष्वनुग्रहेण यदीक्षितं गोपवधूरुद्दिश्य स्मितयुक्तावलोकश्च यस्य सः तथोक्तस्तं वा। स्वपतिं स्वस्वामिनं श्रीकृष्णं यत्प्रजाः यत्रत्याः प्रजा नित्यं पश्यन्तीति यत् यस्मात्, तत् तस्मात् कुशस्थली द्वारावती स्वर्यशसस्तिरस्करी स्वर्गकीर्तिनिरासिनी भुवो यशस्करी चेत्यन्वयः। तदैक्षत इति ईक्षणव्यपदेशात् ईक्षितं इच्छा। भक्तानुग्रहेच्छया सहितौ स्मितावलोकौ यस्य स तथा, तमिति वा ॥ २७ ॥

अस्य श्रीकृष्णस्य पाणिना गृहीताः पाणयो यासां ताः, तथा ताभिरस्य भार्याभिः नूनं निश्चयेन व्रतस्नानादिनेश्वरः पूर्वं सम्यगर्चितः सत्कृतः याः व्रजस्त्रियो यदाशया यस्याऽधरामृतमाधुर्यस्य आस्वादनेच्छया सम्यक् मुमुहुः। हे सखि! तदधरामृतं मुहुः पिबन्तीति यत्तस्मादित्येकान्वयः। हे सखि! याः स्त्रियोऽस्याधरामृतं पिबन्ति। अनेन गृहीतपाणिभिः ताभिः नूनं व्रतादिनेश्वरः समर्चितो यदाशया व्रजस्त्रियो मुमुहु रिति वाऽन्वयः ॥ २८ ॥

ताः का इति तत्राऽऽहुः — **या** इति। विशुष्मिणो विशिष्टबलान् चैद्यप्रमुखान् शिशुपालादीन् प्रमथ्य विलोड्य पराजित्य स्वयंवरे वीर्यमेव शुल्कमुत्कोचं, तेन याः स्त्रियो हृता आनीतास्ताः। प्रद्युम्नश्च साम्बश्च तौ प्रमुखौ येषान्ते तथा प्रद्युम्नसाम्बप्रमुखाः, ते आत्मजा यासां ता स्तथोक्ताः रुक्मिण्याद्या, याश्चापराः सहस्रशः कशेर्वादिशतोत्तरषोडशसहस्रसङ्ख्याः भौमवधे आहृताः ॥ २९ ॥

एताः पुरा अग्निपुत्रत्वे कृष्णभार्यात्वाय स्त्रीत्वमवाप्तये आप्तुं समं सम्भूय साधु शोभनं तपआख्यं कुर्वतेऽकुर्वत। बत हर्षे। निरस्तशोकमिति क्रियाविशेषणं वा। कुतः पुष्करलोचनः पुण्डरीकाक्षः पतिराकृतिभिराकारैः चेष्टाविशेषैः हृदि स्पृशन् यासां गृहाज्जातु कदाचिदपि नापैति यस्मात्तस्मादित्यन्वयः ॥ ३०, ३१ ॥

---

1 K adds भिन्नं पदं

**रा॰ कृ॰** यत् यस्मात् यत्प्रजाः यत्पुरीवासिन्यः प्रजाः अनुग्रहेषितं स्वानुग्रहार्थं इषितं इष्टं स्मितावलोकं स्मितपूर्वावलोकनं स्वपतिं स्वस्य आत्मनः पतिं श्रीकृष्णं नित्यं पश्यन्ति स्म। यत्तदोर्नित्यसम्बन्धात् तस्मात्, सा

कुशस्थली द्वारका स्वर्यशस्तिरस्करी उत्कृष्टस्य स्वर्गस्याऽपि यशसः तिरस्करी परिभवकर्त्री। अपि च भुवः भूलोकस्य पुण्ययशस्करी भवतीति शेषः॥ २७॥

हे सखि! याः भगवता गृहीतपाणयः स्त्रियः अधरामृतं भगवतः अधरसुधां मुहुः पिबन्ति। व्रजस्त्रियश्च यदाशयाः यदधरामृतासक्तचित्ता एव सत्यः सम्मुमुहुः सम्मोहं प्रापुः। ताभिः अस्य भगवतः श्रीकृष्णस्य गृहीतपाणिभिः अनेन श्रीकृष्णेन गृहीताः पाणयो यासां ताभिः, पत्नीभिरित्यर्थः। ईश्वरः अयमेव भगवान् व्रतस्नानहुतादिना नूनं जन्मान्तरेषु समर्चितः। अन्यथा कथमेताः स्त्रियो जगदीश्वरस्य वाल्लभ्यमनुभवितुं अर्हन्तीति भावः।

अधरामृतपदेन वाक्सुधा व्यज्यते। सम्मुमुहुरित्यनेन भगवल्लीनमनस्कतापरपर्यायात्मविस्मृतिर्गम्यते। तथा च कौरवेन्द्रपुरस्त्रीभिः व्रजस्त्रीपर्यालोचनया भगवद्गृहीतपाणीनां स्त्रीणाम् आधिक्यकथनेऽपि सूक्ष्मेक्षिकया परिशीलने व्रजस्त्रीणामाधिक्यमेव व्यज्यते। तथाऽहि — "पिबन्ति यास्सख्यधरामृतं मुहुः" इत्यनेन तासां तद्गृहीतपाणीनां तदधरामृतपानज्ञानस्फुरणमास्ते। व्रजस्त्रीणान्तु भगवदधरामृतास्वादभावनयैव आत्मविस्मृतिः जायते। अहो व्रजाङ्गनानां भक्तिरसावेशः! किञ्च पूर्वत्र सुखपारवश्यं विषयेन्द्रियसन्निकर्षजन्यम्। अत्र तु भावनामात्रजन्यम्। भक्तिश्च भावप्रधाना। अत एव व्रजस्त्रीभक्तिः नारदादीनामपि भागवतोत्तमानां प्रशंसापात्रमास्ते॥ २८॥

प्रद्युम्नसाम्बाम्बसुतादयः। प्रद्युम्नः, साम्बः, अम्बः सुताः यासां ताः रुक्मिणी जाम्बवती नाग्नजित्यः। ताः आदिर्यासां ताः सत्यभामादयः याः स्त्रियः वीर्यशुल्केन स्वयंवरे विशुष्मिणः प्रमत्तान् चैद्यप्रमुखान् शिशुपालादीन् प्रमथ्य विजित्य हृताः आहृताः। किञ्च अपराः याः स्त्रियः, भौमवधे भौमस्य नरकासुरस्य वधे कृते सति सहस्रशः हृतास्सन्ति। ता एतास्सर्वास्स्त्रियः अपास्तपेशलं विगतस्वातन्त्र्यं निरस्तशौचं अपाकृतशुचित्वमपि स्त्रीत्वं परम् अत्यन्तं साधु कुर्वते। कुत इति चेत् — आहूतिभिः प्रेयसीजनोचितव्याहारैः हृदि स्पृशन् हृदये आनन्दं जनयन् पुष्करलोचनः कमलाक्षः पतिः यासां तासां स्त्रीणां गृहात् जातु कदाचिदपि नापैति।

अत्रापि श्रीकृष्णा दानन्दम् इच्छन्तीभ्यः स्त्रीभ्यः व्यतिरेकेण व्रजस्त्रीणाम् आधिक्यं व्यज्यते॥ २९, ३०॥

ग (व)दन्तीनां पुरयोषितां पुरस्त्रीणामेवंविधाः गिरः वाचः सस्मितेन निरीक्षणेन विलोकनेन अभिनन्दन् सः हरिः ययौ द्वारकामगच्छत्॥ ३१॥

**अजातशत्रुः पृतनां गोपीथाय मधुद्विषः।**
**परेभ्यश्शङ्कितस्स्नेहात्प्रायुङ्क्त चतुरङ्गिणीम्॥ ३२॥**

**अथ दूरागतान् शौरिः कौरवान् विरहातुरान्।**
**संनिवर्त्य दृढं स्निग्धान् प्रायात् स्वनगरीं प्रियैः॥ ३३॥**

**कुरुजाङ्गलपाञ्चालान् शूरसेनान् सयामुनान्।**
**ब्रह्मावर्तं कुरुक्षेत्रं मत्स्यान् सारस्वता नथ॥ ३४॥**

**मरुधन्वमतिक्रम्य सौवीराभीरयो[7]: परान्।**
**आनर्तान् भार्गवो[8]पागाच्छ्रान्तवाहो मनाग्विभुः ॥ ३५ ॥**

**तत्र तत्र ह[9] तत्रत्यै[10]र्हरिः प्रत्युद्यतार्हणः।**
**सायं भेजे दिशं पश्चाद्गविष्ठो गां गत स्तदा ॥ ३६ ॥ ***

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
प्रथमस्कन्धे नैमिषीयोपाख्याने श्रीकृष्णद्वारकागमनं नाम दशमोऽध्यायः ॥ १० ॥

---

1. K,M विदुरान्वितान् 2 H,V °वृत्य 3. H,K,M,V,W दृढ° 4 H,V °रं हरिः 5 K,M मा° 6 H,V °धन्वाव° 7. H,K,M,V °सैन्धवान् 8 H,V °व! प्रागा° 9. H,K,M,V च; W हि 10. W °स्थै° *This chapter does not end here in K&M.

**श्रीध०** **अजातशत्रुरिति।** मधुद्विषोऽपि गोपीथाय रक्षणाय स्नेहात् परेभ्यः शत्रुभ्यः शङ्कितस्सन् प्रायुङ्क्त। "हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुर्विधम् (चतुष्टयम्)" (अम. को. 2-33) इत्येवं चतुरङ्गिणीम्, पृतनाम् सेनाम् ॥ ३२ ॥

**अथेति।** पाण्डोः कुरुवंशजत्वात् पाण्डवा अपि कौरवा एव; तान् प्रियैः उद्धवादिभिस्सह ॥ ३३ ॥

**कुर्विति।** कुरुक्षेत्रं कुरुदेशान्तर्गतमेव। क्रमोऽत्र न विवक्षितः ॥ ३४ ॥

**मर्विति।** मरुर्निरुदको देशः। धन्वोऽल्पोदकः[1]। आनर्ताख्यो द्वारकादेशः। स विभु[2]रुपागात्, प्राप्तः। हे भार्गव! [3]मनागीषच्छ्रान्ताः वाहाः यस्य सः ॥ ३५ ॥

**तत्रेति।** तत्र तत्र देशे तत्रत्यैर्जनैः प्रत्युद्यतानि निवेदितानि अर्हणानि उपायनानि यस्मै सः। सायम् अपराह्णे पश्चाद्दिशं पश्चिमां दिशं भेजे प्राप्तः। तदा च गविष्ठः स्वर्गस्थः[4] सूर्यः गामुदकं गतः प्रविष्टोऽस्तङ्गत इत्यर्थः। "अद्भ्यो वा एष प्रातरुदेत्यपस्सायं प्रविशति" इति श्रुतेः। यद्वा, तदा सायङ्काले जाते रथादवतीर्य गविष्ठो भूमौ स्थितः ततो गां जलाशयं गतस्सन् पश्चात् दिशं सन्ध्यां भेजे उपासितवानित्यर्थः ॥ ३६ ॥

इति श्रीमद्भागवते प्रथमस्कन्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां दशमोऽध्यायः ॥ १० ॥

---

1 H,V °कदेशः 2 H,V °भुः प्रागात् 3 H,V add शौनक! 4 H,V आकाशस्थः

**वीर०** तदा अजातशत्रुः परेभ्यः शत्रुभ्यः शङ्कितः स्नेहान्मधुद्विषः श्रीकृष्णस्य गोपीथाय रक्षणाय चतुरङ्गिणीं हस्त्यश्वरथपदातिरूपाण्यङ्गान्यस्याः सन्तीति तथा तां सेनां प्रायुङ्क्त समयुङ्क्त ॥ ३२ ॥

अथ विरहेण विश्लेषेणातुरान् दुःखितान् अत एव दूरमागतान् कौरवान् युधिष्ठिरादीन् दृढं स्निग्धमनुरागो येषां तान् सम्यक् सान्त्वनेन निवर्त्य प्रियैस्सह स्वनगरीं द्वारकां प्रायात् प्रययौ ॥ ३३ ॥

कुर्वादिमरुधन्वान्तान् देशानतिक्रम्य ततः सौवीराभीरयोः परान् पश्चादवस्थितान् आनर्तान्[1] द्वारकाक्षेत्रजनपदान् विभुर्हरिः श्रीकृष्णः उपागात्। कथम्भूतः? हे भार्गव! मनाक् ईषत् श्रान्ता वाहा अश्वा यस्य ॥ ३४, ३५ ॥

तत्रत्यैस्तदा[2][3] देशस्थैः तत्र तत्र प्रत्युद्यतं शिरसि आधाय अभिमुखमानीतमर्हणं पूजासाधनं यस्य तथाभूतः यावत्[4] आनर्तानुपागात्, तदा गविष्ठस्सूर्यः, गोभिः किरणैस्तिष्ठतीति व्युत्पत्तेः। पश्चाद्दिशं प्रति सायं भेजे प्राप्तः। गां भूमिं गतश्च, उदकं गतश्च— "सायमप्सु प्रविशति" इति श्रुतेः ॥ ३६ ॥

इति श्रीमद्भागवते प्रथमस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां दशमोऽध्यायः ॥ १० ॥

---

1. W °सत्र° 2 W °स्थै° 3 W °स्तद्दे° 4 W यदा

**विज०** परेभ्यो गोपीथाय रक्षणाय चतुरङ्गिणीं हस्त्यश्वरथपदातिमतीं पृतनां सेनां स्नेहात् स्नेहमात्रात् तदानीं माहात्म्यज्ञानं नास्तीति भावः ॥ ३२ ॥

स्वनगरीं द्वारवतीं प्रियैः पुरुषैस्सह ॥ ३३, ३४ ॥

हे भार्गव! शौनक! कुरुजाङ्गलप्रभृत्येकादशदेशानतिक्रम्यागात्। श्रान्ताश्वो विभुरानर्तान्[1] स्वाधिकृतान् देशान् उपागादित्यन्वयः ॥ ३५ ॥

यदा हरिस्सायं सन्ध्यासमये पश्चाद्दिशं[2] भेजे। कथम्भूतः? तत्र तत्र च स्वराष्ट्रे प्रतिपदं तत्रत्यैर्जनैः प्रत्युद्यतार्हणः प्रदत्तप्राज्यधनः[3] तदा गविष्ठः दिवि स्थितः आदित्यः गां समुद्रोदकं गतः, अस्तङ्गत इत्यर्थः। "असौ वा गविष्ठोऽप्सूदेत्यप्स्वस्तमेति" इति श्रुतेः ॥ ३६ ॥*

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां
टीकायां प्रथमस्कन्धे दशमोऽध्यायः ॥ १० ॥

---

1. K,M °व° 2. B,K,M add पश्चिमां दिशं 3 K,M °प्राहृत° *This chapter does not end here in K&M

**रा० कृ०** तदा अजातशत्रुः धर्मजः स्नेहात् कारणात् परेभ्यः हतबन्धुभ्यः शत्रुभ्यः शङ्कितस्सन् मधुद्विषः श्रीकृष्णस्य गोपीथाय रक्षणाय चतुरङ्गिणीं चतुरङ्गसहितां पृतनां सेनां प्रायुङ्क्त प्राहिणोत् ॥ ३२ ॥

अथ शौरिः श्रीकृष्णः विरहातुरान् भाविकृष्णवियोगेन दुःखितान् अत एव दूरागतान् दृढं नितान्तं स्निग्धान् अनुरक्तान् कौरवान् युधिष्ठिरादीन् पाण्डवान् सन्निवर्त्य ससान्त्वनं निवर्त्य प्रियैरुद्धवादिभिस्सह स्वनगरीं द्वारकां प्रायात् अगच्छत्॥ ३३ ॥

हे भार्गव! कुरुजाङ्गलपाञ्चालान् सयामुनान् शूरसेनान् ब्रह्मावर्तं कुरुक्षेत्रं मत्स्यान् अथ सारस्वतान् मरुधन्वौ निर्जलदेशमल्पजलदेशञ्च अतिक्रम्य सौवीराभीरयोः परान् आनर्तान् एतान् सर्वान् देशान् मनाक् ईषत् श्रान्तवाहः विभुः कृष्णः प्रागात् प्रययौ॥ ३४, ३५॥

अपि च तत्रत्यैः तत्तद्देशीयैर्जनैः तत्र तत्र द्वारकामार्गे प्रत्युद्यतार्हणः समर्पितोपायनः हरिः सायं सायंसमये पश्चाद्दिशं पश्चिमां दिशं द्वारकाप्रदेशं भेजे। तदा गविष्ठः सूर्योऽपि गां पश्चिमसमुद्रजलं गतः प्रविष्टः॥ ३६॥

इति श्रीमद्भागवते प्रथमस्कन्धे
श्रीराधाकृष्णप्रणीतायां सुधीसुधायां व्याख्यायां
दशमोऽध्यायः॥ १०॥



# एकादशोऽध्यायः

सूत उवाच

आनर्तान् स उपव्रज्य स्वृद्धाञ्जनपदान् स्वकान् ।
दध्मौ [1]दरवरं तेषां विषादं शमयन्निव ॥ १ ॥

स उच्चकाशे धवलोदरो दरोऽप्युरुक्रमस्याधरशोणशोणिमा ।
[2]दाध्मायमानः करकञ्जसम्पुटे यथाऽब्जख[3]ण्डे कलहंस उत्स्वनः ॥ २ ॥

तमुपश्रुत्य निनदं जगद्[4]भयभयावहम् ।
प्रत्युद्ययुः प्रजा स्सर्वा भर्तृदर्शनलालसाः ॥ ३ ॥

[5]तत्रोपनीतबलयो रवे र्दीप [6]मिवाऽऽदृताः ।
आत्मारामं पूर्णकामं निजलाभेन नित्यदा ॥ ४ ॥

प्रीत्युत्फुल्लमुखाः प्रोचु र्हर्षगद्गदया गिरा ।
पितरं सर्वसु[7]हृदं मवितार मिवार्भकाः ॥ ५ ॥

नताः स्म [8]ते नाथ [9]सदाङ्घ्रिपङ्कजं विरिञ्[10]चवैरिञ्[11]च्यसुरेन्द्रवन्दितम् ।
परायणं क्षेम मिहेच्छतां परं न यत्र कालः प्रभवेत् प[12]रः प्र[13]भुः ॥ ६ ॥

भवाय नस्त्वं भव विश्वभावन! त्वमेव माता[14]ऽथ सुहृत्पतिः पिता ।
त्वं सद्गुरुर्नः परमञ्च दैवतं यस्यानुवृत्त्या कृतिनो बभूविम ॥ ७ ॥

---

1 AF GF शङ्ख° 2 H,V द° 3 B,H,N,V,W °ष° 4. H,K,M °द्भवभयापहम्; V °द्भवभयावहम् 5 K,M नत्वोप° 6 H,V °मिवोद्यताः 7 AF,GF °दंस° 8 H,V हे 9 H,V,W तवा° 10 H,V,W °ञ्चि° 11 A,B,G,I,N,W °ञ्चय° 12 B,K,M,N °र° 13 AF GF भो! 14 H,K,M,V °ऽऽत्म°

## श्रीधरस्वामिविरचिता भावार्थदीपिका

आनर्तैः स्तूयमानस्य पुरीं निर्विश्य बन्धुभिः ।
एकादशे रतिः सम्यग्यादवेन्द्रस्य वर्ण्यते ॥

उत्सवै [1]रुच्चलत्पौर मुदञ्च[2]द्ध्वजतोरणम् ।
उल्लस द्रत्न [3]दीपालि स्वपुरं प्रभु राविशत् ॥

**आनर्ता निति**। स्वृद्धान् समृद्धान् दरवरं पाञ्चजन्यं शङ्खम्। दध्मौ वादितवान्॥ १ ॥

**स इति**। दरः शङ्खः दा[5]ध्मायमानो भगवता आपूर्यमाण उच्चकाशे अतिशयेन शुशुभे **इत्यन्वयः**। कथम्भूतो दरः? धवल मुदरं यस्य सः धवलोदरः। तथाप्युरुक्रमस्य कृष्णस्याधरस्य यः शोणगुण स्तेन शोणिमा [6]यस्य सः, अधरशोणशोणिमा। स्वार्थे वा इमन्। करकञ्जे करकमले, तयो स्सम्पुटे मध्ये वर्तमानः कथमुच्चकाशे? अब्जख[7]ण्डे रक्तकमलसमूहे कलहंसो राजहंसः उत्स्वनः उच्चशब्दो यथा तद्वत्॥ २ ॥

**तमिति**। जगतो यद्भयं, तस्य भयावहम्। [8]प्रत्युद्ययुः प्रत्युज्जग्मुः। भर्तु र्दर्शने लालसा औत्सुक्यं यासां ताः॥ ३ ॥

[9]तत्र तस्मिन् श्रीकृष्णे उपनीताः समर्पिताः बलयः उपायनानि याभिस्ताः। निरपेक्षेऽपि तस्मिन्नादरेण समर्पणे दृष्टान्तः रवेः दीपमिवेति॥ ४ ॥

**प्रीतीति**। पितरमर्भका इव तं सर्वसुहृद मवितारं [10]प्रोचु रित्युत्तरेणान्वयः। सुहृत्त्वेनैव अवितारं न तु कामेन। अत्र हेतुः आत्मारामम्। तत्रापि हेतुः परमानन्दनिजस्वरूपलाभेनैव **पूर्णकामम्**॥ ५॥

किं मूचु रिति तदाह — **नताः स्मेति**। विरिञ्चो[11] ब्रह्मा। वैरिञ्चाः[12] सनकादयः। इह संसारे परं क्षेम मिच्छतां परायणं परमं शरणम्। कुतः? परेषां ब्रह्मादीनां प्रभुरपि कालो यत्र प्रभुर्न भवेत्॥ ६ ॥

**भवायेति**। अतो भवायोद्भवाय नोऽस्माकं त्वं भव हे **विश्वभावन**! अनुवृत्त्या अनुगमनेन कृतिनः कृतार्थाः **बभूविम** जाता वयम्॥ ७ ॥

---

1. H,V °रुल्लसत 2. H,V°वा° 3 H,V °दि 4 H,V ना° 5 H,V द° 6. H,V add शोणीभावः 7 B,H,V °ष° 8 H,V add 'जगद्भवभयापहम्' इति पाठे जगतां जीवानां भवात् संसारात् यद्भयं तदपहन्तीति जगद्भवभयापहम्। 9. H,V add तत्रेत्यादिश्लोकद्वय मेकं वाक्यम्। 10 H,V add स्वसंरक्षकं 11. H,V °ञ्चिः 12. A,B °ञ्च्याः

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

स भगवान् स्वृद्धान् समृद्धान् स्वका नानर्तान् जनपदा नुपव्रज्य तत्रत्यानां विषादं स्वविश्लेषजं शमयन्निव दरवरं शङ्खश्रेष्ठं पाञ्चजन्यं दध्मौ ध्वनयामास॥ १ ॥

तदा स दाध्मायमानो दरवरः स्वतो धवल मुदरं यस्य तथाभूतोऽपि दामोदरस्य भगवतोऽध[1]रशोणेन शोणिमा यस्य सः। स भगवत्करकमलयो स्सम्पुट उच्चकाशे [2]यथाऽब्जख[3]ण्डे रक्तकमलसमूहे उत्स्वन उच्चैस्स्वनो यस्य स हंस स्तद्वत्॥ २ ॥

जगतो भयं येभ्यः तेषां भय मावहतीति तथा, तं निनदमुपश्रुत्य सर्वाः प्रजाः भर्तु र्भगवतो दर्शने लालसाः आसक्तचित्ताः प्रत्युद्ययुः प्रत्याजग्मुः॥ ३ ॥

तत्राऽऽदृता आदरयुक्ता रवे र्दीप मिवात्मानं जगच्च प्रकाशयतः प्रकाशान्तरानपेक्षस्य सूर्यस्य दीप मिव उपनीतः बलिः पूजार्थं द्रव्यं याभि स्ताः ॥ ४ ॥

प्रीत्या उत्फुल्लानि विकसितानि मुखाम्बुजानि यासां तथाभूताः प्रजाः हर्षेण गद्गदया कुण्ठितया गिरा तं प्रोचुः। रविदृष्टान्ताभिप्रेतं व्यञ्जयन् विशिनष्टि। निजलाभेन नित्यनिरवधिकस्वानन्दानुभवलाभेन पूर्णकाम मवाप्त-समस्तकाम मात्मारामं स्वानुभवैकनिष्ठं, बल्यनपेक्ष मिति भावः। के क मिवोचुः। सर्वेषु पुत्रेषु सुहृदं सौहार्दयुक्त-मवितारं रक्षितारं पितर मर्भकाः शिशवः पुत्रा इव ॥ ५ ॥

उक्त मेवाहुः — **नता** इति चतुर्भिः। हे नाथ! तवाङ्घ्रिपङ्कजं प्रति नताः स्म। कथम्भूतम्? विरिञ्चिना[4] ब्रह्मणा,[5] वैरिञ्च्यैः सनकादिभिः सुरेन्द्रै रिन्द्रादिभिश्च वन्दितं नमस्कृतं इह क्षेमं निश्श्रेयस मिच्छतां पर मुत्कृष्टं परायणं क्षेमसाधनभूतं, पर मिति क्षेमविशेषणं वा। यत्र पदारविन्दे परेषां ब्रह्मादीनामपि प्रभुः तानपि वशीकुर्वन्, कालोऽपि न प्रभवेत् न समर्थो भवेत्, यत्र त्वयि विषये परः प्रभुः कालोऽपि न प्रभवेत् तस्य तव पदाम्बुजमिति वाऽन्वयः। "सर्वस्य वशी, सर्वस्येशानः" (बृह. उ. 4-4-22), "न तस्येशे कश्चन" (म. ना. उ. 1-10) इत्यादि श्रुत्यर्थो-ऽत्रानुसन्धेयः ॥ ६ ॥

हे विश्वभावन! विश्वं जगत् भावयति सत्तास्थितिप्रवृत्तिमत्करोतीति तथाभूत! त्वं नोऽस्माकं भवायाभ्युदयाय भव। "माता पिता भ्राता निवासः शरणं सुहृद् गतिर्नारायणः" (सुबा. उ. 6-1), "तं देवतानां परमञ्च दैवतम्" (श्वेता. उ. 5-7), "पतिं पतीनां परमं परस्तात्" (श्वेता. उ. 6-7), "न तस्य कश्चि त्पति रस्ति लोके नचेशिता नैव च तस्य लिङ्गम्" (श्वेता. उ. 6-9), "यो वै वेदांश्च प्रहिणोति" (श्वेता. उ. 6-18) इत्यादिश्रुत्यर्थ मनुसन्धायोचुः। त्वमेव मातेत्यादि लौकिकस्तु बन्धु रेक एव, त्वं तु सर्वविधबन्धुरिति भावः। यस्य तवाऽनुवृत्त्या सेवया वयं कृतिनः[6] कृतकृत्या बभूविम, स त्वं नो भवाय भवेत्यन्वयः ॥ ७ ॥

---

1 W °रे 2 W adds नितरां चकाशे 3 W °ष° 4 W विरिञ्चेन 5 W चतुर्मुखेन 6 W adds कृतार्थाः

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

स कृष्णः स्वृद्धान् सुष्ठु सम्पन्नान् स्वकान् स्वीयान् नाम्ना आनर्तान् जनपदा नुपगम्य इति दरवरं शङ्खश्रेष्ठं दध्मौ पूरयामास। तेषां विषादं राजकं भयं शमयन् परिहरन्निवेत्यन्वयः ॥ १ ॥

सः दरः पाञ्चजन्याख्यः उच्चकाशे। धवलं शुक्ल मुदरं यस्य स धवलोदरोऽतिधवलोदरोऽपि उरुक्रमस्य श्रीकृष्णस्य अधरोष्ठस्य शोणेन रागेण शोणिमा रक्तभावो यस्य स तथोक्तः। दाध्मायमानः पुनः पुनः पूर्यमाणः करावेव कञ्जे हस्तकमले तयोः सम्पुटे मध्ये वर्तमान इति शेषः। करकञ्जसम्पुटे निधाय दाध्मायमान इति वा। तत्र दृष्टान्तः — अब्जखण्डे करकमले स्थितः उत्स्वनः उच्चध्वनिः कलहंसो राजहंसो यथा तथेत्यन्वयः ॥ २ ॥

भर्तृदर्शनलालसाः श्रीकृष्णस्य दर्शनोत्सुकाः सर्वाः प्रजाः जगतो भवः संसारः तस्मात् भयं हन्तीति

जगद्भवभयापहः, तं जगद्भयभयापह मिति पाठे, जगद्भयानां दैत्यानां सकाशात् यद्भयं तस्य नाशनः तं निनदं शङ्खध्वनिं श्रुत्वा तं कृष्णं प्रत्युद्ययु रित्यन्वयः ॥ ३ ॥

नित्यदा निजलाभेन स्वतो लब्धेन पूर्णकामम् अतएवाऽऽत्मारामं, आ समन्तात् रममाणं कृष्णं नत्वा हर्षेण गद्गदया स्खलन्त्या गिरा ताः प्रजाः प्रोचु रित्यन्वयः। कीदृश्यः? प्रीत्युत्फुल्लं विकसितं मुखं यासां ता स्तथोक्ताः। उपनीतः समर्पितो बलि र्भागधेयो याभि स्ता स्तथा। बलिः पूजासाधनं वा। कथमिव? तेजःपुञ्जस्य रवेर्दीप मिव, आत्मारामस्य बलिं दत्वेति शेषः। आदृताः परमादरयुक्ताः अर्भकाः बालाः पितर मिव। कथम्भूतं हरिम्? अन्नादिदानेन पातृत्वात्पितरं सर्वस्मा दात्मादेः सुहृद मनिमित्तबन्धुं ज्ञानादिदानेन अवनकर्तृत्वा दवितारम् ॥ ४, ५ ॥

हे नाथ! तवाङ्घ्रिपङ्कजं सदा नताः स्मेत्यन्वयः। कीदृशम्? विरिञ्चिवैरिञ्चसुरेन्द्रै[1] श्चतुर्मुखशङ्करदेवेन्द्रैर्वन्दितम्, इह चेतनराशिमध्ये परं क्षेमं मोक्ष मिच्छतां भक्तानां परायणम् उत्तमाश्रयं, परस्य हिरण्यगर्भस्य प्रभुः समर्थो जननमरणधर्मापादकोऽपि कालः यत्र पदारविन्दे भक्तानां न प्रभवेत् जरादिधर्मापादको न भवति। परेषां भक्तानां प्रभुः कालः यत्र भक्तानां न प्रभवेदतस्तस्याङ्घ्रिपङ्कजस्थे[2] न समर्थ इति किं वाच्य मिति वा ॥ ६ ॥

हे विश्वभावन! जगत स्सत्तादिप्रदत्वं नोऽस्माकं भवाय ज्ञानभक्त्यादिकल्याणाय भव, यस्य तवानुवृत्त्या सेवालक्षणेनानुवर्तनेन कृतिन स्सुकृतिनो बभूविम। स त्वं नः परमं दैवतम् इष्टदेवता। नः सद्गुरुः निर्दोषगुरुस्थानीयश्च त्वमेव माताऽभीष्टदानेन आत्मना त्वयैव नास्मत्प्रयत्नेन सुहृत् पिता पतिः स्वामी ॥ ७ ॥

---

1 B,K,M °ञ्च° 2 K,M °स्य

## श्रीराधाकृष्णप्रणीता सुधीसुधा

स भगवान् स्वृद्धान् समृद्धान् स्वकान् स्वकीयान् आनर्तान् तन्नामकान् जनपदान् देशा नुपव्रज्य समीपं गत्वा तेषां तत्रत्यजनानां विषादं स्ववियोगजन्यं दुःखं शमय न्निव दरवरं शङ्खश्रेष्ठं पाञ्चजन्यं दध्मौ वादितवान्॥ १ ॥

दाध्मायमानः उच्चैर्वाद्यमानः स दरः शङ्खः धवलोदरोऽपि उरुक्रमस्य कृष्णस्य अधरशोणशोणिमा, अधरस्य शोणेन रागेण शोणिमा रक्तिमा यस्य सः, केवलरक्त इत्यर्थः। करकञ्जसम्पुटे भगवतः करकमलयोः सम्पुटे स्थितः अब्जषण्डे स्थितः उत्स्वनः कलहंसो यथा राजहंस इव उच्चकाशे अत्यन्तं शुशुभे ॥ २ ॥

जगद्भयभयावहं जगद्भयहेतूनां राक्षसादीनां भयङ्करं तं निनदं शङ्खनादं उपश्रुत्य समीपे श्रुत्वा सर्वाः प्रजाः भर्तृदर्शनलालसाः भर्तुः श्रीकृष्णस्य दर्शने आसक्ताः प्रत्युद्ययुः अभिजग्मुः ॥ ३ ॥

तत्र श्रीकृष्णे आदृताः आदरयुक्ताः प्रजाः रवेः सकलजगत्प्रकाशकस्य दीपमिवोपनीतबलयः समर्पितपूजाः तथा प्रीत्युत्फुल्लमुखाः निजलाभेन परमानन्दनिजस्वरूपलाभेन नित्यदा निरन्तरं पूर्णकामम् अत एवाऽऽत्मारामम् आत्मनि आनन्दस्वरूपे रमणशीलं सर्वसुहृदम् अवितारं संरक्षकं तं भगवन्त मर्भकाः पितर मिव हर्षगद्गदया गिरा वाचा प्रोचुः अवोचन् ॥ ४, ५ ॥

हे नाथ! यदङ्घ्रिपङ्कजे परः श्रेष्ठः प्रभुः ब्रह्मादीनां प्रभुरपि कालः न प्रभवेत्, न समर्थो भवति। विरिञ्चिवैरिञ्चसुरेन्द्रवन्दितं, विरिञ्चिः ब्रह्मा, वैरिञ्चाः ब्रह्मात्मजाः सनकादयः सुरेन्द्रः देवेन्द्रः तैर्वन्दितं इह संसारे परं क्षेम मिच्छतां परायणं परमं शरणं तव तत् अङ्घ्रिपङ्कजं पादपद्मं नतास्स्मः, नमस्कुर्मः ॥ ६ ॥

हे विश्वभावन! विश्वपालक! नः अस्माकं भवाय पुरुषार्थचतुष्टयरूपाभ्युदयाय त्वं भव। अस्माकं माता आत्मसुहृत् पिता पतिस्त्वमेव। यस्य भवतः अनुवृत्त्या अनुवर्तनेन सेवयेत्यर्थः। वयं कृतिनः कृतार्था बभूविम। सः त्वं नः सद्गुरुः परमं दैवतञ्चासि इति शेषः ॥ ७ ॥

अहो सनाथा भवता स्म यद्वयं त्रैविष्टपाना[1] मपि दूरदर्शनम्।
प्रेमस्मितस्निग्धनिरीक्षणाननं पश्येम रूपं तव सर्वसौभगम् ॥ ८ ॥

यर्ह्यम्बुजाक्षा[2]पससार भो[3] भवान् कुरून् मधून् वाऽथ सुहृद्दिदृक्षया।
तत्राब्दकोटिप्रमितः क्षणो[4] भवेत् रविं[5] विनाक्ष्णो रिव नस्तवाच्युत ॥ ९ ॥

* कथं वयं नाथ चिरोषिते त्वयि प्र[\$]पन्नतृष्णाखिलतापशोषणम्।
जीवेम ते सुन्दरहासशोभित मपश्यमाना वदनं मनोहरम् ॥

सूत उवाच

इति चोदीरिता वाचः प्रजानां भक्तवत्सलः[6]।
शृण्वानो[7]ऽनुग्रहं दृष्ट्या वितन्वन् प्राविशत्पुरीम्[8] ॥ १० ॥

मधुभोजदशार्हार्ह कुकुरान्धकवृष्णिभिः।
आत्मतुल्यबलै र्गुप्तां नागै[9] र्भोगवती मिव ॥ ११ ॥

सर्वर्तु सर्वविभवं[10] पुण्यवृक्षलताश्रमैः।
उद्यानोपवनारामैर्वृत[11]पद्माकरश्रियम् ॥ १२ ॥

गोपुरद्वारमार्गेषु कृतकौतुकतोरणाम्।
चित्रध्वजपताकाग्रै रन्तःप्रतिहतातपाम् ॥ १३ ॥

सम्मार्जितमहामार्ग रथ्यापणकचत्वराम्।
सिक्तां गन्धजलै रुप्तां फलपुष्पाक्षताङ्कुरैः ॥ १४ ॥

द्वारि द्वारि गृहाणाञ्च दध्यक्षतफलेक्षुभिः।
अलङ्कृतां पूर्णकुम्भै र्बलिभि र्धूपदीपकैः ॥ १५ ॥

---

1. B °पि° 2 K,M °क्षाञ्चति माधवो 3 H नो 4 H.V °णोऽभवत् 5 H.K.M.V.W रवे र्विनाक्ष्णामिव *This additional verse is found in B.I. \$ I प्रसन्नदृष्ट्या 6 H,V °पालकः 7 H.V शृण्वन्ननु° 8 I.W °रम् 9 W·भो° 10 H.K.M.V.W °वैः 11 K.M °धृत; H.V °वृतां

**श्रीध०** कृतार्थत्व मेवाऽऽहुः — **अहो** इति। अहो भवता वयं सनाथाः स्म। यद्यस्मात् तव रूपं पश्येम। त्रै[1]विष्टपानामपि दूरदर्शनं दूरे दर्शनं यस्य तत्। देवानामपि [2]दुर्लभदर्शन मित्यर्थः। प्रेम्णा यत् स्मितं तद्युक्तं स्निग्धं निरीक्षणं यस्मिं स्तदाननं यस्मिं स्तद्रूपम्। [3]सर्वेषु चाङ्गेषु सौभगं यस्मिं स्तत्॥ ८॥

अर्भका इव सकरुण माहुः — **यर्हीति**। यर्हि यदा भो अम्बुजाक्ष! नो भवानिति पाठे न इत्यनादरे षष्ठी। [4]अस्मा ननादृत्य अपससार अपहाय जगाम। कुरून् हस्तिनापुरम्। मधून् मथु[5]रां वा। तत्र तदा रविं विना आन्ध्या दक्ष्णो र्यथैकोऽपि क्षणोऽब्दकोटिप्रतिमो भवे देवं तव नः त्वदीयाना मस्माकमपीत्यर्थः॥ ९॥

**इतीति**। इति चैवंविधा अन्या उदीरिता उच्चारिता वाचः शृण्वन् दृष्ट्या साभिनन्दनावलो[6]केन अनुग्रहं कुर्वन् पुरीं द्वारकां प्राविशत्॥ १०॥

तां द्वारकां स्तौति — **मध्विति** पञ्चभिः। स्वतुल्यबलैः मधुभोजादिभिर्गुप्तां रक्षिताम्॥ ११॥

**सर्वेति**। सर्वेष्वृतुषु सर्वे विभवाः पुष्पादिसम्पदो येषां ते [7]पुण्यवृक्षा लताश्रमाः लतामण्डपाश्च येषु तै-रुद्यानादिभिर्वृता ये पद्माकराः सरांसि तैः [8] श्रीश्शोभा यस्यां ताम्। उद्यानं फलप्रधानम्। उपवनं पुष्पप्रधानम्। आरामः क्रीडार्थं वनम्॥ १२॥

**गोपुरेति**। गोपुरं पुरद्वारम्। द्वारं गृहद्वारम्। कृतानि कौतुकेनोत्सवेन तोरणानि यस्यां ताम्। [9]गरुडादिचिह्नाङ्किताः ध्वजाः जयप्रदयन्त्राङ्किताः पताकाः। चित्राणां ध्वजपताकाना मग्रैरन्तःप्रतिहत आतपो यस्यां ताम्॥ १३॥

**सम्मार्जितेति**। सम्मार्जितानि निस्सारितरजस्कानि महामार्गादीनि यस्यां ताम्। महामार्गाः राजमार्गाः रथ्याः इतरमार्गाः आपणकाः पण्यवीथयः, चत्वराण्यङ्गणानि। फलादिभि रुप्तामवकीर्णाम्॥ १४, १५॥

---

1 B °पि° 2 H V दुर्दर्शमित्यर्थः 3 B सर्वं सर्वेषुवाऽङ्गेषु 4 H V add भवान् 5 H V °रान् 6 B H V °लोकनेन 7 V पुण्या· 8 H.V add या 9 H V °दिवीर°

**वीर० अहो** इति। भवता त्वया वय महो सनाथाः स्म इति यत्सुखप्रदनाथवन्तो बभूविम। कुतः ? यत् यस्मात् तव रूपं पश्येम। कथम्भूतम् ? त्रैविष्टपानां देवानामपि दूरदर्शनं [2]दुर्दर्शनं प्रेमपूर्वक[3]स्मित[4]स्निग्धे सानुरागे ईक्षणे च यस्मिं स्तदाननं यस्य तत्सौभगं सुन्दरम्॥ ८॥

भो अम्बुजाक्ष! भवान् सुहृद्दिदृक्षया यदा कुरून् मधून् वा जनपदानपससार जगाम, तत्र तदा हे अच्युत! नोऽस्माकं त्वामपश्यतां, रवेर्विना रविं विंना अक्ष्णोः क्षणकालोऽब्दकोटिप्रतिमः संवत्सरकोटिकालतुल्यो भवेत्॥ ९॥

इतीत्थं प्रजाना मुदीरिता वाचः शृण्वानो भक्तवत्सलो भगवा नवलोकनेनानुग्रहं वितन्वन्, पुरं प्राविशत्। पूश्शब्दोऽयं न तु पुरशब्दः॥ १०॥

कथम्भूतां पुरम्? मध्वादयो यादवावान्तरविशेषाः तैरात्मतुल्यबलैः कृष्णतुल्यबलैर्नागैः काद्रवेयादिभिः भोगवतीमिव गुप्तां रक्षितां भोगवतीं नाम नागानां पुरीम्॥ ११॥

सर्वर्तुषु युगपन्निर्वृत्तेषु य स्सर्वो विभवः फलपुष्पादिसमृद्धिर्येषां ते पुण्या वृक्षाश्च मन्दारपारिजातादयः, लताः तदधस्तनाः आश्रमाश्च येषु तैः। उद्यानोपवनारामैः वृतानां पद्माकराणां श्रीः शोभा यस्याम्। तत्रोद्यानम् राज्ञां क्रीडास्थानम्। उपवनं वनसमीपस्थम्, आरामः कृतकः॥ १२॥

गोपुराकाराणां द्वाराणां मार्गेषु कृतानि कौतुकानि मङ्गलार्थानि तोरणानि जम्ब्वाम्रपल्लवादिनिर्मितानि यस्यां चित्राणां ध्वजानां पताकानां चाग्रै रन्तःप्रतिहतो निरस्त आतपो यस्याम्॥ १३॥

सम्मार्जिता महामार्गादयो यस्याम्। महामार्गा राजवीथयः रथ्या उपवीथयः आपणकानि वणिजां क्रयविक्रयादिगृहाणि चत्वराणि गजाश्वादिशालाः। गन्धोदकैः सिक्तां, फलादिभिरुप्तां विकीर्णाम्॥ १४॥

प्रतिद्वारं दध्यादिभि र्जलपूर्णकुम्भैः धूपैः दीपैश्चालङ्कृताम्, एवम्भूतां पुर मिति पूर्वेणान्वयः॥ १५॥

---

1. W निरतिशयसुख° 2 W दुर्दर्शं 3 W °कं 4 W °तं 5 W विनेव अक्ष्णां 6 W °पत्प्रवृत्तेषु 7 W °काः 8 W °राः

**विज०** हे नाथ! तव रूपं पश्येमेति यत् यस्मात् वयं भवता सनाथाः स्म नाथवन्तो भवाम। अहो अस्मद्भाग्य मित्यन्वयः। कथम्भूतम्? त्रैविष्टपानामिन्द्रादिदेवाना मपि दूरतः चिरकालतः चीर्णतपस्सम्पत्त्या दृश्यत इति दूरदर्शनम्। अनेन दर्शनसाधनसामग्र्येवाभिप्रेता न तु दर्शनाभावः। तैः प्रार्थितत्वेन तत्कार्यार्थमवतीर्णत्वात् दर्शनतारतम्याभिप्रायो वा, प्रेम्णा स्मितं स्निग्धं निरीक्षणं मधुरावलोकनं, ताभ्यां युक्तमाननं यस्मिं स्तत्तथोक्तम्। सर्वं पूर्णं सौभगं सौन्दर्यं यस्मिं स्तत्तथोक्तम्॥ ८॥

हे अम्बुजाक्ष! अथ यर्हि यदा माधवः श्रीवल्लभो भवान् मधुविषयेभ्यः सुहृदां पाण्डवानां दिदृक्षया दर्शनेच्छया कुरून् कुरुविषयान् कुरुविषयेभ्यो मधून् वा अञ्चति गच्छति। हे अच्युत! तत्र तस्या मवस्थायाम्। तवेति षष्ठी द्वितीयार्थे, त्वां विना। कुरूणां मधूनाञ्च नोऽस्माकं यथा रविं विना अक्ष्णां तथैकः क्षणः कालः अब्दकोटिप्रतिमः वर्षकोटिसमानः स्या दित्येकान्वयः॥ ९॥

दृष्ट्या दर्शनेन शृण्वानः शृण्वन् चशब्दात् वन्दिमागधादीनां गिरः॥ १०॥

गुप्तां रक्षिताम्। भोगवती नाम नागानां पुरी। आत्मतुल्यबलैः परस्पर मात्मना तुल्यवीर्यैः, अधिकदृष्टान्तन्यायो वा॥ ११॥

वसन्तादिसर्वर्तूनां सर्वविभवैः पूर्णपुष्पसम्पत्तिभिः पुण्यै र्वृक्षै रश्वत्थादिभि र्न्यग्रोधरुहाभिः कल्पवल्लीभिर्वा आश्रमै रुपवेश्यस्थानैः उद्यानैः प्रमदादिभिस्सह राज्ञां क्रीडाभूमिभिः उपवनै र्नगरा न्नातिदूरे आरोपितवृक्षसमुदायै रारामैः पुराद्बहिः रथ्योभयपार्श्वरोपितवृक्षसमुदायै रेतैः सर्वर्तुसर्वविभवादिभिः धृता पद्माकराणां श्रीः शोभा यया सा तथोक्ता, ताम्॥ १२॥

गोपुरेषु पुरद्वारेषु अन्यद्वारेषु मार्गेषु कृतानि कौतुकतोरणानि उत्सवतोरणानि यस्यां सा तथा ताम्। अन्तः प्रतिहतः निवारित आतपो यस्यां सा तथा, ताम्॥ १३॥

सम्मार्जितानि विधूतोपस्कराणि महामार्गरथ्यापणकचत्वराणि यस्यां सा तथा। महामार्गो राजमार्गः। रथ्या रथमार्गः। आपणकानि पण्यविक्रयस्थानानि। चत्वरं चतुष्पथम्। गन्धजलैः चन्दनादितोयैः सिक्तां प्रोक्षितां, क्रमुकफलपुष्पाक्षताङ्कुरैः उप्ताम्॥ १४॥

गृहाणां द्वारि दध्यक्षतफलेक्षुभिः पूर्णकुम्भै र्बलिभिः पूजासाधनै र्धूपदीपादिकै रलङ्कृताम्। एवंविधां पुरीं प्राविश दिति पूर्वेणान्वयः॥ १५॥

---

1 K.M °स्मात्तस्मात् 2 K.M °रणानि

रा० कृ० यत् यस्मात् त्रैविष्टपानामपि देवानामपि दूरदर्शनं दुर्लभदर्शनम्। प्रेमस्मितस्निग्धनिरीक्षणाननं प्रेमपूर्वकं स्मितं स्निग्धे सानुरागे निरीक्षणे लोचने यस्मिन् तत्। सर्वसौभगं सर्वाङ्गसौन्दर्यं तव रूपं पश्येम। तस्मात् अहो वयं भवता सनाथाः स्मः॥ ८॥

भो अम्बुजाक्ष! अच्युत! यर्हि यदा भवान् सुहृद्दिदृक्षया सुहृदां धर्मजादीनां नन्दादीनाञ्च दिदृक्षया कुरून् हस्तिनापुरं, अथवा मधून् मधुरां अपससार जगाम,) तत्र तदा तव नः त्वदीयाना मस्माकं रवेः विना अक्ष्णामिव, क्षणः अब्दकोटिप्रतिमः संवत्सरकोटिसमयसमानोऽभवत्॥ ९॥

च अनन्तरञ्च। इति पूर्वोक्तप्रकारेण। ईरिताः उक्ताः। प्रजानां वाचः भक्तपालको भगवान् शृण्वन् दृष्ट्या साभिनन्दनविलोकनेन अनुग्रहं वितन्वन् कुर्वन् पुरीं द्वारकां प्राविशत्॥ १०॥

इतःपरं पञ्चभिः श्लोकैः पुरीं विशिनष्टि आत्मतुल्यबलैः स्वसमानबलैः मधु भोज दशार्हार्ह कुकुरान्धकवृष्णिभिः नागै र्भोगवतीमिव गुप्तां रक्षिताम्। सर्वर्तुसर्वविभवैः युगपत् सर्वर्तूनां सर्वविभवैः पुष्पफलादिसम्पद्भिः सहितैः पुण्यवृक्षलताश्रमैः पावनतरुभि र्लतामण्डपैश्च समेतैः उद्यानोपवनारामैः उद्यानादिभिः वृतपद्माकरश्रियं, वृतानां पद्माकराणां सरोवराणां श्रीः शोभा यस्यां ताम्। गोपुरद्वारमार्गेषु, गोपुरे पुरद्वारे द्वारे गृहद्वारे मार्गेषु च कृतकौतुकतोरणां, कृतानि कौतुकतोरणानि उत्सवतोरणानि यस्यां ताम्, चित्रध्वजपताकाग्रैः, चित्राणां ध्वजपताकानां अग्रैः अन्तःप्रतिहतातपाम्, प्रतिहतः आतपः यस्यां ताम्, सम्मार्जितमहामार्गरथ्यापणकचत्वरां, सम्मार्जितानि महामार्गरथ्यापणकचत्वराणि, महामार्गाः रथ्याः, आपणकाः चत्वराणि च यस्यां ताम्, गन्धजलैः सुगन्धवारिभिः सिक्तां फलपुष्पाक्षताङ्कुरैः उप्तां व्याप्ताम्। किञ्च, गृहाणां द्वारि द्वारि प्रतिद्वारं दध्यक्षतफलेक्षुभिः पूर्णकुम्भैः बलिभिः नैवेद्यद्रव्यैः धूपदीपादिकै रलङ्कृताम्, ईदृशीं पुरीं प्राविश दिति पूर्वेणान्वयः॥ ११, १२, १३, १४, १५॥

निशम्य प्रेष्ठ[1] मायान्तं वसुदेवो महामनाः ।
अक्रूरश्चोग्रसेनश्च रामश्चाद्भुतविक्रमः ॥ १६ ॥

प्रद्युम्नश्चारुदेष्णश्च[2] साम्बो[3] जाम्बवतीसुतः ।
प्रहर्षवेगोच्छ्[4]शित शयनासनभोजनाः ॥ १७ ॥

वारणेन्द्रं पुरस्कृत्य ब्राह्मणैः[5] ससुमङ्गलैः[6] ।
शङ्खतूर्यनिनादेन ब्रह्मघोषेणचाऽऽदृताः ॥ १८ ॥

प्रत्युज्जग्मू[7] रथै हृष्टाः[8] प्रणयागतसाध्वसाः ।
वारमुख्याश्च शतशो यानै स्तद्दर्शनोत्सुकाः ।
लसत्[9]कुण्डलनिर्भात[10] कपोलवदनश्रियः ॥ १९ ॥

नटनर्तकगन्धर्वा स्सूतमागधवन्दिनः ।
गायन्ति[11] चोत्तमश्लोक चरितान्यद्भुतानि च ॥ २० ॥

भगवां स्तत्र बन्धूनां पौराणा मनुवर्तिनाम् ।
यथाविध्यु[12]पसङ्गम्य सर्वेषां मान मादधे ॥ २१ ॥

प्रह्वा[13]भिवादना[14]श्लेषकरस्पर्शस्मितेक्षणैः ।
आश्वास्य चा[15] श्वपाकेभ्यो वरैश्चाभिमतै र्विभुः ॥ २२ ॥

---

1 K,M कृष्ण° 2 H,V,W °धे° 3 H,V ये च साम्बगदादयः; Af,Gf चारुसाम्बगदादयः 4 H K,M V W °च्छ्रस° 5 B पाणिभिः 6 Af,Gf तु 7 Af,Gf प्रतिजग्मू° 8 H,V °ब्रह्मन्! 9 K,M चल° 10 Af,Gf °निर्भिन्न° 11 Af,Gf °न्त उ° 12 H,V °विधि समा° 13. Af,Gf बान्धवानथ आश्लिष्य 14 K M °वन्द° 15 K,M आ°

**श्रीध॰** निशम्येत्यादिश्लोकचतुष्क मेकं वाक्यम्। प्रेष्ठं[1] अन्तरात्मान मायान्तं निशम्य श्रुत्वा वसुदेवादयः प्रत्युज्जग्मुरिति चतुर्थेनान्वयः ॥ १६ ॥

**प्रद्युम्न** इति। प्रहर्षवेगेनोच्छ्[2]शितानि उल्लङ्घितानि शयनादीनि यै स्ते। शंश[3] प्लुतगतौ ॥ १७ ॥

**वारणेन्द्रमिति** । वारणेन्द्रं मङ्गलार्थं पुरतः कृत्वा ससुमङ्गलैः सुमङ्गलं पुष्पादि, तद्युक्तपाणिभिः। ब्रह्मघोषो मन्त्रपाठः[4] ॥ १८ ॥

**प्रत्युज्जग्मु** रिति सार्धश्लोक मेकं वाक्यम्। प्रणयेन स्नेहेन आगतं साध्वसं सम्भ्रमो येषां[5] ते[6]। वा[7]रमुख्या नटादयश्च प्रत्युज्जग्मुः। लसत्कुण्डलैर्निर्भातानि यानि कपोलानि तैर्वदनेषु श्रीः शोभा यासां ताः। वारमुख्या नर्तक्यो वेश्या इति यावत्॥ १९ ॥

**नटेति।** अद्भुतानि चेति चकारस्य वन्दिनश्चेत्यन्वयः। नटा नवरसाभिनयचतुराः। तालाद्यनुसारेण नृत्यन्तो नर्तकाः। गन्धर्वा गायकाः। "सूताः पौराणिकाः प्रोक्ता मागधा वंशशंसकाः। वन्दिनस्त्वमलप्रज्ञाः प्रस्तावसदृशोक्तयः"। ते सर्वे गायन्ति चेत्यन्वयः। उत्तमश्लोकस्य अद्भुतानि चरित्राणि भक्तवात्सल्यादीनि॥ २०॥

**भगवानिति।** यथाविधि यै स्सह यथोचितं तैस्तथा समागम्य समागमं कृत्वा सर्वेषां मान मादधे, कृतवा नित्यर्थः॥ २१॥

तदाह — **प्रह्वेति।** प्रह्वं प्रह्वत्वं शिरसा नतिः, अभिवादनं वाचा नतिः। आश्वास्य अभयं दत्वा, आ श्वपाकेभ्यः श्वपाकानभिव्याप्य, आचण्डाल मित्यर्थः। वरै रभीष्टदानैश्च मानं कृतवान्[10]॥ २२॥

---

1. H,V add अत्यन्तप्रीतिविषयं 2. H,V °च्छ्वसि° V श्वस 4. H,V add च 5. H,V यासां 6. H,V omit ते 7. H,V omit वारमुख्याः नटादयश्च प्रत्युज्जग्मुः 8. H,V यथोक्तम् 9. B °कादीनभि°; H,V कानप्यभि° 10. H,V add इत्यर्थः॥

**वीर॰** प्रेष्ठं निरतिशयप्रियतमं भगवन्तमायान्तं निशम्याऽऽकर्ण्य महामना वसुदेवः अक्रूरादयश्च॥ १६॥

प्रकृष्टो हर्ष स्तस्य वेगेन औत्कण्ठ्येन उच्छ्वसितानि व्युदस्तानि त्यक्तानि इति यावत्। शयनादीनि यै स्तथाभूतास्सन्तः॥ १७॥

वारणेन्द्रं गजेन्द्रं पुरस्कृत्य पुरोऽवस्थाप्य ससुमङ्गलैः स्वस्तिवाचनसहितैः ब्राह्मणैः शङ्खानां तूर्याणाञ्च निनादेन ब्रह्मघोषेण[1] च सह आदृताः आदरयुक्ताः॥ १८॥

हे ब्रह्मन्! प्रणयेन हेतुना आगतं साध्वसं भयं येषां तथाभूता स्सन्तो रथै र्गमनसाधनैः प्रत्युज्जग्मु रभिमुखं ययुः। तथा वारमुख्याः गणिकाश्रेष्ठाश्च लसद्भ्यां कुण्डलाभ्यां निर्भातौ कपोलौ येषु तेषां वदनानां श्रीः शोभा यासां ताः तद्दिदृक्षया यानै र्गमनसाधनैः प्रत्युज्जग्मुः॥ १९॥

नटादयोऽद्भुतानि उत्तमश्लोकस्य भगवतश्चरितानि जगुः। तत्र नटा अभिनेतारः। नर्तकाः स्त्रीणां नृत्यशिक्षकाः। गन्धर्वा गायकाः। सूताः पौराणिकाः। मागधा वंशावलिपाठकाः। वन्दिनः मङ्गलवादिनः, स्तोत्रपाठकाश्च॥ २०॥

तत्र भगवान् यथाविधि नमस्कारालिङ्गनकरस्पर्शस्मितावलोकनादिभि र्यथायोग्यं वसुदेवादिभि रुपसङ्गम्य सर्वेषां पौराणा मनुवर्तिनां भृत्यानाञ्च मान मादधे, सम्मानं चकार। विभुः भगवान् श्वपाकपर्यन्तेभ्यः — चतुर्थ्यन्त मिदं — आश्वास्योपच्छन्द्य, अभिमतैर्वरै र्मानमादधे इत्यन्वयः॥ २१, २२॥

---

1. W adds वेदघोषेण

**विज॰** वसुदेवाक्रूरादय आयान्तं कृष्णं निशम्य श्रुत्वा करधृतमौक्तिकपूर्णघटं वारणेन्द्रं पुरस्कृत्य पुरस्कृतैः ब्राह्मणैश्च सार्धं रथैः साधनैः प्रत्युज्जग्मु रित्यन्वयः। किंविशिष्टाः? प्रहर्षवेगेन उच्छ्[1]शितानि सहसा परित्यक्तानि

शयनासनभोजनानि यैस्ते तथा। तूर्यं काहलम्। ब्रह्मघोषः वेदघोषः। मय्यासन्नेऽपि मां नाभिजग्मु रिति हार्दो भावः। साध्वसं प्रणयेनाऽऽगतं साध्वसं येषां ते। पौरा वारमुख्याः नर्तकीषु गणिकासु श्रेष्ठाः तस्य कृष्णस्य दर्शनोत्कण्ठावत्यः चलद्भिः कुण्डलै र्निर्भातानि कपोलानि येषां तानि तथोक्तानि चलत्कुण्डलनिर्भातकपोलानि च तानि वदनानि चलत्कुण्डलनिर्भातकपोलवदनानि, तेषां श्रीः यासां ता स्तथोक्ताः ॥ १६, १७, १८, १९ ॥

अभिनयेन शृङ्गाराद्यनुकरणकर्ता नटः। गीतवाद्यानुसारेण नृत्यकर्ता नर्तकः। षड्जादिकुशलाः गन्धर्वाः। पुराणाद्यर्थानुसारेण स्तावकाः सूताः। पराक्रमाङ्कितस्तुतिकर्तारो मागधाः। मङ्गलपाठका वन्दिनः ॥ २० ॥

तत्र तेषु वसुदेवादि ष्वागतेषु सत्सु श्रीकृष्णो भगवान् सर्वेषां बन्ध्वादीनां यथाविध्युपसङ्गम्य मानमादधे, चकार इत्यन्वयः ॥ २१ ॥

कैः प्रह्वादिभिः ॥ २२ ॥

---

1. K,M °च्छ्वसि°

**रा० कृ०** हे ब्रह्मन्! प्रेष्ठं प्रियतमं श्रीकृष्णं आयान्तं आगच्छन्तं निशम्य श्रुत्वा। महामनाः हृष्टमानसः। इदं विशेषणं अक्रूरादीनामपि सम्बध्यते। वसुदेवः, अक्रूरः, उग्रसेनः, अद्भुतविक्रमो रामः, प्रद्युम्नः, चारुदेष्णः, किञ्च साम्बः, जाम्बवतीसुतः एते सर्वेऽपि प्रहर्षवेगोच्छ्वसितशयनासनभोजनाः प्रहर्षेण हर्षाधिक्येन वेगेन त्वरया च उच्छ्वसितानि त्यक्तानि शयनासनभोजनानि यैस्ते तथाभूताः आदृताः आदरसहिताः प्रणयागतसाध्वसाः स्नेहसञ्जातसम्भ्रमाश्च सन्तः वारणेन्द्रं गजेन्द्रं पुरस्कृत्य पुरतः कृत्वा ससुमङ्गलैः पुष्पाक्षतादिमङ्गलद्रव्ययुक्तैः ब्राह्मणैः शङ्खतूर्यनिनादेन ब्रह्मघोषेण वेदघोषेण च सह रथैः यानसाधनैः प्रत्युज्जग्मुः प्रत्युद्ययुः।

किञ्च, लसत्कुण्डलनिर्भातकपोलवदनश्रियः लसत्कुण्डलैः प्रकाशमानकुण्डलैः निर्भाताः नितरां विराजिताः कपोलाः येषां तेषां वदनानां श्रीः शोभा यासां ताः वारमुख्याः वेश्याः तद्दर्शनोत्सुकाः भगवद्दर्शनोत्सुकाः यानैः यानसाधनैः शतशः तदभिमुखं ययुः ॥ १६, १७, १८, १९ ॥

नटनर्तकगन्धर्वाः सूतमागधवन्दिनः अद्भुतानि आश्चर्यावहानि उत्तमश्लोकचरितानि, उत्तमश्लोकस्य उत्तमयशसः श्रीकृष्णस्य चरित्राणि गायन्ति च। चकारेण अभिमुखं जग्मुरित्यपि व्यज्यते तत्र तदा विभुः भगवान् उपसङ्गम्य बान्धवादिभिः समागम्य प्रह्वाभिवादनाश्लेषकरस्पर्शस्मितेक्षणैः, प्रह्वं प्रह्वत्वं, नतशिरस्कत्व मिति यावत्। अभिवादनं वाचा नमस्कारः। आश्लेषः आलिङ्गनम्। करस्पर्शः, स्मितेक्षणं स्मितपूर्वकावलोकनम् एतै रभिमतैः वरैः वस्तुदानैश्च आश्वास्य सान्त्वयित्वा सर्वेषां बन्धूनां पौरवाणाञ्च आ श्वपाकेभ्यः श्वपचा नभिव्याप्य आचण्डाल मिति यावत्। अनुवर्तिनां सेवकानाञ्च यथाविधि यथोचितं मानं सत्कारं आदधे अकरोत् ॥ २०, २१, २२ ॥

**स्वयञ्च गुरुभि र्विप्रैः सदारैः[1] स्थविरै रपि।**
**आशीर्भि र्युज्यमानोऽन्यै र्वन्दिभिश्चाविशत्पुरम्[2] ॥ २३ ॥**

**राजमार्गं गते कृष्णे द्वारकायां[3] कुलस्त्रियः ।**
**हर्म्याण्यारुरुहु र्विप्र[4]! तदीक्षणमहोत्सवाः ।। २४ ।।**

**नित्यं निरीक्षमाणानां यद[5]पि द्वारकौकसाम् ।**
**न[6] वितृप्यन्ति हि दृशः श्रियो धामाङ्ग मच्युतम् ।। २५ ।।**

**श्रियो निवासो यस्योरः पानपात्रं मुखं दृशाम् ।**
**बाहवो लोकपालानां सारङ्गाणां पदाम्बुजम् ।। २६ ।।**

**सितातपत्रव्यजनै रुपस्कृतः प्रसून वर्षै रभिवर्षितः पथि ।**
**पिशङ्गवासा वनमालया बभौ घनो यथार्कोडुपचापवैद्युतैः ।। २७ ।।**

**प्रविष्टस्तु गृहं पि[7]त्रोः परिष्वक्तः स्वं[8]मातृभिः ।**
**ववन्दे शिरसा सप्त देवकीप्रमुखा मुं[9]दा ।। २८ ।।**

**ताः पुत्र मङ्क मारोप्य स्नेहस्नुतपयोधराः ।**
**हर्षविह्वलितात्मानः सिषिचु र्नेत्रजैर्जलैः ।। २९ ।।**

**अथाविशत् स्वं[10]भवनं सर्वकाम मनुत्तमम् ।**
**प्रासादा यत्र पत्नीनां सहस्राणि च षोडश ।। ३० ।।**

*** शत मष्टोत्तरञ्चैव वज्रवैदूर्यमण्डिताः ।।**

---

1 K,M °र्बन्धुभि° 2. AF,GF °रीम् 3. H,V °यां 4. B,H,K,M,V °प्राः 5 K,M °द्य° 6. B नैव 7.AF,GF कृष्णः 8. K,M,W च 9. B,H,V °स्त° 10. M स *An additional half verse with पदरत्नावली is found in K,M. in between VV 30 & 31.

**श्रीध०** **स्वयञ्चेति**। अन्यैश्च वन्दिभिश्च ।। २३ ।।

**राजमार्ग** मिति। हे[1] विप्र! शौनक! तस्येक्षणेन महान् उत्सवो यासां ताः ।। २४ ।।

**नित्यमिति**। यत् यस्मात् नित्यं सदा अच्युतं निरीक्षमाणानामपि दृशो नैव तृप्यन्ति अत आरुरुहुः। कथम्भूतम्? श्रियः शोभाया धाम स्थानमङ्गं यस्य तम् ।। २५ ।।

[2]एतदेवाभिनयेनाऽऽह — **श्रिय** इति। श्रियो लक्ष्म्याः यस्य उरो वक्षः निवासः। यस्य मुखं सर्वप्राणिनां दृशां सौन्दर्यामृतपानाय पानपात्रम्। यस्य बाहवो लोकपालानां निवासः सारं श्री[3]कृष्णं गायन्तीति सारङ्गा भक्ता स्तेषां यस्य पदाम्बुजं निवासः तं निरीक्षमाणानां दृश इति पूर्वेणान्वयः ।। २६ ।।

**सितेति**। सितै रातपत्रव्यजनै रुपस्कृतो मण्डितः। अर्कश्चोडुपो नक्षत्रसहितश्चन्द्रश्च। चाप मिन्द्रधनुश्च। वैद्युतं विद्युत्तेजश्च, तैः। अर्कश्छत्रस्योपमानम्। नक्षत्राणि पुष्पवृष्टेः। चन्द्रः परिभ्रमकृतमण्डलाकारयोः चामरव्यजनयोः।

चापं वनमालायाः। विद्युत्तेजः पिशङ्गवाससोः[4]। अभूतोपमेयम्। यदि घनस्योपरि सूर्यबिम्ब मुभयतः चन्द्रौ, सर्वतो नक्षत्राणि[5], मध्ये च मिलितं चापद्वयं, स्थिरं विद्युत्तेजश्च भवे त्तर्हि, स घनो यथा भाति तथा हरिर्बभा वित्यर्थः॥ २७॥

**प्रविष्ट** इति। देवकी प्रमुखा स्सप्त ववन्द इति मातृसोदर्या दादरविशेषज्ञापनार्थ मुक्तम्। अष्टादश अपि व[6]सुदेवभार्याः मातृतुल्यत्वान्नमस्कृता एव॥ २८॥

**ता** इति। नेत्रजैर्जलै र्हर्षाश्रुभिः॥ २९॥

स्वगृहप्रवेश माह — **अथेति**। अनुत्तमं यस्मा दुत्तमं नास्ति तदनुत्तमम्। सर्वोत्तम मित्यर्थः। सहस्राणि च षोडशेति चकारा दष्टोत्तरशताधिकानीति ज्ञेयम्॥ ३०॥

1. B,H,V, omit हे विप्र! शौनक! 2 H,V omit ए 3 H,V हरिं 4 H,V °सः 5 H,V °णां 6 B पितुर्वसुदेवस्य; H,V वसुदेवस्य

**वीर॰** स्वयञ्च सदारै र्गुरुभिः स्थविरै र्वृद्धै र्विप्रै रन्यैर्वन्दिभिश्च कृ[1]ताभि राशीर्भिश्च युज्यमानः पुर माविशत्॥ २३॥

द्वारकायाः राजमार्गं कृष्णे गते सति तत्र तत्र स्त्रियः तस्य कृष्णस्येक्षणे महानुत्सवो हर्षो यासां ताः। हे विप्र! हर्म्याणि सौधान्यारुरुहुः॥ २४॥

नित्यं निरीक्षमाणानामपि कुतो दिदृक्षा बभूवेत्यत्राह — **नित्यमिति**। यत् यस्मात् नित्यं श्रियो धामाङ्गं लक्ष्मीनिवासदेहम्। 'श्रियो धामान' मिति च पाठः। अच्युतं नित्यं निरीक्षमाणाना मपि द्वारकौकसां, द्वारका ओकः स्थानं यासां, तासां स्त्रीणां दृशो न वितृप्यन्ति। तस्मा त्तदीक्षणमहोत्सवा हर्म्याणि आरुरुहु रित्यर्थः। हिशब्देन अतृप्तेः प्रसिद्धि र्द्योत्यते॥ २५॥

उचिता चैषा ह्यतृप्ति रित्यभिप्रायेणाह — **श्रिय** इति। यस्येत्यस्य उरोमुखबाहुपदाम्बुजैः प्रत्येक मन्वयः। यस्योरः श्रियो निवासः स्थानम्, उरोलावण्यानुभवाय तदेव[2] वास माश्रितवती श्रीरित्यभिप्रायः। यस्य मुखं, दृशां पश्यज्जनचक्षुषां पानपात्रं, तल्लावण्यरसपानपात्रं, यस्य च हि बाहवो लोकपालानां पानपात्रं, तल्लावण्यरसपानपात्र, यस्य च पदाम्बुजं, सारङ्गाणां, सारं गच्छतां सारग्राहिणां मुनीनां तल्लावण्यपानपात्रं, सारं गायन्तीति सारङ्गाः, सारतमार्थवक्तार इति च। तमच्युतं नित्यं निरीक्षमाणानामपि दृशो न वितृप्यन्तीति युक्त मेवेत्यर्थः॥ २६॥

**सितेति**। पथि सितातपत्रञ्च व्यजने च तैरुपस्कृतः सितातपत्रेणावृतः, व्यजनाभ्याञ्च वीज्यमान इत्यर्थः। पिशङ्गे वाससी यस्य स भगवान् वनमालया बभौ। कथम्? यथा अर्कादिभिः युगपत्समुदितैः घनो नीलाम्बुद स्तद्वत्। अभूतोपमैषा। नह्यर्कोडुपयोः सहावस्थान मस्ति। तत्रार्कादिस्थानीया मु[3]कुटवनमालावस्त्रभूषणादयः, विद्युदेव वैद्युतम्। उडुपश्चन्द्रः। यद्वा उडुपग्रहणं गुरुशुक्रयोः, अन्येषां नक्षत्राणा मप्युपलक्षणम्। तत्रोडुपस्थानीयं सितातपत्रं

गुरुशुक्रस्थानीये व्यजने नक्षत्रस्थानीयानि प्रसूनानि, इन्द्रमणिस्थानीया वनमाला, विद्युत्स्थानीयं पिशङ्गवस्त्रम्, अर्कस्थानीयं तु मुकुट मिति सितातपत्राद्युपस्कृतत्वादि विशेषणसामर्थ्यात्॥ २७॥

ततस्तु पित्रो र्देवकी वसुदेवयो र्गृहं प्रविष्टो भगवान् मातृभि र्देवकीरोहिण्यादिभिः परिष्वक्तः आलिङ्गितः देवकीप्रमुखा मातृर्मुदा शिरसा मनसा ववन्दे॥ २८॥

ता देवक्यादयः पुत्रं कृष्ण मङ्कमारोप्य स्नेहेन स्नुतौ पयोधरौ स्तनौ यासां, हर्षेण विह्वलित आत्मा मनो यासां तथाभूताः नेत्रजलै रानन्दबाष्पैः सिषिचुः॥ २९॥

अथ ततः, स्वभवनं स्वगृहं प्राविशत्। कथम्भूतम्? सर्वे कामाः काम्यमानाः भोग्यभोगोपकरणस्थानादयो यस्मिन्, नास्त्युत्तमं यस्मात् यत्र पत्नीनां षोडशसहस्राणि प्रासादा स्तथाभूतम्॥ ३०॥

---

1. W कर्तृभिः 2. W °वा° 3. W म° 4. W °धनुः° 5. W म° 6 W adds प्रस्नवन्तौ 7. W °णभोगस्था°

**विज०** हर्म्याणि सौधानि तदीक्षणं तस्य श्रीकृष्णस्य दर्शनमेव महानुत्सवो यासां ताः तथोक्ताः॥ २३, २४॥

दृष्टचरस्य अदृष्टपूर्वदर्शनवत् दर्शने किमि त्युत्कण्ठातिशय इति तत्राह — **नित्य** मिति। श्रियो धाम स्थानं अङ्गं वपुर्यस्य स तथा। तमच्युतं नित्यं निरीक्षमाणानां द्वारकानिवासिनामपि दृशो न वितृप्यन्ति, पुनः पुनः दृष्ट्वापि अलं दर्शनेनेति भावं न प्राप्नुवन्ति, यस्मा त्तस्मा द्युक्त उत्कण्ठातिशयो हीत्यन्वयः॥ २५॥

नैतदाश्चर्य मित्याह — **श्रिय** इति। यस्य हरेः उरः वक्षस्स्थलं श्रियो लक्ष्म्याः निवासः स्थानं, यस्य मुखं द्रष्टृणां लावण्यं पातुं पानपात्रम्, यस्य बाहवो लोकपालानां बलस्थानम्, यस्य पदाम्बुजं सारङ्गाणां सारग्राहिणां ब्रह्मादीनां परायणम्॥ २६॥

सितातपत्रव्यजनादिभि रलङ्कृतो भगवांस्तथा बभौ यथार्कादिभि रन्वितो मेघो भातीत्यन्वयः। अत्रायं विभागः — मध्याह्नार्कस्थानीयं श्वेतच्छत्रम्, उडुपस्थानीयं व्यजनम्, इन्द्रचापस्थानीया माला, पीतवस्त्रं विद्युत्स्थानीयम्, मेघस्थानीयो भगवान्। अर्कस्थानीयं किरीटम्, उडुपस्थानीयं श्वेतच्छत्रं, मन्दारादिप्रसूनमाला इन्द्रचापस्थानीया विद्युत्स्थानीयं व्यजन मिति वा॥ २७॥

पित्रोः मातापित्रोः। स्वमातृभिः देवक्यादिभिः परिष्वक्तः आश्लिष्टः॥ २८॥

ता मातरः पुन्नाम्नो नरकात् त्रायत इति पुत्रः, तं कृष्णं सिषिचुः अभ्यषिञ्चन्। हर्षेण विह्वलीकृतो विवशीकृतः आत्मा अन्तःकरणं यासां तास्तथोक्ताः॥ २९॥

यत्र यस्मिन् भवने वज्रवैदूर्यमणिमण्डिताः षोडशसहस्राणि पुनरष्टोत्तरशतं पत्नीनां प्रासादाः सन्ति तदनुत्तमं सर्वकामं स्वभवन माविश दित्येकान्वयः। काम्यन्त इति कामाः इच्छाविषया स्ते सर्वे यत्र सन्ति तत्तथोक्तम्॥ ३०॥

**रा॰ कृ॰** अपिच भगवान् स्वयं सदारैः गुरुभि र्विप्रादिभिः विप्रैः स्थविरैः वृद्धै रपि अन्यैः पौरैश्च वन्दिभिश्च कृताभि रिति शेषः। आशीर्भि र्युज्यमानः पुर माविशत्। हे विप्र! कृष्णे द्वारकाया राजमार्गं गते कुलस्त्रियः तदीक्षणमहोत्सवाः हर्म्याणि सौधानि आरुरुहुः। यस्य उरः श्रियो निवासः मुखं दृशां विलोकिजननेत्राणां पानपात्रं सौन्दर्यामृतपानपात्रम्। बाहवः लोकपालानां निवास इति शेषः। पदाम्बुजं सारङ्गाणां भक्तानां निवासः, तं श्रियोधाम अङ्गम्, श्रियः स्थानं अङ्गं यस्य तम्, अच्युतं श्रीकृष्णं, नित्यं यदपि निरीक्षमाणानां वीक्षमाणाना मपि द्वारकौकसां द्वारकानिवासानां जनानां दृशः नयनानि न वितृप्यन्ति तृप्तिं न प्राप्नुवन्ति॥ २३, २४, २५, २६॥

पथि मार्गे सितातपत्रव्यजनैः श्वेतच्छत्रण व्यजनाभ्यां च उपस्कृतः क्रमेण आच्छादितः वीजितः। प्रसूनवर्षैः पुष्पवृष्टिभिः अभिवर्षितः वनमालयोपलक्षितः पिशङ्गवासाः पीताम्बरो भगवान् अर्कोडुपचापवैद्युतैः सूर्यचन्द्रेन्द्रचापविद्युत्तेजोभिः उपलक्षितः, घनो यथा मेघ इव बभौ विरराज॥ २७॥

अनन्तरं तु पित्रोः देवकीवसुदेवयोः गृहं प्रविष्टः स भगवान् स्वमातृभिः परिष्वक्तः आलिङ्गितः मुदा हर्षेण देवकीप्रमुखा स्सप्त मातृः इति शेषः। शिरसा ववन्दे॥ २८॥

ता मातरः पुत्रं श्रीकृष्णं अङ्कमारोप्य स्नेहस्नुतपयोधराः स्नेहेन प्रस्रवत्कुचाः हर्षविह्वलितात्मान स्सत्यः नेत्रजैः जलैः आनन्दबाष्पैः सिषिचुः।

तदा भगवतो वासुदेवस्य तरुणवयस्कत्वात् स्नेहेनापि तन्मातृणां स्नुतपयोधरत्व मस्वाभाविक मिव यद्यपि स्थूलदृशां भाति तथापि लोकोत्तरलीलस्य तस्य विषये किं मसाहजिकं भवति। यद्वा, वात्सल्यभक्तिभरितान्तरङ्गानां भगवन्मातृत्वभाग्यशालिनीनां तासां नारीशिरोमणीनां दृक्पथे सः श्रीकृष्णः सर्वदा स्तनन्धय एव भवेत्॥ २९॥

अथ अनन्तरं स भगवान् यत्र भवने षोडशसहस्राणि पत्नीनां प्रासादा स्सन्ति तत्सर्वकामं सर्वभोगसमेतं अनुत्तमं सर्वोत्तमं स्वभवन मविशत् प्रविष्टः॥ ३०॥

**पत्न्यः पतिं[1] प्रोष्य गृहा नुपागतं विलोक्य सञ्जातमनोमहोत्सवाः।**
**उत्तस्थु रारात् सहसाऽऽसनाशयात्[2] सांकं[3] व्रतै र्व्रीडितलोचनाननाः॥ ३१॥**
**तमात्मजै र्दृष्टिभि रन्तरात्मना दुरन्तभावाः परिरेभिरे पतिम्।**
**निरुद्धम प्यां[4]स्रवदम्बु नेत्रयो र्विलज्ज[5]तीनां भृगुवर्य वैक्लवात्[6]॥ ३२॥**
**यद्यप्यसौ पार्श्वगतो रहोगत स्तत्रा[7]ऽपि तस्याङ्घ्रियुगं नवं नवम्।**
**पदे पदे का विरमेत तत्पदाच्चलापि यं[8] श्री र्न जहाति कर्हिचित्॥ ३३॥**
**एवं नृपाणां क्षितिभारजन्मना मक्षौहिणीभिः परिवृत्त[9]तेजसाम्।**
**विधाय वैरं श्वसनो यथाऽनलं मिथो वधे[10] नोपरतो निरायुधः॥ ३४॥**

1. W प्रियं 2. AF,GF °श्रया°, K,M °श्रयाः 3 K,M साकम्पितव्रीडित°; AF,GF सकञ्चुका व्रीडित° 4. K,M °प्य° 5 H,V लज्जितानां
6. H,V वि° 7 H,K,M,V तासां तथाप्यङ्घ्रि; WF °स्तदा° 8 .H,K,M,V यं श्री° 9. AF,GF °द्ध° 10 AF,GF °धायो°

**श्रीध॰ पत्न्यः** इति। देशान्तरे उषित्वा आरात् दूरा देव विलोक्य सञ्जातो मनसि महोत्सवो यासां ताः। आसना दाशयाच्च- आसनात् देहेनोत्तस्थुः, आशयोऽन्तःकरणं, तस्मादप्यात्मना[1] उत्तस्थुः। श्रीकृष्णेनाऽऽत्मनः संश्लेषे अन्तःकरणव्यवधानमपि ता नासहन्तेत्यर्थः[2]। व्रीडितानि लोचना न्याननानि च यासां ताः अपाङ्गै रेव वीक्षणात् व्रीडितलोचनाः अवनतमुखत्वात् व्रीडिताननाः साकं व्रतै रिति हास्यक्रीडावर्जनादिनियमा अपि ताभ्य उत्तस्थु रित्यर्थः। धृतव्रता एवोत्तस्थु रिति वा। व्रतानि च याज्ञवल्क्येनोक्तानि — "क्रीडां शरीरसंस्कारं समाजोत्सवदर्शनम्, हास्यं परगृहे यानं त्यजेत्प्रोषितभर्तृका" (याज्ञ. स्मृ. 1-84) इति॥ ३१॥

**तमिति**।[3] आयान्तं तं पतिं दर्शनात्पूर्व मात्मना इव[4] बुद्ध्यान्तर्हृदये परिरेभिरे, ततो दृष्टिभिः, ततस्समीप- मागत मात्मजैः पुत्रैः[5] गृहीतकण्ठ मालिङ्गयन्त्य इव स्वय मालिङ्गितवत्य इत्यर्थः। अत्र हेतुः — दुरन्तभावा गम्भीराभिप्रायाः। तदा[6] च तासां नेत्रयो र्निरुद्ध मप्यम्बु बाष्पं वैक्लवा द्वैवश्या दास्रवत् ईषत्सुस्राव। अत एव धैर्यहान्या विलज्जतीनाम्[7]। हे भृगुवर्य! चित्रं शृण्विति[8]॥ ३२॥

**यदिति**। पार्श्वगतः समीपस्थ स्तत्रापि रहोगत एकान्ते प्रवर्तते स्म। पदे पदे प्रतिक्षणं नवं नवमेव। अत्र कैमुत्यन्यायः का विरमेतेति, चला चञ्चलस्वभावाऽपि श्रीः न जहाति॥ ३३॥

उक्तं श्रीकृष्णचरितं संक्षिप्याह — **एव** मिति द्वाभ्याम्। क्षिते र्भाराय जन्म येषाम्। पापातिशयेन केवलं भूभारायोत्पन्नानामित्यर्थः। अक्षौहिणीभिः कृत्वा परिवृत्तं सर्वतः प्रसृतं तेजः प्रभावो योषाम्[9]। श्वसनो वायु र्वेणूना मन्योन्यसङ्घर्षणेनानलं विधाय मिथो दाहेन यथोपशाम्यति, तद्वत्॥ ३४॥

---

1 H,V °नात्मनाऽऽत्मनः 2 H,V न सहन्त इ° 3 B adds आरात् 4 H,V omit इव 5 H,V पुत्रानुद्वह्य तत्कण्ठ° 6. H,V °था
7 V °लज्जितानां 8 B adds अर्थः 9 H,V add परिवृद्धतेजसामिति वा

**वीर॰** तदा प्रोष्य प्रवासं कृत्वा गृहा नुपागतं प्रियं दूराद्विलोक्य पत्न्यो रुक्मिण्यादयः सञ्जातो मनसि महान् उत्सवो हर्षो यासां, व्रीडिते लोचने येषु तान्याननानि यासां तथाभूताः व्रतैः सहासनाशयात् सहसा आशु उत्तस्थुः। तत्र व्रतेभ्यः उत्थानं नाम भर्त्रागमनार्थं व्रतत्यागः, आसना दुत्थानं प्रसिद्धम्। आशया दभिप्राया दुत्थानं दिदृक्षौत्कण्ठ्यत्यागः दर्शनस्य जातत्वात्॥ ३१॥

**तमिति**। दुरन्तोऽगाधो भावः स्नेहो यासां ताः पत्न्यः समागतं तं पतिम् आत्मजै र्दृष्टिभि रन्तरात्मना च परिरेभिरे आलिङ्गितवत्यः। शरीरपरिरम्भस्य[1] रहःकालिकत्वा त्तं न साक्षात् चक्रुः, अपितु पुत्रैः प्रद्युम्नादिपुत्रद्वारेणे त्यभिप्रायेण पुत्रै रित्युक्तम्। मनसा चक्षुषा च समं साक्षादेव चक्रु रित्यभिप्रायेण अन्तरात्मना दृष्टिभि श्चेत्युक्तम्। हे भृगुवर्य! विलज्जतीनां तासाम्, अत एव नेत्रयोः अम्बु निरुद्ध मपि वि[2]क्लबादधा[3]र्ष्ट्यात् अस्रवत्॥ ३२॥

व्रतै स्साक मासनाशया दुत्तस्थुः तमात्मजै रित्यादिना च तासां तद्विरहासहिष्णुत्वं सूचितम्। तदेवोपपादयति — **यद्यपि** इति। यद्यप्यसौ भगवान् कृष्ण स्तासां पार्श्वगतः, रहोगतश्च, तथाऽपि तस्याङ्घ्रियुगं तासां

नवं नव मेवाभूत्। यंत स्तत्पदात्तस्य पदारविन्दात् का विरमेत? विश्लिष्यावस्थातु मुत्सहेत? न कापीत्यर्थः। तदेव दर्शयितुं विशिनष्टि। चला, इतरत्र चञ्चला श्रीर्लक्ष्मीरपि कदापि यंत् यदङ्घ्रिं न जहाति, तत्पदात्का विरमेतेत्यन्वयः। तदापीति पाठान्तरम्। तत्र यद्यपि पार्श्वगतो रहोगतश्च, तदाऽपि तस्याङ्घ्रियुगं नवं नवं, किं पुनः कदाचि दन्तरितं नवं नवमिति कैमुत्यन्यायसिद्धमिति भावः। उत्तरार्धं तु यथोक्तार्थमेव ॥ ३३ ॥

अथोपरितनं वृत्तान्तं सङ्गृह्य विवक्षु रुक्तवृत्तान्तं समासतोऽनुवदति **एवम्** इति। क्षिते र्भूमे र्भरस्य जन्मादयो येभ्यः अक्षौहिणीभिः परिवृतं परितो व्याप्तं तेजः शौर्यं येषां तेषां नृपाणां कौरवाणां पाण्डवानाञ्च मिथः वैरं श्वसनो वायु रनलमग्नि मिव विधाय वर्धयित्वा स्वयं निरायुध एव तेषां मिथो वधेन वधाद्य उपरतः उपरराम उपसंहृतवान् स एष इत्युत्तरेणान्वयः स्वयं निरायुध एव सन् तेषां मिथो वधं कारयन् यः स्वयं तूष्णीम् अवस्थित इत्यर्थः ॥ ३४ ॥

---

1 W शा° 2 W वै° 3. W °दाढर्यात् 4 W यत एव मतस्त° 5 W यं

**विज°** पत्न्यः आरात् दूरा देव विलोक्य सञ्जातो मनसि महोत्सवो यासां ता स्तथोक्ताः। सहसा झटिति उत्तस्थु रित्यन्वयः। कथम्भूतम्? प्रोष्य प्रवासं कृत्वा गृहा नुपागतम्। कीदृश्यः पत्न्यः? साकम्पिताश्च व्रीडितलोचनाननाश्च साकम्पितव्रीडितलोचनाननाः, सहित माकम्पितं याभि स्ता स्तथा व्रीडितानि लोचनानि आननानि च यासां ता स्तथा ॥ ३१ ॥

दुरन्तभावाः वेलातीतस्नेहाः अनन्तशृङ्गारा वाऽन्यैरज्ञाताभिप्राया वा। दृष्टिभि रात्मजै रन्तरात्मना मनसा च तं पतिं परिरेभिरे। वैक्लव्यात्[1] पारवश्या द्विलज्जितानां तासां नेत्रयोः निरुद्ध मप्यम्बु अस्रव दित्यन्वयः ॥३२॥

नैतत्तासां स्नेहकार्यं किमित्याह — **यदि** इति। यद्यप्यसौ कृष्णो रहोगतः एकान्तगतः सदा तासां पार्श्वगतः समीपस्थः, तथाऽप्यनुपदं तासां तस्याङ्घ्रियुगं नवं नवं नूतनान्नूतनम्। तथाहि — का स्त्री तस्य पादकमलात् अलमिति विरमेत विरामं कुर्यात्? अन्यत्र चञ्चलविभवप्रदायिनी श्रीः यं भगवन्तं कर्हिचित् न जहाती त्येकान्वयः ॥ ३३ ॥

वायु र्यथा वनदहनाय वेणूनां मिथ स्सङ्घट्टनेनाग्नि मुत्पादयति, तथाऽक्षौहिणीभिः क्षितिभारजन्मनां भूमे र्भार भूतं जन्म येषां ते तथोक्ता स्तेषां परिवृत्तं परिवृद्धं तेजो येषां ते तथोक्ता स्तेषा मसुराणां विनाशाय कुरुपाण्डवपक्षपातिनां नृपाणां मिथो वैरं विधाय स्वयं निरायुधः परस्परवधेन विनाशं विधाय चोपरत उदास्त इत्यन्वयः ॥ ३४ ॥

---

1 K,M °बा°

**रा° कृ°** प्रोष्य देशान्तरे उषित्वा गृहानुपागतं पतिं आरात् दूरा द्विलोक्य पत्न्यः रुक्मिण्यादयः सञ्जातमनो महोत्सवाः सञ्जातहृदयानन्दाः व्रीडितलोचनाननाः लज्जितनयनास्याः व्रतै स्साक मासनाशयात् आसना दाशयाच्च अन्तःकरणाच्च सहसोत्तस्थुः उत्थितवत्यः ॥ ३१ ॥

हे भृगुवर्य! दुरन्तभावाः दुर्ज्ञेयाभिप्रायाः ताः पत्न्य इति शेषः। त मायान्तं पतिं प्रथम मात्मना बुद्ध्या अन्तः हृदये अनन्तरं दृष्टिभि स्तत आत्मजैः पुत्रैः पुत्रद्वारेत्यर्थः। परिरेभिरे आलिङ्गितवत्यः। तदा च विलज्जितानां तासां नेत्रयोरम्बु बाष्पं निरुद्धमपि वैक्लबात् वैवश्या दास्रवत् ईषत् स्रुतमभूत्॥ ३२॥

यद्य प्यसौ श्रीकृष्णः तासां पत्नीनां पार्श्वगतोऽन्तिकस्थः, रहोगतश्च एकान्ते वर्तमानश्च तथाप्यङ्घ्रियुगं श्रीकृष्णस्य चरणयुगलं पदे पदे अनुक्षणं नवं नवं भवतीति शेषः। अतः यत्पदकमलं चलाऽपि श्रीः लक्ष्मीः कर्हिचित् कदाऽपि न जहाति न त्यजति, तत्पदात् तस्य पदकमलात् का विरमेत? का वा सती वियुज्य स्थातुं प्रभवेत्? न कापीत्यर्थः॥ ३३॥

क्षितिभारजन्मनां भूभारकारणभूतजन्मनां अक्षौहिणीभिः परिवृत्ततेजसां सर्वतोव्याप्ततेजसां, नृपाणां राज्ञां एवं मिथः परस्परं वैरं श्वसनो मारुतः अनलं यथा अग्निमिव विधाय निरायुधः स्वय मायुधरहित एव वधेन तेषां वधात् उपरतः स भगवान् निवृत्तो बभूव।

कानने हि निबिडगुल्माकारतया प्रवृद्धेषु पवनेन च प्रचलितेषु कीचकेषु परस्परसङ्घर्षेण प्रभवति वह्निः। स च दावाग्निः पुन र्मरुतैव सहकृतः स्वाविर्भावहेतुभूतैः कीचकै स्सह सर्वमेव गहनं दहति। एवं धरणीभरकारणभूताः लोकभीकरलक्षणलक्षिताः राजानश्च समेधितसम्पदः सैन्यसहायेन जनान् यदा पीडयन्ति तदा भगवान् तद्गतान् कामक्रोधादी नासुरगुणान् सम्बध्य तेषु प्रधनप्रणय मुत्पाद्य स्वयञ्च मरुदिव निमित्तीभूय युद्धसारथि र्निरायुध एव सन् तान् दुष्टभूनेतॄन् अन्योन्यप्रहारेण मारयित्वा भुवो भार मपाकरोति, तदिदं श्रीकृष्णावतारप्रयोजने ष्वन्यतमम्॥ ३४॥

स एषं[1] नरलोकेऽस्मिन् अवतीर्णः स्वमायया।
रेमे स्त्रीरत्नकूटस्थो भगवान् प्राकृतो यथा॥ ३५॥

उद्दामभावपिशुनामलवल्गुहास व्रीडावलोकनिहतो[2][3] मदनोऽपि यासाम्।
सम्मुह्य चाप मजहात् प्रमदोत्तमास्ता यस्येन्द्रियं विमथितुं कुहकै र्न शेकुः॥ ३६॥

तं[4]मयं मन्यते लोको ह्यसङ्ग[5] मपि सङ्गिनम्।
आत्मौपम्येन मनुजं व्यापृण्वानं[6] यतोऽबुधः॥ ३७॥

एतद्[7]दीशन मीशस्य प्रकृतिस्थोऽपि तद्गुणैः।
न युज्यते सदाऽऽत्मस्थै र्यथा बुद्धि स्तदाश्रया॥ ३८॥

तं मेनिरे[8]ऽबला मूढाः[9] स्त्रैण श्चानुव्रतं रहः।
अप्रमाणविदो भर्तु रीश्वरं मतयो यथा॥ ३९॥*

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां प्रथमस्कन्धे नैमिशोपाख्याने
श्रीकृष्णद्वारकाप्रवेशो नाम एकादशोऽध्यायः ॥ ११ ॥

---

1. H,V °वं 2. K,M °वि° 3. B °तोऽमद° 4 K,M मन्यते तन्मयं; W तमिमं 5 B,H,V °सक्त° 6 K,M प्रावृष्वान मतोऽ°, H,V,W व्यावृष्वान मतोऽ° 7 K,M यत्तदी° 8 K,M °रे खलाः 9 B,H,V मौढ्यात् *Here ends the 10th chapter of the 1st Skandha in K&M

**श्रीध०** **स** इति। स्त्रीरत्नकूटस्थः उत्तमस्त्रीकदम्बस्थः ॥ ३५ ॥

नन्वेवं स्त्रीसङ्गादिभिः संसारप्रतीतेः कथं भगवानवतीर्ण इत्युच्यते? तत्राऽऽह — **उद्दामेति** द्वाभ्याम्। यासामुद्दामो गम्भीरो यो भावोऽभिप्राय स्तस्य पिशुन स्सूचकोऽमलो वल्गुः सु[1]न्दरो हासो व्रीडावलोकश्च ताभ्यां निहतोऽमदनः महादेवोऽपि सम्मुह्य लज्जया चापं पिनाक मजहात्। एवम्प्रभावा याः स्त्रियः इत्येताव द्विवक्षितम्। यद्वा भगवतो मोहिनीरूपेण महेशोऽपि मोहितः, ए[2]वमेताश्च तादृग्विलासा एवेति तथोक्तम्। ताः कुहकैः कपटै र्विभ्रमैः यस्येन्द्रियं मनो विमथितुं क्षोभयितुं न शेकु र्न शक्ताः। अथवा निहत स्ताडितो मदनोऽपि जगद्विजयी सम्मुह्य तत्तत्कर्तव्यतामूढः सन् चापं धनुर्लज्जयाऽजहा ज्जहौ। ताश्च प्रमदोत्तमाः कामविजयिन्योऽपीत्यादि पूर्ववत् ॥ ३६ ॥

**तम्** इति। तं श्रीकृष्ण मयं प्राकृतो लोकः आत्मौपम्येन स्वसादृश्येन सङ्गिनं मनुजं मन्यते। अत्र हेतुः — व्यावृष्वानं व्याप्रियमाणम्। य[3]तोऽय मबुधोऽतत्त्वज्ञः ॥ ३७ ॥

कुत इत्यपेक्षाया मैश्वर्यलक्षण माह — **एतत्** इति। ईश स्येशन मैश्वर्यं नामैत देव। किं तत्? प्रकृतिस्थोऽपि तस्या गुणैः सुखदुःखादिभिः सदा न युज्यते इति यत्, यथाऽऽत्मस्थै रानन्दादिभि रात्माश्रयाऽपि बुद्धिर्न युज्यते, तद्वत्। वैधर्म्ये दृष्टान्तो वा। आत्मस्थैः सत्ताप्रकाशादिभि र्यथा बुद्धिर्युज्यते इति एवं वा। असदात्मा देह स्तत्रस्थै र्गुणै स्तदाश्रया बुद्धि स्तदुपाधि र्जीवो यथा युज्यते, एवं प्रकृतिस्थोऽपि तद्गुणैर्न युज्यते इति यदेत दीशन मीशस्येति ॥ ३८ ॥

तत्पत्न्योऽपि तस्य तत्त्वं न जानन्तीत्याह — **तम्** इति। तं स्त्रैण मात्मवश्यं रह एकान्तेऽनुव्रत मनुसृतञ्च मेनिरे। भर्तुरप्रमाणविदः प्रमाण मियत्तां महिमान मजानत्य इत्यर्थः। ईश्वरं क्षेत्रज्ञं मतयोऽहंवृत्तयो यथा स्वाधीनं स्वधर्मयोगिनं मन्यन्ते तद्वत्। यद्वा, यथा तासां मतयः कल्पना[4] स्तथा तथा त मीश्वरं स्त्रैणादिरूपं मेनिरे इत्यर्थः ॥ ३९ ॥

इति श्रीमद्भागवते प्रथमस्कन्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां एकादशोऽध्यायः ॥ ११ ॥

---

1. V मन्दहा° 2. H,V एव एताश्चलाः दृग्विलासा 3 H,V अ° 4 H.V °नारता स्तथा

**वीर॰ स एष** इति। स एषः स्वमायया आत्मीयसङ्कल्पेन अस्मिन्नरलोकेऽवतीर्णो भगवान् स्त्रिय एव रत्नानि तेषां कूटस्थः समुदायस्थितः रेमे चिक्रीडे। यथा प्राकृतः स्त्रीवश्य स्तद्वत्। प्राकृतो यथेत्यनेन स्त्रीवश्यत्वानुकारमात्रमेव न तु परमार्थत स्तदस्तीति सूचितम्॥ ३५॥

तदेव व्यञ्जयितुं विशिनष्टि — **उद्दामेति**। ताः प्रमदोत्तमाः कुहकै र्वञ्चनोपायै र्यस्येन्द्रियं प्रमथितुं न शेकुः न प्राभवन् तमपीत्युत्तरेणान्वयः। सुतरां पारवश्यत्वाभावसूचनायास्य प्रमदोत्तमा विशिनष्टि। यासां उद्दामभावादिभि र्निहत स्सन् मदनोऽपि सम्मुह्य मोहं प्राप्य स्वयं चापं धनु रजहात्तत्याज, ताः प्रमदोत्तमाः इत्यन्वयः। उद्दाम उदारोऽगाध इति यावत्। भावोऽभिप्राय स्तेन पिशुनः चित्ताकर्षसूचकः अमलः सुन्दरश्च हास स्तेन च व्रीडापूर्वकावलोकनेन च निहतः अभिभूतः॥ ३६॥

एवंविधं तं यः स्त्रीवश्यं मन्यते सोऽज्ञ इत्याह — **तम्** इति। मनुजं व्यापृण्वानं मनुजवच्चेष्टमानं मनुष्यभावेन स्वयाथात्म्य माच्छादयन्त मित्यर्थः। वस्तुतो निस्सङ्गमपि सङ्गिन मिव भासमानं तमिमं भगवन्तं यो लोको जन आत्मौपम्येन स्वतुल्यत्वेन मन्यते, सोऽयं लोकः अतो हेतो रबुधः नितरा मज्ञः॥ ३७॥

अथ विषयैरनाकृष्टत्व मीश्वरस्य नाश्चर्य मित्यभिप्रायेणेश्वरत्वं निर्वक्ति — **एतत्** इति। प्रकृतिस्थोऽपि मूलप्रकृतिव्यापकोऽपि तद्गुणै स्सत्त्वादिभि रात्मस्थै र्जीवगतै रविद्यास्मितारागद्वेषादिभिश्च गुणै स्सदा न युज्यते इति, यदेतदेव ईश्वर स्येशन मित्यन्वयः। सदेत्यनेन मुक्तव्यावृत्तिः, स हि पूर्वं तैर्युक्तः। हेयगुणास्पर्शोदाहरण माह यथेति। तदाश्रया ईश्वराश्रया बुद्धिस्तज्ज्ञानं यथा सत्त्वादिभिर्न युज्यते। नहि "स्वाभाविकी ज्ञानबलक्रिया च" इत्युक्तविधं स्वत स्सर्वगतस्य [1] ज्ञानं सत्त्वरजस्तमोन्वयाधीन सम्यक्त्वासम्यक्त्वयुक्तं स एवं सर्वप्रकारेण [2] चिदचिद्गतहेयरहित इति यत्तदेव [3] हि ईश्वरस्येश्वरत्व मित्यर्थः॥ ३८॥

यथैवमज्ञो लोक स्त मुक्तविध मीश्वर मात्मतुल्यं मन्यते तथा ताः स्त्रियोऽप्यज्ञाना दात्मवश्य ममन्यन्तेत्याह — **तम्** इति। संसारिणा मिन्द्रियप्रसूता मतयो यथेश्वरं न जानन्ति, किन्तु मौढ्यादन्यथा मेनिरे [4]। एवं मूढा स्ता अबलाः स्त्रियोऽपि तं भगवन्तं रहः स्त्रैणं स्त्रीसमूह मनुव्रतं स्त्रीसमूहानुवर्तिनं मेनिरे। तत्र हेतुः भर्तु रप्रमाणविदः। प्रमीयत इति प्रमाणं स्वरूपम्। तत्स्वरूप मजानत्यः॥ ३९॥

इति श्रीमद्भागवते प्रथमस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां एकादशोऽध्यायः॥ ११॥

---

1. W adds तस्य 2 W adds अपि 3. W एतदेव 4. W मन्वते

**विज॰** स्वमायया स्वेच्छया प्राकृतः स्त्रीजितः स्त्रीरत्नकूटस्थः स्त्रीश्रेष्ठसमूहस्थः॥ ३५॥

स्त्रीश्रेष्ठसमूहगतः स्त्रीजिता ननुकरोत्येव परं न स्वयं स्त्रीजित इत्याह — **उद्दामेति**। यासा मुद्दामभावस्य उत्कृष्टशृङ्गारचेष्टितस्य पिशुनः सूचकः अमलः निर्व्यलीकः वल्गुः कोमलः हासः स्मितं व्रीडयाऽवलोकः

कटाक्षवीक्षणम्। उद्दामभावपिशुनामलवल्गुहासेन व्रीडावलोकनेन च विहतः ताडितो मदनोऽपि सम्मुह्य पुष्पाख्यं चाप मजहात् मुक्तवान्, ताः प्रमदोत्तमाः कुहकै रुद्दामभावादिभि र्यस्य श्रीकृष्णस्येन्द्रियं प्रमथितुं वशीकर्तुं न शेकुः, तस्य कुतः स्त्रीजितत्व मित्यन्वयः ॥ ३६ ॥

तस्य स्त्रीजितत्वपरिवादोऽज्ञसम्मत्येत्याह — **मन्यते** इति। अज्ञलोकः स्वसुखानुभवेन अवाप्तकामतया स्त्रीष्वसक्तमपि आत्मौपम्येनाऽऽत्मानं दृष्टान्तीकृत्य स्त्रीसङ्गिनं तन्मयं स्त्रीमयं मन्यते। हि यस्मा त्तस्मा दयं जनोऽबुधः अज्ञः। कथम्भूतं मनुजम्? प्रावृण्वानम् आच्छादयन्तम् ॥ ३७ ॥

तर्हि ज्ञानिप्रवादः कीदृश इति तत्राह — **यत्तत्** इति। प्रकृतिस्थोऽपि सदात्मस्थैः स्वसाधारणै स्तद्गुणैः[1] प्रकृतिगुणैः सत्त्वादिभिः शब्दादिभिश्च न युज्यते न सम्बध्यत इति यत्तदीशस्येशन मीश्वरत्वम्। तत्र व्यत्यासदृष्टान्त माह — यथेति। यथा प्रकृतिस्थानां ज्ञानिनां तदाश्रया तस्य कृष्णस्याश्रया बुद्धिः प्रकृतिगुणैः न बध्यते किमु? तस्य प्रकृतिगुणसम्बन्धेनेत्यतोऽबुधजनप्रवाद इति भावः ॥ ३८ ॥

तथाऽविदोऽसुरा इति सोदाहरण माह — **तम्** इति। खला इन्द्रियारामा मूढाः शास्त्रार्थाविदः तामसराजसप्रकृतयः, अत एवाप्रमाणविदोऽनन्तगुणत्वादिप्रमाणाविद स्तं कृष्ण मनुव्रतं भृत्यव दनुगतं स्त्रैणं स्त्रीजितं मेनिरे, वैशेषिकादिवादिनां मतयो यथेश्वरं यथामति मेनिरे तथा तस्मान्न तस्याप्तकामस्य स्त्रीजितत्व मिति भावः ॥ ३९ ॥*

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां
टीकायां प्रथमस्कन्धे एकादशोऽध्यायः ॥ ११ ॥

---

1 B,K,M स्वाधारैस्त° *Here ends 10th chapter of 1st Skandha in K&M

**रा॰ कृ॰** स एष भगवान् स्वमायया अस्मिन्नरलोके अवतीर्णस्सन् स्त्रीरत्नकूटस्थः स्त्रीरत्नसमुदाये स्थितः प्राकृतो यथा स्त्रीवश्यः सामान्यपुरुष इव रेमे चिक्रीड ॥ ३५ ॥

यासा मुद्दामभावपिशुनामलवल्गुहास व्रीडावलोकनिहतः, उद्दामस्य गम्भीरस्य भावस्य प्रेम्णः पिशुन स्सूचकः अमलः वल्गुः सुन्दरः हासः व्रीडावलोकः लज्जासहितावलोकश्च ताभ्यां हासावलोकाभ्यां निहतः विस्मितः मदनोऽपि मन्मथोऽपि सम्मुह्य सम्मोहं प्राप्य चापं स्वीयं धनुः अजहात् अत्यजत्। ताः प्रमदोत्तमाः रमणीमणयः यस्य भगवतः श्रीकृष्णस्य इन्द्रियं मनः कुहकैः कपटविभ्रमैः विमथितुं न शेकुः न समर्था बभूवुः। तं श्रीकृष्णं असक्तमपि सङ्गिनं सङ्गसहितं आत्मौपम्येन आत्मनः स्वस्य, औपम्येन सादृश्येन व्यापृण्वानं व्याप्रियमाणं मनुजं मनुष्यमात्रं अयं लोकः मन्यते। अतोऽयं लोकः अबुधः अनभिज्ञः।

यथाऽऽत्मस्थै रानन्दादिभिः गुणै स्तदाश्रया आत्माश्रयापि बुद्धिः न युज्यते, तथा भगवान् श्रीकृष्णः प्रकृतिस्थोऽपि प्रकृतिकार्येषु स्त्रीपुत्रादिषु स्थितोऽपि तद्गुणैः प्रकृतिगुणैः सत्त्वादिगुणैः गुणकार्यभूतैः सुखदुःखादिभिश्च सदा नित्यमेव न युज्यते इति यत् तदेतदेव ईशस्य ईशनं ईश्वरत्वं नाम।

मदनमोहिनीनामपि प्रमदोत्तमानां विभ्रमाः यस्य मनः स्प्रष्टु मपि नाऽल मित्यहो तस्य कृष्णस्य निर्विकारता निस्सङ्गता च। अथवा मदनजनके अष्टोत्तरशतोत्तरषोडशसहस्रस्त्रीवल्लभे तस्मिन् भगवति किं न युज्यते?

य दुक्तम् "एतदीशन मीशस्य ... बुद्धि स्तदाश्रया" (भाग. 1-11-38) इति, तत्रोच्यते — आत्माऽत्र शरीरादिसर्वान्तर्यामी। तदाश्रिता बुद्धिः यदा शरीरेन्द्रियाण्याश्रित्य मनोरूपेण परिणमति, तदा नैवानन्दमाप्नोति। सर्वान्तर्यामिसम्पादित शरीराद्याश्रयेऽपि तात्कालिकशारीरकत्वयोगात्। एवं जीवेष्वपि तज्जीवभूतो भगवानपि अनाकलित-जीवभावः देवभावेनैव अवतिष्ठते। तथाहि — सुवर्णं भूषणरूपेण अवस्थितमपि तन्नामरूपाभ्यां अस्पृष्टं सत् सुवर्ण मेवाऽऽस्ते। तथाच स्वतोऽसङ्गो भगवान् स्त्रीणां वाल्लभ्यं प्राप्यापि तद्वाल्लभ्यबन्धस्यातन्त्रस्सन् असङ्ग एव वर्तते॥ ३६, ३७, ३८॥

मतयः शास्त्रकृताः बुद्धिवृत्तयः ईश्वरं यथा ईश्वरमिव भर्तुः श्रीकृष्णस्याप्रमाणविदः स्वरूपानभिज्ञाः मूढाः अबलाः स्त्रियः रहः एकान्ते अनुव्रतं स्ववशवर्तिनं तं श्रीकृष्णं स्त्रैणं स्त्रीष्वनुरक्तं मेनिरे।

यथा शास्त्रज्ञानां बुद्धिवृत्तयः ईश्वरतत्त्वनिरूपणे प्रवृत्ता ईश्वरं जगतः उपादानं निमित्तमात्रं सगुणं निर्गुणमिति बहुधा यथारुचि मन्यन्ते तथा स्त्रियोऽपि श्रीकृष्णतत्त्वानभिज्ञा स्तद्वशगा स्तं स्वाधीनं मन्यन्त इति भावः॥ ३९॥

इति श्रीमद्भागवते प्रथमस्कन्धे
श्रीराधाकृष्णप्रणीतायां सुधीसुधायां व्याख्यायां
एकादशोऽध्यायः॥ ११॥



# द्वादशोऽध्यायः

## शौनक उवाच

अश्वत्थाम्नो[1]प[2]सृष्टेन ब्रह्मशीर्ष्णो[3]रुतेजसा ।
उत्तराया हतो गर्भ[4] ईशेना[5]जीवितः पुनः ॥ १ ॥

तस्य जन्म महाबुद्धेः[6] कर्माणि च म[7]हात्मनः ।
निधनं च यथैवासीत् स प्रेत्य गतवान् यथा ॥ २ ॥

तदिदं श्रोतुमिच्छामो[8] गदितुं यदि मन्यसे ।
ब्रूहि नः श्रद्दधानानां यस्य ज्ञानमदाच्छुकः ॥ ३ ॥

## सूत उवाच

[10]अपीपलद्धर्मराजः पितृवत् रञ्जयन् प्रजाः ।
निस्पृहः सर्वकामेभ्यो कृष्णपादाब्ज[11]सेवया ॥ ४ ॥

सम्पदः क्रतवो लो[12]का [13]महिषी भ्रातरो मही ।
जम्बू[14]द्वीपाधिपत्यं च यशश्च त्रिदिवं गतम् ॥ ५ ॥

किं ते का[15]माः सुरस्पा[16]र्हा मुकुन्दमनसो द्विजाः[17] ।
[18]अधिजह्रुर्मुदं राज्ञः क्षुधितस्य यथे[19]तरे ॥ ६ ॥

---

1. K,M °म्ना विसृष्टेन 2. W °युक्ते° 3. H,V °र्षो° 4 H,V °र्भः कृष्णे° 5 K,M °नोज्जी° 6 W °द्धे! 7 K,M गृणीहि नः 8. H,K,M,N,V,W °मि 9. AF,GF स त्वं वा; K,M वक्तुं वा 10. AF,GF अपालय° 11. B,H,I,K,M,V,W °नु° 12 K,M विप्रा 13. H,V महिष्यः 14. B,K,M,N °म्बु°15 K,M कामातुरस्यार्थाः 16. H,V °स्पृह्या ; W °स्यार्हा 17 B,H,V,W °ज! 18 K,M नाधि° 19. H,V °था परे

## श्रीधरस्वामिविरचिता भावार्थदीपिका

पुरोक्तं यत्प्रसङ्गा[1]य द्रौणिदण्डादिविस्तरात् ।
द्वादशे तु त[2]देवाथ परीक्षिज्जन्म वर्ण्यते ॥

"परीक्षितोऽथ राजर्षेर्जन्म कर्म विला[3]पनम् । संस्था च पाण्डुपुत्राणां वक्ष्ये कृष्णकथोदयम्"॥ (भाग. 1-7-12) इति प्रतिज्ञाय पाण्डवानां राज्यस्थितिः उपोद्घात[4]रूपा सप्रसङ्गं सप्तमाध्यायं आरभ्य निरूपिता[5]। इदानीं औपोद्घातिकं उक्तानुवादपूर्वकं पृच्छति शौनकः — **अश्वत्थाम्नेति**। उपसृष्टेन विसृष्टेन। तस्य ज[6]न्मादि ब्रूहीत्युत्तरेणान्वयः ॥ १ ॥

**तस्येति**। स परीक्षित्। प्रेत्य देहं त्यक्त्वा निधनं विनाशश्च ॥ २ ॥

**तदिति**। प्रार्थये न तु आज्ञापयामीत्याह। गदितुं यदि मन्यसे अनुग्रहेण तर्हि नः ब्रूहीति। "यस्य ज्ञानमदाच्छुकः" इति श्रवणेच्छायां कारणम् ॥ ३ ॥

निस्पृहस्यापि राज्ञः श्रीकृष्णानुग्रहात् तादृक् पौत्र[7] समजनीति वक्तुं तस्य श्रीकृष्णे भक्त्युद्रेकमाह — **अपीपलदिति** त्रिभिः। पितृवत् अपीपलत् पालयामास ॥ ४ ॥

**सम्पद** इति। क्रतवः तदुपार्जिता लोकाश्च ॥ ५ ॥

**किमिति**। सुरस्पार्हाः[8] सुराणां स्पृहणीयाः ते सम्पदादयः कामाः विषयाः राज्ञः किं मुदं प्रीतिं अधिजह्रुः कृतवन्तः, न कृतवन्त इत्यर्थः। अत्र हेतुः मुकुन्दे एव मनो यस्येति क्षुधितस्य अन्नैकमनसः यथेतरे स्रक्चन्दनादयः प्रीतिं न कुर्वन्ति तद्वत् ॥ ६ ॥

---

1 H,V °द्यत् 2 H,V °थै° 3 H,V °य° 4 H,V °रूपप्रसङ्गः 5 H,V °तः 6 H,V जन्मेत्यादिना 7. H,V पात्रं 8. H,V °स्पृह्याः

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

यद्यपि परीक्षिज्जन्मकर्मादिकं पुरस्तादेव पृष्टम्, यद्यपि च, तदुक्तमेव तदुपोद्घातरूपोऽयं वचःक्रमः[1] किमकार्षीत् तत इति। प्रकृतप्रश्नस्य उत्तरं चाश्रुतम्। एवञ्च अन्तरा पुनस्तत्प्रश्नानुपपत्तिः, तथाऽपि किमकारिषीत्तत इति पृष्टस्य राज्यशासनानन्तरभाविनः युधिष्ठिरवृत्तान्तस्य परीक्षिज्जन्मानन्तरकालिकत्वात् तदनन्तरमेव तच्छुश्रूषुः तावत् "स्वयमेवाऽऽवृणोद्गर्भं वैराट्याः कुरुतन्तवे" (भाग. 1-8-14) इति प्रक्रान्तापरिसमापितं[2] सावशेषं शुश्रूषुः पृच्छति शौनकः — **अश्वत्थाम्नेति**। अश्वत्थाम्नोपयुक्तेन प्रयुक्तेन उरु अधिकं दुस्सहं प्रभूतञ्च तेजो यस्य तेन ब्रह्मशीर्ष्णा ब्रह्मशिरोनामकेन अस्त्रेण तावत् उत्तरायाः गर्भः हतः। ततः पुनः ईशेन कृष्णेन आजीवितः इत्युक्तानुवादः ॥ १ ॥

तत उपरितनं तस्य उत्तरातनयस्य महात्मनः यज्जन्मादि तदिदं हे महाबुद्धे! श्रोतुमिच्छामि निधनं मरणं यथैवासीत् प्रेत्य मृत्वा यथा गतवान् यां गतिं प्राप्तवान् तदिदमित्यन्वयः ॥ २ ॥

यदि गदितुं मन्यसे वक्तुमिष्टं योग्यं च मन्यसे चेत् तर्हि श्रद्दधानानां नः अस्माकं ब्रूहि। कुतः वः तज्जन्मादिशुश्रूषा श्रद्धा बभूव इत्यतः तं विशिनष्टि। यस्य परीक्षितः शुकः ज्ञानं परमात्मयाथात्म्यज्ञानं अदात् उपदिष्टवान्। महाभागवतत्वात् तज्जन्मादिशुश्रूषा नः समभवदिति भावः। अत्र जन्मैव प्राधान्येन पृच्छ्यते। तस्य कर्मादिकं तु युधिष्ठिरादि[3]वृत्तान्तानन्तरकालिकत्वात् तच्छ्रवणानन्तरमेव विशेषतः प्रष्टव्यमपि जन्मकालिकजातकद्वारा सामान्यतः बुभुत्सुना जन्मना सहोपात्तम्। अत एवोत्तरेऽपि जातकद्वारैव तत्कर्मादिकं प्रदर्श्यत इत्यवगन्तव्यम् ॥ ३ ॥

परीक्षितः जन्मप्रकारं वक्तुं तावत् तादात्विकं युधिष्ठिरावस्थानप्रकारमाह — **अपीपलदिति** त्रिभिः। अपीपलत् अपालयत् कथम्भूतः ? कृष्णस्य पादयोरनुसेवया अनुध्यानेन हेतुना सर्वेभ्यः कामेभ्यः निर्गता स्पृहा यस्य तथाभूतः कृष्णपादानुसेवकत्वात् निस्पृहः सन्नित्यर्थः ॥ ४ ॥

तत्सेवया स्पृहाभावहेतुत्वमेव सदृष्टान्तमाह — **सम्पद** इति द्वाभ्याम्। यथा क्षुधितस्य अशनायायुक्तस्य पुंस इतरे स्रक्चन्दनादयः न मुदमावहन्ति किन्त्वशनमेव। तथा हे द्विज! ये सम्पदादयः ते ते कामाः सुरस्पार्हाः सुराणामपि स्पृहणीया अपि मुकुन्द एव मनो यस्य तस्य राज्ञो युधिष्ठिरस्य मुदमधिजह्रुः किम्? सम्पादितवन्तः किम्? न सम्पादितवन्त एवेत्यर्थः। तत्र सम्पदः भोग्यभोगोपकरणादिसमृद्धयः स्वर्गादिसुखसाधनानि अश्वमेधादीनि,[5] लोकाः करप्रदाः जनाः, महिष्यः पत्न्यः, भ्रातरः दिग्विजयिनो भीमादयः, मही निष्कण्टका पृथ्वी त्रिदिवं गतं त्रिदिवपर्यन्तव्याप्तं यशश्च ॥ ५, ६ ॥

---

1. W प्रपञ्चः प्रवृत्तः 2 B,W °क्रम्या° 3 W °स्वृ° 4 W °स्या° 5. W °मेधराजसूया°

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

वैराग्यप्रकारः हरेः भक्तानुकम्पित्वं च अस्मिन्नध्याये प्रतिपाद्यते। "उपलेभेऽभिधावन्तीं उत्तरां" इत्यादि श्रुतानुवादपूर्वकं परीक्षिज्जन्मादिप्रवृत्तिं पृच्छति शौनक इत्याह — **अश्वत्थाम्नेत्यादिना**। उरुतेजसा अश्वत्थाम्ना विसृष्टेन ब्रह्मास्त्रेण उत्तरायाः हतः गर्भः पुनः ईशेन उज्जीवितः इत्येकान्वयः ॥ १ ॥

मरणं निधनं यथाकथं प्रेत्य मृत्वा गतवान् कं लोकमिति शेषः ॥ २ ॥

वक्तुं वा यदि मन्यसे इत्यनेन वक्तव्यस्यातिगोप्यत्वं सूचयति ॥ ३ ॥

अपीपलत् अरक्षत्। निस्पृहः सर्वकामेभ्यः इत्यनेन कृष्णपादसेवायाः अतिस्वादुत्वं दर्शितं; कामानां तिक्तत्वञ्च ॥ ४ ॥

एतदेव स्पष्टमाह — **सम्पद** इति ॥ ५ ॥

कामातुरस्यार्थाः विषयाः विषयविरक्तस्य मुकुन्दमनसः युधिष्ठिरस्य अर्थाः किं पुरुषार्थत्वेन नार्थाः कुतः इति तत्राह — **नेति**। यथा क्षुधितस्य इतरे वीणादयः न तृप्तिं कुर्वन्ति, तथा अन्ते दुःखहेतुत्वात् ते मुदं नाकुर्वन्नित्यर्थः। अनेन वैराग्यातिशयः मोक्षे सुखातिशयो दर्शितः ॥ ६ ॥

## श्रीराधाकृष्णप्रणीता सुधीसुधा

अश्वत्थाम्नोपसृष्टेन प्रयुक्तेन उरुतेजसा ब्रह्मशीर्ष्णा ब्रह्मशिरोनामकास्त्रेण उत्तरायाः गर्भः तद्गतशिशुः हतः पुनः कृष्णेन आजीवितः इति त्वत्तः पूर्वं श्रुतमिति शेषः ॥ १ ॥

शुकः यस्य ज्ञानमदात् उपदिष्टवान् महाबुद्धेः परमविवेकिनः महात्मनः तस्य परीक्षितः जन्मकर्माणि निधनञ्च एतत्सर्वं यथैव येन प्रकारेणासीत्, सः प्रेत्य मरणं प्राप्य यथा गतवान् तदिदं सर्वं तद्वृत्तान्तं श्रोतुमिच्छामि। गदितुं वक्तुं युक्तं इति यदि मन्यसे तर्हि श्रद्दधानानां नः अस्मान् ब्रूहि कथय॥ २, ३॥

धर्मराजः कृष्णपादाब्जसेवया सर्वकामेभ्यः निस्पृहः प्रजाः रञ्जयन् पितृवत् पितेव अपीपलत् अपालयत्॥ ४॥

हे द्विज! सम्पदः भोगसाधनसम्पत्तयः क्रतवः अश्वमेधादयः लोकाः स्वर्गादयः महिषी द्रौपदी भ्रातरः भीमसेनादयः, मही निष्कण्टका पृथिवी जम्बूद्वीपाधिपत्यञ्च त्रिदिवं गतं स्वर्गपर्यन्तव्याप्तं यशश्च — ते पूर्वोक्तास्सर्वे सुरस्पार्हाः सुराणामपि स्पृहणीयाः कामाः विषयाः मुकुन्दमनसः श्रीकृष्णसंलग्नचित्तस्य राज्ञः धर्मराजस्य क्षुधितस्य अन्नासक्तस्य परे यथा स्रक्चन्दनादय इव मुदं प्रीतिं किं अधिजह्रुः? चक्रुः? नैवेति भावः।

क्षुधा देहपोषकाहारावश्यकतां ज्ञापयति। आवश्यकवस्तूपलब्धिरेव तृप्त्यै भवति। इन्द्रियाकर्षकाः स्रक्चन्दनादयः न खलु आवश्यकतानिरूपकाः। एवं आत्मावश्यकवस्तुज्ञानिनः तदन्यानि न तृप्तिं आवहन्ति। तथा च वैराग्याभ्यसनोपयोगिराजयोगमार्गोऽत्र सूचितः। अपरिणतप्रकृतेः जनस्य विनाभ्यासं केवलं इन्द्रियनिग्रहः न प्रयोजकः वैराग्यानुदयात्। उक्तञ्च भगवता "सदृशं चेष्टते स्वस्याः प्रकृतेः ज्ञानवानपि। प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति?" (भ. गी. 3-33) इति॥ ५, ६॥

मातुर्गर्भगतो वीरः स तदा[1] भृगुनन्दन!
ददर्श पुरुषं कञ्चिद्दह्यमानो[2]ऽस्त्रतेजसा॥ ७॥

अङ्गुष्ठमात्रममलं स्फुरत्पुरटमौलिनम्[3]।
अपीच्यदर्शनं[4] श्यामं तडिद्वाससमच्युतम्[5]॥ ८॥

श्रीमद्दीर्घचतुर्बाहुं तप्तकाञ्चनकुण्डलम्[6]।
क्षतजाक्षं गदापाणिमात्मनः[7] सर्वतोदिशम्[8]।
परिभ्रमन्तमुल्काभां भ्रामयन्तं गदां मुहुः॥ ९॥

अस्त्रतेजः स्वगदया नीहारमिव गोपतिः[9]।
विधमन्तं सन्निकर्षे पर्यैक्षत क इत्यसौ॥ १०॥

विधूय तदमेयात्मा भगवान् धर्मगुप् विभुः।
मिषतो[10] दशमासस्य तत्रैवान्तर्दधे हरिः॥ ११॥

**ततः सर्वगुणोदर्के सानुकूल[11]ग्रहोदये ।**
**जज्ञे वंशधरः पाण्डो र्भूयः पाण्डुरिवौजसा ॥ १२ ॥**

1. AF,GF °था 2. AF,GF °नस्तु 3. AF,GF °कम् 4 M आ° 5 H,V,W °टि° 6 AF,GF शङ्खचक्रगदा° 7 W °मात्मानं परि° 8 W °तिम् 9. H,V पश्यतो 10. B,H,K,M,N,V,W °स्य° 11. W °ल्य°

**श्रीध०** प्रस्तुतमाह — **मातुरिति**। स परीक्षित्॥ ७॥

**अङ्गुष्ठमात्रमिति**। पुरटं सुवर्णं स्फुरन् पुरटमौलिः यस्यास्ति तम् [1]अधिकप्रकाशहेमकिरीटधारिणमित्यर्थः। "व्रीह्यादिभ्यश्च" (अष्टा. 5-2-113) इति इनिप्रत्ययः। अपीच्यं अतिसुन्दरं दृश्यत इति दर्शनं रूप यस्य तम्। [2]तडिद्वत् वाससी यस्येति श्यामामिति च पदाभ्यां विद्युद्युक्त[3]मेघोपमा सूचिता। अच्युतं अविकारम्॥ ८॥

**श्रीमदिति**। तप्तं दाहोत्तीर्णं यत्काञ्चनं तन्मये कुण्डले यस्य। क्षतजाक्षं [4]अहो मद्भक्तस्यापि गर्भे अस्त्रपीडेति संरम्भादत्यारक्तनेत्रम्॥ ९॥

**अस्त्रतेज** इति। अस्त्रतेजो विधमन्तं विनाशयन्तम्। नीहारं हिमं गोपतिः सूर्य इव। [5]सन्निकर्षे समीपे ददर्श। दृष्ट्वा चासौ क इति पर्यैक्षत वितर्कितवान्॥ १०॥

**विधूयेति**। अमेयात्मा कथं तद्विधूतवान् इत्यवितर्क्यरूपः। धर्मं गोपायतीति धर्मगुप्। यद्वा धर्मं गोपायन्तीति धर्मगुपः राजानः तत्प्रभुः तेषामपि पालकत्वात्। [6]दशमासपरिच्छेद्यस्य तस्य मिषतः पश्यतः यत्र दृष्टः तत्रैव गर्भ एव अन्तर्दधे अन्तर्हितः। न तु अन्यत्र गतः। यतो विभुः सर्वगतः॥ ११॥

**तत** इति। उदर्क[7] उत्तरफलम्। सर्वगुणानां उत्तरोत्तराधिक्यसूचके लग्ने। तत्र हेतुः अनुकूलैः अन्यैर्ग्रहैः सहितानां शुभग्रहाणां उदयः यस्मिन्॥ १२॥

1 A,B omit अधिक .... इत्यर्थः। 2 H,V तडिद्विद्युत्तद्वत्° 3 H,V °द्भूषित° 4 A omits अहो···पीडेति 5 B adds (एवंविधं गर्भगतो बालः) 6 H,V add दशमास्यस्य 7 B °र्कं

**वीर०** अथ परीक्षितः जन्म वक्तुं तावत् तस्य मात्रुदरावस्थानदशामाह — **मातुरिति** सार्धैः पञ्चभिः। हे भृगुनन्दन! वीरः उत्तरातनयः मातुः गर्भगतः उदरगतः ब्रह्मास्त्रतेजसा दह्यमानः कञ्चित्पुरुषं ददर्श॥ ७॥

कथम्भूतम्? अङ्गुष्ठपरिमिता मात्रा उन्नाहः यस्य, न विद्यते मलं देहजं यस्य, स्फुरत्पुरटः हिरण्मयः मौलिः किरीटं यस्य, अपीच्यं हृष्टपुष्टाङ्गतया स्पृहणीयं दर्शनं यस्य, तटिदिव अम्बरं वस्त्रं यस्य, आश्रितान् न च्यावयतीति तथा, श्रीमन्तः वृत्तत्वादिगुणैः शोभावन्तः दीर्घाः आजानुलम्बिनः चत्वारः बाहवः यस्य, अग्नितापनिर्मलीकृतकाञ्चनमये कुण्डले यस्य, क्षतजे रक्ते अक्षिणी यस्य, गदा पाणौ यस्य तं परिभ्रमन्तं उल्कस्य अङ्गारस्येव आभा यस्यास्तां गदां मुहुर्मुहुः परितोदिशं सर्वतोदिशं भ्रामयन्तं आत्मानं धारकम्॥ ८, ९॥

*गोपतिः[1] सूर्यः नीहारमिव स्वगदया ब्रह्मास्त्रतेजो विधमन्तं नाशयन्तं सन्निकर्षे स्थितं एवंविधं पुरुषं* कोसाविति पर्यैक्षत पर्यालोचितवान्। यतः पर्यैक्षत तत एव प्रवृत्तिनिमित्तात् परीक्षिच्छब्दवाच्यश्च सर्वभूतैरिति[2] भावः ॥ १० ॥

तद्ब्रह्मास्त्रतेजो विधूय निरस्य अमेयात्मा अपरिच्छिन्नस्वरूपस्वभावः धर्मगोप्ता विभुः भगवान् हरिः दशमे मासि तस्य गर्भस्थशिशोः मिषतः पश्यतः सः तत्रैवान्तर्हितवान् ॥ ११ ॥

ततः सर्वगुणोदर्के सर्वगुणाधिके, तदेवाह सानुकूल[3]ग्रहोदये आनुकूल्येन सहितानां ग्रहाणां भृग्वङ्गिरआदीनां उदयः यस्मिन् लग्ने इति विशेष्यं अध्याहर्तव्यम्। सानुकूला[4] ग्रहा यस्मिन् तस्मिन्नुदये लग्ने वा पाण्डोः वंशधरः वंशवर्धनः पुनः ओजसा पाण्डुरिव पाण्डुसदृशो जज्ञे ॥ १२ ॥

---

1. W गोपतिं सूर्यमिव नीहारं 2 W बभूवेति 3 W °ल्य° 4 W °ल्या°

**विज०** कश्चित् लोकविलक्षणम् ॥ ७ ॥

स्फुरत्पुरटमौलिनं देदीप्यमानस्वर्णमुकुटम्। अपीच्यदर्शनं षोडशवर्षवत् दृश्यमानं मेघश्यामम् ॥ ८ ॥

क्षतजवत् अरुणे अक्षिणी यस्य स तथा तं, आत्मनः स्वस्य सर्वतोदिशं पूर्वादिदिक्षु विदिक्षु परिभ्रमन्तं परितो वर्तमानं उल्काभां गगनात्पतत्तारकाविशेषसदृशीं गोपतिः सूर्यः नीहारं हिमं विधमन्तं शमयन्तं पुनः सन्निकर्षे समीपे दृष्ट्वा च कोऽयं परुष इति पर्यैक्षत आलोचनं अकरोत् ॥ ९, १० ॥

धर्मं गोपायति रक्षतीति धर्मगुप् अमेयात्मा अनन्तरूपो दशमास्यस्य दशमासारम्भस्य कुमारस्य पश्यतः सत इति शेषः। विभुः समर्थः हरिः सर्वपापकर्षणशीलो भगवान् षड्गुणोपेतः ॥ ११ ॥

ततः हरेरदर्शनानन्तरं सर्वगुणोदर्के सकलगुणोत्तरफले सानुकूला ये ग्रहाः तेषां उदयः यस्मिन् सः तथोक्तः तस्मिन् काले पाण्डोः वंशधरः सन्तानानुच्छेदकर्ता ओजसा भूयः पुनः उत्पन्नः पाण्डुरिव स्थितः ॥ १२ ॥

**रा० कृ०** हे भृगुनन्दन! शौनक! यदा सः वीरः परीक्षित् मातुः गर्भगतः तदाऽस्त्रतेजसा ब्रह्मास्त्रस्य तेजसा दह्यमानः कश्चिद्विलक्षणं पुरुषं ददर्श ॥ ७ ॥

अङ्गुष्ठमात्रं अङ्गुष्ठप्रमाणं अमलं गर्भप्रवेशेऽपि तद्गतमलरहितं, स्फुरत्पुरटमौलिनं प्रकाशमानकाञ्चनकिरीटसहितं अपीच्यदर्शनं मनोहरदर्शनं श्यामं तटिद्वाससं तटिदिव पीतं वासो यस्य तं, अच्युतं अविनाशं श्रीमद्दीर्घचतुर्बाहुं तप्तकाञ्चनकुण्डलं तापनिर्मलीकृतसुवर्णकुण्डलं क्षतजाक्षं रक्तनयनं गदापाणिं आत्मनः सर्वतो दिशं स्वरक्षणार्थं सर्वासु दिक्षु परिभ्रमन्तं उल्काभां तप्ताङ्गाराभां गदां मुहुः भ्रामयन्तं चालयन्तं नीहारं हिमं गोपतिरिव सूर्य इव स्वगदया अस्त्रतेजः ब्रह्मास्त्रतेजः विधमन्तं विनाशयन्तं एतादृशं पुरुषं सन्निकर्षे समीपे क इति को वाऽयं भवेदिति असौ गर्भगतो वीरः पर्यैक्षत पर्यालोचितवान् ॥ ८, ९, १० ॥

अमेयात्मा अचिन्त्यस्वरूपः धर्मगुप् धर्मरक्षकः विभुः सर्वव्यापकः भगवान् हरिः तदस्त्रतेजः विधूय नाशयित्वा दशमासस्य दशमासवयस्कस्य तस्य शिशोः मिषतः पश्यतः तत्रैव यत्र दृष्टः तस्मिन्नेव प्रदेशे अन्तर्दधे अन्तर्धानमगच्छत्।

अत्र उत्तरागर्भे विष्णोः दर्शनं असङ्गतमिति केषाञ्चित्कथनमेव असङ्गतम्। भगवन्तं केचन ध्यानेन आत्मनि पश्यन्ति। मातुः सत्सङ्गवशात् तच्छिशुरपि तं द्रष्टुं प्रभवतीति ये तावन्न जानन्ति ते महाग्रन्थान् न विवृण्वन्तु। अपि च भौतिकसुखदुःखमात्राभिज्ञाः लोकातीतसत्यविमर्शं कर्तुं अनर्हाः ॥ ११ ॥

ततोऽनन्तरं सर्वगुणोदर्के सर्वे गुणाः उदर्काः उत्तरफलानि यस्मिन् तस्मिन् सानुकूलग्रहोदये अनुकूलग्रहोदयसहिते लग्ने इति शेषः। पाण्डोः पाण्डुमहाराजस्य वंशधरः वंशवर्धनः ओजसा तेजसा भूयः पाण्डुरिव पाण्डुः जात इव दृश्यमानः परीक्षिदिति शेषः। जज्ञे जातः ॥ १२ ॥

तस्य प्रीतमना राजा विप्रैर्धौम्यकृपादिभिः[1]।
जातकं कारयामास वाचयित्वा च[2] मङ्गलम् ॥ १३ ॥

हिरण्यं गां महीं ग्रामान् हस्त्यश्वान्[3]नृपतिर्वरान्।
प्रादात् स्वन्नं[4] च विप्रेभ्यः प्रजातीर्थे स तीर्थवित् ॥ १४ ॥

तमूचुर्ब्राह्मणास्तुष्टाः राजानं प्रश्रयान्वितम्[5]।
एष ह्यस्मिन् प्रजातन्तौ पुरूणां[6] पौरवर्षभं[7][8] ॥ १५ ॥

दैवेनाप्रतिघातेन शुक्ले[9] संस्थामुपेयुषि।
रातो वोऽनुग्रहार्थाय[10] विष्णुना प्रभविष्णुना ॥ १६ ॥

तस्मान्नाम्ना विष्णुरात इति लोके बृहच्छ्रवाः[11]।
भविष्यति[12] न सन्देहो महाभागवतो[13] महान् ॥ १७ ॥

युधिष्ठिर उवाच

अप्येष वंश्यान् राजर्षीन्[14] पुण्यश्लोकान् महात्मनः।
अनुवर्तिता स्विद्यशसा साधुवादेन सत्तमाः[15] ॥ १८ ॥

1. AF,GF °जातक्रिया° 2. W सु° 3. H,V हयांश्च नृप° 4. AF,GF °यं 5. B,K,M,W °न° 6. B,K,M कु°; W पू° 7. B कौ° 8. AF,GF °भः 9. K,M कुले 10. AF,GF योऽ° 11. I भविष्यति 12. I महाभाग! 13. H,V °तोत्तमः 14. AF,GF °र्षिः 15. H,V °मः

श्रीध० तस्येति। जातकं जातकर्म। मङ्गलम् पुण्याहम् ॥ १३ ॥

**हिरण्यमिति।** वरान् श्रेष्ठान्। स्वन्नं शोभनं अन्नञ्च तीर्थवित् दानार्हपात्रदेशकालादिज्ञः "यावन्न च्छिद्यते नालं तावन्नाप्नोति सूतकम्। छिन्ने नाले ततः पश्चात् सूतकन्तु विधीयते" इति वचनात् ततः पूर्वं प्रादात्। आमान्नं वा। प्रजातीर्थे पुत्रोत्पत्तिपुण्यकाले "पुत्रे जाते व्यतीपाते दत्तं भवति चाक्षयम्" इति स्मृतेः "देवाश्च पितरश्चैव पुत्रे जाते द्विजन्मनाम्। आयान्ति हि नृपश्रेष्ठ! पुण्याहमिति चाब्रुवन्" इति च[3] ॥ १४ ॥

**तमिति।** हे पौरवर्षभ! पुरूणां पुरुवंश्यानां शुक्ले शुद्धे अस्मिन् प्रजातन्तौ। दैवेन कथम्भूतेन अप्रतिघातेन दुर्वारेण संस्थां नाशं उपेयुषि गते सति वः अनुग्रहार्थाय यस्मात् प्रभविष्णुना प्रभवनशीलेन श्रीविष्णुना रातः दत्तः, बृहच्छ्रवाः महाकीर्तिः तस्माल्लोके विष्णुरात इति नाम्ना भविष्यति महाभागवतश्च गुणैश्च महान् भविष्यति नात्र सन्देहः इति तं राजानं ब्राह्मणा ऊचुरिति त्रयाणामन्वयः ॥ १५, १६, १७ ॥

महाभागवतो भविष्यतीत्युक्ते हृष्टः पृच्छति राजा **अपीति।** अपिस्वित् किंस्वित् साधुवादेन यशसा तत्कीर्त्या चानुवर्तिता भविष्यतीति पूर्वस्यैव अतः परमपि अनुषङ्गः ॥ १८ ॥

---

1. H,V add सु° 2. B,H,V गृहं तस्मात् सूर्यग्रहशताधिकम् 3. B,H,V add स्मृतेः स नृपतिः 4. B,H,V स°

**वीर॰** ततः प्रीतं हृष्टं मनः यस्य स राजा युधिष्ठिरः धौम्यकृपादिभिः विप्रैः [1]सुमङ्गलं स्वाऽऽशिषं वाचयित्वा जातकं जातकर्म कारयामास ॥ १३ ॥

ततः नृपतिः युधिष्ठिरः हिरण्यादीन् अन्यांश्च वरान् कामान् यथायोग्यं यथाभिलाषं च कामं प्रादात् अर्थिभ्यः प्रायच्छत्। स तीर्थवित् दानपात्रवित् राजा प्रजातीर्थे पौत्रोत्पत्तिनिमित्तदानकाले स्वन्नं सुमृष्टं अन्नं च विप्रेभ्यः प्रादात् ॥ १४ ॥

हिरण्यादिभिः तुष्टाः ब्राह्मणाः तं प्रश्रयेण विनयेन अवनतं नम्रं राजानं ऊचुः ॥ १५ ॥

तदेवाऽऽह — **एष** हीति सार्धद्वयेन। पुरूणां[2] भवतां प्रजातन्तौ प्रजासन्ताने निमित्ते शुक्ले गर्भपिण्डे संस्थाम्[3]उपेयुषि सति हि यस्मात् एषः जातः अप्रतिघातेन प्रतिहतिरहितेन दैवेन प्रभविष्णुना समर्थीभवनशीलेन विष्णुना वो[4]ऽनुग्रहार्थो[5]ऽयं रातः रक्षितः ॥ १६ ॥

तस्मात् विष्णुना रातत्वरूप[6]प्रवृत्तिनिमित्त[7]नाम्ना वाचकेन शब्देन लोके विष्णुरात इति प्रसिद्धः बृहच्छ्रवाः विपुलकीर्तिः गुणैः महान् महाभागवतश्च भविष्यति नात्र सन्देहः ॥ १७ ॥

विप्रैः एवं उक्तः युधिष्ठिरः तस्य भाविनः गुणान् बुभुत्सुः पृच्छति — **अपीति।** अपि स्वित् इत्येतद्द्वयं समुदितं प्रश्नद्योतकं हे सत्तमाः! एष जातः शिशुः साधुवादेन साधूनां उपदेशेन हेतुना महात्मनः पुण्यश्लोकान्

वंश्यान् राजर्षीन् पाण्डवादीन् अनुवर्तिता स्वित् यशसा अनुवर्तिष्यति किम्? पाण्डवादिवत् यशस्वी भविष्यति? इति प्रश्नः। साधूनां वादः यस्मिन्विषयभूते तेन यशसा अनुवर्तिता स्वित् इति वान्वयः ॥ १८ ॥

1. w adds समं 2. W पू° 3. W °स्थामन्तमु° 4. W वो युष्माकमनु° 5 W °ग्रहार्थाय 6 W °पात् 7 W °त्तात्

**विज०** जातकं जातकर्म मङ्गलं पुण्याहम् ॥ १३ ॥

तीर्थं शास्त्रं पात्रं वा वेत्तीति तीर्थवित् प्रजातीर्थे पुत्राख्यशुद्धजले पुत्रजन्मकाले वा सतीर्थवित् इत्येकं वा पदम् सतीर्थ[1] इत्यर्थः ॥ १४ ॥

प्रश्रयानतं प्रावण्यगुणावनतं कुरूणां कुरुवंशजातानां अस्मिन् कुले प्रजातन्तौ पुत्राख्यसन्ताने संस्थां विनाशं उपेयुषि गच्छति सति वः युष्माकं अनुग्रहाख्यप्रयोजनाय प्रभविष्णुना विष्णुना रातः दत्तः इति यस्मात् तस्मात् लोके नाम्ना विष्णुरात इति बृहच्छ्रवाः विख्यातयशाः भविष्यति ॥ १५, १६, १७ ॥

ब्राह्मणवचनानन्तरं युधिष्ठिरः तान् अप्राक्षीत् इत्याह — **अपीति**। हे सत्तमाः! अपिशब्दस्य स्विदित्यनेनान्वयः। साधुषु वादः यस्य स तथा। साधुरिति वादेन वा ॥ १८ ॥

1 K सतीर्थज्ञः

**रा० कृ०** प्रीतमनाः सन्तुष्टान्तरङ्गः राजा युधिष्ठिरः धौम्यकृपादिभिः विप्रैः मङ्गलं पुण्याहं वाचयित्वा तस्य शिशोः जातकं जातकर्म कारयामास ॥ १३ ॥

तीर्थवित् पात्रज्ञः सः नृपतिः धर्मराजः प्रजातीर्थे पुत्रोत्पत्तिपुण्यसमये हिरण्यं गां धेनुं महीं भूमिं वरान् श्रेष्ठान् हस्त्यश्वान् स्वन्नं शोभनं अन्नं च विप्रेभ्यः प्रादात् प्रदत्तवान् ॥ १४ ॥

हे पौरवर्षभ! पुरुवंशश्रेष्ठ! पुरूणां पुरुवंशीयानां अस्मिन् शुक्ले निर्मले प्रजातन्तौ सन्तानतन्तौ अप्रतिघातेन दुर्निवारेण संस्थां नाशं उपेयुषि गते सति वः युष्माकं अनुग्रहार्थाय अनुग्रहप्रयोजनाय यस्मात् कारणात् प्रभविष्णुना विष्णुना एष शिशुः रातः दत्तः तस्मात् कारणात् नाम्ना विष्णुरात इति लोके प्रसिद्ध इति शेषः। बृहच्छ्रवाः विपुलकीर्तिः महान् महाभागवतः अत्यन्तं भगवद्भक्तश्च भविष्यति अत्र न सन्देह इति तुष्टाः ब्राह्मणाः प्रश्रयान्वितं विनयसमेतं तं राजानं धर्मराजं ऊचुः उक्तवन्तः ॥ १५, १६, १७ ॥

हे सत्तमाः! हे पूज्याः! एष शिशुः साधुवादेन सज्जनप्रशंसापात्रेण यशसा कीर्त्या महात्मनः पुण्यश्लोकान् पवित्रकीर्तीन् वंश्यान् अस्मद्वंशीयान् राजर्षीन् पाण्डुप्रभृतीन् अपिस्वित् अनुवर्तिता अनुसरिष्यति किम्? ॥ १८ ॥

ब्राह्मणा ऊचुः

पार्थ प्रजाविता साक्षादिक्ष्वाकुरिव मानवः ।
ब्रह्मण्यः सत्यसन्धश्च रामो दाशरथिर्यथा ॥ १९ ॥

एष दाता शरण्यश्च यथा ह्यौशीनरः शिबिः ।
[1]यशोवितनिता स्वानां दौष्यन्तिरिव यज्वनाम् ॥ २० ॥

धन्विनामग्रणीरेष तुल्यश्चार्जुनयोर्द्वयोः ।
हुताश इव दुर्धर्षः समुद्र इव दुस्तरः ॥ २१ ॥

मृगेन्द्र इव विक्रान्तो निषेव्यो हिमवानिव ।
तितिक्षुर्वसुधेवासौ सहिष्णुः पितराविव ॥ २२ ॥

पितामह समस्साम्ये प्रसादे गिरिशोपमः ।
आश्रयस्सर्वभूतानां यथा देवो रमाश्रयः ॥ २३ ॥

सर्वसद्गुणमाहात्म्ये[2] एष कृष्णमनुव्रतः ।
रन्तिदेव इवो[3]दारो ययातिरिव धार्मिकः ॥ २४ ॥

धृत्या[4] बलिसमः कृष्णे प्रह्लाद इव सद्ग्रहः[5] ।
आहर्तैषोऽश्वमेधानां वृद्धानां पर्युपासकः ॥ २५ ॥

राजर्षीणां जनयिता शास्ता चोत्पथगामिनाम् ।
निग्रहीता कलेरेष[6] भुवो धर्मस्य कारणात् ॥ २६ ॥

तक्षकादात्मनो मृत्युं द्विजपुत्रोपसर्जितात्[7] ।
प्रपश्यत उपश्रुत्य मुक्तसङ्गः पदं हरेः ॥ २७ ॥

जिज्ञासितात्मयाथात्म्यो[8] मुनेर्व्याससुतादसौ ।
हित्वेदं नृप! गङ्गायां यास्यत्यद्धाऽकुतोभयम् ॥ २८ ॥

---

1 AF,GF यथोचितविधाता च 2 AF,GF °त्म्यं 3. B,H,V °वौदार्ये 4. K,M °त्वां 5. AF,GF निर्भरः 6. H,V °श्चै° 7. B,W °र्पि° 8. B,I °थ्यो°

**श्रीध० पार्थेति ।** प्रजानामविता रक्षकः । मानवः [1]मनोः पुत्रः । ब्रह्मण्यः ब्राह्मणेषु हितः सत्यप्रतिज्ञश्च श्रीरामो यथा ॥ १९ ॥

**एष** इति। औशीनरः [2]उशीनरदेशाधिपतिः शिबिः [3]येन स्वमांसं श्येनाय दत्वा शरणागतः कपोतः रक्षितः। स्वानां ज्ञातीनां यज्वनां च यशोविस्तारकः दौष्यन्तिः भरत इव॥ २०॥

**धन्विनामिति**। अर्जुनयोः पार्थकार्तवीर्ययोः॥ २१॥

**मृगेन्द्र** इति। हिमवानिव सतां निषेव्यः अनन्यगतिकत्वेन। वसुधेव तितिक्षुः [4]क्षन्ता। प्रीत्या पितरौ मातापितराविव सहिष्णुः॥ २२॥

**पितामह** इति। पितामहः ब्रह्मा तेन समः। साम्ये [5]समत्वे रमाश्रयः हरिः [6]॥ २३॥

**सर्वेति**। सर्वैः सद्गुणैः माहात्म्यं यत् तस्मिन् श्रीकृष्णतुल्यः॥ २४॥

**धृत्येति**। धृत्या धैर्येण सद्ग्रहः सन् भद्रः ग्रहः अभिनिवेशः यस्य सः। आहर्ता कर्ता॥ २५॥

**राजर्षीणामिति**। राजर्षीणां जनमेजयादीनाम्॥ २६॥

**तक्षकादिति**। द्विजपुत्रेण [7]उपसर्जितात् प्रेरितात् तक्षकात् आत्मनः मृत्युं उपश्रुत्य विरक्तस्सन् हरेः पदं प्रपत्स्यते भजिष्यति॥ २७॥

**जिज्ञासितेति**। ततश्च जिज्ञासितं आत्मनः याथात्म्यं[8] येन सः। इदं शरीरं गङ्गायां हित्वा अकुतोभयं हरेः पदं यास्यति। **अद्धा** निश्चयेन॥ २८॥

---

1 H,V add वैवस्वत° 2 H,V औ° 3 H,V add शिबिचक्रवर्ती 4 B क्षान्त्या; H क्षान्तौ; V क्षान्तः 5 H,V add सर्वभूत° 6 B adds इव 7. H,V add शृङ्गिनाम्ना 8 B °र्थ्यं

**वीर०** एवं आपृष्टाः जातककोविदाः ब्राह्मणाः तस्य भाविनः गुणान् वर्णयन्ति— **पार्थेत्यादिभिः** दशभिः। न केवलं अनितरसाधारणैकगुणं एकमेवानुवर्तिता अपितु तत्तदसाधारणगुणान् सर्वानपीत्याहुः। हे पार्थ! मानवः मनोः वैवस्वतस्य सुतः इक्ष्वाकुरिव साक्षात् प्रजाविता प्रजानां अविता रक्षिता। यथा दाशरथिः दशरथपुत्रः श्रीरामः तद्वत् ब्रह्मण्यः ब्रह्मकुले साधुः सत्ये वाचिके सन्धा दृढाभिरुचिः[1] यस्य तथाभूतश्च॥ १९॥

एष दाता आत्मपर्यन्तदाता शरण्यः शरणं रक्षणोपायं अर्हतीति शरण्यः[2]। यथौशीनरः उशीनरसुतः शिबिः चक्रवर्ती, तद्वत् दाता शरण्यश्च। दौष्यन्तिरिव भरत इव यज्वनां यष्टॄणां यशोवितनिता यशसो विस्तारयिता॥ २०॥

धन्विनां धनुष्मतां अग्रणीः श्रेष्ठः तत्र द्वयोरपि अर्जुनयोः कार्तवीर्यपार्थयोः तुल्यः [3]इत्यर्थः। हुताशः अग्निरिव दुर्धर्षः प्रसोढुं अशक्यः समुद्र इव दुस्तरः अगाधाशयः॥ २१॥

सिंह इव विक्रान्तः। कर्तरि क्तः। पराक्रमी पादविक्षेपवान् वा। हिमवानिव निषेव्यः भूतानां उपजीव्यः। असौ शिशुः वसुधेव भूमिरिव तितिक्षुः प्रसहिष्णुः पितराविव मातापितराविव सहिष्णुः परापराधसहिष्णुः॥ २२॥

साम्ये सर्वभूतसमत्वे पितामहेन ब्रह्मणा समः तुल्यः प्रसादे ज्ञानप्रसादे अनुग्रहे वा गिरिशोपमः रुद्रतुल्यः। सर्वभूतानां पुरुषार्थलिप्सूनां आश्रयः आश्रयितुं योग्यः। यथा रमाश्रयः श्रीनिवासः देवः तद्वत्॥ २३॥

सर्वे सद्गुणाः निर्दुष्टगुणाः तत्कृतं यत्[5] माहात्म्यं यस्मिन् कृष्णं भगवन्तं अनुव्रतः अनुवर्तिता कृष्णतुल्यसद्गुणमाहात्म्ययुक्त इत्यर्थः। रन्तिदेव इव उदारः त्यागी॥ २४॥

धृत्या धैर्येण बलिसमः वैरोचनितुल्यः प्रह्लाद इव कृष्णे भगवति भक्त इति शेषः। सद्ग्रहः सतां ग्राहकश्चैष शिशुः अश्वमेधानां आहर्ता अनुष्ठाता वृद्धानां ज्ञानेन वयसा स्थानेन वृद्धानां पर्युपासकः यथोचितसेवकः॥ २५॥

राजर्षीणां जनमेजयादीनां जनयिता उत्पथगामिनां धर्ममार्गातिवर्तिनां शास्ता। भुवः पृथिव्याः हेतोः धर्मस्य कारणात् निमित्तात् धर्मार्थं चेत्यर्थः। एष कलेः निग्रहीता कलिं[6] निग्रहीष्यति॥ २६॥

द्विजपुत्रेण उपसर्पितात् शापद्वारा नियोजितात् तक्षकात् आत्मनः स्वस्य मृत्युं मरणं उपश्रुत्य आकर्ण्य मुक्तः देहतदनुबन्धिषु सङ्गः येन तथाभूतः हरेः पदं स्थानं प्रपत्स्यते प्राप्स्यति॥ २७॥

[7]मुक्तसङ्गः हरेः पदं प्रपत्स्यति इत्येतदेवोपपादयति। व्याससुतात् मुनेः शुकात् जिज्ञासितं विचारितं निर्णीतमिति यावत्। आत्मयाथात्म्यं प्रत्यगात्मपरमात्मस्वरूपस्वभावतत्त्वं, देहतदनुबन्ध्यसङ्गहेतुभूतं येन सोऽसौ परीक्षित्। हे नृप! इदं शरीरं गङ्गायां त्यक्त्वा नास्ति कुतश्चित् भयं यस्मात् तद्धरेः पदं धाम अद्धा स्फुटं यास्यति॥ २८॥

---

1 W °सन्धिः 2 A,B omit शरण्यः 3 W adds ताभ्यां तुल्यः 4 W omits पर° 5 A,B omit यत् 6 A,B omit कलिं 7 A,B omit मुक्तसङ्गः हरेः पदं प्रपत्स्यति इति

**विज°** हे पार्थ! पृथायाः सुत! युधिष्ठिर! मानवः मनुपुत्रः प्रजानामविता दाशरथिः दशरथपुत्रः सत्यसन्धः सत्यप्रतिज्ञः॥ १९॥

औशीनरः उशीनरपुत्रः दौष्यन्तिः दुष्यन्तपुत्रः इव यज्वनां यथा विस्तारकर्ता तथा अयमपि स्वानां स्ववंशजन्यानां[1] यशोवितनिता॥ २०॥

द्वयोः अर्जुनयोः कार्तवीर्यपाण्डवयोः तुल्यः दुर्धर्षः दुस्सहः॥ २१॥

तितिक्षुः क्षमावान् पितरौ इव सहिष्णुः सहनशीलः॥ २२॥

साम्ये सामञ्जस्ये पितामहस्य विरिञ्चस्य समः प्रसन्नतायां शिवसमः। रमायाः आश्रयः पतिः॥ २३॥

सर्वैः सतां गुणैः माहात्म्यं महात्मत्वं यस्य तथोक्तः अथवा सर्वसद्गुणमाहात्म्यविषये कृष्णं यादवेन्द्रं अनुगतः तथाभूतः कृष्णं अर्जुनं वा॥ २४॥

धृत्यां धैर्ये गृह्णातीति ग्रहः भक्तिः सती भक्तिः यस्य स तथोक्तः "अम्बुवदग्रहणात्तु न तथात्वं" (ब्र. सू. 3-2-19) इति सूत्रात्॥ २५॥

राजर्षीणां कुमाराणां जनयिता उत्पादकः उत्पथगामिनां अशास्त्रविहितमार्गवर्तिनां शास्ता। धर्मस्य भगवतः दुःखापादनकारणात् कलेः निग्रहीता निगृह्य शिक्षाकर्ता॥ २६॥

द्विजपुत्रोपसर्जितात् द्विजकुमारप्रेरितात् तक्षकात् मुक्तसङ्गः पुत्रादिसङ्गरहितः॥ २७॥

व्याससुतात् श्रीशुकात् मुनेः जिज्ञासितं विचारितं आत्ममः परमात्मनः यथास्वरूपसम्बन्धिगुणाधिक्यं येन स तथोक्तः। इदं शरीरं अद्धा समीचीनम्। अकुतोभयस्वरूपानन्दाविर्भावलक्षणं मोक्षं यास्यतीत्यन्वयः॥ २८॥

---

1. K,M °न्म°

**रा० कृ०** हे पार्थ! हे पृथापुत्र! युधिष्ठिर! एष जातः मानवः वैवस्वतमनोः पुत्रः इक्ष्वाकुरिव साक्षात् स्वयं न मन्त्रिद्वारा इत्यर्थः। प्रजाविता प्रजानां अविता रक्षकः भविष्यति। दाशरथिः रामो यथा दशरथपुत्रः श्रीराम इव ब्रह्मण्यः ब्राह्मणभक्तः, सत्यसन्धश्च सत्यप्रतिज्ञश्च भविष्यति। औशीनरः उशीनरदेशाधिपतिः शिबिः यथा दाता स्वदेहपर्यन्तदाता शरण्यश्च शरणागतपोषकश्च भविष्यति। दौष्यन्तिरिव दुष्यन्तपुत्रो भरत इव स्वानां स्वकीयानां यज्वनां यष्टृणां च यशसः वितनिता विस्तारयिता भविष्यति। अपि च एषः अर्जुनयोः पार्थकार्तवीर्ययोः तुल्यः एष धन्विनां धनुर्धराणां अग्रणीः श्रेष्ठः भविष्यति। किञ्च हुताशः अग्निरिव दुर्धरः धर्षितुं अभिभवितुं अशक्यः। समुद्र इव दुस्तरः अनुल्लङ्घ्यशासन इत्यर्थः। मृगेन्द्रः सिंह इव विक्रान्तः पराक्रमवान् हिमवानिव निषेव्यः देवादीनामप्युपजीव्यः भविष्यति। किञ्चासौ वसुधा भूमिरिव तितिक्षुः क्षमाशीलः। पितराविव मातापितराविव सहिष्णुः अपराधसहिष्णुः साम्ये सर्वभूतसमत्वे पितामहसमः ब्रह्मणा तुल्यः, प्रसादे अनुग्रहे गिरिशोपमः शिवसदृशः, रमाश्रयः लक्ष्म्याः आश्रयः देवः यथा महाविष्णुरिव सर्वभूतानां आश्रयः भविष्यति।

अपि चैष सर्वसद्गुणमाहात्म्ये सर्वसद्गुणप्रयुक्ते प्रभावे कृष्णमनुव्रतः कृष्णतुल्य इत्यर्थः। रन्तिदेव इव पुल्कसाय जलं दत्वा सन्तुष्टः राजेव, उदारः युक्तायुक्तविचारं विना परोपकारपारीणः, ययातिरिव धार्मिकः धर्माचरणतत्परो भविष्यति। किञ्च धृत्या धैर्येण बलिसमः बलिनामकराक्षसराजतुल्यः, प्रह्लाद इव कृष्णे सद्ग्रहः सदभिनिवेशवान् भविष्यति। अपि च एषः अश्वमेधानां अश्वमेधयागानां आहर्ता अनुष्ठाता वृद्धानां ज्ञानवयोवृद्धानां पर्युपासकः सेवकः भविष्यति। किञ्चैषः राजर्षीणां जनयिता जनकः उत्पथगामिनां अधर्ममार्गगामिनां शास्ता शासकः भविष्यति। भुवः धरण्याः धर्मस्य कारणात् कलेः कलिपुरुषस्य निग्रहीता निग्राहकः भविष्यति।

अथ द्विजपुत्रोपसर्जितात् द्विजपुत्रेण ब्राह्मणपुत्रेण उपसर्जितात् शापद्वारा नियोजितात् तक्षकात् तक्षकनाम्नः सर्पात् आत्मनः स्वस्य मृत्युं मरणं उपश्रुत्य आकर्ण्य मुक्तसङ्गः परित्यक्तदेहादिसङ्गस्सन् हरेः विष्णोः पदं पादारविन्दं प्रपत्स्यते रक्षकत्वेन प्राप्स्यति हे नृप! असौ बालकः मुनेः व्याससुतात् श्रीशुकात् जिज्ञासितात्मयाथात्म्यः जिज्ञासितं

विचारितं आत्मयाथात्म्यं प्रत्यगात्मपरमात्मनोः स्वरूपस्वभावतत्त्वं येन सः तथाभूतस्सन् इदं शरीरं गङ्गायां हित्वा त्यक्त्वा अद्धा साक्षात् अकुतोभयं सर्वात्मना भयरहितं परमपदं यास्यति गमिष्यति ॥ १९, २०, २१, २२, २३, २४, २५, २६, २७, २८ ॥

इति राज्ञ उपादिश्य विप्रा जातककोविदाः ।
लब्ध्[1]ापचितयस्सर्वे प्रतिजग्मुः स्वकान् गृहान् ॥ २९ ॥

स एष लोके[2] विख्यातः परीक्षि[3]दिति य[4]त्प्रभुः ।
[5]गर्भे दृ[6]ष्टमनु[7]ध्यायन् परीक्षेत नरेष्विह ॥ ३० ॥

स राजपुत्रो ववृधे आ[8]शु शुक्ल इवोडुपः[9] ।
आपूर्यमाणः पितृभिः काष्ठाभिरिव सोऽन्वहम् ॥ ३१ ॥

* बाल एव स धर्मात्मा कृष्णभक्तो निसर्गतः ।
प्रीतिदः सर्वलोकस्य महाभागवतस्सुधीः ॥

यक्ष्यमाणोऽश्वमेधेन ज्ञातिद्रोहजिहा[10]सया ।
[11]राजाऽलब्धधनो द[12]ध्यावन्यत्र करदण्डयोः ॥ ३२ ॥

तदभिप्रेतमालक्ष्य भ्रातरोऽच्युतचो[13]दिताः ।
धनं प्रहीणमाजह्रुरुदीच्या[14] दिशि भूरिशः ॥ ३३ ॥

तेन सम्भृतसम्भारो ध[15]र्मपुत्रो युधिष्ठिरः ।
वाजिमेधैस्त्रि[16]भिर्भीतो य[17]ज्ञैः समयजद्धरिम् ॥ ३४ ॥

आहूतो भगवान् राज्ञा याजयित्वा द्विजैर्नृपम् ।
उवास कतिचिन्मासान् सुहृदा[18] प्रियकाम्यया ॥ ३५ ॥

ततो राज्ञाभ्य[19]नुज्ञातः कृष्णया सह बन्धुभिः ।
ययौ द्वारवतीं ब्र[20]ह्मन् सार्जुनो यदुभिर्वृतः ॥ ३६ ॥*

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
प्रथमस्कन्धे नैमिषोपाख्याने द्वादशोऽध्यायः ॥ १२ ॥

---

1 B °ब्धो° 2. K,M,N,W °क° 3 W °क्ष° 4 K,M यः प्रभुः 5 H,N,V गर्भं°, I पूर्वं ; W पूर्व°; K,M सर्पदृष्टि° 6. H,V °भि° 7. W पर्यैक्षत 8. H,V ह्या° 9 H,V °राट् * The additional verse is found only in B 10. H,V °घां° 11. B,H,I,V राजा लब्ध°

12. B,H,I,V दध्यौ नान्यत्र 13 K,M °नो° 14 K,M °च्याः भूरिशो दिशः 15. B,H,K,M,V,W लब्धकामो 16 AF,GF °विभीराजा 17. B यज्ञेशमय° 18. K,M °दः प्रिय°; W °दः प्रीति° 19 K,M ह्य° 20. B कृष्णः * Here ends XI Chapter in K&M

**श्रीध०** **इतीति**। जातककोविदाः जातकशास्त्रसमर्थाः लब्धा अपचितिः पूजा यैस्ते ॥ २९ ॥

परीक्षिदिति नाम निर्वक्ति— **स एष** इति। यत् यस्मात् प्रभुः समर्थस्सन् गर्भे दृष्टं पुरुषं अनु[1]ध्यायन् इह दृश्यमानेषु नरेषु मध्ये सर्वमपि नरं परीक्षेत अयमसौ भवेन्नवेति विचारयेत् अतः परीक्षिदिति विख्यातः। पूर्व[2]दृष्टमिति वा पाठः। तदा मातृगर्भे पूर्वं दृष्टं इत्यर्थः ॥ ३० ॥

**स** इति। शुक्ले शुक्लपक्षे सः प्रसिद्धः उडुपः चन्द्रः **अन्वहं** यथा काष्ठाभिः पञ्चदशकलाभिः आपूर्यमाणः वर्धते एवं पितृभिः युधिष्ठिरादिभिः कामैः चतुष्षष्टिक[3]लाभिश्च आपूर्यमाणो ववृधे ॥ ३१ ॥

पूर्व[4]मपकृष्योक्तान् अश्वमेधान् स्वावसरे सप्रकारं कथयति — **यक्ष्यमाण** इति। ज्ञातिद्रोहस्य ह[5]नेच्छया यक्ष्यमाणः करदण्डयोरन्यत्र करः षष्ठांशग्रहणं। दण्डः दुष्टनिग्रहजनिततदीयधनलाभः। ताभ्यां विना अलब्धधनः दध्यौ चिन्तयामास क[6]रदण्डार्जितधनस्य परिजनभरणमात्रोप[7]लक्षणत्वात् ॥ ३२ ॥

**तदिति**। प्रहीणं मरुत्तस्य यज्ञे त्यक्तं सुवर्णपात्रादिकं आनीतवन्तः ॥ ३३ ॥

**तेनेति**। सम्भृतसम्भारः सम्पादितयज्ञोपकरणः। भीतो ज्ञातिद्रोहात् ॥ ३४, ३५, ३६ ॥

इति श्रीमद्भागवते प्रथमस्कन्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां द्वादशोऽध्यायः ॥ १२ ॥

---

1. H,V °भि° 2 B,H,V पूर्वं 3 H,V °कलादिभिश्च 4 H,V °माकृष्यो° 5 H,V हनने° 6 A,B करदण्डजस्य 7 A,B °पक्षीणत्वात्

**वीर०** इत्थं राज्ञे युधिष्ठिराय तद्गुणकर्मादिकं उपादिश्य आवेद्य [1]जातकं [2]अधिकृत्य प्रवृत्ते ज्योतिश्शास्त्रे कोविदाः अतिनिपुणा विप्रास्सर्वे लब्धा अपचितिः बहुमतिः यैस्तथाभूताः स्व[3]कान् गृहान् प्रति जग्मुः ॥ २९ ॥

स जातककोविदैः अनुवर्णितभाविगुण एष उत्तरासुतः परीक्षिदिति लोके विख्यातः। कुतः यत् यस्मात् प्रभुः अयं उत्तरासुतः गर्भे मातुः उदरे दृष्टं पुरुषं ध्यायन् इह लोके नरेषु तं पुरुषं पर्यैक्षत परीक्षितवान् अन्वेषितवान् इति यावत्। परीक्ष्य श्रीकृष्णं अध्यवस्यत् इत्यर्थः। ततः प्रवृत्तिनिमित्तात् परीक्षिच्छब्दवाच्यः विख्यात इत्यर्थः। पूर्वं पर्यैक्षत क इत्यसाविति गर्भावस्थायां परीक्षणमपि तच्छब्दप्रवृत्तिनिमित्तमिति सूचितम्। परिपूर्वात् ईक्षतेः शतरि परीक्षदिति रूपम्। परीक्षिदिति च प्रायिकः पाठो दृश्यते। तदा "हृसृरुहियुषिभ्यः इति" (उणादि. 1-97) इत्यौणादिकसूत्रे ईक्षतेर्ग्रहणाभावेऽपि बाहुलकात् इत्प्रत्यये हरित्सरिदादिशब्दवत् साध्यः ॥ ३० ॥

स परीक्षिदिति प्रसिद्धः राजपुत्रः। एकः तच्छब्दः प्रसिद्धिद्योतकः अपरस्तु प्रकृतपरामर्शक इत्यतः न पौनरुक्त्यम्। पितृभिः वर्धयितृभिः हेतुभूतैः अन्वहं आशु ववृधे यथा शुक्ले पक्षे आपूर्यमाणाभिः वृद्धिं गताभिः काष्ठाभिः कलाभिः उडुपः चन्द्रः वर्धते तद्वत् इत्यर्थः॥ ३१॥

अथ [5]किमकार्षीदिति प्रश्नस्योत्तरं सोपोद्घातमाह — **यक्ष्यमाण** इत्यादिना यावत्पञ्चदशाध्यायसमाप्ति। ज्ञातिद्रोहजिहासया ज्ञातिवधप्रयुक्तदोषपरिजिहीर्षया अश्वमेधेन "तरति ब्रह्महत्यां योऽश्वमेधेन यजते" (तैत्ति. सं. 5-3-12) इति ब्रह्महत्यादीनामपि परिहारकतया श्रुतेन "ब्रह्महत्याश्वमेधाभ्यां [6]न परं पुण्यपापयोः" इति निरतिशयपुण्यत्वेन च प्रसिद्धेन अश्वमेधेन यक्ष्यमाणः भगवन्तं आराधयितुकामः राजा युधिष्ठिरः अन्यत्र करदण्डयोः करः स्वामिग्राह्यः, दण्डः प्रसिद्धः तयोरन्यत्र ताभ्यां विना इत्यर्थः। अलब्धधनः उपायान्तरेण अप्राप्तधनः मनो दध्यौ चिन्तितवान्। करदण्डाभ्यां लब्धं धनं [7]न यागार्हम्। उपायान्तरेण तु न प्राप्तं धनं अतः कथं यक्ष्यामीति चिन्तव्याकुलो बभूवेत्यर्थः॥ ३२॥

तस्य युधिष्ठिरस्य अभिप्रेतं आलक्ष्य अच्युतेन आहूतेन श्रीकृष्णेन चोदिताः आदिष्टाः आहूतो भगवानिति वक्ष्यमाणत्वात् भ्रातरः भीमादयः उदीच्यां दिशि प्रहीणं पराजितैः राजभिः त्यक्तं धनं भूरिशः **आजह्रुः**॥ ३३॥

तेन धनेन सम्भृताः सञ्चिताः सम्भाराः यागसाधनानि यस्य स अत एव लब्धकामो युधिष्ठिरः त्रिभिः वाजिमेधैः भीतः मन्त्रतन्त्रद्रव्यलोपादिभ्यः भीतः निश्छिद्रं यथा तथेति भावः। हरिं सम्यगाराधितवान्॥ ३४॥

भगवान् कृष्णोऽपि राज्ञा आहूतः द्विजैः नृपं युधिष्ठिरं याजयित्वा सुहृदां प्रीतिं कर्तुं इच्छया कतिचित् मासानुवास॥ ३५॥

ततो बन्धुभिस्सह राज्ञा युधिष्ठिरेण कृष्णया द्रौपद्या चानुज्ञातः अर्जुनेन सहितः यदुभिः च परिवृतो हे ब्रह्मन्! द्वारवतीं ययौ॥ ३६॥

इति श्रीमद्भागवते प्रथमस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां द्वादशोऽध्यायः॥ १२॥

---

1 W adds जातके 2 W adds उत्पन्नं 3 W स्वगृहान् 4. W व्युत्पाद्यः 5. W यदकार्षीत्तत इत्यस्य 6. W नापरं 7. W यागानर्हं

**विज०** लब्धा प्राप्ता अपचितिः पूजा यैस्ते तथोक्ताः॥ २९॥

यः प्रभुः सर्पदृष्टिं तक्षकाख्यसर्पदर्शनं अनुध्यायन् निरन्तरं चिन्तयन् इह नरेषु समीपे आगच्छत्सु परीक्षेतेति यस्मात् तस्मात् स एष लोके परीक्षिदिति विख्यात इति परीक्षिन्नामनिरुक्तिः इत्यन्वयः॥ ३०॥

उडुपः चन्द्रः शुक्लपक्षे काष्ठाभिः दिग्देवतासरस्वतीगोभिः **अन्वहं** यथा तथा स राजपुत्रोपि पितृभिः युधिष्ठिरादिभिः अन्वहं अन्नपानादिभिः पूर्यमाणः ऐधतेत्यर्थः॥ ३१॥

ज्ञातिद्रोहजिहासया भीष्मादिवधनिमित्तपापहननेच्छया अश्वमेधयज्ञे[1] भगवन्तं यष्टुकामः राजा करदण्डयोरन्यत्र करं दण्डं च वर्जयित्वा न लब्धं धनं येन सोऽलब्धधनः दध्यावित्यन्वयः ॥ ३२ ॥

उदीच्याः उत्तरायाः दिशः भूरिशः बहुलं प्रहीणं यज्ञशिष्टं मरुत्तेन पूर्वजेन स्थापितं धनम् ॥ ३३ ॥

तेन द्रव्येण सम्भृतः सम्पन्नः सम्भारः यज्ञसाधनं येन स तथोक्तः ॥ ३४ ॥

सुहृदः युधिष्ठिरस्य प्रियेच्छया ॥ ३५ ॥

बन्धुभिस्सह कृष्णया द्रौपद्या चाभ्यनुज्ञातः सार्जुनः अर्जुनेन सहितः यदुभिश्च परिवृतः कृष्णः द्वारवतीं ययौ इत्यन्वयः * ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां
टीकायां प्रथमस्कन्धे द्वादशोऽध्यायः ॥ १२ ॥

---

1 K,M °यज्ञेन * Here ends XI Chapter in K&M

**रा० कृ०** लब्धापचितयः लब्धा युधिष्ठिरात् प्राप्ता अपचितिः पूजा यैस्ते तथाभूताः जातककोविदाः ज्योतिश्शास्त्रविशारदाः सर्वे विप्रा इति पूर्वोक्तप्रकारेण राज्ञे धर्मजाय उपादिश्य निवेद्य स्वकान् स्वकीयान् गृहान् प्रतिजग्मुः ययुः ॥ २९ ॥

यत् यस्मात् कारणात् गर्भे दृष्टं पुरा अनुभूतं पुरुषं अनुध्यायन् अभिध्यायन् इह अस्मिन् लोके नरेषु मानवेषु परीक्षेत सोऽयं भगवान् भवेन्नो वेति परीक्षेत यो विचारयेत् स एष भगवता रक्षितः प्रभुः परीक्षिदिति लोके विख्यातः प्रसिद्धस्सञ्जातः ॥ ३० ॥

सः पूर्वोक्तः राजपुत्रः परीक्षिन्नामकः पितृभिः धर्मराजादिभिः आपूर्यमाणः भोगैस्सम्पूर्यमाणः शुक्ले शुक्लपक्षे काष्ठाभिः कलाभिः आपूर्यमाणः स उडुपः इव चन्द्र इव अन्वहं प्रतिदिनं आशु शीघ्रं ववृधे वृद्धिं प्राप ॥ ३१ ॥

ज्ञातिद्रोहजिहासया ज्ञातिवधप्रयुक्तपापस्य जिहासया परिजिहीर्षया अश्वमेधेन यक्ष्यमाणः भगवन्तं आराधयितु-कामः राजा धर्मराजः करदण्डयोरन्यत्र उचितकरदण्डाभ्यां विना अलब्धधनः अप्राप्तवित्तस्सन् दध्यौ धनं विना यज्ञानुष्ठानं कथं वा स्यादिति चिन्तयामास ॥ ३२ ॥

तदभिप्रेतं तस्य धर्मराजस्य अभिप्रेतं अभिमतं आलक्ष्य ज्ञात्वा भ्रातरः भीमादयः अच्युतचोदिताः श्रीकृष्णेन प्रेरितास्सन्तः उदीच्यां उत्तरस्यां दिशि भूरिशः प्रहीणं मरुत्तस्य राज्ञः यज्ञे सन्तुष्टैः ब्राह्मणैः परित्यक्तं धनं आजह्रुः आनीतवन्तः ॥ ३३ ॥

तेन सोदरानीतेन धनेन सम्भृतसम्भारः सम्पादितयागसाधनः धर्मपुत्रः धर्मतनयः युधिष्ठिरः भीतस्सन् ज्ञातिद्रोहात् भीतस्सन् त्रिभिः वाजिमेधैः अश्वमेधनामकैः यज्ञैः हरिं विष्णुं समयजत् सम्यक् पूजितवान्॥ ३४॥

भगवान् श्रीकृष्णः राज्ञा युधिष्ठिरेण आहूतः द्विजैः ब्राह्मणैः नृपं धर्मजं याजयित्वा यज्ञं कारयित्वा सुहृदां मित्राणां धर्मजादीनां प्रियकाम्यया प्रीतिं कर्तुमिच्छया कतिचिन्मासान् उवास तत्र हस्तिनापुरे न्यवसत्॥ ३५॥

हे ब्रह्मन्! ततोऽनन्तरं बन्धुभिस्सह राज्ञा युधिष्ठिरेण कृष्णया द्रौपद्या च अभ्यनुज्ञातः सार्जुनः अर्जुनसहितः यदुभिः वृतः परिवृतः द्वारवतीं द्वारकापुरीं ययौ जगाम॥ ३६॥

इति श्रीमद्भागवते प्रथमस्कन्धे
श्रीराधाकृष्णप्रणीतायां सुधीसुधायां व्याख्यायां
द्वादशोऽध्यायः॥ १२॥



# त्रयोदशोऽध्यायः

सूत उवाच

विदुरस्तीर्थयात्रायां मैत्रेयादात्मनो गतिम्।
ज्ञात्वाऽगाद्धास्तिनपुरं तयावाप्तवि[1]वित्सितः ॥ १ ॥

यावतः कृतवान् प्रश्नान् क्षत्ता कौषारवाग्रतः।
जातैकभक्तिर्गोविन्दे तेभ्यश्चोपरराम ह ॥ २ ॥

तं बन्धुमागतं दृष्ट्वा धर्मपुत्रः सहानुजः[2]।
धृतराष्ट्रो युयुत्सुश्च सूतश्शारद्वतः पृथा ॥ ३ ॥

गान्धारी द्रौपदी ब्रह्मन्! सुभद्रा चोत्तरा कृपी।
अन्याश्च जा[3]मयः पाण्डोर्ज्ञातयस्ससुताः स्त्रियः ॥ ४ ॥

प्रत्युज्जग्मुः प्रहर्षेण प्राणं[4] तन्व इवागतम्[5]।
अभिसङ्गम्य विधिवत् परिष्वङ्गाभिवा[6]दनैः ॥ ५ ॥

मुमुचुः प्रेमबाष्पौघं वि[7]रहौत्कण्ठ्यकातराः।
राजा तमर्हयाञ्चक्रे कृतासनपरिग्रहम् ॥ ६ ॥

तं भुं[8]क्तवन्तं विश्रान्तमासीनं सुखमासने।
प्रश्रयावनतो राजा प्राह ते[9]षां च शृण्वताम् ॥ ७ ॥

युधिष्ठिर उवाच

अपि स्मरथ नो युष्मत्पक्षच्छायासमेधितान्।
विपद्गणाद्विषाग्न्यादेर्मोचिता यत्समातृकाः ॥ ८ ॥

---

1. W °धि° 2. AF,GF °गः 3. B या° 4. K,M °णान् 5 K,M °तान् 6 K,M °वन्द° 7 K,M मिथ औ° 8 AF,GF सत्कृतं तु
9. K,M स्वानां च; H,V स्वानां वि°

## श्रीधरस्वामिविरचिता भावार्थदीपिका

निर्गमो धृतराष्ट्रस्य विदुरोक्त्या त्रयोदशे।
उक्तः पौत्राभिषेकेन वक्तुं राज्ञो महापथम् ॥

इदानीं परीक्षितः कलिनिग्रहादिकर्माणि कथयिष्यन् विदुरागमनेन धृतराष्ट्रप्रस्थानं ततोऽर्जुनागमनं ततः श्रीकृष्णान्तर्धानं निशम्य पाण्डवप्रस्थानं च निरूपयति त्रिभिरध्यायैः — **विदुर** इति। आत्मनो गतिं हरिं तया आत्मगत्या अवाप्तं विवित्सितं ज्ञातुमिष्टं सर्वं येन॥ १॥

तदेवाऽऽह — **यावत** इति। यावतः कर्मयोगज्ञा[1]नादिविषयान् प्रश्नान् प्रथमं कृतवान्। कौषारवस्य मैत्रेयस्य पुरतः पश्चात् त्रिचतुःप्रश्नार्थज्ञानमात्रेण गोविन्दे जातैकभक्तिः कृतार्थस्सन् तेभ्यः प्रश्नेभ्यः मै[2]त्रेयोक्ततादृशप्रतिवचनेभ्य इत्यर्थः। उपरराम। ततः परं न विजिज्ञासितवान्॥ २॥

**तमिति**। सूतः सञ्जयः। शारद्वतः कृपः। पृथा कुन्ती॥ ३॥

**गान्धारीति**। कृपी द्रोणभार्या जा[3]मयो ज्ञातिभार्याः अन्याश्च स्त्रियः॥ ४॥।

**प्रत्युज्जग्मुरिति**। प्राणं तन्व इवेति कुतश्चिन्मूर्च्छादिदोषतः प्राणेऽवसन्ने सति तन्वः कराङ्घ्र्यादयो निश्चेष्टा भवन्ति। [4]पुनस्तस्मिन्नाविर्भूते यथोत्तिष्ठन्ति तद्वत्॥ ५॥

**मुमुचुरिति**। विरहेण यदौत्कण्ठ्यं तेन कातरा विवशाः॥ ६॥

**तमिति**। तं विदुरम्॥ ७॥

**अपीति**। पक्षिणो ह्यपत्यानि यथाऽतिस्नेहेन पक्षच्छायया वर्धयन्ति तद्वद्युष्मत्प[5]क्षच्छायया समेधितान् वर्धितान् नोऽस्मान् अपि स्मरथ? किं स्मरथ? समेधितत्वमेवाऽऽह विपद्गणाद्यस्मान्मोचिताः स्मः॥ ८॥

---

1. A,B °व्रतादि° 2. A,B omit मैत्रेयोक्त ...... इत्यर्थः। 3. B या° 4 H,V पुनश्च तस्मि° 5. A,B °त्पक्षपातच्छा°

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

कुरुपाण्डवयुद्धात् प्रागेव मन्त्राय धृतराष्ट्रेण आहूतः तत्पुत्रेण पराभूतो विदुरः तीर्थयात्रायां निमित्तभूतायां सत्यां गतः तत्रात्मनः परमात्मनो गतिं [1]याथात्म्यं मैत्रेयादृषेर्ज्ञात्वा तया आत्मगत्या ज्ञानविषयभूतया अवाप्तविधित्सितः कृतकृत्यः। विवित्सितः इति पाठे विदितवेद्यः "येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमात्मनि खल्वरे दृष्टे श्रुते मते विदिते इदं सर्वं विज्ञातं भवति" (छान्दो. उ. 6-1-3) इति श्रुतेः। पुनर्हास्तिनपुरं प्रागात् प्राप्तः॥ १॥

तयाऽवाप्तविधित्सित इत्येतदेवोपपादयति। यावतः क्षत्ता विदुरः कौषारवो मैत्रेयः कुषारवगोत्रप्रसूतत्वात्। तस्याग्रतः यावतः प्रश्नान् कृतवान् तत्र कतिपयानामेव प्रश्नानामुत्तरैः गोविन्दे जाता एका अव्यभिचारिण्यनन्यप्रयोजना भक्तिर्यस्य तथाभूतः तेभ्योऽवशिष्टप्रश्नेभ्य उपरराम। अवशिष्टप्रश्नानामुत्तराणि न शुश्रावेत्यर्थः। जातैकभक्तिरित्यनेन कृतकृत्यत्वमुक्तम्॥ २॥

तमागतं बन्धुं [2]विदुरं ज्ञात्वा सहानुजो धर्मपुत्रो युधिष्ठिरः धृतराष्ट्रादयः सूतः सञ्जयः शारद्वतः कृपः॥ ३॥

अन्याश्च जामयः अन्तःपुरस्त्रियः ससुताः पाण्डोः ज्ञातयश्च हे ब्रह्मन् ॥ ४ ॥

प्रहर्षेण प्रत्युज्जग्मुः अभिमुखं ययुः। यथा आगतं प्राणं तन्वः शरीराणि तद्वत् प्राणमागतमिव तं प्रत्युज्जग्मुरित्यर्थः। परिष्वङ्गाभिवादनैः विधिवत् यथोचितम् अभिसङ्गम्य ॥ ५ ॥

विरहप्रयुक्तौत्कण्ठ्येन कातराः प्रेमबाष्पौघमानन्दाश्रुसमूहं मुमुचुः। कृतः आसनपरिग्रहो येन तं विदुरं राजा युधिष्ठिरोऽर्हयामास पूजयामास ॥ ६ ॥

ततो भुक्तवन्तं विश्रान्तमासने सुखमासीनं तं विदुरं स्वानां शृण्वतां सतां प्रश्रयेणावनतः प्राह ॥ ७ ॥

तदेवाऽऽह — अपीत्या दिभिश्चतुर्भिः। युष्मत्पक्षयोः परिग्रहरूपयोः छायायां समेधितान् नोऽस्मानपि स्मरथ स्मरथ किम्? आत्मनां तत्पक्षच्छायासमेधितत्वं स्मारयति। समातृकाः मात्रा सहिता वयं विषाम्न्यादिरूपात् विपद्गणा[3]द्यद्येन त्वया विमोचिताः ॥ ८ ॥

---

1. A,B omit याथात्म्यं 2. A,B omit विदुरं 3. A,B °णात्त्वया

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

विषयरागः संसाराय, तदभावो विमुक्तये इत्यतो मुमुक्षुणा स्वतो वैराग्यं परतो वा सम्पादनीयमित्ययमर्थः प्रतिपाद्यतेऽस्मिन्नध्याये। तत्र शुद्धान्तःकरणस्यैव विषयविरागस्सुदृढ इति, स च कर्मणा तीर्थसेवया वा स्यादित्यभिप्रेत्य विदुरस्य तीर्थसेवां कृत्वा युधिष्ठिरादिबन्धुदिदृक्षया हास्तिनपुरागतिमाह — **विदुर** इति। विदुरो हास्तिनपुर-मगादित्यन्वयः। किं कृत्वा तीर्थयात्रायां कृष्णादिष्टात् मैत्रेयादात्मनः परमात्मनो गतिं ज्ञानं जीवस्य गतिं स्वर्गनरकादिविषयामिति वा तया परमात्मविद्यया अवाप्तं विवित्सितं ज्ञातुमिष्टं येन स तथोक्तः ॥ १ ॥

"नापृष्टः कस्यचित् ब्रूयात्" (भार. 12-276-34) इति वचनात् प्रश्नप्रतिवचनाभ्यां तत्त्वमवगम्य अलम्बुद्धिरभूदित्याह — **यावत** इति। क्षत्ता विदुरः कुषारवस्यापत्यस्य मैत्रेयस्याग्रतो यावतः प्रश्नान् कृतवान् तेभ्यः प्रश्नेभ्यो मैत्रेयेण परिहृतेभ्य उपरराम ज्ञातत्वादलम्बुद्धिमानभूत्। हशब्दः तृप्तिसूचकः। चशब्द एवार्थे। तत्त्वज्ञानेन फलमाह — जातेति। त[1]तो ज्ञानातिशयेन जाता एका प्रधाना भक्तिर्यस्य स तथोक्तः कुत्र गोविन्दे श्रीकृष्णे अनेन भक्तिज्ञानयोरन्योऽन्यहेतुत्वम् असूचि ॥ २ ॥

सूतः सञ्जयः शारद्वतः कृपः ॥ ३ ॥

अन्याः पाण्डोर्जामयः पुत्रभार्याः अन्या त्रा प्रसिद्धनामानो जामयः स्वसारो वा ॥ ४ ॥

आगतान् प्राणान् दृष्ट्वा तन्वः भोगायतनानि शरीराणीव "तत्प्राणे प्रपन्न उदतिष्ठत्" इति श्रुतेः ॥ ५ ॥

मिथः प्रेमबाष्पौघं प्रेमनिमित्तनेत्रजलप्रवाहम्। अर्हयाञ्चक्रे पूजयामास औत्कण्ठ्यकातराः औत्कण्ठ्येन परवशाः। कृतः आसनस्य पीठस्य परिग्रहः स्वीकारो येन स तथोक्तः तम् ॥ ६ ॥

स्वकीयानां च शृण्वतां सताम्॥ ७॥

नोऽस्मान् स्मरथ? यूयमिति शेषः। मात्रा सह वर्तमानाः समातृकाः विषाग्न्यादेः विपद्गणान्मोचिताः यत्नेन, तस्मादिति शेषः॥ ८॥

---

1. K तत्त्वज्ञानादतिशयेन

## श्रीराधाकृष्णप्रणीता सुधीसुधा

विदुरस्तीर्थयात्रायां मैत्रेयात् तन्नाम्नो ऋषेः आत्मनः परमात्मनो गतिं तत्त्वं ज्ञात्वा तया आत्मगत्या अवाप्तविविित्सितः अवाप्तं प्राप्तं विवित्सितं ज्ञातुमिष्टं येन सः विदितवेदितव्य इत्यर्थः। हास्तिनपुरं हस्तिनापुरम् अगात् अगच्छत्।

धार्तराष्ट्रपाण्डवयुद्धात् प्रागेव मन्त्राय धृतराष्ट्रेणाऽऽहूतः तत्पुत्रेण पराभूतो विदुरः तीर्थयात्रार्थं हस्तिनापुरान्निर्जगाम। युद्धानन्तरं हस्तिनगरात् द्वारकामागतः कृष्णः विदुरस्य यात्रानन्तरं हस्तिनगरप्रत्यागमनात् प्रागेव निर्याणमयासीत्। आनिर्याणमात्मना सहावस्थितं मैत्रेयं लोकाय भागवतरहस्यमुपदिशेति भगवान् श्रीकृष्णः समादिदेश स्वनिर्याणसमये।

श्रीकृष्णनिर्याणानन्तरं विदुरो मैत्रेयमुपगम्य तस्मादात्मतत्त्वं जग्राह। महात्मानः केचिदत्र कथयन्ति — "श्रीकृष्णो भौतिकदेहत्यागानन्तरं मैत्रेयं प्राविशत्, तदारभ्य अद्य यावत् आध्यात्मिकविद्याविषये मैत्रेयो जगद्गुरुरिति व्यवह्रियते।" तथा हि — "काले काले सः सिद्धपुरुषशरीराण्याश्रित्य लोकाय ब्रह्मविद्यां प्रयच्छति। जीसस् प्रभुरपि अनेनैव मैत्रेयतेजसा अनुगृहीतः। मैत्रेयाविष्टेन हि तेन प्रभुणा सनातनब्रह्मविद्यैव क्रैस्तवबोधस्वरूपेण लोके प्रकटीकृता" इत्ययमभिप्रायश्च "यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा। तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवम्॥" (भ. गी. 10-41) इति भगवदुक्त्या संवदति॥ १॥

क्षत्ता विदुरः कौषारवाग्रतः कौषारवस्य मैत्रेयस्य अग्रतः पुरतो यावतः प्रश्नान् कृतवान् गोविन्दे जातैकभक्तिः तत्र कतिपयानामेव प्रश्नानां समाधानैः भगवति सञ्जातभक्तिः तेभ्यः शिष्टप्रश्नेभ्यः उपरराम उपरतवान्॥ २॥

हे ब्रह्मन्! आगतं तं बन्धुं दृष्ट्वा सहानुजः धर्मपुत्रः धृतराष्ट्रः, युयुत्सुः, सूतः सञ्जयः, शारद्वतः कृपः पृथा कुन्ती, गान्धारी, द्रौपदी, सुभद्रा, उत्तरा, कृपी द्रोणभार्या, पाण्डोर्जामयः ज्ञातिभार्याः ससुताः ज्ञातयः अन्याश्च स्त्रियः आगतं प्राणं तन्व इव करचरणाद्यवयवा इव प्रहर्षेण प्रत्युज्जग्मुः, अभिमुखं ययुः। किञ्च परिष्वङ्गाभिवादनैः आलिङ्गननमस्कारैः विधिवत् यथाविधि अभिसङ्गम्य अभिमुखं गत्वा विरहौत्कण्ठ्यकातराः वियोगजेनौत्कण्ठ्येन विह्वलाः प्रेमबाष्पौघं स्नेहजन्यमश्रुपूरं मुमुचुः तत्यजुः। कृतासनपरिग्रहं आसनोपविष्टं तं विदुरं राजा युधिष्ठिरः अर्हयाञ्चक्रे पूजितवान्॥ ३, ४, ५. ६॥

ततश्च भुक्तवन्तं विश्रान्तं आसने सुखमासीनं तं विदुरं स्वानां स्वकीयानां शृण्वतां स्वकीयेषु शृण्वत्सु सत्सु प्रश्रयावनतः प्रश्रयेण विनयेन अवनतः राजा धर्मजः प्राह वक्ष्यमाणप्रकारेणावोचत्॥ ७॥

यत् यस्मात् कारणात् विषाग्न्यादेः विषान्नवह्निदाहादेः विपद्गणात् आपत्समूहात् समातृकाः मातृसहिता वयमिति शेषः। मोचिताः भवद्भिः रक्षिताः स्मः, तान् युष्मत्पक्षच्छायासमेधितान् युष्माकं पक्षपातेन प्रवर्धितान् नः अस्मानपि स्मरथ? यूयं स्मरथ किम्?॥ ८॥

**कया वृत्त्या वर्तितं वं[1]श्चरद्भिः क्षितिमण्डलम्।**
**तीर्थानि क्षेत्रमुख्यानि सेवितानीह भूतले॥ ९॥**

**भवद्विधा भागवतास्तीर्थ[2]भूतास्स्वयं विभो[3]!।**
**तीर्थीकुर्वन्ति तीर्थानि स्वान्तः[4]स्थेन गदाभृता॥ १०॥**

**अपि नस्सुहृदस्तां[5]त! बान्धवाः कृष्णदे[6]वताः।**
**दृष्टाः श्रुता वा यदवः स्वपुर्यां सुखमासते॥ ११॥**

**इत्युक्तो धर्मराजेन सर्वं तत् समवर्णयत्।**
**यथाऽनुभूतं क्र[7]मशो विना यदुकुलक्षयम्॥ १२॥**

**नं[8]न्वप्रियं दुर्वि[9]षहं नृणां स्वयमुपस्थितम्।**
**[10]नावेदयत् सकरुणो दुःखितान् द्रष्टुमक्षमः॥ १३॥**

**कञ्चित्कालमथावात्सीत् सत्कृतो देववत्सु[11]खम्।**
**भ्रातुर्ज्येष्ठस्य श्रेयस्कृत् सर्वेषां प्री[12]तिमावहन्॥ १४॥**

**अबिभ्रदर्यमा दण्डं यथाव[13]दघकारिषु।**
**याव[14]द्दधार शूद्रत्वं शापाद्वर्षशतं यमः॥ १५॥**

**श्रीसूत उवाच**

**युधिष्ठिरो लब्धराज्यो दृष्ट्वा पौत्रं कु[15]लंधरम्।**
**भ्रातृभिर्लोकपालाभैर्मुमुदे परया[16] श्रिया॥ १६॥**

---

1. K,M वै चर° 2. N °र्थीं° 3. H,K,M,V प्र° 4. K,M °त्म° 5. K,M °स्तावत् 6. K,M °दै° 7 K,M भ्रमता 8 K,M तत्त्व' 9. AF,GF °ह्यं 10. AF,GF न्य° 11. B,H,K,V °त्स्वकैः 12. I सुख° 13. B,H,K,M,V °घमघ° 14 K,M °द्बभा° 15. AF,GF कुलोद्वहम् 16. W °म°

**श्रीध०** **कयेति**। वो युष्माभिः कया वृत्त्या वर्तितं देहवृत्तिः कृता। कानि च तीर्थादीनि सेवितानीति ॥ ९ ॥

भवतां च तीर्थाटनं न स्वार्थं कृतं[1] किन्तु तीर्थानुग्रहार्थमित्याह — **भवद्विधा** इति। मलिनजनसम्पर्केण[2] तीर्थानि मलिनानि सन्ति। सन्तः पुनः स्वान्तं मनः, तत्र स्थितेन स्वस्यान्तःस्थितेनेति वा पुनः तानि तीर्थान्यपि तीर्थीकुर्वन्तीत्यर्थः ॥ १० ॥

**अपीति**। अपि किं सुखमासते? भवद्भिः क्वापि दृष्टाः श्रुता वा? ॥ ११, १२ ॥

यदुकुलक्षयावर्णने कारणमाह — **नन्विति** ॥ १३ ॥

**कमिति**। श्रेयस्कृत्तत्त्वमुपदिशन् ॥ १४ ॥

ननु शूद्रोऽसौ कथं[3] तत्त्वमुपदिशेत्। न ह्यसौ शूद्रः किन्तु यमस्तद्रूपेणासीत्। किं तत्र कारणम्? यमे चात्रागतेऽमुत्र को दण्डधर इत्यपेक्षायामाह — **अबिभ्रत्** इति। अबिभ्रत् धृतवानित्यर्थः। माण्डव्यस्य शापात्। तथाहि — क्वचिच्चोराननुधावन्तो राजभटा माण्डव्यस्य ऋषेस्तपश्चरतः आश्रमसमीपे[4] तान् सम्प्राप्य तेन सह निबध्य आनीय राज्ञे निवेद्य तदाज्ञया [5]सर्वान् शूलमारोपयामासुः। ततो राजा तं ऋषिं ज्ञात्वा शूलादवतार्य प्रसादयामास। ततो मुनिर्यमं गत्वा कुपित उवाच कस्मादहं शूलमारोपित इति। तेनोक्तं त्वं बाल्ये शलभं कुशाग्रेणाविध्य क्रीडितवानिति। तच्छ्रुत्वा माण्डव्यस्तं शशाप बाल्ये अजानतो मे महान्तं दण्डं यतस्त्वं कारितवानतः शूद्रो भवेति ॥ १५ ॥

इदानीं राज्यापकर्षणं[6] निरूपयितुमुत्कर्षं निगमयति — **युधिष्ठिर** इति। कुलंधरं वंशधरम् ॥ १६ ॥

---

1. A,B omit कृतं 2. A,B मलिनजनसम्पर्केण मलिनानि तीर्थानि सन्तः पुनस्स्वयं तीर्थीकुर्वन्ति स्वान्तं मनः तत्रस्थेन, स्वस्यान्तस्स्थितेनेति वा ॥ १० ॥ 3. A,B कथमुप° 4. A,B omit आश्रम° 5. B adds तान् 6. A,B राज्यस्यापकर्षं

**वीर०** क्षितिमण्डल चरद्भिः कया वृत्त्या वर्तितम्? इह भूतले कानि तीर्थानि भगवत्क्षेत्रमुख्यानि च भवद्भिस्सेवितानि? ॥ ९ ॥

कृतकृत्यानां भवतां न तीर्थयात्रया स्वप्रयोजनमस्तीत्यभिप्रायेण आह — **भवद्विधा** इति। हे विभो! भवादृशाः भागवताः स्वयमेव तीर्थभूताः पवित्रभूताः। अतस्तीर्थयात्राकृतं पवित्रत्वं नापेक्षितमिति भावः। तर्हि किमर्थं तीर्थान्यटन्ति? तत्राऽऽह — तीर्थीकुर्वन्तीति। स्वान्तःस्थेन गदाभृता भगवता तीर्थान्यपि तीर्थीकुर्वन्तीति तीर्थान्यपि तीर्थीकर्तुं तानि पर्यटन्तीति भावः। वस्तुतः परिशुद्धान्येव गङ्गादितीर्थानि। तथाऽपि पापिभिः तेषु परिहृतानि पापान्यादाय तान्यपि पवित्रीकुर्वन्ति स्वगतानि तु स्वान्तरात्मतयाऽवस्थितो गदाभृत् क्षपयति। तस्य त्वघप्रतिभटत्वान्न तस्मिन् पापसमावेशप्रसक्तिरिति भावः। एतदभिप्रायेणैव गदाभृतेत्युक्तम्। तथा च नवमे "किञ्चाहं न भुवं यास्ये नरा मय्यामृजन्त्यघम्। मृजामि तदघं क्वाहं राजंस्तत्र विचिन्त्यताम्" (भाग. 9-9-5) इति गङ्गयोक्तो भगीरथ आह "साधवो न्यासिनश्शान्ता धर्मिष्ठा लोकपावनाः। हरन्त्यघं तेऽङ्गसङ्गात्तेष्वास्ते ह्यघभिद्धरिः" (भाग. 9-9-6) इति ॥ १० ॥

**अपीति**। हे तात! कृष्ण एव देवता येषां ते नोऽस्माकं सुहृदो बान्धवाश्च यदवः दृष्टाः अथवा स्वपुर्या द्वारकायां सुखमासत इति श्रुताः किम्?॥ ११॥

इतीत्थं धर्मराजेनोक्तः विदुरो यदुकुलक्षयं विना अन्यत्सर्वं यथानुभूतं दृष्टं श्रुतं चानतिक्रम्य क्रमशः[1] समवर्णयत्॥ १२॥

यदुकुलक्षयं कुतो नावर्णयदित्यत्राऽऽह — **नन्विति**। ननु हे शौनक! दुर्विषहं सोढुमशक्यं स्वयमुपस्थितं स्वयमेवोपस्थास्यदप्रियं यदुकुलक्षयात्मकं नावेदयत्। कुतः? यतस्सकरुणः दयावानत एव दुःखितान् दुःखिष्यमाणान् द्रष्टुमक्षमः असहिष्यमाणः॥ १३॥

अयं[2] देववदीश्वरवत्सत्कृतो बहुमतः कञ्चित्कालं ज्येष्ठस्य भ्रातुः धृतराष्ट्रस्य श्रेयस्कृत् सर्वेषां धर्मराजादीनां प्रीतिमावहन् सुखमवात्सीत् उवास। श्रेयः कर्तुं[3] प्रीतिं वोढुं चावात्सीदित्यर्थः। भ्रातुः श्रेयस्कारणमत्र तस्य मरणज्ञापनपूर्वकं मुक्त्युपायप्रवर्तनरूपं विवक्षितम्॥ १४॥

कथं तस्य तद्भावनसामर्थ्यमिति शङ्काव्युदासाय सर्वप्राणिमृत्युकालज्ञः तद्दण्डधरश्च यो यमः स एवायं विदुर इति वदन् शङ्कान्तरं च निराह — **अबिभ्रदिति**। शापात् माण्डव्यशापाद्धेतोः यमः यावच्छूद्रत्वं विदुररूपं शूद्रभावं दधार तावद्वर्षशतमर्यमा सूर्योऽघकारिषु पापिषु यथाऽघं तत्पापानुरूपं दण्डमबिभ्रत् कारयामास। अनेन यम एव विदुरश्चेत् यमाधिकारं कः कृतवान् इत्याशङ्का व्युदस्ता। यमाधिकारं स्वाधिकारं च अर्यमैवाकरोदिति भावः॥ १५॥

भ्रातुः श्रेयस्क्रियामेव प्रपञ्चयितुं तावत् तादात्विकं युधिष्ठिरादिसंस्थानप्रकारमाह — **युधिष्ठिर** इति द्वाभ्याम्। लब्धं राज्यं येन स युधिष्ठिरः कुलन्धरं कुलनिर्वाहकं पौत्रं परीक्षितं दृष्ट्वा इन्द्रादिलोकपालसदृशैः भ्रातृभिः परमया[4] श्रिया च मुमुदे॥ १६॥

---

1. A,B चानुक्रमशः 2. A,B अथ 3. A,B कुर्वन् 4. A,B परया

**विज०** एकभुक्तादिव्रतेन किमिति शेषः। इह भूतले क्षेत्रप्रधानानि तीर्थानि यानि तानि सर्वाणि च सेवितानीत्यन्वयः॥ ९॥

हे प्रभो! स्वात्मस्थेन गदाभृता हरिणा तीर्थभूताः भवादृशाः भागवताः गङ्गादितीर्थानि तीर्थीकुर्वन्ति, न स्वयमात्मशुद्धिमपेक्ष्य तीर्थानि गच्छन्तीति शेषः॥ १०॥

कृष्णो दैवतं येषां ते तथोक्ताः॥ ११॥

भ्रमता परिवर्तमानेन क्षितितलमिति शेषः। स्वेन यथानुभूतं तथा तत्सर्वमवर्णयत्, किन्तु यदुकुलक्षयं विना तीर्थयात्रायां यमुनायां भगवदाज्ञया बदरीं गच्छन्तमुद्धवं दृष्ट्वा तस्मात् विप्रशापाद्धेतोः षड्विंशद्वर्षादुपरि नाशमेष्यद्यदुकुलं श्रुत्वा तन्नावर्णयदिति भावः॥ १२॥

तत्किमिति नावर्णयदिति तत्राऽऽह— **तत्त्विति** ॥ १३ ॥

विदुरः किमकार्षीदिति तत्राऽऽह— **कञ्चिदिति**। सुखलक्षणं श्रेयः ज्येष्ठस्य भ्रातुर्धृतराष्ट्रस्य ॥ १४ ॥

एवं भगवद्भक्तिज्ञानादिमानयं विदुरो देवेषु कस्यावतार इति तत्राऽऽह— **अबिभ्रदिति**। योऽर्यमा वैवस्वतोऽघकारिषु पापकृत्सु यथाऽघं पापमनतिक्रम्य दण्डमबिभ्रत् शिक्षामकरोत् पापफलमभोजयदित्यर्थः। स यमो माण्डव्यशापात् यावद्वर्षशतं तावच्छूद्रत्वं बभारेत्यन्वयः। माण्डव्यो नाम कश्चिदृषिः कस्मिंश्चिन्नदीतीरे तपश्चरंस्तत्र कस्माच्चिन्नगरात् चौर्यं गृहीत्वा गतैश्चोरैस्सहानुधावद्भिः नगरपालैः अज्ञानात् गृहीत्वा राज्ञे निवेद्य तदनुज्ञया शूले समारोपितोऽभूत्। तत्रापि शूले तपः कुर्वन्तमपि जाज्वल्यमानं दृष्ट्वा जनैर्निवेदितो राजा ससम्भ्रममुपागम्य शूलादवरोप्य प्रसाद्य प्रस्थापयामास। कोपेन जाज्वल्यमानेन यमसमीपं गतेन मुनिना कस्मादहं शूलमारोपित इति पृष्टो यमः तस्मात् शापमादातुकामो बाल्यावस्थायां काचित् मक्षिका शूले समारोपिता तेन दोषेणायमवस्थाविशेषः प्राप्त इति प्राह। तस्मै क्रुद्धो मुनिः शूद्रो भवेति शशाप तमिति माण्डव्यशापः ॥ १५ ॥

अथ युधिष्ठिरः किं चकारेति तत्राऽऽह— **युधिष्ठिर** इति। इन्द्रादिलोकपालसमानैः भीमादिभ्रातृभिः लब्धराज्यो युधिष्ठिरः कुलंधरं पौत्रं दृष्ट्वा परमया[1] श्रिया सम्पदा मुमुद इत्येकान्वयः कुलं धारयतीति कुलन्धरः ॥ १६ ॥

---

1. A,B परमसम्पदा

**रा० कृ०** क्षितिमण्डलं भूमण्डलं चरद्भिः पर्यटद्भिः वः युष्माभिः कया वृत्त्या कया जीविकया वर्तितम् देहपोषणं कृतम्? इह भूतले कानि तीर्थानि क्षेत्रमुख्यानि च युष्माभिस्सेवितानि? हे विभो! भवद्विधाः त्वत्तुल्याः भागवताः भगवद्भक्ताः स्वयमेव तीर्थभूतास्सन्तः स्वान्तःस्थेन स्वकीयहृदयस्थेन गदाभृता विष्णुना तीर्थानि तीर्थान्यपि तीर्थीकुर्वन्ति पवित्रीकुर्वन्ति ॥ ९, १० ॥

हे! तात! कृष्णदेवताः नः अस्माकं सुहृदः हितचिन्तकाः बान्धवाः यदवश्च अपि दृष्टाः? अथवा स्वपुर्यां सुखमासते इति श्रुता वा श्रुताः किम्? ॥ ११ ॥

इत्येवम्प्रकारेण धर्मराजेनोक्तः पृष्टः विदुरः विना यदुकुलक्षयं तत्सर्वमन्यत्सर्वं यथानुभूतं यथाज्ञातं क्रमशस्समवर्णयत् ॥ १२ ॥

नृणां स्वयमुपस्थितं प्रारब्धवशात् प्राप्तं, ननु निश्चयेन दुर्विषहमप्रियं यदुकुलक्षयरूपं सकरुणः दुःखितान् द्रष्टुमक्षमोऽसमर्थो विदुरः नाऽऽवेदयन्नाकथयत् अप्रियस्यापि सत्यस्याकथने "सत्यं ब्रूयात् प्रियं ब्रूयात् न ब्रूयात्सत्यमप्रियम्। प्रियं च नानृतं ब्रूयादेष धर्मस्सनातनः।" इति प्राचां वचनमेव प्रमाणम् ॥ १३ ॥

अथानन्तरं देववत् सत्कृतस्सविदुरः सर्वेषां धर्मराजादीनां प्रीतिमावहन् कुर्वन् ज्येष्ठस्य भ्रातुः धृतराष्ट्रस्य श्रेयस्कृत् ज्ञानवैराग्योपदेशेन श्रेयस्करस्सन् कञ्चित्कालं सुखमवात्सीत् तत्रैवावसत् ॥ १४ ॥

शापात् माण्डव्यमुनिशापात् यमो यावद्वर्षशतं वर्षशतपर्यन्तं शूद्रत्वं दधार तावत्पर्यन्तमर्यमा सूर्यः अघकारिषु पापकृत्सु यथाघं पापमनुसृत्य दण्डमबिभ्रत् अधारयद्विहितवानित्यर्थः। समवर्ती यमोऽपि माण्डव्येन शप्त इत्यहो धर्मसूक्ष्मविनिर्णयस्य दुष्करता! अपि च यमनिष्ठधर्मदण्डयोरंशयोः पूर्वस्मिन् विदुरभावमागते अपरः कालरूपी पापिनोऽशिक्षयदित्यवसेयम्॥ १५॥

लब्धराज्यो युधिष्ठिरः कुलन्धरं वंशप्रवर्तकं पौत्रं परीक्षितं दृष्ट्वा लोकपालाभैरिन्द्रादिलोकपालतुल्यैः भ्रातृभिस्सोदरैः परया श्रिया च सहितस्सन् मुमुदे मुदितवान्॥ १६॥

* अथाऽऽमन्त्र्याच्युतो बन्धून् निर्वर्त्यानुगतान्[1] विभुः।
अर्जुनोद्धवशैनेयैः ययौ[2] द्वारवतीं हयैः[3]॥

एवं गृहेषु सक्तानां प्रमत्तानां तदीहया[4]।
अत्यक्रामदविज्ञातः कालः परमदुस्तरः॥ १७॥

विदुरस्तदभिप्रेत्य[5] धृतराष्ट्रमभाषत।

विदुर उवाच

राजन्निर्गम्यतां शीघ्रं पश्येदं भयमागतम्॥ १८॥

प्रतिक्रिया[6] न यस्येह कुतश्चित्कर्हिचित् प्रभो!
स एव[7] भगवान् कालः सर्वेषां नस्समागतः[8]॥ १९॥

येन चैवाभिपन्नोऽयं[9] प्राणैः प्रियतमैरपि।
जनस्सद्यो वियुज्येत[10] किमुतान्यैर्धनादिभिः॥ २०॥

पितृभ्रातृसुहृत्पुत्रा हतास्ते विगतं वयः।
आत्मा च जरया ग्रस्तः परगेहमुपाससे॥ २१॥

△ अन्धः पुरैव बधिरो मन्दप्रज्ञश्च साम्प्रतम्।
विशीर्णदन्तो मन्दाग्निः सरोगः[11] कफमुद्वहन्॥

अहो महीयसी जन्तोर्जीविताशा यया[12] भवान्।
भीमापवर्जितं[13] पिण्डमादत्ते गृहपालवत्॥ २२॥

अग्निर्निसृष्टो दत्तश्च[14] गरो दाराश्च दूषिताः।
हृतं क्षेत्रं धनं येषां तद्दत्तैरसुभिः[15] कियत्॥ २३॥

**तस्यापि तव देहोऽयं कृपणस्य जिजीविषोः।**
**परैत्यनिच्छतो जीर्णो जरया वाससी इव॥ २४॥**

---

*An additional verse is found in H,K,M,V between VV 16 & 17 The commentary of Vijayadhvaja Teertha on this verse is to be found in its proper place. 1. H,V °व° 2. H,V °वृंतो 3 H,V ययौ 4 K,M गृहे° 5. H,V,W °म° 6 AF GF °यां न पश्येऽहं 7. B,H,I,K,M,V,W °ष 8. AF,GF व° 9. H,K,M,V चेष्टा° 10 H,V,W °मुच्ये° △ An additional verse is found in B,H,I,N,V between VV. 21 & 22. This verse is not commented by any commentator 11 B,I सरागः 12 I °था 13 N,W भीमेनाव° 14 B °स्तु 15. K,M तदन्नै°

**श्रीध०** **एवमिति**। तदीहया गृहव्यापारेण प्रमत्तानाम्। अत्यक्रामदायुष्कालोऽतिक्रान्तः। यद्वा आयुश्च[1] तान्[2] अभ्यभवदित्यर्थः॥ १७॥

**विदुर इति**। अभिप्रेत्य ज्ञात्वा॥ १८॥

ननु तत्प्रतीकारः क्रियतां किं निर्गमनेन? तत्राऽऽह — **प्रतिक्रियेति**। सर्वेषामिति यैः प्रतिकर्तव्यं तेषामपीत्यर्थः॥ १९॥

कथं धनादिवियोगः सोढुं शक्योऽत आह — **येन च** इति। अभिपन्नोऽभिग्रस्तः॥ २०॥

अत्रावस्थानमतिदैन्यमिति दर्शयन् वैराग्यमुत्पादयति — **पितृभ्रात्रिति** सप्तभिः। आत्मा च देहः॥ २१॥

**अहो** इति। येन पुत्रा हतास्तेन भीमेन दत्तं पिण्डं[3] गृहपाल इव। गृहपालः श्वा॥ २२॥

**अग्निरिति**। निसृष्टः क्षिप्तः[4] गरो विषम्। दूषिताः अवमताः। तद्दत्तैरन्नादिभिः लब्धैरसुभिः **कियत्** प्रयोजनम्? न किञ्चिदित्यर्थः॥ २३॥

**तस्येति**। तस्यापि तवैवं दैन्यमनुभवतोऽपि परैति क्षीयते अत एव धीरो भवेति॥ २४॥

---

1. A,B omit आयुश्च 2. B adds कालः 3 B adds अन्नं 4. A,B प्रक्षिप्तः

**वीर०** एवं गृहेष्वासक्तानां तदीहया गार्हीयचेष्टया प्रमत्तानाम् अविदितमृत्युकालानाम्, कर्तरि षष्ठी। तैः अविज्ञातः परमस्सर्वं वशीकुर्वन् अत एव दुस्तरः। कस्याप्यवश्यः कालोऽत्यक्रामत् अतिक्रान्तवान्। तदीहया अविज्ञात इति वाऽन्वयः। युधिष्ठिरादीनां विषयानुभवकालो व्यतिक्रान्तो बभूवेत्यर्थः॥ १७॥

भ्रातुः श्रेयस्क्रियाप्रकारं प्रपञ्चयति — **विदुर** इत्यादिभिः दशभिः। तं कालातिक्रममभिप्रेत्य विदुरः धृतराष्ट्रमभाषत। तदेवाऽऽह — राजन्नित्यादिसार्धैर्नवभिः। हे! राजन्! इतः शीघ्रं निर्गम्यताम् त्वयेति शेषः। आगतमुपस्थितमिदं भयं पश्य आलोचय॥ १८॥

किं तत् तत्राऽऽह — **प्रतिक्रियेति**। कुतश्चिदपि हेतोः कदाचिदपि यस्य भयस्य प्रतीकारः निवारणं नास्ति स एष भगवान् भगवन्नियाम्यः सर्वेषां नः अस्माकं कालः मृत्युकालः समागतः सं[1]मुपस्थितः ॥ १९ ॥

गृहासक्तिं त्याजयितुं कालं विशिंषन्नाह — **येन** इति। अयं परिदृश्यमानो जनः येन मृ[2]त्युकालेन अभिपन्नः अभिपद्यमानः प्रियतमैः निरतिशयप्रियैः प्राणैरपि सद्यो विमुच्येत त्यज्येत। अन्यैः प्राणानुबन्धिभिः धनादिभिः मुच्येत इति किं वक्तव्यम्? स कालस्समागत इत्यन्वयः ॥ २० ॥

विरक्तिमुत्पादयितुं तस्यावस्थां वर्णयति — **पित्रि** त्यादिभिश्चतुर्भिः। तव पित्रादयो हता मृताः। वयो यौवनञ्चापगतम्। आत्मा देहो जरया च ग्रस्तः। तथाऽपि परेषां शत्रूणां गेहमुपाससे जीवनार्थमिति शेषः ॥ २१ ॥

जीविताशां त्याजयितुं विस्मयमान आह। अहो जन्तोः जीविताशा महीयसी बलीयसी, यया जीविताशया भवान् भीमेनावर्जितं परिभूय दत्तं पिण्डं कबलमादत्ते स्वीकरोति अ[3]त्तीति यावत्। गृहपालः श्वा तद्वत् ॥ २२ ॥

पिण्डस्य भीमापवर्जितत्वख्यापनाय भीमादीनां शत्रुत्वं प्रख्यापयन् तदपवर्जितपिण्डेन प्राणधारणम[4]तिहीनमित्याह — **अग्निरिति**। येषाम् इत्यस्याग्न्यादिभिः प्रत्येकमन्वयः। येषामग्निः निसृष्टः लाक्षागृहेष्विति शेषः। येषां गरो विषं दत्तम्, येषां च दाराः द्रौपदी दूषिताः, कचग्रहणवस्त्रापहरणादिभिः दूषिताः, येषां च धनं क्षेत्रं राज्यं च अपहृतं, सर्वं त्वयेति बोद्धव्यम्। तत्र त्वत्पुत्रैरिति कर्तृपदं बोध्यम्। तद्दत्तैः तदपवर्जितैः पिण्डदा[5]नायत्तत्वात् तद्दत्तैरित्युक्तम्। असुभिः प्राणैः कियत् नकिञ्चित् अ[6]तिहीनमिदं जी[7]वनमित्यर्थः ॥ २३ ॥

वि[8]धिविधेयं प्रारब्धमनुभा[9]व्यमेवेति, तत्र जीविताशां त्याजयितुमेव विशिंषन्नाह — **तस्येति**। तस्य तद्दत्तासोः कृपणस्य जीवितुमिच्छोरप्यनिच्छतः देहत्यागमनिच्छतोऽपि तव दे[10]हः इति शेषः। जीर्णे वाससी इव जरया देहः परैत्यपगमिष्यत्येव ॥ २४ ॥

---

1. A omits समुपस्थितः 2 A,B omit मृत्यु° 3 A,B omit अत्ति 4 W °मत्यन्तं निही° 5 A,B °नायित° 6 W निहीन° 7 W जीवित° 8 W किं विधे° 9 A,B °भूय° 10 A,B हृदः

**विज०** * ययौ द्वारवतीं इत्युक्तश्रीकृष्णप्रयाणशेषमाह — **अथेति**। अथ विभुः व्याप्तः अच्युतः आगमिष्यामीति आमन्त्र्य सम्भाष्य यान्तमनुगतान् बन्धून् निर्वर्त्य अर्जुनादियुक्तो हयैः युक्तेन रथेन द्वारवतींययावित्येकान्वयः ॥

अधुना धृतराष्ट्रस्य स्वर्गप्राप्तिप्रकारं वक्तुमुपक्रमते — **एवमिति**। एवमुक्तप्रकारेण हरिपरायणानां पाण्डवादिवत् यः काल एकमपि क्षणमवन्ध्यतां नेतुं शक्यस्स कालो हरिविमुखानां गृहेषु पुत्रमित्रादिलक्षणेषु केवलं शिश्नोदरम्भरतया सक्तानां गृहपोषणधनान्वेषणप्रयत्नैः प्रमत्तानां विस्मृतपरमात्मतत्त्वानाम् अत एव अविज्ञातोऽत्यक्रामत् अतिक्रान्तोऽभूदित्येकान्वयः ॥ १७ ॥

तत्कालस्यातिक्रमणं, विदुर इति नाम सार्थं साधयन्, निर्गम्यतां गृहादिति शेषः। प्राप्तमिदं मरणभयं पश्येत्यन्वयः ॥ १८ ॥

यस्य कालस्य कुतश्चित्कारणात् कर्हिचिदपि प्रतिक्रिया निवर्तनक्रिया नास्ति स एष भगवान् कलरूपो[1] नः सर्वेषां समागतः शरीरवियोगकारणाय प्राप्त इत्यन्वयः ॥ १९ ॥

इतोऽपि निर्गमनमुचितमित्याह — **येन** इति। इह जीवलोके येन कालरूपिणा हरिणाऽभिपन्नो ग्रस्तोऽयं जनोऽतिशयेन हृदयङ्गमैः प्राणैरपि वियुज्येत अन्यैः धनादिभिर्वियुज्येत इति किमुतेत्यन्वयः ॥ २० ॥

अस्तु ममापि मरणं, ततः किमिति तत्राऽऽह — **पित्रिति**। तव पित्रादयो हता वयश्च विगतम् आत्मा देहश्च जरया ग्रस्त इति यत् तथाऽपि त्वं परगेहमुपाससे न श्रेयस्साधनाय ईहसे मृतस्य तव अतः परलोके न सुखावाप्तिरित्यर्थः ॥ २१ ॥

परलोके सुखं नेतिचेदिहैव दीर्घजीवितमस्त्वित्यभिप्रायश्चेत्[2] तर्हि त्वं निरपत्रप इत्यभिप्रेत्याह — **अहो** इति। जन्तोर्जीविताशा बहुकालं जीवामीत्याशा इच्छा महीयसी महत्तरा। अहो अज्ञानातिरेको, यया जीविताशया भवान् **भीमापवर्जितं** भीमेन तिरश्चीनहस्तेन दत्तं पिण्डमादत्ते; क इव गृहपालवत् सारमेय इव ॥ २२ ॥

ननु विषम उपन्यासः, कनिष्ठपुत्रत्वेन मत्पुत्रत्वात् तद्दत्तान्नेन शरीरपोषणमुचितमिति चेत् सत्यम्, विषदानादिना त्वया अपराद्धत्वात्तद्दत्तं विषोपममित्यभिप्रेत्य आह — **अग्निरिति**। अग्निदाहाद्यपराधाः त्वया येषां कृताः तेषामन्नैः पुष्टैरसुभिः कियत् प्रयोजनं, लज्जाकरत्वात् मृतिरेव गरीयसी अतो निर्गम्यतामित्यन्वयः ॥ २३ ॥

युधिष्ठिरादीनां मयि तात्पर्यात् न निर्जिगमिषामीति[3] चेत्, तत्राऽऽह — **तस्येति**। जरया ग्रस्ते वाससी इव वस्त्रे इव यथा तथाऽनिच्छतो जिजीविषोः जीवितुं इच्छोः कृपणस्य परान्नादननिरतस्यापि तवायं जीर्णो देहः परैति निरस्तासुः स्यात् अतो देहस्य अनित्यत्वात् निर्गच्छ[4] त्वम् इति वदामीति भावः ॥ २४ ॥

---

* Commentary on additional V. 1. K,M °पी 2. B,K,M °जीवन° 3 B,K,M °ष्या° 4. B,K,M °च्छत्विति

**रा॰ कृ॰** एवमुक्तप्रकारेण गृहेषु सक्तानां तदीहया गृहेच्छया प्रमत्तानां विस्मृतकर्तव्यानां जनानामिति शेषः। परमदुस्तरः कालः अविज्ञातः केनाप्यविदितः अत्यक्रामत् अतिक्रान्तवान् ॥ १७ ॥

तं कालातिक्रममभिप्रेत्य मनसि निधाय विदुरः धृतराष्ट्रमभाषत वक्ष्यमाणप्रकारेण अवोचत् हे राजन्! आगतमुपस्थितमिदं भयं पश्य जानीहि शीघ्रं निर्गम्यतां इतस्त्वया बहिर्गम्यताम् ॥ १८ ॥

हे प्रभो! इह अस्मिन् संसारे कुतश्चित् कस्मादपि ब्रह्मादेरपि इति यावत्। कर्हिचित् कदाऽपि यस्य कालस्य प्रतिक्रिया प्रतीकारः न, नास्ति, स एष भगवान् भगवत्स्वरूपः कालः अन्तकालः नः अस्माकं सर्वेषां समागतः सम्प्राप्तः ॥ १९ ॥

किञ्च येन कालेनाभिपन्नः आक्रान्तः अयं दृश्यमानो जनः प्रियतमैरपि प्राणैः सद्यः विमुच्येत वियुज्येत। अन्यैः प्राणानुबन्धिभिः धनादिभिः किमुत? विमुच्येतेति किमु वक्तव्यम्। सः कालः समागत इति पूर्वेणान्वयः ॥ २० ॥

ते तव पितृभ्रातृसुहृत्पुत्राः हता निहताः वयः यौवनं विगतम्। आत्मा च देहश्च जरया वार्धक्येन ग्रस्तः कबलितः। तथाऽपि परगेहं परेषां गृहमुपाससे जीवनार्थमिति शेषः॥ २१ ॥

△ केवलं दाक्षिणात्यपुस्तकेषु दृश्यमानोऽप्ययं श्लोकः व्याख्यायते।

पुरैव प्रागेव अन्धस्त्वमिति शेषः। साम्प्रतं बधिरः मन्दप्रज्ञः विशीर्णदन्तः मन्दाग्निः मन्दीभूतजठराग्निः सरोगः रुग्णः कफमुद्वहन् उद्वमन् एवम्भूतस्सन्नपि जीवनार्थं परगृहमाश्रयसे इति भावः॥

जन्तोः प्राणिनः जीविताशा अहो! महीयसी अतिशयेन महती, यया जीविताशया भवान् भीमापवर्जितं भीमेन शत्रुभूतेनापवर्जितं निसृष्टं पिण्डं कबलं गृहपालवत् गृहरक्षणे नियुक्तश्शुनक इव आदत्ते स्वीकरोति॥ २२ ॥

येषां पाण्डवानामग्निः निसृष्टः दत्तः दहनार्थमिति शेषः। गरश्च विषं च दत्तः भोजनार्थम् दत्तम्। दाराश्च पत्नी द्रौपद्यपि दूषिताः कचग्रहणवस्त्रापकर्षणादिना अवमानिता। क्षेत्रं धनं चापहृतम् त्वयेति शेषः। तद्दत्तैः तैः भीमादिभिः दत्तैः अन्नादिभिस्संरक्षितैः असुभिः प्राणैः कियत् किं फलम्? न। न किमपि इत्यर्थः॥ २३ ॥

तस्य तादृशस्य कृपणस्य दीनस्य जिजीविषोः जीवितुमिच्छतः अनिच्छतोऽपि देहत्यागमनिच्छतोऽपि तवायं देहः जरया जीर्णस्सन् वाससी इव वस्त्रे इव परैति क्षीयते॥ २४ ॥

**गतस्वार्थमिमं[1] देहं विरक्तो[2] मुक्तबन्धनः।**
**अविज्ञातगतिर्[3]जह्यात् स वै धीर उदाहृतः॥ २५ ॥**

**यः स्वकात्[4]परतो वेह जातनिर्वेद आत्मवान्।**
**हृदि कृत्वा हरिं गेहात्[5] प्रव्रजेत् स नरोत्तमः॥ २६ ॥**

**अथोदीचीं दिशं यातु स्वैरज्ञातगतिर्भवान्।**
**इतोऽर्वाक् प्रायशः कालः पुंसां गुणविकर्षणः॥ २७ ॥**

**एवं राजा विदुरेणानुजेन प्रज्ञाचक्षुर्बोधितं आजमीढः।**
**छित्त्वा स्वेषु स्नेहपाशान् द्रढिम्नो निश्चक्राम भ्रातृसन्दर्शिताध्वा॥ २८ ॥**

**पतिं प्रयान्तं सुबलस्य पुत्री पतिव्रता चानुजगाम[7] साध्वी।**
**हिमालयं न्यस्तदण्डप्रहर्षं मनस्विनामिव[8] संत्[9]सम्प्रहारः[10]॥ २९ ॥**

**अजातशत्रुः कृतमैत्रो[11] हुताग्निर्विप्रान् नत्वा तिलगो[12]भूमि[13]रुक्मैः ।**
**गृहं प्रविष्टो गुरुवन्दनाय न[14] चापश्यत् पितरौ सौबलीं च ।। ३० ।।**

**तत्र सञ्जयमासीनं पप्रच्छोद्विग्नमानसः ।**
**गावल्[15]गणे क्व न[16]स्तातो वृद्धो हीनश्च नेत्रयोः ।। ३१ ।।**

**अम्बा च[17] हतपुत्राऽऽर्ता पितृव्यः क्व ग[18]तस्सुहृत् ।**
**अपि मय्यकृतप्रज्ञे हतबन्धुस्स[19]भार्यया ।**
**आशंसमानश्शमलं गङ्गायां दुःखितोऽपतत् ।। ३२ ।।**

---

1. W °दं 2. K,M °मु° 3. AF,GF °म° 4. K,M स्वतः प° 5. AF,GF सम्यक् प्र° 6. H,V °तश्चा°; W °तो ह्या° 7. W °गता च 8. K,M °मवसत् संविहारम् 9 B सन् स° 10. AF,GF °सारम् 11. AF,GF °त्रसत्क्रियो वि° 12. AF,GF वसु° 13. H,K,M,V °वस्त्र° 14 AF,GF परं न पश्यत् 15 K,M °द्ग° 16. AF,GF यातोऽसौ 17. B,H,K,M,V,W वा 18. K,M गतो इतः ; AF,GF गत स्सुकृत् 19. H,K,M,V °स्व°

**श्रीध॰** किंलक्षणो धीर इत्यपेक्षायामाह — **गतेति**। गतस्वार्थं यशोधर्मादिशून्यं मुक्तबन्धनस्त्यक्ताभिमानः क्व गत इत्यविज्ञाता गतिर्यस्य स धीरः प्राप्तदुःखस्य स्वयं सहनेन मु[1]क्तिं प्राप्तः ।। २५ ।।

**य** इति। नरोत्तमस्तु ततः प्रागेव कृतप्रतीकारः स्वकात् स्वत एव परतः परोपदेशतो वा ।। २६ ।।

त्वन्तु[2] नरोत्तमो ना[3]भूः अत इदानीं धीरो भवेत्याह — **अथेति**। अर्वागर्वाचीनः। ए[4]ष्यन्नित्यर्थः। **गुणान्** धैर्यदयादीन् विकर्षत्याच्छिनत्तीति तथा ।। २७ ।।

**एवमिति**। आजमीढः अजमीढवंशजः। प्रज्ञाचक्षुरन्धः। एवं बोधितस्सन्। द्रढिम्नाश्रितदार्ढ्यात्। **भ्रात्रा** सन्दर्शितोऽध्वा ब[5]न्धमोक्षयोः मार्गो यस्य सः ।। २८ ।।

**पतिमिति**। सुबलस्य पुत्री गान्धारी साध्वी सुशीला हिमालयं प्रयान्तं पतिमनुजगाम। ननु कथं सा सुकुमारी हिमादिदुःखबहुलं हिमवन्तं गता अत आह। न्यस्तदण्डानां स[6]न्न्यासिनां प्रहर्षो यस्मिंस्तम्। दुःखदमपि[7] केषाञ्चित् प्रहर्षहेतुर्भवतीत्यत्र दृष्टान्तः मनस्विनां शूराणां युद्धे सन् तीव्रः सम्प्रहारो यथा। पाठान्तरे सत्सम्प्रहारं युद्ध यथेति ।। २९ ।।

**अजातशत्रुरिति**। कृतं मैत्रं मित्रदैवत्यं सन्ध्यावन्दनं येन। नत्वा सम्पूज्य पितरौ विदुरधृतराष्ट्रौ सौबलीं गान्धारीं नापश्यत् ।। ३० ।।

**तत्रेति**। हे गावल्गणे ) गा[8]वल्गणस्य पुत्र! सञ्जय! ।। ३१ ।।

**अम्बेति**। सार्धश्लोकमेकं वाक्यम्। अकृतप्रज्ञे सन्दमतौ शमलमपराधमाशंसमानः आशङ्कमानः। **भार्यया सह** ॥ ३२ ॥

---

1. A मुक्तिप्राप्तेः ॥ २५ ॥; B मुक्तिप्राप्तेः वै निश्चितम् ॥ २५ ॥ 2. B adds पूर्व 3. B मा° 4. H,V कालः उत्तरकालः अर्वाक् निकृष्ट इति वा गुणविकर्षणः 5 H,V वन° 6 A,H,V omit सन्यासिनां 7 B adds कथञ्चित् 8 A ग°

**वीर०** तर्हि ज्ञातिसन्निधावत्रैव परैत्वित्यत्राऽऽह — **गतेति**। गतः स्वार्थः स्वापेक्षितपुरुषार्थो यस्मात् **तमिमं देहं यो जह्यात्** त्यजेत्। कथम्भूतः विरक्तः देहादिषु स्पृहा[1]रहितः। मुक्तानि बन्धनानि संसृतिब[2]न्धकानि पुण्यपापात्मकानि येन अविज्ञाता ज्ञातिभिरज्ञाता गतिः देहत्यागलोकान्तरप्रा[3]प्तिरूपा यस्य सः स एव धीरः योगी उदाहृतः ॥ २५ ॥

किञ्च, स्वकात् स्व[4]स्मात् परतः अन्यस्मात् अन्योपदेशाद्वा इह जातो निर्वेदो वैराग्यं यस्य सः यः **पुमान्** आत्मवान् जितेन्द्रियः हरिमाश्रितानां संसृतिबन्धहरं भगवन्तं हृदि कृत्वा विधाय ध्यानेन सन्निधाप्य गेहात् **प्रव्रजेत्** [5]निर्गच्छेत् स ए[6]वं नरेषूत्तमः। त्वमेवं कुर्विति भावः ॥ २६ ॥

तदेवाऽऽह — **अथ** इति। अतः स्वैर्ज्ञातिभिः अज्ञाता गतिर्यस्य स भवानुदीचीं दिशं यातु। तत्र हेतुमाह — इतोऽर्वाक् इतोऽनन्तरं कालः प्रायशः पुंसां गुणानात्मगुणान् अक्रोधादीन् विकर्षत्यपनुदत इति **तथाभूतः**। नन्द्यादित्वाल्ल्युः। यद्वा इतोऽनन्तरका[7]लात् अर्वागधरः निकृष्टः कलिकाल इति यावत्। अर्वाक्त्वमेवाह **गुणविकर्षण** इति। गुणविकर्षणः उक्तार्थः ॥ २७ ॥

एवमित्थम् अनुजेन विदुरेण बोधित आजमीढः अजमीढवंशजः एतच्च नवमे स्फुटम्। प्रज्ञैव **चक्षुर्यस्य** अन्ध इति भावः। यद्वा अन्धत्वेऽपि प्रज्ञया चक्षुःस्थानीयया सर्वं साक्षात्कुर्वाणः राजा धृतराष्ट्रः, भ्रात्रा **विदुरेण** सन्दर्शितः अध्वा गन्तव्यदेशाध्वा यस्य सः अनेन विदुरोऽपि तेनैव सह निरगादिति सूच्यते। द्रढिम्नः नितरां **दृढान्** दृढमूलान् स्वेषु देह-तदनुबन्ध्यादिषु स्नेहा अनुरागाः त एव पाशाः पाशवत् ब[8]न्धहेतुत्वात् तान् छित्वा **निश्चक्राम** गृहादिति शेषः ॥ २८ ॥

**पतिमिति**। सुबलस्य पुत्री गान्धारी न्यस्तः त्यक्तो दण्डो भूतद्रोहो यैः तेषां सर्वभूतसुहृदां योगिनां **प्रहर्षं** हर्षकरं **हिमालयं प्रति यान्तं गच्छन्तं पतिमनुजगाम**। युक्तं चैतदित्यभिप्रायेण त[9]ं विशिनष्टि पतिव्रता साध्वी चेति। मनस्विनामिवेति स धृतराष्ट्रनिर्गम इत्यध्याहारः। स निर्गमः मनस्विनां विवेकिनां सम्प्रहार इव स[10]न् **अवस्थितः**। **मनस्विनामुद्बोधक इवावर्ततेत्यर्थः** ॥ २९ ॥

ततोऽजातशत्रुर्हुता अग्नयः आहवनीयादयो येन तथाभूतः अनेन रात्रावेव धृतराष्ट्रो निरगादिति सूचितम्। तिलादिभिः सत्कृत्य विप्रान् नत्वा पि[11]त्रोः कृतं मैत्रं येन सः अत एव गुर्वोः गान्धारीधृतराष्ट्रयोः वन्दनाय **तयोर्गेहं प्रविष्टः**। पितरौ धृतराष्ट्रविदुरौ **सौबलीं** गान्धारीं नापश्यत् न ददर्श। पितराविति द्विवचनेन विदुरो **विवक्षितः**, **सौबल्याः** गान्धार्याः पृथगुपादानात् ॥ ३० ॥

ततस्तत्र धृतराष्ट्रगृहेष्वासीनम् उपविष्टं सञ्जयं धृतराष्ट्रस्य गीतोपदेष्टारं अजातशत्रुः पप्रच्छ। कथम्भूतः? उद्विग्नं भीतं मानसं यस्य तथाभूतः। प्रश्नमेवाह — गावल्गणे इत्यादिभिस्त्रिभिः। हे गावल्गणे! सञ्जय! नः अस्माकं तातः पिता नेत्रयोः नेत्राभ्यां हीनः रहितः वृद्धश्च क्व गतः? हताः पुत्राः यस्याः सा अत एवाऽऽर्ता दुःखिता च माता[12] गान्धारी च क्व गता तथा पितृव्यः पितृभ्राता सुहृच्च विदुरः क्व गतः? अपीत्यपिशब्दः सम्भावनाद्योतकः, प्रश्नद्योतको वा॥ ३१॥

हताः मया हताः बन्धवः पुत्रा यस्य सः अत एव दुःखितः भार्यया सहाकृतप्रज्ञे विवेकरहिते[13] मयि दोषं शमलमपराधमिति यावत्। आशंसमानः चिन्तयन् गङ्गायां अपतत् पतितवान् स्यात् पतितवान् किमिति वाऽर्थः॥ ३२॥

---

1 W राग° 2 W °बन्धाधायकानि 3 W °प्राप्तिप्रकाररूपा 4 A,B omit स्वस्मात् 5 A,B omit निर्गच्छेत् 6 W °ष 7 W °कालः 8 W बन्धन° 9 A,B तां 10 A,B omit सन् अव° 11 A,B omit पित्रोः 12 W अम्बा 13 W °हीने

**विज०** ननु प्रथममेव पतिष्यतीति देहमुपेक्षमाणस्य[1] आत्महननाख्यदोषानुषङ्ग इति तत्राऽऽह — **गतेति**। गतः **स्वार्थः** ऐहिकामुष्मिकसुखसाधनो यस्मात् स तथोक्तः तमिमं देहं देहाभिमानम्। मुक्तः तदनु भार्यादिस्नेहानुबन्धात् मुक्तोऽविज्ञातगतिरन्यैर्जनैः अनवबुद्धारण्यादिगतिः जह्यात् स वै एव धीरो विवेकज्ञान्युदाहृतः। तस्मात् पुरुषार्थसाधनायोग्यदेहहानौ दोषाभावात् निर्जनवनं गत्वा तपश्चर्यया शरीरमिदं साधितस्वार्थं कुर्विति भावः॥ २५॥

इतोऽपि प्राप्तवनस्य तव तपस्साधनमेव श्रेयस्करमिति वक्तीत्याह — **य** इति। यः स्वतः स्वबुद्ध्या परतः परबोधनेन वा जातनिर्वेद उत्पन्नवैराग्यः, आत्मवान् वशीकृतमना हरिं हृदि कृत्वा गेहात् प्रव्रजेत् स नरोत्तमः पुरुषश्रेष्ठ इत्येकान्वयः॥ २६॥

अथ तस्मात् भवानुदीचीं दिशं यातु। कथम्भूतः? स्वैरज्ञातगतिः[2] न तु स्वैः पाण्डवैः अविज्ञातगतिः पाण्डवानुज्ञयैव तस्य वनवासाय गत्युक्तेः। कथं तर्हि शब्दयोजना? स्वैरिणीशब्दार्थवत् स्वेच्छानुसारेण ज्ञाता गतिर्यस्य, न परेच्छातः स तथोक्त इति विवरणोपपत्तेः। अन्यथा अविज्ञातगतिरित्येतदपहसितं स्यात्। इतोऽर्वाक् पूर्वतनः कालः पुंसामधिकारिणां ज्ञानभक्त्यादिगुणसामग्र्यापादकः, इत उपरितनः कालः प्रायेण गुणेषु विषयेषु विकृष्य नाशयतीति गुणविकर्षणो विविच्य दर्शयतीति वा वेदस्य वा विकर्षणमित्युक्तेः॥ २७॥

एवमुक्तप्रकारेणानुजेन विदुरेण बोधितोऽतः प्रज्ञानमेव चक्षुर्यस्य स तथा, स्वतो जात्यन्धः। प्रज्ञया चष्टे पश्यति न तु मांसदृष्ट्येति वा आजमीढः अजमीढवंशोद्भवः आजेन ज्ञानेन मीढः सिक्त इति वा, मिह सेचन इति धातोः। द्रढिम्नो दृढतरान् स्वेषु स्नेहाख्यपाशान् छित्वा भ्रात्रा विदुरेण सम्यग्दर्शित उभयविधो वैदिकलौकिकाख्योऽध्वा मार्गो यस्य स तथोक्तो राजा धृतराष्ट्रो निश्चक्राम निर्गतो बभूवेत्येकान्वयः। गृहादिति शेषः॥ २८॥

सुबलस्य पुत्री गान्धारी पतिशुश्रूषैव व्रतं यस्याः सा तथोक्ता। प्रयान्त पतिमनुजगामेत्यन्वयः। चकारात् कुन्ती च गत्वा कुत्रावसदिति तत्राऽऽह — **हिमालयमिति**। कायवाङ्मनोभिर्न्यस्तः परित्यक्तो भूतद्रोहलक्षणो दण्डो यैः

तेषां प्रकर्षेण हर्षं जनयतीति न्यस्तदण्डप्रहर्षम्। अत एव मनस्विनां वशीकृतेन्द्रियग्रामाणां सन्न्यासिनां सम्यग्विहारं क्रीडास्थानं हिमालयं हिमवन्तं पर्वतं गत्वा तत्र बदरिकाश्रमे अवसदित्यन्वयः ॥ २९ ॥

इदानीं युधिष्ठिरस्य मनसि तपस्तपतो धृतराष्ट्रस्य प्रायेण मृतिरभूत् तथाविधशकुनप्रतिभासादित्यभिप्रेत्याह — **अजातशत्रुरिति**। मित्रः सूर्यः तद्विषयं कर्म मैत्रं सन्ध्योपासनादि तत्कृतं येन स कृतमैत्रः। गार्हपत्याद्यग्निषु हुतं येन स हुताग्निः। तिलगोवस्त्ररुक्मैः विप्रांस्तर्पयित्वा रुक्मं सुवर्णं च दत्वा पित्राद्युपवेशनस्थले पित्रादिगुरुवन्दनाय पितृगृहान् प्रविष्टोऽजातशत्रुस्तदायतनं नमस्कुर्वन् पितरौ कुन्तीधृतराष्ट्रौ सौबलीं गान्धारीं मनसा जीवन्तौ नापश्यत्; सम्प्रति ते मृता इति तस्य मनसि तथा प्रत्यभादित्यन्वयः पितरावित्यत्र पितृशब्देन विदुरोऽत्र नाभिप्रेतः, तस्य शूद्रजातित्वेन अवन्द्यत्वात्। धृतराष्ट्रादिमृतेः पूर्वं युधिष्ठिरेणैकीभूतत्वाच्च न चापश्यत् इत्यस्यानुक्त्वा धृतराष्ट्रगमनार्थाङ्गीकारे भारतादौ युधिष्ठिराद्यनुज्ञया गत्युक्तेः तद्विरोधो दुर्वारः ॥ ३० ॥

मनसि प्रतीतपितृस्वर्याणस्य युधिष्ठिरस्य तन्मरणानन्तरं तदवसरे तत्र आगत्य आसीनं सञ्जयं प्रति पारलौकिकगतिप्रश्नमाह — **तत्रेति**। गवल्गणस्यापत्यं[3] गावल्गणिः,[4] तस्य सम्बुद्धिः हे गावल्गणे![5] नस्तातः क्व कं लोकं प्रति गतः? कथम्भूतः? नेत्रयोरिति तृतीयार्थे षष्ठी, नेत्राभ्यां हीनो नेत्रयोर्योगेन वा। वृद्धः जरया च ग्रस्तोऽम्बा कुन्ती वा, हतपुत्रत्वादार्ता गान्धारी च परत्र लोकं कम्प्रति गते? पितृव्यो धृतराष्ट्रः क्व गत इति पुनः प्रश्नस्तात्पर्यातिशयात्॥ ३१ ॥

धृतराष्ट्रस्य मरणकाले स्वस्मिन् प्रियाप्रियविवेकं तस्य मरणप्रकारं च पृच्छति — **अपीति**। अकृतप्रज्ञे अशिक्षितबुद्धौ मयि स्वभार्यया सह शमलं पापमपराधमाशंसमानो हतबन्धुः दुःखितस्सन् गङ्गायामपतदपि? बन्धून्[6] मारयित्वा स्वयं राज्यमादाय मां निष्कासितवानिति शमलबुद्धिर्नाभवत् किम्? तद्दुःखातिशयादेव गङ्गायां पतित्वा मृतो नन्विति भावः ॥ ३२ ॥

---

1. B,K,M °क्ष्य° 2 K,M add विविक्तगतिः 3 K,M °द्° 4 K,M °द्° 5 K,M °द्° 6 B,K,M add सर्वान्

**रा॰ कृ॰** विरक्तो मुक्तबन्धनः, अत एव पुत्रदारादिषु आसक्तिरहितः अविज्ञातगतिः अज्ञातप्रयाणः यः इह गतस्वार्थं नष्टपुरुषार्थं इमं देहं जह्यात् त्यजेत्, स वै स एव धीरः उदाहृतः कथितः ॥ २५ ॥

यः स्वकात् स्वत एव परतो वा अन्यस्माद्वा परोपदेशादिति यावत्। इहास्मिन् संसारे जातनिर्वेदस्सं-जातवैराग्यः आत्मवान् विदितात्मपरमात्मतत्त्वः हरिं विष्णुं हृदि मनसि कृत्वा निधाय गेहात् गृहात् प्रव्रजेत् निर्गच्छेत् स नरोत्तमः नरश्रेष्ठः भवतीति शेषः ॥ २६ ॥

अतः भवान् स्वैः ज्ञातिभिरज्ञातगतिः अज्ञातगमनः अथानन्तरं, शीघ्रमेवेति यावत्। उदीचीं उत्तरां दिशं यातु गच्छतु। इतोऽर्वाक् इतोऽनन्तरं कालः प्रायशः पुंसां गुणविकर्षणः गुणानां विवेकादीनां विकर्षणः विनाशकः भविष्यतीति शेषः ॥ २७ ॥

एवमित्थमनुजेन विदुरेण बोधितः प्रबोधितः आजमीढः अजमीढवंशसञ्जातः प्रज्ञाचक्षुः बहिरन्धोऽपि तदा अन्तर्यामिणा भगवता सम्पादितप्रज्ञालोकनः राजा धृतराष्ट्रः स्वेषु स्वकीयेषु धनदारादिषु द्रढिम्नः अतिदृढतरान् स्नेहपाशान् अनुरागबन्धान् छित्त्वा भ्रातृसन्दर्शिताध्वा भ्रात्रा विदुरेण सन्दर्शितः अध्वा निवृत्तिमार्गः यस्य तथाभूतस्सन् निश्चक्राम गृहात् निर्जगाम ॥ २८ ॥

पतिव्रता साध्वी सुशीला सुबलस्य पुत्री गान्धारी न्यस्तदण्डप्रहर्षं न्यस्तदण्डानां त्यक्तभूतद्रोहाणां सर्वभूतसुहृदामिति भावः। प्रहर्षं अधिकहर्षदायकं हिमालयं प्रयान्तं पतिमनुजगाम अनुससार। किञ्च मनस्विनां शूराणां सत्संप्रहार इव युद्धे तीव्रः प्रहार इव तस्याः धृतराष्ट्रानुगमः न दुःखावहः, किन्तु हर्षहेतुरेवाभवदिति शेषः।

अत्र गान्धार्या साधकस्यावश्यकं वैराग्यं मृत्युतिरस्कारिधैर्यं च सूचिते ॥ २९ ॥

कृतमैत्रः विहितसन्ध्यावन्दनः हुताग्निः अजातशत्रुः युधिष्ठिरः तिलगो (वस्त्र) भूमिरुक्मैः तिलैः धेनुभिः भूम्या सुवर्णैश्च सत्कृत्येति शेषः। विप्रान् ब्राह्मणान् नत्वा नमस्कृत्य गुरुवन्दनाय गुरूणां पूज्यानां धृतराष्ट्रादानां वन्दनाय नमस्काराय गृहं धृतराष्ट्रगृहं प्रविष्टः, पितरौ धृतराष्ट्रविदुरौ, सौबलीं गान्धारीं च नापश्यत् ॥ ३० ॥

अनन्तरं धर्मजः उद्विग्नमनाः भीतचित्तः तत्र धृतराष्ट्रगृहे आसीनमुपविष्टं सञ्जयं पप्रच्छ — हे गावल्गणे! गवल्गणपुत्र! सञ्जय! नेत्रयोः नेत्राभ्यां हीनः रहितः वृद्धश्च नस्तातः क्व? कुत्र गतः? हतपुत्रा अत एव आर्ता दुःखिता अम्बा वा माता गान्धारी वा क्व गता? सुहृत्पितृव्यः पितृभ्राता विदुरश्च क्व गतः? हतबन्धुः मया निहतपुत्रः अत एव भार्यया सहेति शेषः। दुःखितः सः धृतराष्ट्रः अकृतप्रज्ञे विवेकहीने मयि शमलमपराधं मम पुत्रान् अयं हतवान् मामपि हनिष्यतीत्याकारकमाशंसमानः गङ्गायाम् अप्यपतत्?, अपतत् किम्? ॥ ३१, ३२ ॥

**पितर्युपरते पाण्डौ सर्वान्नः सुहृदः शिशून्।**
**अरक्षतां व्यसनतः पितृव्यौ क्व गतावितः ॥ ३३ ॥**

**सूत उवाच**

**कृपया स्नेहवैक्लव्यात् सूतो विरहकर्शितः।**
**आत्मेश्वरमचक्षाणो न प्रत्याहातिपीडितः ॥ ३४ ॥**

**विमृज्याश्रूणि पाणिभ्यां विष्टभ्यात्मानमात्मना।**
**अजातशत्रुं प्रत्यूचे प्रभोः पादावनुस्मरन् ॥ ३५ ॥**

**सञ्जय उवाच**

**नाहं वेद व्यवसितं पित्रोर्वः कुलनन्दन!**
**गान्धार्या वा महाबाहो मुषितोऽस्मि महात्मभिः ॥ ३६ ॥**

*II अथाऽऽजगाम भगवान् नारदस्सह तुम्बुरुः[9] ।
प्रत्युत्थायाभिवाद्याऽऽह सानुजोऽभ्यर्चयन्निव ॥ ३७ ॥

युधिष्ठिर उवाच

*III नाहं वेद गतिं पित्रोर्भगवन् क्व गं[10]तावितः ।
अम्बा वा हतपुत्राऽऽर्ता क्व गता चं[11] तपस्विनी ॥ ३८ ॥

*IV दिष्ट्या नो भगवान् दृष्टो मग्नानां व्यसनार्णवे ।
कर्णधार इवापारे भं[12]गवान् पारदर्शकंः[13] ॥

*V इत्थं पृष्टस्सदेवर्षिः धर्मपुत्रेण भार्गव ।

सूत उवाच

अं[14]थाऽऽबभाषे भगवान्नारदो मुनिसत्तमः ॥ ३९ ॥

नारद उवाच

मा कञ्चन शुचो राजन् यदीश्वरवशं जगत् ।
*VI लोकास्सपाला यस्येमे वहन्ति बलिमीशितुः ॥
*VII स संयुनक्ति भूतानि स एव वियुनक्ति च ॥ ४० ॥

---

1. B °र्षिं° 2. H,V °ज्य पाणिनाऽश्रूणि 3. H,V भर्तुः 4 H,V अहं व्यवसितं राजन् ! ; K,M अहं च व्यंसितो राजन् 5 B वेद्मि
6. H,V °रु° 7. H,V न वेद्मि साध्व्या गान्धार्या; K,M न वेद साध्व्या गान्धार्या 8 W °श्च

*I AF,GF अहं ध्यवसितं रात्रौ पित्रोस्ते कुलनन्दन !
न वेद साध्व्या गान्धार्या मुषितोऽस्मि महात्मभिः ॥

9. B,I,W °न्मुनिम् *II Instead of this verse, the following two verses are seen in K & M

सूत उवाच

एतस्मिन्नन्तरे विप्रा[Δ1] नारदः प्रत्यदृश्यत ।
वीणां त्रितन्त्रीं ध्वनयन् भगवान् सहतुम्बुरुः ॥ १ ॥

रा[Δ2]ज्ञाऽऽदरोपनीतार्घ्यं प्रत्युत्थाँ[Δ3]नाभिवन्दितम् ।
परमासन आसीनं कौ[Δ4]रवेन्द्रोऽभ्यभाषत ॥ २ ॥

Δ1 AF,GF विप्र! Δ2 AF,GF राजा नत्वोपनीतार्घ्यः Δ3 AF GF °त्थाया° Δ4 AF GF पौ°

Commentary of these two verses by Vijayadhwaja Teertha runs as follows —

एतस्मिन्नन्तरे युधिष्ठिरसञ्जयसंवादमध्ये त्रितन्त्रीं तन्त्रीत्रयमेलनोपेतां वीणां ध्वनयन् वादयन् तुम्बुरुणा सह वर्तमानः भगवान् हरेः षड्गुणवेत्ता पूज्यो वा ॥ १ ॥

राज्ञाऽऽदरेण उपनीतं दत्तं अर्घ्यं यस्मै स तथा तं प्रत्युत्थानं कृत्वाऽभिवन्दितं परमासने सिंहासनसमानपीठे आसीनमुपविष्टं नारदं कौरवेन्द्रो युधिष्ठरः अभ्यभाषत इत्यन्वयः ॥ २ ॥

*III AF,GF नाहं वेद गतिं पित्रोर्भगवन्! क्व गताविति।
कर्णधार इवापारे सीदतां पारदर्शकः॥

10 H,V गतः पिता 11. W सा

*IV H,V & W add this line and it is commented by श्रीवीरराघव

12 H,V पाहि मां; K,M सीदतां 13 H,K,M,V °नः।

*V W adds this line and it is commented by श्रीवीरराघव

14 W तमाब°, M omits this line and it is not commented by श्रीविजयध्वजतीर्थ

*VI K & M omit this line and it is not commmented by श्रीविजयध्वजतीर्थ

*VII This line (with in brackets in N) is not commented by श्रीवीरराघव.

**श्रीध॰ पितरीति**। यावरक्षतां तौ। इतः स्थानात्॥ ३३॥

**कृपयेति**। कृपया स्नेहवैक्लव्याच्चातिपीडितः आत्मेश्वरं धृतराष्ट्रमपश्यन् विरहकर्शितश्च सूतः सञ्जयः न प्रत्युत्तरमाह॥ ३४॥

**विमृज्य** इति। आत्मना बुद्ध्या आत्मानं मनः विष्टभ्य धैर्ययुक्तं कृत्वा प्रभोः धृतराष्ट्रस्य॥ ३५॥

**नाहम्** इति। गान्धार्याश्च व्यवसितं निश्चयम्[1]। यतः मुषितो वञ्चितोऽस्मीति॥ ३६॥

**अथ** इति। एवं कञ्चित्कालं शोचति तस्मिन् अथ नारद आजगाम। अत्रास्ति[2] क्वचित्पुस्तके पाठान्तरं, तदुल्लङ्घ्य यथासम्प्रदायं व्याख्यायते। शोकवेगादभ्यर्चयन्निवाह राजा नत्वाऽभ्यर्च्येत्यर्थः[3]। "शोकाक्रान्तः क्रुधाविष्टः श्रद्धया रहितः पुमान्। गुरुदेवद्विजातीनां पूजनं न समाचरेत्॥" इति श्रुतेः॥ ३७॥

**नाहम्** इति। नाहं वेद न वेद्मि। तपस्विनी दुःखयुक्ता॥ ३८॥

**कर्णधार** इति। अपारे शोकार्णवे भगवांस्त्वमेव कर्णधारः नाविक इव पारदर्शकः। अतो ब्रूहीति शेषः॥ ३९॥

आदावेव यथावृत्तकथने शोकेन मूर्च्छितः पतेदिति प्रथमं तावच्छोकमुपशमयति[4] — **मेति**। कञ्चन मा शुचो मा शोचः। न केवलं तानेव। यद्यस्मादीश्वराधीनं जगत् तदेवाऽऽह लोका इति। स एव भूतानि संयुनक्ति संयोजयति वियुनक्ति वियोजयति च॥ ४०॥

---

1 A निश्चितम् 2 H,V 'एतस्मिन्नन्तरे' इत्यादिपाठान्तरं कतिषुचित् पुस्तकेषु दृश्यते। मया यथासम्प्रदायमेव व्याख्यायते 3 A,B नत्वाऽभ्यर्चयत्॥ ३७॥ 4 B °मपनयति

**वीर॰** वात्सल्ययुक्तत्वात् सापराधेष्वपि दोषमनवेक्ष्य अपकारमप्युपकारत्वेन चिन्तयन् पृच्छति। पितरि पाण्डौ उपरते मृते सति सर्वान् नः अस्मान् सुहृदः पुत्रान् शिशून् व्यसनतः आपद्भ्यः यावरक्षतां तौ पितृव्यौ पितृभ्रातरौ धृतराष्ट्रविदुरावितः क्व गतौ? छत्रिन्यायेन विदुराभिप्रायाद्वा व्यसनतोऽरक्षतामित्युक्तम्॥ ३३॥

एवमुक्तस्सूतः सञ्जयः आत्मनः स्वस्य ईश्वरं प्रभुं धृतराष्ट्रमचक्षाणः अपश्यन्[1] अत एव अतीव पीडितो दुःखितः तद्विरहेण कर्शितः क्षणादेव कृशीभूतस्सन् कृपया स्नेहवैकृतवैक्लव्यात् अधाष्टर्यात् च तावन्न प्रत्याह प्रत्युत्तरं वक्तुं न प्रबभूवेत्यर्थः ॥ ३४ ॥

ततश्शनैः पाणिभ्यामश्रूणि विमृज्य आत्मना विवेकात्मिकया धिया आत्मानं सङ्कल्पविकल्पात्मकं मनो विष्टभ्य प्रतिबद्ध्य स्थिरीकृत्य प्रभोः धृतराष्ट्रस्य पादावनुस्मरन्नजातशत्रुं प्रत्यूचे ॥ ३५ ॥

उक्तिमेवाऽऽह — **नेति**। हे कुरुनन्दन! वो युष्माकं पित्रोः विदुरधृतराष्ट्रयोः गान्धार्याश्च व्यवसितं निश्चितं नाहं वेद्मि। हे! महाबाहो! त्वमिव अहमपि महात्मभिः तैः मुषितोऽस्मि वञ्चितोऽस्मि ॥ ३६ ॥

अथ तस्मिन्नेव समये तुम्बुरुणा सहितो भगवान्नारदः तत्राऽऽजगाम। तमवलोक्य सानुजो युधिष्ठिरः प्रत्युत्थायाभिवाद्य अभ्यर्चयन्नेवाऽऽह ॥ ३७ ॥

उक्तिमेवाऽऽह — **नाहमिति** द्वाभ्याम्। भगवन्! पित्रोर्गतिं नाहं वेद अहं न जाने। तावितः क्व गतौ? तथा हतपुत्रा आर्ता च तपस्विनी पतिव्रता च अम्बा क्व गता? ॥ ३८ ॥

दिष्ट्येत्यानन्दद्योतकमव्ययम्। चादेः आकृतिगणत्वात् निपातसंज्ञायां "स्वरादिनिपातमव्ययम्" (अष्टा. 1-1-37) इत्यव्ययसंज्ञा। व्यसनार्णवे पितृविश्लेषजदुःखार्णवे मग्नानामस्माकम्। कर्तरि षष्ठी, नः अस्माभिः भगवांम्त्वं दिष्ट्या दृष्टः। त्वद्दर्शनेन व्यसनमपगतमेव, आनन्दश्च भविष्यतीति भावः। कथं दृष्टः? अपारे दुष्प्रापतीरे समुद्रे तत्तारयिता कर्णधार इव नाविक इव नस्त्वं[2] पित्रोर्गतिं ब्रूहि। न वेद्मीति मावोच इत्यभिप्रायेण तं विशिनष्टि। पारदर्शनः सर्वस्यापि अवधिदर्शनः सर्वज्ञ इति यावत्। हे भार्गव! इत्थं धर्मपुत्रेण युधिष्ठिरेण पृष्टः सर्वज्ञः भगवान् मुनिश्रेष्ठो नारदः तमाबभाषे ॥ ३९ ॥

भाषणमेवाऽऽह — **मा कञ्चनेति** विंशत्या। यत्पृष्टं पित्रोर्गतिं ब्रूहि त्वमिति तस्योत्तरं विवक्षुः तावत्तत्तज्जीवकर्मानुगुणसुखदुःखादिफलप्रदानप्रवृत्तेश्वरायत्तत्वात् कृत्स्नस्य जगतः तदन्तर्गतस्त्वं कर्मायत्तत्वादिह[3] तदनुबन्ध्यादि संश्लेषविश्लेषनिमित्तं शोकं माकुर्विति वैराग्योत्पादनाय आह चतुर्भिः। हे राजन्! कञ्चन देहं तदनुबन्धिनं वा कञ्चिदपि मा शुचः शोकं मा कार्षीः। कुतः? यत् यस्मात् इदं जगत् ईश्वरवशं कर्मानुगुणफलदानप्रवृत्तेश्वरायत्तं तन्नियाम्यमित्यर्थः। कोऽसावीश्वर इत्यत्राऽऽह — सपाला इन्द्रादिलोकपालैः सहिताः लोकाः विरिञ्चिप्रभृत्यकिञ्चनपर्यन्ता इमे जनाः यस्य ईशितुः बलिं पूजां वहन्ति किङ्करा भवन्तीत्यर्थः ॥ ४० ॥

---

1. A.B अपश्यमानः 2 W अत° 3. W कर्मायत्तदेह°

**विज०** स्वस्य अकृतप्रज्ञत्वमुपपादयति — **पितरीति**। नः अस्माकं पितरि पाण्डौ उपरते स्वर्गं गते सति गान्धारीधृतराष्ट्रौ शिशून् सर्वान् व्यसनतः अरक्षताम्। सुहृत्त्वं शिशुत्वं च रक्षणीयत्वे हेतुः। तौ पितृव्यौ

**गान्धारी**धृतराष्ट्रौ मृत्वा इतः अस्मात् लोकात् परत्र कं लोकं गतावित्यन्वयः। तयोरनवरतशुश्रूषणादेव कृतप्रज्ञता, तदभावात् अकृतप्रज्ञत्वमिति भावः ॥ ३३ ॥

अतिपीडितो दुःखेनेति शेषः। आत्मनः स्वस्य ईश्वरं स्वामिनं धृतराष्ट्रमचक्षाणो मृतत्वादेव अपश्यन् अत **एव** विरहेण वियोगेन कर्शितः कृशतरः कुतः स्नेहपारवश्यात् दाक्षिण्याच्च सञ्जयो युधिष्ठिरचोद्योत्तरं वक्तुं, नाशकत् **इत्यन्वयः** ॥ ३४ ॥

आत्मना मनसा आत्मानं विष्टभ्य संस्थाप्य प्रभोः धृतराष्ट्रस्य ॥ ३५ ॥

प्रजा रञ्जयित्वा कुलं नन्दयति न तु अन्यथा इत्यतः पदद्वयं प्रायोजि। न केवलं त्वमेव व्यंसितोऽहं **वियो**जित इति चार्थः, पित्रोः कुन्तीधृतराष्ट्रयोः परलोकगतिमिति शेषः। मुषितो वञ्चितोऽस्मि ॥ ३६ ॥

हे भगवन्! मृतयोः पित्रोः परलोकगतिं न वेद तां भवन्तं पृच्छामि तौ मृत्वा इतः कं लोकं प्रति **गतावि**ति अपारे संसारे सीदतां बिभ्यतां कर्णधारो नाविक इव तस्मात् त्वं दुःखार्णवे मग्नानां पारं परं तीरं **दुःख**शमनोपायं दर्शयतीति पारदर्शनः ॥ ३७, ३८ ॥

धृतराष्ट्रादिषु कञ्चन मा शुचः शोकं मा कार्षीः। कुतः जगदीश्वरवशमिति यद्यस्मात् स एवेश्वरो भूतानि **संयु**नक्ति स्वकर्मानुसारेण संयोजयति, स एव स्वकर्मावसाने वियुनक्ति वियोजयति। एतस्मात् अस्ववशत्वान्मा शुच इति **भाव**ः ॥ ३९, ४० ॥

---

1 A.B omit कृशतर: . . . चोद्योत्तरं

**रा० कृ०** पितरि पाण्डौ उपरते मृते सति सुहृदः शिशून् सर्वान् नः अस्मान् व्यसनतः आपदः यौ **अर**क्षतां तौ पितृव्यौ पितृभ्रातरौ धृतराष्ट्रविदुरौ इतो देशात् क्व गतौ? ॥ ३३ ॥

सूतस्सञ्जयः आत्मेश्वरं स्वप्रभुं धृतराष्ट्रं अचक्षाणः अवीक्षमाणः विरहकर्शितस्सन् कृपया स्नेहवैक्लव्यात् **अति**पीडितश्च सन् न प्रत्याह प्रत्युत्तरं न दत्तवान् ॥ ३४ ॥

ततस्स सञ्जयः पाणिभ्यामश्रूणि विमृज्य आत्मना विवेकात्मिकया **बुद्ध्या** आत्मानं मनः विष्टभ्य स्थिरीकृत्य **प्र**भोः धृतराष्ट्रस्य पादावनुस्मरन् अजातशत्रुं धर्मराजं प्रत्यूचे प्रत्युक्तवान् ॥ ३५ ॥

हे कुलनन्दन! कुलपालक! महाबाहो! वः युष्माकं पित्रोः धृतराष्ट्रविदुरयोः गान्धार्या वा व्यवसितं निश्चितमहं न वेद न जानामि। त्वमिव अहमपि तैर्महात्मभिः मुषितोऽस्मि वञ्चितोऽस्मि ॥ ३६ ॥

अथ अनन्तरं सहतुम्बुरुः भगवान् नारदः आजगाम तत्रागतवान्। ततश्च सानुजः **धर्मज** इति **शेषः**। **प्र**त्युत्थाय नारदमिति शेषः। अभिवाद्याभ्यर्चयन्निव आह — वक्ष्यमाणप्रकारेणोक्तवान ॥ ३७ ॥

हे भगवन्! पित्रोः धृतराष्ट्रविदुरयोः गतिं नाहं वेद, इतः स्थानात् क्व गतौ ताविति शेषः। हतपुत्रा आर्ता तपस्विनी दयनीया अम्बा वा क्व गता? ॥ ३८ ॥

अपारे दुःखसागरे इति शेषः। भगवान् त्वमेव कर्णधार इव नाविक इव पारदर्शकोऽस्माकं गतिप्रदर्शकोऽसि। अथ धर्मजप्रश्नानन्तरं मुनिसत्तमः भगवान्नारदः आबभाषे प्रत्युत्तरं ददौ॥ ३९ ॥

हे राजन्! यत् यस्मात् जगत् ईश्वरवशं ईश्वराधीनं वर्तत इति शेषः। तस्मात् कञ्चन कमपि जनमुद्दिश्य मा शुचः शोकं मा कार्षीः। यस्य ईशितुः परमेश्वरस्य बलिं पूजां सपालाः इन्द्रादिलोकपालसहिताः इमे लोकाः त्रैलोक्यस्था जनाः वहन्ति पालयन्ति। स ईशिता भूतानि प्राणिनः संयुनक्ति संयोजयति, स एव वियुनक्ति च वियोजयति च॥ ४० ॥

**यथा गावो नसि प्रोतास्तन्त्यां[1] बद्धाः[2] स्वदामभिः।**
**वाक्तन्त्यां[3] नामभिर्बद्धा वहन्ति बलिमीशितुः॥ ४१ ॥**

**यथा क्रीडोपस्कराणां संयोगविगमाविह।**
**इच्छया क्रीडितुस्स्यातां तथैवेशेच्छया नृणाम्॥ ४२ ॥**

**यन्मन्यसे ध्रुवं लोकमध्रुवं वा[4] न चोभयम्।**
**सर्वथा[5] न हि शोच्यास्ते स्नेहादन्यत्र मोहजात्॥ ४३ ॥**

**तस्माज्जह्यङ्ग! वैक्लव्यमज्ञानकृतमात्मनः।**
**कथं त्वनाथाः[6] कृपणा वर्तेरंस्ते[7] च मां विना॥ ४४ ॥**

**कालकर्मगुणाधीनो देहोऽयं[8] पाञ्चभौतिकः।**
**कथमन्यांस्तु गोपायेत् सर्पग्रस्तो यथापरम्॥ ४५ ॥**

**अहस्तानि सहस्तानामपदानि चतुष्पदाम्।**
**फल्गूनि[9] तत्र महतां जीवो जीवस्य जीवनम्॥ ४६ ॥**

1. H,V,W °न्त्र्यां 2 B,I,W बद्धाश्च ; H,V बद्धोप° 3. H,V,W °न्त्र्यां 4 K,M चाथ वोभयम् 5 H,V सर्वथाऽपि न 6 B ह्य°
7. H,V वर्तेरन् बत मामृते ; B,K,M वर्तेरन् वनमाश्रिताः ; W जीवेरन् बत मां विना 8. K,M °दो द्वि° 9. K,M अणूनि तात!

**श्रीध° यथेति।** गावो बलीवर्दा नसि नासिकायां प्रोतास्तन्त्र्यां[1] दीर्घतन्त्र्यां[2] दामभिः बद्धाः स्वामिनो बलिं वहन्ति यथा एवं वाक्तन्त्र्यां[3] कर्तव्याकर्तव्यविधायकवेदलक्षणायां नामभिः ब्राह्मणो[4] ब्रह्मचारीत्यादिवर्णाश्रमलक्षणैः बद्धाः परमेश्वरस्य बलिं तेन प्रेरितास्सर्वे[5] वहन्तीत्यर्थः॥ ४१ ॥

प्रवृत्तौ पारतन्त्र्यमुक्त्वा संयोगवियोगयोरप्याह[6] — **यथेति।** क्रीडोपस्कराणां क्रीडासाधनानाम्[7] ॥ ४२ ॥

ईश्वराधीनत्वात् न शोकः कार्य इत्युक्तम्। लोकतत्त्वे च विचार्यमाणे निर्विषयोऽयं शोक इत्याह — **यदिति**। यद्यदि लोकं जनं ध्रुवं जीवरूपेण अध्रुवं देहरूपेण न चेति[8] न ध्रुवं, नाप्यध्रुवम्। शुद्धब्रह्मरूपेण[9] अनिर्वचनीयत्वेन वा उभयं वा चिज्जडांशतः। सर्वथा चतुर्ष्वपि पक्षेषु ते पित्रादयो न शोच्याः। स्नेहादन्यत्र। स्नेह एव केवलं शोकहेतुः, स च अज्ञानमूल इत्यर्थः॥ ४३॥

**तस्मादिति**। तस्मान्मां विना कथं ते वर्तेरन् इत्यात्मनः मनसः वैक्लब्यं व्याकुलतां त्यज॥ ४४॥

तत्र त्वद्देहतः तेषां वृत्तिरित्येतत्तावत्[10] नास्तीत्याह — **कालेति**। कालो गुणक्षोभकः कर्म जन्मनिमित्तं गुणा उपादानं तदधीनः पाञ्चभौतिकोऽयं जडः तद्विभागे नाशवांश्च। सर्पग्रस्तः अजगरगिलितः यथा अन्यं मुमूर्षुं[11] न रक्षति तद्वत्॥ ४५॥

ईश्वरेण विहिता वृत्तिश्च सर्वतः सुलभैव इत्याह — **अहस्तानीति**। अहस्तानि पश्वादीनि अपदानि तृणादीनि। तत्र तेष्वहस्तादिष्वपि फल्गून्यल्पानि। एवं जीवः सर्वोऽपि जीवस्य सर्वस्य जीवनं जीविका। एतेनैव सर्वतः मृत्युग्रस्तत्वं[12] चोक्तम्॥ ४६॥

---

1 A,B °न्त्यां 2 A,B °न्त्यां 3 A,B °न्त्यां 4. H,V विप्रः 5 H,V प्रेरितां वह° 6. H,V °भा° 7. B adds (दारुरचितमेषादीनाम्) 8. B वेति 9. B ° स्वरूपत्वेन 10. A वृत्तिरेत° 11 A,B omit मुमूर्षुं 12. A,B °ग्रास°

**वीर॰** बलिवहनमेव सदृष्टान्तमुपपादयति — **यथेति**। तन्ती[1] तिरश्चीना महती रज्जुस्तत्र[2] बद्धाः क्षुद्ररज्जव उपदामानि यद्वा तन्ती[3] नासारज्जुः तत्सम्बद्धा आकर्षणपाशा दामानि। यथा गावः चतुष्पादः नसि रन्ध्रीकृतायां नासिकायां प्रोताः संयुक्तरज्जवः ततस्तन्त्यामुपदामभिः[4] बद्धाः द्विपदे किं कुर्वन्ति। तथा वाक्तन्त्यां[5] वेदाख्यतन्त्यां[6] नामभिः वर्णाश्रमविशेषान्वयात्मकनामभिः उपदामस्थानीयैः बद्धाः सपाला लोकाः ईशितुः ईशस्य बलिं वहन्ति॥ ४१॥

किं देहतदनुबन्ध्यादीन् नित्यान् मत्वा शोचसि, किं वाऽनित्यान्, अथवा उभयथा अपि? तथाऽपि न ते शोकविषया इति वक्तुं तावत् देहादिश्लेषविश्लेषौ क्रीडार्थं जगद्व्यापारे प्रवृत्तेश्वरस्येच्छया[7] तत्तत्कर्मानुगुण्येन सम्पद्येते इति सदृष्टान्तमाह। यथेह लोके कस्यचित् क्रीडितुः पुंस इच्छया क्रीडोपस्कराणां क्रीडासाधनानां संयोगवियोगावन्यथा च भवतः यथा क्रीडोपस्कराः क्रीडितुरिच्छया कदाचित् संश्लिष्य पुनस्तदिच्छयैव विश्लिष्टाश्च भवन्ति। तथा ईश्वरेच्छया नृणामपि संयोगवियोगौ स्याताम्॥ ४२॥

उक्तं शिरस्त्रयमनुवादपूर्वकं प्रतिक्षिपति। यदि लोकं ध्रुवं स्थिरं मन्यसे यद्वा अध्रुवं अथवा उभयं; तत्र तावत् तृतीयः कल्पोऽसम्भवादेव निरस्त इत्यभिप्रायेणाऽऽह — **न चोभयमिति**। न हि द्व्यात्मकं वस्तु दृष्टं श्रुतं वेत्यर्थः[8]। परस्परविरुद्धयोः ध्रुवत्वाध्रुवत्वयोः एकत्र समावेशोऽसम्भवनिरस्त इति भावः तदभ्युपगम्यापि तेन सह इतरच्छिरोद्वयं प्रतिक्षिपति, सर्वथेति ध्रुवत्वेऽध्रुवत्वे च उभयविधत्वे च ते देहादयः तत्त्वमेवेति न शोच्याः; तत्त्वादेव[9] न शोच्याः। न हि वस्तुतो[10] यावदात्मभाविधर्मः[11] केनाप्यपनेतुं शक्य इति भावः। एवं सति तच्छोकहेतुः केवलं

**देहात्मभ्रममूलकः** देहादिषु अनुराग एव इत्यभिप्रायेण **स्नेहादन्यत्र** मोहजादिति। मोहजात् देहात्मभ्रमजात् **स्नेहात्** **अन्यत्र** अन्यस्मिन् शोकमोहहेतुत्वं नास्तीति शेषः ॥ ४३ ॥

तस्मात् अङ्ग! हे राजन्! अज्ञानकृतं देहात्मभ्रमकृतं आत्मनः स्वस्य स्वमनसो वा वैक्लब्यं दैन्यं **जहि** अपनय। तदभिप्रेतं प्रश्नान्तरं सर्वज्ञत्वात् स्वयमेव आविष्कृत्य प्रतिवक्ति — **कथमिति** सार्धद्वयेन। तत्र कथमित्यर्धेन प्रश्नाविष्कारः, ततः श्लोकद्वयेन तस्य प्रतिवचनमिति विवेकः। मां विना अनाथा रक्षितृहीना, अत एव दीनास्ते कथं वर्तेरन् जीवेरन्निति शब्दोऽत्र अध्याहर्तव्यः। कथं जीवेरन्निति पृच्छसि चेदित्यर्थः ॥ ४४ ॥

तावत् तत्तुल्ययोगक्षेमे स्वस्मिन् तद्रक्षकत्वाभिमानं त्यजेत्यभिप्रायेणाऽऽह — **कालेति**। कर्मादृष्टं, गुणाः सत्त्वादयः, पृथिव्यादिपञ्चभूतारब्धोऽयं देहः कालाद्यधीनः। अयमित्यनेन त्वद्देहोऽप्येवंविध एव इति सूचितम्। स्वयमेवंविधदेहः कथमन्यान् गोपायेत् रक्षेत्? न रक्षेदेवेत्यर्थः। यथा स्वयं सर्पग्रस्तः अन्यान् तद्ग्रस्तान् न गोपायति तद्वत् ॥ ४५ ॥

अस्त्वेवमथाऽपि जीविकावति गृहे स्थितानामस्माकं जीवनं सुशकम्। कथमितः गतानां तेषां **जीवनं** स्यादित्यत आह — **अहस्तानीति**। अहस्तानि भूतानि सहस्तानां तेषां जीवनं यथालाभं यथायोग्यं औषधिफलमूल-पशुमृगादीनि जीवनमित्यर्थः। तथा हस्तरहितानामपि चतुष्पदां अपदान्यविद्यमानपादादिभूतानि[12] जीवनं, तत्रापि अपदेष्वपि महतामजगरादीनां भूतानां फल्गूनि क्षुद्राणि भूतानि जीवनम्। किं बहुना जीवस्य सजीवस्य भूतस्य जीव एव जीवनम्। जीवनशब्दः भक्ष्यपरः ॥ ४६ ॥

---

1. W °न्त्री 2. W °स्तद्° 3. W °न्त्री नाम ना° 4 W सन्तस्तन्त्र्या° 5 W °न्त्र्यां 6 W °न्त्र्यां 7. W °त्तस्येश्व° 8 W चे° 9 A,B omit तत्त्वादेव न शोच्याः 10 A,B °नो 11. W °वी 12 W °नि

**विज॰** ईश्वरजीवस्वातन्त्र्यपारतन्त्र्ये सोदाहरणं दर्शयति — **यथेति**। यथा गावः बलीवर्दाः नसि नासिकायां त्रिवृत्कृततन्तुदामभिः प्रोताः स्यूताः[1] नासिकाच्छिद्रस्यूतह्रस्वदामभिः आधारभूतायां दीर्घायां तन्त्यां बद्धाः ईशितुः स्वामिनः व्रीह्यादिगोणी[2]र्वहन्ति तथा ब्राह्मणक्षत्रियवैश्यशूद्रब्रह्मचारिगृहस्थवानप्रस्थयतय इति नामात्मकदामभिः वाक्तन्त्यां विधिनिषेधात्मकवेदलक्षणायां बद्धाः स्ववर्णाश्रमविहितकर्मभिः ईश्वरस्य बलिं यज्ञादिलक्षणपूजां वहन्ति कुर्वन्ति। तस्मात् स एव स्वतन्त्रः। जीवास्तदधीना इति शोकपरिहाराय स ईशः स्वविहितकर्मणा पूज्य इति भावः ॥ ४१ ॥

वेदस्यानेकार्थत्वेन तात्पर्यस्य दुर्ज्ञेयत्वात् धौरेयाणां च गोण्यादि[3]पातनेन स्वामिकार्यविज्ञानदर्शनात् विषमोऽयमुप-न्यास इत्यतो निदर्शनान्तरमाह — **यथेति**। यथा क्रीडोपस्करणां लीलासाधनानां संयोगविगमौ क्रीडितुः पुरुषस्येच्छया

तथैव ईशेच्छया पितृपुत्रादिरूपाणां नृणां मिथः संयोगविगमौ स्यातामित्यन्वयः। अनेन वेदस्य मुख्यार्थः श्रीनारायण एवेति निरणायि। तस्मात् पराधीनत्वात् न शोकेन प्रयोजनं तवेति भावः॥४२॥

"यस्तर्केणानुसन्धत्ते सधर्मं वेद नेतरः" इति स्मृतेः उक्तार्थनिर्णये केयं युक्तिरिति तत्राऽऽह — यन्मिति। तत् यदि लोकं शरीरं ध्रुवं मन्यसे अध्रुवमनित्यं वाऽथवा उभयं नित्यामित्यं, मनुषे इति विकल्प्य परिहरति सर्वथेति। सर्वप्रकारेण ते पितरः न शोच्याः। तथा हि— नित्यत्वे नाशाभावात्तस्य चादर्शनात् अनित्यमिति वक्तव्यम्। तस्यापरिहार्यत्वात्तृतीयोऽनुपपन्नः व्याहतत्वात्। तर्हि शोके किं कारणमिति तत्राऽऽह — स्नेहादिति। अहं, मम इति मोहः बुद्धिभ्रमः तस्मात् जातस्नेहादन्यत्र ऋते शोककारणं नास्ति, तस्मात् भ्रमजन्यस्नेह एव तस्य हेतुरिति भावः॥४३॥

ननु "यस्य देवे परा भक्तिः यथा देवे तथा गुरौ" (श्वेता. उ. 6-23) इति श्रुतेः गुरुविषयस्नेहलक्षणभक्तेः पुरुषार्थहेतुत्वेनोपयोगात् कथं तस्य मोहजन्यत्वमित्याशङ्क्य तस्य वैलक्षण्यात् मम तत्पोषणकर्तृत्वेन मन्नाथत्वात् मदृते जीवनमेव नास्ति तेषां ईशरक्ष्यत्वादिज्ञानाभावादित्यात्मनि यथाऽभिमाननिमित्तकातर्यं त्वया त्यक्तव्यमित्याह — तस्मादिति। आत्मनः परमात्मनः अज्ञानेन जातं वैक्लव्यं जहि त्यजेत्यन्वयः। परमात्मनः स्वातन्त्र्यपरामर्शेनेति शेषः॥४४॥

किञ्च तवायं देहः स्वाधीनः पराधीनो वा, स्वाधीनत्वे भोगयोग्यदुःखनिवारणाक्षमता कथम्? न हि कश्चिद्दुःखं मे स्यात् इत्याकाङ्क्षति विचक्षणः। तस्मात् पराधीन इति च वक्तव्यम्। तथा च तस्य पररक्षणसामर्थ्यं न घटत इत्याह — कालेति। कालः पक्षमासादिलक्षणः कर्मफलपाचकं पुण्यपापलक्षणमदृष्टं, गुणाः सत्त्वादयः, निमित्तोपादानकारणजन्यत्वेन कालाद्यधीनः सजीवोऽयं देहः पञ्चभिर्भूतैरारब्धः स्वव्यतिरिक्तान् कथं गोपायेत् रक्षेत्? तत्र दृष्टान्तः सर्पग्रस्तः मण्डूकः सर्पग्रस्तं परं रक्षितुं न समर्थः तथेति। तुशब्देन अनुभवसिद्धमेवेदमिति द्योतयति, तस्मादहं पित्रादिरक्षाकर्तेति अज्ञानं त्यजेति भावः॥४५॥

ननु भगवन्! सत्यमेतत्; तथाऽपि वृद्धानामन्धानां च अन्नादिदौस्थ्यात् तज्जीवने मम सन्देह इति चेत् तत्राऽऽह — अहस्तानीति। हे तात! वत्स! अहस्तानि शशपारावतपक्षिप्रभृतीनि सत्त्वानि, सहस्तानां मनुष्याणां जीवनं देहधारणसाधनं द्विचतुष्पदां च अन्नं तृणादयः तत्र द्विपत्स्वपि अणूनि मनुष्यादीनि महतां राक्षसादीनां जीवनमित्यनुवर्तते। एवं जीवस्य जीवनं विधात्रा विहितमतो न तान् प्रति चिन्ता कर्तव्येत्यर्थः॥४६॥

---

1. K,M °ताः 2. K,M °णीं व° 3. K,M गौ°

रा॰ कृ॰ नसि प्रोताः संयुक्तरज्जवः गावः बलीवर्दाः तन्त्यां त्रिप्रश्नीनायां महत्यां स्वदामभिः स्वप्रग्रहैः बद्धास्सन्तः यथा स्वामिनः भारं वहन्ति तथा वाक्तन्त्यां कर्तव्याकर्तव्यनिर्देशकश्रुतिलक्षणायां नामभिः ब्राह्मणब्रह्मचर्यादिरूपैः बद्धाः जीवाः ईशितुः परमेश्वरस्य बलिमाज्ञारूपां पूजां वहन्ति पालयन्ति॥४१॥

इहास्मिन् लोके यथा क्रीडितुः क्रीडापरस्य इच्छया क्रीडोपस्कराणां क्रीडासाधनानां संयोगविगमौ संयोगवियोगौ भवत इति शेषः। तथैव ईशेच्छया परमेश्वरस्येच्छया नृणां संयोगवियोगौ स्यातां भवेताम्॥ ४२ ॥

यत् यदि लोकं ध्रुवं शाश्वतं मन्यसे अथवा अध्रुवमशाश्वतं मन्यसे, अथवा न च उभयं न ध्रुवं, नाप्यध्रुवमिति यदि मन्यसे, सर्वथा त्रिधाऽपि ते धृतराष्ट्रादयः न शोच्याः न शोचनीयाः। मोहजात् शरीरेन्द्रियादिषु आत्मभ्रममूलकात् स्नेहादन्यत्र शोककारणत्वं नास्ति। अयं भावः — लोकस्य ध्रुवत्वे; तस्मादेव शोको व्यर्थः। अध्रुवत्वे शोकेनापि अध्रुवत्वपरिहाराभावात् शोको न कार्यः। उभयत्वाभावे मिथ्यारूपत्वेन तदाऽपि शोकस्याकिञ्चित्कर-त्वात् निरर्थक एव॥ ४३ ॥

तस्मादङ्ग! हे धर्मराज! अनाथाः अशरणाः कृपणाः दीनास्ते धृतराष्ट्रादयः मां धर्मराजं विना कथं वर्तेरन् जीवेयुः? इत्यज्ञानकृतं मोहकृतं आत्मनः वैक्लब्यं व्याकुलतां जहि त्यज॥ ४४ ॥

सर्पग्रस्तः परम् अन्यं सर्पग्रस्तं यथा सर्पग्रस्तमिव कालकर्मगुणाधीनः कालो गुणपरिणामहेतुः कर्माणि पुण्यपापादीनि, गुणास्सत्त्वादयः एतत्त्रितयाधीनः पाञ्चभौतिकः पञ्चभूतकार्यस्वरूपः अयं देहः अन्यांस्तथाभूतान् अन्यदेहान् कथं गोपायेत् रक्षेत्? न कथमपीति भावः॥ ४५ ॥

अहस्तानि हस्तरहितानि मत्स्यफलादीनि सहस्तानां मनुष्यादीनां जीवनं भवन्तीति शेषः। अपदानि पदरहितानि चतुष्पदां गवादीनां जीवनं भवन्ति। तत्र तेष्वहस्तादिषु मध्ये फल्गूनि अल्पानि महतां जीवनं भवन्ति। एवं जीवः जीवस्य अन्यजीवस्य जीवनं जीविका भवति॥ ४६ ॥

**तदिदं भगवान् राजन्नेक आत्माऽऽत्मनां स्वदृक्।**
**अन्तरोऽनन्तरो भाति पश्य तं माययोरुधा॥ ४७ ॥**

**सोऽयमद्य महाराज! भगवान् भूतभावनः।**
**कालरूपोऽवतीर्णोऽस्यामभावाय सुरद्विषाम्॥ ४८ ॥**

**निष्पादितं देवकृत्यमवशेषं प्रतीक्षते।**
**तावद्यूयमवेक्षध्वं भवेद्यावदिहेश्वरः॥ ४९ ॥**

**धृतराष्ट्रः सह भ्रात्रा गान्धार्या च स्वभार्यया।**
**दक्षिणेन हिमवत ऋषीणामाश्रमं गतः॥ ५० ॥**

**स्रोतोभिस्सप्तभिर्या वै स्वर्धुनी सप्तधा व्यधात्।**
**सप्तानां प्रीतये नाना सप्तस्रोतः प्रचक्षते॥ ५१ ॥**

**स्नात्वाऽनुसवनं तस्मिन् हुत्वा चाग्नीन् यथाविधि।**
**अब्भक्ष उपशान्तात्मा स[10] आस्ते विगतैषणः[11] ॥ ५२ ॥**

---

1. H,V पश्य त्वं; K,M पश्यंस्त्वं 2. K,M °तां 3. AF,GF सु° 4. H,V वै; AF,GF हिमवत्पार्श्वे 5. H,V °र्याऽत्र; B,K,M °र्यत्र 6. K,M °ऽभ्यगात्; AF,GF °ऽभवत् 7. B,K,M,W नाम्ना 8. AF,GF °ताः 9. K,M त्रिषवणं 10. B तत्रास्ते 11. W °तेषणः; K,M °तेक्षणः

**श्रीध०** मोहनिवृत्त्यर्थं द्वैतस्यावस्तुत्वमाह — **तदिति**। तदिदम् अहस्तसहस्तादिरूपं जगत् स्वदृक् भगवानेव, न ततः पृथक्। स चैक एव न तु नाना। ननु सजातीयविजातीयभेदे प्रत्यक्षे कुत एतत्? तत्राह आत्मनां भोक्तृणाम् आत्मा स्वरूपम्। अतः न सजातीयभेदः। अन्तरोऽनन्तरश्चान्तर्बहिश्च भोक्तृभोग्यरूपश्च भाति। अतो न विजातीयभेदोऽपि। **नन्वेकः** कथं तथा प्रतीयते[1]? तत्राऽऽह[2] — मायया उरुधा बहुधा भातीति[3] तं पश्येति ॥ ४७ ॥

क्वासावास्ते[4] स ईश्वरो महामायावी द्वारकायामित्याह — **सोऽयमिति**। अस्यां भूम्याम्[5] अभावाय नाशाय ॥ ४८ ॥

तर्हि श्रीकृष्णोऽत्रास्तीत्यत्रैवाऽऽस्थाम् **मा कृथा इत्याह** — **निष्पादितमिति**। तच्च[6] देवानां कर्तव्यं[7] कार्यं तेन निष्पादितम्। केवलमवशेषं प्रतीक्षते। यदुकुलक्षयमिति हृदिस्थम्। ततो निजं धाम यास्यति ततो यूयमपि गच्छतेत्यर्थः। तच्च भूतमपि विदुरवदसौ[8] नावर्णयत् ॥ ४९ ॥

तदेवं[9] शोकावस्थानं[10] च निवार्य जिज्ञासमानाय[11] तस्मै यथावृत्तं कथयति — **धृतराष्ट्र** इति षड्भिः। हिमवतो दक्षिणे भागे ॥ ५० ॥

तदपि कुत्रेत्याह — **स्रोतोभिरिति**। या वै प्रसिद्धा स्वर्धुनी गङ्गा[12] सा आत्मानं यत्र सप्तधा व्यधात्। किमर्थम्? नाना पृथक् सप्तभिः स्रोतोभिः प्रवाहैः सप्तानामृषीणां प्रीतये। अत एव तत्तीर्थं जनाः सप्तस्रोतो वदन्ति ॥ ५१ ॥

तत्र तेन कृतमष्टाङ्गयोगमाह — **स्नात्वेति** चतुर्भिः। तत्र स्नानं होमोऽब्भक्षणं चेति नियमा उक्ताः। भक्षणस्थाने[13] अपां स्वीकारादब्भक्षणः[14] उपशान्त आत्मा यस्य सः विगताः पुत्राद्येषणा यस्मादिति। यमा उक्ताः ॥ ५२ ॥

---

1 B, प्रतीयेत 2 A अत आह 3 H,V भान्तं 4 A,B क्वासावस्तीदृशो 5 H,V पृथिव्यां 6 H,V अत्र 7 A,B omit कर्तव्यं 8 A,B °देव 9 A,B °वं 10 A,B शोकमास्थां 11 A,B °वे 12 A,B omit गङ्गा 13 A,B भक्षस्था° 14 A,B °क्षः

**वीर०** सर्वत्र वने गृहे वा भगवानेव रक्षिता इत्यभिप्रायेण तदुपयुक्ततया भगवतः सार्वात्म्यं कृत्स्नजगतः तदात्मकतया तदनन्यत्वं चाह — **तदिति**। हे राजन्! तदीश्वरवशत्वेनोक्तमिदं परिदृश्यमानं चिदचिदात्मकं जगत् भगवानेक एव मृदयं घट इतिवत् स्वरूपाभेदशङ्कां वारयितुं विशिनष्टि। आत्मनां देवमनुष्यादिदेहभृतां

जीवानामात्माऽन्तः प्रविश्य प्रशासनधारकत्वाभ्यामवस्थितः। आत्मशब्दस्यैतदेव हि प्रवृत्तिनिमित्तम्। यदन्तः प्रविश्य प्रशासनधारकत्वाभ्यामवस्थानम्। अनेन शरीरात्मभावनिबन्धनं जगद्ब्रह्मणोः अनन्यत्वमित्युक्तं भवति। शरीरात्मभावनिबन्धनश्च अनन्यत्वव्यपदेशो दृष्टचरः। आत्मा देवो जातः मनुष्यो जात इति व्याप्यवस्तुगतदोषसंस्पर्शशङ्कां निराकुर्वन् विशिनष्टि। स्वदृक् आत्मनामात्मतयाऽवस्थितोऽपि स्वात्मयाथात्म्यदर्शी, अतः नास्य दोषसंस्पर्श इति भावः। तथा च श्रूयते — "अनश्नन्नन्यो अभिचाकशीति" (मुण्ड. उ. 3-1-1) इति न केवलमन्तरात्मैव, अपि तु अन्तरोऽप्यनन्तरो भाति। बहिश्च भाति। नन्वेकस्य कथं देवमनुष्यादिरूपेण बहुधाऽवस्थानमित्यत्राऽऽह पश्य तं माययोरुधेति। मायया देवमनुष्यादिरूपेण परिणतया शरीरभूतया जीवसंसृ[1]ष्टया प्रकृत्या तं भगवन्तं उरुधा बहुधा पश्य चिदचिदात्मकदेवादिशरीरभेदेन एक एव स्थित इति विजानीहीत्यर्थः ॥ ४७ ॥

न केवलं त्वत्पितरः स्वार्थमेव निर्गता, अपि तु युष्माभिरपि एवमेव निर्गन्तव्यमिति भवतां प्रदर्शनार्थमपि इत्यभिप्रायेणाऽऽह — **सोऽयमिति** द्वाभ्याम्। हे! महाराज! सः निखिलजगदन्तरात्मा वशीकृतलोकत्रय· कालशरीरकोऽयं भगवान् श्रीकृष्णः भूतानि स्वाज्ञानुवर्तीनि भावयत्यभ्युदययुक्तानि करोतीति तथा; हेतुगर्भमिदं साधुपरित्रातृत्वात् इति भावः। सुरद्विषां दुष्कृतामभावाय नाशाय कालरूपो मृत्युरूपोऽस्यां भुव्यवतीर्णः [2]कालरूपत्वेनावतीर्णः ॥ ४८ ॥

तेन च देवकृत्यं देवार्थं कर्तव्यं कृत्यं प्रयोजनं तद्विपक्षक्षपणरूपं निष्पादितं अधुना त्वयं भगवानवशेषं कर्तव्यप्रयोजनावशेषं स्वकुलविनाशात्मकमिति गूढाभिसन्धिः[3] प्रतीक्षते। अतो यावदिह भूर्लोके भगवानीश्वरः कृष्णः भवे[4]द्वर्तेत। तावदेव यूयमपि अवेक्षध्वम्, त[5]था पितृवन्निर्गच्छतेति भावः ॥ ४९ ॥

ब्रूहि त्वमिति प्रकृतप्रश्नस्योत्तरमाह — **धृतराष्ट्र** इति द्वाभ्याम्। स्वभार्यया गान्धार्या भ्रात्रा वा विदुरेण च सह धृतराष्ट्रो हिमवतो दक्षिणेन ऋषीणामाश्रमं गतः। हिमवतः दक्षिणपार्श्वनिन्तरवर्तिनमाश्रमं गत इत्यर्थः। "एनबन्यतरस्यामदूरेऽपञ्चम्याः" (अष्टा. 5-3-35) इत्यवध्यवधिमतोः सामीप्ये एनप्प्रत्यये व्युत्पन्नमिदं दक्षिणेनेत्यव्ययम् ॥ ५० ॥

कोऽसावाश्रम इत्यत्राऽऽह — **स्रोतोभिरिति**। यं सप्तस्रोत इति प्रचक्षते तमाश्रमं गत इत्यन्वयः। तत्र तन्नाम्नः प्रवृत्तौ निमित्तमाह — य[6]त्रेति। प्रसिद्धा स्वर्धुनी स्वर्गनदी गङ्गा सप्तानामृषीणां प्रीतये यतः सप्तभिः स्रोतोभिः प्रवाहैर्नाना बहुधा त[7]देवाऽऽह सप्तधा व्यधात्। सुविभक्ता बभूव। अतस्तं देशं सप्तस्रोत इत्याचक्षते। यमेवमाचक्षते तं गता इत्यर्थः ॥ ५१ ॥

तत्र किं करिष्यति, कथं वा वर्तिष्यते इत्यत्राऽऽह — तत्रानुसवनं त्रिसन्ध्यं स्नात्वा अग्नीन् यथाविधि हुत्वा चाब्भक्षः अप एव भक्षयन् उपशान्तः [8]रागाद्यकलुषित आत्मा मनो यस्य विगता ईषणाः दारेषणा धनेषणा पुत्रेषणा यस्य तथाभूत आस्ते आसिष्यते ॥ ५२ ॥

---

1 A,B °सृ° 2 A,B omit कालरूपत्वेनावतीर्णः 3 W भूमौ 4 A,B °द्वर्तेते 5 A,B ततः 6. W या वै 7 A,B omit तदेवाऽऽह सप्तधा व्यधात् 8 W कामा°

**विज॰** इतोऽपि न शोकः कर्तव्यः, किन्त्वखिलस्य हर्यधीनत्वात् तद्भजनमेवावश्यं कर्तव्यमित्याह — **तदिति**। एवमिदं हरेरितरत् सर्वमनित्यमस्वतन्त्रं चेति तत्[1] तस्मात् हे राजन्! भगवानात्मनां जीवानामात्मा आदानादिकर्ता एकोऽद्वितीयः स्वदृक् स्वयंप्रकाशः विवेकज्ञानिनामन्तरः अस्य जगतोऽन्तः स्थित्वा रतिकृत् अनन्तरो गुणगुण्यादिभेदरहितो भाति। तस्मात्त्वमपि देवोत्तमावतारत्वेन बिम्बेन विवेकित्वात् मायया स्वेच्छया कृतामुरुतामनेकावतार[2]-ताम् अन्तर्याम्याद्यात्मिकां निर्भेदां हरेर्विभूतिं पश्यंश्च तमेव भजेति वाक्यशेषः। स्वदृक् भगवानात्मा स एक एवेदं जगत् भाति कथं भोक्तृरूपेणान्तरो भोग्यरूपेणानन्तरः। नित्यस्यानेकत्वं कथं तत्राऽऽह — **पश्येति**। तं परमेश्वरं मायया बहुधा वर्तमानं पश्येति केचिद्योजयन्ति। एकस्य भोक्तृभोग्यरूपत्वानुपपत्तेरनिर्वाच्यमायाया अप्रामाणिकत्वेनानङ्गीकार्यत्वात् अनादरणीयमेव तदिति ॥ ४७ ॥

ननु भगवता ईश्वरवशं जगदित्युक्तं, तमीश्वरं वयं कथं बुद्ध्यामह इति तत्राऽऽह — **सोऽयमिति**। ग्रस्तसकलं स्ववशं विधायाऽऽस्ते सोऽयमद्य देवैः प्रार्थितोऽस्यामुर्व्यां यदुकुलेऽवतीर्ण इत्यन्वयः। कथम्भूतः भूतानां भावनो वर्धनः, कालरूपः संहाररूपः। किमर्थम्? सुरद्विषामभावाय विनाशाय ॥ ४८ ॥

**अवतारप्रयोजनं च सम्पन्नप्रायमिति ब्रूत इत्याह — निष्पादितमिति**। भूभारदैत्यसंहाराख्यं देवकार्यं तेन निष्पादितं स पुनरवशेषमवशिष्टं यदुकुलक्षयं प्रतीक्षते पश्चाद्वैकुण्ठमेष्यतीति शेषः। श्रीकृष्णः इह भूतले यावन्तं कालं तिष्ठति यूयमपि तावन्तं समयमनुवर्तध्वमित्यन्वयः ॥ ४९ ॥

"नाहं वेद गतिम्" (भाग. 1-13-38) इति प्रश्नं परिहरिष्यन् धृतराष्ट्रस्य तपश्चरणाश्रमतीर्थनाम वक्तीत्याह — **धृतराष्ट्र** इति। भ्रात्रा विदुरेण, चशब्दात् कुन्त्या सह गतः। हस्तिनपुरान्निर्गम्य हिमवतः पर्वतस्य दक्षिणेन दक्षिणदिशि गतमृषीणामाश्रमं सप्तस्रोतो नाम गतोऽभूदित्यन्वयः ॥ ५० ॥

कस्मात् सप्तस्रोतस्त्वं तस्येति तत्राऽऽह — **स्रोतोभिरिति**। यत्र यस्मिन्नाश्रमे स्वर्धुनी भागीरथी सप्तानामृषीणां प्रीतये, सप्तभिः स्रोतोभिः जलस्यन्दनधाराभिः सप्तधा सप्तभिः द्रोणिभिरभ्यगात्, समुद्रमिति शेषः। इति यस्मात् तेन विचक्षणाः सप्तस्रोत इति संज्ञां प्रचक्षत इत्यन्वयार्थः ॥ ५१ ॥

उपशान्त आत्मा अन्तःकरणं यस्य स तथोक्तो विगतेक्षणः नष्टमांसदृष्टिः वौ परमात्मनि गतं प्राप्तमीक्षणं निरन्तरचिन्तनं यस्येति वा। अब्भक्षः कृतजलाहारः स धृतराष्ट्रः तस्मिन्नाश्रमे स्नात्वा यथाविधिं अग्नींश्च हुत्वा आस्ते इत्यन्वयः। आस्ते इति लट् भूतार्थे। अन्यथा उक्तार्थविरोधः स्यात् ॥ ५२ ॥

---

1. K,M यस्मात्तस्मात् 2 K,M °तारान्त°

**रा॰ कृ॰** हे राजन्! तत् ईश्वरवशत्वेन उक्तमिदं दृश्यमानं स्थावरजङ्गमात्मकं जगत् आत्मनां जीवानामात्मा स्वरूपभूतः। स्वदृक् स्वप्रकाशरूपः। अन्तरं भोक्तृरूपोऽनन्तरं भोग्यरूपः भगवान् एक एव भाति। मायया स्वेच्छया उरुधा बहुधा जातमिति शेषः। तं भगवन्तं पश्य ॥ ४७ ॥

हे महाराज! धर्मज! भूतभावनः सकलप्राणिपालकः कालरूपस्सोऽयं भगवान् अद्याधुना सुरद्विषां राक्षसानामभावाय विनाशायास्यां भूम्यामवतीर्णः श्रीकृष्णत्वेनावतीर्णवान्॥ ४८ ॥

अपि च, देवकृत्यं देवानां कार्यं निष्पादितं निर्वर्तितं तेन भगवतेति शेषः। सः केवलमवशेषं कार्यशेषं प्रतीक्षते। ईश्वरः स भगवान् यावदिह लोके भवेत् वर्तते तावत् यूयमवेक्षध्वं प्रतिपालयत॥ ४९ ॥

धृतराष्ट्रः स्वभार्यया गान्धार्या भ्रात्रा विदुरेण च सह हिमवतो दक्षिणेन ऋषीणामाश्रमं गतः॥ ५० ॥

तमाश्रमं विशिनष्टि — या वै प्रसिद्धा स्वर्धुनी गङ्गा नाना पृथक् सप्तभिः स्रोतोभिः प्रवाहैः सप्तानां ऋषीणामिति शेषः प्रीतये यत्र सप्तधा व्यधात्, आत्मानमिति शेषः। अत एव यं सप्तस्रोतः प्रचक्षते प्रवदन्ति, तमाश्रममगादिति पूर्वेणान्वयः ॥ ५१ ॥

स धृतराष्ट्रः तस्मिन्नाश्रमेऽनुसवनं त्रिकालं स्नात्वा यथाविधि अग्नीन् गार्हपत्यादीन् हुत्वा अब्भक्षः जलाशनः उपशान्तात्मा कामक्रोधादिवेगविरहितान्तःकरणः विगतेषणः ईषणात्रयरहितश्च सन् आस्ते वर्तते॥ ५२ ॥

जितासनो जितश्वासः प्रत्याहृतषडिन्द्रियः ।
हरिभावनया ध्वस्तरजस्सत्त्वतमोमलः ॥ ५३ ॥

विज्ञानात्मनि संयोज्य क्षेत्रज्ञे प्रविलाप्य तम्।
ब्रह्मण्यात्मानमाधारे घटाम्बरमिवाम्बरे ॥ ५४ ॥

ध्वस्तमायागुणोदर्को[1] निरुद्धकरणाशयः ।
निवर्तिताखिलाहार आस्ते स्थाणुरिवाचलः[2] ।
तस्यान्तरायो मैवाभूः[3] संन्यस्ताखिलकर्मणः ॥ ५५ ॥

स वा अद्यतनात् राजन्! परतः पञ्चमेऽहनि ।
कलेवरं हास्यति स्वं[5] तच्च भस्मीभविष्यति ॥ ५६ ॥

दह्यमानेऽग्निभिर्देहे पत्युः पत्नी सहोटजे ।
बहिःस्थिता पतिं साध्वी तमग्निमनुवेक्ष्यति ॥ ५७ ॥

विदुरस्तु तदाश्चर्यं निशाम्य[6] कुरुनन्दन !
हर्षशोकयुतस्तस्मात् गन्ता तीर्थनिषेवकः ॥ ५८ ॥

सूत उवाच

इत्युक्त्वाऽथारुहत्[7] स्वर्गं नारदस्सहतुम्बुरुः ।
युधिष्ठिरो वचस्तस्य हृदि कृत्वाऽजहाच्छुचः ॥ ५९ ॥

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
प्रथमस्कन्धे नैमिषीयोपाख्याने त्रयोदशोऽध्यायः ॥ १३ ॥

---

1 K,M °द्रेको 2. B,H,K,M,V,W °घुना 3 H,K,M,V °भूत् 4. K,M राजा 5. K,M ह; W वै 6 K,M,N °श° 7 AF,GF चा° 8 K,M °ह°

**श्रीध॰ जितासन** इति। जितासन इत्यादिना आसनप्राणायामप्रत्याहारा उक्ताः। हरिभावनयेति धारणोक्ता। ध्वस्ता रजस्सत्त्वतमोरूपा मला यस्येति फलतो ध्यानमुक्तम्॥ ५३ ॥

समाधिमाह — **विज्ञानेति** द्वाभ्याम्। आत्मानं मनोऽहङ्कारास्पदात्[1] स्थूलदेहाद्वियोज्य विज्ञानात्मनि बुद्धौ संयोज्य एकीकृत्य तं च विज्ञानात्मानं दृश्यांशाद्वियोज्य क्षेत्रज्ञे द्रष्टरि प्रविलाप्य तं च क्षेत्रज्ञं द्रष्टृंशाद्वियोज्य आधारे आश्रयसंज्ञे ब्रह्मणि प्रविलाप्य घटाम्बरं घटोपाधेर्वियोज्य यथा महाकाशे प्रविलाप्यते तद्वत्॥ ५४ ॥

व्युत्थानाभावमाह — **ध्वस्तेति**। तद्धि[2] अन्तर्गुणक्षोभाद्वा बहिरिन्द्रियविक्षेपाद्वा[3] व्युत्थानं भवेत्, तदुभयं तस्य नास्ति यतो ध्वस्तो मायागुणानामुदर्क उत्तरफलं वासना यस्य सः। निरुद्धानि करणानि चक्षुरादीन्याशयो मनश्च यस्य सः। अत एव निवर्तितोऽखिल आहारो भोज्यमिन्द्रियैर्विषयाहरणं वा येन सः स्थाणुरिव निश्चल आस्ते॥ ५५ ॥

तथाभूतमप्यानेतुमुद्यतं प्रत्याह — **तस्येति**। अन्तरायो विघ्नः मैवाभूरित्यडागमश्छान्दसः। दर्शनमपि तावत्कुर्यामित्युद्यतं प्रत्याह। स वा अद्यतनादह्नः परत उत्तरत्र। स्वं स्वाधीनम्। तर्हि तद्दाहार्थं[4] गमिष्यामि नेत्याह तच्चेति॥ ५६ ॥

तर्हि गान्धार्यानयनार्यं[5] गमिष्यामि! नेत्याह — **दह्यमान** इति। पत्युर्देहे सहोटजे पर्णशालासहिते योगाग्निना सह गार्हपत्यादिभिः दह्यमाने तस्य पत्नी बहिःस्थिता सती तं पतिमनु अग्निं वेक्ष्यति प्रवेक्ष्यति॥ ५७ ॥

तर्हि विदुरानयनार्थं गन्तव्यमेव! नेत्याह — **विदुर** इति। विदुरस्तु तन्निशाम्य दृष्ट्वा भ्रातुः सुगत्या हर्षः तन्मृत्युना शोकश्च ताभ्यां युक्तः तस्मात् स्थानात् तीर्थानि सेवितुं[6] गन्ता गमिष्यति॥ ५८ ॥

**इतीति**। शुचः शोकान्॥ ५९ ॥

इति श्रीमद्भागवते प्रथमस्कन्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां त्रयोदशोऽध्यायः ॥ १३ ॥

---

1 A,B °दं 2. A,B omit तद्धि 3. H,V °क्षोभाद्वा 4. H,V add वा 5. H,V °र्थं 6. B °निषेवितुं

**वीर०** जितमासनं येन सः चिरम् आसीनोऽपि क्लमरहित इत्यर्थः। जिताः श्वासाः प्राणादिवायवो **येन** सः। प्रत्याहृतानि शब्दादिविषयेभ्यो नियमितानि षडिन्द्रियाणि येन। हरिभावनया भगवद्[1]रूपानुस्मृत्या **ध्वस्तानि निरस्तानि** रजआदिगुणत्रयकार्याणि मुक्तिप्रतिबन्धकानि [2]पुण्यापुण्यादिरूपाणि मलानि यस्य तथाभूतः॥ ५३॥

विज्ञानात्मनि विज्ञानस्वरूपे क्षेत्रज्ञे प्रत्यगात्मनि अभिसंयोज्य पूर्वं प्रस्तुतानि इन्द्रियाणि इत्यर्थात् सिद्धम्। इन्द्रियाणि संयोज्य इन्द्रियैः अनाकृष्टचित्त इत्यर्थः। तमात्मानं क्षेत्रज्ञमाधारे धारके ब्रह्मणि विलाप्य विलीनं कृत्वा उपाधिविधूननेन ब्रह्मसमानाकारतया अनुसन्धायेति यावत्। तत्र दृष्टान्तमाह — **घटाम्बरमिवाम्बरं इति। महाकाशे** घटाकाशमिव ब्रह्मण्य[3]ज्ञानं प्रविलाप्य स्थाणुरिव आस्त इत्युत्तरेणान्वयः। अम्बरदृष्टान्तेन जीवब्रह्मणोः स्वरूपैक्यमनुसन्धायेति न भ्रमितव्यम्। घटाद्युपाध्यपगमेन घटाकाशस्य महाकाशसंश्लेषेऽपि स्वरूपभेदसद्भावात्। पञ्चीक[4]रणस्मरणात् आकाशेऽप्यंशभेदस्य वेदान्तिभिरव[5]श्यमङ्गीकृतत्वात् [6]यदि आकाशेंऽशभेदो नाभ्युपगम्येत तदा कृत्स्नस्याप्याकाशस्य घटाद्युपहितत्वप्रसङ्गः। न चेष्टापत्तिः, घटाकाशमहाकाशयोर्व्याप्यव्यापक[7]तायाः वैपरीत्यापातात् कार्त्स्न्येन आकाशस्य घटोपहितत्वे हि तत्परिच्छिन्नस्य आकाशस्य व्याप्यत्वं सुस्पष्टम्। अतः संश्लेषदशायामपि घटाकाशमहाकाशयोः प्रदेशभेदः **अस्त्येव**। उपाध्यपगमेन समानाकारत्वमात्राभिप्रायक एवायं दृष्टान्त इत्यवगन्तव्यम्॥ ५४॥

ध्वस्तः मायागुणानां रजआदीनां उदर्को रागद्वेषादिकार्यद्वारा उत्तरोदयो यस्य। निरुद्धानि करणानि इन्द्रियाणि आशयो वासना अन्तःकरणं वा येन। निवर्तिता अखिलाः सर्वे आहाराः अब्भक्षणादयोऽपि येन तथाभूतः स्थाणुरिवाचलो निश्चल आस्ते आसिष्यते। "प्रत्याहृतषडिन्द्रिय" इत्यनेन इन्द्रियाणां विषयेभ्य आकर्षणमात्रमुक्तम्। "निरुद्धकरणाशय" इत्यनेन तु पुनर्विषयेषु प्रवृत्तिप्रतिबन्ध उक्तः। अतो न पौनरुक्त्यम्। तथा **ध्वस्तरजस्तमोमल** इत्यनेन **पुण्यपापाद्यभाव** उक्तः। "ध्वस्तमायागुणोदर्क" इत्यनेन **पुण्यापुण्यमूलकरागद्वेषाद्यभाव** उक्तः। **तथा** तावदब्भ[8]क्षैस्ततो निवर्तिताखिलाहार इति॥ ५५॥

कथं चित्तमानयिष्यामीति युधिष्ठिराभिप्रायमालक्ष्य आह — **तस्येति**। संन्यस्तानि त्यक्तान्यखिलानि देहधारणार्थान्यपि कर्माणि येन तस्य धृतराष्ट्रस्यान्तरायो विघ्नभूतः त्वं मा भूः न भव। हे राजन्! स **धृतराष्ट्रः** अद्यतनाद्वर्तमानदिनादारभ्य परतः पञ्चमेऽहनि स्वं कलेवरं हास्यति वै नूनं त्यक्ष्यति। तच्चकलेबरं **योगाग्निनैव** भस्मीभविष्यतीति॥ ५६॥

[9]तदा सहोटजे पर्णशालासहिते भर्तुः देहे अग्निभिर्दह्यमाने सति तस्य पत्नी साध्वी पतिव्रता **गान्धारी** बहिःस्थिता तमग्निमनुवेक्ष्यत्यनुप्रवेक्ष्यति॥ ५७॥

हे कुरुनन्दन! ततस्तदाश्चर्यं निशाम्य दृष्ट्वा विदुरः हर्षशोकाभ्यां भ्रातुः मुक्तिविश्लेषजाभ्यां युक्तः **तस्माद्देशात्** [10]तीर्थनिषेवकः सेवितुमिच्छन् गन्ता गमिष्यति॥ ५८॥

इतीत्थम् उक्त्वा सहतुम्बुरुः भगवान् नारदः स्वर्गमारुहत् स्वर्गं प्रति ऊर्ध्वं जगामेत्यर्थः। युधिष्ठिरस्तु तस्य नारदस्य वचः हृदि कृत्वा निधाय शुचः शोकान् अजहात् तत्याज॥ ५९॥

इति श्रीमद्भागवते प्रथमस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां त्रयोदशोऽध्यायः॥ १३॥

---

1. W °द्रूप ध्रुवानु° 2 A,B omit पुण्या° 3 A,B °ण्यात्मानं 4 A,B °करणात् आका° 5 W °श्याङ्गीकार्यत्वात् 6. W °दा 7 B °तायां; W °ता भाव° 8 W °क्षण° 9 W °तः 10 W तीर्थानि निषेवकः

**विज॰** अपि मयीति मृत्युकालीनवैमनस्यविषयं प्रश्नं परिहरतीत्याह— **जितासन** इति। धृतराष्ट्र उक्तविधिना तपः कुर्वन् अभ्यासपाटवेन जितासनः स्वस्तिकाद्यासनजयवान् निर्जितश्वासः प्राणजयवान् विषयेभ्यः प्रत्याहृतश्रोत्रादिषडिन्द्रियस्सन् हरिभावनया हरिनिरन्तरध्यानेन ध्वस्तं सत्त्वरजस्तमोनिमित्तं मनोमलं येन स तथा॥ ५३॥

स्वरूपज्ञानेन स्वस्वरूपमारभ्य परतत्त्वपर्यन्तानि अशेषतत्त्वानि अपरोक्षीकृत्य सर्वं जगत् विज्ञानात्मनि विज्ञानतत्त्वाभिमानिनि विरिञ्चे संयोज्य तत्र प्रविलाप्य लयमेष्यतीति ध्यात्वा तं विरिञ्चं क्षेत्रज्ञे स्वहृदि स्थिते हरावन्तर्यामिणि प्रविलाप्य घटाम्बरमम्बर इव उत्पद्यमानघटवर्ति महाकाशस्वरूपतद्भिन्नजायमानाकाशयो र्मध्ये महाकाशस्वरूपघटाकाशो महाकाशे घटे भिन्ने यथा एकीभवति तथा आत्मानं स्वान्तर्यामिणं हरिमाधारे सर्वाधारे ब्रह्मणि सर्वगते प्रविलाप्य एकीभावेन चिन्तयन्॥ ५४॥

अत एव ध्वस्तमायागुणोद्रेक इति हेतुगर्भं निरस्तप्रकृतिसत्त्वादिगुणोद्रेकत्वात् हरावेव निरुद्धाशेषकरणमना अत एव निवर्तिताखिलाशनोऽधुना स्थाणुरिवाचल आस्ते। तदा मृतिकाले आसीदित्येकान्वयः। तस्मान्न त्वयि शमलमाशंसमानो नापि दुःखितो गङ्गायाम् अभ्यपतदिति भावः। ब्रह्मार्पणबुद्ध्या संन्यस्तसमस्तकर्मणः तस्य धृतराष्ट्रस्य तपोविघ्नो माभूरित्यन्वयः॥ ५५॥

इदानीं धृतराष्ट्रमृतिकालं वक्तीत्याह— **स वा** इति। स धृतराष्ट्रः अद्यतनादह्नः परतः पूर्वस्मिन् पञ्चमेऽहनि कलेबरं हास्यति जहौ। तच्च भस्मीभविष्यति भस्मसादभूत्। हशब्देन "सुप्तिङुपग्रहलिङ्गनराणाम्" इति व्याकरणसूत्रमत्र प्रमाणीकरोति, इतिहासं वा सूचयति। वा इत्यनेन "तांस्तदा नारदो विद्वाञ्छमयामास धर्मवित्। उक्त्वोत्तमां गतिं तेषां निष्ठां तात्कालिकीं तथा।" इति स्कन्दपुराणोक्तं वाक्यं सूचयति। च शब्द एवार्थे। तत्कलेवरमेव भस्मीभविष्यति। न तु सः स्वयं शून्यतामेष्यति चेतनस्य नित्यत्वात्॥ ५६॥

उटजेन पर्णशालया सह वर्तमानः सहोटजः तस्मिन् प्रवेक्ष्यति प्राविशत्। साध्वीशब्देन कुन्ती च। सा चाग्निमाविशत् तस्मादुत्तरगतिं प्राप्तान् प्रति परलोकमुद्दिश्य न शोचितव्यमिति भावः॥ ५७॥

एष्यज्ञस्य विदुरस्य धृतराष्ट्रवनप्रवेशात् पूर्वतनाचरणप्रकारमाह— **विदुर** इति। सर्वज्ञो विदुरो दिव्यज्ञानेन भविष्यदाश्चर्यं धृतराष्ट्रपाण्डवयादवानां स्वर्निर्याणं निशम्य हरिसामर्थ्यस्मरणेन बन्धुमरणस्मरणेन च हर्षशोकान्वितः,

सर्वमनित्यम्, ईश एव नित्यः ततः तीर्थयात्रादितत्सेवैव पुरुषार्थप्रदेत्यतः कारणात् तीर्थनिषेवणकः गन्ता गङ्गादितीर्थानां भागवतादिशास्त्राणां च सेवामानो[2] ययौ। तुशब्दो, गन्तेति लुट् भूतार्थत्वभेदमाह; "तुः स्याद्भेदेऽवधारणे" (अम. को. 3-243) इत्यभिधानात्। स च पुनः धृतराष्ट्रपरिसरमागतोऽभवत्। धृतराष्ट्रादिदिदृक्षया[3] वनं गतेषु भवन्तं प्रवश्यि एकत्वमागतो हि, तस्मात् न तस्य गतिर्मया वर्णनीयेति भावः। पुरा दिदृक्षार्थं वनमागतेषु पाण्डवेषु राजानं प्रविश्य एकत्वमागत इति स्कान्दकथितार्थभेदे वा वर्तते तुशब्दः ॥ ५८ ॥

सतुम्बुरुरिति वक्तव्ये सहतुम्बुरुरिति नारदः सर्वदा तुम्बुरुणा सहैव वर्तते न तं विहायेति द्योतनार्थः। कुन्त्यादिविषयाः शुचः ॥ ५९ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां
टीकायां प्रथमस्कन्धे त्रयोदशोऽध्यायः * ॥ १३ ॥

---

1. K,M °दि° 2. B,K,M सेवनः 3. A,B ° ष्ट्रदिदृ ° *In K & M 12th Chapter ends here

**रा॰ कृ॰** अपि च स धृतराष्ट्रः जितासनः जितश्वासः प्रत्याहृतषडिन्द्रियः हरिभावनया ध्वस्तरजस्सत्त्वतमोमलः आत्मानमहङ्कारास्पद विज्ञानात्मनि बुद्धौ संयोज्य तं विज्ञानात्मानं क्षेत्रज्ञे द्रष्टरि प्रविलाप्य संयुक्तं विभाव्य तं च क्षेत्रज्ञमाधारे आश्रयभूते ब्रह्मणि घटाम्बरं घटाकाशं अम्बरे आधारभूते महाकाशे इव विलाप्य संयुक्तं विभाव्य ध्वस्तमायागुणोदर्कः निरुद्धकरणाशयः निवर्तिताखिलाहारः स्थाणुरिवाचलः आस्ते। संन्यस्ताखिलकर्मणः तस्य धृतराष्ट्रस्य अन्तरायः मैवाभूस्त्वं मा भूः'

मनुष्यैः अभ्यसनीयानां विद्यानां मध्ये योगेन देहत्यागरूपा उत्तमोत्तमा विद्या। श्रीमद्भागवते प्रधानभूतया परीक्षित्कथया इयमेवोपदिश्यते। मानवप्राप्यं शाश्वतं दिव्यजीवनं च अनिवार्यमृत्युघटनाग्रहण, विनियोगायत्तं यद्धि पुरा नियमबद्धवैयक्तिकजीवितलक्ष्येष्वन्यतममभवत्। प्रायिकं चैतत् यद्भागवतोत्तमाः राजानः ऋषयश्चानेनैव पथा देहं त्यजन्ति स्मेति।

मानवजन्मनः सार्थक्यं तत्कर्तव्यनिर्वहणायत्तम्, न तु विषयानुभवायत्तमिति, देहाभिमानश्च दुःखहेतुरिति जानन्ति विवेकिनः। ते हि स्वशरीरबन्धुगृहजन्यं सुखदुःखादिकं सर्वमप्यसत्यमिति, कर्तव्यमेकमेव सत्यमिति विज्ञाय तत्करणसमनन्तरमेव क्रमशः लघूकृताहारविहारादिकाः तापत्रयविरहिताः प्रशान्तात्मानश्च यथावसरं देहं त्यजन्ति। एतद्विवेकविरहिताः देहाभिमानिनस्तु परकृतपुरस्कारतिरस्कारजातसुखदुःखादि नानादशाऽऽग्रहपरवशाः चिरायुस्सम्पादनपराश्च प्रव्यथन्ते। अत एव सम्प्रति परमकर्तव्यज्ञानविरहिते अज्ञानोपहते जगति जनाधिक्याहारन्यूनतादिक्षुद्रविवादैः प्रायेण मानवो निपीड्यते। यदि प्रागुक्ता योगसहकृतदेहत्यागविद्या समधिगता भवति तर्हि नैवोदेत्यद्यापि तत्क्षुद्रविवादक्लेशः। एतत्सर्वविवादपरिष्कारः श्रीमद्भागवततत्त्वप्रकाशितो विराजते इत्यलमतिविस्तरेण।

प्रकृते च जलप्रायमाहारं भुञ्जानः क्रमशः प्रक्षीणाभ्यवहारः धृतराष्ट्रः मनःप्रशमाय विष्णुमन्तर्यामिणं दध्यौ। तेन तस्य सर्वेन्द्रियाणां विष्णुनिष्ठया रजस्तमोहानिः। तदा देहात्मबन्धहेतुः प्राणः परिपक्वः तद्देहमपहाय आत्मानमाश्रितवान्। तथा च आत्मानमाकाशगतं सम्भाव्य तदाकाशं च विष्णुमयं विज्ञाय सः स्वयं सश्वासं बहिरागत्य आकाशे लीनोऽभवदिति पिण्डितार्थः॥ ५३, ५४, ५५॥

हे राजन्! युधिष्ठिर! स धृतराष्ट्रः अद्यतनात् वर्तमानादह्नः आरभ्य परतः अनन्तरं पञ्चमेऽहनि दिने स्वं कलेबरं हास्यति त्यक्ष्यति। तच्च कलेबरं भस्मीभविष्यति; योगाग्निनेति शेषः॥ ५६॥

सहोटजे उटजसहिते पत्युर्देहे अग्निभिर्दह्यमाने सति बहिःस्थिता साध्वी पतिव्रता तस्य पत्नी गान्धारी तं पतिमनु अनुसृत्य अग्निं वेक्ष्यति प्रवेक्ष्यति।

अत्र योगेन देहत्यागविधानमुक्तम्। एतेन च विधानेनाभ्यस्तेन केचिदेकस्मिन्नेवजन्मनि बहुवारं देहं त्यजन्तः प्रविशन्तः तत्प्रक्रियासमधिगतान् विविधानुभवान् अभ्यासवशात् वासनाकारतया मनसि मुद्रितानेकत्र क्रोडीकृत्य (समाहृत्य) शास्त्रत्वेन निबध्नन्ति। अन्ये केचन देहं विहायापि स्वस्वस्मृतिसमारूढाः भाविभवपरम्परामेकाकारतयाऽनुभवितुं प्रभवन्ति। एतत्स्मृतिसाहाय्येन संवत्सराणां शतानि सहस्राणि च यावत् तेषाम् एकैकमहाकार्यसाधनदीक्षा सिध्यति। बहवो ऋषयः सहस्रसंवत्सरसत्रयागनिर्वहणाय नैमिशारण्ये सम्मिलिताः महात्मानश्च ईदृशा एव। एते च प्रायशः सङ्घशः कार्याचरणपरायणाः परस्परमभिजानन्ति। एतत्प्रत्यभिज्ञासौलभ्याय च सर्वेष्वेव जन्मसु एकमेव सङ्केतनाम स्वीकुर्वन्ति। नारदविश्वामित्रवसिष्ठशक्तिपराशरादयः ऋषयः युगे युगे वर्तमानाः ब्रह्मविद्यापरिव्याप्तये प्रयतमानाः पुराणेषु गीयन्ते। एतादृशा एव चिरञ्जीविन इति कथ्यन्ते॥ ५७॥

हे कुरुनन्दन! युधिष्ठिर! विदुरस्तु दुराचारतत्परस्य धृतराष्ट्रस्यापि मोक्षरूपं तत् आश्चर्यं निशाम्य विलोक्य हर्षशोकयुतः भ्रातृमुक्तिमृत्युप्रयुक्तहर्षशोकान्वितः तीर्थनिषेवकः तीर्थानि सेवितुकामः तस्मात् प्रदेशात् गन्ता गमिष्यति॥ ५८॥

इति पूर्वोक्तप्रकारेण उक्त्वा अथ सहतुम्बुरुः नारदः स्वर्गमारोहत्। युधिष्ठिरः तस्य नारदस्य वचो हृदि कृत्वा निधाय शुचः शोकान् अजहात् त्यक्तवान् ॥ ५९॥

इति श्रीमद्भागवते प्रथमस्कन्धे
श्रीराधाकृष्णप्रणीतायां सुधीसुधायां व्याख्यायां
त्रयोदशोऽध्यायः॥ १३॥



# चतुर्दशोऽध्यायः

## सूत उवाच

सम्प्रस्थिते द्वारकायां जिष्णौ बन्धुदिदृक्षया ।
[1]ज्ञातुं च पुण्यश्लोकस्य कृष्णस्य च विचेष्टितम् ।। १ ।।

व्यतीताः कतिचिन्मासास्[2]तदा ना[3]ऽऽयात्ततोऽर्जुनः ।
ददर्श घोररूपाणि निमित्तानि कु[4]रूद्वहः ।। २ ।।

कालस्य च गतिं रौद्रां[5] विपर्यस्त[6]र्तुध[7]र्मिणः ।
पापीयसीं नृणां वार्तां क्रोधलोभानृतात्मनाम् ।। ३ ।।

जिह्मप्रायं व्यवहृतं शा[8]ठ्यमिश्रं च सौहृदम् ।
पितृमातृसुहृद्भ्रातृदम्पतीनां च क[9]ल्कनम् ।। ४ ।।

कन्याविक्रयिणं[10] तातं सुतं पित्रोरपोषकम् ।
ब्राह्मणान् वेदविमुखान् शूद्रान् वै[11] ब्रह्मवादिनः ।।

निमित्तान्यत्य[12]रिष्टानि काले त्वनुगते नृणाम् ।
लोभाद्यधर्मप्रकृ[13]तिं दृष्ट्वोवाचानुजं नृपः ।। ५ ।।

## युधिष्ठिर उवाच

स[14]म्प्रेषितो द्वारकायां जि[15]ष्णुर्बन्धुदिदृक्षया ।
ज्ञातुं च पुण्यश्लोकस्य कृष्णस्य च विचेष्टितम् ।। ६ ।।

गतास्सप्ताऽधुना मासा भीमसेन तवानुजः ।
नायाति कस्य वा हेतोः नाहं वे[16]देदमञ्जसा ।। ७ ।।

अपि देवर्षिणाऽऽदिष्टः स कालोऽयमुपस्थितः ।
[17]यदाऽऽत्मनोऽङ्गमाक्रीडं भगवानुत्सिसृक्षति ।। ८ ।।

---

1 K.M ज्ञातुं मायामनुष्यस्य वासुदेवस्य चेहितम्; Af Gf ज्ञातुं मायामनुष्यस्य वासुदेवस्य चेष्टितम्। 2 K.M स्तदा तु शतशो नृपः 3 Af Gf पाण्डुसुतो नृपः 4 K.M भृगूद्वह! 5 W °द्रीं 6 W विपरीततुर्धर्मणः 7 Af Gf °धर्मणः 8 K.M साध्य 9 K.M कल्कितां *This additional verse is found in H.N.V.W and the commantaries of Sridhara and Veeraraghva on the same are to be found at their proper places 10 W °कं 11 W °च 12 K.M °प्य° 13 H.V °भृ° 14 H.V सम्प्रोषितो; K.M सम्प्रेषिते 15 V विष्णु; K.M जिष्णौ 16 H.V °द्यी° 17 K.M यदात्म°

## श्रीधरस्वामिविरचिता भावार्थदीपिका

चतुर्दशे त्वरिष्टानि दृष्ट्वा राजा विशङ्कितः।
अशृणोदर्जुनात्कृष्णतिरोधानमितीर्यते॥

**सम्प्रस्थित** इति। श्रीकृष्णस्य चेति चकारेणाभिप्रायं च ज्ञातुम्॥ १॥

**व्यतीता** इति। कतिचित् सप्त मासाः। तदा कालातिक्रमेऽपि ततः द्वारकातः नाऽऽयात् नाऽऽगतः। निमित्तानि उत्पातान् कुरूद्वहः युधिष्ठिरः॥ २॥

**कालस्येति**। रौद्रां घोराम्। तदेवाऽऽह — विपर्यस्ताः ऋतुधर्माः यस्मिन् तस्य वार्तां जीविकाम्। क्रोधलोभानृतैर्युक्तः आत्मा मनः येषाम्॥ ३॥

**जिह्मप्रायमिति**। जिह्मप्रायं कपटबहुलं, व्यवहृतं व्यवहारं, शाठ्यं वञ्चनं तन्मिश्रं सौहृदं सख्यम्। पित्रादीनां स्वप्रतियोगिभिः कल्कनं कलहादि॥ ४॥
*कन्याविक्रयिणमिति तात जनकम्॥

**निमित्तानि** इति। अत्यरिष्टानि अत्यन्तं अशुभानि दृष्ट्वा नृणां लोभाद्यधर्मप्रकृतिं[1] लोभादिकं मानसिकदुर्गुणं अधर्मानुष्ठानप्रभृतिं च कायिकदुर्गुणं दृष्ट्वा अनुजं भीमम्। नृपः युधिष्ठिरः॥ ५, ६॥

**गता** इति। वेति वितर्के। कस्माद्धेतोः नायातीत्यहं न वेद्मि॥ ७॥

**अपीति**। अपि किं यदा आत्मनः आक्रीडं क्रीडासाधनमङ्गं मनुष्यनाट्यविग्रहं उत्स्रष्टुं इच्छति स कालः प्राप्तः[2]॥ ८॥

---

1. H,V °भृ° 2 H,V add किम् * Commentary on addl V

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

**सम्प्रस्थित** इति। बन्धूनां यदूनां दिदृक्षया पुण्यश्लोकस्य पुण्ययशसः श्रीकृष्णस्य विचेष्टितं ज्ञातुं च जिष्णौ अर्जुने द्वारकायां सम्प्रस्थिते प्रस्थानपूर्वकं द्वारकायां प्रविष्टे सति। द्वारकायां बन्धूनां दिदृक्षया इति वा अन्वयः॥ १॥

कतिचिन्मासाः व्यतिक्रान्ताः बभूवुः। तथापि ततो द्वारकातः अर्जुनो नाऽऽगच्छत्। तदा कुरूद्वहः युधिष्ठिरः घोररूपाणि निमित्तानि दुःखनिमित्तानि अरिष्टानि ददर्श॥ २॥

विपरीताः ऋतूनां वसन्तादीनां धर्मा यस्य तस्य कालस्य रौद्रां[1] घोरां गतिं च द्वितीयान्तानां ददर्शेति पूर्वेण दृष्ट्वेत्युत्तरेण वा अन्वयः। क्रोधादिप्रवण आत्मा मनो येषां नृणां पापीयसीं वार्तां जीवनार्थप्रवृत्तिम्॥ ३॥

जिह्मप्रायं कौटिल्यप्रचुरं व्यवहृतं व्यवहारं शाठ्यमिश्रं मौर्ख्ययुक्तं सौहृदं च पित्रादीनां परस्परं कल्कनं रागादिदोषं च ॥ ४ ॥

*कन्यां विक्रीणातीति तथा तातं पितरं पित्रोरपोषकं सुतं च वेदेभ्यो विमुखान् ब्राह्मणान् ब्रह्मवादिनो वेदपाठकान् शूद्रांश्च ॥

तथा अत्यरिष्टानि निमित्तानि दुःखसूचकानि काले तु अनुगते निमित्ते निमित्तभूतविपरीतकालानुसारमित्यर्थः[1]। नृणां लोभाद्यधर्मस्वभावं च दृष्ट्वा। लोभादीत्यादिशब्देन क्रोधादिसङ्ग्रहः। नृपः युधिष्ठिरः, अनुजं भीमं प्रोवाच ॥ ५ ॥

तदेवाऽऽह — सम्प्रेषित इति षोडशभिः। द्वारकायां ये बान्धवाः तेषां दिदृक्षया कृष्णस्य विचेष्टितं ज्ञातुं च जिष्णुः सम्प्रेषितः प्रस्थापितः ॥ ६ ॥

हे भीमसेन! सप्त मासाः व्यतिक्रान्ताः अधुनापि कस्माद्धेतोः तव अनुजः अर्जुनः नायाति? इदं अनागमननिमित्तं अहं अञ्जसा न वेद[3]। 'अञ्जसा' इत्यव्ययं तत्त्वशीघ्रार्थयोर्वर्तते ॥ ७ ॥

अपीत्यपिशब्दः सम्भावनाद्योतकः। देवर्षिणा नारदेन आदिष्टः सूचितः सः कालः अधुना उपस्थितोऽपि? उपस्थितः स्यात् किमित्यर्थः। कोऽसौ यस्मिन् काले भगवान् कृष्णः आत्मनः स्वस्य आक्रीडं क्रीडार्थमङ्गं उत्सिसृक्षति त्यक्तुमिच्छति, स कालः आक्रीडं क्रीडार्थं मनुष्यसंस्थानमङ्गं शुद्धसत्त्वमयं अप्राकृतं शरीरं उत्सिसृक्षति भूमेः विश्लेषयितुं इच्छतीत्यर्थः ॥ ८ ॥

---

1 W °द्रीं 2. A,B °सारिणीत्य° 3 W °चि Commentary on addl. V

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

दुर्निमित्तादिसंसारयात्राप्रतिपादनात् तस्य अनित्यत्वज्ञापनेन हरौ परा भक्तिः जायत इत्यर्थः निरूप्यते अस्मिन्नध्याये। तत्र अवशेषं प्रतीक्षत इत्युक्तयदुकुलसंहारकथनपूर्वकं श्रीकृष्णस्य स्वधामप्राप्तिं वक्तुं उपक्रमते — सम्प्रस्थित इति। नारदोक्तपरामर्शेन वीतशोकतया राज्यं पालयन् नृपः स्वानुमतेन विष्णौ अर्जुने द्वारकायां स्थितानां बन्धूनां दर्शनेच्छया मायया इच्छया गृहीतमनुष्यवेषस्य वासुदेवस्य ईहितं चेष्टितं च ज्ञातुं द्वरकां प्रति सम्प्रस्थिते गते ॥ १ ॥

यदा कतिचिन्मासाः दिवसाः व्यतीताः अतिक्रान्ताः, तदा शतशः सहस्राणि घोररूपाणि भयङ्कराणि निमित्तानि आध्यात्मिकाधिभौतिकाधिदैविकान् उत्पातान् ददर्श इत्यन्वयः। "अहस्तु मासशब्दोक्तं यत्र चिन्तायुतं व्रजेत्" इत्यभिधानं तुशब्देन गृहीतम् ॥ २ ॥

उत्पातं दृष्ट्वा किं चकार नृप इति तत्राऽऽह — कालस्येति। कालगत्यादिकं दृष्ट्वा नृपः अनुजं भीमसेनं इत्यभाषत इत्यन्वयः। विपर्यस्ताः [1]वसन्तादीनां ऋतूनां धर्माः पुष्पोद्गमाः अस्य सन्तीति विपर्यस्तर्तुधर्मस्य कालस्य। रौद्रामिति[2] पाठात् गतेरपरिहार्यत्वं वक्ति। क्रोधादिष्वात्मा मनो येषां ते तथोक्ताः, तेषां नृणां वार्तां श्रुत्वा जीवनोपायं प्रवृत्तिं पापीयसीं पापभूयिष्ठां दृष्ट्वा ॥ ३ ॥

व्यवहृतं दानोपादानादिव्यवहारं जिह्मप्रायं **कापट्यप्रचुरं** सौहृदं स्नेहं **शाठ्यमिश्रं स्वप्रयोजनोपेतं** पित्रादीनां कल्कितां **कलङ्कितां कलहं** वा ॥ ४ ॥

अरिष्टानि अशुभानि "अरिष्टं पापशुभयोः, अरिष्टमशुभेऽपि च" इत्यभिधानं **अपिशब्देन अग्राहि**। **पूर्वकालवैलक्षण्यद्योतकः** तुशब्दः। **लोभादिना अधर्मस्वभावम्**॥५, ६ ॥

अत्रापि मासाः दिवसाः अहमञ्जसेदं कारणं न वेद। त्वमिदं वेत्थ। किमिति **वाक्यशेषः** ॥ ७ ॥

आत्मनः स्वस्य आक्रीडं क्रीडास्थानं अङ्गं निजां भूमिं "यस्य पृथिवी शरीरम्" (बृह. उ. 3-7-3) **इत्यादेः**। यत् यदा देवर्षिणा नारदेन "यूयं तावदवेक्षध्वं" इति निर्दिष्टः सः कालः प्रत्युपस्थितः आसन्नोऽपि **किम्**? ॥ ८ ॥

---

1 K.M add व्यत्यस्ताः 2 K रौद्रीमित्यपाठात् 3 K.M साध्य° 4 K.M °दे°

## श्रीराधाकृष्णप्रणीता सुधीसुधा

बन्धुदिदृक्षया बन्धूनां यादवानां दर्शनेच्छया **पुण्यश्लोकस्य कृष्णस्य** विचेष्टितं ज्ञातुं च **जिष्णौ** अर्जुने **द्वारकायां सम्प्रस्थिते** हस्तिनापुरात् गते सति कतिचित् **सप्तसङ्ख्याकाः** मासाः व्यतीताः गताः। **ततो द्वारकायाः** अर्जुनो नाऽऽयात् नाऽऽगच्छत् तदा कुरूद्वहः कुरुकुलनिर्वाहकः **धर्मजः** घोररूपाणि **भीकराणि** निमित्तानि ददर्श दृष्टवान्॥ १, २ ॥

विपर्यस्तर्तुधर्मिणः विपरीत**ऋतुधर्मवतः** कालस्य रौद्रां गतिं क्रोधलोभानृतात्मनां **क्रोधादिपरीतमानसानां नृणां** पापीयसीं हिंसाबहुलां वार्तां प्रवृत्तिं जिह्मप्रायं व्याजबहुलं व्यवहृतं व्यवहारं **शाठ्यमिश्रं वञ्चनोपेतं सौहृदं मित्रत्वं च** पितृमातृसुहृद्भ्रातृदम्पतीनां पित्रादीनां परस्परं कल्कनं कलहञ्च कुरूद्वहो ददर्शेति **पूर्वेणान्वयः** ॥ ३, ४ ॥

काले तु काले च अनुगते अनुकूले सर्वदोषानुकूले सति निमित्तानि इत्थं उक्तानि अनुक्तान्यपि दुःखनिमित्तानि अत्यरिष्टानि तीव्रोत्पातरूपाणि तथा नृणां नराणां लोभाद्यधर्मप्रकृतिं लोभादिभिः **अधर्मैः सहितां प्रकृतिं स्वभावञ्च** दृष्ट्वा नृपो धर्मजः अनुजं भीमं उवाच ॥ ५ ॥

युधिष्ठिरोक्तमेव दर्शयति — **द्वारकायां बन्धुदिदृक्षया पुण्यश्लोकस्य कृष्णस्य** विचेष्टितं ज्ञातुं च **जिष्णुः** अर्जुनः सम्प्रेषितः प्रस्थापितः ॥ ६ ॥

अधुना सप्त मासा गताः। हे भीमसेन! तवानुजः अर्जुनः कस्य वा हेतोर्नायाति? नागच्छति? इदं अनागमनकारणं अञ्जसा तत्त्वेनाहं न वेद न वेद्मि ॥ ७ ॥

यदा यस्मिन् काले भगवान् श्रीकृष्णः आत्मनः स्वस्य आक्रीडं क्रीडासाधनं **अङ्गं मानवदेहं** उत्सिसृक्षति **उत्स्रष्टुं त्यक्तुं इच्छति**। देवर्षिणा नारदेन आदिष्टः सूचितः सोऽयं कालः अपि **उपस्थितः? प्राप्तः किम्?** ॥ ८ ॥

[1]यस्मान्नः सम्पदो राज्यं दाराः प्राणाः कुलं प्रजाः।
आसन् सपत्नविजयो लोकाश्च यदनुग्रहात्॥ ९॥

पश्योत्पातान्नरव्याघ्र! दिव्यान् भौमान् सदैहिकान्।
[2]दारुणान् शंसतोऽदूरात् भयं [3]नो बुद्धिमोहनम्॥ १०॥

ऊर्वक्षिबाहवो मह्यं स्फुरन्त्यङ्ग! पुनः पुनः।
वेपथुश्चापि हृदये आराद्दास्यन्ति विप्रियम्॥ ११॥

शिवैषोद्यन्तमादित्यं अभिरौत्यनलानना।
[4]मामङ्ग! सारमेयोऽयं अभि[5]रैभत्यभीरुवत्॥ १२॥

शस्ताः कुर्वन्ति मां सव्यं दक्षिणं पशवोऽपरे।
वाहांश्च पुरुषव्याघ्र! लक्षये रुदतो मम॥ १३॥

मृत्युदूतः कपोतो[7]ऽयमुलूकः कम्पयन्मनः।
प्रत्युलूकश्च [8]कुह्वानै[9]रनिद्रौ शून्यमिच्छतः॥ १४॥

धूम्रा [10]दिशः परिधयः कम्पते [11]भूः सहाद्रिभिः।
निर्घातश्च[12] [13]महानासीत् साकं च स्तनयित्नुभिः॥ १५॥

वायुर्वाति खरस्पर्शो रजसा विसृजंस्तमः।
असृक् [14]वर्षन्ति जलदा बीभत्समिव सर्वतः॥ १६॥

---

1. K,M येषां नः 2. H,K,M,V घोरमाशंसतो 3. AF,GF मे 4. AF,GF ममाग्रे 5. H,K,M,V,W °रोदि°; N °रौति ह्य° 6. K,M,W °त° 7. K,M °तोग्रावु° 8. K,M हुङ्कारैः; AF,GF कुह्वानो रौद्रोऽसौ शून्यमिच्छति 9. B,I °र्विधं वै; H,V °विधं द्राक् 10 AF,GF दीप्ताः 11. K,M कुः 12. AF,GF °सु° 13. A,B,G,I महांस्तात 14. W °म°

**श्रीध०** अस्माकं सर्वपुरुषार्थहेतुः श्रीकृष्णः, अतस्तद्वियोगं विना अनिष्टं न स्यात् इत्याशयेनाऽऽह — **यस्मादिति**। यस्माच्छ्रीकृष्णात् हेतोः। एतच्च उपरिष्टात् अर्जुनः स्पष्टीकरिष्यति। लोकाश्च यज्ञकरणरूपात् यस्यानुग्रहात्॥ ९॥

**पश्येति**। अदूरात् सन्निहितं नः अस्माकं भयं शंसतः उत्पातान्॥ १०॥

दैहिकानाह — **ऊर्विति**। ऊर्वादयः वामाः स्फुरन्ति। वेपथुः कम्पश्च हृदये वर्तते। एते मह्यं आरात् सन्निहितं विप्रियं दास्यन्ति॥ ११॥

[1]भौमानाह सार्धैस्त्रिभिः — **शिवेति**। शिवा क्रोष्ट्री उद्यन्तं आदित्यं अभिरौति उद्यत्सूर्याभिमुखं क्रोशति। अनलानना अग्निं मुखेन वमन्ती[2] [3]। अङ्ग! हे भीम! मामभिलक्ष्य सारमेयः श्वा[4]ऽभिरेभति प्लुतं भषति। अभीरुवन्निःशङ्कम्[5]॥ १२ ॥

**शस्ता** इति। शस्ता गवादयः मां सव्यं वामं कुर्वन्ति। अपरे गर्दभाद्याः प्रदक्षिणं कुर्वन्ति। वाहान् अश्वान्॥ १३ ॥

**मृत्युदूत** इति। अयं कपोतः मृत्युदूतः मृत्युसूचकः उलूकः घूकः प्रत्युलूकः तत्प्रतिपक्षो घूंकः[6] काको वा कुह्वानैः कुत्सितशब्दैः विश्वं शून्यं कर्तुमिच्छतः॥ १४ ॥

**धूम्रा** इति। धूम्राः धूसराः दिशः परिधयः[7] अग्निमिव[8] लोकमावृण्वन्ति। दिव्यानाह सार्धाभ्याम्[9]। निर्घातः निरभ्रवज्रपातः स्तनयित्नवोऽत्रे[10] गर्जितानि तैस्सह॥ १५ ॥

**वायुरिति।** तमो विसृजन् विशेषेण सृजन् असृक् रक्तम्॥ १६ ॥

---

1. B,H,V आशंसतः 2. H,V °ह° 3 B adds इत्यर्थः 4. H,V रोदिति 5. B °ङ्कवत् 6. B बकः 7. H,V add परिवेषाः 8. H.V अमं 9. H,V निर्घातादिसार्धाभ्याम् 10 B °भ्र°

**वीर०** भगवन्तं विशिनष्टि — यस्मात् भगवतः हेतोः नः अस्माकं सम्पदादयः बभूवुः, यस्य चानुग्रहात् लोकाः पुण्यलोकाः भविष्यन्ति स भगवान् उत्सिसृक्षतीत्यन्वयः। सम्पदः भोग्यभोगोपकरणादिसमृद्धयः। सपत्नविजयः शत्रुविजयः॥ ९ ॥

हे नरव्याघ्र! दिव्यान् दिवि भवान्, भौमान् भूमौ भवान् देहे च भवान् दारुणान् घोरान् अदूरात् समनन्तरमेव नः अस्माकं बुद्धिं मोहयतीति तथाभूतं भयं शंसतः सूचकान् उत्पातान् पश्य॥ १० ॥

तावत् दैहिकान् उत्पातान् दर्शयति — **ऊर्विति**। अङ्ग! हे भीम! मम वामोर्वादयः पुनः पुनः स्फुरन्ति चलन्ति। हृदये वेपथुः कम्पश्च भवति। तान्येतानि ऊर्वादिस्फुरणानि आरात् समनन्तरकालमेव मह्यं अप्रियं दास्यन्ति मम विप्रियसूचकानि[1] भवन्तीत्यर्थः॥ ११ ॥

एषा शिवा शृगालविशेषः अनलवत् ज्वलदाननं यस्यास्सा आदित्यमभि आदित्याभिमुखं रौति। अङ्ग! हे भीम! अयं सारमेयः श्वा. मम अभिमुखं अभीरुवत् अभीतवत् रोदिति रोदनं करोति॥ १२ ॥

शस्ताः प्रशस्ताः गवाश्वादयः पशवः मां सव्यं आत्मनां[2] सव्यपार्श्वस्थं कुर्वन्ति। अपरे अप्रशस्ताः खरमहिष्यादयः[3] तु दक्षिणं कुर्वन्ति। हे पुरुषव्याघ्र! मम वाहान् गजाश्वादीन् रुदतः रोदनं कुर्वाणान् लक्षये॥ १३ ॥

अयमुलूको[4] मृत्योर्दूतः तद्वदनिष्टकरः स च प्रत्युलूकश्च मंदभिमुखं[5] अन्यश्च उलूकश्चानावेतौ अनिद्रौ निद्रारहितौ कुह्वानैः कुकुइत्येवंविधैः ह्वानैश्शब्दैः किति तच्छब्दानुकारः। इमं देशं शून्यमिच्छतः सूचयतः॥ १४ ॥

दिशः धूम्राः परिघयश्च दृश्यन्ते इति शेषः। अद्रिभिः सह भूः पृथिवी कम्पते। स्तनयित्नुभिः मेघैः [7]अकालिकैस्सह महान् निर्घातः अशनिनिर्घातश्च आसीत्॥ १५॥

खरः कठिनः स्पर्शः यस्य स वायुः धूल्या तमः विसृजन् विशेषेण सृजन् वाति। जलदाः मेघाः सर्वतो बीभत्समिव असृक् रुधिरं वमन्ति मुञ्चन्ति॥ १६॥

1. W विप्रियप्राप्तिसू° 2. W °त्मानं 3. W °घा° 4. W adds घूकः 5. W त° 6. W उलूकः तावेतौ 7. W आ°

विज० यस्य कृष्णस्य अनुग्रहात् येषां अस्माकं सम्पदादयः आसंस्तेषां नः स कालः आसन्न इत्यन्वयः। दाराः भार्याः सपत्नानां शत्रूणां विजयः। लोकाः स्वर्गादयः। प्रजाः पुत्राः॥ ९॥

कुतः आशङ्कसे इति तत्राऽऽह— पश्येति। दिव्यान् सूर्यप्रकाशादीन् भौमान् भूकम्पादीन् देहभवाः दैहिकाः तत्र ऊरुस्फुरणादयः तैस्सह वर्तमानाः सदैहिकाः तान् इति त्रिविधान् दृष्टव्यतिरिक्तकारणशून्यान् अशुभसूचकान् उत्पातान् पश्य इत्यन्वयः। कीदृशान् बुद्धिमोहनं भयं अदूरात् इदानीमेव आशंसतः कथयतः तस्मादाशङ्के इति भावः॥ १०॥

दैहिकान् वक्तीत्याऽऽह— ऊर्वक्षीति। ममोरुसक्थ्यादयः पुनः पुनः स्फुरन्ति कम्पन्ते। एते आरात् क्षिप्रं विप्रियं मह्यं दास्यन्तीत्यन्वयः॥ ११॥

अनलोऽग्निः आनने यस्यास्सा तथोक्ता मुखात् अग्निज्वालां उद्गिरन्तीत्यर्थः। एषा शिवा शृगाली उपगच्छन्तं अरुणमादित्यं अभिमुखं रौति रटति। रट[1] शृगालाक्रोशे काकाह्वाने च। सारमेयः श्वा॥ १२॥

शस्ता भरद्वाजादयः मां सव्यं अप्रदक्षिणं, अपरे पशवो बस्तगर्दभादयः मां प्रदक्षिणं कुर्वन्ति। वाहान् अश्वादींश्च रोदनं कुर्वतः मनसा निरूपयामि॥ १३॥

मृत्युदूतः मरणसूचकः कपोतः शिलाकणाशनपक्षी अग्नौ पदं करोति। यत् करोति "यत्कपोतः पदमग्नौ कृणोति" इति मन्त्रादिदं स्वप्ने दर्शनमिति ज्ञातव्यम्। मे मनः कम्पयन् उलूकः प्रत्युलूकश्च मिथो हुङ्कारैः जगत् शून्यमिच्छतः। सर्वनाशे यथा तथा आह्वानं कुरुत इत्यर्थः। कुह्वानमिति केचित्पठन्ति। कुह्वानं नाम तज्जातिध्वनिविशेषः॥ १४॥

परिघयः दिशः धूम्राः धूम्रवर्णाः ज्वलिताः परिवेषा वा स्तनयित्नुभिः अशनिभिः अकालमेघैर्वा साकं महान् निर्घातः निर्मेघगर्जितम्॥ १५॥

वायुः शंसति अपकर्षकालं इत्याह— वायुरिति। रजसा धूल्या तमः अन्धकारं विसृजन् निष्ठुरस्पर्शः वायुः वाति। अथ दिव्यानाह असृ गिति। जलदाः सर्वतोदिशं बीभत्समिव भीषकमिव असृक् रुधिरं वर्षन्ति॥ १६॥

1. B,K,M रटः

**रा० कृ०** यस्माच्छ्रीकृष्णाद्धेतोः नः अस्माकं सम्पदः, राज्यं दाराः, प्राणाः, कुलं परीक्षिद्रक्षणेन सन्ततिः प्रजाः सपत्नविजयः शत्रुविजयः आसन्, यदनुग्रहात् यस्य श्रीकृष्णस्य अनुग्रहात् लोकाश्च पुण्यलोकाश्च आसन् स भगवान् अङ्गं उत्सिसृक्षति इति पूर्वेणान्वयः॥ ९॥

हे नरव्याघ्र! दिव्यान् भौमान् सदैहिकान् दारुणाम् अदूरात् नः बुद्धिमोहनं भयं शंसतः कथयतः उत्पातान् पश्य॥ १०॥

अङ्ग भीम! ऊर्वक्षिबाहवः मम वामाः इति शेषः। पुनः पुनः स्फुरन्ति। हृदये वेपथुश्चापि भवतीति शेषः। एतानि ऊर्वादिस्फुरणानि मह्यं आरात् समीपे विप्रियं दुःखं दास्यान्ति॥ ११॥

अङ्ग! अनलानना अनलवज्ज्वलदाननं यस्यास्सा एषा शिवा उद्यन्तमादित्यं अभिरौति सूर्याभिमुखं आक्रोशति। अयं च सारमेयः मामभि अभिलक्ष्य अभीरुवत् रोदिति॥ १२॥

हे पुरुषव्याघ्र! शस्ताः प्रशस्ताः पशवः गवादयः मां सव्यं आत्मनां सव्यपार्श्वस्थं कुर्वन्ति। अपरे अप्रशस्ताः खरमहिषादयः दक्षिणं मां दक्षिणपार्श्वस्थं कुर्वन्ति। मम वाहान् अश्वान् रुदतः लक्षये पश्यामि॥ १३॥

अयं कपोतः मृत्युदूतः विपरीतरवत्वात् मृत्योः दूत इव प्रतिभाति। उलूकः घूकः प्रत्युलूकः काकश्च अनिद्रौ कुह्वानैः कुत्सितस्वनैः मनः कम्पयन्तौ शून्यं विश्वमिति शेषः। इच्छतः॥ १४॥

दिशः धूम्राः धूसराः परिधयः सूर्यचन्द्रपरिवेषाः दृश्यन्त इति शेषः। भूः अद्रिभिः सह कम्पते। हे तात! भीम! स्तनयित्नुभिः गर्जितैस्साकं सह महान् निर्घातः निर्मेघाशनिपातश्च आसीदिति शेषः॥ १५॥

खरस्पर्शः वायुः रजसा धूल्या तमः अन्धकारं विसृजन् प्रवर्तयन् वाति जलदाः मेघाः सर्वतः सर्वत्र बीभत्समिव असृक् रक्तं वर्षन्ति॥ १६॥

**सूर्यं हतप्रभं पश्य ग्रहमर्दं मिथो दिवि।**
**संसक्[1]कुलैर्भूतगणैः ज्वलिते इव रोदसी॥ १७॥**

**नद्यो नदाश्च क्षुभिताः सरांसि च मनांसि च।**
**न ज्वलत्यग्निराज्येन कालोऽयं किं विधास्यति॥ १८॥**

**न पिबन्ति स्तनं वत्सा न दुह्यन्ति च मातरः।**
**रुदन्त्यश्रुमुखा गावो न हृष्यन्त्यृषभा व्रजे[2]॥ १९॥**

**दैवतानि रुदन्तीव स्विद्य[3]न्ति ह्यु[4]च्चलन्ति च।**
**इमे जनपदा ग्रामा पुरोद्यानाकराश्रमाः।**
**भ्रष्टश्रियो निरानन्दाः किमघं दर्शयन्ति नः॥ २०॥**

मन्य एतैर्महोत्पातैः नूनं भगवतः पदैः ।
अनन्यपुरुष[6]श्रीभिः हीना भू[7]र्हतसौभगा ॥ २१ ॥

इति चिन्तयतस्तस्य दृष्टारिष्टेन चेतसा ।
राज्ञः प्रत्यागमद्ब्रह्मन् यदुपुर्याः कपिध्वजः ॥ २२ ॥

तं पादयोर्निपतितं अयथापूर्वमातुरम् ।
अधोवदनमब्बिन्दून् सृजन्तं नयनाब्जयोः ॥ २३ ॥

विलोक्योद्विग्नहृदयो[9] विच्छायमनुजं नृपः ।
पृच्छति स्म सुहृन्मध्ये संस्मरन्नारदेरितम् ॥ २४ ॥

1. H,V,W सु°; K,M सुसङ्कुले तु भगणे 2 W वने 3 K,M खि° 4 W °त्तीवोच्च° 5. B,H,V प्रच° 6. K,M ° स्त्री ° 7 H,V,W °र्ग° 8. K,M,N,W मुञ्चन्त 9 H,V °यं

**श्रीध० सूर्यमिति** । ग्रहाणां मर्दं युद्धम् । भूता[1] रुद्रानुचराः तेषां गणैः सङ्कुलैः[2] व्यामिश्रैः प्राणिभिः सहितैः रोदसी द्यावापृथिव्यौ ज्वलिते प्रदीप्ते इव च पश्येति ॥ १७ ॥

पुनर्भौमानाह — **नद्य** इति सार्धैः त्रिभिः । प्राणिनां मनांसि च ॥ १८ ॥

**नेति** । न दुह्यन्तीति कर्मकर्तर्यार्षम् । न प्रस्नुवन्तीत्यर्थः ॥ १९ ॥

**दैवतानीति** । दैवतानि प्रतिमाः । अघं दुःखम् ॥ २० ॥

**मन्य** इति । एतैः महोत्पातैः कृत्वा न विद्यते अन्येषु पुरुषेषु श्रीः वज्राङ्कुशादिशोभा येषां तैः भगवतः पदैः हीना भूरिति अहं मन्ये ॥ २१ ॥

**इतीति** । तस्य राज्ञः इत्येवं दृष्टानि अरिष्टानि येन तेन चेतसा चिन्तयतः सतः ॥ २२ ॥

**तमिति** । अयथापूर्वं निपतितं तदेवाऽऽह आतुरं इत्यादिविशेषणैः । अपां बिन्दून् अश्रूणि नेत्राभ्यां विसृजन्तमित्यर्थः ॥ २३ ॥

**विलोक्येति** । उद्विग्नं कम्पितं हृदयं यस्य सः[3] । विच्छायं विगतकान्तिम् नृपः युधिष्ठिरः ॥ २४ ॥

1. H,V भूतानि 2. H,V सुसङ्कुलैः 3. H,V omit सः

**वीर०** हता प्रभा यस्य सः तथाभूतं सूर्यं पश्य । दिवि ग्रहाणां भृग्वङ्गारकादीनां परस्परं विमर्दं कलहं पश्य । सु नितरां सङ्कुलैः भूतानां पिशाचानां गणैः रोदसीत्यव्ययम् द्यावापृथिव्योर्वर्तते[1] ज्वलिते इव दृश्येते ॥ १७ ॥

नद्यः प्राक्स्रोतसः, नदाः प्रत्यक्स्रोतसः। सरांसि भूतानां मनांसि च क्षुभिताः सञ्चलिताः भवन्ति, शुष्का भवन्ति इति वा। अग्निः आहवनीयादिः आज्येन न ज्वलति। अयं कालः किं दुःखं विधास्यति, अहं तु न वेद्मीति भावः॥ १८॥

वत्साः स्तनं स्तन्यं न पिबन्ति मातरश्च वत्सान् प्रति न दुह्यन्ति स्तन्यमिति शेषः। गावः अश्रूणि मुखे यासां ताः रुदन्ति व्रजे गोष्ठे ऋषभा न हृष्यन्ति च॥ १९॥

दैवतानि देवप्रतिमा रुदन्तीव स्विद्यन्ति गात्रप्रस्वेदं मुञ्चन्ति। उच्चलन्तीव उत्प्लुत्य पतन्तीव दृश्यन्ते। पुरादीनामाश्रमाः इमे जनपदा देशाः ग्रामाश्च भ्रष्टा श्रीः येभ्यः, निर्गतः आनन्दः येभ्यः तथाभूता दृश्यन्ते। नः अस्माकं किमघं[2] दुःखं दर्शयिष्यन्ति वयं तु न विद्म इति भावः॥ २०॥

इदं तु अहमुद्भावयामि इत्याह — **मन्य** इति। एतैः महोत्पातैः इदं त्वहं मन्ये उद्भावयामि। किम्? अनन्यपुरुषश्रीभिः न विद्यते अन्यपुरुषेषु श्रीः येषु तैः अन्यपुरुषेषु असम्भावितकान्तिभिः भगवतः श्रीकृष्णस्य पदैः पादविन्यासैः हीना रहिता अत एव हतं सौभगं सौन्दर्यं यस्यां तथाभूता भूः पृथ्वी नूनं भविष्यतीति॥ २१॥

इति इत्थं दृष्टानि ज्ञातानि अरिष्टानि येन तेन चेतसा राज्ञः तस्य युधिष्ठिरस्य चिन्तयतः सतः हे ब्रह्मन्! कपिध्वजः अर्जुनः यदुपुर्याः द्वारकायाः प्रत्यागमत् आगतवान्॥ २२॥

तमागतं पादयोर्निपतितं अनुजं अर्जुनं नृपः युधिष्ठिरः विलोक्य उद्विग्नं भीतं हृदयं यस्य तथाभूतो नारदोक्तं संस्मरन् सुहृदां मध्ये पृच्छति स्म अपृच्छत्। कथम्भूतं? अयथापूर्वं पूर्ववत् अनवस्थितं आतुरं दुःखितं अधोवदनं अवाङ्मुखं नयनाब्जयोः अश्रुबिन्दून् सृजन्तं मुञ्चन्तं विच्छायं विगतकान्तिम्॥ २३, २४॥

---

1. W adds ते 2. W adds अघमूलकं 3. W गतं

**विज॰** दिवि व्योम्नि परस्परं ग्रहमर्दं ग्रहयुद्धं भगणे नक्षत्रसमूहे ससङ्कुले साङ्कर्यसहिते भावप्रधानत्वद्योतनाय ससङ्कुल इत्युक्तम्। तेनापि भयप्रापकत्वमाह। तुशब्देन एवं चेदेवं स्यात् इति ज्योतिश्शास्त्रं प्रमाणीकरोति। रोदसी द्यावापृथिव्यौ ज्वालाकुले इव भातः॥ १७॥

पुनश्च भौमानाऽऽह — **नद्य** इति। स्वर्नद्यादीनां दिव्यत्वसङ्ग्रहार्थमत्र नापाठि। नदाः पुन्नद्यः शोणादयः। क्षुभिताः निमित्तमन्तरेण कलुषाः। नित्यमाज्येन ज्वलनस्वभावः वह्निः आज्येन न ज्वलतीति यस्मात् अतोऽयं कालः किं शमलं **विधास्यति**?॥ १८॥

व्रजे गोष्ठे अश्रु मुखे यासां ताः तथोक्ताः न हृष्यन्ति, नाविष्किरन्ति तटाघातं न कुर्वन्तीत्यर्थः। दैवतानि प्रतिमाः रोदनादौ यो भावः तं कुर्वन्ति॥ १९॥

भ्रष्टश्रियः अत एव निरानन्दाः समृद्धिरहिताः सुखमुक्ता वा अघं व्यसनम्॥ २०॥

एषां उत्पातानां फलं स्वयमेवानुमिनोमि इत्याह — **मन्य** इति। एतैर्महोत्पातैः प्रायेण यादवेन्द्रस्य भगवतः पदैः हीना त्यक्ता अत एव हतसौभगा भूः महीति मन्ये। कथम्भूतैः पदैः? अनन्यपुरुषस्त्रीभिः नान्ये पुरुषाः स्त्रियश्च सौन्दर्ये साम्ये आधिक्ये च वर्तन्ते येषां तानि अनन्यपुरुषस्त्रीणि तैः। दीर्घः छान्दसः। अनन्यैः भगवदेकशरणैः पुरुषैः स्त्रीभिश्च हीनेति वा॥ २१॥

दृष्टारिष्टेन दृष्टाशुभेन व्यसनं अनुमिमानेन चेतसा तस्य युधिष्ठिरस्य राज्ञः इति चिन्तयतः अनुज प्रति कथयतश्च सतः इति शेषः। कपिध्वजः अर्जुनः यदुपुर्याः द्वारकायाः हस्तिनपुरं प्रत्यागमदित्यन्**वयः**॥ २२॥

अयथापूर्वं पूर्वं यथा तथा न भवतीति आतुरं सम्भ्रान्तं रोगिकल्पं वा अधोवदनं अवाङ्मुखं अब्बिन्दून् जलबिन्दून्॥ २३॥

विच्छायं विगतश्रीकं अनुजं निरीक्ष्य उद्विग्नहृदयः त्वरितमनाः पृच्छति स्म अपृच्छदित्यन्**वयः**॥ २४॥

**रा॰ कृ॰** दिवि अन्तरिक्षे हतप्रभं सूर्यं पश्य। मिथः परस्परं ग्रहमर्दं ग्रहाणां कलहं पश्य। सुसङ्कुलैः **प्राण्यन्तरसहितैः** भूतगणैः पिशाचगणैः। ज्वलिते इव प्रदीप्ते इव स्थिते रोदसी द्यावापृथिव्यौ च पश्य॥ १७॥

नद्यो नदाश्च क्षुभिताः क्षोभं प्राप्ताः त्यक्तमर्यादा इत्यर्थः। एवं सरांसि च मनांसि च प्राणिनामिति शेषः। क्षुभितानीति शेषः। लिङ्गव्यत्ययेनान्**वयः।** अग्निः आहवनीयादिः आज्येन **घृतेनापि** न ज्वलति अतोऽयं विपरीतधर्मवान् कालः किं दुःखं विधास्यति करिष्यति, इत्यहं न वेद्मीति शेषः॥ १८॥

वत्साः स्तनं न पिबन्ति मातरश्च न दुह्यन्ति वत्सान् स्तन्यं न पाययन्ति। अश्रुमुखा गावः धेनवः रुदन्ति। व्रजे गोष्ठे ऋषभाः न हृष्यन्ति हर्षं न प्राप्नुवन्ति॥ १९॥

दैवतानि देवताप्रतिमाः रुदन्तीव रोदनं कुर्वन्तीव। स्विद्यन्ति गात्रस्वेदनं कुर्वन्ति। किञ्च प्रचलन्ति **उत्प्लुत्य** पतन्ति। अपि च भ्रष्टश्रियः **निरानन्दा** इमे जनपदाः ग्रामाः पुरोद्यानाकराश्रमाः पुराणि राजधान्यः, उद्यानानि उपवनानि, आकराः सुवर्णाद्युत्पत्तिप्रदेशाः खनयः, आश्रमाः मुनीनां निवासाः। नः अस्माकं किमघं दुःखं दर्शयन्ति दर्शयिष्यन्तीति वयं न जानीम इति यावत्॥ २०॥

**एतैः पूर्वोक्तैः महोत्पातैः** नूनं निश्चयेन अनन्यपुरुषश्रीभिः भगवतः श्रीकृष्णस्य पदैः हतसौभगा नष्टसौभाग्या भूः हीना शून्या भविष्यतीति शेषः मन्ये तर्कयामि॥ २१॥

हे ब्रह्मन्! इति इत्थं दृष्टारिष्टेन चेतसा मनसा तस्य राज्ञः युधिष्ठिरस्य चिन्तयतः सतः कपिध्वजः अर्जुनः यदुपुर्याः द्वारकायाः प्रत्यागमत् प्रत्यागतवान्॥ २२॥

पादयोः निपतितं अयथापूर्वं आतुरं अधोवदनं नयनाब्जयोः अब्बिन्दून् अश्रुबिन्दून् सृजन्तं विमुञ्चन्तं विच्छायं कान्तिहीनं अनुजं अर्जुनं विलोक्य नृपः धर्मजः उद्विग्नहृदयः नारदेरितं नारदोक्तं संस्मरन् सुहृन्मध्ये पृच्छति स्म अर्जुनं वक्ष्यमाणप्रकारेण अपृच्छत्॥ २३, २४॥

युधिष्ठिर उवाच

कच्चिदानर्तपुर्यां नः स्वजनाः सुखमासते ।
मधुभोजदशार्हार्ह[1] सात्वतान्धकवृष्णयः ॥ २५ ॥

शूरो मातामहः कच्चित् स्वस्त्यास्ते वा[2]ऽथ मारिषः[3] ।
मातुलस्सा[4]नुजः कच्चित् कुशल्यानकदुन्दुभिः ॥ २६ ॥

सप्त स्वसारस्तत्पत्न्यो मातुलान्यः सहात्मजाः ।
आसते सस्नुषाः क्षेमं देवकीप्रमुखाः स्वयम्[5] ॥ २७ ॥

कच्चिद्राजाऽऽहुको जीवत्यसत्पुत्रोऽस्य चानुजः ।
हृदीकः[6] ससुतोऽक्रूरः जयन्तगदसारणाः ॥ २८ ॥

आसते कुशलं कच्चिद्ये च शत्रु[7]जिदादयः ।
कच्चिदास्ते सुखं[8] रामो भगवान् सात्वतां प्रभुः[9] ॥ २९ ॥

प्रद्युम्नः सर्ववृष्णीनां सुखमास्ते महारथः ।
गम्भीररयो[10]ऽनिरुद्धो वर्धते[11] भगवानुत ॥ ३० ॥

सुषेणश्चारुदेष्णश्च[12] साम्बो जाम्बवतीसुतः ।
अन्ये च कार्ष्णिप्रवराः सपुत्रा ऋषभादयः ॥ ३१ ॥

तथैवानुचराश्शौरेः श्रुतदेवो[13]द्धवादयः ।
सुनन्दनन्दशीर्षण्या ये चान्ये सात्वतर्षभाः ॥ ३२ ॥

अपि स्वस्त्यासते सर्वे रामकृष्णभुजाश्रयाः ।
अपि स्मरन्ति कुशलं अस्माकं बद्ध[14]सौहृदाः ॥ ३३ ॥

---

1. H,V °भोजकदाशार्हास्त°; B,N,W °भोजदशार्हाश्च; AF GF °भोजदशार्हास्ते कुकुरान्धक° 2 K.M चाथ ; H.V पार्थ! 3 W °ष! 4 H,V °[illegible]° 5 K.M स्त्रियः 6 H.V.W हृदिकस्य सुतो° 7 B शुक्र°, H.V सत्य° 8 H.V सुखी 9 H.V.W पतिः 10 H.V यो गम्भीररयो युद्धे 11 K.M °र्त° 12 H.V °षे° 13 K.M °सेनो° 14 H.V बन्धु°

**श्रीध०** **कच्चिदिति**। स्वजनाः बान्धवाः ॥ २५ ॥

किं वक्ष्यतीति शङ्कया व्यवहितक्रमेण पृच्छति — **शूर** इत्यादिना। मारिषः मान्यः मातामहः शूरो नाम यादवः कुन्त्याः पिता। आनकदुन्दुभिः वसुदेवः ॥ २६ ॥

**सप्तेति**। स्वसारः परस्परम्। वसुदेवक्षेमेण[1] तासामपि क्षेमं पृष्टमेव तथापि पृथक् पृच्छति **स्वयमिति** ॥ २७ ॥

**कच्चिदिति**। आहुकः उग्रसेनः। असन् पुत्रो यस्य। अत एव जीवनमात्रमेव पृष्टम्। अनुजश्च देवकः हृदीकः[2]। सुतः कृतवर्मा जयन्तादयः कृष्णभ्रातरः॥ २८, २९॥

**प्रद्युम्न** इति। सर्ववृष्णीनां मध्ये महारथः गम्भीररयः युद्धे महावेगः वर्धते मोदते इत्यर्थः॥ ३०॥

**सुषेण** इति। कृष्णस्य अपत्यानि कार्ष्णयः तेषु प्रवराः॥ ३१॥

**तथैवेति**। सुनन्दनन्दौ शीर्षण्यौ मुख्यौ येषां ते॥ ३२, ३३॥

---

1. B °क्षेमात्; H,V °क्षेमतः 2 H,V हृदिकस्य

**वीर०** **प्रश्नमेवाऽऽह** — कच्चिदित्यादिना यावदध्यायसमाप्ति। कच्चिदिति इष्टप्रश्नद्योतकं अव्ययम्। तावत् सामान्यतः सर्वान् इष्टान् बन्धून् पृच्छति — **कच्चिदिति**। मध्वादयः यादवान्तरविशेषाः[1]। तच्च नवमे स्फुटम्। नः अस्माकं स्वजनबन्धवः आनर्तपुर्यां द्वारकायां सुखं यथा तथा आसते कच्चित् आसते किम्? तच्च मदिष्टमिति कच्चिच्छब्दं प्रयुञ्जानस्य भावः। एवं उत्तरत्रापि द्रष्टव्यम्॥ २५॥

अथ उक्तविधार्जुनदर्शनेन कृष्णनिर्याणं सम्भाव्य तच्छ्रवणजो विषादः पश्चादेव भवत्वित्यभिप्रायेण तावत् क्रमशः विशेषेण पृच्छति — **शूर** इत्यादिना। अस्माकं मातामहः शूरः हे पार्थ! हे मारिष! सविसर्गपाठे शूरविशेषणं मारिषशब्दः सौम्यशब्दपर्यायः। स्वस्ति यथा तथा आस्ते कच्चित्? तथा नो मातुल आनकदुन्दुभिः वसुदेवः सानुजः कुशली कुशलमस्यास्तीति तथाभूतः आस्ते कच्चित्? वसुदेवस्यानुजास्तु देवभागो, देवश्रवाः, आनकः, सञ्जयः, शामकः, कङ्कः[2], संमिको[3], वत्सरो, वृकश्च इति नव॥ २६॥

सप्तेति स्वसारः उग्रसेनस्येति शेषः।[4] सप्त भगिन्यः। तस्य आनकदुन्दुभेः पत्न्यः मातुलान्यः अस्मन्मातुलस्य वसुदेवस्य स्त्रियः "इन्द्रवरुणभवशर्वरुद्र" (अष्टा. 4-1-49) इत्यानुगागमे ङीषि च मातुलानीति शब्दः व्युत्पादितः। आत्मजैस्सहिताः स्नुषाभिः सुतभार्याभिः सहिता देवकीप्रभृतयः देवकी, श्रुतदेवा, शान्तिदेवा, उपदेवा श्रीदेवा देवरक्षिता सहदेवाख्याः स्वयं क्षेमं यथा तथा आसते कच्चित्?॥ २७॥

असन् दुरात्मा कंसः पुत्रो यस्य स आहुकः उग्रसेनो राजा जीवति कच्चित्? अस्य आहुकस्य चानुजो देवकश्च जीवति कच्चिदित्यन्वयः। हृदीकस्य श्वफल्कस्य[5] सुतः अक्रूरः, जयन्तादयो ये च सत्यजिदादयः वसुदेवपुत्राः ते सर्वे कुशलमासते कच्चित्?॥ २८॥

सात्वतां भक्तानां पतिः। सात्वच्छब्दः भक्तवाचकः[6]। सात्वतशब्दस्तु यादववाचक इति विवेकः। भगवान् बलरामः सुखमास्ते कच्चित्?॥ २९॥

अथ श्रीकृष्णपुत्रान् पृच्छति सर्ववृष्णीनां महारथः प्रद्युम्नः सुखमास्ते कच्चित्? तथा भगवान् गम्भीरवेगः अनिरुद्धश्च वर्धते उत?॥ ३०॥

जाम्बवतीसुत इति साम्बस्य विशेषणम्। सुषेणादयः अन्ये च ऋषभादयः कार्ष्णिप्रवराः श्रीकृष्णसुतश्रेष्ठाः सपुत्राः अपि सुखमासते इत्युपरिष्टादन्वयः ॥ ३१ ॥

तथैव शौरेः भगवतोऽनुचराः श्रुतदेवोद्धवादयः ये चान्ये सात्वतर्षभाः यादवश्रेष्ठाः सुनन्दादयः ॥ ३२ ॥

[7]कृष्णरामभुजा एव आश्रयाः येषां ते सर्वेऽपि स्वस्ति आसते? बद्धसौहृदाः[8] ते सर्वे अस्माकमपि कुशलं स्मरन्ति किं इत्यर्थः ॥ ३३ ॥

---

1. W °वावान्तर° 2 W शमीको 3 W वत्सको 4 W adds उग्रसेनस्य 5 B स्व° 6 W भगवद्भक्त° 7 W कृष्णरामयोः भुजावेव आश्रयौ 8 W adds दृढसौहृदाः

**विज॰** आनर्तपुर्यां द्वारवत्यां मधवश्च भोजाश्च दाशार्हाश्च अर्हाश्च सात्वताश्च अन्धकाश्च वृष्णयश्च मधुभोजदशार्हार्हसात्वतान्धकवृष्णयः ॥ २५ ॥

मारिषः आर्यः मातामहः मातुः पिता, मातुलः मातुः सहोदरः आनकदुन्दुभिः वसुदेवः। कच्चिच्छब्दः प्रश्नार्थे। कुशली सुखी ॥ २६ ॥

वसुदेवस्य सप्त स्वसारः सहोदर्यः कुशलवत्यः किम्? तस्य वसुदेवस्य पत्न्यः अस्माकं मातुलान्यः मातुलभार्याः आत्मजैस्सह वर्तमानाः। अनेन तत्पुत्राणां च कुशलप्रश्नः कृत इति ज्ञातव्यम्। स्नुषाभिः पुत्रभार्याभिः सहिताः ॥ २७ ॥

असन् दुष्टः पुत्रः कंसनामा यस्य सः असत्पुत्रः आहुकः उग्रसेनः अस्यानुजो देवकः ससुतः कृतवर्माख्यपुत्रसहितः हृदीकः पुत्रैः सहितः अक्रूरो वा ॥ २८ ॥

ये शत्रुजिदादयः ते च सुखमासते किम्? रामो बलभद्रः ॥ २९ ॥

सर्ववृष्णीनां मध्ये महारयः गम्भीररयः उग्रवेगः अगाधज्ञानो वा। रय गतौ, गतिः ज्ञानम्॥ ३० ॥

कार्ष्णीनां कृष्णसुतानां प्रवराः कार्ष्णिप्रवराः ॥ ३१ ॥

श्रुतसेनोद्धवादयः शौरेः अनुचराः भृत्याः सुनन्दनन्दौ शीर्षण्यौ प्रधानौ येषां ते सुनन्दनन्दशीर्षण्याः सुनन्दनन्दप्रधाना इत्यर्थः। नन्दशीर्षाद्या इति पाठे सुनन्दो नन्दशीर्षश्च आद्यौ येषां ते तथोक्ता इति योजनीयम्। शीर्षशब्दः प्रधानवाची। पार्षदेषु प्रधानौ सुनन्दनन्दौ आद्यौ येषां ते तथोक्ता इति वा॥ ३२, ३३ ॥

**रा॰ कृ॰** मधुभोजदशार्हार्हसात्वतान्धकवृष्णयः नः अस्माकं स्वजनाः बान्धवाः आनर्तपुर्यां द्वारकायां सुखमासते कच्चित्? सन्ति किम्? ॥ २५ ॥

मारिषः मान्योऽस्माकं मातामहः शूरः स्वस्ति सुखं आस्ते वा कच्चित्? अथ सानुजोऽस्माकं मातुलः आनकदुन्दुभिः वसुदेवः कुशली कच्चित्? ॥ २६ ॥

तत्पत्न्यः तस्य वसुदेवस्य भार्याः स्वसारः परस्परं भगिन्यः देवकीप्रमुखाः अस्माकं सप्त मातुलान्यः सहात्मजाः सस्नुषाश्च स्वयं क्षेममासते कच्चित्? ॥ २७ ॥

असत्पुत्रः दुष्टपुत्रः राजा आहुकः उग्रसेनः जीवति कच्चित्? अस्य उग्रसेनस्य अनुजश्च जीवति कच्चित्? ससुतः हृदीकः हृदीकस्य सुतः कृतवर्मा, अक्रूरः जयन्तगदसारणाः कुशलं आसते कच्चित्? ॥ २८ ॥

ये च शत्रुजिदादयः वर्तन्ते तेऽपि कुशलं आंसते कच्चित्? सात्वतां भक्तानां प्रभुः भगवान् रामः बलरामः सुखमास्ते कच्चित्? ॥ २९ ॥

सर्ववृष्णीनां मध्ये महारथः प्रद्युम्नः सुखमास्ते कच्चित्? उत तथा गभीररयः भगवान् अनिरुद्धः वर्धते कच्चित्? ॥ ३० ॥

सुषेणः चारुदेष्णश्च जाम्बवतीसुतः साम्बः अन्ये च ऋषभादयः कार्ष्णिप्रवराः श्रीकृष्णपुत्रश्रेष्ठाः सपुत्राः स्वस्ति आसते अपि? वर्तन्ते किम्? ॥ ३१ ॥

तथैव शौरेः श्रीकृष्णस्य अनुचराः सेवकाः श्रुतदेवोद्धवादयः ये चान्ये सुनन्दनन्दशीर्षण्याः सुनन्दनन्दप्रमुखाः सात्वतर्षभाः सन्ति तेऽपि स्वस्ति आसते किमिति शेषः ॥ ३२ ॥

रामकृष्णभुजाश्रयाः बलरामश्रीकृष्णभुजाश्रयाः सर्वे स्वस्ति अप्यासते? किञ्च ते बद्धसौहृदाः अस्माकं कुशलं अपि स्मरन्ति? ॥ ३३ ॥

**भगवानपि गोविन्दो ब्रह्मण्यो भक्तवत्सलः ।**
**कच्चित्पुरे सुधर्मायां सुखमास्ते सुहृद्वृतः ॥ ३४ ॥**

**मङ्गलाय च लोकानां क्षेमाय च भवाय च ।**
**आस्ते यदुकुलाम्भोधावाद्योऽनन्तसखः पुमान् ॥ ३५ ॥**

**यद्बाहुदण्डगुप्तायां स्वपुर्यां यदवोऽर्चिताः ।**
**क्रीडन्ति परमानन्दं महापौरुषिका इव ॥ ३६ ॥**

**यत्पादशुश्रूषणमुख्यकर्मणा सत्यादयो द्व्यष्टसहस्रयोषितः ।**
**निर्जित्य सङ्ख्ये त्रिदशांस्तदाशिषो हरन्ति वज्रायुधवल्लभोचिताः ॥ ३७ ॥**

**यद्बाहुदण्डाभ्युदयानुजीविनो यदुप्रवीरा ह्यकुतोभया मुहुः ।**
**अधिक्रमन्त्यङ्घ्रिभिराहृतां बलात् सभां सुधर्मां सुरसत्तमोचिताम् ॥ ३८ ॥**

**कच्चित्तेऽनामयं तात भ्रष्टतेजा विभासि मे।**
**अलब्धमानोऽवज्ञातः किं वा तात! चिरोषितः॥ ३९॥**

1 H.V हि 2 B.K.M °दण्डैर्गु° 3 AF GF °जि° 4 H.V °दण्डप्रभवोपजी°, W °दण्डप्रभवोऽनु° 5 H.V °मि° 6 H.V तत्र

**श्रीध०** **भगवानिति**। भगवान् सुखमास्ते इति प्रश्नस्यानौचित्यमाशङ्क्य आह — पुर इत्यादि॥ ३४॥

भगवतः अत्रावस्थाने हि लोकानां मङ्गलं, नान्यथेत्याशयेनाऽऽह — **मङ्गलायेत्यादि** चतुर्भिः। मङ्गलाय शुभाय क्षेमाय लब्धपालनाय भवाय उद्भवाय अनन्तसखः बलभद्रसहायः॥ ३५॥

**यदिति**। अर्चिताः सर्वैः पूजिताः परमानन्दं यथा भवति तथा। महापुरुषः विष्णुः तदीया महापौरुषिका वैकुण्ठनाथानुचराः इव॥ ३६॥

**यदिति**। यस्य पादशुश्रूषणमेव मुख्यं तपआदिभ्यः श्रेष्ठं यत्कर्म तेन सत्यभामादयः, सङ्ख्ये युद्धे श्रीकृष्णबलेन त्रिदशान् देवान् निर्जित्य तदाशिषो देवभोग्यान् पारिजातादीन्। वज्रायुधस्य वल्लभा शची। तस्या उचिताः॥ ३७॥

**यदिति**। यद्बाहुदण्डप्रभवोपजीविनः सुधर्मां अङ्घ्रिभिः अभिक्रमन्ति स गोविन्दः सुखमास्ते इति गतपञ्चमश्लोकेनान्वयः॥ ३८॥

इदानीं तस्यैव कुशलं पृच्छति — **कच्चिदिति** षड्भिः। अनामयं आरोग्यम्। न लब्धः मानः येन बन्धुभ्यः सकाशात्। किं वा तैः प्रत्युत अवज्ञातः तिरस्कृतः यतः चिरोषितः बहुकालं तत्र स्थितः॥ ३९॥

1 A B भगवति 2 A B °भा° 3 A.B °धि°

**वीर०** अथ भगवतः कुशलं पृच्छति भगवान् कृष्णोऽपि **पुरे** सुधर्मायां सुहृद्भिः वृतः सुखमास्ते कच्चित्?॥ ३४॥

ब्रह्मण्यो भक्तवत्सल इति विशेषणद्वयाभिप्रेतं व्यञ्जयन् पृच्छति — **मङ्गलायेति**। लोकानां जनाना मङ्गलार्थं अनन्तस्य सखा आद्यः पुमान् परमपुरुषः यदुकुलाम्भोधावास्ते कच्चित्? अनन्तसख इत्यनेन बलरामसहितः आस्ते किमिति पृष्टं भवति। क्षेमः लब्धसुखपरिपालनम्। भवः योगः सचालब्धसुखलाभरूपः। तदुभयविधाय मङ्गलायेत्यर्थः॥ ३५॥

तदेव प्रपञ्चयति — **यद्बाह्विति** त्रिभिः। यस्य कृष्णस्य भगवतः बाहुदण्डगुप्तायां स्वपुर्यां द्वारकायां अर्चिताः सर्वैः लोकैः बहुमताः यदवः परमानन्दं यथा तथा क्रीडन्ति। महापौरुषिका इव यक्षा इव॥ ३६॥

यस्य भगवतः पादयोः शुश्रूषणं परिचरणं मुख्यं कर्म तेन हेतुना सत्यभामादयः षोडशसहस्रयोषितः सङ्ख्ये युद्धे त्रिदशान् देवान् निर्जित्य, [4]वज्रमायुधं यस्य स इन्द्रः वल्लभः प्रियः यासां तासां शच्यादीनां उचिताः आशिषः अभीष्टार्थाः पारिजातादयः भगवता आहृता इति शेषः। तदित्यव्ययम्। सामान्याभिप्रायमेकत्वं नपुंसकत्वं वा। ता आशिषः हरन्ति स्वीकुर्वन्ति ॥ ३७ ॥

यस्य भगवतः बाहुदण्ड [5]एवाभ्युदयो येषां ते तदुपजीविनः तद्भृत्याः यदुप्रवीराः न विद्यते कुतोऽपि भयं येषां तथाभूतास्सन्तः सुरसत्तमानां इन्द्रादीनां उचितां[6] तां निर्जित्य बलादाहृतां सुधार्माख्यां सभां अङ्घ्रिभिः मुहुर्मुहुरधिक्रमन्ति [7]अध्याक्रमन्ति ॥ ३८ ॥

[8]ततः तस्य निस्तेजस्कत्वादिहेतून् विकल्पयन् पृच्छति — हे **तात**! तव अनामयं आरोग्यं कच्चित्? मे मम [9]भ्रष्टं तेजः यस्मात् तथाभूतो विभासि लक्ष्यसे। हे तात! त्वं तत्र चिरमुषितः। हेतुगर्भमिदम्। चिरमुषितत्वादलब्धो मानः सम्मानः येन तथाभूतः किम्? अथवा तैरवज्ञातः अवमतः किम्? ॥ ३९ ॥

---

1. A,B omit व्यञ्जयन् 2. A,B add भक्त° 3 W मङ्गलाद्यर्थं 4 W adds याः 5 W एव प्रभुः 6 A °ता 7 A,B omit अध्याक्रमन्ति
8 A,B omit ततः 9. W adds तु

**विज०** सुधर्मायां सभायां ब्रह्मणा वेदेन गम्यत इति ब्रह्मण्यः विप्रप्रियः वा। नित्यसुखस्य हरेः कुशलोद्देशे न मे प्रश्नः किन्तु लोकसुखकरत्वोद्देशः इत्ययमर्थः अपिशब्देन दर्शितः ॥ ३४ ॥

एतमेवार्थं दर्शयति — **मङ्गलायेति**। सः अनन्तः शेषः सखा यस्य सः अनन्तसखः आद्यः पुमान् लोकानां मङ्गलाय शुभाय क्षेमाय प्राप्तपरिपालनाय, भवाय वृद्धये यदुकुलसमुद्रे आस्ते कच्चिदित्यन्वयः। चशब्दाः मिथः समुच्चयार्थाः, मङ्गलाद्यनेकप्रयोजनार्थाः ॥ ३५ ॥

यदवः यस्य कृष्णस्य बाहुदण्डैः रक्षितायां स्वपुर्यां क्रीडन्तीत्यन्वयः। क इव परमानन्दं प्राप्य महापौरुषिका इव मुक्ता इव परमानन्दापरपर्यायं वा। वैश्रवणबाहुदण्डगुप्तं चैत्ररथं प्राप्य महापौरुषिका यक्षा इव वा ॥ ३६ ॥

यस्य हरेः पादयोः शुश्रूषणं सेवालक्षणं तदेव मुख्यं कर्म तेन साधनेन सत्यादयः सत्यभामापुरस्सराः द्व्यष्टसहस्रयोषितः षोडशसहस्रसङ्ख्याः स्त्रियः सङ्ख्ये युद्धे त्रिदशान् इन्द्रादीन् निर्जित्य वज्रायुधस्य इन्द्रस्य वल्लभायाः शच्याः उचिताः तदाशिषः तेषां इन्द्रादीनामाशिषः पारिजातादिकाः हरन्ति आच्छिद्य स्वीकुर्वन्तीत्यन्वयः ॥ ३७ ॥

यस्य हरेः बाहुदण्डानां अभ्युदयः दिग्विजयश्रीः तां अनुजीवितुं शीलाः, अत एव अकुतोभयाः यदुप्रवीराः सुरसत्तमस्य इन्द्रस्य उचितां बाहुबलाहृतां आनीतां सुधर्माख्यां सभां अङ्घ्रिभिरनुदिनं अधिक्रमन्ति आक्रम्य तिष्ठन्तीत्यन्वयः ॥ ३८ ॥

तव किमेतादृशदुःखनिमित्तमिति पृच्छतीत्याह — **कच्चिदिति**। हे तात! ते तव अनामयं कच्चित् सुखं किम्? कुतः कुशलप्रश्नः इति तत्राऽऽह — भ्रष्टतेजा इति। भ्रष्टतेजस्त्वे कारणं पृच्छति — अलब्धेति। अलब्धः मानः येन स तथोक्तः न केवलं मानाभावः किन्तु अवज्ञातश्च किं इत्याह — अवज्ञात इति। पूर्वं चिरोषितः अद्य किं वा क्षिप्रमागतः तद्ब्रूहीत्यन्वयः ॥ ३९ ॥

**रा० कृ०** ब्रह्मण्यः ब्राह्मणभक्तः भक्तवत्सलः भगवान् गोविन्दोऽपि सुहृद्वृतः पुरे द्वारकायां सुधर्मायां तन्नाम्न्यां सभायां सुखमास्ते कच्चित्? ॥ ३४ ॥

लोकानां मङ्गलाय क्षेमाय लब्धेष्टरक्षणाय, भवाय अलब्धाभिमतलाभाय च अनन्तसखः शेषावतारबलराम-सखः आद्यः पुमान् परमपुरुषः श्रीकृष्णः यदुकुलाम्भोधौ सुखमास्ते कच्चित्? ॥ ३५ ॥

इतः परं रक्षितारं भगवन्तं त्रिभिः वर्णयति — यद्बाहुदण्डगुप्तायां स्वपुर्यां द्वारकायां अर्चिताः यदवः महापौरुषिका इव भगवतः अनुचरा इव परमानन्दं क्रीडन्ति। सत्यादयः सत्यभामादयः **द्व्यष्टसहस्रयोषितः** षोडशसहस्रयोषितः यत्पादशुश्रूषणमुख्यकर्मणा सङ्ख्ये युद्धे त्रिदशान् निर्जित्य वज्रायुधवल्लभोचिताः इन्द्रप्रेयसीनां शच्यादीनां उचितास्तदाशिषः तेषां देवानामाशिषः भोग्यान् पारिजातादीन् **गृह्णन्ति**। यद्बाहुदण्डाभ्युदयानुजीविनः यस्य भगवतः बाहुदण्डयोः अभ्युदयः प्रभावः तदनुजीविनः यदुप्रवीराः अकुतोभयास्सन्तः सुरसत्तमोचितां इन्द्रादीनामुचितां बलात् आहृतां भगवता स्वप्रभावेण आनीतां सुधर्मां तदाख्यां सभां अङ्घ्रिभिः मुहुर्मुहुः अधिक्रमन्ति। स भगवान् गोविन्दः सुखमास्ते कच्चित्? इति पूर्वेणान्वयः ॥ ३६, ३७, ३८ ॥

हे तात! अर्जुन! मे मम भ्रष्टतेजाः नष्टकान्तिः विभासि। अतः ते तव अनामयं कच्चित् आरोग्यमस्ति किम्? अथवा तत्र द्वारकायां चिरोषितः चिरकालं निवासं कृतवान् त्वं अलब्धमानः अप्राप्तसम्मानः अवज्ञातः किम्? तैर्यादवैः तिरस्कृतः किम्॥ ३९ ॥

**कच्चिन्नाभिहतोऽभावैः शब्दादिभिरमङ्गलैः ।**
**न दत्तमुक्तमर्थिभ्यः आशया यत्प्रतिश्रुतम् ॥ ४० ॥**

**कच्चित्त्वं ब्राह्मणं बालं गां वृद्धं रोगिणं स्त्रियम् ।**
**शरणोपसृतं सत्त्वं नाऽत्याक्षीः शरणप्रदः ॥ ४१ ॥**

**कच्चित्त्वं नागमो गम्यां गम्यां वाऽसत्कृतां स्त्रियम् ।**
**पराजितो वाऽथ भवान् नोत्तमैर्नासमैः पथि ॥ ४२ ॥**

**अपिस्वित्पर्यभुङ्क्थास्त्वं सम्भोज्यान् वृद्धबालकान् ।**
**उपेक्ष्यातिथिभृत्यांश्च गर्भिण्यातुरकन्यकाः ।**
**जुगुप्सितं कर्म किञ्चित् कृतवान्न यदक्षमम् ॥ ४३ ॥**

कच्चित्प्रेष्ठतमेनाथं हृदयेनात्मबन्धुना।
शून्योऽस्मि रहितो नित्यं मन्यसे तेऽन्यथा न[10] रुक्॥ ४४॥

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
प्रथमस्कन्धे युधिष्ठिरवितर्को नाम चतुर्दशोऽध्यायः॥ १४॥

1. K,M भावैः 2 K,M दत्तं युक्त° 3 AF GF रुदन्तं 4 K,M °ण्यो° 5 K,M °र्नाधमैः; W °र्वाधरैः • This additional half verse is found in H,N,V 6 N सु° 7 AF,GF °कृतं वा यत्; K,M कृतवानसद°, W कृतवात्रः किम° 8. H,V °क्ष्! 9. K,M °सि 10. K,M हि

**श्रीध॰ कच्चिदिति।** अभावैरिति छेदः। प्रेमशून्यैः[1] अमङ्गलैः परुषैः शब्दादिभिः नाभिहतः न ताडितोऽसि किम्? यद्वा अर्थिभ्यः अपि[2] दास्यामीत्युक्तं न दत्तं किम्? यद्वा आशया सह यथा आशा भवति तथा दास्यामीति प्रतिश्रुतं यत् तत्र दत्तं किम्?॥ ४०॥

**कच्चिदिति।** अन्यद्वा शरणागतं सत्त्वं प्राणिमात्रं नात्याक्षीः न त्यक्तवानसि किम्? यतस्त्वं पूर्वं शरणप्रदः आश्रयप्रदः॥ ४१॥

**कच्चिदिति।** अगम्यां इति छेदः। निन्दितां स्त्रियं नागमः किम्? न गतवानसि किम्? असत्कृतां मलिनवस्त्रादिकां गम्यां नागमः किम्? न उत्तमैः अनुत्तमैः समैः इत्यर्थः। असमैरधमैर्वा किं न पराजितोऽसीत्यर्थः॥ ४२॥

**अपीति।** सुभोजनार्हान्[3] वृद्धान् बालकांश्च[4] किंस्वित्पर्यभुङ्क्थाः त्यक्त्वा भुक्तवानसि किम्? अक्षमं कर्तुमयोग्यं यत्तत्र कृतवानसि किम्?॥ ४३॥

**कच्चिदिति।** नित्यं सदा प्रेष्ठतमेन हृदयेन अन्तरङ्गेण[5] स्वबन्धुना श्रीकृष्णेन रहितः शून्योस्मीति आत्मानं[6] मन्यसे। यद्वा[7] हृदयेन शून्योस्मीति मन्यसे इत्यर्थः। अन्यथा ते रुक् मनःपीडा न घटेत[8]?॥ ४४॥

इति श्रीमद्भागवते प्रथमस्कन्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां चतुर्दशोऽध्यायः॥ १४॥

1 H,V प्रिय° 2 A,B किमपि दास्यामीति नोक्तं किम्? 3 A,B सम्भोज° 4 H,V add पर्यभुङ्क्थाः तानसम्भोज्य भुक्तवानसि। परित्र वर्जनार्थः। 5 H,V अत्यन्तान्त° 6. A,B omit आत्मानं 7 A,B omit यद्वा ...... इत्यर्थः। 8 H,V घटते।

**वीर॰** अभावैरिति च्छेदः। न विद्यते-भावः सद्भावः येषान्तैः अमङ्गलैर्वा शाब्दादिविषयैः नाभिहतः। आशया अर्थिभ्यः यांचकेभ्यः[1] यत्प्रतिश्रुतं दास्यामीति प्रतिज्ञातं तत् तेभ्यः किं वा न दत्तम्?॥ ४०॥

ब्राह्मणादीन् अन्यं[1] च शरणोपसृतं शरणागतं सत्त्वं जन्तुं शरणप्रदः रक्षकस्त्वं नात्याक्षीः कच्चित्? ॥ ४१ ॥

अगम्यां स्त्रियं त्वं नागमः न गतवान् कच्चित्? गम्यामप्यसत्कृतां वा नागमः कच्चित्? अथ ननु भवान् पथ्युत्तमैः अधमैर्वा[3] जनैः पराजितो वा किम्? ॥ ४२ ॥

सम्भोज्यान् सह भोक्तुं योग्यान् वृद्धान् बालकांश्च। परीत्यव्ययं वर्जनार्थम्। परित्यज्य **त्वमभुङ्क्थाः अपि,** भुक्तवान् किम्? नः अस्माकं अक्षमं असह्यं किञ्चित् निन्दितं कर्म कृतवान् किम्? ॥ ४३ ॥

हृदयेन हृदयङ्गमेन नित्यं प्रियतमेन आत्मबन्धुना श्रीकृष्णेन रहितः अत एव शून्यो निरानन्दोऽस्मीति मन्यसे कच्चित्? अन्यथा उक्तहेतूनां अन्यतमस्याप्यभावे ते तव रुक् रोगः आधिः न स्यात्। यद्वा रुक् दीप्तिः अन्यथा न प्रागिव **नास्ति**। अतः केनचित् उक्तान्यतमेन हेतुना भवितव्यमित्यर्थः ॥ ४४ ॥

इति श्रीमद्भागवते प्रथमस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां चतुर्दशोऽध्यायः ॥ १४ ॥

---

1. W याचमानेभ्यः 2 W पश्च 3 W °रै°

**विज॰** अवज्ञा च इङ्गितैः क्रियया वाचा वा **स्यात्**, तत्र तव एकेन सर्वैः किं वा इत्यभिप्रेत्य पृच्छति — **कच्चिदिति**। आदिशब्देन इङ्गितक्रिये गृहीते। शब्दादिभिरवज्ञाने कारणं स्वदोषः परदोषो वा? तत्र स्वदोषो नास्ति हीति पृच्छति — न दत्तमिति। वित्ताशया प्राप्तेभ्यः अर्थिभ्यः युक्तं योग्यं दास्यामीति प्रतिज्ञातं तत्र दत्तं किं, इतीयं वै स्वदोषात्; दत्वापि तदाशापूर्तिपर्यन्तं न दत्तं इतीयं परदोषात्; उभयं च न प्राप्तं हीति वा वाक्यार्थः ॥ ४० ॥

ब्राह्मणादि सत्त्वं जीवजातं **शरण्योपसृतं** शरणार्थितया प्राप्तं शरणप्रदः त्वं नात्याक्षीः रक्षामकृत्वा त्यक्तवानसि किम्? अरक्षितैः तैः अवज्ञातः इति वाक्यार्थः ॥ ४१ ॥

अगम्यां विधवां परस्त्रियं वा, गम्यां असत्कृतां वा स्नानादिसंस्काररहितां प्रदानकर्मरहितां वा स्त्रियं नागमः न गतवानसि किम्? इयं च पार्थ! एवंविधं कर्म करोतीति काचित् स्वदोषनिमित्तावज्ञा ॥ ४२ ॥

आवृद्धबालकान् बालावधि सर्वान्, अभोज्यान् भोजयित्वा पर्यभुङ्क्थाः भुक्तवानसि किम्? सम्भोज्यानिति पाठे सह भोक्तुं योग्यान् वर्जयित्वा भुक्तवानसीत्यर्थः[1] अक्षमं कर्तुमशक्यं तादृशं किञ्चित् शास्त्रे निषिद्धं कर्म कृतवान् किम्? एकादशीभोजनं स्वर्णस्तेयं निधानोद्धरणमित्यदिजुगुप्सितं कर्म ॥ ४३ ॥

उक्तं सर्वं विच्छायत्वे न पूर्णमिति मत्वा कारणान्तरं पृच्छति — **अथेति**। अथ यं नित्यं प्रेष्ठादिगुणत्वेन मन्यसे तेन सर्वतः प्रेष्ठेन प्रियतमेन हृदयेन मनोहारिणा आत्मबन्धुना स्वाभाविकबन्धुना कृष्णेन रहितः वियुक्तः सन् शून्यः अमङ्गलोऽसि कच्चित्? ते तव रुक् शरीरकान्तिः[2] तु अन्यथा न पूर्ववत् हि यस्मात् तस्मात् तेन वियुक्तः

अमङ्गलो भवितुमर्हसीति मन्ये, नित्यं प्रेष्ठतमेन रहितः शून्यः अस्मीत्यात्मानं हृदयेन मन्यसे। सर्वथा तव शरीरकान्तिरसत्यन्यथा, न पूर्ववदिति वा। प्रेष्ठेन तेन रहितः शून्योऽस्मीति मन्यसे, अन्यथा तथा मननाभावे रुक् रोगः मनोव्यथा कथमिति वा। त्वं धर्मिष्ठत्वात् आत्मैकनिष्ठत्वाच्च कृष्णप्रेष्ठत्वाच्च लोकशास्त्रनिषिद्धं[3] न करोषि हि। तस्मात् तेन कृष्णेन वियुक्तत्वात् तव विच्छायत्वं इति मन्ये इति हिशब्दार्थः ॥ ४४ ॥*

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां
टीकायां प्रथमस्कन्धे चतुर्दशोऽध्यायः ॥ १४ ॥

---

1. K,M add असत् 2. B,K,M प्रभा अन्यथा 3. B,K,M °द्धं * Here ends 13th Chapter in K & M

**रा० कृ०** अभावैः सद्भावशून्यैः अमङ्गलैः शब्दादिभिः कच्चिन्नाभिहतः? असीति शेषः। अथवा आशया यत् अर्थिभ्यः प्रतिश्रुतं दास्यामीति प्रतिज्ञातं उक्तं तत् तेभ्यः न दत्तं कच्चित्? ॥ ४० ॥

शरणप्रदः रक्षणदाता त्वं ब्राह्मणं बालं गां धेनुं वृद्धं रोगिणं स्त्रियं अथवा शरणोपसृतं शरणागतं सत्त्वं प्राणिमात्रं नात्याक्षीः कच्चित्? नात्यजः किम्? ॥ ४१ ॥

त्वमगम्यां निन्द्यां स्त्रियं नागमः कच्चित्? गम्यां वा योग्यां अप्यसत्कृतां मलिनवस्त्रादिसहितां नागमः कच्चित्? अथवा भवान् पथि मार्गे नोत्तमैः अनुत्तमैः समैः इत्यर्थः। असमैः अधमैर्वा न पराजितोऽसि कच्चित्? ॥ ४२ ॥

सम्भोज्यान् सहभोजनार्हान् वृद्धबालकान् अपिस्वित् पर्यभुङ्क्थाः? परित्यज्य भुक्तवानसि किम्? अक्षमं कर्तुमयोग्यं यत्किञ्चित् जुगुप्सितं कर्म, न कृतवानसि किम्? इति शेषः ॥ ४३ ॥

अथ नित्यं प्रेष्ठतमेन प्रियतमेन आत्मबन्धुना श्रीकृष्णेन रहितः अत एव हृदयेन शून्योऽस्मि शून्यहृदयोऽस्मीति कच्चिन्मन्यसे? अन्यथा ते धीरस्य न रुक् मनःपीडा न भवति ॥ ४४ ॥

इति श्रीमद्भागवते प्रथमस्कन्धे
श्रीराधाकृष्णप्रणीतायां सुधीसुधायां व्याख्यायां
चतुर्दशोऽध्यायः ॥ १४ ॥



# पञ्चदशाऽध्यायः

## सूत उवाच

एवं कृष्णसखः कृष्णो भ्रात्रा राज्ञा[1]ऽविकल्पितः
ना[2]नाशङ्कास्पदं रूपं कृष्णविश्लेषकर्शि[3]तः ॥ १ ॥

शो[4]केन शुष्यद्वदनहृत्सरोजो[5] हतप्रभः[6] ।
विभुं तमेवानुध्या[7]यन्नाशक्नोत्प्रतिभाषितुम् ॥ २ ॥

कृच्छ्रेण संस्तभ्य शुचः पाणिनाऽऽमृज्य नेत्रयोः[8] ।
प[9]रोक्षेण स[10]मुन्नद्ध प्रणयौत्कण्ठ्यकातरः ॥ ३ ॥

सख्यं मैत्रीं सौ[11]हृदं च सारथ्यादिषु संस्मरन् ।
नृपमग्रजमित्याह बाष्पगद्गदया गिरा ॥ ४ ॥

## अर्जुन उवाच

वञ्चितोऽहं महाराज! हरिणा बन्धुरूपिणा ।
येन मेऽपहृतं तेजो देवविस्माप[12]नं महत् ॥ ५ ॥

यस्य क्षणवियोगेन लोकोह्यप्रियदर्शनः ।
उक्थेन रहितो ह्येष मृतकः प्रोच्यते यथा ॥ ६ ॥

यत्संश्रयात्[13] द्रुपदगेहमुपागतानां राज्ञां स्वयंवरमुखे स्मरदुर्मदानाम् ।
तेजो हृतं खलु मया[14]ऽभिहतश्च मत्स्यः सज्जीकृ[15]तेन धनुषा[16]ऽधिगता च कृष्णा ॥ ७ ॥

यत्सन्निधावहमु खाण्डवमग्नयेऽदाम् इन्द्रं च सामरगणं तरसा विजित्य ।
लब्धा सभा मयकृताद्भुतशिल्पमाया दिग्भ्योऽहरन्नृपतयो बलिमध्वरे ते ॥ ८ ॥

---

1 B,H,I,K,M,V,W °ज्ञा वि° 2 Af,Gf न शशाकास्य गदितुं 3 K,M,W °र्षि° 4 K,M शोकाग्नि° 5 K,M °जं 6. K,M °भम् 7. I °स्मर° 8 K,M °जम् 9. K,M पारोक्ष्येण 10 Af,Gf सुसन्नद्धं 11. H,V सुहृत्त्वं 12 W °य° 13 K,M,W °गेह उपा° 14. B °या नि°; K,M °या वि° 15. W °ज्यी° 16. Af,Gf विजिता

## श्रीधरस्वामिविरचिता भावार्थदीपिका

कलिप्रवेशमालक्ष्य धुरं न्यस्य परीक्षिति।
आरुरोह नृपस्स्वर्गं इति पञ्चदशेऽब्रवीत्॥

**एवमिति।** कृष्णोऽर्जुनः। [1]आविकल्पित इति च्छेदः। नानाशङ्कास्पदं रूपमालक्ष्य विकल्पित इत्यर्थः। प्रतिभाषितुं नाशक्नोदित्युत्तरेणान्वयः। तत्र [2]हेतवः कृष्णविश्लेषेण कर्शितः कृशः कृतः॥ १॥

**शोकेन** इति। शोकेन हेतुना वदनं च हृच्च ते एव सरोजे शुष्यती [3]तापातिशयेन शुष्के वदनहृत्सरोजे यस्य सः। हता प्रभा तेजो यस्य सः॥ २॥

**कृच्छ्रेणेति।** शुचः शोकाश्रूणि **यान्युदुच्छ्रितानि** तानि नेत्रयोरेव संस्तभ्य गलितानि च पाणिनाऽऽमृज्य **परोक्षेण** दर्शनागोचरेण श्रीकृष्णेन हेतुना समुन्नद्धमधिकं **यत्प्रेमौत्कण्ठ्यं** तेन कातरो व्याकुलः सन् नृपमित्याहेत्युत्तरेणान्वयः॥ ३॥

**सख्यमिति।** सख्यं हितैषिताम्। मैत्रीम् उपकारितां **सौहृदं सुहृत्त्वं** त्रात् सम्बन्धितां च। **बाष्पेण** कण्ठावरोधात् **गद्गदया** गिरा॥ ४॥

**वञ्चित** इति। येन मां वञ्चयता। देवान् [5]ब्रह्मरुद्रादीन् विस्मापयतीति यत् महत् सर्वोत्कृष्टम्॥ ५॥

**यस्येति।** यस्य क्षणवियोगेन इत्यादिश्लोकस्थयच्छब्दानाम् [6]अन्ते "तेनाहमद्य मुषितः" (भाग. 1-15-13) इति इतः सप्तमश्लोकस्थेन तच्छब्देन सम्बन्धः। प्रियस्याप्यप्रियत्वे दृष्टान्तः। **उक्थेन** प्राणेन। रहित एव पित्रादिः॥ ६॥

श्रीकृष्णोपकाराननुस्मरति — **यत्संश्रयात्** इति दशभिः। यस्य संश्रयात् बलात् स्मरेण कामेन दुर्मदानामतिमत्तानां तेजः प्रभावो हृतं धनुर्ग्रहणेनैव पश्चात्तद्धनुः **सज्जीकृतं** [7]ज्यासहितं च तेन च **मत्स्यो लक्ष्यः** परिभ्रमन् विद्धः [9]ताडितः ततस्तान् विजित्य कृष्णा द्रौपदी प्राप्ता च॥ ७॥

**यदिति।** उ इति विस्मये। **खाण्डवमिन्द्रस्य** वनं [10]काण्डवमिति वा पाठः। [11]अग्नये अदां दत्तवानस्मि। खाण्डवदाहे रक्षितेन मयेन कृता च सभा लब्धा। अद्भुतशिल्परूपा माया यस्यां सा। निखिलजगदाश्चर्यकरशिल्पनिर्माणेन जगन्मोहिनीत्यर्थः। ते अध्वरे यागे राजसूये बलिं धनादिरूपमर्हणद्रव्यजातम्॥ ८॥

---

1. H,V विकल्पितः 2. H,V हेतुः 3 A,B omit तापातिशयेन शुष्के 4. H,V omit सौहृदं 5. A,B omit ब्रह्मरुद्रादीन् 6. A,B omit अन्ते 7. A,B omit ज्यासहितं 8. A,B यन्त्रोपरि भ्र° 9. A,B omit ताडितः 10. A,B omit काण्डवमिति वा पाठः। 11. A.B omit निखिल ... त्यर्थः।

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

**एवमिति।** इत्थं कृष्णस्य भगवतः सखा कृष्णोऽर्जुनो भ्रात्रा राज्ञा युधिष्ठिरेण नानाविधानां शङ्कानामास्पदं निमित्तं रूपं तेजोहीनं स्वकीयं रूपं प्रति विकल्पितः कृष्णस्य भगवतो विश्लेषेण वियोगेन कर्षितः॥ १॥

तद्विश्लेषजशोकेन शुष्यद्वदनं हृदयकमलं च यस्य सः, अत एव हता प्रभा यस्य तथाभूतः तमेव विभुं श्रीकृष्णमभिध्यायन् प्रतिभाषितुं प्रतिवक्तुं नाशक्नोत् न शशाक॥ २॥

ततः कृच्छ्रेण महता प्रयत्नेन शुचः शोकान् संस्तभ्य, नेत्रयोः नेत्रे। कर्मणि षष्ठी। पाणिना आमृज्य। यद्वा, संस्तभ्य मन इति शेषः। नेत्रयोश्शुचः शोकाश्रूणि पाणिना संमृज्य, परोक्षेणातिसमुन्नद्धः उत्कटः प्रणयः स्नेह औत्कण्ठ्यं प्रेमपूर्वकानुध्यानं विरहासहत्वदशा वा; ताभ्यां कातरः अधीरः॥ ३॥

बाष्पैः गद्गदया कुण्ठीभूतया गिरा अग्रजं नृपतिम्, इतीत्थं वक्ष्यमाणया रीत्या आहेत्यन्वयः। कथम्भूतस्सन्? सारथ्यादिषु कर्मसु सख्यादीन् संस्मरन्। तत्र सौहृदं हितैषित्वं मित्रत्वं प्रियैषिता समानशीलत्वं सखित्वम्। नियोगादिकरणार्हत्वं वा मित्रत्वम्॥ ४॥

उक्तिमेवाऽऽह — **वञ्चित** इति त्रयोविंशत्या। हे महाराज! अहं बन्धुरूपिणा बन्धुरूपतां प्राप्तेन हरिणा आश्रितार्तिहरेण साक्षाद्भगवता वञ्चितोऽस्मि, रहितोऽस्मीत्यर्थः। येनेत्यादीनां यच्छब्दानां "तेनाहमस्मि मुषितः पुरुषेण भूम्ना" (भाग. 1-15-13) इत्युपरिष्टादन्वयः। देवानामपि विस्मापनम् आश्चर्यकरं यन्महत् मत्तेजो येनापहृतं, देवेति युधिष्ठिरस्य सम्बोधनं वा॥ ५॥

यस्य च भगवतः क्षणमात्रवियोगेनापि अप्रियं दर्शनं यस्य तथाभूतोऽयं मत्प्रभृति लोको भवति, तथैव लोकः उक्थेन प्राणेन रहितः मृतकः शवः प्रोच्यते। अपिशब्दाद्दर्शनायोग्यश्च प्रोच्यते, तद्वत्॥ ६॥

**यत्संश्रयात्** इति। अस्मदीयशौर्यवीर्यादिकं यदधीनं तेन वञ्चितोऽस्मीति समुदायार्थः। द्रुपदगेहे द्रौपद्याः स्वयंवरमुखे स्वयंवरप्रारम्भे स्मरेण कामेन हेतुना दुष्टो मदो येषां तेषामुपागतानां राज्ञां तेजो मया यस्य भगवतः संश्रयाद्धेतोः अपहृतं खलु। तथा सज्जीकृतेन समारोपितज्यागुणकेन धनुषा मत्स्यो मत्स्याकारो यन्त्रविशेषश्चाभिहतः छिन्नः। कृष्णा द्रौपदी चाधिगता लब्धा च॥ ७॥

**यत्सन्निधौ** इति। यस्य भगवतः सन्निधौ हेतुभूते अमरगणैस्सहितं इन्द्रं जवेन विजित्य, खाण्डवाख्यं वनमहमग्नये अदां दत्तवानस्मि। अहमु इति च्छेदः। उशब्दः निपातो विस्मयद्योतकः। अत्याश्चर्यमयं एवंविधं कर्म कृतवानस्मीति भावः। तथा मयकृतानि मयेन निर्मितानि अद्भुतानि आश्चर्यभूतानि शिल्पानि प्रतिमादीनि माया अन्यान्यप्याश्चर्याणि यस्यां सा सभा मया लब्धा अद्भुतानि शिल्पानि पाणिपादादिनैपुण्यानि यासु ता माया

आश्चर्यरूपाः प्रतिमादयो यस्यामिति वा, तथा यत्सन्निधौ ते तव अध्वरे अश्वमेधे नृपतयो दिग्भ्यो बलिमुपाहरन्नाहृत्य समर्पयामासुः ॥ ८ ॥

1 A,B omit इत्थं 2 A °र्शि° 3 W adds वा 4 W °पि 5 W °य° 6 W मम तेजो 7 A,B राज्ञः 8. A,B °ददर्शनयो° 9 A,B °शौर्यादिकं 10 W °ज्यी° 11 W °बा° 12 A,B omit °नि 13 A,B omit °नि

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

*भगवति भक्तिविधानार्थं दुःखकथनव्याजेन तन्महिमा प्रतिपाद्यतेऽस्मिन्नध्याये। कृष्णस्य विश्लेषेण वियोगेन कर्षितः उत्कनानाशङ्कया आस्पदं शोकाग्निना शुष्यती वदनहृत्सरोजे यस्य तत्तथोक्तः। अत एव हतप्रभं नष्टकान्तिरूपमाकारं दृष्ट्वा भ्रात्रा राज्ञा विकल्पित एवं वा एवं वेति बहुकोटिविषयीकृतः तमेव विभुमनुध्यायन् निरन्तरं चिन्तयन् कृष्णस्य सखा अर्जुनः प्रतिभाषितुं नाशक्नोदित्येकान्वयः ॥ १, २ ॥

शोकहेतूनामनेकत्वात् बहुवचनम्। शुचः शोकान् कृच्छ्रेण संस्तभ्य पाणिना नेत्रजमश्रु आमृज्य कृष्णस्य पारोक्ष्येणाप्रत्यक्षत्वेन समुन्नद्धेन प्रणयेन कदा नु पश्येयम् इत्यौत्कण्ठ्येन कातरः विवशः ॥ ३ ॥

सारथ्यादिषु कर्म सख्यादिकं सम्यक् स्मरन्नर्जुनः बाष्पेन निमित्तेन गद्गदया स्खलन्त्या गिरा अग्रजं नृपमिति वक्ष्यमाणप्रकारेण आहेत्येकान्वयः ॥ ४ ॥

देवानपि विस्मापयतीति देवविस्मापनम्। महत्तेजः सामर्थ्यलक्षणं येन कृष्णेनापहृतं सहैव नीतं तेन बन्धुरूपिणा प्रधानबन्धुना हरिणा अर्जुनोऽहं वञ्चित इत्येकान्वयः। वञ्चित इति हरौ न दोषः आरोप्यते, किन्तु तेन वियुक्त इति तद्वियोगमात्रम्। वियोगोऽपि गृहीतमानुषाकारेण, न साक्षात् सर्वहृदि सन्निहितत्वात् तस्य इत्यभिप्रायेण बन्धुरूपिणा इत्युक्तम्। तस्मात् शोकात् शून्योऽस्मीति भावः ॥ ५ ॥

एतमर्थं सदृष्टान्तमाह — **यस्येति**। यथोक्तेन प्राणेन रहित एष देहो मृतकः कुणप इति प्रोच्यते। तथा यस्य कृष्णस्य क्षणवियोगेन लोकोऽप्यप्रियममङ्गलं पश्यतीति अप्रियदर्शनः यस्मात् तस्मात् शून्यत्वमित्यर्थः। प्राणत्यागे पित्रादिशरीरमपि पुत्रादेरप्रियत्वात् बहिर्भूमौ निक्षिप्यते यथा, तथाऽहमपि बन्धुभिरप्रियत्वात् अवज्ञात इव दृष्ट इति भावः। ममायं लोकः देहः अप्रियदर्शनः जात इति वा। प्रथम'हि'शब्देन प्राणवियुक्तदेहस्य कुणपत्वं श्रुतिसिद्धमिति दर्शयति। न केवलमहमेव अप्रियदर्शनः किन्त्वयं लोकः बन्धुजनः द्वारवत्यादिप्रदेशो वा उक्तेन पित्रादिना वियुक्त एवं बन्धुजनोऽपीति दृष्टान्तयोजना ॥ ६ ॥

यत्संश्रयात् सन्निधावित्यादि यदनुभावनिरस्तचित्ता इत्यन्तानां श्लोकानां तेनाहमद्यमुषित इति मध्यगतेन श्लोकेन मध्यकुलकन्यायेन अन्वयः। यत्संश्रयात् यस्य कृष्णस्य सेवाबलात् द्रुपदगृहे पाञ्चालपुरे स्वयंवरमुखे स्वयंवरश्रेष्ठे उपागतानां मिलितानां स्मरकारणेन जातः दृष्टः मदो येषां ते तथोक्ताः। तेषां राज्ञां जरासन्धादीनां

तेजोऽभिमानलक्षणं मया ईदृशेन हृतम्। किञ्च सज्जीकृतेन धनुषा यन्त्रविहितः **मत्स्यः** विहतः पातितश्च; किञ्च मया कृष्णा द्रौपदी चाधिगता वेदाध्ययनवत् आदरेण प्राप्तेत्येकान्**वयः** ॥ ७ ॥

यस्य सन्निधौ अहमेवामरगणैस्सह वर्तमानमिन्द्रं च तरसा वेगेन बलेन च विजित्य खाण्डवाख्यं वनमपि याचमानायाग्नये अदां दत्तवानस्मि। अद्भुतानि शिल्पानि स्थले जलप्रत्ययादीनि मायाश्च यस्यां सन्ति सा तथोक्ता मयनाम्ना तक्ष्णा कृता सभा मया लब्धा; यत्सन्निधानविशेषादिति योज्यम्। ते तव अध्वरे यज्ञे राजसूयलक्षणे **दिग्भ्य** आगतनृपतयः बलिं ते तुभ्यमहरन् ददुरित्यन्वयः ॥ ८ ॥

---

*Here begins 14th Chapter in K&M

## श्रीराधाकृष्णप्रणीता सुधीसुधा

भ्रात्रा राज्ञा युधिष्ठिरेण एवं नानाशङ्कास्पदं रूपं स्वकीयं रूपं आलक्ष्येति शेषः। विकल्पितः विकल्पेन पृष्टः कृष्णसखः श्रीकृष्णस्य मित्रं कृष्णः अर्जुनः कृष्णविश्लेषकर्शितः श्रीकृष्णविरहेण पीडितः शोकेन शुष्यद्वदनहृत्सरोजः अत एव हतप्रभः तमेव विभुं श्रीकृष्णमनुध्यायन् प्रतिभाषितुमुत्तरं वक्तुं **नाशक्नोत्**, समर्थो नाभवत्॥ १, २ ॥

अथार्जुनः कृच्छ्रेण प्रबलप्रयत्नेन शुचः शोकाश्रूणि **उद्गच्छन्त्यश्रूणि** नेत्रयोः संस्तभ्य प्रागेव **उद्गतान्यश्रूणि** पाणिना आमृज्य। परोक्षेण श्रीकृष्णेनेति शेषः। समुन्नद्धप्रणयौत्कण्**ठ्यकातरः** सख्यं मैत्रीं सौहृदं सारथ्यादिषु यद्भगवता कृतं तत्सर्वं च संस्मरन् **बाष्पगद्गदया** गिरा नृपं राजानं अग्रजं युधिष्ठिरम् इति वक्ष्यमाणप्रकारेणाऽऽह अब्रवीत्॥ ३, ४ ॥

हे महाराज! बन्धुरूपिणा मातुलपुत्ररूपेण हरिणाऽहं वञ्चितः। इतः परं येनेत्यादियच्छब्दानां "तेनाहमद्य मुषितः" (भाग. 1-15-13) इति त्रयोदशश्लोकस्थेन तच्छब्देनान्**वयः** — येन हरिणा देवविस्मापनं देवानामप्या**श्चर्यकरं मे महत्तेजोऽपहृतम्॥ ५॥**

**उक्थेन** प्राणेन रहितः एष पित्रादिः यथा हि मृतकः प्रोच्यते तथा यस्य हरेः क्षणवियोगेन सर्वो **हि** लोकः अप्रियदर्शनो भवतीति शेषः॥ ६ ॥

यत्संश्रयात् यस्य भगवतः आश्रयात् स्वयंवरमुखे द्रौपद्याः इति शेषः। स्मरदुर्मदानां द्रुपदगेहमुपागतानां राज्ञां तेजः मया सज्जीकृतेन धनुषा हृतं खलु। मत्स्यः **मत्स्ययन्त्रश्च** अभिहतः, कृष्णा च द्रौपदी चाधिगता लब्धा॥ ७॥

यत्सन्निधौ यस्य भगवतस्सन्निधौ कारणभूते सत्यहं तरसा बलेन सामरगणं देवगणसहितं इन्द्रं च विजित्य खाण्डवं वनमग्नये अदां दत्तवानस्मि। अनन्तरं मयकृता अद्भुतशिल्पमाया सभा मया लब्धा। तथा च ते तव अध्वरे राजसूयाख्ये नृपतयः **दिग्भ्यः** बलिं उपहारमहरन् आनीय समर्पितवन्तः॥ ८॥

**यत्तेजसा[1] नृपशिरोऽङ्घ्रिमहन्मखार्थे[2] आर्योऽनुजस्तव गजायुत[3]सत्त्ववीर्यः ।**
**तेनाहृताः प्रमथनाथमखाय भूपा यन्मोचितास्तदनयन्[4] बलिमध्वरे ते ॥ ९ ॥**

**पत्न्यास्तवाधि[5]मखक्लृप्तमहाभिषेकश्लाघिष्ठचारुकबरं कितवैस्सभायाम् ।**
**स्पृष्टं विकीर्य पदयोः पतिताश्रुमुख्याः[6] यस्तस्त्रियो[7]ऽकृत[8] हतेशविमुक्तकेशाः ॥ १० ॥**

**यो नो जुगोप वन एत्य[9] दुरन्तकृच्छ्राद्दुर्वाससोऽरि[10]रचितादयुताग्रभुग्यः ।**
**शाकान्नशिष्टमुपयुज्य[11] यतस्त्रिलोकीं तृप्तामममंस्त सलिले विनिमग्नसङ्घः[12] ॥ ११ ॥**

**यत्तेजसा[13]ऽथ भगवान् युधि शूलपाणिः विस्मापित[14]स्सगिरिजो[15] ऽस्त्रमदान्निजं[16] मे ।**
**अन्येऽपि चाहममुनैव कलेबरेण प्राप्तो महेन्द्रभवने महदासनार्धम् ॥ १२ ॥**

**तत्रैव मे विहरतो भुजदण्डयुग्मम् गाण्डीवलक्षणमरातिवधाय देवाः ।**
**सेन्द्राः श्रिता यदनुभावित[17]माजमीढ! *तेनाऽहमद्य मुषितः पुरुषेण भूम्ना ॥ १३ ॥**

**यद्बान्धवः कुरुबला[18]ब्धिमनन्तपारमेको रथेन ततरे[19]ऽ[20]हमतार्य[21]सत्त्वम् ।**
**प्रत्याहृतं बहुधनं[22] च मया परेषां तेजःपदं[23] मणिमयं च हृतं शिरोभ्यः ॥ १४ ॥**

**यो भीष्मकर्णगुरु[24]शल्यचमूष्वदभ्रराजन्यवर्यरथमण्डलमण्डितासु ।**
**अग्रेचरो मम विभो[25] रथयूथपानामायुर्मनांसि च दृशा सह[26] ओज आर्च्छत् ॥ १५ ॥**

**यद्दोष्षु[27] मा[28] प्रणिहितं गुरुभीष्मकर्णनप्तृ[29]त्रिगर्त[30]शल्यसैन्धवबाह्लिकाद्यैः ।**
**अस्त्राण्यमोघ[31]महिमानि निरूपितानि नोप[32]स्पृशुर्नृहरिदासमिवासुराणि ॥ १६ ॥**

---

1. H,K,M,V यत्सन्निधौ 2 B,H,I,V,W °र्थं 3 K,M गदायुध° 4 H,V °स्समनयन्; K,M °भ्युदनयन् 5 K,M °पि 6 K,M °ख्यो 7 H,K,M,N,V,W यै° 8 K,M न्यकृत तत्सविमुक्तकेश्यः *K,M omit this verse 9 H,N,V,W °मे° 10 N,W °विहि° 11 W °भु° 12 AF,GF °गात्रः 13 H,V स; W च 14 W °यि° 15 K,M,W °शो° 16 AF,GF °वरं ददन्मे 17 B °न° *"तेनाहमस्मि" इति वीरराघवाङ्गीकृतः पाठः। 18 H,V कु° 19 K,M तरसा- तरमार्यसत्त्वः 20 H °राह° 21 B,I,N °ती°, W °वा° 22. B,H,V पुरु°, K,M पुर° 23 K,M तेजः परं 24 AF,GF °कृप° 25 K,M रथे 26 K,M सहसा य आर्च्छत्; AF,GF सह उज्जहार 27. V °षु 28. W मां 29 H,K,M,N,V,W °द्रौणि° 30 H,V °क° 31 K,M °मेय° 32 W नोपास्पृशन् नृ°, N नो पस्पशुर्नृ°

**श्रीध०** अनन्तरश्लोको विगीतः[1] तथाऽपि व्याख्यायते — **यदिति**। नृपशिरस्सु अङ्घ्रिर्यस्य तं जरासन्धं तवानुजो भीमः मखार्थमहन् हतवान्। तन्निर्जयं[2] विना राजसूयमखानुपपत्तेः। गजायुतस्येव सत्त्वमुत्साहशक्तिः वीर्यं बलं यस्य सः। तं हत्वा प्रमथनाथो महाभैरवः तस्य मखाय ये राजानः तेनाहृताः ते[3] च यद्यस्मान्मोचितास्तत्तस्मात्तेऽध्वरं बलिं पुष्कल[4]धनोपहारादिरूपम् आनीतवन्तः ॥ ९ ॥

**पत्न्या** इति। यैः कितवैः दुश्शासनादिभिः तव पत्न्याः कबरं विकीर्य उन्मुच्य स्पृष्टमाकृष्टं तेषां [5]दुश्शासनादीनां स्त्रियो हतेशा अत एव वैधव्याद्विमुक्तकेशाः [6]अकृत चकार। कथम्भूतं कबरम्? अधिमखं राजसूयमधिकृत्य क्लृप्तो रचितो यो महाभिषेकः [7]मन्त्रपूर्वाभिषेकः तेन [8]अभिषेकेण श्लाघिष्ठं [9]श्लाघ्यतमम् चारु [10]रम्यम्। तच्च कबरं केशपाशः धम्मिल्ल इत्यर्थः। यत्स्मरणात् तदानीमेव अस्मत्कृपया प्राप्तस्य श्रीकृष्णस्य नमने पदयोः पतितान्यश्रूणि मुखाद्यस्याः [11]तस्याः पत्न्याः। पदशब्दसापेक्षस्यापि पतितशब्दस्याश्रुपदेन समासो नित्यसापेक्षत्वात्॥ १०॥

**य** इति। शिष्याणाम् अयुतस्याग्रे तत्पङ्क्तौ भुङ्क्ते। यः तस्माद्दुर्वाससो हेतोररिणा दुर्योधनेन रचितं यद्दुरन्तं कृच्छ्रं शापलक्षणं तस्मात् सकाशात् नः अस्मान् [12]वनमेत्य जुगोप [13]रक्षितवान्। किं कृत्वा? शाकमेवान्नं शिष्टं तस्मिन्नेव पात्रे अवशिष्टमुपयुज्य [14]जग्ध्वा। यत उपयोगात्सलिले विनिमग्नो मुनीनां सङ्घः त्रिलोकीं तृप्ताममंस्त। एवं हि भारते कथा — कदाचिद्दुर्वाससो दुर्योधनेन आतिथ्यं कृतम्। तेन च परितुष्टेन वरं वृणीष्वेत्युक्ते दुर्वाससः शापात् पाण्डवा नश्येयुरिति मनसि निधाय दुर्योधनेनोक्तं युधिष्ठिरः अस्मत्कुलमुख्योऽतः तस्यापि [15]भवने भवता एवमेव शिष्यायुतसहितेनातिथिना भवितव्यं, किन्तु द्रौपदी यथा [16]क्षुधा न सीदेत् तथा तस्यामपि भुक्तवत्यां [17]तदहं गन्तव्यमिति। ततश्च तथैव दुर्वाससि प्राप्ते परमादरेण युधिष्ठिरेण माध्याह्निकं कृत्वा आगम्यतामिति विज्ञापितो मुनिस्समुनिसङ्घः अघमर्ष[18]णस्नानाय जले निममज्ज। तत्र चिन्तातुरया द्रौपद्या स्मृतमात्रः श्रीकृष्णोऽङ्कस्थां रुक्मिणीं हित्वा तत्क्षणमेव [19]भक्तवत्सलतया चागतः। तया [20]चावेदिते वृत्तान्ते भगवतोक्तं हे द्रौपदि! अहं च बुभुक्षितोऽस्मि प्रथमं मां भोजयेति। तया [21]चातिलज्जितयोक्तम् — स्वामिन्! मद्भोजनपर्यन्तं अक्षयमप्यत्र सूर्यदत्तस्थाल्याम्। मया च सर्वान् सम्भोज्य भुक्तमतो नास्त्यन्नमिति [22]। तथाऽप्यतिनिर्बन्धेन स्थालीमानाय्य तत्कण्ठलग्नं किञ्चिच्छाका[23]न्नं प्राश्योक्तम् "अनेन विश्वात्मा भगवान् प्रीयताम्। अथ भोक्तुं मुनिसङ्घमाह्वय" इति भीमं प्रहितवान्। [24]भीमेन गत्वोक्तम् — "स्वामिन्! भोजनार्थमागम्यताम्! कथं विलम्बः क्रियते। स च तावता अतितृप्तो वृथा पाकभयेन [25]पलायित इति॥ ११॥

**यदिति**। सगिरिजः गिरिजासहितो विस्मापितस्सन् निजं पाशुपतमस्त्रमदात्। अन्येऽपि लोकपालाः निजान्यस्त्राणि [26]ददुः। अन्यदप्याश्चर्यमाह — अमुनेति। महतः इन्द्रस्य आसनार्धम्॥ १२॥

**तत्रेति**। तत्रैव स्वर्गे क्रीडितः। गाण्डीवं लक्षणं चिह्नं यस्य तत्। अरातयो निवात[27]कवचाः दैत्याः तेषां [28]वधार्थमाश्रितवन्तः। येनानुभावितं प्रभावयुक्तं कृतम्। हे आजमीढ! युधिष्ठिर! तेन मुषितो वञ्चितोऽस्मि। कथम्भूतेन? भूम्ना निजमहिमावस्थानेन॥ १३॥

**यदिति**। यद्बान्धव इत्यादि श्लोकत्रयस्यापि तेन मुषितोऽहमिति [29]पूर्वेणैव सम्बन्धः। श्रीकृष्णबान्धव एक एवाहं कौरवसैन्याब्धिं नास्ति अन्तो गाम्भीर्येण पारं च देशतो यस्य। अथवा अन्तः समाप्तिः पारं समाप्तस्योत्तरतीरं तदुभयरहितं तं [30]ततरे तीर्णवानुत्तरगो[31]ग्रहणे। [32]अतार्याणि दुस्तराणि सत्त्वानि तिमिङ्गिलादीनि भीष्मादिरूपाणि यस्मिन्। परैः नीतं गोधनं प्रत्याहृतम्। परेषां च शिरोभ्यः सकाशात् [33]तेजास्पदं प्रभावस्यास्पदम् उष्णीषरूपं मणिमयं [34]मकुटरत्नरूपं च [35]पुरुधनं बहुधनं [36]तावन्मोहनास्त्रेण मोहयित्वा [37]हृतं [38]यैः कृष्णः बान्धवः सर्वविधबन्धुः यस्य तेन यद्बान्धवेन मया॥ १४॥

**य** इति। अदभ्रा अनल्पा ये राजन्यवर्याः तेषां रथमण्डलैः मण्डितासु भीष्मादीनां चमूषु सारथिरूपेण [39]रथिकस्य ममाग्रेचरस्सन् [40]सारथिरूपेण वर्तमानस्सन् हे विभो! तेषां रथयूथपानाम् आयुरादीनि यो दृशा **दृष्ट्यैव** आच्छित् हृतवान्। मनांसीत्युत्साहादि[41]शक्तिः। सहो [42]मनोबलम्। ओजः [43]अस्त्रादिकौशलम्॥ १५॥

**यदिति**। यस्य दो[44]र्ष्णु भुजेषु मा मां प्रणिहितं स्थापितं [45]गुप्तमित्यर्थः। तैरेव गुर्वादिभिः निरूपितानि प्रयुक्तान्यस्त्राणि न स्पृशन्ति स्म। गुरुः द्रोणः। नप्ता भूरिश्रवाः। त्रि[46]गर्तः त्रि[47]गर्तदेशाधिपतिः सुशर्मा। शलः शल्यः [48]मद्राधिपतिः, सैन्धवः सिन्धुदेशाधिपतिः जयद्रथः। बाह्लिकः शन्तनोः भ्राता। अमोघो महिमा येषां, तथाभूतान्यपि। महितानीति पाठान्तरेऽपि स एवार्थः। प्रतीकाराकरणेऽपि अस्पर्शे दृष्टान्तः। आसुराणि हिरण्यकशिपुप्रेरितानि अस्त्राणि नृहरिदासं प्रह्लादमिवेति॥ १६॥

---

1 H,V विगलितः 2 H,V तद्विजयं 3 H,V पशुरूपेणानीता यस्मा° 4 A,B omit पुष्कल ... रूपम् 5 A,B omit दुशासनादीनां 6. H,V add च 7. A,B omit मन्त्रपूर्वाभिषेकः 8 A,B omit अभिषेकेण 9 H,V अतिशयितश्लाघाविषयीभूतं 10 H,V अतिमनोहरं 11. A,B omit तस्याः 12 B वने आगत्य 13 A,B omit रक्षितवान् 14 B भुक्त्वा 15 A,B omit भवने 16 B क्षुधया 17 B °हे 18. A,B °णाय 19 H,V °वात्सल्यात् प्राप्तः 20 H,V निवेदिते 21 A लज्जयोक्तं, B लज्जया अहो मदीयमभाग्यं भाग्यं च यतस्त्रैलोक्यनाथो यज्ञपुरुषो भगवान् मद्गृहमागतः भोजनं प्रार्थयतीति मनसि विधायोक्तं 22 B adds अश्रुपातं चकार 23 H,V °न्नमात्रं 24. A,H,V omit भीमेन गत्वा ...... क्रियते 25 B प्रपलाय्य गत 26 A अदुः 27 B °कवचादयो 28 H,V युद्धार्थ° 29. H,V °णान्वयः। 30 H ततर 31 A,B °ग्रहे 32 A °ती° 33 H,V तेजःपदं 34 A,B मु° 35 A,B omit पुरुधनं 36 A,B तान्मो° 37. H,V नीतं 38. A,B omit यः कृष्णः ... तेन 39 A,B omit रथिकस्य 40 A,B omit सारथिरूपेण ... स्सन् 41 A,B शक्तिं 42. A,B omit मनो 43 H,V कायिकबलं शस्त्रादिकशलमित्यर्थः। 44 V °र्षु 45 A,B omit गुप्तमित्यर्थः 46 H,V °क° 47. H,V °क° 48 A,B omit मद्राधिपतिः

**वीर॰** तवानुजो ममार्योऽग्रजः गजानामयुतस्य सत्त्वं बलं [1]तत्तुल्यं वा वीर्यं च यस्य सः भीमः तव मखार्थं यज्ञार्थं यस्य भगवतः संश्रयाद्धेतोः नृपस्य जरासन्धस्य शिरोऽङ्घ्रिमिति प्राण्यङ्गत्वात् समाहारद्वन्द्वै[2]क्येन[3] शिरोऽङ्घ्री चाहनत्। तेन **नृ[4]पेणाहृताः** नृपाः ततो विमोचितास्सन्तो यत्प्रमथनाथस्य रुद्रस्य भैरवस्य वा मखाय मखार्थं संभृतं धनं [4]तवाध्वरे **बलिं** करमनयन्नानीतवन्तः। नृपाणां शिरस्सु अङ्घ्रिर्यस्य तं जरासन्धमिति वा॥ ९॥

**पत्न्या** इति। तव पत्न्याः द्रौपद्याः अधिमखं राजसूयाख्ये य[5]ज्ञे। विभक्त्यर्थे अव्ययीभावः। **क्लृप्तः** कारितो यः महाभिषेकः तेन श्लाघिष्ठमत्यन्तश्लाघ्यम् चारु सुन्दरं कबरं धम्मिल्लं विकीर्य विक्षिप्य यैः दुश्शासनादिभिः स्पृष्टं तेषां स्त्रियः स्त्रीः हताः मृताः ईशाः पतयः यासां ताश्च विमुक्ताः केशाः यासां ताश्च तथाभूताः। यः अकृत कृतवान् स तवानुजो नृपशिरोऽङ्घ्रिमहन्निति पूर्वेणान्वयः। कथम्भूतायाः पत्न्याः? पदयोर्दुश्शासनस्य भगवतो वा स्वस्य वा पदयोः प[6]तितान्यश्रूणि मुखाद्यस्याश्च तथाभूतायाः॥ १०॥

**यो न** इति। यः अयुताग्रभुक् अयुतेन विप्राणामयुतेन सह अग्रे भुङ्क्ते इति तथा; अयुतस्याग्रे वा। तस्मादरिणा दुर्योधनेन विहितात् प्रेषितात् दुर्वाससः हेतोरागतात् दुरन्तकृच्छ्रात् अपारसङ्कटाद्यो भगवान् नः अस्मान् शाकात्मकान्नावशिष्टमवलेपमुपयुज्य [7]**भुक्त्वा** जुगोप। यतः शाकावशिष्टमुपभुक्तवतो भगवतो हेतोः सलिले विनिमग्नः

**सङ्घः** भूतसङ्घरूपो देहो यस्य स दुर्वासाः त्रिलोकीमपि[8] तृप्ताममंस्त अमन्यत। तेन भगवता मुषितोऽस्मीत्यन्वयः। एषा चान्यत्र कथा सूच्यते "दुर्वासा मुनिवर्योऽथ दुर्योधनगृहं गतः। तं राजा पूजयामास, सार्घ्यपाद्यासनादिभिः॥ निमन्त्रयामास स तं भोजनाय नराधिपः। तं बाढमिति चामन्त्र्य कृत्वा नित्यादिकाः क्रियाः॥ बुभुजेऽन्नं बहुगुणं ब्राह्मणैस्सह धर्मवित्। अब्रवीच्च स राजानं भुक्त्वा तुष्टमना मुनिः॥ वरं वरय भद्रं ते वरदोऽस्मि नराधिप! याचयाम्यद्य किमहं वरमेतं मुनीश्वरम्॥ इति चिन्तां समापन्नो राजा दुर्योधनस्तदा। मुहूर्तं चिन्तयित्वाऽथ प्रतिपेदे मनोगतम्॥ वनवासं गता ये तु पाण्डवाश्शंसितव्रताः। तेषामस्य मुनेश्शापं[10] जनयेयं लवान्नृपः[11]। मद्गृहे भुक्तवान् सर्वं यदा वाञ्छति भोजनम्। तत्र दातुं शक्नुवन्ति ते वने क्लेशभागिनः। तदा कोपपरीतात्मा शापं दास्यत्यसंशयम्[12]। इत्येवं दुरभिप्रायो वरं वव्रे सुदारुणम्। वने मे भ्रातरस्सन्ति पाण्डवा दुःखभागिनः। भोक्तव्यं तद्गृहं[13] गत्वा मद्गृहे भुक्तवान् यथा। तथेति मुनिरुक्त्वा तं गत्वाऽयाचत भोजनम्। अयुतब्राह्मणाग्रे मां भोजयाऽऽशु युधिष्ठिर! श्रुत्वैतद्वचनं राजा हृदि सञ्जातवेपथुः। भुक्तमस्माभिरधुना शिष्टमन्नं न विद्यते। तथा न ब्राह्मणास्सन्ति सामग्री च कदाचन। यद्यहं न ददाम्यन्नं शापं दास्यति कोपतः[14]। तथाऽप्येनं निमन्त्र्यैवमुपायं मृगयेऽधुना। इत्येवं मनसा ध्यायन्[15] राजा मुनिमथाब्रवीत्। भगवन्नित्यकर्मादि कृत्वा स्नानादि कर्म च। शीघ्रमागमनं कार्यं सिद्धं सर्वं तथा मम। तत ओमित्यनुज्ञाय गत्वा चाऽऽशु विवेश ह। तत्राघमर्षणं कुर्वन् दध्यौ तद्ब्रह्म निष्कलम्। एतस्मिन्नेव काले तु भगवान् यदुनन्दनः आजगाम कुरुश्रेष्ठ सन्निधौ क्लेशनाशनः। विषण्णवदनान् दृष्ट्वा पाण्डवान् मधुसूदनः। उवाच राजन्! किं दीर्घं ध्यायसे क्लेशभागिव। सोऽसौ[16] न्यवेदयत्सर्वं मुनेरागमनादिकम्। श्रुत्वैतत् भगवान् कृष्णो[17] दुर्योधनविचेष्टितम्। श्रुत्वोवाचावशिष्टं तदन्नं किं किञ्चिदस्ति वै[18]। शाकमात्रावशिष्टो मे पाक इत्यब्रवीन्नृपः। उवाच भगवान् शिष्टं पाकमानीयतामिति। आनीतं भक्षयामास राज्ञो दुःखोपशान्तये। दुर्वासास्तु मुनिर्मेने तृप्तं स्थावरजङ्गमम्॥" इत्यादिका कथा वर्तते॥ ११॥

**यत्तेजसेति**। यस्य भगवतः तेजसा मया हितेन हेतुना सः[19] भगवान् शूलपाणिः शम्भुः किरातरूपो युद्धे विस्मापितः मयेति शेषः। विस्मयं प्रापितः। स च गिरिशो रुद्रः मे मह्यमस्त्रं पाशुपताख्यं ददौ। तथाऽप्यन्ये च शक्त्यादयो विस्मापिता इत्यर्थः। तथाऽहममुनैवाधुना तेजोहीनकलेबरेणैव महेन्द्रस्य भवने महदासनस्यार्धं प्राप्तः। इन्द्रासनस्यार्धं अधिष्ठितवानस्मीत्यर्थः। महदिति पृथक्पदम्। अन्यथा 'आन्महत' (अष्टा. 6-3-46) इत्यात्वापत्तिः। आर्षत्वात्, तदभावे महत्यासने इत्यप्यन्वेतुं शक्यम्॥ १२॥

तत्रैव महेन्द्रभवने विहरतो मम गाण्डीवलक्षणं गाण्डीवेन सह लक्ष्यते इति तथा येन भगवता अनुभावितं प्रभावं प्रतिनीतं भुजदण्डयोर्युग्मं सेन्द्रा देवा अरातिवधाय कालकेयनिवातकवचाद्यसुरवधार्थं श्रिताः सहायत्वेन आश्रिताः हे! आजमीढ! तेन भूम्ना अपरिमितानन्दरूपेण परमपुरुषेण श्रीकृष्णेनाहं मुषितोऽस्मि, वञ्चितोऽस्मि। मां विहाय स्वलोकं जगामेत्यर्थः॥ १३॥

यद्बान्धव इति यच्छब्दानां अध्याहृततच्छब्दवता लुठन्ति हृदयं मम माधवस्य इत्यनेन **अन्वयः**। यो भगवान् बान्धवः यस्य सः। अहमेक एवावार्यं[20] दुस्तरं सत्त्वं बलं यस्य तमनन्तपारं निरवधिकं कुरूणां बलरूपमब्धिं

**रथेन** साधनेन ततरे तीर्णवानस्मि। आर्षत्वात्— 'तॄफलभजत्रपश्च' (अष्टा. 6-4-122) इति एत्वाभ्यासलोपाभावः, आत्मनेपदञ्च। तथा यद्वान्धवेन मया परेषां शत्रूणां बहुधनं प्रत्याहृतं, तथा तेषां शिरोभ्यः तेजःपदं तेजसः पदं आश्रयं मणिमयं **मण्यात्मकं** च धनं प्रत्याहृतम्॥ १४॥

**य** इति। **हे विभो!** अदभ्राणाम् अनल्पवीर्याणां बहूनां राजन्यश्रेष्ठानां रथजालैः मण्डितासु भीष्मादीनां सेनासु यो भगवान् ममाग्रेचरः अवस्थितः दृशा दृष्टिमात्रेण रथयूथपानामोजसा सह आयुर्मनांसि च आर्च्छत् हृतवान्। तेनाहं मुषितोऽस्मीति सम्बन्धः॥ १५॥

**यद्दोष्षिवति**। यस्य भगवतः दोष्षु बाहुषु प्रणिहितं प्रणिधापितं, त्वयेति शेषः। त्वया यद्भुजैकशरणत्वेन कृतं तं मामित्यर्थः। गुरुः द्रोणः तत्प्रभृतिभिः निरूपितानि प्रयुक्तानि अप्रतिहतमहिमानि अस्त्राणि नोपास्पृशन्। यथा **आसुराण्यसुरेण** कशिपुना कारितान्यस्त्रघातादीनि नृसिंहदासं प्रह्लादं नास्पृशंस्तद्वत्॥ १६॥

---

1 W तत्तुल्यवीर्य 2. W °कल्वे 3 A,B °ह्णि 4 W adds तत् 5 W मखे 6 W पतितायाः अश्रूणि मुखे यस्याश्च 7 W °शिष्टलेपमुपभुज्य 8 W °धि° 9 W चात्र 10 W °श्शापजनने यत्नवान्नृपः 11 W सदृशं 12 W °यः 13 B तद्गृहे गत्वा; W तद्गृहे ब्रह्मन्! 14 W °नः 15 W ध्यात्वा 16 W सोऽस्मै 17 W कृत्स्नं 18 W वा 19 A,B omit सः 20 A,B एवातीर्य अतार्य स°

**विज॰** गदाख्यमायुधं च सत्त्वं च हृदयसारश्च वीर्यं वीरभावश्च सत्त्वं मानसबलं च वीर्यं कायबलं च वा यस्य स गदायुधसत्त्ववीर्यः। तवानुजो मम ज्येष्ठो भीमसेनो नृपशिरस्सु अङ्घ्रिः यस्य स तथोक्तः तं जरासन्धं यत्सन्निधावहन् हतवानित्यन्वयः। किमर्थम्? मखार्थे राजसूययज्ञमुद्दिश्य जरासन्धेन तेन प्रमथनाथमखाय रुद्रमुद्दिश्य पुरुषमेधाख्ययज्ञायाहृता गृहीता येन कृष्णेन मोचिताः जरासन्धवधेनेति शेषः। भूयस्ते तव अध्वरे बलिं भ्युदनयन् अभिगम्य आनीतवन्तः इत्यन्वयः। "वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोः" (सि. कौ. 'अव्ययादाप्सुपः" 2-4-82) इत्यत्र "अभेरप्युपसङ्ख्यानं कर्तव्यम्"॥ ९॥

कुरुसभायां तव पत्न्या द्रौपद्या अपि राजसूयनाम्नि मखे क्लृप्तेन कृतेन महाभिषेकेण श्लाघिष्ठं अतिशयेन श्लाघ्यतमं अत एव चारु रुचिरं कबरं केशबन्धनं यैरक्षकितवैः दुश्शासनादिभिः स्पृष्टं यत्तत्कबरं विकीर्य यत्पदयोः पतितायाः अश्रुमुख्याः अश्रुप्रधानो यः सः तत्पदयोः पतितत्वादेव तत्स्त्रियः तेषां कितवानां स्त्रियो भार्याः विमुक्तकेश्यः भीमाविद्धगदाभग्नोरुदण्डान् स्वपतीनालिङ्ग्य रुदतीः विकीर्णकेशपाशा न्यकृत नितराम् अकार्षीदित्येकान्वयः। अश्रुशब्दः उभयलिङ्गोऽप्यस्ति धनुश्शब्दवत्॥ १०॥

यस्य तेजसा युधि वराहनिमित्तयुद्धे विस्मापितो विस्मयं गमितः शूलं पाणौ यस्य सः शूलपाणिः स **गिरिशः निजमस्त्रं** पाशुपताख्यं मे मह्यमदादित्यन्वयः। अन्ये लोकपाला अपि स्वं स्वमस्त्रं ददुरिति शेषः। अपि चार्जुनोऽहम् अमुनैव कलेवरेण मान्येन महेन्द्रभवने अमरावत्यां महतो देवेन्द्रस्यासनार्धं प्राप्त इत्येकान्वयः। अथान्यच्च श्रीकृष्णमाहात्म्यं वक्ष्यामि विशेषत इत्यथशब्दार्थः॥ ११, १२॥

येन कृष्णेनानुभावितं प्रवृद्धबलवत्कृतं गाण्डीवज्याऽऽघातलाञ्छनभुजदण्डयुग्मं श्रिताः [1] इन्द्रेण सह वर्तमाना देवाः अरातिवधाय निवातकवचनाम्नां शत्रूणां हननाय कस्य भुजदण्डयुग्मं तत्र महेन्द्रभवन एव विहरतः क्रीडमानस्य मे मम॥ १३॥

येषां बान्धवोऽहं कुरुभिः विराटगोग्रहणे अनन्तपारमदृश्यतीरान्तरं अनन्तोऽपरिच्छिन्नः पारः पूर्तिर्यस्य स तथा तं कुरुसेनासमुद्रं रथेन तरसा वेगेनातरम्, तीर्णवानस्मीत्यन्वयः। कथम्भूतः? एकोऽसहायः आर्यसत्त्वः पूज्यबलः किञ्च यद्बान्धवेन मया विराटपुरे गोधनञ्च प्रत्याहृतं पुनरानीतम्। तथा परेषां शत्रुभूतानां भीष्मादीनां शिरोभ्यः मणिमयं धनमुष्णीषलक्षणं न केवलं हृतम्; किन्तु परं केवलं तेजः अभिमानलक्षणं सामर्थ्यमेव अपहृतमित्यन्वयः॥ १४॥

राजन्यवर्याणां श्रेष्ठानां रथानां मण्डलैः समूहैः मण्डितासु अलङ्कृतासु, भीष्मश्च कर्णश्च गुरुश्च शल्यश्च ते तथोक्ताः तेषां सेनापतीनां चमूषु सेनासु मध्ये मम यो रथः तस्मिन् रथे यः अग्रेचरः सारथित्वात् पुरोभागवर्ती तेषामेव रथयूथपानां भीष्मादीनाम् आयुर्मनांसि च सहसा शीघ्रं दृशा दर्शनेन आर्च्छत्, अपाहरदित्येकान्वयः। चशब्दः एवार्थे। यदा आर्च्छत् तद्दृशैव, न आयुधादिना। समुच्चये वा॥ १५॥

गुरुभीष्मादिभिः निरूपितानि प्रयुक्तानि अमेयमहिमानि अचिन्त्यसामर्थ्यान्यस्त्राणि यस्य दोष्षु भुजेषु प्रणिहितं निक्षिप्तं मां नोपस्पृशुः न तापं चक्रुरित्वन्वयः। 'स्पृश उपतापे' इति धातुः। कानि कमिव आसुराणि हिरण्यकशिपुप्रेरितानि असुरप्रयुक्तानि नृहरिदासं प्रह्लादं यथा न व्यथयन्ति तथेति॥ १६॥

1 K,M add के

**रा॰ कृ॰** यत्तेजसा यस्य हरेः तेजसा हेतुना गजायुतसत्त्ववीर्यः गजानामयुतस्य सहस्रदशकस्य सत्त्वं वीर्यं यस्य सः तवानुजः आर्यः मम पूज्यो भीमः नृपशिरोऽङ्घ्रिं राजमस्तकन्यस्तपादं महाबलपराक्रमं जरासन्धं मखार्थं तव राजसूययागार्थम् अहन् अवधीत्। तं जरासन्धं हत्वा तेन प्रमथनाथमखाय आहृताः बलादानीताः भूपाः राजानः यत् यस्माद्विमोचिताः तत् तस्मात् कारणात् ते तवाध्वरे बलिम् अध्वरसाधनभूतं द्रव्यम् अनयन् समर्पितवन्तः॥ ९॥

पदयोः स्वसंस्मरणात् तदैव प्राप्तस्य श्रीकृष्णस्य चरणयोः पतिताश्रुमुख्याः पतितान्यश्रूणि मुखे यस्याः तस्यास्तव पत्न्याः द्रौपद्याः अधिमखक्लृप्तमहाभिषेकश्लाघिष्ठचारुकबरं सभायां कुरुसभायां विकीर्य आकृष्य यैः कितवैः दुश्शासनादिभिः धूर्तैः स्पृष्टं आकृष्टमभूत् तत्स्त्रियः तेषां कितवानां स्त्रियः स्त्रीः हतेशविमुक्तकेशाः हतः ईशः नाथः यासां ताः विधवाः अत एव विमुक्तकेशाः यो भगवान् अकृत कृतवान्। लोकदृष्ट्या यद्यपि दुश्शासनादयो भीमादिभिर्निहताः तथाऽपि — "मयैवैते निहताः पूर्वमेव। निमित्तमात्रं भव सव्यसाचिन्!" (भ. गी. 11-33) इति भगवदुक्तेः तस्मिन्नेव हन्तृत्वव्यपदेशः॥ १०॥

यः अयुताग्रभुक् अयुतस्य शिष्याणामयुतस्याग्रे तत्पङ्क्तौ भुनक्ति तस्माद्दुर्वाससः कारणात् अरिरचितात् अरिणा दुर्योधनेन रचितात् दुरन्तकृच्छ्रात् शापरूपात् अपारसङ्कटात् यो भगवान् वनमेत्य आगत्य शाकान्नशिष्टमुपयुज्य

नोऽस्मान् जुगोप, रक्षितवान्। यतः शाकान्नभोजनात् सलिले स्नानार्थं जले विनिमग्नसङ्घः विनिमग्नः मुनीनां सङ्घः त्रिलोकीं तृप्तामममंस्त अमन्यत। तच्छाकान्नशिष्टं उपयुज्येतिपूर्वेणान्वयः ॥ ११ ॥

अथ यत्तेजसा यस्य हरेस्तेजसा हेतुना सगिरिजः पार्वतीसहितः भगवान् शूलपाणिश्शिवः युधि युद्धे विस्मापितो मया विस्मयं प्रापितस्सन्निजमस्त्रं पाशुपताख्यं मे मह्यमदात् दत्तवान्। तथाऽन्येऽपीन्द्रादयो लोकपालाः इत्यर्थः। निजान्यस्त्राणि दत्तवन्तः। किञ्चाहममुनैव कलेबरेण मनुष्यशरीरेण महेन्द्रभवने महदासनार्धं महतः इन्द्रस्य यदासनं तदर्धं प्रापमिति शेषः ॥ १२ ॥

हे आजमीढ! युधिष्ठिर! तत्रैव महेन्द्रभवने एव विहरतो मे मम यदनुभावितं येन भगवता सप्रभावं कृतं गाण्डीवलक्षणं भुजदण्डयुग्मं सेन्द्राः इन्द्रसहिताः देवाः अरातिवधाय अरातीनां शत्रूणां कालकेयादिदैत्यानां वधाय श्रिताः सहायत्वेनाश्रिताः तेन भूम्ना परिपूर्णतमेन पुरुषेण श्रीकृष्णेनाहं अद्य मुषितो वञ्चितोऽस्मि ॥ १३ ॥

यद्बान्धवः यः भगवान् बान्धवस्सहायभूतः यस्य सोऽहमेकः अनन्तपारमतार्यसत्त्वं दुस्तरभीष्मादितिमिङ्गिलमुख्यजलजन्तुसहितं कुरुबलाब्धिं रथेन ततरे तीर्णवान्। किञ्च मया बहुधनं परैर्नीतं गोधनं प्रत्याहृतं प्रत्यानीतम्, अपि च परेषां शत्रूणां शिरोभ्यः सकाशात्तेजःपदं प्रभावव्यञ्जकं मणिमयं धनं च हृतमानीतं "यद्बान्धव" इत्यादीनां त्रयाणां श्लोकानां "तेनाहमद्य मुषितः पुरुषेण भूम्ना" (भाग. 1-15-13) इति पूर्वेणैवान्वयः ॥ १४ ॥

हे विभो! युधिष्ठिर! अदभ्रराजन्यवर्यरथमण्डलमण्डितासु भीष्मकर्णगुरुशल्यचमूषु यो भगवान् ममाग्रेचरः सारथिरूपेण मम पुरतः स्थितस्सन् दृशा दृष्टिमात्रेण रथयूथपानां रथयूथपालकानाम् आयुर्मनांसि सहः बलं ओजः अस्त्रशस्त्रादिकौशलं च आर्च्छत् अहरत्॥ १५॥

यद्दोष्षु यस्य भगवतः दोष्षु प्रणिहितं स्थापितं भगवता कृपया रक्षितमित्यर्थः। मा मां गुरुभीष्मकर्णद्रौणित्रिगर्तशलसैन्धवबाह्लिकाद्यैः निरूपितानि प्रयुक्तानि अमोघमहिमान्यस्त्राणि नृहरिदासं प्रह्लादं आसुराणीव हिरण्यकशिपुप्रयुक्तानि अस्त्राणीव नोपस्पृशुः न स्पृष्टवन्तः तेन पुरुषेण अहमद्य मुषितोऽस्मीति पूर्वेणान्वयः ॥ १६ ॥

*** यन्मे नृपेन्द्र! तदतर्क्यविहार ईशो यो लब्धरूपमवदद्रणमूर्ध्नि दर्शी।**
**यन्माययाऽऽवृतदृशो न विदुः परं तम् सूत्रादयोऽहमहमस्मि ममेति भव्याः ॥**

**सौत्ये वृतः कुमतिनाऽऽत्मद ईश्वरो मे यत्पादपद्ममभवाय भजन्ति भव्याः।**
**मां श्रान्तवाहमरयो रथिनो भुविष्ठं न प्राहरन् यदनुभावनिरस्तचित्ताः ॥ १७ ॥**

**नर्माण्युदाररुचिरस्मितशोभितानि हे! पार्थ! हेऽर्जुन! सखे! कुरुनन्दनेति।**
**सञ्जल्पितानि नरदेव! हृदि स्पृशानि स्मर्तुर्लुठन्ति हृदयं मम माधवस्य ॥ १८ ॥**

**शय्यासनाटनविकत्थनभोजनादिष्वैक्याद्वयस्य ऋतवानिति विप्रलब्धः।**
**सख्युस्सखेव पितृवत्तनयस्य सर्वं सेहे महान्महितया कुमतेरघं मे ॥ १९ ॥**

**सोऽहं नृपेन्द्र! रहितः पुरुषोत्तमेन सख्या प्रियेण सुहृदा हृदयेन शून्यः।**
**अध्वन्युरुक्रमपरिग्रहमङ्ग! रक्षन् गोपैरसद्भिरबलेव विनिर्जितोऽस्मि ॥ २० ॥**

**तद्वै धनुस्त इषवः स रथो हयास्ते सोऽहं रथी नृपतयो यत आनमन्ति।**
**सर्वं क्षणेन तदभूदसदीशरिक्तं भस्मन् हुतं कुहकराद्धमिवोप्तमूष्याम् ॥ २१ ॥**

**राजंस्त्वयाऽभि[9]पृष्टानां सुहृदां नः सुहृत्पुरे।**
**विप्रशाप[10]विमूढानां निघ्नतां मुष्टिभिर्मिथः ॥ २२ ॥**

**वारुणीं मदिरां पीत्वा मदोन्मथितचेतसाम्।**
**अजानतामिवा[11]न्योऽन्यं चतुःपञ्चावशेषिताः ॥ २३ ॥**

**प्रायेणैतद्भगवत ईश्वरस्य विचेष्टितम्।**
**मिथो निघ्नन्ति भूतानि भावयन्ति च यन्मिथः ॥ २४ ॥**

---

*The additional verse is found in K & M The commentary of Sri Vijayadhvaja is at its proper place 1 K.M सं° 2 Gr कर्मा° 3 W °चरित° 4. K.M.W शोभनानि 5 K.M.W ऋभुम° 6 H.K.M.V.W °म° 7 H.K.M.V.W आमनन्ति 8 K.M.W °षे 9 B.I.K.M °नु° 10.B °पाव° 11 K.M °वात्मानं

**श्रीध०** स्वापराधमनुस्मरन् सन्तप्यमान आह — **सौत्य** इति। सौत्ये सारथ्ये कुमतिना मे मया स वृतः कुमतित्वमेवाऽऽह — आत्मद इत्यादिना। आत्मदः ज्ञानप्रदः। अभवाय मोक्षाय। भव्याः श्रेष्ठाः। **श्रान्ता वाहा अश्वा** यस्य तं माम्। जयद्रथवधे हि जलपानं विना अश्वाः श्रान्ताः ततो रथादवतीर्य भुविष्ठमपि बाणैः **भुवं भित्त्वा मया** जलं सम्पादितम्। तदा यस्यानुभावेन निरस्तचित्ता अरयो मां न प्रहृतवन्तः स सौत्ये वृत इति कुमतित्वम् ॥ १७ ॥

**नर्माणि** इति। हे नरदेव! उदारं गम्भीरं रुचिरं च **यत् स्मितं** तेन शोभितानि नर्माणि परिहासवाक्यानि तथा कार्यप्रस्तावेषु हे पार्थेत्यादीनि मधुराक्षराणि सञ्जल्पितानि च हृदि स्पृशानि मनोज्ञानि च माधवस्य यान्येतानि तानीदानीं स्मर्तुर्मम हृदयं लुठन्ति, लोठयन्ति, क्षोभयन्ति। णिजभाव आर्षः ॥ १८ ॥

**शय्येति**। विकत्थनं स्वगुणश्लाघनं विरुद्धसम्भाषणं वा। **शय्यादिष्वैक्यात्** अव्यतिरेकाद्धेतोः ऐक्यं मानसिकव्यापाराभेदः कदाचित् व्यभिचारं दृष्ट्वा हे वयस्य! **ऋतवान् सत्ययुक्तस्त्वमिति** वक्रोक्त्या विप्रलब्धः तिरस्कृतोऽपि। **ऋभुमानिति** पाठे **ऋभवो** देवाः सेवकास्सन्ति यस्य सः। असौ महानपि मया वयस्य इति मत्वा विप्रलब्धः तिरस्कृत इत्यर्थः। **ऋतमानिति** पाठे वत्वाभाव आर्षः। मेऽघमपराधं सेहे असहत, महामहितया महत्त्वेन ऐकपद्ये अतिमहत्त्वेनेत्यर्थः। सख्युरघं सखेव, तनयस्याघं पितेव ॥ १९ ॥

त्वया शङ्कितं पराजयं चापि प्राप्तोऽहमित्याह — **स** इति। तेन सख्या रहितोऽतो हृदयेन शून्यः। **अङ्ग!** हे राजन्! उरुक्रमस्य परिग्रहं षोडशसहस्रस्त्रीलक्षणं रक्षन् असद्भिः नीचैः। **अबला योषेव** ॥ २० ॥

श्रीकृष्णवियोग एवात्र हेतुः नान्य इत्याह — **तदिति**। यतो येभ्यो हेतुभ्यः नृपतय आमनन्ति। ईशेन रिक्तं शून्यम् **असत्कार्याक्षमं** सर्वमपि क्षणेन श्रीकृष्णवियोगाव्यवहितक्षण एव सन्मन्त्रविधानैरपि भस्मन्निति लुप्तसप्तमीकं पदम्। भस्मनि हुतं वा अतिप्रीतादपि कुहकान्मायाविनः सकाशाद्राद्धं लब्धमिव अथवा कुहके वञ्चके असत्पात्रे राद्धं दत्तमिव सम्यक्कर्षणादप्यूष्यां ऊषरभूमौ उप्तं प्रकीर्णं बीजमिव ॥ २१ ॥

**राजन्निति**। सुहृत्पुरे त्वयाऽभिपृष्टानां नः सुहृदां मध्ये चत्वारः पञ्च वा अवशेषिताः। तत्र हेतुः विप्रशापेत्यादि। वारुणीम् अन्नमयीम्। अजानतामिवाऽन्योऽन्यम् अजानतामिव स्वपितृपुत्रभ्रातृप्रभृतीन् कदाऽप्यजानतामिव एरकामुष्टिभिः निघ्नताम् [10]अवशेषिता इत्यनेनोक्तः ॥ २२, २३ ॥

अवशेषिता इत्यनेनोक्तं **हेतुकर्तारमाह** त्रिभिः — **प्रायेणेति**। **भावयन्ति** पालयन्ति ॥ २४ ॥

---

1. A,B °नादि। श° 2. H.V °मु° 3 A महितया महत्त्वेन ऐकपद्ये अति°, B महितया महत्त्वेन महामहितया इतिपाठे एकपदे अति° 4 H.V °ीः 5 A,B आनमन्ति 6 H.V add भस्माहुतिं 7 A,B लब्धं यथाऽसत् सम्यक्कर्षणादिनाऽपि ऊषरभूमावुप्तं बीजमिव 8. H.V °दिना 9 A,B omit अजानतां ... तामिव 10 A,B omit अव .... नोक्तः ॥

**वीर० सौत्य** इति। यस्य भगवतः पादपद्मं भव्याः साधवोऽभवाय मुक्तये भजन्ति। य आत्मद आत्मपर्यन्तवदान्यः "य आत्मदो बलदायक", "एको बहूनां यो विदधाति कामान्" (श्वेता. उ. 6-13) इति श्रुतेः। ईश्वरः सर्वनियन्ता कुबुद्धिना मे मया सौत्ये सारथ्ये निमित्ते वृतः श्रान्तैः वाहैस्सहितम् अत एव भुविष्ठमपि मां यस्य भगवतः प्रभावेण निरस्तं विमोहितं चित्तं येषां ते नृपा न प्राहरन् न प्रहृतवन्तः ॥ १७ ॥

**नर्माणीति**। हे नरदेव! तस्य माधवस्य श्रीकृष्णस्य उदारेण रुचिरेण सुन्दरेण च स्मितेन शोभितानि नर्माणि परिहासवाक्यानि हे पार्थेत्यादिरूपाणि सम्बोधनात्मकानि जल्पितानि च स्मरतो मम हृदयं लुठन्ति छिन्दन्ति ॥ १८ ॥

**शय्येति**। शय्यादिव्यापारेषु ऐक्यं साधारण्यं साम्यमिति यावत् तेन न विद्यते द्वयं द्वैविध्यम्। अन्यतरस्य व्यापारान्तरं यस्य तस्य **कुमतेर्मे** मम सख्युरघं सखेव तनयस्याघं पितृवत् पितेवेत्युक्तप्रकारेण विप्रलब्धोऽधिक्षिप्तः। **ऋभुमान् ऋभवो** देवाः तद्वान् धनवानितिवत् देवानां स्वामीत्यर्थः। महामहितया महामहिमत्वात् महान् महितयेति पाठे महिता माहात्म्यं तेन महान् सर्वमघमपराधं सेहे सोढवान्। **ऋतवानिति** पाठे **ऋतं** सत्यं वाचिकं काकुगर्भं विवक्षितं [2]तत् त्वं सत्यवादी किलेत्येवमादिरूपेण विप्रलब्धोऽपीत्यर्थः ॥ १९ ॥

**सोऽहमिति**। स ऐक्याद्द्वयोऽहं हे नृपेन्द्र! सख्या मित्रेण प्रियेण निरतिशयप्रीतिविषयेण हृदयते गच्छतीति हृदयः अय गताविति धातुः। हृदयङ्गमेन सुहृदा हितैषिणा पुरुषोत्तमेन शून्यो रहितः अङ्ग! हे राजन्! अध्वनि उरुक्रमस्य श्रीकृष्णस्य परिग्रहं कलत्रमण्डलं रक्षन् गोपैरप्यसद्भिः दुर्जनैरबलेव योषिदिव निर्जितोऽस्मीति ॥ २० ॥

**तदिति**। ये भगवता सह अवस्थानदशायां धनुरादयः त एव अधुनाऽपि रथी चाहं स एवाधुनाऽपि यतो येभ्यो धनुरादिभ्यो नृपतय आमनन्ति बलिष्ठं रथिनं मां मन्यन्त इत्यर्थः। यद्यप्येवं तथाऽपि तत्सर्वं धनुरादिकमीशरिक्तं

**श्रीकृष्णरहितं** सत् क्षणेन असत् असत्प्रायमभूत्। यथा भस्मनि हुतं यथा च कुहकराद्धं दोषवद्विप्रस्य राद्धं राधनं दानादिसत्कारः यथा च ऊषे **ऊषरभूमौ** उप्तं बीजं तद्वत्॥ २१॥

हे राजन्! सुहृत्पुरे द्वारकायां त्वयाऽभिपृष्टानां नोऽस्माकं सुहृदां मध्ये चतुःपञ्चावशेषिताः, चत्वारः पञ्च वाऽवशिष्टाः। अन्ये तु सर्वेऽपि नष्टा इत्यर्थः। तत्र हेतुं वदन् विशिनष्टि। विप्राणां **ऋषीणां** शापेन विमोहितचित्तानाम्॥ २२॥

वारुणीं मदिरां सुरां पीत्वा, तेन उन्मथितं विभ्रान्तं चेतो येषाम्, अत एवान्योऽन्यं अजानतामिव मिथो मुष्टिभिर्निघ्नताम्॥ २३॥

तन्मिथो निहननमपि प्रायशः ईश्वरस्य कृष्णस्य विचेष्टितम् एतत्सङ्कल्पमूलकमेवेति भावः। तदेव सदृष्टान्तमाह — यत् यथा यत्सङ्कल्पान्मिथो भूतानि भावयन्ति वर्धयामासुः तथा तत्सङ्कल्पादेव मिथो निघ्नन्ति विनिर्जघ्नुः॥ २४॥

---

1. W °वेति धीस्थ° 2. A,B omit तत्

**विज०** ***हे नरेन्द्र!** दर्शी सर्वज्ञो य ईशो रणमूर्ध्नि अलब्धरूपं केनाप्यज्ञातपूर्वरूपं मे अवदत्। सूत्रादयः मुख्यप्राणमुखाः देवाः तं न विदुरिति यत् यस्मात् तत् तस्मात् ईशो अतर्क्यविहारः अचिन्त्यक्रीड **इत्यन्वयः**। लब्धरूपमानन्दरूपमिति वा। कथम्भूताः सूत्रादयः? यस्य मायया **मोहकशक्त्या** आवृतदृशः पिहितनेत्राः नष्टज्ञाना इति यावत्। **कथमावृतदृश** इति तत्राऽऽह — अहमहमिति। भव्याः ज्ञातुं योग्यतावन्तः सकलमङ्गलरूपा इति वा॥

**भव्या** मुमुक्षवो यत्पादपद्ममभवाय भजन्ति, यस्य श्रीकृष्णस्यानुभावेन महिम्ना निरस्तं मुग्धं चित्तं येषां ते तथोक्ता **अरयः कर्णादयो** मां न प्राहरन्नायुध्यन्। कथम्भूताः रथिनः? रथादियुद्धसाधनोपेताः, **किंविशिष्टं माम्**? **भुविष्ठं** भूमौ स्थितं सम्यक् श्रान्ताः वाहा अश्वा यस्य सः तथोक्तः तं, श्रान्तानां वाहानां जलपानाय रथादवरुह्य युद्धसाधनमन्तरेण भूमितले स्थितमित्यर्थः। सोऽयमीश्वरः कुमतिना मया मे मत्सम्बन्धिनि सौत्ये सारथ्यकर्मणि वृतः। **किंविशिष्टः**? आत्मानं ददातीत्यात्मदः "य आत्मदा बलदा" (तैत्ति. सं. 4-1-8) इति श्रुतेः। अद्य तेन **भूम्ना** **पुरुषेण** मुषितोऽस्मीति परमोऽ**न्वयः**॥ १७॥

हे नरदेव! माधवस्य **हृदिस्पृशानि** मनोहराणि हे पार्थ! अर्जुनेत्यादीनि **गोष्ठ्यां** सञ्जल्पितानि नर्माणि परिहासलक्षणानि स्मर्तुर्मम हृदयं लुठन्ति, परिवर्तन्ते, हृदयात् न निर्गच्छन्ति। कथम्भूतानि? उदारं गम्भीरं रुचिरं **यत्स्मितं** तेन शोभनानि मङ्गलानि॥ १८॥

ममायं कृष्णो वयस्यः अहमेतादृशेन कृष्णेन समानवयस्कत्वात् **ऋभुमान्** सदैव इति भावेन **परमेष्टदेवेन** श्रीकृष्णेन शय्यादिषु ऐक्यात् तेन वञ्चितः तादृशबुद्धेः तदधीनत्वात् परदेवतया शय्याद्यैक्यमपराधो हि यस्मात् तस्माद्वञ्चितोऽस्मि। शय्या शयनम् विकत्थनं गालीवचनं स्तवनं वा। तथाऽपि स कृष्णो महतो **महत्त्वेन**

सख्युरघमपराधं सखेव पुत्रस्याघं पितेव कुत्सितबुद्धेर्मेऽघं मया विप्रलब्धोऽपि संवञ्चितोऽपि महामहितया कुमतेर्मेऽघं सेह इति वा। शय्यादिषु ऋभुमान् महात्मा मया विप्रलब्धस्तिरस्कृतः; किमिति, वयस्यः सखेत्यैक्यव्यवहारात्, तथाऽपि महामाहात्म्येन ममापराधं सेह इति वा॥ १९॥

शून्योऽस्मीति विकल्पं पुनः स्पष्टं परिहरतीत्याह — **सोऽहमिति**। हे नृपेन्द्र! सख्या जन्मप्रभृति-सहवर्तमानेन प्रियेण विषयादिसुखप्रापकेण सुहृदा अनिमित्तबन्धुना हृदयेनातिस्निग्धेन अतिक्रान्तेन वा पुरुषोत्तमेन क्षराक्षरमतीत्य वर्तमानेन कृष्णेन रहितः शून्योऽमङ्गलः अस्मीत्येकान्वयः येन मे अपहृतं तेज इत्येतद्विवृणोति — अध्वनीति। अङ्ग! राजन्! उरुक्रमस्य हरेः परिग्रहं कलत्रं रक्षन्नागच्छन्नसद्भिः असाधुभिर्गोपैः अबला योषेव विनिर्जितोऽस्मि। तस्मात् तेन मे मम तोजोऽपहृतमिति भावः॥ २०॥

तदेव स्पष्टयतीत्याह — **तदिति**। धनुस्तद्वै तदेव त इषवः तादृशाः शराः स रथः तादृशो रथः ते हयाः तादृशा अश्वाः रथी सोऽहं नान्यो यतो यस्मै नृपतय आमनन्ति तत्सर्वमीशरिक्तं श्रीकृष्णतेजसा विहीनं क्षणेन असत् नाशवत् अप्रयोजकमभूत्। कथमिव? भस्मनि हुतमिव कुहकेन राद्धं चौरेण सिद्धमिव ऊषे ऊषरे उप्तमिव भस्मनि हुतस्य मन्त्रोच्चारणादिना किञ्चित्फलं स्यादित्यतः, कुहकेति ऐन्द्रजालिकेन कुटुम्बभरणमुद्दिश्य द्रव्याऽऽहरणात् तज्जीवनेन ऐहिकफलदर्शनादित्यत उक्तमुप्तमूष इति। न तत्र किञ्चिद्बीजं प्ररोहतीत्यभिप्रायेण निदर्शनत्रयम् उक्तमिति वेदितव्यम्॥ २१॥

कच्चिदानर्तपुर्यामित्यादिबान्धवकुशलप्रश्नं परिहरतीत्याह — **राजन्** इति। सुहृत्पुरे द्वारवत्याम्॥ २२॥

नाम्ना वारुणीं वरुणनिर्मिततां मदिरां मदकरीं सुरां पीत्वा। अन्यच्च निमित्तमस्तीत्याह विप्रशापेति। ब्राह्मणशापेन विमूढानां कृत्याकृत्यज्ञानरहितानाम् अत एव आत्मानमजानताम्॥ २३॥

इदं यादवनिधनमपि श्रीकृष्णकृतमित्यभिप्रेत्य ब्रूत इत्याह — **प्रायेणेति**। भूतानि मिथो निघ्नन्ति भावयन्ति उत्पादयन्ति चेतीति यत्तदीश्वरस्य भगवतो विशिष्टचेष्टितमिति मन्ये। प्रायशब्दस्य प्राचुर्यार्थवाचित्वेऽपि अत्रावधारणार्थ एव। चशब्दः समुच्चयार्थः॥ २४॥

**रा० कृ०** भव्याः श्रेष्ठाः भक्ताः अभवाय संसारदुःखनिवृत्तिपूर्वक परमानन्द-प्राप्तिलक्षणमोक्षाय यत्पादपद्मं यस्य भगवतः पादपद्मं भजन्ति, यदनुभावनिरस्तचित्ताः यस्य भगवतोऽनुभावेन प्रभावेण निरस्तं मोहितं चित्तं येषां ते अरयश्शत्रवो रथिनोऽपि रथस्थिता अपि श्रान्तवाहं श्रान्ताश्वमत एव भुविष्ठं भूतलगतं मां न प्राहरन् न प्रहृतवन्तः, सः आत्मदः ज्ञानदाता ईश्वरः कुमतिना कुबुद्धिना हेतुना मे मम सौत्ये सारथ्ये वृतो नियुक्तः॥ १७॥

**हे** नरदेव! युधिष्ठिर! माधवस्य उदाररुचिरस्मितशोभितानि नर्माणि परिहासवचनानि हे पार्थ! हेऽर्जुन! हे सखे! हे कुरुनन्दन! इति हृदिस्पृशानि मनोहराणि सञ्जल्पितानि वचनानि स्मर्तुर्मम हृदयं लुठन्ति क्षोभयन्ति॥ १८॥

शय्यासनाटनविकत्थनभोजनादिषु शय्या, आसनम्, अटनं विहरणं, विकत्थनम् आत्मश्लाघा— **एतेषु शय्यादिषु ऐक्यात् हे वयस्य! ऋतवान्** सत्यवान् ऐक्ये सत्यपि कदाचित् व्यभिचारदर्शनात् हे सखे! सत्यवचनोऽसि! इति विप्रलब्धः तिरस्कृतोऽपि महान् स भगवान् महितया महत्त्वेन कुमतेर्मे मम अघमपराधं सर्वमपि सख्युरघं सखेव तनयस्याघं पितृवत् सेहे सोढवान्॥ १९॥

अङ्ग! **नृपेन्द्र! हे राजेन्द्र!** सः हरिकरुणापात्रभूतः अहं सख्या मित्रेण सुहृदा हितैषिणा प्रियेणाभिमतेन पुरुषोत्तमेन श्रीकृष्णेन रहितः हृदयेन शून्यः शून्यहृदयस्सन् अध्वनि मार्गे **उरुक्रमपरिग्रहं** उरुक्रमस्य भगवतः श्रीकृष्णस्य परिग्रहं षोडशसहस्रभार्यागणं रक्षन् असद्भिः दुष्टैः गोपैः अबलेव विनिर्जितोऽस्मि। अत्र विश्वनाथचक्रवर्ती स्वसारार्थदर्शिन्याम् एवं कथयति— पुरा देव्यः अष्टावक्रमुनिं स्तुत्वा, **'विष्णुर्वः पतिर्भविष्यतीति'** तस्माद्वरं प्राप्य तदङ्गवक्रिमदर्शनोत्थात् उपहासात् **'दस्युहस्ता भविष्यथ'** इत्यभिशापं च प्राप्य पुनः प्रसादिताच्च तस्मात् शापान्तञ्च प्रापुः। अतो भर्तारं प्राप्य दस्युहस्तं गता इति मुनेः शापप्रसादयोः अमोघत्वात् दस्युहस्तगतत्वं भर्तुः **प्राप्तिश्च** तासां तन्नैणैवाभूत् स्वभर्तुः कृष्णस्यैव दस्युरूपत्वात्॥ २०॥

यतो येभ्यो धनुरादिभ्यो नृपतयो मां आनमन्ति प्रणमन्ति। आमनन्तीति पाठे मां बलिनं मन्यन्त इत्यर्थः। तद्वै धनुः तदेव धनुः, त एव इषवः बाणाः, स एव रथः, त एव हयाः स एवाहं रथी च। तथापीशरिक्तं श्रीकृष्णरहितं तद्धनुरादिकं सर्वं भस्मन् भस्मनि हुतं घृतमिव कुहकराद्धमिव कुहकात् मायाविनः सकाशात् प्राप्तं वस्त्विव ऊष्यां ऊषरक्षेत्रे उप्तं बीजमिव क्षणेन असत् असत्प्रायं कार्यासमर्थमित्यर्थः अभूत्। एवमत्र सर्वेषामपि कार्यक्षमत्वं ईश्वराधीनमेवेति निरूपितम्। तदुक्तं भगवता— "ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन! तिष्ठति। भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया॥" (भ.गी. 18-61) इति॥ २१॥

हे राजन्! सुहृत्पुरे द्वारकायां त्वयाऽभिपृष्टानां पुरा विप्रशापविमूढानाम् अत एव वारुणीं मदिरां **च पीत्वा** मदोन्मथितचेतसां मदविह्वलमानसानां अत एव अन्योऽन्यमजानतामिव स्थितानामिति शेषः। ततश्च मुष्टिभिर्मिथः परस्परं निघ्नतां प्रहरतां नः सुहृदां मध्ये चतुःपञ्च चत्वारः पञ्च वाऽवशेषिताः अवशिष्टाः कृताः॥ २२, २३॥

अवशेषिता इत्यनेनोक्तः कारणकारणभूतोऽत्र निरूप्यते— भूतानि गोव्याघ्रादीनि पितृपुत्रादीनि मिथः परस्परं निघ्नन्ति, मिथः भावयन्ति, पालयन्ति च इति यत् तदेतत्सर्वमपि भगवतः ईश्वरस्य श्रीकृष्णस्यैव चेष्टितं लीला ईश्वरस्य सर्वप्रेरकत्वात्॥ २४॥

**जलौकसां जले यद्वन्महान्तोऽदन्त्यणीयसः।**
**दुर्बलान् बलिनो राजन् महान्तो बलिनो मिथः॥ २५॥**

**एवं बलिष्ठैर्यदुभिर्महद्भिरितरान्[1] विभुः।**
**यदून् यदुभिरन्योऽन्यं भूभारान्[2] सञ्जहार ह *॥ २६॥**

**देशकालार्थयुक्तानि हृत्तापोपशमानि च ।**
**हरन्ति स्मरतश्चित्तं गोविन्दाभिहितानि मे ॥ २७ ॥**

**सूत उवाच**

**एवं चिन्तयतो जिष्णोः कृष्णपादसरोरुहम् ।**
**सौहार्देनातिगाढेन शान्ताऽऽसीद्विमला मतिः △ ॥ २८ ॥**

**वासुदेवाङ्घ्र्यनुध्यानपरिबृंहितरंहसा ।**
**भक्त्या निर्मथिताशेषकषायधिषणोऽर्जुनः ॥ २९ ॥**

**गीतं भगवता ज्ञानं यत्तत् सङ्गममूर्धनि ।**
**कालकर्मतमोरुद्धं पुनरध्यगमत् प्रभुः ॥ ३० ॥**

**विशोको ब्रह्मसम्पत्त्या संछिन्नद्वैतसंशयः ।**
**लीनप्रकृतिनैर्गुण्यादलिङ्गत्वादसम्भवः ॥ ३१ ॥**

**निशम्य भगवन्मार्गं संस्थां यदुकुलस्य च ।**
**स्वःपथाय मतिं चक्रे निभृतात्मा युधिष्ठिरः ॥ ३२ ॥**

---

1 H,V °रपरान् 2 K,M °रं * कण्टकं कण्टकेनैव द्वयं चापीशितुस्समम् । This is the second half of V 34 and it is commented upon by श्रीविजयध्वजतीर्थ In M, it is a part of V 26, consisting 6 Pādas △ Here ends 14th Chapter in K & M 3 K,M °भि° 4 N °ध्या° 5. B,H,K,M,N,V,Ẁ विभुः 6 K,M °वृत्तात्मा

**श्रीध॰ जलौकसाम्** इति। जलौकसां मत्स्यादीनां मध्ये महान्तः स्थूला अणीयसः सूक्ष्मान् यथा अदन्ति भक्षयन्ति ॥ २५ ॥

**एवमिति।** एवं बलिष्ठैर्महद्भिः पाण्डवैः दुर्योधनजरासन्धादीन्निहत्य यदुभिः इतरान् साल्वादीन्निहत्य यदून् यदुभिरन्योऽन्यं निहत्य भगवान् भूभारान् भुवो भारभूतान् यदून् संहृतवान्॥ २६ ॥

अतः परं वक्तुं न शक्नोमीति सूचयन्नाह — **देशकालेति।** देशकालोचितार्थयुक्तानि मनःपीडोपशमकराणि च गोविन्दस्य वचनानि स्मरतो मे मम चित्तं हरन्ति आकर्षन्ति ॥ २७ ॥

**एवमिति** सूतोक्तिः। अतिदृढेन स्नेहेन कृष्णपादसरोरुहं चिन्तयतोऽर्जुनस्य मतिश्शान्ता भगवत्स्मरण-जनिताऽऽनन्दातिशयेन शान्तिरसयुक्ता विशोका विमला विरक्ता च आसीत्॥ २८ ॥

मतिवैमल्यफलमाह — **वासुदेवेति।** वासुदेवाङ्घ्र्यनुध्यानेन परिबृंहितं संवर्धितं रंहो वेगो यस्यास्तया **भक्त्या** निर्मथिताः उन्मूलिताः अशेषाः कषायाः कामादयः यस्यास्सा धिषणा बुद्धिर्यस्य सः ज्ञानं **पुनरध्यगमदित्युत्त-रेणान्वयः** ॥ २९ ॥

**गीतमिति।** कालेन कर्मभिस्तमसा भोगाभिनिवेशेन च रुद्धमावृतं सत्॥ ३०॥

ज्ञानफलमाह — **विशोक** इति। एतदेव शोकहेत्वभावेन उपपादयति। शोकस्य हि[2] हेतुः द्वैतभ्रमः तस्य देहः तस्य लिङ्गं तस्य गुणाः तेषामविद्या। तत्र[3] ब्रह्मसम्पत्त्या वेदान्तश्रवणेन ब्रह्माहमिति ज्ञानेन लीना प्रकृतिरविद्या यस्मिंस्तन्नैर्गुण्यं भवति, न तु सुषुप्तिप्रलययोरिव अविद्याशेषः। तस्मात् नैर्गुण्यात् गुणकार्यलिङ्गनाशः। अलिङ्गत्वाच्च असम्भवः। **सम्यग्भोगाय** भवति पुनः पुनरिति सम्भवः स्थूलदेहः तद्रहितः। ततश्च तत्परिच्छेदाभावात् सञ्छिन्नो द्वैतलक्षणः संशयो भ्रमो यस्य स विशोको जात इति॥ ३१॥

**निशम्येति** भगवतो मार्गमालक्ष्य यदुकुलस्य संस्थां नाशं श्रुत्वा नारदोक्तं चानुस्मृत्य स्वःपथाय स्वर्गमार्गाय निभृतात्मा निश्चलचित्तः नियमितान्तःकरण[4] इत्यर्थः॥ ३२॥

---

1 A,B omit भगव ....... युक्ता 2 H,V अपि 3 H,V ततश्च 4 A,B omit नियमितान्तःकरण इत्यर्थः

**वीर॰** युक्तं चैतत् तस्य भूभारावतारायावतीर्णस्य इत्यभिप्रायेण स्वयमुदासीन एव सन् भूभारं सञ्जहारेत्याह — **जलौकसाम्** इति द्वाभ्याम्। तत्र विवक्षितार्थोपयोगितया दृष्टान्तमाह — जले जलौकसां मत्स्यादीनां मध्ये यथाऽणीयसः सूक्ष्मान् जलौकसो महान्तस्ते अदन्ति, भक्षयन्ति। यथा च दुर्बलांस्तान् बलिनो घ्नन्ति यथा च हे राजन्! महान्तो बलिनश्च ते मिथो निघ्नन्ति॥ २५॥

एवं विभुः बलिष्ठैः महद्भिश्च यदुभिरितरान् दुर्बलानन्यांश्च भूतान् ततोऽन्योन्यं युदभिर्यदूनेव मिथो भुवो भाररूपान् सञ्जहार संहृतवान्॥ २६॥

देशकालार्थः देशकालानुगुणं कर्तव्यं प्रयोजनं तद्युक्तानि तत्प्रकाशकानि शृण्वतां हृदयगतदुःखोपशमानि गोविन्दस्याभिहितानि। भावे क्तः। भाषणानि गीतादिरूपाणि स्मरतो मम चित्तं हरन्ति॥ २७॥

इत्थमतिगाढेनापरेण सौहार्देन कृष्णस्य पादसरोरुहं चिन्तयतोऽर्जुनस्य अत एव विमला शान्ता रागाद्यकलुषिता च मतिर्बभूव॥ २८॥

वासुदेवस्य **अङ्घ्र्योरनुध्यानेन** परिबृंहितं वर्धितं रंहो वेगः **प्रावण्यं** यस्यास्तया **वासुदेवभक्त्या** अविच्छिन्नस्मृतिसन्तानरूपया प्रीत्यात्मिकया निर्मथिताः निरस्ताः अशेषाः कषायाः कषायवत् दुर्मोच्या[2] रागादयो यस्यास्सा धिषणा बुद्धिर्यस्य सोऽर्जुनः॥ २९॥

**सङ्ग्राममूर्धनि** युद्धारम्भे यद्भगवता गीतं गीतोपनिषद्रूपेणोपदिष्टं ज्ञानं **स्वात्मपरमात्मतत्प्राप्तिसाधनादियाथात्म्यगोचरं** ज्ञानं तन्महता कालेन कर्मणा तमोगुणेन चावरुद्धं तिरोहितमपि विभुः तत्त्वावधारणसमर्थः। अत्र निर्मथिताशेषकषायत्वं हेतुः। पुनरप्यध्यगमत् अध्यवस्यत्॥ ३०॥

ब्रह्मसम्पत्त्या **पर्तुगतौ।** गत्यर्थो बुद्ध्यर्थः। **ब्रह्मविषयकसम्यज्ज्ञानेन ह्यर्जुनः** तदानीं मुक्तः[1] तेनोपलक्षितः यद्वा, तेन हेतुना छिन्नद्वैतसंशयः आत्मनि देहगतदेवादिभेदभ्रमरहित इति। **गीतोपनिषत्पूर्वषट्कोक्तबुद्ध्युन्मेषः**

**ब्रह्मसम्पत्त्या** इति मध्यमषट्कार्थज्ञानोन्मेष उक्तः। यद्वा **ब्रह्मसम्पत्त्या सञ्छिन्नद्वैतसंशयः ब्रह्मज्ञानेन सञ्छिन्नदेवादिद्वैतस्व-** निष्ठद्वैतसंशयः इत्यर्थः। अलिङ्गत्वादिति स्थूलदेहविरहानुसन्धानमुक्तम्, लीनप्रकृतिनैर्गुण्यात् विनष्टसूक्ष्मप्रकृतितया गुणत्रयविरहात्तदननुसन्धानादित्यर्थः। देहे वर्तमानत्वात् अर्जुनस्यासम्भवः। अत एव पुनर्जन्मरहितः ततो विशोकः अभवदित्यर्थः। विशोकग्रहणम् अपगतपाप्मत्वादि गुणाष्टकयुक्तस्वरूपोपलक्षणम्॥ ३१ ॥

भगवतो मार्गं स्वर्लोकगमनप्रकारं यदुकुलसंस्थाम् अन्तं नाशं चेति यावत्। तत् श्रुत्वा युधिष्ठिरः निभृतात्मा समाहितचित्तः स्वःपथाय **स्वश्शब्दः** सुखपरः — निरतिशयसुखरूपलोकमार्गाय मतिं चक्रे॥ ३२ ॥

---

1 W °पहा° 2 W °चा 3 W पद° 4 W यु° 5 A.B omit °म° 6 W °त्तदनु° 7 A.B omit तत् 8 A.B omit **°चित्त°**

**विज॰** इममर्थं सोदाहरणं स्पष्टयतीत्याह — **जलौकसाम्** इति। जलौकसां यादसां मध्ये महान्तोऽणीयसोऽणुतरान् अदन्ति बलिनो दुर्बलान् भक्षयन्ति। ये महान्तः ये च बलिनः ते **मिथोऽन्योन्यं** भक्षयन्ति यथा॥ २५॥

एवं विभुः बलिष्ठैः महद्भिर्यदुभिरितरान् हत्वा यदुभिरेव **यदूनन्योन्यं** हत्वा भूभारं दैत्यकुलं सञ्जहारेत्येकान्**वयः**। भूभारहरणमेवावतारप्रयोजनमित्येतत् हशब्देन आह! यद्वाहुदण्डाभ्युदयानुजीविनः। यदून् **यदुभिरन्यो-न्यमित्याद्युक्तं** पालनं संहरणञ्च हरेर्विषममिति चेत् तत्राऽऽह द्वयमिति। तत्तत्कर्मानुसारिफलदातुः ईश्वरस्याप्तकामस्य तेषां सञ्जीवनं मरणं चेति द्वयं सममेव जीवनेनोपादेयाभावात् मरणेन हान्यभावाच्च अतो द्वयं न विषममिति भावः॥ २६॥

स्वदुःखकारणं ब्रूत इत्याह — **देशेति**। देशकालार्थयुक्तानि तत्तद्देशतत्तत्कालतत्तद्वस्तूचितानि हृत्तापोपशमनानि **अहङ्**काराश्रितसंसारसमुद्रशोषणकारणानि गोविन्दस्याभिहितानि वचनानि स्मरतो मम चित्तं हरन्तीति यस्मात्तस्मात्तद्रहितत्वेन शोचामीत्येकान्**वयः**॥ २७॥

**बान्धवनिमित्तस्नेहलक्षणभक्त्यतिशयेन** तच्चरणस्मरणमाह — **एवमिति**। अतिगाढेनातिशयेन दृढेन तत्रै-वातिशयेन मग्नेन वा सौहार्देन प्रेमलक्षणभक्तिसाधनेन कृष्णपादपद्मम् एवमुक्तप्रकारेण स्मरतो जिष्णोः निर्मला **मतिर्मननसमर्था बुद्धिः शान्ता** सुखपूर्णा पूर्वस्मादतिशयेन भगवन्निष्ठावती आसीदित्येकान्**वयः** * ॥ २८॥

ननु अर्जुनस्य नानाविधक्षत्त्रहत्यापापोपरक्तायाः तामस्याः बुद्धेर्नैर्मल्यं कथं युज्यते इत्याशङ्**क्य जी-वन्मुक्तेष्वेकत्वात्** भगवदर्पणबु**द्ध्या** कृतदुष्टक्षत्त्रहत्यस्य तस्य मतेः नैर्मल्यं युक्तमिति दर्शयति — **वासुदेवेति**। **ब्रह्मसम्पत्त्या** ब्रह्मणोऽवगत्या ब्रह्मापरोक्षज्ञानेन विशोकः तस्मादेव छिन्नौ निवृत्तौ द्वैतसंशयौ यस्मात् स तथोक्तः, **द्वे** इतं द्वीतं द्विधा गतं ज्ञानं तस्य भावो **द्वैतम्, अन्यथाज्ञानमिति** यावत्। संशयः इदं वाऽदो वा इत्युभयकोटिविषयम् ज्ञानम्, **विच्छिन्नो** जीवब्रह्मभेदविषयः संशयो येनेति वा लीना अपसारिता प्रकृतिरहङ्कारात्मिका यस्मात् स तथोक्तः, भावप्रधानो निर्देशः, तस्मात् लीनप्रकृतित्वान्निर्गतानि सत्त्वादिगुणकार्याणि यस्मात् स तथोक्तः तस्य भावो नैर्गुण्यं तस्मादलिङ्गत्वात् सूक्ष्मशरीररहितत्वात् न सम्भवोऽनारब्धकर्ममूला या पुनरुत्पत्तिः तया वर्जितः, अनारब्धकर्मणां

ज्ञानोदयेन नाशादारब्धकर्मणामेव **उर्वरितत्वाज्ज्ञानोदयकाले** एवम्भूतसन्नर्जुनो रणमूर्धन्यारब्धकर्मणा **स्वधर्मे अधर्मबुद्धये** स्वात्मने भगवता **यज्ज्ञानं** गीतम् उपदिष्टम् तदारब्धकर्ममूलैः कालकर्मतमोभिः रुद्धं, कालेन कर्मणा तमसा चाऽऽवृतं पुनरध्यगमत् अवगतवान् आवर्तितवानित्यन्वयः। कीदृशः ? वासुदेवस्याङ्घ्र्योरभिरतः सम्यग्ध्यानेन परितो बृंहितं वृद्धं रंहो वेगो यस्याः सा तथोक्ता, तया भक्त्या निर्मथिताः अशेषाः समूलाः कषायाः पापलक्षणाः रागलक्षणा वा यस्याः सा तथोक्ता निर्मथिताशेषकषाया धिषणा बुद्धिर्यस्य स तथा। अत्र न सर्वारब्धकर्मणां निर्मथनमभिप्रेतं किन्तु महता भगवत्कारुण्यादिना कारणेन केषाञ्चिदेव। अन्यथा "भोगेन त्वितरे क्षपयित्वाऽथ सम्पत्स्यते" (ब्र. सू. 4-1-19) "तस्य तावदेव चिरम्" (छान्दो. उ. 6-14-2) इत्यादिसूत्रश्रुतिविरोधः स्यात्। "महता कारणेनैव प्रारब्धान्यपि कानिचित्। कर्माणि क्षयमायान्ति ब्रह्मदृष्टिमतः क्वचित्"॥ इत्युक्तत्वाच्च। अतोऽत्राशेषशब्दो निर्मथनयोग्याशेषप्रारब्धविषय इति भावः॥ २९, ३०, ३१॥

एवं यादवसंस्थां श्रीकृष्णस्वधामप्राप्तिञ्चाभिधाय, पाण्डवस्वर्याणमुपक्रमते — **निशम्य** इति। भगवतः श्रीकृष्णस्य स्वधामगमनप्रकारं यदुकुलस्य संस्थां विनाशञ्च श्रुत्वा निवृत्तात्मा राज्यादिभ्यः व्यावृत्तमनाः नितरां वृत्ते सदाचारे आत्मा यस्येति वा। युधिष्ठिरः कामक्रोधादिजयलक्षणयुद्धे स्थिरः स्वःपथाय स्वर्गमार्गाय वीराध्वने मतिं चक्र इत्यन्वयः॥ ३२॥

---

* Here ends 14th Chapter in K & M 1 A °रभितः 2 A उपावृत्त°

**रा० कृ०** हे राजन्! जले जलौकसां जलजन्तूनां मध्ये यद्वत् यथा महान्तः स्थूलाः महामत्स्यादयः अणीयसोऽल्पीयसो मत्स्यादीन् अदन्ति भक्षयन्ति, यद्वत् बलिनः दुर्बलान् घ्नन्ति महान्तो बलिनश्च यद्वत् मिथः घ्नन्ति च, एवं विभुस्सर्वव्यापकः श्रीकृष्णः बलिष्ठैः महद्भिश्च यदुभिर्निमित्तभूतैः इतरान् दुर्बलान् दुष्टान् सञ्जहार संहृतवान्। यदूंस्तु यदुभिरेव **अन्योन्यं** सञ्जहार। एवं भूभारान् भुवो भारभूतान् सञ्जहार॥ २५, २६॥

देशकालार्थयुक्तानि देशकालप्रयोजनसमुचितानि हृत्तापोपशमानि गोविन्दाभिहितानि गोविन्दस्य वचनानि गीतादिरूपाणि कर्तॄणि स्मरतो मम चित्तं हरन्ति रञ्जयन्ति॥ २७॥

एवमतिगाढेन सौहार्देन **प्रेम्णा** कृष्णपादसरोरुहं चिन्तयतः ध्यायतः जिष्णोरर्जुनस्य **मतिरशान्ता** विमला च आसीत्॥ २८॥

वासुदेवाङ्घ्र्यनुध्यानपरिबृंहितरंहसा भक्त्या निर्मथिताशेषकषायधिषणोऽर्जुनः **सङ्ग्राममूर्धनि** कौरवपाण्डवयुद्धप्रारम्भे भगवता श्रीकृष्णेन गीतं **भगवद्गीतारूपेणोपदिष्टं** यत् ज्ञानं वर्तत इति शेषः। **कालकर्मतमोरुद्धं तज्ज्ञानं** प्रभुस्समर्थस्सन् पुनरध्यगमत् अधिगतवान्॥ २९, ३०॥

ततश्च ब्रह्मसम्पत्त्या ब्रह्मात्मज्ञानेन लीनप्रकृतिनैर्गुण्यात् अविद्यालयप्रयुक्तात् गुणराहित्यात् ततः अलिङ्गत्वात् गुणकार्यलिङ्गनाशात् असम्भवः स्थूलदेहाभिमानरहितः अर्जुनः देहपरिच्छेदाभावात् सञ्छिन्नद्वैतसंशयस्सन् विशोकश्शोक-रहितः सञ्जात इति शेषः।

लिङ्गमत्र त्रिगुणकार्यभूतं नामरूपाद्यभिमाननिदानं वासनामयं सूक्ष्मशरीरम् तन्तूनां कार्पासमिव त्रिगुणानामाधारभूता प्रकृतिः। प्रकृतिरविद्यैव दृश्यप्रपञ्चात्मिका। ब्रह्मात्मज्ञाननिष्ठया तु सर्वप्रपञ्चस्य ब्रह्मत्वावस्थितेः प्रकृतिप्रभावाभावरूपः प्रकृतिलयस्सञ्जायते, प्रकृतिलयात् प्रकृतिकार्यगुणलयः तेन गुणकार्यवासनामयसूक्ष्मशरीरलयः। तेन स्थूलदेहावस्थितस्यापि जीवस्य ब्रह्मनिष्ठया द्वैतभ्रमनिवृत्तेः विशोकत्वमुपपद्यते॥ ३१॥

भगवन्मार्गं भगवतः श्रीकृष्णस्य मार्गं वैकुण्ठगमनं यदुकुलस्य संस्थां च विनाशं च निशम्य निभृतात्मा युधिष्ठिरः स्वःपथाय स्वर्गमार्गाय मतिं चक्रे॥ ३२॥

**पृथा[1]ऽप्यनुश्रुत्य धनञ्जयोदितं नाशं यदूनां भगवद्गतिं च ताम्।**
**एकान्तभक्त्या भगवत्यधोक्षजे निवेशितात्मोपरराम संसृतेः॥ ३३॥**

**ययाऽहरद्भुवो भारं तां तनुं विजहावजः।**
**कण्टकं कण्टकेनेव द्वयं चापीशितुस्समम्॥ ३४॥**

**यथा मत्स्यादिरूपाणि धत्ते जह्याद्यथा नटः।**
**भूभारः क्षपितो येन जहौ तच्च कलेवरम्॥ ३५॥**

**यदा मुकुन्दो भगवानिमां महीं जहौ स्वतन्वा श्रवणीयसत्कथः।**
**तदा[2]ऽहरेवाप्रतिबुद्धचेतसामधर्म[3]हेतुः कलिरन्ववर्तत॥ ३६॥**

**युधिष्ठिरस्तत्परिसर्पणं बुधः पुरे च[4] राष्ट्रे च गृहे तथा[5]ऽऽत्मनि।**
**विभाव्य[6] लोभानृतजिह्महिंसनाद्यधर्मचक्रं गमनाय पर्यधात्॥ ३७॥**

**स्वराट्[7] पौत्रं विनयिन[8]मात्मनः[9] सुसमं गुणैः।**
**तोयनीव्याः पतिं भूमेरभ्यषिञ्चद्गजाह्वये॥ ३८॥**

**मथुरायां[10] तथा[11] वज्रं शूरसेनपतिं[12] ततः।**
**प्राजापत्यां निरूप्येष्टिमग्नीनपिबदीश्वरः॥ ३९॥**

**विसृज्य तत्र तत्सर्वं दुकूलवलयादिकम्।**
**निर्ममो[13] निरहङ्कारः सञ्छिन्नाशेषबन्धनः॥ ४०॥**

**वाचं जुहाव मनसि तत्प्राण इतरे च[14] तम्।**
**मृत्यावपानं[15] सोत्सर्गं तं[16] पञ्चत्वे ह्यजोहवीत्॥ ४१ ॥**

---

* The three verses No. 33,34 & 35, excepting the second half of V 34 already commented at V.26, are omitted in K & M, and not commented by **श्रीविजयध्वजतीर्थ** 1 B.H.V °प्युप° 2 K.M तदा हरावप्रति° 3 B.H.I.K.M.V.W °भद्र° 4 AF GF स 5 H.N.V °दा° 6 H.V विलोक्य 7 B सम्राट् 8 B विनियत°, WF विनिमय°, K.M विनीतं त° 9 K.M °नेऽन्नवमं 10 H.K.M.V.W °धु° 11 K.M ततो 12 H.V सुतं 13 H.V निर्मोह° 14 K.M परम् 15 K.M धृत्या ह्यपानं 16 K.M तत्परत्वे; WF तत्पञ्चत्वे

**श्रीध०** **पृथा** इति। तां भगवद्गतिं दुर्विज्ञेयाम्। वक्ष्यति ह्येकादशे "सौदामन्या यथाऽऽकाशे यान्त्या हित्वाऽभ्रमण्डलम्। गतिर्न लक्ष्यते मर्त्यैस्तथा कृष्णस्य दैवतैः॥" (भाग. 11-31-9) इति **एकान्तभक्त्या** अव्यभिचरितभक्त्या संसृतेरुपरराम, जीवन्मुक्तो बभूव। देहं जहाविति वा॥ ३३ ॥

तदेवमुक्तमपि यादवेभ्यो भगवतो वैलक्षण्यमबुद्ध्वा तत्साम्यं वदतो मन्दमतीन् प्रति वैलक्षण्यं स्पष्टयति द्वाभ्याम्— **यया** इति। यया यादवरूपया **तन्वा** भुवो भारं कण्टकेन कण्टकमिव[1] कण्टकोद्धरणसाधनीभूतं कण्टकमिवाहरत्। यादवतनुर्भूभारतनुश्चेति द्वयमपि ईश्वरस्य संहार्यत्वेन सममेव॥ ३४ ॥

श्रीकृष्णमूर्तेर्विशेषमाह— **यथा** इति। तान्यपि यथा धत्ते जहाति च। तदाह— यथा नटो निजरूपेण स्थितः एव[2] रूपान्तराणि धत्तेऽन्तर्धत्ते च तथा येन कलेबरेण क्षपितः तदपि कलेबरं जहौ अन्तर्दधादित्यर्थः[3]॥ ३५॥

युधिष्ठिरस्य स्वर्गारोहणप्रसङ्गाय[4] कलिप्रवेशमाह— **यदा** इति। **स्वतन्वा** जहौ संतनोरेव[5] वैकुण्ठारोहात्। श्रवणार्हा सती कथा यस्य तदा यदहः तस्मिन्नेव अहरिति[6] लुप्तसप्तम्यन्तं पदम्। अप्रतिबुद्धचेतसामविवेकिनामिति[7] विवेकिनां तु न प्रभुरित्युक्तम्। अन्ववर्ततेतिं पूर्वमेवांशेन प्रविष्टस्य स्वेन[8] रूपेणानुवृत्तिरुक्ता॥ ३६ ॥

**युधिष्ठिर** इति। बुधो युधिष्ठिरः आत्मनि मनसि च तस्य कलेः परिसर्पणं प्रसरणं विलोक्य। कथम्भूतम्? लोभाद्यधर्मचक्रं यस्मिन्। जिह्मं कौटिल्यम्। पर्यधात्तदुचितं परिधानमकरोत्॥ ३७ ॥

**स्वराट्** इति। आत्मनः स्वस्य गुणैः सुसमं स्वेनात्यन्तसदृशं[9] नियतं नियमवन्तं तोयं सर्वतः[10] स्थितं समुद्रोदकमेव। नीवी परिधानविशेषो यस्यास्तस्याः भूमेः पतित्वेनाभिषिक्तवान्॥ ३८ ॥

**मथुरायाम्[11]** इति। वज्रं **अनिरुद्धस्य** **पुत्रम्**। प्राजापत्येष्टिं निरूप्य **कृत्वे**त्यर्थः। अपिबत् आत्मन्यारोपयामास। ईश्वरः समर्थः॥ ३९ ॥

**विसृज्य** इति। **सञ्छिन्नान्यशेषाणि** **बन्धना**न्युपाधयो येन॥ ४० ॥

तदेव दर्शयति द्वाभ्याम्— **वाचम्** इति। वाचमित्युपलक्षणम्। सर्वेन्द्रियाणि **मनसि प्रविला**पितवानित्यर्थः। तच्च मनः प्राणे प्राणाधीनवृत्तित्वात्। तं च प्राणमितरे इतरस्मिन्नपाने, तेनाकर्षणात्[12]। अपानव्यापार उत्सर्गः तत्सहितमपानं मृत्यौ तदधिष्ठातृदेवतायाम्[13]। अनेनैव वागादिष्वपि[14] तत्तत्कर्मसाहित्यं ज्ञेयम्। तं मृत्युं पञ्चत्वे

**पञ्चभूतानामैक्ये** देहे देहस्यैव मृत्युः न आत्मन **इति** भावितवानित्यर्थः। अजोहवीदिति यङ्लुगन्तात् लुङि रूपम्॥ ४१ ॥

---

1 A,B omit कण्टकमिव .... भूतं 2 A omits एव 3 H,V °र्दधावि° 4 A °रोहप्र° 5 H,V स्वोय°, B स्व° 6 H,V अहनीति 7. H,V °मज्ञानाविष्टचित्तानां वि° 8 A तेन 9 A,B अतिसदृशं 10 B adds एव 11 H,V °घु° 12 H,V अपानेनाऽऽ° 13 H,V °न° 14 H,V °दीनामपि

**वीर॰** अर्जुनोदितं यदूनां नाशं, तां भगवतो गतिं च श्रुत्वा कुन्त्यपि भगवत्यधोक्षजे अनन्यप्रयोजनया भक्त्या निवेशित आत्मा मनः यया तथाभूता संसृतेरुपरराम। विरक्ता बभूव॥ ३३॥

भगवन्मार्गमिति। **भगवद्गतिमित्यनेन** चोक्ता भगवतः स्वलोकं प्रति गतिः किं कृष्णाख्यतनुत्यागपूर्विका उत तयैवेति शौनकाभिप्रेतं विशदयति — **यया** इति। अजो भगवान् यया **तन्वा** भुवो भारमहरत् तां तनुं विजहौ। मनुष्यसंस्थानं विजहौ। स्वासाधारणया चतुर्भुजादिमत्या **तन्वा** अवतीर्य पित्रोः प्रार्थनया यां मनुष्यसंस्थानस्थितां तनुं भूभारमपनेतुं जग्राह। तां तनुं तिरोधाय **स्वासाधारणतन्वा** जगामेत्यर्थः। मनुष्यसंस्थानस्य भूभारापनोदनौपाधिकत्वेन यावदुपाधितत्संस्थानापनोद्यमपनुद्य, स्वासाधारणयैव जगामेति भावः। मनुष्यसंस्थानेनैव किं न जगामेत्याकाङ्क्षायां, तत्र दृष्टान्तमुखेनोत्तरमाह। यथा कण्टकविद्धचरणः पुमान् यावत्तदपनोदककण्टकान्तरं परिगृह्य तेन तदपनुद्य, ततः अपनुत्तमपनोदकमपि कण्टकद्वयं जहाति, तद्वत् ईशितुः भगवतः द्वयमपि, **सममपनोद्यम्।** दुष्कृततच्छरीरजालमपनोदकं मनुष्यसंस्थानं चोभयमपि समं हातव्यत्वेन समम्, अपनोदकशरीरस्यापि **यावदुपाधि धार्यत्वादिति** भावः। ईशितुरुभयमित्यनेन दुष्कृच्छरीरे**ष्वपि** अन्तः प्रविश्य नियन्तुर्भगवतः तान्यपि शरीराणि भगवत एव स्वस्यैवेति सूचितम्। कण्टकदृष्टान्तेन चैतदभिप्रेतम् यथा उभयोः कण्टकयोः कण्टकत्वमविशिष्टम्; एवमुभयोरपि शरीरयोः **स्वशरीरत्वमविशिष्टमिति**॥ ३४॥

इदमेव प्रसिद्धदृष्टान्तान्तरेणाप्याह — **यथा** इति। यथा नटः नाट्योपयुक्तानि वेषान्तराणि परिगृह्य, **नाट्यानन्तरं स्वेनरूपेणैवावतिष्ठते**, तथा च भगवानपि तत्तत्प्रयोजनाय **मत्स्यादिरूपाणि** यावत्प्रयोजनं धत्ते, तदन्ते पुनर्जह्यात्। हित्वा स्वकीयरूपेणैवावतस्थे, तथा येन शरीरेण भूभारः क्षपितः निरस्तः, तत्कलेबरं जहौ। तत्तिरोधाय स्वासाधारणेनैव जगामेत्यर्थः॥ ३५॥

**यदा** इति। श्रोतव्याः सत्याः कथाः यस्य सः भगवान् मुकुन्दः **स्वतन्वा** स्वासाधारणदिव्यमङ्गलविग्रहेणोपेतः **महीं** यदा यस्मिन्नहनि जहौ, तदाऽहरेव तस्मिन्नहन्येव अविवेकिनामभद्रहेतुः अशुभहेतुः **कलिरन्ववर्तत**॥ ३६॥

ततो युधिष्ठिरः पुरे राष्ट्रे गृहे आत्मनि जनानां देहेषु च तस्य कलेः परिसर्पणम् अनुवर्तनं बुधः जानन् तन्मूलकं लोभाद्यधर्माणां चक्रं जालमवलोक्य गमनाय गृहात् निर्गमनाय पर्यधात् परिहितः उद्युक्तो बभूव इत्यर्थः॥ ३७॥

ततः स्वराट् राजा युधिष्ठिरः गुणैः आत्मनः स्वस्य समं तुल्यं विनयिनं च पौत्रं परीक्षितं हस्तिनपुरे तोयनीव्याः समुद्रमेखलायाः भूमेः पतिमभ्यषिञ्चत् अभिषिक्तवान्। विनिमयमात्मनोऽनवमं इति पाठे विनिमयं विनिमयार्हं सदृशमनवममन्यूनमित्यर्थः ॥ ३८ ॥

तथा मथुरायां वज्राख्यं यदुकुलकुमारं शूरसेनानां जनपदानां पतिमभ्यषिञ्चत्। ततः प्राजापत्यां प्रजापतिदेवताकामिष्टिं निरूप्य कृत्वा ईश्वरः युधिष्ठिरः अग्नीन् आहवनीयादीन् अपिबत्। आत्मन्यारोपितवान्॥ ३९ ॥

तत्र स्वगृह एव तत् प्रसिद्धं दुकूलादिकं त्यक्त्वा वाचं जुहावेत्यन्वयः। कथम्भूतः ? निर्ममो देहाद्यनुबन्धिषु स्वकीयत्वाभिमानरहितः निरहङ्कारः, देहात्मभ्रमरहितः सञ्छिन्नान्यशेषाणि बन्धनानि प्रकृत्यादीनि येन तथाभूतः प्रकृत्यादिमोक्षमनुसंहितवानित्यर्थः ॥ ४० ॥

तत्प्रकारमाह — **वाचम्** इत्यादिना। वाचं वागादिकर्मज्ञानोभयेन्द्रियव्यापारं मनसि जुहाव, मनोऽधीनममन्यत। मनसः इन्द्रियप्रकृतित्वाभावादित्यर्थः। तन्मनः प्राणे जुहाव; मनःप्रवृत्तिं प्राणाधीनां मेने, तथा प्राणसंवादादिषु दर्शनात् अत एव हि तस्य मुख्यप्राणत्वम्। प्राणादीनां लयानुसन्धानप्रकारमाह। इतरे च तं मृत्यावपानं सोत्सर्गमिति तं प्राणमितरे इतरस्मिन्नपाने तं सोत्सर्गमपानमुदान इति शेषः। उत्सर्गशब्दो वृत्तिपञ्चकप्रदर्शनार्थः। स्वस्ववृत्तिविशिष्टानामेव तेषु तेषु लयमनुसंहितवानित्यर्थः। ततस्तूदानं[5] मृत्यौ मृत्युसंज्ञके समाने तं समानं पञ्चत्वे प्राणादिपञ्चककारणे वायावित्यर्थः। तदिति[6] पाठे वस्तुजामित्यर्थः, अवस्थाविशेषवायुर्हि प्राणः। न वायुमात्रम्, स चैकोऽपि प्राणनादिवृत्तिपञ्चकविधः[7]। अतः वृत्तिपञ्चकनिरोधेन प्राणस्य तत्कारणे वायौ लयानुसन्धानप्रकार उक्तः ॥ ४१ ॥

---

1 A.B कृष्णस्य 2 A.B °स्थानमपनुद्य 3 W दुष्कृच्छ° 4 W हास्तिन° 5. W °स्तु तमुदानं 6 A.B omit तदिति ........ मित्यर्थः
7. W प्राणादिवृत्तिपञ्चकभेदात् पञ्चविधः

**विज०** * स्वर्यार्णनिर्णये कारणमाह — **यदा** इति। यदा श्रवणीयसत्कथो मुकुन्दः स्वतन्वा स्वाभिमतया मूर्त्या इमां महीं जहौ त्यक्तवान्। तदा हरौ अप्रतिबुद्धचेतसां हरिविषयबोधरहितबुद्धीनां पुंसामभद्रहेतुः पापकारणं कलिरन्ववर्ततेत्यन्वयः ॥ ३६ ॥

बुधो विवेकज्ञानी युधिष्ठिरो राज्ये पुरे च गृहे भार्यादौ च तथा आत्मनि स्वस्मिन् तस्य कलेः परितः सर्पणं व्याप्तिं विभाव्य ज्ञात्वा कलिव्याप्तिमूलं लोभाद्यधर्मसमुदायं च विज्ञाय गमनाय वीराध्वगमनाय पर्यधान्निश्चितवान् इत्येकान्वयः, "परिधानं तु निश्चयः" इत्यभिधानम्। लोभश्चानृतं च जिह्मं कौटिल्यं च हिंसनं च लोभानृतजिह्महिंसनानि आदिः यस्य पुरुषादेः तत्तथोक्तम्॥ ३७ ॥

स्वराट् चक्रवर्ती। स्वपौत्रं तं गुणैरनवमं योग्यं पौत्रमभिमन्योस्सुतं परीक्षितं तोयमेव नीवी वसनं यस्यास्सा तथोक्ता तस्याः ॥ ३८ ॥

मधुपुर्यामनिरुद्धपुत्रं नाम्ना वज्रं शूरसेनविषयपतिमभ्यषिञ्चदिति शेषः। प्राजापत्यां प्रजापतिदैवत्यामिष्टिं, निरूप्य सर्वस्वदक्षिणामिष्टिं कृत्वा श्रौताग्नीनपिबत्[1] आत्मनि समारोपयामास। स कीदृशः? ईश्वरो राज्यादिषु निर्विघ्न संन्यसने समर्थः ॥ ३९ ॥

तदेवाऽऽह — **विसृज्य** इति। सञ्छिन्नाशेषपापादिबन्धनः ॥ ४० ॥

स्वमरणकाल एतच्च चिन्तनीयमित्यभिप्रेत्य तत्कृतमित्याह — **वाचम्** इति। वाचं च वागभिमानिनीमुमां मनसि मनोऽभिमानिनि रुद्रेऽजुहोत्। अस्या अस्मिन् लयः भवतीत्यचिन्तयत् न तु तदानीं कृतवानित्यर्थः। तन्मनः **प्राणे** मनःकारणे जुहाव। मनसः परमुत्तमं प्राणमितरे इतरस्मिन्नपाने उत्सर्गकर्माभिमानिनि जुहाव। धृत्या मनस एकाग्रतया सोत्सर्गं सवृत्तिकमपानं तत्परत्वे तस्मादपानात् पूर्वभाविनि व्याने अजोहवीत् हि·। तथा हि ग्रन्थान्तरप्रसिद्धिः ॥ ४१ ॥

---

1 K,M त्रेताग्नी° * VV. 33,34 & 35 are not commented However, the 2nd half of V 34 is commented at V 26

**रा० कृ०** पृथाऽपि कुन्त्यपि धनञ्जयोदितं अर्जुनोक्तं यदूनां नाशं, तां च भगवतः श्रीकृष्णस्य **गतिं** स्वधामगमनमुपश्रुत्य आकर्ण्य भगवत्यधोक्षजे श्रीकृष्णे एकान्तभक्त्या परमया भक्त्या फलाभिसन्धिरहितया भक्त्येत्यर्थः। निवेशितात्मा संसृतेः संसारात् उपरराम उपरतिं प्रापत्। महाभारते कुन्त्यपि गान्धारीधृतराष्ट्राभ्यां सह वनं गत्वा देहं तत्याजेति अभ्यधायि। तदयं श्लोकः प्रक्षिप्त इव प्रतिभाति। ततश्च प्रायेण केषुचिल्लिखितग्रन्थेष्वयं नैव दृश्यते। श्रीविजयध्वजतीर्थैरप्ययं न व्याख्यातः ॥ ३३ ॥

अजः श्रीकृष्णः यया यादवतन्वा भुवो भारं कण्टकेन कण्टकमिवाहरत् तां तनुं विजहौ त्यक्तवान्। ईशितुः परमेश्वरस्य द्वयं चापि यादवशरीरं भूभारशरीरं· चेति द्वयमपि सममेव समानमेव ॥ ३४ ॥

स भगवान् नटो यथा नट इव यथा मत्स्यादिरूपाणि धत्ते स्वीकरोति यथा च, पुनस्तानि रूपाणि जह्यात् त्यजति तथा येन भूभारः क्षपितो निवर्तितः तच्च कलेबरं जहौ तिरोहितं चकार ॥ ३५ ॥

श्रवणीयसत्कथः भगवान् मुकुन्दः यदा स्वतन्वा इमां महीं जहौ त्यक्तवान् तदाऽहरेव तस्मिन्नेवाहनि अप्रतिबुद्धचेतसाम् अविवेकिनाम् अधर्महेतुः कलिरन्ववर्तत, सर्वतः प्रसृतवान्। कलियुगारम्भे सर्वे ग्रहाः एकं राशिं प्रविश्य पुनः पृथगवस्थातुं विभिन्नप्रमाणवेगाः मण्डलाऽऽवृत्तिं प्रारभन्ते। तदा च भूतले महान्तः परिणामास्सम्भवन्नीति च वदन्त्यभिज्ञाः। तथा हि — कलियुगारम्भे समेषामेव ग्रहाणां कूटस्समभवत्। अद्य प्रभृति ग्रहाणां पश्चाद्गणनायां प्रागुक्तः सर्वग्रहकूटः क्रैस्तवशकात् प्राक् त्रिसहस्रपूर्वकद्व्युत्तरशततमे वत्सरे 'फिब्रवरी' अष्टादशतमदिने सञ्जात इति ज्ञायते। बृहत्संहितायाम् श्रीवराहमिहिराचार्योक्तिमनुश्रुत्य युधिष्ठिरपट्टाभिषेकः शकारम्भसंवत्सरात् प्राचीनेभ्यः षड्विंशत्युत्तरपञ्चशतोत्तरद्विसहस्रवर्षेभ्यः प्रागेवाभवत्। इदं च प्रागुक्तेन संवदति। तस्मात् श्रीमद्भागवतमनुसृत्य श्रीकृष्णनिर्याणदिवसोऽयमेवेति निश्चेतुं शक्यते। अथ 'यत्संश्रयात् .... मयाऽभिहतश्च मत्स्यसज्जीकृतेन धनुषा' (भाग. 1-15-7) इत्यत्रार्जुनस्य दुःखवचसा श्रीकृष्णो मीनमासे देहं तत्याजेति गम्यते। अपि च सप्तर्षिमण्डलं

सप्तविंशतिनक्षत्रेषु प्रत्येकमेकशताब्दीमध्यास्ते तथा च "आसन् मखासु मुनयः युधिष्ठिरे शासति पृथिवीम्" इति वराहमिहिरवचनमनुसृत्य धर्मजपट्टाभिषेकसमये सप्तर्षिमण्डलं मखानक्षत्रमधितस्थौ। एतद्गणनयाऽपि कलियुगारम्भकालः उपर्युक्तकालेन संवदति ॥ ३६ ॥

बुधः विवेकी युधिष्ठिरः पुरे च राष्ट्रे च गृहे च तथा आत्मनि जनस्य मनसि च लोभानृतजिह्महिंसनाद्यधर्मचक्रं लोभो विषयलाभेऽपि तृष्णाधिक्यम्, अनृतमसत्यभाषणम्, जिह्मं कुटिलत्वम्, हिंसनं पीडनम् लोभाद्यधर्मसमुदायसमेतं तत्परिसर्पणं तस्य कलेः परितः प्रसरणं विलोक्य गमनाय पर्यधात् निश्चितवान् ॥ ३७ ॥

स्वराट् स्वतन्त्रो राजा युधिष्ठिरः विनयिनं विनयसहितं गुणैः भागवतत्वादिगुणैः आत्मनः स्वस्य सुसममतिसदृशं पौत्रं परीक्षितं तोयनीव्याः भूमेः पतिं गजाह्वये हस्तिनापुरे अभ्यषिञ्चत् अभिषिक्तवान् ॥ ३८ ॥

ईश्वरस्समर्थो युधिष्ठिरः तथैव मथुरायां वज्रमनिरुद्धपुत्रं शूरसेनपतिं शूरसेनदेशप्रभुम् अभ्यषिञ्चत्। ततः प्राजापत्यां परिव्राजकोचितां इष्टिं निरूप्य कृत्वा अग्नीन् गार्हपत्यादीन् अपिबत् आत्मन्यारोपितवान्। गृहस्थस्य गार्हपत्यांहवनीयदक्षिणाग्निपूजा वेदविहिता। तदग्नित्रयम् आन्तरं बाह्यं चेति द्विविधम्। बहुजनहिताय यज्ञार्थसत्कर्माचरणपरायणाः बाह्यं यजन्ते। अनन्तरं च ते ज्ञानमार्गेण देहं त्यक्तुमिच्छन्तः परित्यज्य बाह्यमन्तर्विद्योतमानमग्नित्रयमुपासते। प्रकृते च धर्मजः आन्तराग्नित्रयोपासनां कृतवानिति ज्ञायते ॥ ३९ ॥

धर्मजस्तत्र गृहे तद्राजोचितं दुकूलवलयादिकं सर्वं विसृज्य निर्ममः निरहङ्कारः सञ्छिन्नाशेषबन्धनस्सन् वाचं मनसि जुहाव समर्पितवान्। ततश्च तन्मनः प्राणे, तं प्राणमितरे अपाने सोत्सर्गम् अपानं मृत्यौ च जुहाव। तं मृत्युं च पञ्चत्वे पञ्चमहाभूतानामैक्यरूपे देहे अजोहवीत्, भावितवानित्यर्थः ॥ ४०, ४१ ॥

**त्रित्वे हुत्वा[1]ऽथ पञ्चत्वं तच्चैकत्वेऽजुहोन्मुनिः ।**
**सर्वमात्मन्यजुहवीद्ब्रह्मण्यात्मानमव्यये ॥ ४२ ॥**

**चीरवासा निराहारो बद्धवाङ्मुक्तमूर्धजः ।**
**दर्शयन्नात्मनो रूपं जडोन्मत्तपिशाचवत् ॥ ४३ ॥**

**अनवे[2]क्षमाणो निरगादशृण्वन् बधिरो यथा ।**
**उदीचीं प्रविवेशाशां गतपूर्वां महात्मभिः ।**
**हृदि ब्रह्म परं ध्यायन्नावर्तेत यतो गतः ॥ ४४ ॥**

**सर्वे तमनु निर्जग्मुर्भ्रा[3]तरः कृतनिश्चयाः ।**
**कलिनाऽधर्ममित्रेण दृ[4]ष्ट्वा स्पृष्टाः प्रजा भुवि ॥ ४५ ॥**

**ते[5] साधुकृतसर्वार्था[6] ज्ञात्वाऽऽत्यन्तिकमात्मनः ।**
**मनसा धारयामासुर्वैकुण्ठचरणाम्बुजम् ।। ४६ ।।**

---

1 B,I,W च 2 A,B,G,K,M °पे° 3 AF,GF °स्त्वरिताः 4. H,V दृष्टाः 5 W तेऽसा° 6 AF,GF ° स्वा °

**श्रीध०** **त्रित्व** इति। त्रित्वे गुणत्रये पञ्चत्वं देहम्। तच्च त्रित्वमेकत्वे अविद्यायाम्। **सर्वं** सर्वारोपहेतुमविद्याम् आत्मनि जीवे। अजोहवीदिति वक्तव्ये अजुहवीदित्यार्षम्। एवं त्रित्वादिभिः[1] शोधितमात्मानं जीवात्मानं[2] ब्रह्मणि अव्यये कूटस्थे न तु[3] तस्यान्यत्र लय इत्यर्थः ।। ४२ ।।

तदेवमात्मप्रतिपत्तिमुक्त्वा बाह्यस्थितिमाह — **चीरवासा** इति[4] द्वाभ्याम्। बद्धवाङ्मौनी ।। ४३ ।।

**अनवेक्षमाण** इति। अनवेक्षमाणोऽनुजादिप्रतीक्षामकुर्वन्[5][6]। आशां दिशं गतपूर्वां पूर्वं प्रविष्टाम्। महात्मभिर्विवेकवद्भिः[7]। यतो यां दिशं गतः पुनर्नावर्तेत संसारे न प्रवर्तते ।। ४४ ।।

**सर्वे** इति। अधर्मो मित्रं यस्य तेन ।। ४५ ।।

**त** इति। साधुकृताः सर्वेऽर्थाः धर्मादयो यैः। अत एव वैकुण्ठस्य चरणाम्बुजमेव आत्यन्तिकं शरणं ज्ञात्वा मनसा धारयामासुः ।। ४६ ।।

---

1 A,B omit त्रित्वादिभिः 2 A,B omit जीवात्मानं 3 A,B omit तु 4 B adds सार्धं° 5 B °पे° 6 H,V °दिषु प्रती° 7 H,V ° र्विदुरधृतराष्ट्रादिभिः।

**वीर०** एवं इन्द्रियवर्गप्राणतद्वृत्तिनिरोधानुसन्धानमुक्तम्। अथ वायुना सहितानि पञ्चभूतानि इन्द्रियवर्गश्च[1] अहङ्कारकार्यमिति तदुभयं त्रित्वे सात्त्विकराजसतामसरूपत्रिविधाहङ्कारे जुहावेत्यर्थः। सर्वत्र त्वप्रत्ययः स्वार्थिकः। यथायथमिन्द्रियाणां सात्त्विकाहङ्कारे लयः। भूतानां तामस इति विवेकः। तच्चाहङ्कारत्रयमेकत्वे एकस्मिन् प्रकृतितत्त्वे महत्तत्त्वद्वारा जुहावेत्यर्थः। सर्वं वागादिप्रकृत्यन्तमात्मनि जीवेऽजुहवीच्चेतनाधीनाह्यचेतनप्रवृत्तिः[2], अत एव मुक्तम् न हि जीवः प्रकृतेः उपादानमात्मानं जीवमव्यये ब्रह्मण्यजुहोत्। जीवस्य ब्रह्माधीनवृत्तित्वात् तस्मिंस्तं स्थापितवानित्यर्थः[3] ।। ४२ ।।

ततः चीरं वल्कलं वासो वस्त्रं यस्य सः, निराहारः बद्धवाङ्मौनी, मुक्ताः विक्षिप्ताः मूर्धजाः केशाः येन सः। जडादिवत् आत्मनः स्वस्य रूपमाकारं दर्शयन् लोकस्येति शेषः ।। ४३ ।।

यथा बधिरः तद्वदशृण्वन्, अन्ध इवानवेक्षमाणः निरगात्। गृहादिति शेषः। पूर्वं गतां गतपूर्वां, यतो यां गतः पुनर्नावर्तेत तां, महात्मभिर्विरक्तैः गतपूर्वामुदीचीम् आशां दिशं हृदि परं ब्रह्म ध्यायन् प्रविवेश ।। ४४ ।।

तं युधिष्ठिरमनुसृत्य तद्भ्रातरस्सर्वे कृतनिश्चया- गमनाय कृतो निश्चयो यैस्ते कृतविवेका वा निर्जग्मुः। ते भ्रातरः युधिष्ठिरादयो वा अधर्मः मित्रं यस्य तेन कलिना स्पृष्टाः प्रजाः भुवि दृष्ट्वा ।। ४५ ।।

असाधुकृताः तुच्छीकृताः सर्वेऽर्थाः देहतदनुबन्ध्यादयो यैः तथाभूताः आत्मनो देहस्यात्यन्तिकं मरणं ज्ञात्वा भगवच्चरणाम्बुजं मनसा धारयामासुः युधिष्ठिरादयः ॥ ४६ ॥

---

1 W °गण° 2 A.B °च्चेतनो ह्यचेतनप्रकृतिः 3 W समर्पित°

**विज०** अथ व्यानापानचिन्तनानन्तरम् अवशिष्टावुदानसमानौ त्रित्वे त्रित्वसङ्ख्याविशिष्टेषु स्वकारणेषु प्राणापानव्यानेषु हुत्वा लयं विचिन्त्य तच्च पञ्चत्वं पञ्चत्वसङ्ख्याविशिष्टान् प्राणापानव्यानोदानसमानांश्चैकत्वे एकत्वसङ्ख्या विशिष्टे पञ्चानां कारणे मूलप्राणे अजुहोत्। मुनिर्मौनी तत्पूर्वोक्तं सर्वं तस्य मूलप्राणस्यापि कारणे आत्मनि स्वहृदि स्थिते विष्णावजुहोत् तं चात्मानमव्यये विनाशरहिते ब्रह्मणि सर्वगते तदभिव्यक्तिकारणे विष्णावजुहोदित्येकान्वयः। अत्र वागादीन्द्रियाणां तदभिमानिदेवानां देवशरीराणां च अग्नौ आज्यलयवत् स्वकारणेषु विलय एवेति ज्ञातव्यम्॥ ४२ ॥

चीरवासाः वल्कलवस्त्रो निराहारो मनुष्यान्नवर्जितो बद्धवाग्वचनवृत्तिविधुरो, मूर्धजाः केशाः जडादिवत् आत्मनो रूपं दर्शयन् बधिरो यथा तथाऽशृण्वन् अत एव अनपेक्षमाणः स्वयं गेहात् निरगादित्येकान्वयः ॥ ४३ ॥

यावच्छरीरपातं भुवं प्रदक्षिणीकृत्य निरन्तराटनमेव सङ्कल्प्य हृदि परं ब्रह्म ध्यायन् क्षत्त्रियैर्महात्मभिः गतपूर्वामुदीचीमाशामुत्तरां दिशं प्रविवेश। वीरगतिं गमिष्यन् यतो गतो नावर्तेत यां वीरगतिं गतः पुनर्नावर्तेत ताम् इत्यन्वयः ॥ ४४ ॥

भ्रातरो भीमसेनादयोऽधर्ममित्त्रेण अधर्मप्रधानेन॥ ४५ ॥

आत्मनः परमात्मनः स्वरूपमात्यन्तिकं सर्वातिशयमथवा आत्मनः स्वस्य आत्यन्तिकमन्तकाले कर्तव्यं ज्ञात्वा साधु सम्यकृतोऽनुष्ठितः सर्वार्थो धर्मादिर्यैस्ते तथा साधुना कर्मणा पुण्यलक्षणेन कृताश्छिन्नाः निरस्ताः सर्वेऽर्थाः शब्दादिविषया यैस्ते तथोक्ता इति वा। 'कृती-च्छेदने' इति धातुः। अत्र हरौ मनोधारणं नामाखण्डस्मरणमिति ज्ञातव्यम्॥ ४६ ॥

**रा० कृ०** मुनिर्मननशीलो युधिष्ठिरः अथ पञ्चत्वं पृथिव्यादिभूतपञ्चकं त्रित्वे सत्त्वादिगुणत्रये हुत्वा तच्च त्रित्वमेकत्वे तत्कारणभूते प्रधाने अजुहोत् हुतवान्। तच्च सर्वं सर्वकारणभूतं प्रधानमात्मनि जीवेऽजुहवीत्, अजोहवीत्। तं च शोधितमात्मानमव्यये ब्रह्मणि सर्वव्यापके सर्वाधिष्ठाने सर्वनियन्तरि परमात्मनि अजोहवीत्। उच्छ्वासनिश्श्वासकारकशक्तिस्वरूपौ प्राणापानौ। धर्मजः स्वयोगसाधनविधानमनुसृत्य उच्छ्वासं निश्श्वासे लीनमकरोत्। देहबन्धशैथिल्यावहशक्तिस्वरूपो मृत्युः "ब्रह्मण्यात्मानमव्यये" इत्यनेन देहत्यागसाधनं ध्यानमुपदिष्टम्॥ ४२ ॥

अनन्तरं स धर्मजः चीरवासाः अनेन बाह्यविषयभोगराहित्यं सूचितम्। निराहारः बद्धवाक्— अत्र वाचोपलक्षणीभूतया सर्वेन्द्रियोपरतिः दर्शिता। मुक्तमूर्धजः जडोन्मत्तपिशाचवत् जडो मनश्शून्यः, उन्मत्तः इन्द्रियविकलः — जडादिवत् आत्मनो रूपं दर्शयन् लोकायेति शेषः। अनवेक्षमाणः अनुजादिकमप्रतीक्षमाणः बधिरो

यथा कस्यापि वचनमशृण्वन् निरगात् गृहान्निर्गतवान्। पश्चात् हृदि परं ब्रह्म श्रीकृष्णाख्यं ध्यायन् यतो यां दिशं गतः पुनस्संसारे नावर्तते। महात्मभिः विदुरादिभिः गतपूर्वां पूर्वं गतां तामुदीचीमाशां दिशं प्रविवेश प्रविष्टवान्। पुरा किल वृद्धाः अन्त्ये वयसि विसृज्य गृहम्, अपुनरावृत्तिं पादयात्रां कुर्वन्ति स्म, हिमालयं प्रति यत्र बहवः पवित्रप्रदेशास्सन्ति। तेषु केषाञ्चित् आश्रयमात्रेण समाधिस्सिद्ध्यति। अपरेषु महात्मनां दर्शनं लभ्यते। तस्मादियमुत्तरदिग्यात्रा प्राचामादरणीया अभवदिति तर्क्यते। अपिचास्मिन् भूतले प्रथमतो मानवसृष्टिः हिमालये समजायत। तत्सृष्टिसहकारिणो महाशक्तिस्वरूपाः देवाः महर्षयश्च सौरकिरणद्वारा भूतलेऽवतीर्य मानुषदेहधारिणस्सन्तो भविष्यन्मानवपरम्परायाः मार्गदर्शकाः गुरवश्च अवर्तन्त। तेषु केचन अद्यापि बहूनां जनानां स्वदिव्यस्थितिमापादयन्तः तत्रैव हिमाचले वसन्ति। तस्मादेष समुदाचारः अभवद्यदुत्तमपथजिगमिषवः सर्वेऽपि पुनरावृत्तिरहितां हिमालययात्रां कुर्वन्ति स्मेति। तदेतन्महाप्रस्थानमिति कथ्यते। कृतमहाप्रस्थानैः पुनर्यत्प्राप्यते लोकान्तरजीवितं तदभिधीयते स्वर्गारोहणमिति। प्रकृते च युधिष्ठिरो महाप्रस्थानं विधाय स्वर्गमारूढवान्॥ ४३, ४४॥

भ्रातरः धर्मजस्य भ्रातरस्सर्वे भुवि अधर्ममित्रेण कलिना स्पृष्टाः प्रजाः दृष्ट्वा कृतनिश्चयास्तं युधिष्ठिरमनु अनुसृत्य निर्जग्मुः गृहान्निर्गतवन्तः॥ ४५॥

ते युधिष्ठिरादयो भ्रातरः साधुकृतसर्वार्थाः आत्मनः आत्यन्तिकं तापत्रयनिवर्तकं शरणं वैकुण्ठचरणाम्बुजं ज्ञात्वा तन्मनसा धारयामासुः निरन्तरं चिन्तयामासुरित्यर्थः॥ ४६॥

**तद्ध्यानोद्रिक्तया भक्त्या विशुद्धधिषणाः परे।**
**तस्मिन्नारायणपदे एकान्तमतयो[1] गतिम्[2]॥ ४७॥**

**अवापुर्दुरवापां[3] ते असद्भिर्विषयात्मभिः।**
**विधूतकल्मषास्थानं विरजेनात्मनैव हि॥ ४८॥**

*** विदुरोऽपि परित्यज्य प्रभासे देहमात्मवान्[4]।**
**कृष्णावेशेन[5] तच्चित्तः पितृभिः स्वक्षयं ययौ॥ ४९॥**

**द्रौपदी च तदाऽऽज्ञाय पतीनामनपेक्षताम्।**
**वासुदेवे भगवति ह्येकान्तमतिराप तम्[7]॥ ५०॥**

**यः श्रद्धयैतद्भगवत्प्रियाणां पाण्डोस्सुतानामिति[10] सम्प्रयाणम्।**
**शृणोत्यलं स्वस्त्ययनं पवित्रं लब्ध्वा हरौ भक्तिमुपैति सिद्धिम्[11]॥ ५१॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
प्रथमस्कन्धे पाण्डवस्वर्गारोहणं नाम पञ्चदशोऽध्यायः ॥ १५ ॥

1 AF GF °ग° 2 K,M °ऽपतन् 3 K,M °पं 4 H,V °षास्थाने ; K,M °षस्थानं * K,M omit this verse and it is not commented upon by श्रीविजयध्वजतीर्थ 5. I °नः 6 WF कृष्णोपवेशे 7 K,M °तत् 8 H यच्छ्रद्ध° 9. H,K,M,V,W °त्प्रयाणं 10. H,K,M,V °मपि 11 K,M शान्तिम्

**श्रीध॰ तदिति।** एकान्तमतयः भगवदेकप्रवणबुद्धयः विषयात्मभिः असद्भिः दुरवापां, कथम्भूते पदे? विधूतकल्मषाणां योगिनाम्[1] आस्थानं निवासस्थानं यत् तस्मिन्। विरजेन आत्मनैव गतिमवापुः प्रापुः[2] न तु षोडशकलेन लिङ्गेन। अस्थानमिति पाठे गतेर्वा विशेषणम्। विरजेनात्मनैव आस्थानरूपां गतिं ते विधूतकल्मषाः प्रापुरिति वा ॥ ४७, ४८ ॥

**विदुर** इति। विदुरोऽपि आत्मवान् ज्ञानवान् तीर्थान्यटन् प्रभासे श्रीकृष्णावेशेन कृष्णे चित्तमावेश्य देहं परित्यज्य तच्चित्त एव सन् तदानीं नेतुमागतैः पितृभिस्सह स्वक्षयं स्वाधिकारस्थानं ययौ ॥ ४९ ॥

**द्रौपदी** इति। आत्मानं प्रत्यनपेक्षतां तदा ज्ञात्वा तमाप प्राप[3] ॥ ५० ॥

**यं**[4] इति। एवं यत्सम्प्रयाणम्। भगवतो[5] दिव्यपदप्राप्तिम्। अलमतिशयेन स्वस्त्ययनं मङ्गलास्पदम्। अलं पवित्रं च ॥ ५१ ॥

इति श्रीमद्भागवते प्रथमस्कन्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्याया पञ्चदशोऽध्यायः ॥ १५ ॥

1 A,B omit योगिनाम् 2. H,V ययुः 3 A,B omit प्राप 4. H,V यत् 5. A,B omit भगवतो ..... प्राप्तिम्।

**वीर॰** तस्य वैकुण्ठपदाम्बुजस्य[1] ज्ञानेन उद्रिक्तया उत्कटया[2] भक्त्या विशुद्धा धिषणा बुद्धिर्येषां ते नारायणपदवाच्ये परमपुरुषे एकान्ता गतिः[3] मतिः येषां मतेरेकान्तत्वं[4] नाम विजातीयप्रत्ययाव्यवधानं विषयेषु शब्दादिषु प्रवण आत्मा मनः येषां तैः असद्भिः दुरात्मभिः दुःखेनाप्यवाप्तुमशक्यां गतिं मुक्त्यात्मिकामवापुः। तदेवोपपादयति — विधूतानि निरस्तानि कल्मषाणि भगवत्प्राप्तिप्रतिबन्धकानि पूर्वोत्तराघानि येषां ते विरजेन रजस्तमोरहितेन आत्मना स्वरूपेण स्थानं श्रीनारायणस्य पदमवापुरित्यनुषङ्गः[5] ॥ ४७, ४८ ॥

विदुरोऽपि कञ्चित्कालं तीर्थान्यटित्वा पाण्डवादीनां गतिमाकर्ण्य आत्मवान् भगवति समाहितचित्तः प्रभासे देहं परित्यज्य कृष्णावेशेन कृष्णसमाधानेन[6] तच्चित्तः कृष्णैकविषयकचित्तः पितृभिः पितृदेवताभिस्सह स्वक्षयं स्वस्थानं

**ययौ। पुनर्यम एव भूत्वा स्वलोकं ययावित्यर्थः। 'कृष्णोपवेश' इति पाठे यदुकुलसंहाराय यत्र श्रीकृष्णः प्रविष्टः तस्मिन् देशे प्रभासे इत्यर्थः। पुनः अधःपतनाभावात् पाण्डवादीनां मुक्तत्वकथनं ते हि प्रारब्धकर्मावसाने विमोक्ष्यन्ते एव अतो न विरोधः॥४९॥**

**तदा द्रौपद्यपि पतीनामनपेक्षतामाज्ञाय ज्ञात्वा वासुदेवे भगवति एकान्ता विजातीयप्रत्ययान्तराव्यवहिता मतिर्यस्याः तथाभूता तं वासुदेवमवाप॥५०॥**

श्रीकृष्णादीनां प्रयाणश्रवणादिफलमाह — **य** इति। **इतीत्थम् अतितरां स्वस्त्ययनं शृण्वतां पठतां च शुभावहं पवित्रं च भगवतः प्रयाणं पाण्डोस्सुतानां सम्प्रयाणं च यः पुमान् श्रद्धया शृणोति सः हरौ भगवति भक्तिं लब्ध्वा सिद्धिं मुक्तिमुपैति॥५१॥**

इति **श्रीमद्भागवते** प्रथमस्कन्धे<br>श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां<br>व्याख्यायां पञ्चदशोऽध्यायः॥१५॥

---

1. W °ण्ठस्य पदा° 2 A,B omit उत्कटया 3 W omits गतिः 4 A,B °रैक्यं 5. W स्थान° 6 W °ष्ण एव समा° 7 W नितरां 8. A,B omit भगवति

**विज**० इत्थं नारायणचरणाम्बुजं हृदि संविधाय **तद्ध्यानेन** उद्रिक्तया भक्त्या विशुद्धमतयोऽहोभिः सप्तभिः भुवं प्रदक्षिणीकृत्य गन्धमादनगिरिविवरे बदर्याख्यं नारायणाश्रमं प्राप्य तस्मिन् परे मनोहरे नारायणपदे नारायणाश्रमे **एकान्तमतयः** एकान्तं नारायणं ध्यायन्तः ते पाण्डवा अपतन् शरीराणि तत्यजुरित्य**न्वयार्थः**, एकमनस्का वा॥४७॥

शब्दादिविषयमनस्कैः असद्भिः अमङ्गलैः पुरुषैः दुरवाप गन्तुमशक्यं निरस्तजरामरणादिकल्मषस्थानं **स्वस्वमूलरूपं** विरजेन रजआदिगुणात्मकलिङ्गशरीराभिमानरहितेन आत्मना मनसा उपलक्षितास्ते प्राप्ता इत्येका**न्वयः**। **एवकारस्तु** देवदूतदर्शितमायया युधिष्ठिरदृष्टभीमादिरोदनापादकलोकं नापुरित्यस्मिन्नर्थे, न तु रजोमिश्रितात्मनेत्यत्र **हिशब्दस्तु** न तु दोषात् देहपातः न तु प्रारब्धकर्मनाशादित्यस्मिन्नर्थे श्रुतिप्रसिद्धिं द्योतयति। श्रुतिरपि सकलसुरोत्तमालिपुरस्सरगणैः आराधितचरणैः श्रीभगवत्पादैः सकलपुराणसारसङ्ग्रहगृहे श्रीमहाभारततात्पर्यनिर्णये उदाहृता, नास्माभिरत्रोदाह्रियते ग्रन्थबाहुल्यभयादिति। "विदुरोऽपि परित्यज्य" इति प्रक्षेपश्लोकः॥४८, ४९॥

अनपेक्षतां देहाद्यनभिमानतामेकान्तमतिः एकाग्रचेताः॥५०॥

श्रीकृष्णपाण्डवानां स्वधामप्रवेशश्रवणादिना किं प्रयोजनम्? येन अत्रावश्यं वक्तव्यं स्यादिति तत्राऽऽह — **य** इति। य एतद्भगव**त्स्वधामप्रयाणं** भक्ताना च पाण्डवानां च प्रयाणादिकं **च शृणोति,** सः हरौ भक्तिं लब्ध्वा शान्तिं मुक्तिं उपैतीत्य**न्वयः**। अलं त्रिकरण**शुद्ध्या**॥५१॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां
टीकायां प्रथमस्कन्धे पञ्चदशोऽध्यायः ॥ १५ ॥

---

1 A omits मनोहरे 2 K M °चित्ताः

रा० कृ० तद्ध्यानोद्रिक्तया भक्त्या विशुद्धधिषणाः विनिर्मलबुद्धयः परे सर्वोत्कृष्टे तस्मिन् सर्वशास्त्रसमन्वयगोचरे नारायणपदे विष्णुचरणे एकान्तमतयो निश्चलमानसास्ते भ्रातरः विषयात्मभिः नश्वरविषयासक्तचित्तेभ्यः असद्भिः दुष्टैः दुरवापां विधूतकल्मषास्थानं विधूतकल्मषाणां निवासभूतां गतिं नारायणपदस्वरूपां विरजेन विशुद्धेन आत्मनैव अवापुर्हि प्रापन् खलु। एवमत्र समासतो निरूपितं युधिष्ठिरादिमहाप्रस्थानं महाभारतोक्तेन तन्महाप्रस्थानेन विपुलेन न विरुद्ध्यते परमार्थसाम्यात्। तथा हि महाभारते द्रौपदी भीमादयश्चत्वारोऽपि युधिष्ठिरमनुजग्मुः; किन्तु एकैकशः एकस्मिन् काले मध्येमार्गं भौतिकदेहं तत्यजुः। धर्मजस्तु यावदवसानमवशिष्टः। अन्ते च सर्वेऽप्येकत्रैव सम्मिलिताः। अत्रान्तरे भीमादीनां पापमनेकेषु लोकेषु प्रक्षालितमभूत्। धर्मजेन दृष्टाः द्रौपदीभीमादिभिः अनुभूयमानाः नानाविधनरकयातनाः तत्तज्जीवप्रकृतिपरिशुद्ध्येकप्रयोजनाः। एते च विशेषाः सविस्तरं महाभारते समुपवर्णिताः। अत्र तु श्रीमद्भागवते समेषामेव तेषां शाश्वतविष्णुपदप्राप्तिमात्रं उक्तमिति सर्वमनवद्यम् ॥ ४७, ४८ ॥

आत्मवान् ज्ञानवान् विदुरोऽपि तीर्थाटनं कुर्वन् कृष्णावेशेन कृष्णस्यावेशेन स्वान्तःप्रवेशेन तच्चित्तः तन्मयचित्तः प्रभासे तत्राग्नि तीर्थे देहं परित्यज्य पितृभिस्सह स्वक्षयं स्वाधिकारस्थानं ययौ ॥ ४९ ॥

तदा द्रौपदी च पतीनामनपेक्षतां स्वापेक्षाराहित्यम् आज्ञाय विदित्वा भगवति वासुदेवे एकान्तमतिः निश्चलबुद्धिस्सती तं वासुदेवमाप प्राप्तवती। महाप्रस्थानसमये मार्गमध्ये पतितां द्रौपदीमनादृत्य पाण्डवाः पुरो जग्मुरित्युक्तं महाभारते। अनादरकारणमत्र भागवते सूचितम्। तथाहि — देहत्यागाय नारायणैकान्तमतयः ते परस्परनिरपेक्षाः सञ्जाताः। अत एव पाण्डवानां न केवलं द्रौपदीपतने किन्तु परस्परपतनेऽपि अनादरः ॥ ५० ॥

अलमतिशयेन स्वस्त्ययनं शुभास्पदं पवित्रं पापहरं च इति एतदित्थं पूर्वोक्तं भगवत्प्रियाणां भगवतः श्रीकृष्णस्य प्रियाणाम्। भगवत्प्रयाणमिति पाठे तु भगवतः प्रयाणमित्यर्थः। पाण्डोस्सुतानां धर्मराजादीनां सम्प्रयाणं यः श्रद्धया शृणोति सोऽपि हरौ भक्तिं लब्ध्वा सिद्धिं पूर्वोक्तां पाण्डवानां गतिमुपैति प्राप्नोति ॥ ५१ ॥

इति श्रीमद्भागवते प्रथमस्कन्धे
श्रीराधाकृष्णप्रणीतायां सुधासुधायां व्याख्यायां
पञ्चदशोऽध्यायः ॥ १५ ॥



# षोडशोऽध्यायः

### सूत उवाच

ततः परीक्षित् द्विजवर्यशिक्षया महीं महाभागवतः शशास ह[1] ।
यथा हि सूत्यामभिजातकोविदाः समादिशन् विप्र! मह[2]द्गु[3]णस्तथा ॥ १ ॥

स उत्तमस्य तनयामुपयेम इरावतीम् ।
जनमेजयादींश्चतुरस्तस्यामुत्पादयत् सुतान् ॥ २ ॥

आजहाराश्वमेधांस्त्रीन् गङ्गायां भूरिदक्षिणान् ।
शारद्वतं गुरुं कृत्वा देवा यत्राक्षि[4]गोचराः ॥ ३ ॥

निजग्राहौजसा वी[5]रः कलिं दिग्विजये क्वचित् ।
नृपलिङ्गधरं शूद्रं घ्नन्तं गोमिथुनं पदा ॥ ४ ॥

### शौनक उवाच

कस्य हेतोर्निजग्राह कलिं दिग्विजये नृपः ।
नृदेवचिह्न[6]धृक् शू[7]द्रकोऽसौ गां यः पदाऽहनत् ॥ ५ ॥

तत्कथ्यतां महाभाग! यदि कृ[8]ष्णकथाश्रयम् ।
अथवाऽस्य पदाम्भोजमकरन्दलिहां सताम् ॥ ६ ॥

किमन्यैरसदालापैरायुषो यदसद्व्ययः ।
क्षुद्रायुषां नृणामङ्ग! मर्त्या[9]नामृतमिच्छताम् ॥ ७ ॥

इहोपहूतो भगवान् मृत्युश्शामित्रकर्मणि ।
न कश्चिन्म्रियते तावत् यावदास्त इहान्तकः ॥ ८ ॥

एतदर्थं हि भगवाना[10]हूतः परमर्षिभिः ।
अहो नृलोके पीयेत हरिलीलामृतं वचः ॥ ९ ॥

---

1. W सः 2 H,V महा° 3 K,M °गुणांस्त° 4 N °क्ष° 5 K,M धीरः 6 H,V °रूप° 7. H,K,M,N,V,W शूद्रः कौऽसौ
8. H,K,M,V,W विष्णु° 9. K,M °नां मृति° 10. AF.GF °नुपहूतो महर्षिभिः

## श्रीधरस्वामिविरचिता भावार्थदीपिका

ततश्च षोडशे भूमिधर्मयोः कलिखिन्नयोः ।
संवादे[1] वर्ण्यते प्राप्तिः पालकस्य परीक्षितः ॥

**तत** इति। द्विजवर्याणां शिक्षया सूत्यां जन्मनि अभिजातिकोविदा जातकर्मविदः[2] हे विप्र! महतां[3] गुणाः यस्मिन् सः ॥ १ ॥

**स** इति। जनमेजयादीनित्यक्षराधिक्यं[4] छान्दसम्। उत्पादयदिति अडागमाभाव आर्षः। उत्पादयन्निति पाठे हेतौ शतृप्रत्ययः। सुतानुत्पादयितुं इरावतीमुपयेम इति वाक्ययोजना ॥ २ ॥

**आजहार** इति। आजहार कृतवानित्यर्थः। शारद्वतं कृपम्। यत्र **येष्वश्वमेधेषु** देवा दृष्टिगोचरा **बभूवुः** ॥ ३ ॥

**निजग्राह** इति। निजग्राह निगृहीतवान् कलिमेव निर्दिशति नृपेति। नृपलिङ्गधरं **राजवेषधारिणम्** ॥ ४ ॥

**कस्य** इति। कस्य हेतोरिति अयमर्थः। कलिं **कस्माद्धेतोः** केवलं निजग्राह, न तु हतवान्। यतोऽसौ शूद्रः कोऽतिकुत्सितः यो गां पदाऽहनत् अहन्निति ॥ ५ ॥

**तत्** इति। तत् कलिनिग्रहरूपं कर्म। अस्य विष्णोः पदाम्भोजयोर्यो मकरन्दस्तं लिहन्ति आस्वादयन्ति ये तेषां सतां महतां वा कथाश्रयमिति समासान्निष्कृष्टस्यानुषङ्गः[5] तर्हि कथ्यताम् ॥ ६ ॥

**किम्** इति। नोचेत्किमन्यैरसद्भिरालापैर्यद्यैरायुषो[6] वृथाक्षयः। अस्माकमयं सत्रप्रयत्नोऽपि हरिकथामृतपानार्थ एवेत्याह सार्धाभ्याम्[7]। क्षुद्रमल्पमायुर्येषाम्, अतो मर्त्यानां मरणधर्मवताम्[8]। तथापि ऋतं सत्यं **मोक्षमिच्छताम्** ॥ ७ ॥

**इह** इति। यो मृत्युः स इह सत्रे, शमितुरिदं शामित्रं कर्म पशुहिंसनं तदर्थमुपहूतः ततः किमत आह न कश्चिदिति ॥ ८ ॥

**एतद्** इति। ततोऽपि किम् अत आह। अहो नृलोके हरिलील्गामृतं वचः पीयेतेत्येतदर्थम्। हरिलीलैवामृतं यस्मिंस्तम्[9] ॥ ९ ॥

---

1 H.V °दो 2 H जातकविदः 3 H.V महान्तो 4 B °दीनित्यर्थे एकाक्षराधिक्यं; H.V °दीनित्यत्राक्षरा° 5 B °ष्कृष्यानु° 6. H नचे° 7 B.H.V सार्धद्वाभ्याम् 8 B.H.V omit धर्म 9 H यस्मिन् तत्कथाप्रचुरमित्यर्थः; V यस्मिन् तं तत्कथाप्रचुरमित्यर्थः

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

तदेवं[1] सम्प्रस्थानं पाण्डुपुत्राणां 'वक्ष्ये कृष्णकथोदय' मिति प्रतिज्ञातं पाण्डुपुत्रसंस्थानं परीक्षिज्जन्मोपेतमुपपाद्य [2]"परीक्षितोऽथ राजर्षेर्जन्मकर्मविलापनम्" (भाग. 1-7-12) इति प्रतिज्ञातं[3] निर्वर्णयति। तत्र **तज्जन्म पाण्डवपुत्रवृ-**

**त्तान्ते** एवान्तर्भव्याभिहितं विलापनं द्वादशे स्कन्धे वक्ष्यति। इतः परं **चतुरध्यायैः कर्माणि वर्ण्यन्ते** इति विवेकः। **तत** इति। ततः पितृनिर्गमनानन्तरं महान्तो गुणा यस्य स परीक्षित्। हे द्विज! जन्मसूत्यां जन्मदिने जातककोविदाः विप्राः यथा समादिशन् तथैव द्विजवर्यशिक्षया महाभागवतस्सन् महीं शशास पालयामास॥ १॥

स परीक्षिदुत्तरस्य मातुलस्य तनयामिरावतीमुपयेमे उदुवाह। [5]तस्यामिरावत्यां जनमेजयादींश्चतुरः **सुतानुदपाद-यत्**। अडभाव आर्षः, आगमशास्त्रस्यानित्यत्वाद्वा॥ २॥

शारद्वतं कृपं गुरुं कृत्वा वृत्वा गङ्गायां गङ्गातीरे त्रीनश्वमेधानाजहार, यत्र **येष्वश्वमेधेषु** देवा इन्द्रादयोऽक्षिगोचरा बभूवुः, तथाविधा नाजहारेत्यर्थः॥ ३॥

कदाचित् दिग्विजये निमित्ते चरन् वीरः परीक्षित् क्वचिद्देशे यदा पादेन गोमिथुनं स्त्रीपुंसयोर्गवोर्युग्मं घ्नन्तं[6] **शूद्रमपि** नृपचिह्नधरं कलिमोजसा पराभिभवसामर्थ्यात्मकेन निजग्राह निगृहीतवान्॥ ४॥

तत्र लब्धप्रश्नावसरः पृच्छति शौनकः — **कस्य हेतोरिति**। नृपः परीक्षिद्दिग्विजये कस्माद्धेतोः कलिं निजग्राहेत्येकः **प्रश्नः**। यो गां पदाऽहनत् तताड, असौ नृपचिह्नधारी[7] शूद्रः कः? इत्यपरः। यद्यपि नृपलिङ्गधरं शूद्रं कलिमिति सामानाधिकरण्यनिर्देशेनैव कलिरेव [8]नृपदेवचिह्नधृक् शूद्र इति ज्ञात एवेति **प्रश्नानुपपत्तिः** तथाऽपि क इत्यस्य किंगुणक इत्यभिप्रायः। अतः **प्रश्नोपपत्तिः**॥ ५॥

[9]तत्कलिविनिग्रहादिकं केवलमस्माभिः पृष्टमित्येव [10]न वर्णय; [11]किन्तु हे महात्मन्! यदि विष्णुकथाश्रयं भगवत्कथोपेतम्। अथवा अस्य विष्णोः पदाम्बुजमकरन्दास्वादिनां साधूनां कथाश्रयं स्यात्तर्हि कथ्यताम्॥ ६॥

तत्र हेतुं वदन् **विष्णुतद्भक्तकथा**नाश्रयाणामश्रोतव्यत्वमवर्णनीयत्वञ्चाह — **किमन्यैः** इति। अङ्ग! हे सूत! यत् येभ्य आयुषोऽसद्व्ययो निरर्थकः क्षयो भवति तैः क्षुद्रायुषामल्पायुषामृतं कर्मफलमिच्छतां मर्त्यानां मरणशीलानां नृणां सम्बन्धिभिरन्यैर्विष्णुतद्भक्त[12]जनकथानाश्रयैरतोऽत एवासद्भिरालापैः किं वर्णितैः [13]वा न किञ्चित्प्रयोजनं, किन्तु केवलमायुर्व्यय एवेति भावः। यद्वा, ऋतं सत्यं परं ब्रह्म इच्छतां तत्प्राप्तिं कामयमानानां मरणशीलानामल्पायुषां नृणामस्माकमन्यै रसदालापैः किम्? न किञ्चित्प्रयोजनमस्ति, यतो येभ्यः केवल मायुषोऽसद्व्ययो भवतीत्यन्वयः॥ ७॥

ननु क्षुद्रायुषां मर्त्यानामस्माकं यावत् [14]त्वत्प्रश्नवर्णनश्रवणं जीवन[15]मप्यवसातुं शक्यमित्यत्राह — **इहेति**। इह नैमिषक्षेत्रे शामित्रकर्मणि सत्रकर्मणि। शमितृशब्दः पशुसंज्ञपयितृवाची "शमयिता च भगवानस्तु" इति श्रुतेः। सचेह पापापनोदकभगवद्गुणानुभवितृपरः। तत्सम्बन्धे कर्मणि सत्रकर्मणि [16]भगवद्गुणवर्णनश्रवणात्मकब्रह्मसत्र इत्यर्थः। भगवान् मृत्यु राहूतः। स चान्तको यावदिहास्ति तावदत्र न **कश्चिन्म्रियते** न मरणमेति॥ ८॥

किमर्थमाहूत इत्यत्राह — एतदर्थमत्रावस्थितानामस्माकम् अमरणार्थमेव हि **परमर्षिभिर्भगवान्** मृत्युराहूत इत्यर्थः। [17]मृत्यर्थः मृत्युरपि स्वव्यापारं विहाय भगवद्गुणश्रवणायेह न किञ्चिदपि हन्यादित्यभिप्रायेणाऽहूत इति भावः। **"तत्कथ्यतां महाभाग!"** इत्यादि श्लोकद्वयेन तद्भक्तकथाश्रवणस्यैव वर्णनीयत्वं **श्रोतव्यत्वञ्चोक्तं**, तदेव सहेतुकमुपपादय-

ति अहो इति सार्धेन। नृलोके हरेर्लीला यस्मिन् प्रतिपाद्याः तद्धरिलीलं तदमृततुल्यं वचः पीयते पाँवकं[18] श्रोतव्यमिति यावत्। ये पिबन्ति तानभिनन्दति अहो इति। तेषां भाग्यमेतावदिति वक्तुमशक्यमिति भावः ॥ ९ ॥

---

1. W °वं संस्थानं 2. W adds अथ परीक्षितः कर्माणि 3 W °ज्ञातानि वर्णयति 4 W °ध्याय्या 5 W adds ततः 6 W adds ताडयन्तम् 7 W °धरः 8 W नृदेव° 9 W धृतकलिनिग्र° 10 A omits न 11 A किं 12. A °जनाकथाश्रय°; W °अन्यकथानाश्र° 13 W adds श्रुतैः 14 W °तृष्ट° 15 W °मध्यवस्थातुं न शक्य° 16 A भगवद्गुणात्मक° 17 A मृत्यवर्थः; W omits मृत्यर्थः 18 W पातव्यं

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

अत्र भगवति भक्तिविधानार्थं भगवद्भक्तपरीक्षितः कलिबन्धनादिमाहात्म्यवर्णनेन हरिमहिमैव प्रतिपाद्यत इति तन्महिमा प्रतिपाद्यतेऽस्मिन्नध्याये। तत्र प्रथमे[1] राज्यपालनादिमहिमोच्यते इत्याह — तत इति। ततः पाण्डवस्वर्याणानन्तरं द्विजवर्यशिक्षया कृपादिब्राह्मणश्रेष्ठसदुपदेशेन। शिक्षा विद्योपादानम्। अभिजातकोविदाः जातकज्ञानपटवः सूत्यामुत्पत्तौ यथा महद्गुणानुपादिशंस्तथा तदनुसारेण महीं शशासेत्यन्वयः ॥ १ ॥

उत्तरस्य विराटपुत्रस्य पुत्रीं नाम्ना इरावतीं उपयेमे। उपयमनं विवाहः। उत्पादयत्, उदपादयत्, अजनयत्। चतुर इति पाठः ॥ २ ॥

शारद्वतं कृपं यत्र येषु अश्वमेधेषु, देवा इन्द्रादयोऽक्षिगोचराः प्रत्यक्षास्तादृशानिति शेषः ॥ ३ ॥

सः धीरः दिशां जये ओजसा स्वाभाविकशक्त्या कलिं निगृहीतवानित्यन्वयः। नृपाणां लिङ्गं लक्षणं धारयतीति नृपलिङ्गधरः, तं कर्मणा शूद्रं, तदेवाह — पदेति। पदा गोमिथुनं घ्नन्तं ताडयन्तं क्वचिदेकान्तप्रदेशे ॥ ४ ॥

नृपलिङ्गधृग्यः शूद्रः पदा गामहनत् तं कलिं दिग्विजये निजग्राह, असौ कः, कष्टकर्मा इत्याक्षेपो न प्रश्नः कलिमित्युक्त्या ज्ञातत्वेन सिद्धप्रश्नत्वापातात् ॥ ५ ॥

विष्णुकथा आश्रयो यस्य तत्, एतादृशं कलिबन्धनञ्चेत्तर्हि कथ्यताम्। अथ पक्षान्तरे वा। यदि अस्य हरेः मकरं मदकरं भावं ददतीति मकरन्दः। तं लिहन्ति आस्वादयन्ति तेषां कथाऽश्रयं, तर्हि कथ्यताम् इत्यन्वयः ॥ ६ ॥

किमिति विष्णुवैष्णवकथाकथनमिति तत्राह — किमन्यैः इति। असदालापैः अमङ्गलप्रसङ्गैः किं प्रयोजनम्? न किमपि। कुतः? आयुषोऽसद्व्ययो व्यर्थक्षय इति, यत् यस्मात् अत इत्यर्थः। यत् यैः असदालापैः आयुषोऽसमीचीनो व्यय इति वा। इतोऽपीतरप्रसङ्गो नापेक्षित इति ब्रूत इत्याह — क्षुद्रायुषां अल्पायुषां मर्त्यानां मरणधर्माणाम्, अतएव मृतिमिच्छतां नृणां मारकः मृत्युः भगवान् नरसिंहः शामित्रकर्मणि, पशुसंज्ञपनकर्मकर्ता शमिता तस्य कर्म शामित्रम्। तादर्थ्ये सप्तमी शामित्रकर्मार्थमृषिभिर्नैमिषारण्यवासिभिरिहोपहूतः आहूय प्रसाद्य स्थापितः। अन्तं करोतीत्यन्तकः स भगवान् यावदिहाऽऽस्ते न तावत् कश्चिन्म्रियत इत्यन्वयः ॥ ७, ८ ॥

अनेन प्रकृते किमायातमिति तत्राह — **एतदर्थम्** इति। अतः सम्प्रति नृलोके मृत्युभयविधुरतया स्थितैर्मर्त्यैः, लीलामृतं वचः पीयेत, एतदर्थं हि परमऋषिभिरिहाहूतः। अहो आश्चर्यम्। मरणधर्मिणामपि हरिलीलामृतत्वपदं हि यस्मात्तस्मात् विष्णुवैष्णवकथाश्रयं चेत्, तत् कथ्यतामिति भाव.॥ ९॥

1. K,M °मं

## श्रीराधाकृष्णप्रणीता सुधीसुधा

हे विप्र! सूत्यां जन्मदिनेऽभिजातकोविदाः जातककर्माभिज्ञाः, यथा हि समादिशन्, तथा महागुणः महाभागवतः भगवद्भक्तेषु श्रेष्ठः परीक्षित्, ततः पितृनिर्गमनानन्तरं द्विजवर्यशिक्षया भक्तब्राह्मणश्रेष्ठानां शिक्षया महीं शशास पालयामास॥ १॥

सः परीक्षित् उत्तरस्य तनयामिरावतीं उपयेमे परिणीतवान्। तस्यामिरावत्यां जनमेजयादीन् चतुरस्सुतान् उत्पादयत्, उदपादयत् अजनयदिति भावः॥ २॥

किञ्च सः परीक्षित् शारद्वतं कृपं गुरुं कृत्वा गङ्गायां गङ्गातीरे यत्र येष्वश्वमेधेषु देवा इन्द्रादयः अक्षिगोचराः प्रत्यक्षाः बभूवुरिति शेषः। साक्षात्कृतदेवानित्यर्थः। तान् भूरिदक्षिणान् त्रीनश्वमेधान् आजहार चकार॥ ३॥

वीरः परीक्षित् दिग्विजये निमित्ते सतीति शेषः। क्वचित्कुत्रचिद्देशे पदा पादेन गोमिथुनं घ्नन्तं ताडयन्तं नृपलिङ्गधरं राजलक्षणधरं शूद्रं कलिमोजसा सामर्थ्येन निजग्राह निगृहीतवान्।

अत्र शूद्रपदस्य शूद्रधर्मवानित्यर्थः। शूद्रधर्मश्च स्वस्य स्वकीयानाञ्चोदरपोषणमेव परमार्थं भावयता जनेन विधीयमानो नानाकर्मनिर्वहणात्मकः। स हि जनो लोकसेवया जीवनोपाधिरयत्नसिद्ध इत्यविज्ञाय लोकसेवां जीवनोपाधये करोति, तादृशजनाधिकारस्य कलहकारणत्वात् कलिस्तमाविष्टो वर्तते॥ ४॥

यो गां पदाऽहनत् अताडयत् सोऽसौ नृदेवचिह्नधृक् राजलक्षणधारी शूद्रकः कुत्सार्थे कप्रत्ययः। अतिकुत्सितः शूद्रः। तस्मात्तादृशं कलिं नृपः परीक्षित् दिग्विजये कस्य हेतोः कस्मात्कारणात् निजग्राह, केवलं निगृहीतवान्, न तु हतवान्?॥ ५॥

हे महाभाग! सूत! तत्कलिनिग्रहादिकं यदि कृष्णकथाश्रयं भगवत्कथाविषयकं भवति। अथवा अस्य कृष्णस्य पदाम्भोजमकरन्दलिहां पदपद्ममकरन्दास्वादिनां सतां सज्जनानां कथाश्रयं यदि भवति, तर्हि कथ्यताम्॥ ६॥

अङ्ग सूत! ऋतं सत्यं परं ब्रह्म इच्छतां क्षुद्रायुषां अल्पायुषां मर्त्यानां मरणशीलानां नृणां अस्माकमिति शेषः। यत् येभ्यः आयुषः असद्व्ययः निरर्थकः क्षयः भवतीति शेषः। तैरन्यैरसदालापैः श्रीकृष्णतद्भक्तकथाश्रयव्यतिरिक्तैः दुरालापैः वर्णितैराकर्णितैर्वा किम्? किं प्रयोजनमित्यर्थः॥ ७॥

इह अस्मिन् नैमिशक्षेत्रे शामित्रकर्मणि सत्रयागकर्मणि भगवान् मृत्युरुपहूतः, आकारितोऽस्तीति शेषः। स च अन्तकः यमः यावदिहास्ते तावदत्र न कश्चिन्म्रियते मृतो न भवति॥ ८॥

अहो नृलोके मानुषलोके हरिलीलामृतं श्रीकृष्णलीलाप्रतिपादकं अमृतमयं वचः पीयेत कर्णपुटाभ्यां आस्वाद्येत इत्येतदर्थं हि भगवान्मृत्युः महर्षिभिराहूतः इहाऽऽकारितः। अत्र सत्रकर्मवाचकं शामित्रकर्मपदं पशुहिंसनार्थकं व्याचख्युः श्रीधराद्याः प्राञ्चः। तथाहि — सर्वान्तर्यामिविष्णुमययज्ञकर्माचरणवशात् सर्वत्र देवभावानुभवसिद्ध्या जीवभावरूपपशुविनाशः। तेन शामित्रकर्मणः पशुहिंसनार्थकत्वं युक्तमेव।

ननु सत्रकर्मणि सर्वहरस्य मृत्योराह्वानं कथं सङ्गच्छते? उच्यते — "मृत्युस्सर्वहरश्चाऽहम्" (भ. गी. 10-34) इति गीतावचनेन सर्वव्यापकस्य भगवतो मृत्युरूपत्वाविरहात् मृतेरपि हरिलीलान्तर्भावेन, तदभावे लीलायास्सामग्र्यासिद्धेः। युज्यतेऽत्र मृत्योराह्वानम्। अत एवोक्तं, 'भगवान् मृत्यु' रिति।

नन्वेवञ्चेत् अन्तकस्य सद्भावे मृतेरनिवार्यत्वात् "न कश्चिन्म्रियते तावत् यावदास्त इहान्तकः" इत्युक्तिः कथं नाम सङ्गच्छते? श्रूयताम् — अन्तको यद्यपि देहमात्रात्मजीवितवतो जनान् देहेन सह संहरति, तेषां जीवितस्य प्रतिजन्मभिन्नत्वात्, किन्तु ये तावत्सर्वान्तर्यामिनारायणप्रज्ञामयजीविनस्तेहि प्रकृत्यनियतस्थितयः नानाविधदेहत्यागस्वीकारसद्भावेऽपि स्वात्मस्मृतिशालिनस्सन्तो विराजन्ते त एव चिरञ्जीविनो यज्ञमयजीविताः महानुभावाः सहस्रसमसत्रयज्ञमारभन्ते। तस्मादीदृशानामन्तको देहान्तरापादको नतु मृतिप्रापकः इति सर्वमनवद्यम्॥ ९॥

मन्दस्य मन्दप्रज्ञस्य वयो[1]मन्दायुषश्च वै[2]।
निद्रया ह्रियते नक्तं दिवा च[3] व्यर्थकर्मभिः॥ १०॥

सूत उवाच

यदा परीक्षित् कुरुजाङ्गलेऽ[4]शृणोत् कलिं प्रविष्टं निजचक्रवर्तिते।
निशम्य वार्तामनतिप्रियां ततः शरासनं संयुगशौ[5]ण्डिराददे[6]॥ ११॥

स्वलङ्कृतं श्यामतुरङ्गयोजितं रथं मृगेन्द्रध्वजमाश्रितः[7] पुरात्।
वृतो रथाश्वद्विपपत्तियुक्तया स्वसेनया दिग्विजयाय निर्गतः॥ १२॥

भद्राश्वं केतुमालञ्च भारतञ्चोत्तरान् कुरून्।
किम्पुरुषादीनि व[8]र्षाणि विजित्य जगृहे बलिम्॥ १३॥

तत्र तत्रोपशृण्वानः स्वपूर्वेषां महात्मनाम्।
प्र[9]गीयमाणं च[10] यशः कृष्णमाहात्म्यसूचकम्[11]॥ १४॥

आत्मानं च परित्रातमश्वत्थाम्नोऽस्त्रतेजसः[12]।
स्नेहञ्च वृष्णिपार्थानां तेषां भक्तिञ्च केशवे॥ १५॥

तेभ्यः परमसन्तुष्टः प्रीत्युज्जृम्भितलोचनः[13]।
महाधनानि वासांसि ददौ हारान् महामनाः ॥ १६ ॥

सारथ्यपारषद[14]सेवनसख्यदौत्यवीरासनानुगमनस्तवनप्रणामान्[15]।
स्निग्धेषु पाण्डुषु जगत्प्रणतिञ्च[16] विष्णोर्भक्तिं करोति नृपतिश्चरणारविन्दे ॥ १७ ॥

1. K.M प्रायो 2 H.V यत् 3 K.M चाप्यर्थ॰ 4 I ॰ज्वसत्; H.K.M.N.V.W ॰वसन् 5 H.V.W ॰शौण्ड आ॰. K.M ॰रोचिरा॰ 6 H.V ॰धे 7 H.K.M.V.W ॰स्थि॰ 8 K.M.W सर्वाणि 9 AF GF गीयमानं च पुरतः 10 K.M पुरतः 11 H.V.W ॰नम् 12 H.V.W ॰सा 13 H.V ॰त्यो॰ 14 K.M ॰पार्षद॰. H.V.W ॰पारिषद॰ 15 H.V ॰नानि शृण्वन्; K.M ॰न प्रणामैः; N ॰न प्रणामम् 16 K.M ॰ त्प्रणतस्य, H.V ॰ त्प्रणतिं स्म

**श्रीध॰** तदभावे[1] वृथैव जीवनमित्याह — **मन्दस्य** इति। मन्दस्यालसस्य नक्तं रात्रौ यद्वय आयुः तन्निद्रया ह्रियते। दिवा अह्नि च यद्वयः तत् व्यर्थकर्मभिरपह्रियते॥ १० ॥

तत्र[2] तावत्कलिनिग्रहप्रसङ्गमाह — **यदा** इति। यदा निजचक्रवर्तिते स्वसेनया पालिते[3] देशे कलिं प्रविष्टं शुश्राव तदा तामनतिप्रियां वार्तां किञ्चित्प्रियाञ्च युद्धकौतुकसम्पत्तेर्निशम्य[4] ततः शरासनं दुष्टनिग्रहार्थमाददे[5]। संयुगे शौण्डिर्युद्धे[6] प्रगल्भः। संयुगशौरिरिति पाठे[7] युद्धे शौरिः कृष्णतुल्यः॥ ११ ॥

**स्वलङ्कृतम्** इति। ततश्च दिग्विजयाय निर्गतः॥ १२ ॥

**भद्रेति।** भद्राश्वादीनि पूर्वपश्चिमदक्षिणोत्तरतः समुद्रलग्नानि वर्षाणि मेरोः सर्वतः इलावृतम्। तत उत्तरतो रम्यकं हिरण्मयञ्च। दक्षिणतो हरिवर्षं, किम्पुरुषञ्च। तानि विजित्य। किम्पुरुषेत्यत्र वर्णाधिक्यमार्षम्। बलिं पुष्कलधनप्रदानपूर्विकां सपर्याम्॥ १३ ॥

**तत्र** इति। प्रगीयमाणं यशः, यशआदीनि शृण्वस्तेभ्यो ददाविति तृतीयेनान्वयः ॥ १४, १५, १६ ॥

**सारथ्येति।** किञ्च, स्निग्धेषु पाण्डवेषु विष्णोर्यानि सारथ्यादीनि कर्माणि शृण्वन् तथा[8] विष्णोः जगत्कर्तृकां प्रणतिञ्च शृण्वन्, नृपतिः परीक्षित् विष्णोः चरणारविन्दे भक्तिं करोति स्म। सारथ्यादीनि[9] विवेचयति। सारथ्यं नियन्तृत्वम्। पारषदमिति[10] रेफषकारयोर्विश्लेषश्छान्दसः। तत्र पार्षदं[11] सभापतित्वम्। सेवनं चित्तानुवृत्तिः। वीरासनं रात्रौ खड्गहस्तस्य तिष्ठतो जागरणम्। सेवनं[12] पाण्डवचोदितकार्यकरणम्। स्तवनं वन्दिमागधादिवत् तेषां वैभवप्रख्यापनम्॥ १७ ॥

1. H,V add तस्य 2. H तदा तत्कलि॰ 3. B परिपालिते 4. H,V कलिमिति युद्धे कौ॰ 5. H,V ॰धे 6. H,V ॰ण्डः यु॰ 7 A पाठान्तरे 8. H,V तदा 9. A,B omit सारथ्या ....... यन्तृत्वम्। 10. H,V omit पारषद ....... श्छान्दसः। 11 H,V पारिषदं 12. A,B omit सेवनं ....... ख्यापनम्।

**वीर॰** कुतः? यत् यस्मात् मन्दस्य मन्दचेष्टस्य मन्दा प्रज्ञा बुद्धिर्यस्य, मन्दमल्पमायुर्यस्य तस्य हरिलीलामृतं वचोऽशृण्वतः, वयः कौमारादि। केवलं नक्तं रात्रौ निद्रया ह्रियते ह्रस्यते। दिवाऽहनि तु व्यर्थैः पुरुषार्थशून्यैः कर्मभिः सांसारिककर्मभिः ह्रियते। हरिलीलामृतं वचः पिबतस्तु वयः सफलमिति भावः॥ १०॥

इत्थमापृष्टः सहेतुकं कलिनिग्रहादिकं वर्णयति सूतः — यदा इत्यादिना यावत्सप्तदशाध्यायसमाप्ति। यदा परीक्षित् विजयार्थं गतः [1]कुरुजाङ्गलेषु च जनपदेषु वसन् निजचक्रेण स्वाज्ञाचक्रेण वर्तितेऽनुशिष्टे देशे स्वसेनाधिष्ठिते देशे वा प्रविष्टं कलिं तत्प्रवेशरूपामत्यन्तमप्रियां वार्तां निशम्याकर्ण्य ततः संयुगे युद्धे [2]शौण्डिः प्रवीणो राजा शरासनं धनुरादादे जग्राह। निजचक्रवर्तिते कुरुजाङ्गले वसन्निति वान्वयः॥ ११॥

ततः सुष्ठ्वलङ्कृतं श्यामैस्तुरङ्गैः संयोजितं, मृगेन्द्रः सिंहाङ्कितो ध्वजो यस्मिंस्तं रथमाश्रितोऽधिष्ठितः [3]रथादिचतुरङ्गयुक्तया सेनया परिवृतो दिग्विजयाय निर्गतः। कुरुजाङ्गलादिष्विति शेषः॥ १२॥

भद्राश्वादिवर्षाणि निर्जित्य बलिं करं जगृहे॥ १३॥

तत्र तत्र देशेषु स्वपूर्वेषां युधिष्ठिरादीनां महात्मनां कृष्णस्य भगवतो माहात्म्यस्य सूचकं प्रगीयमाणं यशः॥ १४॥

अश्वत्थाम्नो ब्रह्मास्त्रतेजसा परित्रातमात्मानं च वृष्णीनां पार्थनाञ्च केशवे कृष्णे स्नेहमनुरागञ्च तथा तेषां तस्मिन् भक्तिञ्चोपशृण्वानः॥ १५॥

नितरां हृष्टः प्रीत्या उज्जृम्भिते लोचने यस्य सः महामना उदारबुद्धिर्वदान्यो राजा तेभ्यः श्रावयितृभ्यः महाधनानि बहुमूल्यद्रव्याणि वासांसि, हारान् मुक्ताहारांश्च ददौ॥ १६॥

स्निग्धेष्वनुरक्तेषु पाण्डुषु युधिष्ठिरादिषु विष्णोः श्रीकृष्णस्य सारथ्यादिकं जगत्कृतं प्रणामञ्च स्मृत्वेति शेषः, नृपतिः परीक्षित् विष्णोः चरणारविन्दे भक्तिं करोति स्म चकारेत्यर्थः। तत्र सारथ्यं प्रसिद्धम्। पा[4]र्षदं सभ्यत्वं, सेवनं भृत्यकर्म, दौत्यं दूतकर्म, वीरासनानुगमनं नृपासनाधिष्ठितं प्रत्यनुवर्तनम्, स्तवनं स्तुतिकर्म, प्रणामो नमस्कारः विष्णु[5]कर्तृकान्यविषयानेतान् स्मृत्वेत्यर्थः॥ १७॥

---

1. A कुरूणां जाङ्गलेषु च जनपदे 2. W °ण्डः 3 A तथा चतु° 4 B,W °रि° 5. W °कर्तृकान् पाण्डुविषया°

**विज॰** यथा मर्त्यस्य असत्प्रसङ्गादायुषो वैयर्थ्यं तथा निद्रार्थादिपरस्यापीत्याह — मन्दस्य इति। अल्पस्यापि प्रज्ञाबाहुल्यादनेकवेदशास्त्रतदर्थग्रहणं स्यादित्यतो मन्दप्रज्ञस्य इति। मन्दप्रज्ञस्य कल्पायुस्तत्स्यादित्यतो मन्दायुष इति। अल्पायुषोऽपि भाग्यवशात्तत्स्यात् इत्यतो मन्दस्येति। मन्दस्य निर्भाग्यस्य एवंविधस्य मर्त्यस्य नक्तं रात्रिः निद्रया ह्रियते। हिरण्याद्यर्थान्वेषणकर्मभिर्दिवा दिनमपि ह्रियते। चशब्दो हेत्वर्थे। तस्मान्निद्रादिजयेन हरितत्परायणकथाऽत्र त्वया कथ्यतामिति भावः। वै इत्यनेन अनुभवसिद्धमेतदिति दर्शयति सत्रदिदृक्षया अत्रागतैर्मर्त्यैश्चाकर्ण्यताम्। [1]मृत्यावत्रसद्भिर्वेत्यस्मिन्नर्थे आद्यश्चशब्दः॥ १०॥

कुरुजाङ्गले कुरुविषये हस्तिनापुरे वसन् परीक्षित् यदा निजचक्रवर्तिते निजचक्रेण स्वानुज्ञया निजानां पाण्डवानां आज्ञया वर्तिते राष्ट्रे प्रविष्टं कलिं शुश्रावेति शेषः। ततस्तदा संयुगरोचिर्युद्धेच्छुः राष्ट्रविप्लवरूपामनतिप्रियां वार्तां निशम्य शरासनमाददे इत्यन्वयः। संयुगं रोचयतीति धनुर्विशेषणं वा॥ ११॥

श्यामैर्नवसु वीथीषु विशिष्टगतिभिः नीलवर्णैर्वा तुरङ्गैर्योजितं, मृगेन्द्रो ध्वजे यस्य स तथा तं सिंहलाञ्छनध्वजं, रथाश्च अश्वाश्च द्विपाश्च पत्तयश्च रथाश्वद्विपपत्तयः तैर्युक्तया पुरान्निर्गतोऽभूदित्यन्वयः॥ १२॥

स परीक्षित् भद्राश्वादिवर्षाणि उत्तरकुर्वादिजनपदां[2]श्च विजित्य बलिं करं जगृहे इत्यन्वयः॥ १३॥

स महामनास्तत्र तत्र वर्षेषु विषयेषु च स्वपुरतो गायकैरुपगीयमानं कृष्णमाहात्म्यसूचकं महात्मनां स्वपूर्वेषां पाण्डवानां माहात्म्यमुपशृण्वानः उपशृण्वन्॥ १४॥

कथं माहात्म्यं सूच्यत इति तत्किञ्चिदाह — **आत्मानम्** इति। अश्वत्थाम्नोऽस्त्रतेजसः कृष्णेन परिरक्षितमात्मानञ्च वृष्णीनां पाण्डवानां मिथः स्नेहञ्च उभयेषां कृष्णे भक्तिञ्च शृण्वन्॥ १५॥

तेभ्यो गायकेभ्यः परमसन्तुष्टोऽतएव प्रीत्या उज्जृम्भिते विकसिते लोचने यस्य स तथोक्तो महाधनानि अनर्घ्याणि वस्त्राणि हारान् मौक्तिकमालास्तेभ्यो ददावित्यन्वयः॥ १६॥

नृपतिः परीक्षित् कृष्णे स्निग्धेषु पाण्डुपुत्रेषु मुक्तामुक्तप्रपञ्चप्रणतस्य विष्णोः सारथ्यादिना अहो! हरिश्चरणनतजनतासु करुणार्णवो नन्विति तस्य चरणारविन्दे विशेषतो भक्तिं करोतीत्येकान्वयः। सारथेः कर्म सारथ्यं, पार्षदं सभापतिकर्म। द्वाःस्थत्वं वा, परिषदां कर्मेति वा। सेवनमुक्तकर्मकरणम्। सख्युः कर्म सख्यम्। दूतस्य कर्म सन्देशह[3]रत्वं दौत्यम्। वीरासनं रात्रौ खड्गपाणिः स्थित्वा स्वामिरक्षार्थं जागरणम्। वीरोचितासनम्। गच्छतः पृष्ठतो गमनमनुगमनम्। स्तवनं स्तुतिः। प्रणामो नमस्कारः प्रह्वत्वं वा। वीरासनानुगमनं सिंहासनोपसर्जनतया उपवेशनं वा॥ १७॥

---

1. K मृत्वा च त्रसद्भि° 2 K.M. पदानि च 3 B.K.M °क°

**रा° कृ°** मन्दस्य मन्दभाग्यस्य, मन्दप्रज्ञस्य मन्दबुद्धेः मन्दायुषः अल्पायुषः, जनस्येति शेषः। नक्तं निद्रया ह्रियते। व्यर्थं नीयते। एवं व्यर्थकर्मभिः दिवा दिनसमयश्च ह्रियते।

अत्र रजस्तमोभिभूताः देहात्मप्रज्ञाजीविनो मन्दप्रज्ञा इत्युक्ताः। केवलदेहार्थकार्यनिर्वहणव्यग्रतया तेषां जीविनां वयो मन्दमसत्प्रायं भवति। ततश्च तज्जीवनं व्यर्थमेव। एतेन हरिलीलामृतपायिनो हरिमयजीवनस्य तु वयस्सफलमिति सिध्यति॥ १०॥

परीक्षित् निजचक्रवर्तिते निजसैन्यरक्षिते कुरुजाङ्गले कुरुजाङ्गलविषये कलिं प्रविष्टं यदाऽशृणोत् श्रुतवान् ततस्तदा अनतिप्रियां तां वार्तां निशम्य श्रुत्वा संयुगशौण्डः युद्धे प्रगल्भः सः परीक्षिदिति शेषः। शरासनं धनुराददे स्वीचकार॥ ११॥

ततः स परीक्षित् स्वलङ्कृतं सम्यगलङ्कृतं श्यामतुरङ्गयोजितं मृगेन्द्रध्वजं सिंहध्वजं रथमाश्रितोऽधिष्ठितः रथाश्वद्विपपत्तियुक्तया चतुरङ्गसहितया स्वसेनया वृतः दिग्विजयाय पुरात् हस्तिनापुरात् निर्गतः निरगच्छत्॥ १२॥

निर्गत्य स राजा भद्राश्वं केतुमालं, उत्तरान् कुरून्, एतन्नामकवर्षाणि किम्पुरुषादीनि वर्षाणि च विजित्य बलिं करं तद्वर्षपालकेभ्यः इति शेषः। जगृहे गृहीतवान्।

परितः उत्तरध्रुवं भुवः प्रदेशान् नव द्वीपानिति हिमालयस्योत्तरा किञ्चन केन्द्रमादाय तत्परितो वर्तिनः प्रदेशान् अष्टवर्षाणीति प्राचीनाः विभक्तवन्तः। एतानि वर्षाणि च इलावृतरम्यकहिरण्मयहरिवर्षकिम्पुरुषभद्राश्वकेतुमालभारताख्यानि। साम्प्रतिको भारतदेशो भारतवर्षान्तर्गतः॥ १३॥

तत्र तत्र विषयेषु प्रगीयमानं स्वपूर्वेषां धर्मराजादीनां महात्मनामन्येषाञ्च भागवतानां कृष्णमाहात्म्यसूचकं यशः कीर्तिमश्वत्थाम्नः अस्त्रतेजसः ब्रह्मास्त्रतेजसस्सकाशात् आत्मानं परित्रातं कृष्णेन परिरक्षितञ्च, वृष्णिपार्थानां यादवपाण्डवानां परस्परं स्नेहञ्च तथा तेषां यादवपाण्डवानां केशवे कृष्णे भक्तिं च उपशृण्वानः शृण्वन् परमसन्तुष्टः प्रीत्युज्जृम्भितलोचनः आनन्दप्रफुल्लनयनः महामना उदारमानसः परीक्षित् तेभ्यः गायकेभ्यः महाधनानि अधिकधनानि वासांसि हारान् मुक्तादिहारांश्च ददौ दत्तवान्॥ १४, १५, १६॥

स्निग्धेषु पाण्डुषु धर्मराजादिषु विष्णोः श्रीकृष्णस्य सारथ्यपारषदसेवनसख्यदौत्यवीरासनानुगमनस्तवनप्रणामान् जगत्प्रणतिं श्रीकृष्णे जगत्कर्तृकां प्रणतिं च शृण्वन् नृपतिः परीक्षित् विष्णोश्चरणारविन्दे भक्तिं करोति स्म॥ १७॥

**[1]तस्यैवं वर्तमानस्य पूर्वेषां वृत्तिमन्वहम्[2]।**
**नातिदूरे किलाश्चर्यं यदासीत्तन्निबोध मे॥ १८॥**

**धर्मः पदैकेन चरन् विच्छायामुपलभ्य गाम्।**
**पृच्छति स्माश्रुवदनां विवत्सामिव मातरम्॥ १९॥**

**धर्म उवाच**

**कच्चिद्भद्रेऽनामयमात्मनस्ते[3] विच्छायासि म्लायतेषन्मुखेन[4]।**
**आलक्षये भवतीमन्तराधिं दूरे बन्धुं शोचसि कञ्चनाऽम्ब!॥ २०॥**

**[5]पादैर्न्यूनं शोचसि मैकपादमात्मानं[6] वा वृषलैर्भोक्ष्यमाणम्।**
**[7]आहो सुरादीन् हृतयज्ञभागान् प्रजा उतस्विन्मघवत्यवर्षति॥ २१॥**

अरक्ष्यमाणाः स्त्रिय उर्वि बालान् शोचस्यथो[8] पुरुषादैरिवार्तान्।
वाचं देवीं ब्रह्मलोके कुकर्मण्यब्रह्मण्ये राजकुले कुलाग्र्यान्॥ २२ ॥

किं क्षत्रबन्धून् कलिनोपसृष्टान् राष्ट्राणि वा तैरवरोपितानि।
इतस्ततो वा[9]ऽशनपानवास[10]ः स्नानव्यवायोन्मुख[11]जीवलोकम्॥ २३ ॥

यद्वाऽम्ब[12]! ते भूरिभरावतारकृतावतारस्य हरेर्धरित्रि!
अन्तर्हितस्य स्मरती विसृष्टा कर्माणि निर्वाणविलम्बितानि॥ २४ ॥

इदं ममाऽऽचक्ष्व तवाधिमूलं वसुन्धरे! येन विकर्शितासि।
कालेन वा ते ब[13]लिनां बलीयसा सुरार्चितं किं हृ[14]तमम्ब! सौभगम्॥ २५ ॥

---

1. H.V तस्यानु° 2 K.M °त्त° 3 H.V °य आत्म° 4 H K.M.V.W °ता यन्मु° 5 H पादन्यूनं 6 AF GF °युतात्मानं वृष°, B.H.K.M.V.W °मुतात्मानं वृष° 7 K.M अथो; N अहो 8 H.V °हो 9 H.V वा शयनासनान्नपानव्यवा° 10 AF GF वाससोत व्यवा° 11 K.M °त्सुख° 12 K.M °थ 13 K.M बलिनाऽवलीढं 14 K.M प्रभुणाद्य

**श्रीध०** **तस्य** इति। पूर्वेषां वृत्तिमनुवर्तमानस्य सतः। नातिदूरे शीघ्रमेव॥ १८ ॥

**धर्म** इति। धर्मो वृषरूपः। विच्छायां हतप्रभाम्। गां गोरूपां पृथ्वीम्। विवत्सां नष्टापत्याम्॥ १९ ॥

**कच्चित्** इति। ते आत्मनो देहस्य यद्यपि बहिरामयो न लक्ष्यते, तथाप्यन्तर्मध्ये आधिः पीडा यस्यास्तां त्वामालक्षये। केन यतो विच्छायाऽसि। अत ईषत् म्लायता वैवर्ण्यं भजता मुखेन लिङ्गेन तत्र कारणानि कल्पयन्[1] पृच्छति दूरे बन्धुमित्यादि पञ्चभिः। दूरे स्थितं बन्धुं देशान्तरवर्तिनं[2] वत्सम्॥ २० ॥

**पादैः** इति। त्रिभिः पादैः न्यूनं[3] अतएवैकपादं मा मां मल्लक्षणं जनमित्यर्थः। वृषलैः धर्मशून्यैः कुत्सितराजन्यैरित ऊर्ध्वं भोक्ष्यमाणम्। पुंस्त्वमात्म[5]पदविशेषणत्वात्। मन्त्रादिलोपपूर्वकयज्ञाद्यनुष्ठानेनासुरैः हृता यज्ञभागाः येषां तान्[6] यज्ञाद्यकरणात्॥ २१ ॥

**अरक्ष्यमाणा** इति। हे उर्वि! पृथ्वि! भर्तृभिररक्ष्यमाणाः स्त्रियः, पितृभिररक्ष्यमाणान् बालान्[7] प्रत्युत तैरेव पुरुषादैरिव निर्दयैरार्तान् क्लिष्टान्। वाचं देवीं सरस्वतीं कुकर्मणि दुराचारे स्थितां[8]। कुलाग्र्यान् ब्राह्मणोत्तमान् सेवकान्॥ २२ ॥

**किम्** इति। कलिना उपसृष्टान् व्याप्तान् अवरोपितान्युद्वासितानि। व्यवायो मैथुनम्। इतस्ततो[9] विधिनिषेधानादरेण सर्वतो[10]ऽशनादिषून्मुखं प्रवर्तमानं जीवलोकं वा॥ २३ ॥

**यद्वा** इति। हे अम्ब! मातः हे धरित्रि! ते तव यो भूरिभरस्तस्यावतारणार्थं[11] कृतावतारस्य कर्माणि स्मरन्ती[12] तेन विसृष्टा सती शोचसि निर्वाणं विलम्बितं आश्रितं[13] येषु तानि। पाठान्तरे निर्वाणं विडम्बितमुपहसितं यैः मोक्षादप्यधिकसुखानीत्यर्थः ॥ २४ ॥

**इदम्** इति। हे अम्ब! ते[14] सौभगं सौभाग्यं कालेन वा हृतम्॥ २५ ॥

---

1 H,V विकल्पयन् 2 V °वर्तिवत्सं 3 H,V add शून्यं 4 H,V omit मल्लक्षणं जनमित्यर्थः। 5 H,V °मात्मनृशब्दविशेषणत्वात्; B °मात्मनो विशेषणत्वात् 6 H,V अथवा; B omits तान् 7 H adds तत् 8 H,V °तान्। कुत्वा° 9 H,V omit इतस्ततो 10 H,V °तश्शयनादि° 11 H,V °त° 12 H,V °ती 13 H,V add स्थितं 14 H,V add तव

**वीर०** तस्य परीक्षितः पूर्वेषां युधिष्ठिरादीनां वृत्तिमन्वहं वर्तमानस्य[1] सतः तस्य नातिदूरे सन्निकृष्टदेशे यन्महदाश्चर्यमासीत् तत्कथयिष्यतो मे मत्तो निबोध शृणु॥ १८ ॥

**धर्म** इति। धर्मः धर्माधिदेवो वृषरूपधरः एकेन पदेन[2] चरन् विच्छायां निस्तेजस्कां गां गोरूपधरां वत्सरहितां मातरमिव अश्रूणि वदने यस्यास्तां पृच्छति समापृच्छत्॥ १९ ॥

प्रश्नमेवाह — **कच्चित्** इत्यादिभिः षड्भिः। हे भद्रे! तवात्मनो देहस्यानामयमारोग्यमस्ति कच्चित्? ईषन्म्लायता हर्षक्षयमुपगतेन मुखेन विच्छाया निस्तेजस्का भवसि। अहन्तु भवतीं त्वामन्तरा हृदयमध्ये आधिः क्लेशो यस्यास्तथाभूतामालक्षये। म्लान[3]विच्छायामुत्पश्यामि। हे अम्ब! कञ्चन दूरस्थं बन्धुं शोचसि॥ २० ॥

किं[4] वा पादैस्त्रिभिर्न्यूनं एकः पादो यस्य तं माम्प्रति शोचसि? उत वृषलैः शूद्रप्रायैः राजभिर्भोक्ष्यमाणं स्वात्मानं प्रत्येव शोचसि? आहोस्वित् हृतः शून्यो[5] यज्ञीयहविर्भागो येषां तान् देवान् प्रति? उतस्वित् मघवतीन्द्रेऽवर्षति सति दुर्भिक्षपीडिताः प्रजाः प्रति?॥ २१ ॥

यद्वा हे उर्वि! पुरुषादैराक्षसैरिव नृशंसैरार्तान् पीडितान् बालकान्, अरक्ष्यमाणाः स्त्रियः स्त्रीः प्रति शोचसि किम्? ब्रह्मकुले[7] कुकर्मणि दुर्वृत्ते सति देवस्य विष्णोस्सम्बन्धिनीं वाचं त्रयीं प्रति? उत राजकुलेऽब्रह्मण्ये ब्राह्मणेष्वसाधुनि सति कुलाग्र्यान् ब्राह्मणान् प्रति?॥ २२ ॥

किं वा कालेन उपसृष्टान् क्षत्रियाधमान् प्रति? यद्वा तैः क्षत्त्रबन्धुभिरवरोपितान्युपद्रुतानि राष्ट्राणि प्रति? उत इतस्ततः निषिद्ध[8]देशे जनेष्वशनाद्युन्मुखमशनाद्यभिलाषिणं जीवलोकं प्रति?॥ २३ ॥

यद्वा हे अम्ब! हे धरित्रि! तव भूरिभरस्यावताराय हरणाय कृतोऽवतारो येन तस्य हरेरधुना अन्तर्हितस्य श्रीकृष्णस्य। हरेरिति कर्तरि षष्ठी। तेन विसृष्टा त्यक्ता सती तस्य कर्माणि चेष्टितानि निर्वाणविलम्बितानि स्मरती त्वं शोचसि? निर्वाणे मोक्षे विशेषेण लम्बितानि सन्निहितानि, साक्षात्कृतानीति यावत्। यद्वा निर्वाणं सुखं, विलम्बितं अधुनान्तरितं येभ्यस्तानि॥ २४ ॥

हे वसुन्धरे! तवाऽऽधेर्मूलमिदमुपस्थितं मह्यमाचक्ष्व आख्याहि, येन त्वं विकर्शिता कृशत्वं प्राप्तासि, तस्याऽऽधेर्मूलमित्यर्थः। हे अम्ब! सुरैरपि बहुमन्तव्यं तव सौभगं स्पृहणीयं सौन्दर्यं बलिनामपि बलीयसा कालेन किं वाऽपहृतम्? ॥ २५ ॥

1. W adds अनुवर्तमानस्य 2 W adds पादेन 3. W म्लानिविच्छायाभ्या° 4 W किञ्च 5 A,W यज्ञिय° 6 W दुर्भिक्षे पीडिताः 7 W adds विप्रकुले 8 W °देशजने° 9. W अपहरणाय

**विज०** पूर्वेषां पित्रादीनां वृत्तमाचरितमनुदिनमेवं वर्तमानस्य नातिदूरे अस्मद्दृष्टिगोचरे यदाश्चर्यमासीत् तन्निबोधेत्येकान्वयः ॥ १८ ॥

किं तदिति तत्राह — **धर्म** इति। सत्याख्येनैकेन पादेन चरन् धर्मो वृषभो भूत्वा वत्सरहितां मातरमिवाश्रुवदनामत एव विच्छायां विगतकान्तिं गोरूपिणीं गां भूमिं उपलभ्य अपृच्छदित्येकान्वयः ॥ १९ ॥

"भद्रा गौर्गोमतल्लिका" (वैज. को. 3-4-46) इत्यभिधानम्। हे भद्रे! ते तव आत्मनो देहस्य अनामयमारोग्यं कच्चित्? किं म्लायता म्लानिं गच्छता मुखेन विच्छाया विगतकान्तिरसीति यत् यस्मात् तस्मात् भवतीमन्तराधिं मनःपीडावतीमालक्षये पश्यामि। किञ्च, कञ्चन दूरे बन्धुं परोक्षप्रदेशे स्थितं बन्धुं प्रति शोचसि वेति ॥ २० ॥

अपि च, त्रिभिः पादैर्न्यूनं हीनमेकपादं मा मां प्रति शोचसि? उत पक्षान्तरे। आहोस्वित् वृषं धर्मं लीनं नष्टं कुर्वन्तीति वृषलाः राजाभासाः शूद्रप्रायास्तैर्भोक्ष्यमाणमात्मानं शोचसि? अथो अथवा हृतो यज्ञे भागो येषां ते तथोक्तास्तान् सुरादीन् शोचसि किम्? मघवतीन्द्रेऽवर्षति, यज्ञाभावाद्वर्षमकुर्वति सति सस्यादिसंवृद्ध्यभावेन दरिद्राः प्रजा उद्दिश्य शोचस्युतस्वित्, अपिस्वित्? ॥ २१ ॥

अथवा हे उर्वि! भूः! राजकुले अब्रह्मण्ये अरक्ष्यमाणाः स्त्रिय उद्दिश्य शोचसि? अथवा पुरुषादैर्मनुष्यभक्षकैरिव स्थितैरुपद्रवकरैरार्तान् दुःखितान् बालांश्च शोचसि किम्? ब्रह्मकुले ब्राह्मणकुले कुत्सितकर्मणि दुष्प्रतिग्रहोल्लेखनादिकर्म कुर्वति सति राजकुलेऽब्रह्मण्ये ब्राह्मणबहुमानमकृत्वा, तस्मात्करादीनाददाने सति च कुलाग्र्यां श्रेष्ठां कुलीने वर्तमानामिति वा देवीं द्योतमानां वाचं देववाणीमाचारकुलहीना[1] अध्येष्यन्तीति शोचसि स्वित्? "बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति[2]" (भार. 1-1-204) इति वचनात् ॥ २२ ॥

कालेनोपसृष्टानुपहतान् क्षत्त्रबन्धून् शोचसि? तैः क्षत्त्रबन्धुभिः अवरोपितानि विनाशितानि राष्ट्राणि वा शोचसि? • यद्वा एवं वा इतस्ततः अनियमेनाशनञ्च पानञ्च वासः स्थानञ्च व्यवायो ग्राम्यधर्मश्च, ते तथोक्ताः, तेषूत्सुकमुत्कण्ठावन्तं जीवलोकं प्राणिसमूहं किं शोचसि? ॥ २३ ॥

अथेति पक्षान्तरारम्भः। ते तव भूमेर्महतो भरस्यावतारोऽवरोपणं तस्मै भूरिभरावताराय कृतोऽवतारः स्वरूपप्रकाशो येन स तथोक्तः। तस्यान्तर्हितस्य निर्वाणं स्वस्वयोग्यं मोक्षं विशेषेण लम्बयन्ति पुरःस्थितं कारयन्तीति

निर्वाणविलम्बितानि। निर्वाणं विलम्बयन्ति अपहरन्तीति वा हरेः कर्माणि चरितानि स्मरन्ती[3] हरिणाऽहमद्य विसृष्टा नन्विति शोचस्यपि किम्?॥ २४॥

येन मनोदुःखेन विकर्शिता कृशतराऽसि, हे वसुन्धरे! तदिदमाधेः मनःपीडायाः मूलं ममाख्याहीत्यन्वयः। अथवा सम्प्रति प्रभुणा समर्थेन बलिना सर्वाङ्गपुष्टेन कालेन तव सुरार्चितं सौभाग्यमवलीढं ग्रस्तञ्चेत्यन्वयः॥ २५॥

---

1 K,M वेद° 2 B,K,M °चलि° 3 K,M add इति

रा० कृ० पूर्वेषां युधिष्ठिरादीनां वृत्तिमेवमन्वहं वर्तमानस्यानुसरतः तस्य परीक्षितो नातिदूरे यदाश्चर्यमासीत्किल तन्मे कथयतो मत्तः निबोध शृणु॥ १८॥

धर्मः वृषरूपधरो धर्माधिदेवः एकेन पदा पादेन चरन् इतस्ततः सञ्चरन् गां गोरूपधरां धरित्रीं विच्छायां निस्तेजस्कामुपलभ्य विलोक्य विवत्सां वत्सरहितां मातरमिव अश्रुवदनां रुदन्तीमित्यर्थः। तां गां पृच्छति स्म वक्ष्यमाणप्रकारेणापृच्छत्।

गोवृषभौ सस्यसम्पत्कृषिकर्मणोस्सङ्केतौ। तदुभयदशाज्ञाने राज्यव्यवस्था स्फुटीभविष्यति। अपि च गोवृषभौ भूसूर्ययोस्सङ्केतत्वेन वेदे समुपवर्णितौ। वृषभरूपस्य धर्मस्य सत्यदानदयाशौचाख्याः चत्वारः पादाः। समायाते कलौ दानैकपादो धर्मो भवति तच्च दानं स्वार्थैकदृष्टिभिः कलुषितमास्ते। सर्वमिदं परीक्षिदपश्यदिति ध्वनिः॥ १९॥

हे भद्रे! ते आत्मनो देहस्य अनामयं आरोग्यं कच्चित्? अस्ति किम्? कुत इति चेत्? ईषत् म्लायता म्लानिं गतेन मुखेन विच्छाया तेजोविहीनाऽसि। भवतीं त्वां अन्तराधिं मानसिकव्यथासहितां आलक्षये तर्कयामि। हे अम्ब! दूरे स्थितं कञ्चन बन्धुं शोचसीति काकुः। शोचसि किमिति भावः॥ २०॥

पादैस्त्रिभिः पादैः न्यूनं हीनमत एवं एकपादं मा मां मत्तुल्यं जनमपीति ध्वनिः। शोचसि किम्? अथवा वृषलैश्शूद्रधर्मभिः राजभिः भोक्ष्यमाणं पाल्यमानं आत्मानं प्रति शोचसि किम्? अहो अथवा, हृतयज्ञभागान् सुरादीन् देवादीन् प्रति शोचसि किम्? उतस्वित् अथवा मघवति पर्जन्याधिदेवे अवर्षति सति प्रजाः दुर्भिक्षपीडितान् जनान् प्रति शोचसि किम्?॥ २१॥

हे उर्वि! अरक्ष्यमाणाः भर्तृभिरपाल्यमानाः स्त्रियः स्त्रीः प्रति पुरुषादैरिव राक्षसैरिव स्थितैः पित्रादिभिरार्तान् पीडितान् बालान् प्रति शोचसि किम्? अहो अथवा ब्रह्मकुले ब्राह्मणकुले कुकर्मणि कुत्सितकर्माचरणपरायणे सति सदध्येत्रभावात् देवीं वाचं देवस्य निःश्वासरूपां वेदलक्षणां सरस्वतीं प्रति अब्रह्मण्ये ब्राह्मणभक्तिहीने राजकुले लोभहेतुना भृत्यत्वेन स्थितान् कुलाग्र्यान् ब्राह्मणान् प्रति च शोचसि किम्?॥ २२॥

कलिना उपसृष्टान् व्याप्तान् क्षत्रबन्धून् क्षत्रियाधमान्। अथवा तैः राजाधमैः अवरोपितानि पीडितानि राष्ट्राणि देशान् प्रति शोचसि किम्? अथवा इतस्ततः निषेधमनादृत्येत्यर्थः। अशनपानवासस्नानव्यवायोन्मुखजीवलोकं सर्वतोऽशनादिषु प्रवर्तमानं जीवसमुदायं प्रति शोचसि किम्?॥ २३॥

यद्वा अथवा, हे अम्ब! हे धरित्रि! ते तव भूरिभरावतारकृतावतारस्य तव भूरिभारापनोदनार्थं स्वीकृतजन्मनः, अन्तर्हितस्य अधुना तिरोहितस्य हरेः श्रीकृष्णस्य विसृष्टा दूरीकृता तेन त्यक्ता सतीति भावः। निर्वाणविलम्बितानि मोक्षाश्रितानि कर्माणि हरेः कर्माणि स्मरती स्मरन्ती शोचसि किम्? ॥ २४ ॥

हे वसुन्धरे! येनाऽऽधिना विकर्शितासि कृशतां नीताऽसि, तवाधिमूलं तस्याऽऽधेर्मूलं इदं, कारणं मम आचक्ष्व कथय। अथवा हे अम्ब! सुरार्चितं देवैरपि बहुमतं ते तव सौभगं सौन्दर्यं बलिनां बलवतां मध्ये बलीयसा कालेन हृतं किम्? अपहृतं किम्? ॥ २५ ॥

### धरण्युवाच

भवान्[1] हि वेद तत्सर्वं यन्मां धर्मा[2]नुपृच्छसि।
चतुर्भिर्वर्तसे येन पादैर्लोकसुखावहैः ॥ २६ ॥

सत्यं शौचं दया क्षा[3]न्तिस्त्यागस्सन्तोष आर्जवम्।
शमो दमस्तपस्साम्यं तितिक्षोपरतिः श्रुतम् ॥ २७ ॥

ज्ञानं विरक्तिरैश्वर्यं शौर्यं तेजो ब[4]लं स्मृतिः।
स्वातन्त्र्यं कौशलं का[5]न्तिर्धैर्यं मार्दवमेव च ॥ २८ ॥

प्रागल्भ्यं प्रश्रयश्शीलं सह ओजो बलं भगः।
गाम्भीर्यं स्थैर्यमास्तिक्यं कीर्तिर्मानोऽनहङ्कृतिः ॥ २९ ॥

ए[6]ते चान्ये च भ[7]गवन्नित्या यत्र महागुणाः।
प्रार्थ्या महत्त्वमिच्छद्भिर्न वि[8]यन्ति स्म कर्हिचित् ॥ ३० ॥

तेनाऽहं गुणपात्रेण श्रीनिवासेन साम्प्रतम्।
शोचामि रहितं लोकं पाप्मना कलिनेक्षितम् ॥ ३१ ॥

आत्मानञ्चानुशोचामि भवन्तञ्चामरोत्तमम्[9]।
देवान् पितॄनृषीन् साधून् सर्वान्वर्णांस्तथाऽऽश्रमान् ॥ ३२ ॥

ब्रह्मादयो ब[10]हुतिथं यदपाङ्गमोक्षका[11]मास्तपस्समचरन् भगवत्प्रपन्नाः[12]।
सा श्रीः स्ववासमरविन्दवनं विहाय यत्पादसौभगमलं भजतेऽनुरक्ता ॥ ३३ ॥

तस्याऽहमब्जकुलिशाङ्कुशकेतुकेतैः श्रीमत्पदैर्भगवतस्समलङ्कृताङ्गी।
त्रीनत्यरोच उ[13]पलभ्य त[14]तो विभूतिं लोकान् स मां व्यसृजदुत्स्मयतीं तदन्ते ॥ ३४ ॥

यो वै ममातिभरमासुरवंशराज्ञामक्षौहिणीशतमपानुददात्मतन्त्रः ।
त्वां दुःस्थमूनपदमात्मनि पौरुषेण सम्पादयन् यदुषु रम्यमबिभ्रदङ्गम् ।। ३५ ।।

का वा सहेत विरहं पुरुषोत्तमस्य प्रेमावलोकरुचिरस्मितवल्गुजल्पैः ।
स्थैर्यं समानमहरन्मधुमानिनीनां रोमोत्सवो[15] मम यदङ्घ्रिविटङ्किताया: ।। ३६ ।।

श्रीसूत उवाच

तयोरेवं कथयतोः पृथिवीधर्मयोस्तदा ।
परीक्षिन्नाम राजर्षिः प्राप्तः प्राचीं सरस्वतीम् ।। ३७ ।।

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
प्रथमस्कन्धे पृथ्वीधर्मसंवादो नाम षोडशोऽध्यायः ।। १६ ।।

---

1 AF GF भवानेवहि तद्वेद यन्मां; W भवान्नु वेद 2 W धर्मन् हि पृ° 3 K.M दानं त्या° 4. K.M धृतिः 5. AF GF कान्ति सौभाग्यं मार्दवं क्षमा; K.M कान्तिः सौभगं मार्दवं क्षमा 6 K M इमे 7 H.V बहवो यस्मिन् नित्या महा° 8 K M च यन्ति स्म 9 H.K.M °म! 10 AF GF यदनिशं 11 AF GF °कामास्तपोव्रतधरा भग° K M °कामा यथोक्तविधिना भग° 12 B.H N V W °न्ना 13 H °मुपलभ्य; K.M °मुपलब्ध° 14 AF GF °तपोविभूति°. K.M तपो विभूतिः 15 H.V रोमोद्गमो

**श्रीध०** **भवानिति**। भवान् जानात्येव तथाऽपि वक्ष्यामीत्याह। येन हेतुभूतेन त्वं चतुर्भिः पादैर्वर्तसे यत्र च सत्यादयो महागुणाः न वियन्ति न क्षीयन्ते तेन श्रीनिवासेन रहितं लोकं शोचामीति **षष्ठेनान्वयः** ।। २६ ।।

**सत्यम्** इति। सत्यं यथार्थभाषणम्। शौचं शुद्धत्वम्। दया परदुःखासहनम्। क्षान्तिः क्रोधप्राप्तौ चित्तसंयमनम्। त्यागोऽर्थिषु मुक्तहस्तता। सन्तोषोऽलम्बुद्धिः। आर्जवमवक्रता। शमो मनोनैश्चल्यम्। दमो बाह्येन्द्रियनैश्चल्यम्। तपः स्वधर्मः। साम्यम् अरिमित्राद्यभावः। तितिक्षा परापराधसहनम्। उपरतिर्लाभप्राप्तावौदासीन्यम्। श्रुतं शास्त्रविचारः ।। २७ ।।

**ज्ञानम्** इति। ज्ञानमात्मविषयम्। विरक्तिर्वैतृष्ण्यम्। ऐश्वर्यं नियन्तृत्वम्। शौर्यं सङ्ग्रामोत्साहः। तेजः प्रभावः। बलं दक्षत्वम्। स्मृतिः कर्तव्याकर्तव्यार्थानुसन्धानम्। स्वातन्त्र्यम् अपराधीनता। कौशलं क्रियानिपुणता। कान्तिः सौन्दर्यम्। धैर्यमव्याकुलता। मार्दवं चित्ताकाठिन्यम् ।। २८ ।।

**प्रागल्भ्यम्** **इति**। प्रागल्भ्यं प्रतिभातिशयः। प्रश्रयो विनयः। शीलं सुस्वभावः। सह ओजो बलानि मनसो ज्ञानेन्द्रियाणां कर्मेन्द्रियाणाञ्च पाटवानि। भगो भोगास्पदत्वम्। गाम्भीर्यमक्षोभ्यत्वम्। स्थैर्यमचञ्चलता। आस्तिक्यं श्रद्धा। कीर्तिर्यशः। मानः पूज्यत्वम्। अनहङ्कृतिः गर्वाभावः ।। २९ ।।

**एत** **इति**। एते एकोनचत्वारिंशत् अन्ये च ब्रह्मण्यशरण्यत्वादयो महान्तो गुणाः यस्मिन्नित्याः सहजाः न वियन्ति न क्षीयिन्ते स्म ।। ३० ।।

**तेन** इति। तेन गुणपात्रेण गुणालयेन पाप्मना पापहेतुना॥ ३१, ३२॥

तस्य विरहो दुस्सह इत्याह चतुर्भिः — **ब्रह्मादय** इति। ब्रह्मादयो यस्याः श्रियोऽपाङ्गमोक्षः स्वस्मिन् दृष्टिपातस्तत्कामास्सन्तो बहुतिथं बहुकालं तपः समचरन् सम्यक् चरन्ति स्म। भवद्भिरुत्तमैः प्रपन्ना आश्रिताऽपि सा श्रीः यस्य पादलावण्यमलमनुरक्ता सती सेवते॥ ३३॥

**तस्य** इति। तस्य भगवतः श्रीमद्भिः पदैः केतुर्ध्वजः, अब्जादयः केतोश्चिह्नानि येषां तैः। यद्वा अब्जादीनामाश्रयैः सम्यगलङ्कृतमङ्गं यस्याः साऽहं ततो भगवतो विभूतिं सम्पदमुपलभ्य प्राप्य त्रीन् लोकानतिक्राम्यारोचे शोभितवत्यस्मि। पश्चात्तस्याः विभूतेरन्ते नाशकाले प्राप्ते सति उत्स्मयन्तीं[7] गर्वं कुर्वाणां मां स व्यसृजत् त्यक्तवान्॥ ३४॥

**य** इति। किञ्च। यो वै आसुरो वंशो येषां तेषां राज्ञामक्षौहिणीशतरूपं ममातिभरं भारमपनीतवान्। त्वाञ्चोनपदत्वात् दुःस्थं सन्तं पौरुषेण पुरुषकारेणात्मनि स्वस्मिन् सम्पूर्णपदं सुस्थं सम्पादयन्। "लक्षणहेत्वोः क्रियायाः" (अष्टा. 3-2-126) इति हेतौ शतृप्रत्ययः। सम्पादयितुमित्यर्थः। अबिभ्रत् धृतवानित्यर्थः॥ ३५॥

**का** इति। तस्य विरहं का वा सहेत? प्रेमावलोकश्च रुचिरस्मितञ्च वल्गुजल्पश्च तैः मधुमानिनीनां सत्यभामादीनां समानं गर्वसहितं स्थैर्यं स्तब्धत्वञ्च योऽहरत्। यस्याऽङ्घ्रिणा रजस्युत्थितेन विटङ्किताया: अलङ्कृतायाः [10]सस्यादिमिषेण रोमोत्[11]सवो भवति॥ ३६॥

**तयोः** इति। कथयतोस्सतोः प्राचीं पूर्ववाहिनीं सरस्वतीं कुरुक्षेत्रे॥ ३७॥

इति श्रीमद्भागवते प्रथमस्कन्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां षोडशोऽध्यायः॥ १६॥

---

1 V °भा° 2 B,H,V कर्तव्यार्थानु° 3 H,V स्वभावः 4 H,V ज्ञानकर्मेन्द्रियाणा 5 B °ण्यत्वशर° 6 B आश्रिता अपि। 7 H,V add उत्स्मयमानां 8 H,V स्व° 9 H,V °स्वङ्कि° 10 B शष्पादि° 11 V °द्गमो

**वीर॰** एवमुक्ता धरण्याह — **भवान्** इत्यादि दशभिः। तन्ममाधिमूलं सर्वं[1] नूनं भवान् वेद जानास्येव। कुतो यद् यस्मात् धर्मान् पृच्छसि अजानतो धर्मप्रश्नः[2] नोपपन्न इति भावः। अथाऽपि किं तदिति चेद्येन[3] त्वं लोकानां सुखावहैश्चतुर्भिः पादैर्वर्तसे अवर्तथाः। अधुना येन कारणेन विनैकपादेन वर्तसे तदेव ममापि आधिमूलमित्यर्थः॥ २६॥

कारणविशेषजिज्ञासायां तदुपपादयति — **सत्यम्** इत्यादि पञ्चभिः। सत्यादन्योऽन्ये च बहवो महत्त्वमिच्छद्भिर्जनैः प्रार्थनीया गुणाः नित्याः कदाचिदपि यस्मिन्न वियन्ति न व्यंयन्ति तेन गुणानां पात्रेण मुख्याश्रयेण श्रीनिवासेन श्रीकृष्णेन साम्प्रतमधुना रहितमतएव पाप्मना पापेन कलिना ईक्षितं लोकं प्रत्यहं शोचामीत्यन्वयः। तत्र सत्यं

भूतहितत्वं वाचिकं वा। शौचं हेयप्रतिभटत्वम्। दया परदुःखासहिष्णुत्वम्। क्षान्तिः परापराधसहिष्णुता। त्यागः अनादरः पूर्णकामत्वप्रयुक्तः। तथा च श्रूयते "सर्वमिदमभ्याप्तो वाक्यानादरः" (छान्दो. उ. 3-14-2) इति आत्मपर्यन्तवदान्यत्वम् वा त्यागः। सन्तोषः कर्हिचिदपि क्लेशराहित्यम्। आर्जवं मनोवाक्कायानामैक्यरूपम्। शमो मनोनिग्रहः। दमो बाह्येन्द्रियनिग्रहः। तप आलोचनम्, जगद्व्यापारोपयुक्तम्। साम्यमरिमित्रादिराहित्यम्। तितिक्षा द्वन्द्वाप्रतिहतत्वम्। उपरतिर्वृथाव्यापारोपरतिः, श्रुतं सर्वशास्त्रार्थयाथात्म्यवित्त्वम्॥ २७॥

ज्ञानमाश्रितानिष्टपरिहारेष्टप्रापणोपयुक्तम्। विरक्तिर्विषयेषु निस्पृहत्वम्, विषयानाकृष्टचित्तत्वं वा। ऐश्वर्यं स्वातिरिक्तसर्वनियन्तृत्वम्। शौर्यं युद्धेष्ववैमुख्यम्। तेजः अप्रधृष्यता। बलं प्रसिद्धम्। स्मृतिः सत्स्वपि विपुलेषु अपराधेषु उपकारस्मरणम्। स्वातन्त्र्यमन्यानपेक्षत्वम्। कौशलं नैपुण्यम्। कान्तिः "न तत्र सूर्यो भाति" (कठ. उ. 5-15) इति श्रुत्युक्तविधा दीप्तिः। धैर्यं वीर्यं, तच्च युद्धे स्वगृहे इव प्रवेशसामर्थ्यम्। मार्दवमक्रूरत्वम्। "स्वातन्त्र्यं सौभगं कान्तिः" इति पाठे सौभगं स्पृहणीयम्॥ २८॥

प्रागल्भ्यम् सभासु धाष्टर्यम्। प्रश्रयो महत्सु विनयः। शीलं सद्वृत्तिः। सहः प्राणस्य स्वाभाविकसामर्थ्यम्। ओजः अन्नादिजनितम्, बलं धारणासामर्थ्यम्। भगो ज्ञानाद्युत्कर्षः। गाम्भीर्यं दुःखग्राह्याभिप्रायत्वम्। स्थैर्यं क्रोधनिमित्तैरविकारः। आस्तिक्यं शास्त्रार्थविश्वासः। कीर्तिर्यशः। मानः पूजार्हता। अनहङ्कृतिर्देहात्माभिमानराहित्यम्॥ २९, ३०॥

श्रीयते ब्रह्मादिभिरिति श्रीः लक्ष्मीः, तस्याः निवासः श्रीनिवासः तेन इत्यभिप्रेतम्॥ ३१॥

आत्मानं मां भवन्तञ्च अनुशोचामि इत्यर्थः॥ ३२॥

तदेव विशदयति ब्रह्मादय इति। चतुर्मुखप्रभृतयो यस्याः अपाङ्गमोक्षः ईषत् तिर्यक् प्रसारः तद्विषयत्वमात्मानं कामयमानाः बहुतिथं बहुकालं तपः समचरन् चक्रुः सा श्रीरपि कमलवनं स्वनिवासं विहाय भगवन्तमेव प्रपन्ना च सती यस्य पादयोः सौभगं सौन्दर्यमेवालं नितरां भजते सेवते॥ ३३॥

तस्य भगवतः अब्जादीनां केतूनां चिह्नानां केतैराश्रयभूतैः पदैः पादविन्यासैरलङ्कृतमङ्गं यस्यास्सा, अहं ततः अत एव विभूतिं लक्ष्मीमप्युपलभ्य त्वयाप्येवं भाग्यं न लब्धमित्याक्षिप्य विभूतिं सर्वसमृद्धिं प्राप्येति वा। त्रीनपि लोकानत्यरोचे त्रिलोकीमतिक्रम्य ततोऽप्यधिकं दीप्तिमत्यस्मि। एवमुत्स्मयन्तीं गर्वितां मां स भगवान् तदन्ते अवतारप्रयोजनान्ते व्यसृजत् तत्याज॥ ३४॥

यो वा इति ममातीव भाररूपमासुरवंशेऽसुरसम्पद्युक्तवंशे जातानां राज्ञामक्षौहिणीनां शतमपानुदत् अपनीतवान्। तथा यश्चाऽऽत्मतन्त्रः स्वतन्त्रः ऊनपदमूनं पदं पादद्वयं यस्य तमतएव दुःस्थं दुःखितं त्वामात्मनि स्वस्मिन्यत्पौरुषं सामर्थ्यं तेन सम्पादयन् पादचतुष्टयसम्पन्नं कर्तुमिच्छुर्यदुषु रमणीयमङ्गं शरीरमबिभ्रद्धृतवान्॥ ३५॥

यश्च प्रेमपूर्वकावलोकनेन रुचिरेण सुन्दरेण स्मितेन सुन्दरैर्भाषणैश्च मधुमानिनीनां यादवस्त्रीणां स्थैर्यमितरावश्यत्वं सम्यक् हृतवान् यस्य चाङ्घ्रिभ्यां विटङ्किताया अलङ्कृताया मम रोमोत्सवो रोमोद्गमो बभूव। तस्य पुरुषोत्तमस्य श्रीकृष्णस्य विरहं का वा मादृशी सहेत? न कापीत्यर्थः[16] ॥ ३६ ॥

इत्थं तयोः पृथिवीधर्मयोः कथयतोर्मिथः सम्भाषमाणयोस्सतोः तदा परीक्षिन्नाम राजर्षिः प्राचीं सरस्वतीं प्रभासतीर्थं प्राप्तो गतः ॥ ३७ ॥

इति श्रीमद्भागवते प्रथमस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां षोडशोऽध्यायः ॥ १६ ॥

---

1 W adds नु 2 W अनुपपन्नः 3 B.W add कारणेन 4 W च्यवन्ति 5 W सापराध° 6 W °ऽवाक्या° 7 W ऐकरूप्यं 8 W स्वव्यतिरिक्त° 9 A.B धृष्टता 10 A.B अहं प्रजापतीनाञ्च सर्वेषामीश्वरः प्रभुः,, मम विष्णुरचिन्त्यात्मेति ब्रह्मवचनं उपकारविषयस्मरणम् 11. W adds सौभाग्यं 12 A.B इन्द्रियादिजनितबन्धनधारणसामर्थ्यं 13 W दुरवगाहाभि° 14 W °त्यधिक्षिप्य; B °त्यभिक्षिप्य 15 W आसुर° 16 W काऽपि सहेतेत्यर्थः

**विज०** धर्मेण पृष्टा भूमिः तं प्रतिब्रूत इत्याह — **भवान्** इति। हे धर्म! यदाधिमूलं त्वं मामनुपृच्छसि तत्सर्वं भवान् वेद हि तथाऽपि वक्ष्ये इति शेषः। येन श्रीकृष्णेन त्वं लोकसुखावहैः तपश्शौचदयासत्याख्यैश्चतुर्भिः पादैः कलावपि वर्तसे अवर्तथा इत्यर्थः ॥ २६ ॥

यत्र यस्मिन् श्रीकृष्णे इमे उक्ताः सत्यादयोऽनुक्ता अन्ये च महागुणाः प्रत्येकमनन्तास्सन्ति। कीदृशाः? महत्त्वमिच्छद्भिः पुरुषैः प्रतिबिम्बे तादृशगुणलाभाय प्रार्थ्या उपास्याः ते कर्हिचिद्यतो न यान्ति च अभिन्नत्वादित्येतमर्थं स्मेत्यनेन श्रुतिसिद्धं दर्शयति। हे देवोत्तम! तेन गुणपात्रेण श्रीनिवासेन साम्प्रतं रहितं पाप्मना कलिनेक्षितं दृष्टमात्मानं माञ्च भवन्तञ्च शोचामीत्यन्वयः। सत्यं निर्दुःखानन्दानुभवो, भूतहितयथार्थभाषणं वा। शौचं नित्यशुद्धिः। प्रकृतिसम्बन्धाभावान्नित्यं बाह्याभ्यन्तरशुद्धिता। हरेरेवाऽन्यत्र मृज्जलाभ्यां रागराहित्येन। दया सज्जनेष्वार्तप्राणिषु चित्तद्रवत्वं वा उभयत्र समम्। दानं भक्ताभक्तमध्यमेषु सुखदुःखमिश्रफलवितरणम्। अन्यत्र धर्मार्थं पात्रे वित्तविश्राणनम्। त्यागोऽस्वकीये स्वकीयताबुद्ध्यपरपर्यायमिथ्याभिमानोत्सन्नता। अन्यत्र सन्न्यासः। सन्तोषः स्वरूपानन्दपानेनाऽन्यत्राऽलम्बुद्धिः, अन्यत्र यदृच्छया प्राप्तभोगेष्वलम्प्रत्ययः। आर्जवं व्यवहारेष्ववक्रता, मनसि वचसि चैकविधता उभयत्र समानम्। शमः स्वतः प्रियरूपत्वादिदं प्रियमिदमप्रियमिति बुद्धिविधुरता; शंरूपतया मीयत इति वा। अन्यत्र बुद्धेर्भगवन्निष्ठता। दम इन्द्रियाणां स्ववशत्वमुभयत्र समानम्। स्वतः परत इति विशेषः शत्रुनिग्रहो वा। तप आलोचनं, मुक्तिज्ञानम्। अन्यत्र कृच्छ्रचान्द्रायणाद्युपवासनियमः। साम्यं सर्वावतारान्तर्यामिरूपेषु निर्दोषगुणपूर्णत्वेन समता, यथास्थितवस्तुदर्शनं वा उभयत्र समानम्, न तु सर्वत्र शत्रुमित्रभावराहित्यम्। तितिक्षा महापराधसहनं, यथा भृगोः पादाहत्यपराधम्। अन्यत्र द्वन्द्वसहिष्णुता। उपरतिः स्वरूपरतिः। उपः मुख्यप्राणः तस्मिन् रतिर्वा। ऊ रुद्रः।

अन्यत्र काम्यकर्मनिवृत्तिः कृतकृत्यतया व्यर्थसर्वव्यवहारोपरमो वा। श्रुतं सर्वत्र श्रवणशक्तिः, श्रोतेत्यादेः श्रुतिप्रसिद्धता वा। अन्यत्र शास्त्रार्थतात्पर्यावधारणं श्रुत्यर्थविचारो वा॥ २७॥

ज्ञानं सर्वज्ञता, अन्यत्र परोक्षापरोक्षभेदेन परमार्थविषयम्। विरक्तिः स्वेतरविषये असारताबुद्धिः। अन्यत्र शब्दादिविषयरागराहित्यम्। ऐश्वर्यं समस्तजगदीशितृत्वसामर्थ्यम्। अन्यत्राणिमादिकम्। शौर्यं सङ्ग्रामेष्वपलायितत्वमुभयत्र समानम्। तेजः परैरप्रधृष्यत्वम्। अन्यत्र ब्रह्मवर्चसम्। धृतिः सर्वधारणम्। "एष सेतुर्विधृतिः" (बृह. उ. 4-4-22) इति श्रुतेः। विकारहेतावविकारित्वं वा। अन्यत्र जिह्वोपस्थजयः। स्मृतिरतीतानागतानन्तब्रह्माण्डादिस्मरणम्। अन्यत्रावगत-पदार्थानुसन्धानम्। स्वातन्त्र्यमपराधीनत्वम्। अन्यत्र स्वतन्त्रो विष्णुः तदधीनत्वं, कुमारीकङ्कणवदेकाकित्वं वा। कौशलं सर्वकर्मणि वैचित्र्यकरणबुद्धिः। अन्यत्र शिल्पविद्यावैशारद्यम्। कान्तिर्देहगता दीप्तिः। अन्यत्र भगवद्भक्तिकामनम्। सौभगं शुभैकभागित्वम्। अन्यत्र लोकमनोहरत्वम्। मार्दवं भक्तेषु मृदुत्वम्। उभयत्र समानम्। क्षमा क्रोधासमुत्थितिः उभयत्र समम्॥ २८॥

प्रागल्भ्यमुभयत्र समम्। प्रश्रयो विनयः। समम्। शीलं लोकमनोहरस्वभावं समम्। सहः सहनशक्तिः। प्राणस्य स्वाभाविकसामर्थ्यं वा समम्। ओजः पराभिभवशक्तिः, अन्यत्र मानसबलम्। बलं स्वेच्छाकरणशक्तिः अन्यत्र शरीरादिधारणसामर्थ्यं वा। भगः षड्गुणवत्त्वं, भाग्यं वा, अन्यत्रोत्पत्त्यादिज्ञानम्। गाम्भीर्यं परैरनवगाह्यत्वम्। अन्यत्र स्तिमितत्वम्। स्थैर्यं नित्याकम्पनम्। अन्यत्र धर्मादचलनम्। आस्तिक्यं वेदाद्युक्तमस्तीति बुद्धिः। अन्यत्र गुरुवाक्येषु श्रद्धानता। कीर्तिर्दिक्षु ख्यातिः, अन्यत्र हरिनामकीर्तनम्। मानः परेषां माननम्। अन्यत्राऽभिमानः। अनहङ्कृतिः स्वरूपभेदादहमिति बुद्धिराहित्यम्। अन्यत्र नाऽहं कर्ता, हरिरेव मयि स्थित्वा सर्वं करोतीति बुद्धिः॥ २९, ३०, ३१॥

न केवलं भवन्तं शोचामि, किन्तु देवादीनपि॥ ३२॥

श्रीकृष्णविरह एव ममाधिमूलमित्याख्याति — ब्रह्मादय इति। यस्याः श्रियोऽपाङ्गः कटाक्षः तस्य मोक्ष उन्मीलनविशेषः। तं कामयन्त इति यदपाङ्गमोक्षकामाः स्वेषु श्रियः कटाक्षनिपातमाकाङ्क्षमाणा इत्यर्थः। शास्त्रोक्तप्रकारेण भगवत्प्रपन्नाः ब्रह्मादयो बहुतिथं बहुकालं भगवतीमभजन्निति शेषेणान्वयः। सा श्रीरनुरक्ता सद्भक्तिमती स्वनिवासमरविन्दवनं पद्मवनं विहाय यस्य श्रीकृष्णस्य पादयोः सौभगं सौभाग्यम्, अलं भजत इत्यन्वयः॥ ३३॥

उपलब्धा तपोविभूतिर्यया सा तथा। तपसा विविधफलं प्राप्ता सती तस्य भगवतोऽब्जश्च, कुलिशश्चाङ्कुशश्च केतुर्ध्वजश्च अब्जकुलिशाङ्कुशकेतवो रेखारूपा एते केताश्चिह्नानि येषां तानि तैः श्रीमद्भिः पदैः सम्यगलङ्कृतसर्वाङ्गाहं त्रीन् लोकान् अतिक्रम्यारोचं शोभितवती। सः श्रीकान्तः तदन्ते तपोविभूतेरवसाने उत्स्मयन्तीं क्व नु मत्सदृशी स्त्री इत्यहङ्कुर्वाणां मां व्यसृजदित्येकान्वयः। तदन्त इति स्वितरापेक्षयोक्तं न तु भूमेः पुण्यावसानमस्ति भगवत्पत्नीत्वात्॥ ३४॥

**यो वै** असुराणां सम्बन्धी वंशः आसुरवंशः, **तस्मिन्** जातानां राज्ञामक्षौहिणीशतं ममातिभारमपानुददपाहरत्। शतमितिशब्दः सहस्रादिवाची। त्वयि चतुष्पदत्वेन पूर्णपदं सम्पादयन् आत्मतन्वो यदुषु रम्यं रमणीयमङ्गमबिभ्रत्॥ ३५॥

यश्च प्रेम्णाऽवलोकश्च, रुचिरं स्मितञ्च वल्गुर्मधुरो जल्पश्च ते तथोक्तास्तैर्मधुमानिनीनां समानमभिमानेन सह वर्तमानं स्थैर्यमहरत्। यस्याङ्घ्रिभ्यां विटङ्कितायाश्चिह्निताया अलङ्कृताया वा मम रोमोत्सवो रोमाञ्चोऽभूदिति शेषः। तस्य पुरुषोत्तमस्य विरहं का वा स्त्री सहेत? न कापीत्यन्वयः॥ ३६॥

तदवसरे तत्र परीक्षितो गमनमाह — **तयोरिति**। परीक्षिन्नाम राजश्रेष्ठः कुरुक्षेत्रे प्राचीं दिशमुद्दिश्य स्यन्दमानां नाम्ना सरस्वतीं नदीं प्राप्त इत्यन्वयः॥ ३७॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां
टीकायां प्रथमस्कन्धे षोडशोऽध्यायः॥ १६॥

---

1 K,M पापात्मना 2 K,M °भेदादावह°

**रा० कृ०** हे धर्म! यत् ममाऽऽधिकारणं मामनुपृच्छसि, तत्सर्वं भवान् वेद हि जानाति हि। अथ आधिकारणं विशदीकरोति — येन हेतुभूतेन भगवता लोकसुखावहैश्चतुर्भिः पादैः वर्तसे अवर्तथाः। किञ्च हे भगवन्! धर्म! सत्यं शौचं दया क्षान्तिः त्यागस्सन्तोष आर्जवं, शमो दमस्तपस्साम्यं तितिक्षा उपरतिः श्रुतं ज्ञानं विरक्तिरैश्वर्यं शौर्यं तेजः बलं स्मृतिः स्वातन्त्र्यं कौशलं कान्तिः धैर्यं मार्दवं प्रागल्भ्यं प्रश्रयश्शीलं सहः ओजः बलं भगः गाम्भीर्यं स्थैर्यमास्तिक्यं कीर्तिः मानः अनहङ्कृतिः — एते पूर्वोक्ता गुणाः महत्त्वमिच्छद्भिः प्रार्थ्याः। अन्ये च महागुणाः यत्र भगवति नित्याः अनपायिनस्सन्तः कर्हिचित् कदाऽपि न वियन्ति स्म न क्षयं यान्ति स्म। तेन तादृशेन गुणपात्रेण श्रीनिवासेन साम्प्रतं अद्य रहितं शून्यं तथा पाप्मना पापहेतुना कलिना ईक्षितं व्याप्तं लोकं प्रति अहं शोचामि॥ २६, २७, २८, २९, ३०, ३१॥

आत्मानं वृषलैर्भोक्ष्यमाणत्वात् आत्मानं प्रति एकपादत्वात् अमरोत्तमं देवश्रेष्ठं भवन्तं प्रति हृतयज्ञादिभागत्वात् देवान् प्रति दुष्टपीडितत्वात् पितॄन् ऋषीन् साधून् प्रति तथा नष्टधर्मत्वात् सर्वान् वर्णान् ब्राह्मणादिवर्णान् आश्रमान् ब्रह्मचर्याद्याश्रमांश्च प्रति शोचामि॥ ३२॥

भगवत्प्रपन्नाः भगवति शरणं गता अपि ब्रह्मादयो देवाः यदपाङ्गमोक्षकामाः यस्याः श्रियः अपाङ्गमोक्षकामास्सन्तः बहुतिथं बहुकालं तपस्समचरन्। सा श्रीरपि स्ववासं अरविन्दवनं विहाय यत्पादसौभगं यस्य भगवतः पादसौन्दर्यमलं भृशं अनुरक्ता सती भजते, सेवते, तस्य भगवतः अब्जकुलिशाङ्कुशकेतुकेतैः पद्मवज्राङ्कुशध्वजचिह्नैः श्रीमत्पदैः समलङ्कृताङ्गी अहं ततो भगवतो विभूतिं सम्पदमुपलभ्य प्राप्य त्रीन् लोकान्

अत्यरोचे अतिशयेन शोभितवत्यस्मि। अनन्तरं तदन्ते तस्या विभूतेरन्ते उत्स्मयन्तीं गर्वं प्राप्नुवन्तीं मां स भगवान् व्यसृजत् त्यक्तवान्।

भगवत्प्रपन्ना अपि सकामाश्चेत् प्राप्यवस्तुसद्भावात् दरिद्रा एव। विषयतृष्णाविरहितास्तु नित्यतृप्तत्वात् प्राप्यवस्त्वभावेन श्रीमन्त एवेति भावः।

एवं भगवत्पदसेवानुरक्तानां विभूतिः, तत्सेवागर्वितानान्तु च्युतिरिति भावः। कृष्यादिकर्मणां यज्ञार्थत्वाभावे स्वार्थदोषदूषितत्वात् पतनफलकगर्वहेतुत्वमिति परमार्थः॥ ३३, ३४॥

यो वै श्रीकृष्णः ममातिभरं अतिभारावहं आसुरवंशराज्ञां आसुरसम्पद्युक्ते वंशे सञ्जातानां राज्ञां अक्षौहिणीशतमपानुदत् अपनीतवान्। अपि च आत्मतन्त्रः स्वतन्त्रो यो भगवान् ऊनपदं लुप्तपादं द्वापरयुगे पादद्वयोपेतमित्यर्थः। दुःस्थं दुःखितं त्वां आत्मनि स्थितेनेति शेषः। पौरुषेण सामर्थ्येन सम्पादयन् पादचतुष्टयसहितं चिकीर्षुः यदुषु रम्यमङ्गं अबिभ्रत् यदुवंशे सञ्जात इत्यर्थः। किञ्च यः प्रेमावलोकरुचिरस्मितवल्गुजल्पैः मधुमानिनीनां मधुकुलस्त्रीणां सत्यभामादीनां समानं गर्वसहितं स्थैर्यमहरत् हृतवान्। यदङ्घ्रिविटङ्कितायाः यस्य पादरजसाऽलङ्कृतायाः मम रोमोत्सवः सस्यादिरूपेण रोमोद्गमः भवति तस्य पुरुषोत्तमस्य विरहं का वा सहेत, न कापीति भावः॥ ३५, ३६॥

एवमुक्तप्रकारेण तयोः पृथिवीधर्मयोः कथयतोर्मिथः सम्भाषमाणयोः सतोः तदा तस्मिन्नेव काले परीक्षिन्नाम राजर्षिः प्राचीं पूर्ववाहिनीं सरस्वतीं प्राप्तः आगतः॥ ३७॥

इति श्रीमद्भागवते प्रथमस्कन्धे
श्रीराधाकृष्णप्रणीतायां सुधीसुधायां व्याख्यायां
षोडशोऽध्यायः॥ १६॥



# सप्तदशोऽध्यायः

## सूत उवाच

तत्र गोमिथुनं राजा हन्यमानमनाथवत्।
दण्डहस्तं च वृषलं ददृशे[1] नृपलाञ्छनम्॥ १ ॥

वृषं मृणालधवलं मेहन्तमिव बिभ्यतम्।
वेपमानं पदैकेन सीदन्तं शूद्रताडितम्[2]॥ २ ॥

गां च धर्मदुघां[3] दीनां भृशं शूद्रपदाहताम्।
विवत्सां सांश्रुवदनां[4] क्षामां[5] यवसमिच्छतीम्॥ ३ ॥

पप्रच्छ रथमारूढः कार्तस्वरपरिच्छदम्।
मेघगम्भीरया वाचा समारोपितकार्मुकः ॥ ४ ॥

## राजोवाच

कस्त्वं मच्छरणे लोके बलाद्धंस्यबलान् बली।
नरदेवोऽसि वेषेण[6] नटवत् कर्मणाऽद्विजः ॥ ५ ॥

यस्त्वं[7] कृष्णे गते दूरं सह गाण्डीवधन्वना ।
शोच्योऽस्यशोच्यान् रहसि प्रहरन् वधमर्हसि ॥ ६ ॥

त्वं वा मृणालधवलः[8] पादैर्न्यूनः पदा चरन्।
वृषरूपेण किं कश्चित् देवो नः परिखेदयन्॥ ७ ॥

न जातु कौरवेन्द्राणां[9] दोर्दण्डपरिरम्भिते ।
भूतलेऽनुपतन्त्यस्मिन्[10] विना ते[11] प्राणिनां शुचः ॥ ८ ॥

---

1. H.V ददर्श  K.M पीडितम् 3 H घ° 4 B.K.M W अ°. 1 आ° 5 K.M W कृशां 6 B वेशेन 7 A कस्त्वं; K M स· त्वं 8 W °ल! 9 A.G पौ° 10 K.M निपत° W न पत° 11 K.M त्वां

## श्रीधरस्वामिविरचिता भावार्थदीपिका

ततस्सप्तदशे राज्ञः[1] कलेर्निग्रह उच्यते।
तस्यैव वीर्यभाजोऽपि वैराग्यं वक्तुमद्भुतम्[2]॥

**तत्रेति ।** हन्यमानं ताड्यमानम् ॥ १ ॥

***वृषमिति ।** मृणालं पद्मकन्दः तद्वद्धवलम् । भयात् मेहन्तं मूत्रयन्तम् । इवेत्यनेन पादावशेषो धर्मः भयात् मूत्रयन्निव प्रतिक्षणं क्षीयमाणांशः तस्याप्यनिर्वाहात् कम्पमान [3]इवेति दर्शितम् ॥ २ ॥

**गामिति ।** [4]धर्मदुघां हविर्दोग्ध्रीम् । क्षामां कृशाम् । यवसं तृणम् । [5]अत्र सस्यादिप्रसवक्षयात् विवत्सेव [6]यज्ञाद्यभावात् कृशा । अत एव यज्ञभागं इच्छन्ती[7] [8]पृथिवीति सूचितम् ॥ ३ ॥

**पप्रच्छेति ।** कार्तस्वरं सुवर्णं तन्मयः परिच्छदः परिकरो यस्य स्वर्णनिबद्धमित्यर्थः । सज्जीकृतकार्मुकः ॥ ४ ॥

**क** इति । हंसि घातयसि । राजाऽहमिति चेत् तत्राह — नट इव वेषमात्रेण नरदेवोऽसि, कर्मणा तु अद्विजः शूद्रः ॥ ५ ॥

**य** इति । अशोच्यान् निरपराधान् रहसि यस्त्वं प्रहरन् प्रहरसि स शोच्यः सापराधोऽसि अतो वधमर्हसि ॥ ६ ॥

वृषं प्रत्याह — **त्वमिति ।** त्वं वा कः ? स्वयमेव सम्भावयति — किं कश्चिद्देवो वृषरूपेण नः अस्मान् परिखेदयन् वर्तसे? ॥ ७ ॥

**नेति ।** दोर्दण्डैः परिरम्भिते परिरम्भितवत् सुरक्षिते ते [9]शुचः अश्रूणि विना अन्येषां अश्रूणि नानुपतन्तीति खेदहेतुत्वं दर्शितम् ॥ ८ ॥

---

1 B °ज्ञा 2 H.V °क्ष्यतेऽद्भु° * H.V omit this commentary 3 B omits इव 4 H घ° 5 H.V °त्रापि 6 B यज्ञाभा°, H.V यज्ञभागाभा° 7. B.H.V °ती 8 H.V add सा 9 H.V add तव

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

**तत्रेति ।** तत्र प्राच्यां सरस्वत्यां पूर्वोक्तं अनाथवत् हन्यमानं गोमिथुनं नृपस्येव लाञ्छनानि यस्य, दण्डो हस्ते यस्य तं वृषलं च राजा परीक्षित् ददर्श ॥ १ ॥

तत्र गोमिथुने पुमांसं विशिनष्टि — **वृषमिति ।** वृषं मृणालवत् धवलं, मेहन्तमिव मूत्रं मुञ्चन्तमिव बिभ्यतं उद्विजन्तं एकेन पादेन कम्पमानं शूद्रेण ताडितं अतः सीदन्तं क्लिश्यन्तम् ॥ २ ॥

स्त्रियं विशिनष्टि — **गामिति ।** धर्मदुघां घृतपयोरूप क्षरणद्रव्यदोग्ध्रीं शूद्रस्य पादेन ताडितां अत एव भृशं दीनां वत्सरहितां अश्रुवदनां अश्रुसहितं वदनं यस्यास्तां, क्षामां कृशां यवसं तृणं इच्छन्तीं कामयमानां गां च, चकारात् वृषलञ्च पप्रच्छेत्यन्वयः ॥ ३ ॥

कार्तस्वराः स्वर्णमयाः परिच्छदाः परिकराः यस्मिंस्तं रथमारूढः । समारोपितं सज्जीकृतं कार्मुकं धनुः येन सः परीक्षित् मेघगर्जितवत् गभीरया गिरा पप्रच्छ ॥ ४ ॥

प्रश्नमेवाह — **कस्त्वं** इत्यादिभिरेकादशभिः। तावत् वृषलं प्रति प्रश्नमाह द्वाभ्याम्। कस्त्वं त्वं कः इति प्रश्नः। किमर्थं पृच्छसीत्यत्राह अहमेव शरणं रक्षिता यस्य तस्मिन् अस्मिन् लोके बली सन् त्वं अबलान् दुर्बलान् बलात् हंसि अतः पृच्छामीति भावः। नृपोऽहमित्यत्राह — नटवत् वेषेण नरदेवोऽसि कर्मणा तु अद्विजः शूद्रः ॥ ५ ॥

गाण्डीवधन्वना अर्जुनेन सह श्रीकृष्णे दूरं स्वलोकं प्रति गते सति त्वमेव अशोच्यान् शोकानर्हान् रहसि प्रहरन् वधमर्हसि अतः शोच्योऽसि स्वजनेनेति शेषः ॥ ६ ॥

अथ वृषभं पृच्छति — **त्वमिति**। हे मृणालधवल! पादैः त्रिभिः न्यूनः चरन् त्वं वा कः ? नः अस्मान् वृषरूपेण परिखेदयन् किं वा कश्चित् देवः ? ॥ ७ ॥

कौरवेन्द्राणां दोर्दण्डैः परिरम्भिते आश्लिष्टे पालिते इति यावत्। अस्मिन् भूतले विना ते त्वां विना, केषाञ्चिदपि प्राणिनां शुचः शोकाश्रुबिन्दवः कदाचिदपि न पतन्ति ॥ ८ ॥

1. W वामपादेन 2 W कृषां 3 W कर्शितां 4 W त्वं 5 W स्वर्लोकं 6 A.B °ण्डप°

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

अत्रापि भगवद्भक्तप्रधानस्य परीक्षितः कलिबन्धनादिमाहात्म्यवर्णनेन हरेः महिमैव वर्ण्यत इति तन्महिमोच्यते। तत्र नातिदूरं इति कथितमाश्चर्यमाह — **तत्रेति**। तत्र कुरुक्षेत्रे प्राच्याः सरस्वत्याः तीरे अनाथवत् नाथः स्वामी तेन रहिता यथा हन्यन्ते तथा ताड्यमानं गोमिथुनम् ॥ १ ॥

मिथुनं विविच्याह — **वृषमिति**। मृणालधवलं कमलनालसूत्रवद्धवलं शुक्लवर्णं बिभ्यतं भीतमिव मेहन्तं शकृन्मुञ्चन्तं वेपमानं एकेन पदा स्थितत्वात् सीदन्तं भग्नाङ्गवत् तिष्ठन्तं शूद्रेण कलिना पीडितं वृषं अद्राक्षीत् ॥ २ ॥

यवसं तृणं आकाङ्क्षमाणां अत एव कृशां अश्रुवदनां अश्रुमुखीं विवत्सां वत्सरहितां इव स्थितां शूद्रस्य पदा ताडितां भृशं अत्यर्थं दीनां कृपणां धर्मदुघां यज्ञयोग्यपयोदोग्ध्रीं गां चैवंविधां अपश्यदित्यन्वयः ॥ ३ ॥

दृष्ट्वा तां राजा पप्रच्छेत्यन्वयः। कथम्भूतः ? कार्तस्वरपरिच्छदं सुवर्णपरिकरपरिष्कृतं रथं आरूढः समारोपितकार्मुकः सज्जीकृतधन्वा ॥ ४ ॥

तत्र प्रथमं शूद्रं प्रति प्रश्नप्रकारमाह — **कस्त्वमिति**। यस्त्वं नटवत् वेषेण नरदेवोऽसि, न तु राजा; कर्मणा अद्विजः शूद्रोऽसि। अद्विज इत्युक्त्या शूद्रत्वं कथं ज्ञातं इति चेत् कर्मणेत्यनेन क्षत्रियवैश्ययोः परिहृतत्वात् मच्छरणे अहमेव रक्षको यस्य स तथा तस्मिन् "शरणं गृहरक्षित्रोः" (अम. को. 3-209) इत्यभिधानम्। बली त्वं अबलौ दुर्बलौ गोवृषौ बलात् प्रसह्य हंसि पीडयसि त्वं कः ? ॥ ५ ॥

गाण्डीवधन्वना सह कृष्णे दूरङ्गते सति यः शोच्यः रहसि अशोच्यान् प्रहरन् असि, सः त्वं **वधमर्हंसीत्यन्वयः** ॥ ६ ॥

इदानीं वृषभं पृच्छति — **त्वं वेति**। हे वृषभ! पादैः न्यूनः यथा चरसि तथा त्रिभिः पादैः न्यूनः एकेन चरन् मृणालवत् धवलः त्वं को वा वृषभरूपेण अस्मान् परिखेदयन् **अस्मद्बुद्धेः** परिघातं कुर्वन् गतस्त्वं कश्चिद्देवः किम्? ॥ ७ ॥

कुतः परिखेदकत्वमिति तत्राह — **न जात्विति**। **कौरवेन्द्राणां दोर्दण्डैः** परिरम्भिते रक्षिते अस्मिन् भूतले प्राणिनां शुचः शोकनिमित्ताश्रुबिन्दवः जातु क्वचिदपि न निपतन्ति। **त्वां** विना त्वन्तु बाष्पकलाक्षः शोचसि यस्मात्तस्मात् परिखेदयसीति भावः ॥ ८ ॥

---

1 K,M रहितो यथा हन्यते

## श्रीराधाकृष्णप्रणीता सुधीसुधा

तत्र सरस्वतीतीरे राजा परीक्षित् अनाथवत् हन्यमानं वृषलेनेति शेषः। गोमिथुनं दण्डहस्तं नृपलाञ्छनं वृषलं च ददर्श ॥ १ ॥

अनन्तरं कार्तस्वरपरिच्छदं सुवर्णमयपरिकरं रथं आरूढः समारोपितकार्मुकः सज्जीकृतचापः सः परीक्षित् मेघगम्भीरया पर्जन्यगर्जितवद्गम्भीरया वाचा शूद्रताडितं अत एव सीदन्तं क्लेशमनुभवन्तं एकेन पदा पादेन वेपमानं कम्पमानं बिभ्यतं त्रस्यन्तं अत एव मेहन्तमिव मूत्रं मुञ्चन्तमिव स्थितं मृणालधवलं बिसविशदं वृषं उद्दिश्येति शेषः। तथा भृशं शूद्रपदाहतां, अत एव दीनां दयनीयां विवत्सां वत्सरहितां साश्रुवदनां क्षामां कृशीभूतां यवसं यज्ञभागाख्यं घासं इच्छतीं इच्छन्तीं धर्मदुघां धर्मदोग्ध्रीं गां गोरूपधारिणीं पृथिवीं वृषलं चोद्दिश्य पप्रच्छ पृष्टवान् ॥ २, ३, ४ ॥

प्रथमं तावत् वृषलं पृच्छति — त्वं कः? मच्छरणेऽस्मिन् लोके बली सन् त्वं अबलान् बलात् हंसि। नटवत् नट इव वेषेण नरदेवः प्रभुः असि। गोताडनरूपेण कर्मणा तु अद्विजः द्विजेतरोऽसि ॥ ५ ॥

कृष्णे गाण्डीवधन्वना अर्जुनेन सह दूरं गते सति अशोच्यान् शोकानर्हान् धर्मिष्ठान् रहसि एकान्ते प्रहरन् ताडयन् शोच्यः शोचनीयोऽसि। अत एव वधमर्हसि ईदृशस्त्वं कः? ॥ ६ ॥

अनन्तरं परीक्षित् वृषभं पृच्छति — पादैः त्रिभिः चरणैः न्यूनः हीनः एकपदा चरन् मृणालधवलः त्वं वा कः? वृषरूपेण नः अस्मान् परिखेदयन् कश्चिद्देवोऽसि किम्? कौरवेन्द्राणां दोर्दण्डपरिरम्भिते भुजदण्डैः परिरक्षिते अस्मिन् भूतले ते तव शुचः अश्रूणि विना प्राणिनां अन्येषां प्राणिनां शुचः भूतले जातु कदापि नानुपतन्ति न पतन्ति ॥ ७, ८ ॥

मा सौरभेयानुशुचो[1][2] व्येतु ते वृषलाद्भयम्।
मा रोदीरम्ब! भद्रं ते खलानां मयि शास्तरि ॥ ९ ॥

यस्य राष्ट्रे प्रजाः सर्वास्त्रस्यन्ते[3] साध्व्यसाधुभिः।
तस्य मत्तस्य नश्यन्ति कीर्तिरायुर्भगो गतिः ॥ १० ॥

एष राज्ञां[4] परो धर्मः ह्यार्तानामार्तिनिग्रहः।
अत एनं वधिष्यामि[5] भूतद्रुहमसत्तमम् ॥ ११ ॥

कोऽवृश्चत् तव पादांस्त्रीन् सौरभेय चतुष्पदः[7]।
मा भूवंस्त्वादृशां राष्ट्रे राज्ञां कृष्णानुवर्तिनाम् ॥ १२ ॥

आख्याहि वृष! भद्रं वः साधूनामकृतागसाम्।
आत्मवैरूप्यकर्तारं पार्थानां कीर्तिदूषणम् ॥ १३ ॥

जनेऽनागस्यघं युञ्जन् सर्वतोऽस्य च मद्भयम्[10]।
साधूनां भद्रमेव स्यादसाधुदमने कृते ॥ १४ ॥

अनागस्स्विह भूतेषु य आगस्कृन्निरङ्कुशः।
आहर्ताऽस्मि भुजं साक्षादमर्त्यस्यापि साङ्गदम् ॥ १५ ॥

राज्ञां हि परमो धर्मः स्वधर्मस्थानुपालनम्।
शासतोऽन्यान् यथाशास्त्रमनापद्युत्पथानिह ॥ १६ ॥

---

1. B,I °त्र° 2. H °शोचो 3. K,M मातर्हिंस्यन्ते साध्वसा° 4 B,K,M,W राज्ञः 5. H,V आ° 6. H,V हनि° 7 A,G,I, °द! 8 B °शो 9. K,M गले° 10. K,M त° *The second half of the 14th verse is not seen in K,M,V & W

**श्रीध॰** एवमुक्ते पुनरपि शोचन्तं प्रत्याह — **मेति**। भोः सुरभेः पुत्र! मा[1] अनुशुचः[2] शोकं मा कुरु[3]। व्येतु अपयातु। गां प्रत्याह। अम्ब! मातः! शास्तरि मयि जीवति सति ते भद्रमेव अतो मा रोदीः ॥ ९ ॥

मद्धितार्थमेवैनं हनिष्यामि न तवोपकाराय इत्याह — **यस्येति** द्वाभ्याम्। हे साध्वि! सर्वाः याः काश्चिदपीत्यर्थः। असाधुभिः त्रस्यन्ते पीड्यन्ते इत्यर्थः। भगो भाग्यम्। गतिः परलोकः ॥ १०, ११ ॥

पुनरपि शोचन्तं वृषं[5] प्रत्याह — **क** इति। कोऽवृश्चत् चिच्छेद। त्वादृशाः त्वद्विधाः दुःखिताः ॥ १२ ॥

**आख्याहीति**। वः भद्रमस्तु। आत्मनः तव पादच्छेदेन वैरूप्यं कृतवन्तं कीर्तिं दूषयतीति तथा[6] तमाख्याहि[7] ॥ १३ ॥

ननु तदाख्याने कृते कथं भद्रं स्यादित्यतः आह — **जन इति**। यस्तावत् अनागसि जने [8] अघं **दुःखं युञ्जन्** कुर्वन् भवति अस्यैवम्भूतस्य मत् मत्तः सकाशात् सर्वत्रापि भयं भवति, ततः साधूनां भद्रं **भवेदेवेति** ॥ १४ ॥

एतस्य दण्डे अहमसमर्थः [10] इति मा शङ्कीरित्याह — **अनागस्स्विति**। आगस्कृत् अपराधकर्ता। **तस्य** अमर्त्यस्य देवस्यापि भुजं आहर्ता अस्मि आहरिष्यामि। साङ्गदमित्यनेन मूलतः उत्पाट्य **आहरिष्यामीति** दर्शितम् ॥ १५ ॥

**नन्वेकस्य** निग्रहेऽन्यस्यानुग्रहे [11] तव किं प्रयोजनम्? तत्राह — **राज्ञो हीति**। अन्यान् अधर्मिष्ठान् **शासतः** दण्डयतः ॥ १६ ॥

---

1 B अत्र मा शुचः 2 H V °शो° 3 H.V कुरुष्व 4 H.V मम हितार्थ° 5 B वृषभं 6. B तत्र 7. H.V add वद 8 A यस्मादना°
9 A adds यः 10 H V °य° 11 A °णा°

**वीर०** हे सौरभेय! माऽनुशुचः शोकं मा कार्षीः। ते तव वृषलात् अस्मात् शूद्रात् भयं व्येतु [2] नश्यतु। गामाश्वासयन्नाह — **मेति**। हे अम्ब! खलानां दुरात्मनां शास्तरि दण्डधरे मयि तिष्ठति सति त्वं मा रोदीः। रोदनं **मा कार्षीः**। ते तव भद्रं सुखमेव भविष्यति ॥ ९ ॥

हे साध्वि! यस्य [3] राष्ट्रे दुरात्मभिः सर्वाः प्रजाः त्रस्यन्ते बिभ्यति। असाधुभिरिति करणत्वविवक्षया तृतीया प्रयुक्ता, अतो न "भीत्रार्थानाम्" (अष्टा. 1-4-25) इत्यपादानत्वम्। तस्य मत्तस्य राज्ञः कीर्त्यादयो नश्यन्ति। भगो भाग्यं, गतिः पुण्यलोकगतिः ॥ १० ॥

आर्तानां दुःखितानां आर्तिपरिहार इति यदेष राज्ञां परः उत्कृष्टो धर्मः। यतः एवं अतः भूतद्रोहकारिणं अत एव असत्तममेनं वधिष्यामि ॥ ११ ॥

पुनः वृष [5] पृच्छन् आश्वासयति — **क इति** सार्धैश्चतुर्भिः। हे सौरभेय! **चतुष्पदः** तव त्रीन् पादान् कोऽवृश्चत् अभिनत् कृष्णानुवर्तिनां राज्ञां अस्माकं राष्ट्रे त्वादृशा दुःखिता मा भूवन् न सन्तु ॥ १२ ॥

हे वृष! वः भद्रमेव भविष्यति। किं त्वत्कृतागासां निरपराधिनां साधूनां युष्माकं आत्मवैरूप्यकारिणं पार्थानां कीर्तिं दूषयतीति तथा तं आख्याहि ॥ १३ ॥

यः अनागसि निरपराधे जने द्रोहं युञ्जन्नास्ते तस्य सर्वतः सर्वत्र मत् मत्तः भयं भविष्यति ॥ १४ ॥

योऽनागस्सु भूतेषु जनेषु निरङ्कुशः उत्पथः सन् आगस्कृत् द्रोहकृत् भवति, तस्य साक्षात् अमर्त्यस्य देवस्याप्यङ्गदयुक्तं भुजं आहर्ता अस्मि आहरिष्यमाणोऽस्मि ॥ १५ ॥

**स्वधर्मस्थानां** अनुपालनमेव राज्ञः परमः धर्मः। **कथम्भूतस्य ? इह लोके अनापदि उत्पथान् दुर्वृत्तान् अन्यान् असाधून्** शासतः दण्डयतः। अनापद्युत्पथान् इत्यनेन आपदि दुर्वृत्तिः न दोषावहेति सूचितम्॥ १६॥

1 W adds वृष! 2 W अत्येतु 3 W adds राज्ञः 4 A,B °द! 5 W °च्छि°

**विज॰** हे सौरभेय! सुरभिवंशोद्भव! मा शुचः शोकं मा कार्षीः। ते तव वृषलात् भयं व्येतु नश्यतु इत्यन्वयः। इदानीं सौरभेयीं[1] पृच्छति — **मा रोदीरिति**। हे सौरभेयि! त्वमपि काऽसीत्यध्याहारः कर्तव्यः। कस्त्वमित्युक्तत्वात्। हे अम्ब! मा रोदीः। अश्रुविमोक्षणं मा कार्षीः। ते तुभ्यं भद्रमस्तु। कुतः ? मयि दुष्टानां शास्तरि सति॥ ९॥

यस्य राष्ट्रे राज्ये असाधुभिः दुष्टैः प्रजाः साधु हिंस्यन्ते पीड्यन्ते मत्तस्य तस्य कीर्त्यादयो नश्यन्तीत्यन्वयः। गतिः परलोकः॥ १०॥

यः आर्तानां आर्तिनिग्रहः एष राज्ञः परो धर्मः हि यस्मात् आर्तिनिग्रहस्य स्वधर्मत्वात् असत्तमं भूतद्रुहमेनं वृषलं वधिष्यामीत्यन्वयः। अनेन "कस्य हेतोः निजग्राह" इति चोद्यं परिहृतम्॥ ११॥

हे सौरभेय! चतुष्पदः तव त्रीन् पादान् कोऽवृश्चत् छेदितवान् सः कः ? ज्ञातश्चेत् परिहरिष्यामीति शेषः। कुत इति तत्राऽऽह — मा **भूवन्निति**। त्वादृशाः त्वद्विधाः॥ १२॥

अकृतागासां अकृतापराधानां साधूनां निर्दोषाणां वः युष्माकं भद्रमस्तु। पार्थानां **कीर्तिदूषणं**[2] **आत्मवैरूप्यकर्तारं पुरुषमाख्याहीत्यन्वयः**। हे गले! सुरभि! योऽनागसि अघं अपराधं युञ्जन् प्रयुञ्जानो वर्तते अस्य तत् तस्मात् अपराधात् सर्वत इह परलोके च भयं भवत्येवेति शेषः। "सौरभेयी गला धेनुः भद्रा नन्दाऽमृतस्रवा" इत्यभिधानम्॥ १३॥

निरङ्कुशः अनिवारितः अङ्गदेन बाहुभूषणेन सह वर्तमानम्। अमर्त्यस्य देवस्यापि आहर्तास्मि छेत्तास्मि॥ १४, १५॥

कुत इति तत्राऽऽह — **राज्ञ** इति। स्वविहितधर्ममनुतिष्ठतां अनुपालनं तत्तद्योग्यतया रक्षणं राज्ञः परो धर्मो हि। किंविशिष्टस्य ? इह अनापदि आपदभावेऽपि उत्पथान् मार्गमुत्सृज्य वर्तमानान् अन्यान् दुष्टान् यथाशास्त्रं शासतः॥ १६॥

1 B,K,M सौरभीं 2 K,M add यशोदूषणं

**रा० कृ०** हे सौरभेय! हे सुरभिपुत्र! वृषभ! मा अनुशुचः शोकं मा कुरु। वृषलात् अस्मात् शूद्रात् ते भयं व्येतु अपगच्छतु। अधुना गां प्रति ब्रवीति। हे अम्ब! खलानां शास्तरि शिक्षके मयि सति ते भद्रं भविष्यति, मा रोदीः रोदनं मा कार्षीः ॥ ९ ॥

हे साध्वि! धेनो! यस्य राज्ञः राष्ट्रे देशे सर्वाः प्रजाः सर्वे जनाः असाधुभिः खलैः त्रस्यन्ते पीडिता भवन्ति, मत्तस्य दुष्टदमनरूपस्वकर्तव्यानुसन्धानरहितस्य तस्य राज्ञः कीर्तिः आयुः भगः ऐश्वर्यं गतिः पुण्यलोकप्राप्तिः नश्यन्ति ॥ १० ॥

आर्तानां दुःखितानां आर्तिनिग्रहः दुःखपरिहारः इत्येषः राज्ञां परो धर्मः, अतः भूतद्रुहं प्राणिद्रोहिणं असत्तमं अतिनीचं एनं वृषलं वधिष्यामि संहरिष्यामि ॥ ११ ॥

हे चतुष्पद! सौरभेय! तव पादान् त्रीन् कः अवृश्चत् अच्छिनत्? कृष्णानुवर्तिनां श्रीकृष्णानुयायिनां राज्ञां अस्माकं राष्ट्रे त्वादृशाः दुःखिताः मा भूवन् मा सन्तु ॥ १२ ॥

हे वृष! भद्रं शुभमस्तु। अकृतागसां अकृतापराधानां साधूनां वः युष्माकं आत्मवैरूप्यकर्तारं शरीरवैरूप्यकर्तारं तथा पार्थानां पार्थवंशजानां अस्माकं कीर्तिदूषणं जनं आख्याहि कथय ॥ १३ ॥

अनागसि निरपराधे जने अघं दुःखं युञ्जन् कुर्वन् यो वर्तते अस्य सर्वतः सर्वत्र मत् मत्तः भयं भविष्यतीति शेषः। असाधुदमने दुष्टनिग्रहे कृते सति साधूनां भवादृशां भद्रमेव स्यात् ॥ १४ ॥

यः इह लोके निरङ्कुशः निर्भयः अनागस्सु निरपराधेषु भूतेषु जनेषु आगस्कृत् द्रोहकारी भवति, तस्य साक्षात् अमर्त्यस्यापि साङ्गदं भुजं आहर्तास्मि आहरिष्यामि ॥ १५ ॥

इह लोके अनापदि आपदभावेऽपि उत्पथान् उन्मार्गगामिनः अन्यानसाधून् यथाशास्त्रं शासतः दण्डयतः राज्ञः पालकस्य स्वधर्मस्थानुपालनं स्वधर्मावलम्बिनां निरन्तरपालनं परमः धर्मो हि उत्कृष्टः धर्मः खलु।

अत्र तृणजलादिभिः जीवता गोमिथुनेन नदीजलतरुफलसस्यादिप्रकृतिसम्पत् सूच्यते। तां जन्तवो यथेच्छमनुभूय जीवन्ति, मानवस्तु लोभवशात् स्वायत्तीकृत्य क्रूरो भवति। तथा च सकलजनजीवनहेतुभूतायाः सम्पदः स्वायत्तीकरणे यः स्वाधिकारमुपयुनक्ति सोऽवश्यं दण्ड्यः। ईदृगधिकारविपदः प्रजाः परिरक्षितुमेव राजानः उद्दिष्टाः न तु तास्वधिकारं प्रदर्शयितुम्। अत्र कलिपरीक्षितावीदृगधिकारपरिरक्षणयोः सङ्केततया सूचितौ। एवमिह राजधर्मतत्त्वं व्यज्यते ॥ १६ ॥

**धर्म उवाच**

**एतद्वः पाण्डवेयानां युक्तमार्ताभय वचः ।**
**येषां गुणगणैः कृष्णः दौत्यादौ भगवान् कृतः ॥ १७ ॥**

**न वयं क्लेशबीजानि यतः[2] स्युः पुरुषर्षभ! ।**
**पुरुषं तं विजानीमो वाक्यभेदविमोहिताः ॥ १८ ॥**

**केचिद्विकल्पवसना[3] आहुरात्मानमात्मनः[4] ।**
**दैवमन्ये परे कर्म स्वभावमपरे प्रभुम्[5] ॥ १९ ॥**

**अप्रतर्क्यादनिर्देश्यादिति[6] केष्वपि निश्चयः ।**
**अत्रानुरूपं[7] राजर्षे! विमृश स्वमनीषया ॥ २० ॥**

**सूत उवाच**

**एवं धर्मे प्रवदति स सम्राट् द्विजसत्तम[8]! ।**
**समाहितेन मनसा विखेदः[9] पर्यचष्ट[10] तम् ॥ २१ ॥**

**धर्मं ब्रवीषि धर्मज्ञ! धर्मोऽसि वृषरूपधृक्[11] ।**
**यदधर्मकृतः[12] स्थानं सूचकस्यापि तद्भवेत् ॥ २२ ॥**

**अथवा देवमायाया नूनं गतिरगोचरा ।**
**चेतसो[13] वचसश्चापि भूतानामिति निश्चयः ॥ २३ ॥**

**तपः शौचं दया सत्यं इति पादाः कृते कृताः[14] ।**
**अधर्मांशैस्त्रयो[15] भग्नाः स्मयसङ्गमदैस्तव ॥ २४ ॥**

---

1 B.K.M.W वृतः 2 AF.GF यतस्व 3 K.M °द्वैकल्पवचसा 4 AF.GF °ना 5 AF.GF विभुम् 6 K.M °दनिर्वाच्या° 7 H.V तत्रा° 8 H.I.V °माः! 9 K.M विदित्वा 10 H.K.M.V प्रत्यचष्ट 11 H.V °धृत् 12 AF.GF °तं 13 AF.GF वचसो मनसश्चापि 14 N.W प्रकीर्तिताः 15 H.K.M.V °र्मांशै°

**श्रीध०** **एतदिति ।** आर्तानां अभयं **यस्मात्** तद्वचः वः युष्माकं युक्तं उचितमेव ॥ १७ ॥

**नेति ।** वयं तु यतः पुरुषात् प्राणिनां क्लेशहेतवः भवेयुः तं पुरुषं न विजानीमः । यतः वादिनां वाक्यभेदैः विमोहिताः ॥ १८ ॥

वाक्यभेदानेवाऽऽह — **केचिदिति ।** विकल्पं भेदं वसते आच्छादयन्ति ये योगिनः ते आत्मानमेव आत्मनः प्रभुं सुखदुःखप्रदमाहुः । तदुक्तं "आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः" (भ. गी. 6-5) इति । यद्वा [1]विकल्पैः कुतर्कैः वसनाः प्रावृताः[2] नास्तिकाः । एवं हि ते वदन्ति — न तावद्देवतादीनां प्रभुत्वं, कर्माधीनत्वात् । न च कर्मणः, तस्यास्वाधीनत्वादचेतनत्वाच्च । अतः स्वयमेव प्रभुः न चान्यः[3] कश्चिदिति । अन्ये दैवज्ञाः दैवं **ब्रह्मादिरूपां[4] देवताम् । परे[5] तु मीमांसकाः कर्म । अपरे लोकायतिकाः स्वभावम् ॥ १९ ॥**

**अप्रतर्क्यादिति।** केष्वपि सेश्वरेषु मध्ये[7] केष्वपीति दुर्लभत्वं दर्शितम्। निश्चय इति सिद्धान्तत्वम् अप्रतर्क्यान्मनो[8]ऽगोचरादनिर्देश्यात् वचनागोचरात्[9] परमेश्वरात् सर्वं भवतीति विमृश विचारय स्वबुद्ध्या॥ २०॥

**एवमिति।** विखेदः गतमोहः पर्यचष्ट[10] प्रत्यभाषत ज्ञातवानिति[11] वा॥ २१॥

**धर्ममिति।** अनिर्धारितमिव ब्रुवन् घातकं[12] जानन्नपि न सूचयेदित्येवंरूपं धर्मं ब्रवीषि अतः धर्मोऽसि। ननु घातकस्य सूचने को दोष इत्यत आह — यदिति। स्थानं नरकादि॥ २२॥

यद्वा, अज्ञानादप्यकथनं भवतीत्याह[13] — **अथवेति।** देवस्य मायाया गतिः वध्यघातकलक्षणा[14] वृत्तिः भूतानां चेतसो वचसश्च अगोचरा सुज्ञेया न भवतीति निश्चयः॥ २३॥

धर्मोऽसाविति ज्ञात्वा तस्य पादानुवादेन व्यवस्थामाह — **तप** इति द्वाभ्याम्। अधर्मपादैः तव त्रयः पादाः त्रिभिरंशैः[15] भग्नाः। स्मयः विस्मयः[16]॥ २४॥

---

1 H,V add ये 2 H,V °कृ° 3 H,V वा 4 H,V °धि° 5 H,V अपरे 6 H,V स्वकर्म 7 B,H,V omit मध्ये 8 H,V °दमनोगो° 9 B °सोऽगो° 10 H,V प्रत्य° 11 H,V °नित्यर्थः 12 H,V °तु° 13 H,V संभव° 14 H,V °तु° 15 H,V °रङ्गैर्भग्नाः रुग्णाः 16 H,V गर्वः

**वीर॰** एवमुक्तवन्तमाह — **वृष एतदिति त्रिभिः।** तावद्वचोऽभिनन्दति एतदिति। पाण्डुवंशजानां युष्माकं एतत् आर्तानां न भयं यस्मात्तद्वचः युक्तमेव। पाण्डवेयान् विशिनष्टि — येषां पाण्डवेयानां गुणगणैः हेतुभिः भगवान् कृष्णः दौत्यादौ कर्मणि वृतः दौत्यादिकमर्थिं वृत इत्यर्थः। येषां इति कर्तरि षष्ठी। यैः वृत इत्यर्थः। एवंविधगुणगणाश्रयाणां एतद्वचः युक्तमेवेति भावः॥ १७॥

गाण्डीवधन्वना अर्जुनेन सह श्रीकृष्णे दूरं स्वलोकं प्रति गते सति त्वमेव शोकानर्हान् रहसि प्रहरन् वधमर्हसि। अतः शोच्योऽसि। स्वजने कोऽवृश्चदिति यत्पृष्टं तत्रोत्तरमाह हे पुरुर्षभ! यस्मात् पुंसः क्लेशबीजानि दुःखकारणानि स्युः तं पुरुषं वयं न जानीमः। तत्र हेतुं वदन् आत्मनो विशिनष्टि वाक्यभेदविमोहिताः क्लेशकारणानि वदतां वाक्यभेदैः नानाविधवाक्यैः विमोहिताः॥ १८॥

वाक्यभेदानेव दर्शयति — **केचिदिति** सार्धेन। क्लेशकारणवादिनां मध्ये केचिदेवं वा, एवं वा इत्येवंविधः विकल्प एव वसनं वसनवत् निर्णेतव्यार्थापादकं येषां तथाभूता आत्मनः स्वस्य आत्मानमेव क्लेशकारणमाहुः। अन्ये तु दैवं अपरे तु कर्म प्राक्तनं कृतम्। इतरे तु स्वभावम्। अपरे तु प्रभुम् तत्र दैवम् जीवादृष्ट[1]स्वभावः प्रकृतेः परिणामस्वभावः प्रभुः ईश्वरः॥ १९॥

केचित्तु अप्रतर्क्यात् तर्कागोचरात् अनिर्देश्यात् वक्तुमशक्यात् कस्माच्चित्कारणात् क्लेश इत्याहुः इति इत्थं **केष्वपि** निश्चयः नेत्यध्याहारः। यद्वा तत्तदभिमानानुसारेणैव निश्चय इत्यर्थः। तत्रैवं क्लेशकारणेषु विकल्पितेषु हे **राजर्षे!** यदनुरूपं प्रकृतक्लेशानुगुण[2]कारणं तत् स्वमनीषया सूक्ष्मया धिया विमृश विचारय॥ २०॥

**इत्थं धर्मे प्रवदति सति हे द्विजसत्तमाः! स सम्राट् सार्वभौमः परीक्षित् विगतखेदः समाहितेन मनसा तं धर्मस्याभिप्रायं प्रत्यचष्ट।** चक्षिङ् दर्शनेऽपि वर्तते दृष्टवान् आलोच्य निर्णीतवान् इत्यर्थः॥ २१॥

निर्णीतमेव तदभिप्रायं प्रत्याह — **धर्ममित्यादिभिः** षड्भिः। तत्र क्लेशबीजावहे पुरुषे सन्निहितेऽपि यदुक्तं क्लेशबीजानि यतः स्युः तं पुरुषं न जानीम इति तत्र तदभिप्रायं निर्णीतमाह **धर्ममिति।** हे **धर्मज्ञ!** साक्षात् त्वं वृषरूपधृक् धर्म एवासि। अत एव आपद्यपि पुरुषं तं न विजानीम इति **धर्ममेव ब्रवीषि।** अधर्मकारिणि पुरुषे सन्निहिते यत् अधर्मसूचकं वचः तद्धर्म्यमेव इत्यर्थः। यत् यस्मात् अधर्मकृतः अधर्मकारिणः स्थानं प्राप्यं स्थानं यत् सूचकस्यापि [6] तत् स्थानं भवेत्; 'पतितः पतितः' इत्युक्त्वा पतिष्यतीति शास्त्रादिति भावः॥ २२॥

अथ "विमृश स्वमनीषया" इति यदुक्तं तदभिप्रायमाह — **अथवेति।** देवमायायाः ईश्वरसङ्कल्पस्य "माया वयुनं ज्ञानम्" (वे. नि. 3-9) इति ज्ञानपर्यायोऽत्र मायाशब्दः "मायया सततं वेत्ति प्राणिनां च शुभाशुभम्" (भार. 13 Appn. 15. 2805 pr) इति प्रयोगाच्च। गतिः भूतानां चेतसो वचसश्च अगोचरा अविषयीभूतेति वा निश्चयः। न जानीम इति विमृशस्वेति च वदता त्वया अयं पापकृदिति सूचनं अधर्मः **ईश्वरसङ्कल्पश्च** [7] वाङ्मनसयोरगोचर इति वा दर्शितमित्यर्थः॥ २३॥

धर्मोऽसीत्यनेन त्वं साक्षात् धर्माधिदेवता एवेत्युक्तं यत एवं अत एव तव पादा अपि न लौकिकवृषभपादसजातीयाः, अपि तु विशिष्टा एवेति [8] वदंस्तद्व्यञ्जकान् दर्शयति **तप** इति। धर्माधिदेवस्य तव पादाः तप आदयश्चत्वारः प्रकीर्तिताः। तत्र त्रयः पादाः अधर्मस्यांशैः [9] त्रिभिः स्मयादिभिर्भग्नाः। तत्र स्वस्मिन् उत्कर्षधीः स्मयः। स च तपोनाशहेतुः, सङ्गः शौचविरोधी, मदः दयाविरोधी, चित्तविकारः विवेकाक्षमत्वरूपः। मदेनार्तानां आर्तिमपश्यन्न दयां कुरुते॥ २४॥

---

1 W °दृष्टमिति भावः 2 W गुणं कारणं 3 W चक्षिः 4 W °तेऽप्यधर्म° 5 A,B °द्धर्म° 6 W adds धर्मसूचकस्यापि 7 W वाङ्मनसागोचरः 8 W °श्चेति 9 W °स्याङ्गैः

**विज॰** श्रीकृष्णो भगवान् येषां पाण्डवानां ज्ञानभक्तिविरक्त्यादिगुणगणैः दौत्यादौ वृतः तेषां पाण्डवेयानां पाण्डुवंशोद्भवानां वः एतत् आर्तानां अभयङ्करं वचः युक्तमुचितमित्यन्वयः॥ १७॥

हे पुरुषर्षभ! यतो जीवानां क्लेशबीजानि स्युः, वयं तं पुरुषं अय मेवेति न जानीमः अनेक शोकबीज-प्रतिपादकवेदवाक्यविमोहिताः॥ १८॥

वाक्यभेदमेवाह — **केचित्** इत्यादिना। केचित् वैकल्पं विकल्पसमूहोपेतं वचः येषां ते तथोक्ताः सन्दिग्धवचस इत्यर्थः। आत्मनः स्वस्य क्लेशबीजं आत्मानं स्वयमेवाहुः। केचित् साङ्ख्याः आत्मानं अन्तःकरणं तत्कारणमाहुः। वैकल्पवचसः प्रकृतिपुरुषयोः विवेकाग्रहवचनाः [1] एके सम्यक् ज्ञानिनः दैवं सर्वदेवप्रधानं हरिं

क्लेशबीजमाहुः। अपरे प्रभुं स्वभावं कालं क्लेशबीजमाहुः। "सर्वे निमेषा जज्ञिरे विद्युतः पुरुषात्" (म. ना. उ. 1-8) इति श्रुतेः। स्वशब्दवाच्यात् विष्णोः भावः यस्य स स्वभावः॥ १९॥

अनन्तत्वात् सर्वात्मना अप्रतर्क्यात् तर्काविषयात् अनिर्वाच्यात् प्रधानात् क्लेशपरम्परात् सर्वेषां जीवानां प्रकृत्या पिहितत्वात् इति केष्वपि निश्चयः। अथवा अप्रतर्क्यात् प्रकर्षेण तर्कायोग्यात् सत्वेनासत्वेन [2] वा निर्वक्तुं अशक्यात् भावरूपाज्ञानादिति केषु मायावादिषु निश्चयः। भो राजश्रेष्ठ! एषु पक्षेषु अनुरूपं श्रुतिस्मृत्यनुकूलं विमृश स्वबुद्ध्या आलोच्य निश्चिनु इति॥ २०॥

धर्मे एवं प्रवदति सति स सम्राट् समाहितेन एकाग्रेण मनसा आलोच्य स्वाधीनैः कर्मकालप्रधानैः दैवमेव अस्वतन्त्राणां जीवानां दुःखादिबीजं न त्ववान्तरम्, स्वातन्त्र्येण कर्मादीनां दुःखबीजपक्षः हेय एव इत्येवं धर्मान् विदित्वा तं प्रत्याचष्टेत्येकान्वयः। आत्मादिशब्दवाच्यं परमात्मानं क्लेशबीजं विदित्वेति वा, आदानादिकर्तृत्वात् आत्मा देवोत्तमत्वात् दैवम् क्रियाविषयत्वात् सकलकारणशक्तिमत्त्वाच्च कर्म। स्वस्मात् भावः प्रकाशो यस्य स स्वभावः स्वभां स्वरूपभूतां भां प्रकाशं वाति गच्छति, न परप्रकाशमिति स्वभावः स्वयम्प्रकाश इत्यर्थः। अप्रतर्क्यात् दुस्तर्काविषयत्वात् अप्रसिद्धत्वात् अनिर्वाच्यात् "अप्रसिद्धेरवाच्यं तत्" इति स्मृतेः इति। सर्वेषु पक्षेषु हरिरेवोच्यते क्लेशबीजत्वेन "अहं सर्वस्य प्रभवः मत्तः सर्वं प्रवर्तते। इति मत्वा भजन्ते मां बुधा भावसमन्विताः" (भ. गी. 10-8), "बुद्धिर्ज्ञानमसम्मोहः क्षमा सत्यं दमः शमः। सुखं दुःखं भवोऽभावः भयञ्चाभयमेव च" (भ. गी. 10-4), "अहिंसा समता तुष्टिः तपो दानं यशोऽयशः। भवन्ति भावा भूतानां मत्त एव पृथग्विधाः" (भ. गी. 10-5) इत्यादेश्च। "अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च। न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते" (भ. गी. 9-24) इति स्मृतेः पृथक्कल्पनायाः अज्ञानिविषयत्वात् इत्यादिकं समाहितेन सम्राडिति पदद्वयेनोक्तमिति ज्ञातव्यम्। सम्यक् राजते प्रकाशते सर्वं अस्येति सम्राट्। अत एव "आत्मवैरूप्यकर्तारं न विजानीम" इति वदन्तं धर्मं अब्रवीदित्यन्वयः। समाहितचेतसा ज्ञानेन तं धर्मं भगवन्तं प्रत्यचष्ट दृष्टवान्। अपरोक्षदर्शनेन तस्य निजरूपमद्राक्षीत् इत्यर्थः। दृष्ट्वा चाब्रवीदिति शेषः॥ २१॥

किमब्रवीदिति तत्राह — **धर्ममिति**। हे धर्मज्ञ! धर्मं ब्रवीषि यस्मात् तस्मात् सधर्मोऽसि न वृषः अपितु अज्ञजनमोहनाय वृषरूपं धत्से। यदुक्तं "आत्मवैरूप्यकर्तारं न विजानीम" इति तत्राह यदिति। "असत्कृतमधर्मं तु वदन् धर्ममवाप्नुयात्" इति वचनात् अस्य वृषलस्य आत्मवैरूप्यकर्तृत्वात् सूचने च दोषाभावेऽपि "यद्यधर्मः कृतः सद्भिः न स वाच्यः कथञ्चन" इति वाक्यात् सज्जनेषु अधर्मकृतः यत् स्थानं नरकादिलक्षणं तत्सूचकस्यापि तत् स्थानं भवेदिति ज्ञापनात् [3] त्वया आत्मवैरूप्यकर्ता न ज्ञापित इत्यतः धर्मं ब्रवीषीत्यर्थः॥ २२॥

यतः क्लेशबीजानि तं न विजानीमः इति वदतः तव अभिसन्धिरयं वेति वक्तीत्याह — **अथवेति**। मादृशानां गोचरापि नूनं प्रायेण भूतानां चेतसः वचसश्च देवमायायाः सर्वजीवानां मुख्यामुख्यक्लेशबीजस्य देवस्य हरेः इच्छया गतिस्थितिरधर्मेण धर्मं शोचामीत्यादिका अगोचरेति ज्ञापयितुं सर्वज्ञेन भवता न विजानीम इत्युक्तमिति भावः अभिप्रायनिश्चय इति॥ २३॥

तव तपआदिचत्वारः ये पादाः कृतयुगे कृताः पूर्णाः अवर्तन्त तेषां मध्ये त्रयः पादाः तपश्शौचदयाख्याः अधर्मांशैः अधर्मपादैः स्मयसङ्गमदैः भग्नाः। स्मयेन तपोभङ्गः, स्त्रीसङ्गेन शौचभङ्गः मदेन दयाभङ्गः॥ २४॥

1 K adds इति वा 2 K.M add सदसत्त्वेन 3 K.M °नाय

**रा० कृ०** येषां पाण्डवेयानां धर्मजादीनां गुणगणैः हेतुभूतैः बद्धः भगवान् कृष्णः दौत्यादौ कृतः नियुक्तोऽभूत्। तादृशानां पाण्डवेयानां वः युष्माकं एतदभयं वचः युक्तं अनुरूपमेव।

बन्धच्छेदिनः बन्धातीतस्य भगवतः भक्त्यादिगुणगणबद्धत्वं नैव विस्मयावहम्। तथाहि वैतुष्यार्जनव्रतयज्ञ-होमदानादिनानानियमाः भक्तिं विना प्रयोजनापेक्षया विधीयमानाः शृङ्खलादिवत् बन्धहेतवः, न भगवत्प्राप्तिहेतवः। नियमास्तावत् अनुष्ठातुरेव न तु भगवतः। तथा च नियमोल्लङ्घनबुद्धिरिव नियमैकपरायणोपि बद्ध एव उभयोरपि कामक्रोधदूषितत्वात्। भक्तिमतां तु नियमाः त्रिगुणात्मकप्रकृतिप्रक्षालनोपयोगिनः। ते हि भक्ताः नियमैः न बद्ध्यन्ते न वा तान् अतिक्रमन्ति। वस्तुतः तेषां नियमाश्च भगवदाराधनोपयोगिमार्गाः एव, ये तावत्तदाराधनाविरोधेन समाद्रियन्ते।

पुरा किल बृन्दावने ब्राह्मणबालकैः सह क्रीडनावसरे तरोः भुवि लङ्घितस्य श्रीकृष्णस्य कटिपीडा सञ्जाता। तदा भगवान् तत्पीडापनोदनार्थं स्वकटिं पद्भिः मर्दयतेति तान् बालकान् आदिदेश। ते तु भगवद्भक्तिभरविवशाः तथा कर्तुं न प्रबभूवुः। अत्रान्तरे गोपबालकः कश्चन तत्रागतः विदितकृष्णपीडः धरामालिङ्ग्य शयानस्य श्रीकृष्णस्य कट्यां स्वपादं निधाय तत्पादाकर्षणेन कटिपीडां दूरीचकार। अत्र भगवद्बाधापनोदने भगवति स्वकल्पिताः नियमाः ब्राह्मणबालकानां अन्तराया अभवन्। श्रीकृष्णसन्तोषणैकप्रवणबुद्धिः गोपबालकस्तु भक्तिनिमित्तकनियमनिरपेक्षस्सन् चरणस्पर्शेनापि भगवद्बाधापनोदनाय प्रायतत। ईदृश्या भक्त्या भगवान् बध्यत इति किमत्र चित्रम्?॥ १७॥

हे पुरुषर्षभ! राजन्! यतः यस्मात् पुरुषात् क्लेशबीजानि पादच्छेदादीनि क्लेशकारणानि स्युः भवेयुः तं पुरुषं वाक्यभेदविमोहिताः नानाविधैः वाक्यैः विमोहिताः वयं न विजानीमः नावगच्छामः॥ १८॥

केचिद्विकल्पवसनाः भेदाच्छादिनः भेदानङ्गीकारिणः अद्वैतवादिन इत्यर्थः। आत्मानं आत्मनः प्रभुमाहुः। अन्ये ज्योतिर्विदः दैवं ग्रहादिरूपं आत्मनः प्रभुमाहुः। परे मीममांसकाः कर्म आत्मनः प्रभुमाहुः। अपरे लोकायतिकाः स्वभावं आत्मनः प्रभु माहुः। अप्रतर्क्यात् मनोऽगोचरात् अनिर्देश्यात् वागगोचरात् ईश्वरादेव सुखदुःखादिकं सर्वं भवतीति केष्वपि भागवतेषु निश्चयः। हे राजर्षे! अत्र अस्मिन् विचारे. अनुरूपं सुखदुःखादिदाने समुचितं कारणं स्वमनीषया स्वबुद्ध्या विमृश विचारय।

एतत्सिद्धान्तप्रतिपादकाः प्राज्ञाः सुखमार्गं न निर्दिशन्ति अनुभवज्ञानाधानाकुशलत्वात्। प्रागुक्ताश्च आत्मग्रहक-र्मस्वभावाः पण्डितपरिभाषिताः सुखदानादानयोरसमर्था एव। ततश्च तत्कल्पनाजीविनि मानवे एव सुखदुःखतत्त्वमस्ति। सदसद्विवेकशाली मानव एव स्वसुखदुःखयोः कारणीभवति। परेभ्यः प्राप्तेऽपि दुःखे तेषु कारणत्वापादनं अकिञ्चित्करमेव, सर्वस्यापि जगत्प्रवृत्तेः भगवदधीनत्वात्। स खलु सर्वान्तर्यामी सकलतर्कनिर्णयातीतः। तादृशं

परमात्मानं स्वनिर्वचननिरूपितं समाकलय्य तस्मिन् स्वबुद्धिकृतकर्मफलसमर्पणेन वञ्चितः जनः दुःखादिकमनुभवति, न त्वन्यैरिति भावः ॥ १९, २० ॥

हे द्विजसत्तम! शौनक! धर्मे एवं पूर्वोक्तप्रकारेण प्रवदति सति स सम्राट् सार्वभौमः परीक्षित् विखेदः दुःखरहितः समाहितेन सावधानेन मनसा तं धर्मं पर्यचष्ट प्रत्यभाषत ॥ २१ ॥

हे धर्मज्ञ! धर्मं घातुकं वृषलं जानन्नपि तं न सूचयेदिति धर्मं ब्रवीषि। अतस्त्वं वृषरूपधृत् धर्मः। धर्मदेवतासि। अधर्मकृतः अधर्मकारिणः यत् नरकादिकं स्थानं भवति तत् सूचकस्यापि भवेत्।

सुखदुःखादिसकलावस्थानां दैवमूलकत्वात् पापकृति पापोद्घाटनमपि पापायैव भवति। परान् निन्दता न तत्कृतपापानि परिह्रियन्ते प्रत्युत निन्दकस्यापि मनो रागद्वेषदूषितं भवति। तस्मात् अखिलेश्वरं नियन्तारं अनुध्यायन् यः कर्तव्यमाचरति सः सर्वकर्मबन्धैः विमुच्यत इति परमार्थः ॥ २२ ॥

अथवा देवमायायाः देवस्य भगवतः सङ्कल्परूपायाः मायायाः गतिः भूतानां चेतसो वचसश्चापि नूनं अगोचरा अज्ञेया अनिर्देश्येति निश्चयः ॥ २३ ॥

धर्माधिदेवस्य तव "तपः शौचं दया सत्यं" इति चत्वारः पादाः कृते कृतयुगे कृताः शास्त्रे निरूपिता इत्यर्थः। तत्र चतुर्षु पादेषु त्रयः तपश्शौचदयाख्याः पादाः अधर्मांशैः स्मयसङ्गमदैः स्मयः बुद्धिविमोहात्मकः, सङ्गः विषयासक्तिः, मदः गर्वः एतैस्त्रिभिः भग्नाः विनाशिताः ॥ २४ ॥

इदानीं धर्म! पादस्ते सत्यं निर्वर्तयेद्यतः।
तं जिघृक्षत्यधर्मोऽयं अनृतेनैधितः कलिः ॥ २५ ॥

इयं च भूर्भगवता न्यासितोरुभरा सती।
श्रीमद्भिस्तत्पदन्यासैः सर्वतः कृतकौतुका ॥ २६ ॥

शोचत्यश्रुकला साध्वी दुर्भगेवोज्झिताधुना।
अब्रह्मण्या नृपव्याजाः शूद्रा भोक्ष्यन्ति मामिति ॥ २७ ॥

सूत उवाच

इति धर्मं महीं चैव सान्त्वयित्वा महारथः।
निशातमाददे खड्गं कलयेऽधर्महेतवे ॥ २८ ॥

तं जिघांसुमभिप्रेत्य विहाय नृपलाञ्छनम्।
तत्पादमूलं शिरसा समगात् भयविह्वलः ॥ २९ ॥

**पतितं पादयोर्वीरः[5] कृपया दीनवत्सलः ।**
**शरण्यो नावधीच्छ्लोक्य आह चेदं हसन्निव ॥ ३० ॥**

1. K,M °से यतः 2 K,M °न्त्य 3 B,H,I,V °ता सती 4 K,M °क्ष्य 5 H,V °र्धों°

**श्रीध॰ इदानीमिति।** इदानीं कलौ हे धर्म! ते[1] पादः चतुर्थांशः[2] तत्रापि सत्यमेवाऽस्ति यतः[3] सत्यात् भवान् आत्मानं निर्वर्तयेत् कथञ्चित् धारयेत्। यद्वा पुरुषस्त्वां साधयेत्। तमपि पादं अनृतेन संवर्धितः कलिरूपोऽयं अधर्मो ग्रहीतुमिच्छति तत्रेयं स्थितिः। कृतयुगे प्रथमं सम्पूर्णः चतुष्पाद्धर्मः, त्रेतायां चतुर्णामपि पादानां मध्ये स्मयेन तपः, सङ्गेन शौचं, मदेन दया, अनृतेन सत्यं इत्येवं चतुर्थोऽशो[4] हीयते। द्वापरे त्वर्धम्। कलौ चतुर्थोऽशोऽवशिष्यते[5] सोप्यन्ते नङ्क्ष्यतीति[6] ॥ २५ ॥

**इयमिति।** न्यसितः अन्योन्यद्वारेणावतारितः उरुः भरः भारः यस्याः। कृतं कौतुकं मङ्गलं यस्यास्सा ॥ २६ ॥

**शोचन्तीति।** अश्रूणि कलयति मुञ्चतीत्यश्रुकला तेन त्यक्ता सती शूद्रा भोक्ष्यन्ति मामिति शोचति ॥ २७ ॥

**इतीति।** निशातं निशितं खड्गम्। अधर्मस्य हेतुः यः कलिः तं हन्तुं इत्यर्थः ॥ २८ ॥

**तमिति।** अभिप्रेत्य ज्ञात्वा ॥ २९ ॥

**पतितमिति।** शरण्यः आश्रयार्हः[7]। श्लोक्यः सत्कीर्त्यर्हः[8] ॥ ३० ॥

1 H V add तव 2 B H V °र्थांश 3 V य. 4 B H V °र्थांश 5 B H V °र्थांशोऽ 6 H V नश्येदिति 7 H V शरणार्हः 8 B सुकी°

**वीर॰** अथ वृषलं तच्चिकीर्षितं च निश्चित्याह — **इदानीमिति**। हे धर्म! यस्तव[1] तुरीयपादः[2][3] सत्यं तद्यतो[4] निर्वर्तयेत् यस्माद्धेतोः निष्पद्येत[5] तमिदानीं अनृतेनैधितः[6] प्रवृद्धोऽयं अधर्मिरूपः[7] कलिः जिघृक्षति ग्रहीतुमिच्छति। तपआदीनां क्रमेण निर्वर्तकाः[8] स्मयसङ्गमदानृतानां अभावाः[9]। सन्त्यपि हि तपआदीनि विस्मयादिभिर्भज्यन्ते[10] ॥ २५ ॥

अथ गां तत्क्लेशहेतुञ्च निश्चित्याऽऽह — **इयमिति** द्वाभ्याम्।[11] इयं गौः साक्षात् भूः पृथ्वी भगवता श्रीकृष्णेन न्यासित अपनीतः उरुभरः यस्यास्तथाभूता श्रीमद्भिः अब्जादिविग्रहैः श्रीः शोभा येषामस्तीति तैः तस्य भगवतः पादन्यासैः सर्वत्र कृतं कौतुकं उत्सवः यस्यास्सा बभूव ॥ २६ ॥

अधुना तु भगवतोज्झिता त्यक्ता सती साध्वी भूः अत एव भाग्यहीनेव अब्रह्मण्या ब्रह्मकुलासाधवो नृपव्याजाः नृपवेषमात्रधराः शूद्राः मां भोक्ष्यन्तीतिहेतोः अश्रूणां कलाः बिन्दवः यस्याः तथाभूता शोचति ॥ २७ ॥

इति इत्थं, धर्मं महीं च सान्त्वयित्वा महारथः परीक्षित् अधर्महेतवे कलये तद्वधार्थं निशातं तीक्ष्णं खड्गं आदधे उद्धृतवान्॥ २८॥

तं परीक्षितं जिघांसुं हन्तुं इच्छुं अभिप्रेत्य आलक्ष्य कलिः नृपलाञ्छनानि किरीटादीनि विहाय अपनीय भयेन विह्वलगात्रः [12] शिरसा तस्य परीक्षितः पादयोर्मूलं समगात् पपातेत्यर्थः॥ २९॥

पादयोः पतितं [13] कलिं वीरः दीनवत्सलः शरणमर्हति [14] शरण्यः श्लोक्यः प्रशस्तो [15] राजा कृपया नावधीत् न हतवान् किन्तु हसन्निव इदं वक्ष्यमाणमाह॥ ३०॥

---

1 W यत्तव 2 W तुरीयं 3 W पादं 4 W यद्यतो 5 W °ष्पाद्ये° 6 W °त्तोऽ° 7. W °धर्म° 8. W निवर्तकाः 9 W भावाः 10 W °भिः न व्यज्यन्ते 11 W °चिह्नैः 12 W adds चलद्गात्रः 13 W adds तं 14 A.B °मर्हः 15 W प्रशस्यः

**विज॰** इदानीं अस्मिन् युगे यतः येन पादेन निर्वर्तसे हे धर्म! ते स पादः सत्यं सत्यात्मकस्त्ववशिष्टः अनृतेन अधर्मपादेन एधितः वर्धितः अधर्मात्मकः कलिः तं सत्याख्यं पादं जिघृक्षति तं ग्रहीतुमिच्छति ग्रसितुमाकाङ्क्षते इत्यन्वयः॥ २५॥

इयं भूश्च भगवता न्यासितः अवरोपितः उरुः महान् भरः भारः यस्यास्सा तथोक्ता श्रीमद्भिः तस्य हरेः पदन्यासैः पदपरिक्रमणैः सर्वतः कृतकौतुका रचितालङ्कारा रचितरोमाञ्चेति वा सती निर्मलाऽभूत्॥ २६॥

सेयं साध्वी अधुना तत्पदन्यासैः उज्झिता दुर्भगेव भाग्यहीना स्त्रीव शोचन्ती अश्रुकला सन्ततस्रुतनेत्रजल-धारा आस्ते इत्यन्वयः। किङ्कृत्वा अब्रह्मण्या ब्राह्मणभक्तिरहिता नृपव्याजाः शूद्रा मां भोक्ष्यन्ति पालकव्याजेन भुञ्जते इति॥ २७॥

अधर्महेतवे अधर्मकारणाय निशातं तेजितं हन्तुमिति शेषः॥ २८॥

जिघांसुं हन्तुमिच्छुं[1] पादमूलं समगात् अष्टाङ्गविशिष्टतया आसीदित्यन्वयः॥ २९॥

श्लोक्यः कीर्तिकामः॥ ३०॥

---

1 B.K.M हन्तुकामं

**रा॰ कृ॰** हे धर्म! इदानीं कलौ ते पादः सत्यं चतुर्थोऽशः सत्यमेवास्ति, यतस्स

आत्मानं कथञ्चित् धारयति। तमपि पादं अनृतेन असत्येन एधितः संवर्धितः कलिः कलिरू

ग्रहीतुमिच्छति॥ २५॥

इयं च भूः गोरूपधरा भूमिः भगवता श्रीकृष्णेन न्यासितोरुभरा सती परस्परयुद्धेन अपनीतभूरिभारा सती श्रीमद्भिः पद्मादिशोभासहितैः तत्पदन्यासैः भगवतः पादन्यासैः सर्वतः सर्वत्र कृतकौतुका कृतमङ्गला च सती,

अधुना उज्झिता तेन भगवता त्यक्ता अश्रुकला अश्रुबिन्दुसहिता साश्रुनयनेति यावत्। तथा सती अब्रह्मण्याः ब्राह्मणभक्तिहीनाः नृपव्याजाः नृपवेषधारिणः शूद्रा मां भोक्ष्यन्ति अनुभविष्यन्तीति दुर्भगा भाग्यहीना पाध्वीव पतिव्रतेव शोचति दुःखिता भवति॥ २६, २७॥

इति पूर्वोक्तप्रकारेण महारथः परीक्षित् धर्मं महीं च सान्त्वयित्वा अधर्महेतवे कलये निशातं तीक्ष्णं खड्गं आददे गृहीतवान्॥ २८॥

तं परीक्षितं जिघांसुं हन्तुं इच्छुं अभिप्रेत्य आलक्ष्य कलिः नृपालच्छनं किरीटादिकं राजचिह्नं विहाय त्यक्त्वा भयविह्वलः भयव्याकुलः शिरसा तत्पादमूलं तस्य परीक्षितः पादयोः मूलं समगात् अपतत्॥ २९॥

दीनवत्सलः शरण्यः श्लोक्यः प्रशंसनीयः वीरः राजा पादयोः पतितं कलिं कृपया नावधीत्। किन्तु हसन्निव इदं वक्ष्यमाणं वचनं आह अब्रवीत्॥ ३०॥

राजोवाच

न ते गुडाकेशयशोधराणां बद्धाञ्जलिर्वै[1] भयमस्ति किञ्चित्।
न वर्तितव्यं भवता कथञ्चन[2] क्षेत्रे मदीये[3] त्वमधर्मबन्धुः॥ ३१॥

त्वां वर्तमानं नरदेवदेहेष्वनुप्रवृत्तोऽयमधर्मपूगः[4]।
लोभोऽनृतं चौर्यमनार्यमंहो ज्येष्ठा च माया कलहश्च दम्भः॥ ३२॥

न वर्तितव्यं तदधर्मबन्धो[5] धर्मेण सत्येन च वर्तितव्ये।
ब्रह्मावर्ते यत्र यजन्ति यज्ञैः यज्ञेश्वरं यज्ञवितानविज्ञाः[6]॥ ३३॥

यस्मिन् हरिर्भगवानिज्यमान इज्यामूर्तिर्[7]यजतां शं तनोति।
कामानमोघान् स्थिरजङ्गमानां अन्तर्बहिर्वायुरिवैष[8] आत्मा॥ ३४॥

सूत उवाच

परीक्षितैवमादिष्टः स कलिर्जातवेपथुः।
तमुद्यतासिमाहेदं दण्डपाणिमिवोद्यतम्॥ ३५॥

कलिरुवाच

यत्र क्वचन[9] वत्स्यामि सार्वभौम! तवाज्ञया।
लक्षये तत्र तत्रापि त्वामात्तेषुशरासनम्॥ ३६॥

---

1. AF.GF °स्ते; K.M °र्भो! 2. K.M कथञ्चित् 3 H.V.W °ऽस्मदीये 4. H.K.M.V °यूथः 5 K.M यदधर्म°, V तव धर्म° 6. K.M ब्रह्मवितानयज्ञाः 7. B.I.W इज्यात्ममूर्ति°; K इष्टात्ममूर्ति°; M इच्छात्ममूर्ति° 8. K.M °रिवेश आ°, W-°रिवैक आ° 9 AF GF क्वचाथ°; B.H.I.K.M.V क्वाथ

**श्रीध०** **नेति**। गुडाकेशोऽर्जुनः तस्य यशोधरा ये वयं तेषां तान् प्रति **बद्धः** अञ्जलिः येन तस्य ते। किञ्चित्[1] कथञ्चन केनाप्यंशेन न वर्तितव्यम्। यस्मात् त्वं अधर्मस्य बन्धुः॥ ३१॥

तदेवाऽऽह — **त्वामिति**। राजदेहेषु वर्तमानं त्वामनु सर्वतः प्रवृत्तः। अनार्यं दौर्जन्यं अंहः स्वधर्मत्यागः। ज्येष्ठा अलक्ष्मीः। माया कपटम्॥ ३२॥

**नेति**। तत् तस्मात् धर्मेण सत्येन च वर्तितव्ये वर्तितुमर्हे ब्रह्मावर्ते देशे। यज्ञस्य वितानं विस्तारः तत्र विज्ञा निपुणाः॥ ३३॥

**यस्मिन्निति**। इज्या यागः तद्रूपा मूर्तिः यस्य शं क्षेमं कामांश्च। ननु इन्द्रादयः देवा इज्यन्ते न तु हरिः। तत्राऽऽह — एषः स्थावरादीनां **आत्मेति**। तथापि[2] जीववत् न परिच्छिन्न इत्याह अन्तर्बहिरिति। यथा वायुः प्राणरूपेण अन्तस्थोऽपि[3] बहिरप्यस्ति तद्वत् सर्वान्तर्यामी ईश्वरोऽपि इति॥ ३४॥

**परीक्षितेति**। उद्यतासिं उद्धृतखड्गम्। दण्डपाणिं यमम्। उद्यतं उद्युक्तम्॥ ३५॥

**यत्रेति**। अत्र न वस्तव्यमिति या तवाऽऽज्ञा तया यत्र क्वापि वत्स्यामि किन्तु तत्र तत्रापि आत्तो गृहीतः इषुः शरासनञ्च येन तं त्वामेव लक्षये॥ ३६॥

---

1 A,B किन्तु 2 B तत्रापि 3 B स्थितोऽपि

**वीर०** तदेवाह — नेत्यादिभिश्चतुर्भिः। गुडाकेशयशोधराणां अर्जुनकीर्तिवर्धनानां अस्माकं सन्निधाविति शेषः बद्धाञ्जलेस्ते तव किञ्चिदपि भयं नास्ति, अस्मदीये क्षेत्रे कथञ्चन भवता न वर्तितव्यं, कुतः यतः त्वं अधर्मस्य बन्धुः अनुबन्धी॥ ३१॥

तदेव प्रपञ्चयति — **त्वामिति**। नरदेवानां देहेषु वर्तमानं त्वां अनुसृत्य प्रवृत्तः भवति अयमधर्मसमुदायः, कोऽसावधर्मयूथः इत्यत्राह — **लोभ** इति। अनार्यं शाठ्यं अंहः पापं, ज्येष्ठा अलक्ष्मीः, माया मायागुणकार्यम् रागद्वेषादिकं अपह्नवो वा, दम्भः वञ्चनम्॥ ३२॥

तत् तस्मात् हे अधर्मबन्धो! धर्मेण सत्येन च वर्तितव्ये अस्मिन् ब्रह्मावर्ते क्षेत्रे त्वया न वर्तितव्यम्। "सरस्वतीदृषद्वत्योः देवनद्योर्यदन्तरं तद्ब्रह्मावर्तम्"। तथा यत्र यज्ञवितानविज्ञाः यज्ञानुशासनकोविदाः यज्ञैः यज्ञेश्वरं परमपुरुषं आराधयन्ति तत्र ब्रह्मावर्ते न वर्तितव्यम् भवतेत्यर्थः॥ ३३॥

किम्बहुना! यस्मिन् देशे हरिः भगवान् इज्या आराध्या इन्द्रादयः ते मूर्तिः शरीरं यस्य सः। यज्ञैः इज्यमानो वायुरिव स्थावराणां जङ्गमानाञ्च भूतानामन्तर्बहिश्च व्याप्य इति शेषः। आत्मा अन्तः प्रविश्य प्रशासनधारणे कुर्वन् यजतां आराधयितॄणां अमोघान् कामान् इष्टार्थांश्च शं सुखं मोक्षाख्यं च तनोति प्रयच्छति। तत्र सर्वत्रापि न भवता वर्तितव्यम्॥ ३४॥

इत्थं परीक्षिता अनुशिष्टः कलिः जातवेपथुः सञ्जातगात्रकम्पः उद्यतः उद्धृतः असिः **खड्गः येन** तं दण्डपाणिं यममिवोद्यन्तं उक्तं इदं वक्ष्यमाणमाह ॥ ३५ ॥

तदेवाह — **यत्रेति** द्वाभ्याम्। हे सार्वभौम! तवाऽऽज्ञया यत्र **क्वचित्** वत्स्यामि यत् स्थानं भवान्निर्दिशति, तत्र **क्वचित्** वत्स्यामि। किन्तु तत्र त्वामेव गृहीतशरासनं आलक्षये ॥ ३६ ॥

---

1. W °धर्मि° 2 W °नुष्ठान° 3 W °धारणे 4 W क्वापि

**विज०** गुडाकेशयशोधराणां अर्जुनकीर्तिं बिभ्रतां कौरवाणां अस्माकमर्थे बद्धोऽञ्जलिः येन सः तथोक्तः तस्य गुडाकेशयशोधराणां सकाशात् भयं नास्तीति वा। किन्तु हे कले! त्वया मदीये क्षेत्रे कथञ्चिदपि न वर्तितव्यं इत्यन्वयः। देहमारभ्य राष्ट्रपर्यन्तस्थानविवक्षया क्षेत्र इत्युक्तम्। कुत इति तत्राह — **त्वमिति**। अधर्म एव बन्धुः यस्य स तथोक्तः अधर्मबन्धुत्वादिति भावः ॥ ३१ ॥

ततश्च किमिति तत्राऽऽह — **त्वामिति**। नरदेवानां धर्मपालकानां राज्ञां देहेषु वर्तमानं सन्निदधानं त्वां अनु अनन्तरं अयं लोभाद्यधर्मयूथः प्रवृत्तो भवतीति यस्मात् तस्मात् अधर्मबन्धो! हे कले! सत्येन धर्मेण च वर्तितव्ये ब्रह्मावर्ते विन्ध्यहिमवत्पर्वतयोः मध्ये पुण्यदेशे न वर्तितव्यं इत्यन्वयः। लुभ गाध्य इति धातोः लोभः परवित्ताभिलाषः सद्व्यये प्राप्ते स्ववित्तापरित्यागो वा। ज्येष्ठा अलक्ष्मीः, माया निकृतिः यत्र यस्मिन् ब्रह्मावर्ते स्वाध्यायादिः ब्रह्मयज्ञः चरुपुरोडाशादिद्रव्यलक्षणवितानयज्ञश्च येषान्ते ब्रह्मवितानयज्ञाः मुनयः यज्ञैः यज्ञेश्वरं यजन्ति ॥ ३२, ३३ ॥

यस्मिन् इच्छात्ममूर्तिः इच्छातनुः इज्यमानः हरिः भगवान् यजतां पुंसां शं सुखं तनोति प्रपञ्चयति अमोघान् कामानपि — तनोतीति। किंविशिष्टो हरिः? स्थिरजङ्गमानां अन्तर्बहिश्च वर्तमानः क इव वायुरिव आत्मा व्याप्तः ईशः प्रवर्तकः ॥ ३४ ॥

उद्यतं सन्नद्धं दण्डपाणिं यममिव स्थितं उद्यतासिं उद्धृतखड्गम् ॥ ३५ ॥

यत्र क्व वा त्वदुक्तस्थले वत्स्यामीत्यन्वयः। लक्षये पश्यामि ॥ ३६ ॥

**रा० कृ०** गुडाकेशयशोधराणां अर्जुनकीर्तिवर्धनानां अस्माकमिति शेषः। पुरतः बद्धाञ्जलेः ते किञ्चिदपि भयं नैवास्ति। तथापि यतः त्वं अधर्मबन्धुः अधर्मस्य सहकारी असि, ततः मदीये क्षेत्रे मत्पालिते देशे कथञ्चन केनाप्यंशेन भवता त्वया न वर्तितव्यम् ॥ ३१ ॥

**नरदेवदेहेषु** नरदेवानां राज्ञां देहेषु वर्तमानं त्वां लोभः परवित्ताद्यभिलाषः, अनृतं असत्यभाषणं, चौर्यं गुप्ततया परधनाद्यपहरणं, अनार्यं दौर्जन्य, अंहः पापाचरणं, ज्येष्ठा अलक्ष्मीः दारिद्र्यमिति यावत्। माया कपटं,

कलहः विरोधः, दम्भो वञ्चनादिकं— इत्ययं एवमादिकः अयं अधर्मपूगः अधर्मयूथः अनुप्रवृत्तः अनुसृत्य व्याप्तः ॥ ३२ ॥

हे अधर्मबन्धो! तत् तस्मात् यत्र यज्ञवितानविज्ञाः यज्ञानुष्ठानकोविदाः यज्ञैः यज्ञेश्वरं भगवन्तं यजन्ति धर्मेण कायिकेन धर्मेण, सत्येन वाचिकेन सत्येन चकारात् मानसेन ध्यानेन च वर्तितव्ये तत्र मदीये ब्रह्मावर्ते त्वया न वर्तितव्यम् ॥ ३३ ॥

किञ्च यस्मिन् ब्रह्मावर्ते इज्यामूर्तिः यज्ञस्वरूपः इज्यमानः यज्ञैः पूज्यमानः स्थिरजङ्गमानां स्थावरजङ्गमानां अन्तर्बहिश्च व्याप्य वायुरिव स्थितः आत्मा सर्वात्मा एषः भगवान् हरिः यजतां निष्कामानां पूजकानां शं आत्मसुखं अपि च सकामानां यजतां अमोघान् कामान् उत्तमान् विषयांश्च तनोति तत्र ब्रह्मावर्ते त्वया न वर्तितव्यमिति पूर्वेणान्वयः ।

यज्ञार्थसत्कर्माचरणेन हि भवति सर्वजीविनां सन्तृप्तिः, यैव सर्वान्तर्यामिसन्तृप्तिरिति व्यपदिश्यते। तया परिसरप्रदेशः शान्तिसुखविलसितः विनिर्मलो भवति। प्रजाः प्रयत्नं विना प्राप्तकामाः भवन्ति। तथा च अधिकारेण कार्यसाधनावश्यकता नैवास्ते। तस्मात् प्रभवः नाधिकारप्रदर्शिनः, किन्तु प्रजासेवापरायणाः भवन्ति।

ईदृशानां महतां मध्ये अधिकारैकदृष्टेः जनस्य वर्तनेन सः परिसरः कलुषितो भवति। तस्मादयं परीक्षित् ब्रह्मावर्तं परित्यजेति कलिपुरुषमादिशतीति ज्ञेयम् ॥ ३४ ॥

एवं उक्तप्रकारेण परीक्षिता आदिष्टः आज्ञप्तः सः कलिः जातवेपथुः भयेन सञ्जातकम्पः उद्यतासिं उद्धृतखड्गं दण्डपाणिं यममिव उद्यतं हन्तुमुद्युक्तं तं परीक्षितं इदं वक्ष्यमाणं वचनमाह अवोचत् ॥ ३५ ॥

हे सार्वभौम! तवाऽऽज्ञया यत्र क्वचन यत्र कुत्रापि वत्स्यामि निवासं करिष्यामि, परन्तु तत्र तत्रापि आत्तेषुशरासनं गृहीतबाणचापं त्वामेव लक्षये पश्यामि ॥ ३६ ॥

**तन्मे धर्मभृतां श्रेष्ठ! स्थानं निर्देष्टुमर्हसि ।**
**यत्रैव नियतो वत्स्य आतिष्ठंस्तेऽनुशासनम् ॥ ३७ ॥**

**सूत उवाच**

**अभ्यर्थितस्तदा तस्मै स्थानानि कलये ददौ ।**
**द्यूतं पानं स्त्रियः सूना यत्राधर्मश्चतुर्विधः ॥ ३८ ॥**

**पुनश्च याचमानाय जातरूपमदात्प्रभुः ।**
**ततोऽनृतं मदं कामं रजो वैरञ्च पञ्चमम् ॥ ३९ ॥**

**अमूनि पञ्च स्थानानि ह्यधर्मप्रभवः कलिः ।**
**औत्तरेयेण दत्तानि न्यवसत्तन्निदेशकृत् ॥ ४० ॥**

अथैतानि न सेवेत बुभूषुः पुरुषः क्वचित्।
विशेषतो धर्मशीलः राजा लोकपतिर्गुरुः ॥ ४१ ॥

वृषस्य नष्टांस्त्रीन् पादान् तपश्शौचं दयामिति।
प्रतिसंदध आश्वस्य[2] महीं च समवर्धयत् ॥ ४२ ॥

स एष एतर्ह्यध्यास्त[3] आसनं पार्थिवोचितम्।
पितामहेनोपन्यस्तं राज्ञाऽरण्यं विविक्षता ॥ ४३ ॥

आस्तेऽधुना स[4] राजर्षिः कौरवेन्द्रश्रियोल्लसन्[5]।
गजाह्वये महाभागश्चक्रवर्ती बृहच्छ्रवाः ॥ ४४ ॥

इत्थंभूतानुभावोऽयं अभिमन्युसुतो नृपः।
यस्य पालयतः क्षोणीं[6] यूयं सत्राय दीक्षिताः ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
प्रथमस्कन्धे कलिनिग्रहो नाम सप्तदशोऽध्यायः ॥ १७ ॥

---

1. H,V °द्विभुः 2. AF,GF आस्थाय 3. AF,GF एतदध्यास्त° 4. H,V °Sथ 5. K,M ° न्द्रः श्रि° 6 I क्षौणी°

**श्रीध°** **तदिति**। तत् तस्मात् नियतः निश्चलः वत्स्ये वत्स्यामि ॥ ३७ ॥

**अभ्यर्थित** इति। पानं मद्यादि[1]। सूनाः प्राणिवधाः। द्यूते अनृतम्। पाने मदः, पूर्वं मदः दयानाशकत्वेनोक्तः अत्र तु गर्वद्वारा तपोनाशकत्वं[2]। स्त्रीषु सङ्गः। हिंसायां क्रौर्यं[3] दयानाशकमिति ज्ञेयम्। यद्यपि सर्वं सर्वत्र[4] सम्भवति तथापि प्राधान्येन अनृतादीनां द्यूतादिषु यथासंख्यं[5] ज्ञेयम्। द्वादशस्कन्धे तु "सत्यं दया तपो दानमिति पादा विभोर्नृप!" (भाग. 12-3-18) इत्यत्र दानशब्देन शौचमेवोक्तम्। मनश्शुद्धिरूपत्वात् भूताभयदानस्य। "त्रेतायां धर्मपादानां तुर्यांशो हीयते शनैः। अधर्मपादैरनृतहिंसासन्तोषविग्रहैः" (भाग. 12-3-20) इत्यत्र चासन्तोषशब्देन तस्य हेतुर्गर्वो लक्ष्यते, विग्रहशब्देन च तद्धेतुः स्त्रीसङ्गः इत्यविरोधः ॥ ३८ ॥

**पुनरिति**। चतुर्विधस्यापि एकत्रैवावस्थानं[7] देहीति पुनः याचमानाय जातरूपं सुवर्णं अदात् दत्तवान्। ततस्सुवर्णदानात् अनृतम्, मदम्, काममिति स्त्रीषु[8] सङ्गम्, रज इति रजोमूलां हिंसाम्-एतानि चत्वारि, पञ्चमं वैरञ्च अदादिति ॥ ३९ ॥

**अमूनीति**। औत्तरेयेण परीक्षिता अमूनि अमीषु स्थानेषु न्यवसदित्यर्थः ॥ ४० ॥

**अथेति**। अथ इति हेतोः[9]। एतानि बुभूषुः भवितुमिच्छुः[10]। स्त्रीसुवर्णयोरसेवनं नाम तयोरनासक्तिः ॥ ४१ ॥

**वृषस्येति**। एवं कलिं निगृह्य वृषस्य पादान् प्रतिसन्दधे; तपआदीनि प्रवर्तितवानित्यर्थः ॥ ४२ ॥

युष्मदीयसत्रप्रवृत्तिरपि तत्प्रभावादेवेत्याह[11] त्रिभिः — **स** इति। एतर्हि इदानीं युधिष्ठिरेण अरण्यं प्रवेष्टुमिच्छता उपन्यस्तं समर्पितं आसनं अध्यास्ते। अधुना आस्ते पालयत इति [12] वर्तमानसामीप्ये वर्तमानवन्निर्देशः। स्मेत्यध्याहारो वा ॥ ४३, ४४ ॥

**इत्थमिति**। सत्राय सत्रं कर्तुं दीक्षिताः दीक्षां कृतवन्तः ॥ ४५ ॥

इति श्रीमद्भागवते प्रथमस्कन्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां सप्तदशोऽध्यायः ॥ १७ ॥

---

1. A,B °दे: 2 H,V °नोक्तः 3 B adds च 4 H,V add अपि 5. B adds तत् 6. H,V दानमित्यर्थः 7. B एकत्रावस्थानं 8 B स्त्रीसङ्गम्; H,V omit स्त्रीषु 9 B °तौ 10. A,B उद्भवि° 11. B °दित्याह 12. B adds च

**वीर॰** अतः त्वामेवंविधं न यत्र लक्षये हे धर्मभृतां श्रेष्ठ! तव अनुशासनं आतिष्ठन् अनुपालयन् नियमेन वत्स्ये, तत्स्थानं निर्देष्टुं त्वमर्हसि ॥ ३७ ॥

इत्थं अभ्यर्थितो राजा ततः तस्मै कलये वासस्थानानि ददौ। तान्येवाऽऽह — **द्यूतमिति**। येषु स्थानेषु द्यूतादिरूपः चतुर्विधः अधर्मः तानि ददौ इत्यर्थः। तत्र द्यूतं अक्षैः देवनं, पानं मद्यपानं, स्त्रियः स्त्रीणां सङ्गः, सूना भूतहिंसा ॥ ३८ ॥

पुनश्च स्थानान्तरं याचमानाय कलये प्रभुः परीक्षित् जातरूपं सुवर्णं स्थानमदात्। ततः पुनरपि स्थानान्तराणि याचमानाय अनृतादीनि पञ्च येषु तानि स्थानानि ददौ रजः क्रोधः ॥ ३९ ॥

प्रभवति अस्मात् इति प्रभवः अधर्मप्रभवः कलिः औत्तरेयेण परीक्षिता दत्तानि अमूनि पञ्च स्थानानि अनृतादीनि पूर्वोक्तानि द्यूतादीनि च तस्यौत्तरेयस्य आज्ञानुवर्ती सः कलिः न्यवसत् ॥ ४० ॥

यतो द्यूतादीनि कलेरावासस्थानानि अथ अतः बुभूषुः भवितुमिच्छुः आत्मसत्तां लब्धुमिच्छुः पुमान् एतानि द्यूतादीनि न सेवेत। बुभूषुरित्यनेन एतानि सेवमानोन्ततः स्थावरतां प्राप्नुवन् असत्प्रायो भवेदिति सूचितम्। राजा तु विशेषतः एतानि न सेवेत। कुतः? यतोऽयं धर्मशीलः धर्म एव शीलं वृत्तं यस्य सः। तच्च कुतः लोकपतिः लोकानां[1] पतिः पालयिता, अन्यथा राजानमवलोक्य प्रजा अपि तथा कुर्वत्यः[2] नश्येयुरिति भावः। एतच्च राज्ञः अनुचितमित्यभिप्रायेण विशिनष्टि। गुरुः हितोपदेष्टा ॥ ४१ ॥

ततः वृषस्य वृषरूपधर्मस्य नष्टान् तपआदिरूपान् त्रीन् पादान् प्रतिसन्दधे संयोजयामास परीक्षिदिति शेषः। तथा महीं चाश्वास्य सान्त्वयित्वा सम्यगवर्धयत् पुपोष ॥ ४२ ॥

**स** इति। स उक्तविधप्रभावः एष परीक्षित् एतर्हि अधुना अनतिकाले विप्रकृष्टकाले अरण्यं विविक्षता प्रवेष्टुमिच्छता पितामहेन राज्ञा युधिष्ठिरेण उपन्यस्तं प्रदत्तं पार्थिवस्य सार्वभौमस्योचितं सिंहासनं अध्यास्ते। "वर्तमानवद्वे" ति भूते लट्॥ ४३॥

**कौरवश्रेष्ठः** श्रिया सार्वभौमश्रिया उल्लसन् प्रकाशमानः विपुलकीर्तिः चक्रवर्ती चक्रं भूमण्डलं वर्तयति पालयतीति तथाभूतः। राजर्षिः महाराजः परीक्षित् गजाह्वये पुरे अधुना वर्तमानसन्निकृष्टे भूतकाले आस्ते आस्त॥ ४४॥

न केवलं उक्त एव तस्य प्रभावः, किन्तु इत्थंभूता अन्ये च प्रभावाः यस्य, तथाभूतोऽयमभिमन्योः सुतः नृपः परीक्षित् अत एवाधुना तस्याभावेऽपि तद्भयात् कलेः अत्र देशे प्रवेशाभावादेव भवतां इदं सत्रं प्रवर्तत इत्याह — **यस्येति**। यस्य परीक्षितः क्षोणीं पालयतः अत्रापि वर्तमानसामीप्ये भूते लटः शत्रादेशः, पालितवतः सतः। अपनीतेऽपि घनसारे तत्पेटिकायां तद्वासनानुवृत्तिवत् तदाज्ञाचक्रानुवृत्तेरेव हेतोः यूयं सत्राय कृतसङ्कल्पाः वर्तध्वे, अन्यथा कलिना अभिभूतं सत्रमिदं न प्रवर्तेत इत्यर्थः॥ ४५॥

इति श्रीमद्भागवते प्रथमस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां सप्तदशोऽध्यायः॥ १७॥

---

1. W adds जनानां 2. A,B कुर्वन्त्यः

**विज०** हे धर्मभृतां श्रेष्ठ! तत् स्थानं निर्देष्टुमर्हसि इत्यन्वयः। आतिष्ठन् [1] वत्स्ये वसामि॥ ३७॥

कानि तानि स्थानानि इति तत्राऽऽह — **द्यूतमिति**। द्यूतं देवनं, पीयत इति पानं मद्यं, सूना प्राणिहिंसनं, यत्र येषु स्थानेषु चतुर्विधः अधर्मः पापं स्यादिति शेषः॥ ३८॥

जातरूपं सुवर्णं तत्फलमाह — **तत** इति। ततो द्यूतादिभ्यः अनृतादीनि पापसाधनानि भवन्तीति शेषः॥ ३९॥

तस्य राज्ञः निदेशकृत् आज्ञाकृत् अधर्मप्रभवः अधर्मोत्पादकः अमूनि द्यूतादीनि पञ्च स्थानानि॥ ४०॥

बुभूषुः पुरुषार्थकामः लोकपतिः लोकपालः गुरुः उपदेष्टा धर्मस्येति शेषः॥ ४१॥

वृषस्य धर्मस्य॥ ४२॥

एतर्हि तदानीं पार्थिवानां राज्ञां उचितं आसनं सिंहासनं अध्यास्ते इति लट् लङर्थः। अरं प्राप्तं रक्षतीत्यरण्यं वनं विविक्षता प्रवेष्टुकामेन पितामहेन पितुः पित्रा युधिष्ठिरेण उपन्यस्तं दत्तं आसनं अध्यास्ते इति "अधिशीङ्स्थाऽऽसां कर्म" (अष्टा. 1-4-46) इति सप्तम्यर्थे द्वितीया। बृहच्छ्रवाः महाकीर्तिः॥ ४३, ४४॥

यस्य क्षोणीं पालयतः सतः यूयं सत्राय यज्ञविशेषाय दीक्षिताः सोऽयमभिमन्युसुतो नृपः इत्थम्भूतानुभावः, कल्यादिबन्धनलक्षणसामर्थ्योपेत इत्यन्वयः ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां
टीकायां प्रथमस्कन्धे सप्तदशोऽध्यायः ॥ १७ ॥

---

1 K,M add अनुतिष्ठन्

**रा॰ कृ॰** तत् तस्मात् हे धर्मभृतां श्रेष्ठ! ते अनुशासनं आतिष्ठन् यत्रैव नियतः निर्भयः वत्स्ये तत्स्थानं मे निर्देष्टुं नामग्रहणेन सूचयितुं अर्हसि ॥ ३७ ॥

अभ्यर्थितः एवं कलिना सम्प्रार्थितः राजा तदा तस्मै कलये द्यूतं, पानं, स्त्रियः स्त्रीसङ्ग इत्यर्थः। सूना हिंसा इत्येवं चतुर्विधः अधर्मः यत्र वर्तते तानि स्थानानि ददौ दत्तवान् ॥ ३८ ॥

पुनश्च याचमानाय कलये प्रभुः परीक्षित् जातरूपं काञ्चनमदात् दत्तवान्। ततः काञ्चनदानात् अनृतं, मदः, कामः, रजश्च, इत्येतानि चत्वारि स्थानानि पञ्चमं स्थानं वैरं चादात् ॥ ३९ ॥

अधर्मप्रभवः अधर्मकारणभूतः कलिः तन्निदेशकृत् तस्य परीक्षितः निदेशकृत् आज्ञाकारी सन् औत्तरेयेण उत्तरातनयेन परीक्षिता दत्तानि अमूनि पूर्वोक्तानि पञ्चस्थानानि न्यवसद्धि निश्चयेन तेषु निवासमकरोत्।

काञ्चनगोपनेन असत्यमदकलहप्राणिवधादि पापबुद्धिः प्रजासु प्रतन्यते। परजीवितावश्यकतानुसन्धाननिरपेक्षप्रवृत्तिः, स्वार्थसम्पादनाय निष्किञ्चनानां नियोजनं, अस्पृश्यतायोग्यतानैरपेक्ष्येण कस्मिंश्चित्कुले जातानां वृत्तिप्रकल्पनादयश्च 'मद'पदेन व्यवह्रियन्ते। मिथ्यागणनं अन्येष्वविभक्तस्य धनकाञ्चनादेः गोपनं असत्येऽन्तर्भवति। प्रयोजनानपेक्षया विलासार्थं अन्नवस्त्रगृहाद्यनुभवेच्छा कामे पर्यवस्यति। अल्पतरवेतनदानेन अनल्पकार्यकरणदुर्भरभारवहनादिषु भृत्यानां प्रवर्तनादिकं च हिंसात्वेन व्यपदिश्यते। तथा च केषुचित् स्थानेषु कलिधर्मप्रवर्तनया दुष्टपीडनात् साधारणप्रजासंरक्षणं साध्यं भवति। तथाहि — मक्षिकापिपीलिकादिबाहुल्योपद्रवसमये गृहकोणेषु गुडशर्करादिमिश्रितरज्जुतण्डुलचूर्णादिनिक्षेपेण तदुपद्रवतीव्रतां यथा निवारयितुं वयं शक्नुमः तथा राष्ट्रे च राजापि दुष्टान् तच्चित्ताकर्षकस्थानप्रवृत्तिनिरतान् विधाय शिष्टजनसंरक्षणं कुर्यादिति भावः।

तदेवं परीक्षिदपि कलिं निगृह्य धर्मं पादचतुष्टयपूर्णमकरोदिति ज्ञायते ॥ ४० ॥

अथ बुभूषुः भवितुमिच्छुः आत्मस्थितिं कामयमानः इत्यर्थः, पुरुषः क्वचित् कस्मिन्नपि देशे काले वा एतानि कलिस्थानानि पूर्वोक्तानि न सेवेत। विशेषतः विशिष्य धर्मशीलः धर्मस्वभावः लोकपतिः लोकपालकः, गुरुः लोकाय हितोपदेष्टा राजा एतानि नैव सेवेतेति पूर्वेणान्वयः ॥ ४१ ॥

अनन्तरं परीक्षित् वृषस्य वृषरूपधर्मस्य नष्टान् भग्नान् तपः शौचं दया चेति त्रीन् पादान् प्रतिसन्दधे प्रतिसंयोजयामास। एवं महीं चाश्वास्य समवर्धयत् सम्यगपालयत् भक्तिमार्गप्रवर्तनेन, पाषण्डमतदूरीकरणेन, कृष्यादिना च प्रजापालनमकरोदिति भावः ॥ ४२ ॥

सः पूर्वोक्तप्रभावः एषः परीक्षित् एतर्हि सम्प्रति अरण्यं विविक्षता प्रवेष्टुमिच्छता पितामहेन राज्ञा युधिष्ठिरेण उपन्यस्तं दत्तं पार्थिवोचितं सार्वभौमस्य उचितमनुरूपं आसनं सिंहासनं अध्यास्ते अधिष्ठितवान् ॥ ४३ ॥

महाभागः बृहच्छ्रवाः अधिककीर्तिः चक्रवर्ती स राजर्षिः परीक्षित् कौरवेन्द्रश्रिया कौरवेन्द्राणां युधिष्ठिरादीनां श्रिया शोभया उल्लसन् प्रकाशमानः सन् गजाह्वये हस्तिनापुरे अधुना आस्ते आसीदित्यर्थः ॥ ४४ ॥

यस्य परीक्षितः क्षोणीं पालयतस्ततः यस्मिन् राज्ञि भूमिं शासति सतीति यावत्। यूयं सत्राय दीक्षिताः प्रवृत्ताः अभवत। सोऽयमभिमन्युसुतो नृपः इत्थंभूतानुभावः पूर्वोक्तमहिमोपेतः ॥ ४५ ॥

इति श्रीमद्भागवते प्रथमस्कन्धे
श्रीराधाकृष्णप्रणीतायां सुधीसुधायां व्याख्यायां
सप्तदशोऽध्यायः ॥ १७ ॥



# अष्टादशोऽध्यायः

सूत उवाच

यो वै द्रौण्यस्त्रविप्लुष्टो न मातुरुदरे मृतः ।
अनुग्रहाद्भगवतः कृष्णस्याद्भुतकर्मणः ॥ १ ॥

ब्रह्मको[1]पोत्थिताद्यस्तु तक्षकात् प्राणविप्ल[2]वात् ।
न सम्मुमोहोरुभयात् भगवत्यर्पिताशयः ॥ २ ॥

उत्सृज्य सर्वतस्सङ्गं विज्ञाता[3]जितसं[4]स्थितिः ।
वैयासकेर्जहौ शिष्यो गङ्गायां स्वं कलेवरम् ॥ ३ ॥

नोत्तम[5]श्लोकवार्तानां जु[6]षतां तत्कथामृतम् ।
स्यात्सम्भ्रमोन्तकालेऽपि स्मरतां तत्पदाम्बुजम् ॥ ४ ॥

तावत्कलिर्न प्रभवेत् प्रविष्टोऽपीह सर्वतः ।
यावदीशो महानु[7]र्व्यामभिमन्यव एकराट् ॥ ५ ॥

यस्मिन्नहनि यर्ह्येव भगवानुत्ससर्ज गाम् ।
तदैवेहानुवृत्तोऽसौ अधर्मप्रभवः कलिः ॥ ६ ॥

नां[8]नुद्वेष्टि कलिं सम्राट् सारङ्ग इव सारभुक् ।
कुशलान्याशु सिद्ध्यन्ति नेतराणि कृतानि यत् ॥ ७ ॥

किं[9] नु बालेषु शूरेण कलिना धी[10]रभीरुणा ।
अप्रमत्तः प्रमत्तेषु यो वृ[11]को नृषु वर्तते ॥ ८ ॥

---

1 H.K.M.V °शापो° 2 K.M °वे 3 K.M °नार्जित° 4 H.V °सि° 5 B °मः श्लो° 6 AF GF कुर्वतां 7 H.V °र्व्यां आ°
8. AF GF नाभि° 9 K.M किमु बा° 10 K.M शूर° H.V °ऽधीर° 11 AF GF नृपो: W वृकोऽविषु

## श्रीधरस्वामिविरचिता भावार्थदीपिका

राज्ञस्त्वष्टादशे तस्य ब्रह्मशापो निरूप्यते ।
स चानुग्रह एवास्य जातो वैराग्यमावहन् ॥

परीक्षितः निर्याणं अत्याश्चर्यं वक्तुं तत्सम्भावनाय जन्माश्चर्यमनुस्मारयति — **यो वा** इति। विप्लुष्टो निर्दग्धस्सन्॥ १ ॥

**ब्रह्मेति**[1]। ब्रह्मकोपादुत्थितात् तक्षकात् यः प्राणविप्लवः प्राणनाशः तस्मात् यत् उरुभयं तस्मात् न सम्मुमोह। तत्र हेतुः यस्तु भगवत्येव अर्पिताशय इति॥ २ ॥

**उत्सृज्येति**। किन्तु वैयासकेः[2] शुकस्य शिष्यस्सन्। विज्ञाता अजितस्य श्रीहरेः संस्थितिः तत्त्वं येन सः॥ ३ ॥

न[3] चैतच्चित्रमित्याह — **नेति**। उत्तमश्लोकस्यैव वार्ता येष्वत[4] एव नित्यं तत्कथारूपममृतं जुषतां[5] सम्भ्रमः मोहः न स्यात्॥ ४ ॥

तस्मिन् राज्ञि सुतरां तत्र चित्रमित्याशयेन आह — **तावदिति**। अभिमन्योः पुत्रः एकराट् चक्रवर्ती ईशः पतिः यावत्[6]॥ ५ ॥

ननु तदा कलेः अप्रवेश एवास्तु प्रविष्टोऽपि न प्राभवदिति[7] कुतस्तत्राह — **यस्मिन्निति**। यस्मिन्नहनि यर्हि यस्मिन्नेव क्षणे गां पृथ्वीं अनुवृत्तः प्रविष्टः। अधर्मस्य प्रभवः यस्मिन्॥ ६ ॥

ननु अधर्महेतुं कलिं सर्वथा किं न हतवान् तत्राह — **नानुद्वेष्टीति**। सारङ्गः भ्रमर इव सारभुक् सारग्राही। सारमाह — यत् यस्मिन् कुशलानि पुण्यानि आशु सङ्कल्पमात्रेण फलन्ति। इतराणि पापानि आशु न सिद्ध्यन्ति; यतः तानि कृतान्येव सिद्ध्यन्ति न तु सङ्कल्पितमात्राणीति॥ ७ ॥

ननु दोषाधिक्याद्द्वेष एव युक्तः। न धीरेषु तस्याकिञ्चित्करत्वात् इत्याह — **किन्नु** इति। किं नु तेन भवेत्। बालेषु अधीरेषु अप्रमत्तः अवहितः[8] सन् यो वृक इव वर्तते॥ ८ ॥

---

1. H,V °शापोत्थि° 2 H,V °सि° 3 H,V नैतच्चि° 4 V येषु तत 5 H,V जुषमाणानां 6 B,H,V ता° 7 H,V प्रभवेदि° 8 B सावधानः

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अथैतत्प्रबन्धपिपृच्छिषां उद्बोधयितुं पारीक्षितं वृत्तान्तं समासतः वदन्नुपसंहरति — **य** इति दशभिः। यो वै परीक्षित् मातुरुदरे द्रौण्यस्त्रेण विप्लुष्टः दग्धोऽपि अद्भुतकर्मणः कृष्णस्य भगवतोऽनुग्रहात् न मृतः॥ १ ॥

यश्च ब्रह्मकोपेन ब्राह्मणशापात्मकेन उत्थितात् समुत्थितात् प्राणानां विप्लवः नाशः यस्मात्, उरुभयं यस्मात् तक्षकात् न सम्मुमोह मोहं न प्राप्तः, नाबिभेदित्यर्थः। कथम्भूतः ? भगवत्येव अर्पितः आशयः अन्तःकरणं येन तथाभूतस्सन्॥ २ ॥

स राजा सर्वतः सर्वत्र देहतदनुबन्ध्यादिषु सङ्गमुत्सृज्य वैयासकेः शुकस्य शिष्यो भूत्वा विज्ञातेऽजिते भगवति संस्थितिः निष्ठा यस्य सः स्वकलेबरं गङ्गायां जहौ तत्याज ॥ ३ ॥

मोहाभावमेव सहेतुकमुपपादयति — **नेति**। उत्तमश्लोकस्य भगवतः वार्ता येषां तेषां न भयं मोहः वा अस्तीत्यर्थः। किमु[1] तस्योत्तमस्य उत्तमश्लोकस्य कथामृतं जुषतां सेवमानानां तत्पदाम्बुजं स्मरतां अन्तकालेऽपि सम्भ्रमः[2] स्यात् ॥ ४ ॥

सिंहावलोकनन्यायेन यस्य पालयतः क्षोणीं इत्यनेन अभिप्रेतमुपपादयति — **तावदिति**। इह लोके सर्वत्र प्रविष्टोऽपि कलिः यावदुर्व्यां अभिमन्युसुत एकराट् स्वतुल्यराजान्तररहितः ईश्वरः अधिपतिः बभूव तदाज्ञा वा यावदनुवृत्ता बभूव तावत् कलिः न प्रभवेत् न समर्थो बभूव ॥ ५ ॥

कदा प्रविष्टः इत्यत्राह — यस्मिन्नहनि यर्ह्येव क्षणे भगवान् कृष्णः गां भूमिं उत्ससर्ज तत्याज, तस्मिन्नेवाहनि क्षणे चा[3]सावधर्मप्रभवः कलिः अनुप्रवृत्तः प्रविष्टो बभूव ॥ ६ ॥

ननु कलिं कुतो न हतवानित्यत्राह — **नेति**। सम्राट् सार्वभौमः परीक्षित् कलिं नानुद्वेष्टि तन्मरणपर्यन्तं द्वेषं न कृतवानित्यर्थः। वर्तमानसामीप्ये लट्। कुतः यतः सारङ्गः इव भृङ्गवत् सारभुक् सारानुभविता सारग्राहीति यावत् सारङ्गो यथा कमलगतं सारं मकरन्दं गृह्णाति न तु तन्नाशयति तद्वत् कलिगतसारग्राहित्वात् न तं जघानेत्यर्थः। कोऽसौ तद्गतसारः[4] यज्जिघृक्षुस्तं नानुद्वेष्टीत्यत्राह[5] — कुशलानीति। यत् यस्मिन् कलौ कृतानि कुशलानि भगवन्नामकीर्तनादिरूपाणि पुण्यकर्माणि आशु सिद्ध्यन्ति भगवत्प्राप्तिमावहन्ति इतराणि अकुशलकर्माणि पापानीति यावत्। तान्याशु न सिद्ध्यन्ति, न फलदानि भवन्ति। एतत्सारभुक् नानुद्वेष्टि। अनेन कृतादियुगेषु कुशलानां चिरेण फलदत्वं इतरेषां तु आश्विति सूचितम् ॥ ७ ॥

ननु कलिना अभिभूतैः जनैः कुशलानि न कृतान्येव स्युः, येनाऽऽशु सिद्ध्येयुरित्यत्राह — **किन्नु** इति। बालेषु मूर्खेषु विषयभूतेषु शूरेण धीरेषु विवेकिषु तु भीरुणा कलिना किन्नु कृतं स्यात्? न कोऽप्यनर्थः कृतः स्यादित्यर्थः। तदेव दृष्टान्तेन दर्शयन् विशिनष्टि — यः कलिरे[6]विषु वृक इव प्रमत्तेष्वेव जनेषु अप्रमत्तो वर्तते ॥ ८ ॥

---

1 A.B किमुत्तमस्योत्तम° 2 A.B add एव 3 W वा° 4 W °तः सारः 5 W नाद्वेडित्य° 6 A.B °रधीरेषु वृक इव भ्रमते तेष्विव जनेषु सर्वतः वर्तते ॥ ८ ॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

पुनरपि भगवति भक्तिविधानार्थं तन्माहात्म्यमुच्यतेऽस्मिन्नध्याये। तदर्थं पारीक्षितं स्वर्याणमुपक्रमते — **य** इति। यः अद्भुतकर्मणः श्रीकृष्णस्य अनुग्रहात् द्रौण्यस्त्रदग्धोऽपि मातुः उत्तराया उदरे न मृतः ॥ १ ॥

यश्च ब्रह्मशापोत्थितात् ब्राह्मणशापप्रेरितात् तक्षकनागात् प्राणविप्लवे वि[1]नाशे प्राप्ते सति भगवत्यर्पितचित्तत्वात् मरणाख्योरुभयात् न सम्मुमोह ॥ २ ॥

सः परीक्षित् सर्वतः सर्वेषु राज्यादिषु स्नेहलक्षणं सङ्गं उत्सृज्य वैयासकेः श्रीशुकस्य शिष्यो भूत्वा तदुपदेशेन आत्मयोग्यं विज्ञानं स्वरूपबिम्बपरतत्त्वापरोक्षज्ञानं तेन आर्जिता सम्पादिता संस्थितिः मुक्तिः येन स तथोक्तः गङ्गायां प्रासादे स्वकलेवरं जहौ इत्यन्वयः ॥ ३ ॥

नैतदाश्चर्यं इत्याह — **नेति**। उत्तमश्लोकस्य वार्ता प्रसङ्गः येषां ते तथा उत्तमश्लोकस्य वार्ता जीविका येषां ते तथेति वा। तेषां श्रवणपुटेन तस्य हरेः कथामृतं जुषतां श्रवणव्याजेन सेवमानानां तस्य पादपद्मं च स्मरतां अन्तकाले सम्भ्रमो न स्यादित्यन्वयः। निरन्तरं हरिचरणनिषेवणेन आत्यन्तिकप्रलये सर्वदेहविरहमिच्छतां दैनन्दिनमरणभयं नास्तीति किं वर्णनीयमित्यपिशब्दार्थः। उत्तमश्लोकवार्तादिष्वेकमेवालं, मिलितं किमु वर्णनीयमिति वा ॥ ४ ॥

मदीये राष्ट्रे न वर्तितव्यमित्यस्य अभिप्रायः कलेः सामर्थ्यप्रकटनाभावः, न तु प्रवेशाभाव इत्यभिप्रेत्याऽऽह — **तावदिति**। आभिमन्यवः अभिमन्योः पुत्रः परीक्षित् एकराट् चक्रवर्ती यावत् यावन्तं कालं उर्व्यां आस्त इत्यन्वयः। कीदृशः? महान् ईशः सप्तद्वीपवत्याः भूमेः अधिपतिः न मण्डलेश इत्यर्थः। तावत् तावन्तं कालं इह सम्प्रविष्टोऽपि कलिः न प्रभवेत् स्वशक्तिप्रकटनसमर्थो नाभूदित्यन्वयः ॥ ५ ॥

कदा नु उर्व्यां कलिः प्रविष्टः इति तत्राऽऽह — **यस्मिन्निति** ॥ ६ ॥

सारङ्गः मधुकर इव सारभुक् सारग्राही सम्राट् कलिं न द्वेष्टीत्यन्वयः। कुत इति तत्राऽऽह — कुशलानीति। कुशलानि सुकृतानि इतराणि पापानि यत् यस्मात् ॥ ७ ॥

इतोऽप्युदास्त इत्याह — **किमु** इति। धर्मज्ञानादिकं वृणोतीति आवृणोति नाशयतीति वृकः शूरेषु भीरुणा बालेषु शूरेण कलिना किमु? किं प्रयोजनम् ॥ ८ ॥

---

1 K,M जीवनाशे

## श्रीराधाकृष्णप्रणीता सुधीसुधा

**यो वै** परीक्षित् मातुः उदरे द्रौण्यस्त्रविप्लुष्टः द्रौणेः अश्वत्थाम्नः अस्त्रेण ब्रह्मास्त्रेण दग्धोऽपि अद्भुतकर्मणः भगवतः कृष्णस्यानुग्रहात् न मृतः। यस्तु यो वा परीक्षित् भगवति अर्पिताशयः भगवदर्पितान्तःकरणः ब्रह्मकोपोत्थितात् प्राणविप्लवात् प्राणनाशकात् उरुभयात् तक्षकात् न सम्मुमोह सम्मोहं न प्राप्तवान्। स राजा सर्वतः देहतदनुबन्धिपुत्रादिषु सङ्गं उत्सृज्य वैयासिकेः व्यासपुत्रस्य शुकस्य शिष्यो भूत्वा विज्ञाताजितसंस्थितिः विज्ञातहरितत्त्वस्सन् [illegible] कलेबरं जहौ त्यक्तवान् ॥ १, २, ३, ॥

उत्तमश्लोकवार्तानां भगवद्वार्तानां अत एव तत्कथामृतं भगवत्कथासुधां जुषतां पिबतां अत एव च तत्पदाम्बुजं भग[illegible] स्मरतां जनानामिति शेषः। अन्तकालेऽपि सम्भ्रमो न स्यात् न भवतीति भावः ॥ ४ ॥

महान् भगवत्सम्पादितोत्कर्षवान् एकराट् एकैकः प्रभुः आभिमन्यवः अभिमन्युपुत्तः परीक्षित् यावत् यावत्पर्यन्तं उर्व्यां ईशः अधिपतिः अभूदिति शेषः, तावत् तावत्पर्यन्तं कलिरिह परीक्षित्पालिते राज्ये सर्वतः प्रविष्टोऽपि न प्रभवेत् स्वप्रभावं दम्भानृतादिदोषं प्रकटयितुं न समर्थोऽभूत्॥ ५॥

यस्मिन्नहनि दिने यर्हि एव यस्मिन् एव क्षणे भगवान् श्रीकृष्णः गां भुवं उत्ससर्ज **त्यक्तवान्** तदैव तस्मिन् दिने तस्मिन्नेव क्षणे अधर्मप्रभवः अधर्मकारणभूतोऽसौ कलिरिह भुवि अनुप्रवृत्तः प्रविष्टः॥ ६॥

सारङ्ग इव भ्रमर इव सारभुक् सारग्राही स सम्राट् परीक्षित् कलिं नानुद्वेष्टि। तन्मरणपर्यन्तं तस्मिन् कलौ द्वेषं न कृतवानित्यर्थः। दोषसत्त्वेऽपि कलेरनिग्रहे कारणमाह — यत् यस्मिन् कलौ कृतानि कुशलानि भगवन्नामसङ्कीर्तनादीनि पुण्यकर्माणि आशु शीघ्रमेव सिद्ध्यन्ति फलप्रदानि भवन्ति। इतराणि पापानि तु आशु न सिद्ध्यन्ति न फलन्ति। यथा भ्रमरः कुसुमगतं सारं मकरन्दं गृह्णाति न तु कुसुमं नाशयति तथा परीक्षिदपि कलिगतं सारं गृहीत्वा न कलिं हतवान्। कलिसारो यथा — लोके हि धर्मात्मानः कलिप्रवर्तिताधर्मव्यतिकरसन्त्रस्ताः स्वयं सत्प्रवर्तनादृतमतयः भवन्ति। सत्स्वपि दुरूहेषु तदाचरणपरायणाः एव बध्यन्ते बाध्यन्ते च, यानवलोक्य शिष्टाः जना· तदाचरणात् बिभ्यति। एवमधर्मभीताः यथाकथञ्चित् जीवितं नयन्तस्ते कदाचिद्भगवति भगवत्प्रीणनकर्मस्वपि बद्धबुद्धयः भवन्ति। तदा प्रभृति च ते क्रमशः सुपरिणतमतयो विराजन्ते। अनया दृशा विचार्यमाणे यत्र कुत्रचित्कलेः अवस्थानमपि वरमेव॥ ७॥

वृकः वृकतुल्यः यः कलिः प्रमत्तेषु अनवहितेषु नृषु जनेषु अप्रमत्तः अवहितस्सन् वर्तते, बालेषु अविवेकिषु शूरेण धीरभीरुणा धीरेषु विवेकिषु भीरुणा तेन कलिना किं नु? किं वा अनिष्टं स्यात्? न किमपीति भावः।

अनवधानेनाजाविकात् अविं पृथग्भूतं वृको यथा निगृह्य निहन्ति, तथा धीरभीरुः कलिरपि प्रमत्तमेव जनं स्वायत्तीकरोति। प्रमत्तता चात्र त्रिगुणव्यापारप्रवर्तिता माया। सैषा सर्वजीवेषु सर्वान्तर्यामिणः प्रकृत्यतीतस्य परमात्मनः दर्शनात् निवर्तते। तद्व्यतिरेकेण जीवेषु जीवत्वदर्शनात् द्रष्टा तत्तज्जीवस्वसम्बन्धानुबन्धिप्रयोजनसिद्ध्यसिद्धिप्रयुक्तरागद्वेषाभ्यां अनुभवति सुखदुःखादिद्वन्द्वम्। ईदृशप्रमादभरितबुद्धिमेव कलिः निग्रहीतुं प्रभवति। तथा च विश्वं विष्णुमयं पश्यत्सु भागवतेषु कलिः अकिञ्चित्कर एवेति पर्यवस्यति॥ ८॥

**उपवर्णितमेतद्वः पुण्यं पारीक्षितं मया।**
**वासुदेवकथोपेतं आख्यानं यदपृच्छत॥ ९॥**

**या याः कथा भगवतः कथनीयोरुकर्मणः।**
**गुणकर्माश्रयाः पुम्भिः संसेव्यास्ता बुभूषुभिः॥ १०॥**

ऋषय[4] ऊचुः

सूत! जीव! समास्सौम्य! शाश्वतीर्विशदं यशः।
यस्त्वं शंससि कृष्णस्य मर्त्यानाममृतं हि नः॥ ११॥

कर्मण्यस्मिन्ननाश्वासे[5] धूमधूम्रात्मनां भवान्।
आपाययति गोविन्दपादपद्मासवं मधु॥ १२॥

तुलयाम लवेनापि न स्वर्गं नापुनर्भवम्।
भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताऽऽशिषः॥ १३॥

को नाम तृप्येद्रसवित्कथायां महत्तमैकान्तपरायणस्य।
नान्तं गुणानामगुणस्य जग्मुः योगेश्वरा ये भवपाद्ममुख्याः॥ १४॥

तं[6] नो भवान् वै भगवत्प्रधानः महत्तमैकान्तपरायणस्य।
हरेरुदारं[7] चरितं विशुद्धं शुश्रूषतां नो वितनोतु विद्वन्[8]॥ १५॥

स वै महाभागवतः परीक्षित् येनापवर्गाख्यमदभ्रबुद्धिः।
ज्ञानेन वैयासं[9]किशब्दितेन भेजे खगेन्द्रध्वजपादमूलम्॥ १६॥

---

1 AF GF °द्धि 2 H,V °श्रिताः 3 H,K,M,V सेव्यास्तास्ता 4 B शौनक उवाच 5 H,V °स्ये 6 H,K,M,V ततो 7 B,W °राच° 8 AF GF विद्वान् 9 H,V °सि°

**श्रीध०** **उपवर्णितमिति**। पारीक्षितं आख्यानं अपृच्छत पृष्टवन्तो यूयम्॥ ९॥

किं बहुना, नरैः एतावदेव कर्तव्यमिति सर्वशास्त्रा[1]र्थसारं कथयति — **या या** इति। कथनीयानि उरूणि कर्माणि यस्य तस्य गुणकर्मविषयाः बुभूषुभिः सद्भावमिच्छद्भिः॥ १०॥

पुनः विस्तरेण कथनार्थं सूतोक्तिं[2] तत्सङ्गञ्च अभिनन्दति — **सूतेति** त्रिभिः। शाश्वतीः समाः अनन्तरान् वत्सरान् जीव। अत्यन्तसंयोगे द्वितीया। विशुद्धं यशः कीर्तयसि। तच्चास्माकं मर्त्यानां अमृतं मरणनिवर्तकम्॥ ११॥

**कर्मणीति**। किञ्च अस्मिन् कर्मणि सत्रे अनाश्वासे[3] अविश्वसनीये वैगुण्यबाहुल्येन फलनिश्चयाभावात् धूमेन धूम्रः विवर्णः आत्मा शरीरं येषां तान् अस्मान् कर्मणि षष्ठी। आसवं मकरन्दम्। मधु मधुरम्॥ १२॥

**तुलयामेति**। भगवत्सङ्गिनः विष्णुभक्ताः तेषां सङ्गस्य यो लवः अत्यल्पः कालः तेनापि स्वर्गं तुलयाम समं न पश्याम। न च अपवर्गम्। सम्भावनायां लोट्। मर्त्यानां तुच्छा आशिषः राज्याद्या न तुलयामेति किमु वक्तव्यम्॥ १३॥

एवं सत्सङ्गमभिनन्द्य श्रवणौत्सुक्यमाविष्कुर्वन्ति — **को नामेति**। रसवित् रसज्ञः। महत्तमानां **एकान्तेन** परं अयनं आश्रयः यः[4] तस्य कथायां अगुणस्य प्राकृतगुणरहितस्य। कल्याणगुणानां अन्तं ये योगेश्वराः तेऽपि न जग्मुः। एतावन्त इति न परिगणयाञ्चक्रुः। भवः शिवः। पाद्मः ब्रह्मा च मुख्यौ येषां ते॥ १४॥

**तदिति**[5]। नः अस्माकं मध्ये भगवान् प्रधानं सेव्यः यस्य सः भवान् नः शुश्रूषतां उदारं परमपुरुषार्थप्रदं **हरेः** चरितं विस्तारयतु॥ १५॥

तच्च[6] शुकपरीक्षित्संवादेन कथयेत्याहुः — **स वा** इति द्वाभ्याम्। वैयासकिना श्रीशुकेन शब्दितेन कथितेन **येन** ज्ञानेन ज्ञानसाधनेन अपवर्ग इत्याख्या यस्य तत्। खगेन्द्रध्वजस्य हरेः पादमूलं भेजे॥ १६॥

---

1. B,H,V °र्थसारं 2 H,V °क्तं 3 H,V °स्ये 4 H,V यस्य 5 H,V तत इति 6. H,V तच्छुकपरीक्षित्संवादं नः

**वीर०** यत् यूयं मामपृच्छत तदेतत् वासुदेवस्य कथोपेतं अत एव शृण्वतां वदतां च पुण्यावहं एतत्परीक्षितः सम्बन्ध्याख्यानं मया वः युष्मभ्यं उपवर्णितम्॥ ९॥

पिपृच्छिषां उद्बोधयितुमेव साकल्येन भगवत्कथानां श्रोतव्यतामाह — **या** इति। कथनीयान्यनुरूपाणि बहूनि[1] कर्माणि चेष्टितानि यस्य तस्य भगवतो गुणाः कर्माणि च आश्रयाः विषयाः[2] यासां ताः या या कथाः ताः बुभूषुभिः पुम्भिः संसेव्याः॥ १०॥

यदुक्तं "उत्सृज्य सर्वतस्सङ्गं विज्ञाताजितसंस्थितिः। वैयासकेर्जहौ शिष्यः" (भाग. 1-18-3) इति शुकोपदिष्टैतत्पुराणजं[3]ज्ञानेन मुक्तः बभूवेति तद्वैयासक्युपदिष्टपुराणश्रवणद्वारा तज्जन्यज्ञानलिप्सुः पृच्छति शौनकः — **सूतेति** सप्तभिः। तावज्जन्ममरणाद्यनन्तदुःखावहदुस्सहसंसृतिक्षपणद्वारा निरतिशयानन्दरूपपरब्रह्मप्राप्तिहेतुं तत्कथामृतं पाययन्तं महोपकर्तारं सूतमाशास्ते सूतेति। हे सूत! हे सौम्य! त्वं शाश्वतीः समाः वत्सरान् जीव। "कालाध्वनोरत्यन्तसंयोगे" (अष्टा. 2-3-5) इति द्वितीया। कुत एवमाशास्य इत्यत्र तं विशिनष्टि — **यस्त्वं** कृष्णस्य विशदं विपुलं अमृततुल्यं यशः मर्त्यानां नः अस्मभ्यं शंससि कथयसि अतो हर्षातिशयादशास्य इति भावः॥ ११॥

तदेव व्यनक्ति — **कर्मणीति**। अनाश्वासे अविश्वसनीये निर्भयत्वानिमित्ते अस्मिन् यज्ञादिकर्मणि निष्ठानामिति शेषः धूमधूम्रात्मनां अज्ञानावृतमनसां यद्वा धूमेन यज्ञियेन[4] धूम्रः आत्मा शरीरं येषां केवलकर्मजडानामिति भावः। भवान् गोविन्दस्य पादपद्मयोः आसवं अमृतं मधु मधुरं पाययति॥ १२॥

यत एवमत एव स्वर्गमोक्षादयोऽपि न भगवत्सङ्गिसङ्गलेशेनापि तुल्याः इत्यभिप्रायेणाह — **तुलयाम** इति। भगवत्सङ्गिनः त्वादृशस्य यः सङ्गः तस्य लवेन लेशमात्रेणापि स्वर्गं अपुनर्भवं मोक्षं चापि न तुलयाम न तुल्यं मन्यामह इत्यर्थः। यतस्तेन स्वर्गमोक्षावेव न तुलयामः किं पुनः मर्त्यानां आशिषः अर्थकामादीन् तुलयाम इति॥ १३॥

ननु अश्रुतभगवद्गुणकर्मवत् किं पृच्छसि ? तत्राह — **क** इति। महत्तमानां एकान्तं परं उत्कृष्टं अयनं प्राप्यः प्रापकः आधारश्च; ईयते इत्ययनं, यन्त्यनेन इत्ययनं, यन्त्यस्मिन्नित्ययनं इति त्रिधा व्युत्पन्नानां अयनशब्दानां तन्त्रेण निर्देशात् तस्य भगवतः कथायां विषयभूतायां रसज्ञश्चेत् को नाम पुमान् तृप्येत न कोऽपीत्यर्थः। ननु श्रुतानामेव भगवद्गुणानां कर्मणां पुनः श्रवणेन को वा रसः निष्पद्यते इत्याशङ्कां निराकुर्वन् भगवन्तं विशिनष्टि — यस्यागुणस्य हेयगुणरहितस्य गुणानां अन्तं अवधिं रुद्रचतुर्मुखादयः योगेश्वराः[5] अपि न जग्मुः। अश्रुतानामपि गुणकर्मणां आनन्त्यात् श्रुतानामपि नवनवायमानत्वाच्च न कोऽपि तृप्येदिति भावः॥ १४॥

यत एवं अतो महत्तमैकान्तपरायणस्य हरेरुदारं विपुलमाचरितं चेष्टितं विशुद्धं शृण्वतां वदताञ्च विशुद्ध्यावहं भगवानेव प्रधानः मुख्याश्रयः[6] यस्य स भवान् हे विद्वन्! भगवद्गुणकर्मयाथात्म्याभिज्ञ! हरेरुदारं चरितं श्रोतुमिच्छतां नः अस्मभ्यं वितनोतु विस्तरतः[7] कथयतु इति यावत्॥ १५॥

सम्प्रति प्रष्टव्यं पृच्छति — **स वा** इति द्वाभ्याम्। स उक्तविधो महाभागवतः अनल्पबुद्धिः परीक्षित् येन वैयासकिशब्दितेन शुकोपदिष्टपुराणजेन ज्ञानेन गरुडध्वजस्य भगवतः पादमूलं भेजे प्राप्तः[8]॥ १६॥

---

1 W बहुलानि 2 A,B omit विषयाः 3 W °जन्य° 4 W °ज्ञो° 5 W °गी° 6 A,B मुख्य श्रेष्ठः 7 A,B विस्तारयतु 8 W प्राप

**विज०** उपसंहरति — **उपवर्णितमिति**॥ ९॥

यथेयं पारीक्षिती कथा भगवतः गुणकर्माश्रयत्वात् सेव्याऽऽसीत् तथा अन्या अपि तादृशः कथाः मुमुक्षुभिः सेव्या इत्याह — **या या** इति। कथनीयानि उरूणि कर्माणि यस्य स तथोक्तः। तस्य बुभूषुभिः मोक्षैककामैः[1]॥ १०॥

सूत! यस्त्वं श्रीकृष्णस्य विशदं यशोऽमृतं मरणधर्मिणामस्माकं शंससि हि यस्मात्तस्मात् आशीर्लक्षणम्। सोमार्ह! भद्रेति वा, सुमायाः वत्सेति वा, सुमा महर्षिभार्या[2], शाश्वतीः समाः बहुवर्षान् जीव शतवर्षान् उपर्यपि प्राणान् धारयेत्येकान्वयः॥ ११॥

"कर्मणा ज्ञानमातनोति" इत्यादिश्रुतिप्रत्ययात् अन्तःकरणशुद्धिद्वारा हरिज्ञानलब्धये यागपरम्पराभिः अनाश्वासे श्वासमोक्षानवसरे अन्यत्र सङ्गावसरविधुरे वा, अत एव हरिकथावर्णने सावसरे अस्मिन्नुपक्रान्ते सत्राख्ये कर्मणि हर्युद्देशेन सुहुतहविराज्याद्युद्भूतधूमेन धूम्र आत्मा मनआदीन्द्रियजातं येषां ते तथोक्ताः, कर्मणि षष्ठीदर्शनात् तेन धूमेन धूम्रतया पवित्रीकृतशरीरान् अस्मान् मधु मधुरं गोविन्दपादपद्मासवं आपाययतीत्यन्वयः। पादपद्मात् आसूयत इति आसवं मधु वा। अनेन सत्रयागः सफलः जात इत्युक्तं भवति॥ १२॥

दीर्घकालीनसत्रकरणमन्तरेण अल्पकालीनयज्ञकरणेन शुद्धान्तःकरणजन्यज्ञानात् मोक्षः सुकरः इत्याशङ्क्य आह — **तुलयाम** इति। भगवत्सङ्गिनां वैष्णवानां सङ्गस्य सेवालक्षणस्य सकाशात् यत्सुखं तस्य लवेनापि

लवलक्षणकालावच्छिन्नभागेन सह स्वर्गं दुःखासम्भिन्नप्रदेशं नाकलक्षणं अपुनर्भवं कैवल्यं सम्यक् स्वरूपाभिव्यक्तिजननाभावलक्षणं न तुलयामः तुलयितुं न प्रभवामः। लडर्थे लोट्; प्रार्थनायां वा। मर्त्यानां मर्त्यशरीर भोगराज्यादि सम्पदः किमुत? न तुलयामेति किं वक्तव्यम्? सायुज्यादिविशिष्टफलहेतुत्वेन अन्तरङ्गत्वात् न सम इत्यर्थः। क्षिप्रमुक्तौ तदनन्तरं पूर्वस्मादतिरिक्तफलविशेषाभावात् चिरसमयस्य सङ्कीर्णमहत्सेवादिलक्षणसङ्गस्य अतिसुखहेतुत्वेन तस्य चेह दीर्घसत्रकरणव्याजेन सम्भवादिदमेव सर्वैरनुमन्तव्यमित्युक्तमनेनेति भावः ॥ १३ ॥

श्रुतभगवत्कथानामप्यस्माकं न तत्कथायां अलम्बुद्धिरिति आशयवन्त आहुरित्याह — को नामेति। ये भवपाद्ममुख्याः भवः शिवः पाद्मो ब्रह्मा तौ मुख्यौ येषां ते तथोक्ता योगेश्वराः तत्तदधिकारियोग्यमोक्षोपायोपदेष्टृप्रधानाः ते अगुणस्य सत्त्वादिगुणरहितस्य सर्वकार्येषु प्रधानस्य वा; यस्य ज्ञानादिगुणानां अन्तं अवसानं न जग्मुः, को नाम पुमान् तस्य मुक्तामुक्तब्रह्मादीनां महत्तमानां एकान्ततः नियमेन परायणस्य उत्तमाश्रयस्य महत्तमेभ्यः परायाः उत्कृष्टायाः श्रियोऽप्ययनस्य वा हरेः कथायां तृप्येत् अलम्बुद्धिमाप्नुयादित्यन्वयः। कीदृशः? रसवित् सारज्ञानी विद्वान्॥ १४ ॥

ततः किमिति तत्राऽऽह — तत इति। अलम्बुद्धिः नास्तीति यतः ततः हे विद्वन्! भगवतां सौभाग्यवतां पुंसां प्रधानः भवान् हरेरुदारं चरितमस्माकं वितनोतु विस्तारयतु इत्यन्वयः। भगवानेव प्रधानो यस्य मते स तथेति वा। महत्तमश्च, एकान्तश्च, परायणश्चेति महत्तमैकान्तपरायणः महतां ब्रह्मादीनामतिशयेन श्रेष्ठः अन्ते प्रलये एक एव न द्वितीयोऽस्ति, पराः मुक्ताः तेषामाश्रयः शुश्रूषतामित्यनेन श्रवणशीलत्वं स्वाभाविकमिति दर्शयति॥ १५॥

तदिति किं तत्राऽऽह — स वा इति। अदभ्रबुद्धिः पूर्णज्ञानः महाभागवतः परीक्षित् वैयासकिना शुकेन शब्दितेन उपदिष्टेन श्रुतेन ज्ञानेन येन अपवर्गाख्यं खगेन्द्रध्वजस्य गरुडध्वजस्य पादमूलं भेजे इत्यन्वयः। वा इत्यनेन आख्यानस्य इष्टसाधनावबोधकत्वेन उपादेयत्वं दर्शयतीति॥ १६॥

---

1 K,M मोक्षकामैः 2 B,K,M रोमहर्षिभार्या 3 A 'वस्त्री'

रा॰ कृ॰ यदपृच्छत यत् यूयं मां पृष्टवन्तः तदेतत् पारीक्षितं परीक्षित्सम्बन्धि वासुदेवकथोपेतं वासुदेवस्य कथया सहितं पुण्यं पृच्छतां शृण्वतां वदतां च पुण्यावहं आख्यानं वः युष्मभ्यं मया उपवर्णितं कथितमित्यर्थः ॥ ९ ॥

कथनीयोरुकर्मणः वर्णनीयबहुकर्मणः भगवतः श्रीकृष्णस्य गुणकर्माश्रयाः गुणाः भक्तवात्सल्यादयः, कर्माणि गोवर्धनोद्धरणादीनि, आश्रयः विषयः यासां ताः या याः कथाः सन्तीति शेषः। तास्ताः कथाः बुभूषुभिः स्वरूपभूतसत्तामिच्छद्भिः पुम्भिः। अत्र 'पुम्भि'रिति पदं स्त्रीणामप्युपलक्षणम्। संसेव्याः निरन्तरं श्रोतव्या इत्यर्थः। अन्यथा स्वरूपनिराकरणेन संसारदुःखानुभवः भवतीति भावः॥ १० ॥

हे सौम्य! प्रियदर्शन! सूत! यस्त्वं मर्त्यानां मरणधर्मवतां नः अस्माकं अमृतं मरणनिवर्तकं कृष्णस्य यशः कीर्तिं विशदं विशुद्धं शंससि कथयसि, तादृशस्त्वं शाश्वतीः समाः अनन्तान् संवत्सरान् जीव ॥ ११ ॥

अनाश्वासे फलनिश्चयाभावात् अविश्वसनीयेऽस्मिन् कर्मणि सत्राख्ये कर्मणि आसक्तानामिति शेषः, धूमधूम्रात्मनां धूमेन यज्ञीयेन धूम्राः विवर्णाः आत्मानः शरीराणि येषां तेषां, धूमधूम्रात्मनः इति भावः। अस्मानिति शेषः। मधु मधुवत् स्वादुं गोविन्दपादपद्मासवं गोविन्दस्य पादपद्मयोः आसवं संसारदुःखविस्मारकं मकरन्दं भवान् आपाययति सम्यक् श्रावयतीति भावः ॥ १२ ॥

भगवत्सङ्गिसङ्गस्य भगवत्सङ्गिनः भगवद्भक्तस्य भवादृशस्य सङ्गस्य लवेनापि लेशमात्रेणापि स्वर्गं नाकं वा अपुनर्भवं जन्मराहित्यं मोक्षाख्यं वा न तुलयामः सदृशं न पश्यामः। मर्त्यानां मरणशीलानां आशिषः आशीर्वादान् न तुलयाम इति किमुत? किमु वक्तव्यम्? ॥ १३ ॥

अगुणस्य हेयगुणरहितस्य गुणैः अबद्धस्येति वा यस्य भगवतः गुणानां अलौकिकगुणानां अन्तं योगेश्वराः ये भवपाद्ममुख्याः शिवब्रह्मादयः न जग्मुः भगवतः गुणाः एतावन्त इति परिगणनां कर्तुं न प्राभवन्, तस्य महत्तमैकान्तपरायणस्य महत्तमाः परमविवेकिनः भागवताः तेषामेकान्तेन परमयनं उत्कृष्टः आश्रयः यः तस्य भगवतः इति शेषः। कथायां को नाम रसवित् रसाभिज्ञः तृप्येत तृप्तिं प्राप्नुयात्? ॥ १४ ॥

ततो हेतोः हे विद्वन्! सूत! भगवत्प्रधानः भगवानेव प्रधानः मुख्यतया सेव्यो यस्य सः भवान् महत्तमैकान्तपरायणस्य हरेः श्रीकृष्णस्य विशुद्धमुदारं चरितं शुश्रूषतां नोऽस्माकं वितनोतु विस्तरेण कथयतु ॥ १५ ॥

स वै प्रसिद्धः महाभागवतः विषयोपभोगवैमुख्येन निरन्तरं भगवद्भजनपरायणः अदभ्रबुद्धिः महामतिः परीक्षित् वैयासकिशब्दितेन शुकोपदिष्टेन येन ज्ञानेन ज्ञानसाधनेन आख्यानेन अपवर्गाख्यं मोक्षाख्यं खगेन्द्रध्वजपादमूलं खगेन्द्रध्वजस्य महाविष्णोः पादमूलं भेजे प्राप्तवान् तत्पारीक्षितं नः कथय ॥ १६ ॥

तन्नः परं पुण्यमसंवृतार्थमाख्यानमत्यद्भुतयोगनिष्ठम्।
आख्याह्यनन्ताचरितोपपन्नं पारीक्षितं भागवताभिरामम् ॥ १७ ॥

सूत उवाच

अहो वयं जन्मभृतोऽद्य हाऽऽस्म वृद्धानुवृत्त्याऽपि विलोमजाताः।
दौष्कुल्यमाधिं विधुनोति शीघ्रं महत्तमानामभिधानयोगः ॥ १८ ॥

कुतः पुनर्गृणतो नाम तस्य महत्तमैकान्तपरायणस्य।
योऽनन्तशक्तिर्भगवाननन्तो महद्गुणत्वाद्यमनन्तमाहुः ॥ १९ ॥

एतावताऽलं ननु सूचितेन गुणैरसाम्यानतिशायनस्य।
हित्वेतरान्प्रार्थयतो विभूतिर्यस्याङ्घ्रिरेणुं जुषतेऽनभीप्सोः ॥ २० ॥

अथापि यत्पादनखावसृष्टं जगद्विरिञ्चोपहृतार्हणाम्भः।
सेशं पुनात्यन्यतमो मुकुन्दात् को नाम लोके भगवत्पदार्थः॥ २१॥

यत्रानुरक्ताःसहसैव धीरा व्यपोह्य देहादिषु सङ्गमूढम्।
व्रजन्ति तत्पारमहंस्यमन्त्यं यस्मिन्नहिंसोपशमस्वधर्मः॥ २२॥

अहं हि पृष्टोऽर्यमणो भवद्भिराचक्ष आत्मावगमोऽत्र यावान्।
नभः पतन्त्यात्मसमं पतत्त्रिणः तथा समं विष्णुगतिं विपश्चितः॥ २३॥

एकदा धनुरुद्यम्य विचरन् मृगयां वने।
मृगाननुगतश्श्रान्तः क्षुधितस्तृषितो भृशम्॥ २४॥

---

1 A °वि° 2. K,M महात्मन् 3 AF,GF बत 4. AF,GF °म्यैरति°, K,M °म्येऽनति° 5. K °शायनेस्य; M शायितेऽस्य 6. K,M,W °य°, AF,GF ते पार° 7 K,M °सत्यं 8. K,M °रमश्च; W °रम° 9 K,M °स्य गुणान्

**श्रीध० तदिति**। तदसंवृतार्थं यथा[1] तथा आख्याहि। तदेव निर्दिशन्ति[2]। परीक्षिते कथितं पारीक्षितं आख्यानं श्रीभागवतं पुराणम्। परं पुण्यं सत्त्वशोधकम्। अत्यद्भुते योगे निष्ठा यस्य। अनन्तस्याचरितैः उपपन्नं युक्तम्। अत एव भागवतानां अभिरामं प्रियम्। एतैर्विशेषणैः कर्मज्ञानभक्तियोगप्रकाशकत्वं दर्शितम्॥ १७॥

श्रीभागवतव्याख्याने लब्धप्रसङ्गं महतामादरपात्रं आत्मानं श्लाघते द्वाभ्यां — **अहो** इति। अहो इत्याश्चर्ये। ह इति हर्षे। वयमिति बहुवचनं श्लाघायाम्। विलोमजाताः प्रतिलोमजा अपि अद्य जन्मभृतः सफलजन्मानः आस्म जाताः। वृद्धानां अनुवृत्त्या आदरेण। ज्ञानवृद्धः शुकः तस्य सेवयेति वा। यतो दुष्कुलत्वं तन्निमित्तमाधिं च मनःपीडाञ्च महत्तमानां अभिधानयोगः लौकिकोऽपि सम्भाषणलक्षणः सम्बन्धः विधुनोति अपनयति॥ १८॥

**कुत** इति। कुतः पुनः किम्पुनर्वक्तव्यं तस्य अनन्तस्य नाम गृणतः पुंसः महत्तमानामभिधानयोगः दौष्कुल्यं विधुनोतीति। यद्वा नाम गृणतः पुनः कुतः दौष्कुल्यमिति। यद्वा गृणतः पुंसः तस्य नाम दौष्कुल्यं विधुनोतीति किं वक्तव्यमिति कैमुत्यन्यायमेवाऽऽह। अनन्ताः शक्तयः यस्य। स्वतोऽप्यनन्तः। किञ्च महत्सु गुणा यस्य सः महद्गुणः तस्य भावः तत्त्वं तस्मात्। यं गुणतोऽप्यनन्तमाहुः॥ १९॥

एतत्प्रपञ्चयति त्रिभिः — **एतावतेति**। तस्य यदसाम्यं अनतिशायनं च गुणैः तत्साम्यं तदाधिक्यं च अन्यस्य नास्तीत्यस्यार्थस्य ज्ञानमेतावता[3] सूचितेनालं पर्याप्तं कः तद्विस्तरतः वक्तुं शक्नोति[4]। तदेवाऽऽह — **इतरान्** ब्रह्मादीन् प्रार्थयतः प्रार्थयमानान् हित्वा विभूतिः लक्ष्मीः अनभीप्सोरपि यस्याङ्घ्रिरेणुं जुषते सेवते इति॥ २०॥

**अथेति**। अथेत्यर्थान्तरे। यस्य पादनखादवसृष्टं निस्सृतमपि विरिञ्चेनोपहृतं समर्पितं अर्हणाम्भोऽर्घ्यो-दकमीशसहितं जगत्पुनाति। विरिञ्चोपहृतं सेशमिति च तयोरप्युपासकत्वमुक्तम्। तस्मात् मुकुन्दव्यतिरिक्तः को नाम भगवत्पदस्य अर्थः स एव सर्वेश्वर इत्यर्थः॥ २१॥

**यत्रेति**। धीरास्सन्तः। ऊढं धृतं अन्त्यं परमकाष्ठापन्नम्। तदाह — **यस्मिन्नहिंसोपशमश्च स्वाभाविको धर्मः**॥ २२॥

**एवं स्वभाग्यमभिनन्द्य पारीक्षितोपाख्यानं वक्तुमाह — अहं हीति**। हे अर्यमाणः! हे सूर्याः! त्रयीमूर्तयः अत्र यावान् आत्मावगमः मम ज्ञानं तावदाचक्षे प्रवक्ष्यामि। तथा हि यथा पक्षिणः नभः आत्मसमं स्वशक्त्यनुरूपमेव उत्पतन्ति न तु कृत्स्नं, तथा विपश्चितोऽपि विष्णोर्गतिं लीलां समं स्वमत्यनुरूपमेव वदन्तीत्यर्थः॥ २३॥

सम्प्रति कथामुपक्षिपति — **एकदेति**॥ २४॥

---

1. B adds स्यात् 2. B,H,V °ति 3. B,V ज्ञानाय एता° 4. H,V add इत्यर्थः 5 A,V °र्घो

**वीर०** तदाख्यानं पुराणं नः अस्मभ्यं आख्याहि कथय। कथम्भूतम्? वदतां शृण्वताञ्च परं पुण्यं निरतिशयपुण्यावहम्। यद्वा, परमुत्कृष्टं स्वतुल्याधिकपुराणान्तररहितं असंवृताः असङ्कुचिताः स्पष्टा वा अर्था मुमुक्षूणामुपादेयाः शास्त्रार्थाः प्रतिपाद्या यस्मिन्। अत्यद्भुता भगवद्भक्तियोगनिष्ठा यस्मात्। अनन्तस्य अपरिच्छिन्नस्वरूप-स्वभावस्य भगवतः आचरितैः चेष्टितैः प्रतिपाद्यैः उपपन्नं अत एव भागवतानामभिरामं श्रीभागवतमिति भावः। भागवतशब्दस्य अन्यगामित्वव्युदासाय विशिनष्टि — पारीक्षितं परीक्षिता श्रुतम्॥ १७॥

इत्थं भगवद्गुणानुवर्णने प्रवर्तितः तावत् आत्मानं कृतार्थं मन्यते — **अहो** इति। स्वभाग्यं शिरःकम्पेनाऽऽविष्करोति। किं तद्भाग्यमित्यत्र तदेव दर्शयति — वयं विलोमजाता अपि ब्राह्मण्यां क्षत्रियाज्जाता अपि वृद्धानां ज्ञानेन वयसा जन्मना च वृद्धानां भवतामनुवृत्त्या हेतुभूतया अधुना जन्मभृतः प्रशस्तदेहधृतःआस्म अभवाम। हेत्याश्चर्ये हर्षे वा। विलोमजानामपि हेत्वन्तरेण प्राशस्त्यमूलकः हर्षः आश्चर्यं च युक्तमेवैतदित्यभिप्रायेणाह — दौष्कुल्यमिति। महत्तमानां त्वादृशानां अभिधानयोगः श्रवणव्याख्यानसम्बन्धः दौष्कुल्यं दुष्कुलप्रभवत्वप्रयुक्तं हीनत्वं आधिं मनःक्लेशं वाऽऽशु धुनोति निरस्यति॥ १८॥

यतो महत्तमानामभिधानयोगः एव आधिं दौष्कुल्यं च विधुनोति, कुतः पुनः साक्षान्महत्तमैकान्तपरायणस्य भगवतो नाम गृणतः कीर्तयतः पुंसः दौष्कुल्यमाधिश्च सम्भाव्येत? ननु कोऽसौ महत्तमैकान्तपरायणभूतः, के तस्य महिमानः, तन्नामग्रहणमात्रस्यैव कथंतरां दौष्कुल्यादिपरिहारकत्वम्? कथन्तरां तद्भक्ताभिधानयोगस्य तत्त्वं इत्यतः तं विशिंषन्नाह — यो भगवान् पूर्णषाड्गुण्यः यश्च अनन्तशक्तिः अनन्ताः शक्तयः यस्य तथाभूतः पावकस्य दाहकत्वशक्तिवन्नामाभिधातृगतदौष्कुल्याद्यपनोदकशक्तिरस्तीति भावः। यश्च स्वरूपेणानन्तः यश्च महद्गुणत्वात् अनन्तगुण-

त्वात् अनन्तमाहुः "सत्यं ज्ञानमनन्तम्" (तैत्ति. उ. 2-1-1) इत्यादयो वेदान्ताः। तस्य नाम गृणतः इत्यन्वयः। अनन्तः अनन्तगुणत्वाच्च इत्यनेन तस्मिन् स्वरूपतः गुणतश्च आनन्त्यं अनन्तपदप्रवृत्तिनिमित्तमिति सूचितम्। अनेन स्वभक्ताभिधानयोगस्य[7] दौष्कुल्याद्यपनोदनोपयुक्तानेकगुणाश्रयत्वमुक्तम्। गुणानां महत्त्वं नाम आनन्त्यं अनितरसाधारण्यं चं[10] अनितरसाधारणानवधिकगुणत्वात् इत्यर्थः ॥ १९ ॥

**महद्गुणशब्दाभिप्रेतमेव** विशदयन् तत्सङ्ग्रहं दर्शयामीत्यभिप्रायेणाऽऽह — **एतावतेति**। गुणैर्न विद्यते साम्यं यस्य तैः न विद्यते अतिशायनं अतिशयः यस्य असाम्यश्चासौ अनतिशायनः तस्य निस्समाभ्यधिकगुणस्येत्यर्थः। सूचितेन दिङ्मात्रदर्शितेन एतावता महिम्ना अलं बहुना किं? तद्दर्शनीयमिति भावः। कियता विभूतिर्लक्ष्मीः प्रार्थयमानानपि इतरान् ब्रह्मादीन् हित्वा अनभीप्सोः अकामयमानस्यापि यस्य भगवतः अङ्घ्रिरेणुं जुषते सेवते इति इयता श्रियःपतित्वमेव तन्मात्रप्रदर्शनायालमित्यर्थः ॥ २० ॥

[11]अन्यामपि तन्माहात्म्यदिशं दर्शयामीत्यभिप्रायेणाह — **अथापीति** द्वाभ्याम्। अथापि अपि च पुनरपि वेत्यर्थः। यस्य भगवतः वामपादाङ्गुष्ठनखावसृष्टं अर्वाक् प्रसृतं विरिञ्चेन ब्रह्मणा उपहृतं समर्पितं अर्हणाम्भः अर्घ्यजलं गङ्गात्मकं कर्तृ सेशं इन्द्रादिलोकपालैः सहितं जगत्पुनाति इत्येतावता[12] सूचितेन महिम्ना अलमित्यर्थः। एवंविधमहागुणगणयुक्तात् श्रीनिवासात् तीर्थपदात् मुकुन्दात् अन्यः को वा लोके भगवत्पदार्थः भगवत्पदाभिधेयः ज्ञानशक्तिबलैश्वर्यवीर्यतेजःप्रभृत्यसङ्ख्येयकल्याणगुणपौष्कल्यवदभिधायकेन भगवच्छब्देन प्रवृत्तिनिमित्तानामाश्रयः पुरुषोत्तमादन्यः को वा अभिधीयते? न कोऽपीत्यर्थः। एतेन योऽनन्तशक्तिः भगवानित्यत्र कोऽसौ भगवान्? इत्याकाङ्क्षा शामिता ॥ २१ ॥

**यत्रेति**। यत्र यस्मिन् भगवति मुकुन्दे अनुरागयुक्तास्सन्तः धीराः जितेन्द्रियाः सहसा अकस्मादेव देहे आदिशब्दात्तदनुबन्ध्यादिषु चोढं रूढमूलं सङ्गमपोह्य तत्पारमहंस्यं अन्त्यं तुरीयं परमहंसाश्रमं व्रजन्ति यस्मिन् पारमहंस्याश्रमे[14] अहिंसा उपशमश्च स्वानुरूपः धर्मः दयादिरस्ति ॥ २२ ॥

एवंविधानन्तमाहात्म्यशालिनः भगवतः माहात्म्यं वर्णयितुमहं न प्रभुः अथापि **यथामति वर्णयामी**त्यभिप्रायेणाऽऽह — **अहमिति**। अर्यमणः! हे ज्ञानाधिकाः! **अगतौ** गत्यर्थाः **बुद्ध्यर्थाः**। अत्र भगवन्माहात्म्ये भवद्भिः पृष्टोऽहम् यद्वा हे! अर्यमणः! सूर्याः! त्रयीमूर्तयः यावान् आत्मनो बुद्धेः अवगमः प्रसरः यावन्महिमा मद्बुद्धिविषयो भवति तावन्तं महिमानमाचक्षे वर्णयामि। तथाहि — यथा पतत्त्रिणः पक्षिणः बाणाः वा आत्मसमं स्वबलानुरूपमेव नभः प्रतिपतन्ति उद्गच्छन्ति तथा विपश्चितोऽपि समं स्वबुद्धिबलानुरूपं विष्णुगतिं भगवन्महिमानं पतन्ति विषयीकुर्वन्ति। न हि पतत्त्रिणः नभसि उद्गच्छन्तो नभसोऽभावान्निवर्तन्ते किन्तु स्वबलक्षयात् निवर्तन्ते एवं विपश्चितोऽपि मतिक्षयादेव निवर्तन्ते न तु भगवन्महिम्नः क्षयादित्यर्थः। तच्चोक्तमन्यत्रापि "इपुक्षयान्निवर्तन्ते नान्तरिक्षक्षितिक्षयात्। मतिक्षयान्निवर्तन्ते न गोविन्दगुणक्षयात्" इति ॥ २३ ॥

अथ तत्पृष्टं भागवताख्यं पुराणं परीक्षिच्छुकसंवादरूपं शुश्रावयिषुस्तावत् संवादप्रवृत्तिं, तदुपोद्घातरूपं परीक्षिच्छुकयोः सङ्गमं, परीक्षितः प्रायोपवेशं च तन्मूलं विप्रशापं तन्निमित्तं चाऽऽह — **एकदा** इत्यादिना

यावत्स्कन्धसमाप्ति। तावच्छापनिमित्तमाह षड्भिः एकदेति। कदाचित् परीक्षित् धनुरुद्यम्य उद्धृत्य वने मृगयां चरन् मृगान् अनुसृत्य गतः श्रान्तः नितरां तृषितः क्षुधितः तृषा सञ्जाता क्षुत् अस्य सञ्जातेति तथा तारकादित्वात् इतच्॥ २४ ॥

---

1 W adds युक्तम् 2 A.B भागवतानाम° 3 W °भृत° 4 A.B वेत्य 5 W चा 6 A.B कथ 7 A.B omit स्व 8 A.B °दकत्वयु° 9 A.B वा 10 A.B न तु साधारणोऽनवधिक° 11 A.B अन्य प्रति 12 A.B वत्स्यांच 13 A.B omit वीर्य 14 W हंस्ये आश्र° 15 W तथा चोक्त°

**विज०** हरेरुदारचरितानां अनन्तत्वात् तेषां मध्ये किं वक्ष्यामीति प्रश्नो माभूदित्यभिलषितचरितमिदमित्याहुरित्याह — **तन्नः** इति। तदाख्यानमस्माकं आख्याहीत्यन्वयः। परं उत्कृष्टं पुण्यं पुनानं असंवृतः स्पष्टोऽर्थः पुरुषार्थः यस्माद्भवति[1] तथोक्तं तत् अत्यद्भुतानां योगानां भक्तिज्ञानादिलक्षणानां निष्ठा प्रतिपाद्यतया नितरां स्थितिः यस्मिंस्तत्तथोक्तं तत्कालतो देशतश्च अनन्तस्य अपरिच्छिन्नस्य हरेः चरितेन उपपन्नं सहितं तथा परीक्षित्सम्बन्धि भागवतानामभिरामं मनोहरं भागवताः अभिरमन्ते यस्मिन्निति वा भगवत्सम्बन्धित्वाद्वा अभिरामम्॥ १७ ॥

हे महात्मन्! शौनक! विलोमजाताः हीनजन्मानोपि वयं ज्ञानवृद्धानां अनुवृत्त्या सेवया जन्मभृतः सफलजन्मानः अभूम इत्यन्वयः। अहो आश्चर्यं असमद्भाग्यं कुतः महत्तमानां अभिधानं गोष्ठी तस्य योगः सम्बन्धः अभिधानेन नाम्ना योग इति वा दुष्कुलोत्पत्तिनिमित्तं दौष्कुल्यं आधिं मनोदुःखं शीघ्रं विधुनोतीत्येकान्वयः ॥ १८ ॥

कैमुत्यमाह — **कुत** इति। महत्तमैकान्तपरायणस्य हरेः नाम गृणतः पुंसः आधिं विधुनोतीति कुतः पुनः किं वक्तव्यमित्यन्वयः। अनन्ताः अपरिमिताः शक्तयः यस्य सः तथा देशादितः परिच्छेदो न विद्यते यस्य सोऽनन्तः यो भगवान् अनन्तशक्तिः अनन्तश्च न केवलं ताभ्यां आनन्त्यं गुणानन्त्यमप्यस्तीत्याह महदिति। महान्तो गुणाः महद्गुणाः तेषां भावः महद्गुणत्वं तस्मात् छान्दसत्वात् महच्छब्दस्य महादेशाभावः, यं भगवन्तं अनन्तं गुणतः परिच्छेदरहितं "सत्यं ज्ञानमनन्तम्" (तैत्ति. उ. 2-1-1) इत्यादिवेदान्ता आहुरित्यन्वयः ॥ १९ ॥

प्रार्थयतः कटाक्षमोक्षमिति शेषः, इतरान् ब्रह्मादीन् हित्वा कटाक्षवीक्षामकृत्वा विभूतिः महालक्ष्मीः स्वरतत्वात् अनभीप्सोः अनिच्छोः यस्य हरेः अङ्घ्रिरेणुं अनवरतं जुषते सेवते तस्यास्य हरेः असाम्ये अद्वितीये तथा गुणैरनतिशयिते आधिक्यरहिते सर्वोत्तमत्वे च सूचितेन लक्ष्मीपतिरित्येतावता अलं नन्वित्येकान्वयः। "अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः" (अम्भृणीसूक्ते) "श्रीमन्मन्दकटाक्षलब्धविभवब्रह्मेन्द्रगङ्गाधराम्" (श्री. सू.) इत्यादि श्रुतिस्मृतिशतैः इतरेषां अशेषाणां लक्ष्म्या अवतारत्वात् लक्ष्मीपतित्वं विष्णोः सर्वोत्तमत्वयुक्तिरिति भावः ॥ २० ॥

अथ सर्वोत्तमत्वाद्वितीयत्वसमर्थनस्य बहुयुक्तिसन्दृब्धत्वप्रकटनाय इदमपि भवतीत्याह — **अथापीति**। यस्य पादनखावसृष्टं गलितं विरिञ्चेन ब्रह्मणा उपहृतं समर्पितं अर्हणाम्भोऽर्घ्यजलं श्रीपादावनेजनोदकं इति यावत्। रुद्रेण सह

वर्तमानश्च जगत् चतुर्दशभुवनं पुनाति यस्मादथ तस्माल्लोके भुवने मुकुन्दात् मोक्षप्रदात् नारायणात् अन्यतमः अन्यः स्वार्थे तमप् प्रत्ययः। को नाम भगवत्पदार्थः निरतिशयज्ञानादिगुणवत्तया भगवानिति नामवाच्योऽस्ति सर्वेषां तदर्वाक्तनत्वात् न कोप्यस्तीत्यर्थः। अनेन विरिञ्चिपूज्यत्वशिवशुद्धिकरतीर्थपदत्वभगवन्नामवाच्यत्वाद्वितीयत्वानि सर्वोत्तमत्वसूचकानीति ज्ञातव्यम्॥ २१॥

मुकुन्दत्वं विवृणोति— **यत्रेति**। यत्र मुकुन्दे अनुरक्ताः स्निग्धाः धीराः विषयवार्तायां निवृत्तायां बुद्धौ रतास्सन्तः देहादिषु ऊढं प्ररूढं सङ्गं स्नेहलक्षणं सहसा विमर्शज्ञानेन व्यपोह्य निरस्य तत्परमहंसाश्रमप्राप्यं सत्यं [1]साधुगुणयुक्तं ब्रह्म मुकुन्दाख्यं व्रजन्ति, यस्मिन् परमहंसाश्रमे अहिंसा विहितातिरिक्तहिंसावर्जनं उपरमम्। उं रुद्रं पाति पिबति हिनस्तीति वा, उपो विष्णुः सर्वाधिकः तस्मिन् हरौ रमो रमणं रतिः विषयनिवृत्तिर्वा धर्मो विहित इति शेषः। अनेन मुक्तिदानमपि सर्वोत्तमत्वद्योतकमिति सूचितं भवति॥ २२॥

आख्याहीति शौनकप्रश्नोत्तरं वक्ति— **अहं हीति**। अस्य हरेः गुणान् वक्तुं भवद्भिः पृष्टोऽहं अत्र हरिगुणेषु यावान् आत्मावगमः आत्मनो मम अवगमः ज्ञानं तावदाचक्षे व्याकरिष्ये गुणानामनन्तत्वात् कस्यापि सर्वात्मना ज्ञातुं शक्तिः नास्ति इत्येतदर्थं हिशब्देनाऽऽह। न केवलं अहमेवाशक्तः किन्तु अतीतानागतवर्तमाना ब्रह्मादयः सर्वेप्येवमेव हरिगुणविषय इति सोदाहरणमाह— नभ इति। यथा पतत्त्रिणः पक्षिणः नभः आत्मसमं स्वशक्त्यनुसारेण पतन्ति शक्त्यभावादेवोपरमन्ति न नभोऽवसानात् अनन्तत्वादस्य तथा ब्रह्मादयः विपश्चितः ज्ञानिनः विष्णुगतिं विष्णुज्ञानं प्रति समं आत्मशक्त्यनुसारेण यतन्ते शक्त्यभावादुपरमन्ति, न गोविन्दगुणानां मितत्वादिति भावः॥ २३॥

पारीक्षितमाख्यानं वक्ष्यन् तस्य निर्वेदनिमित्तब्रह्मशापं वक्तुमुपक्रमते— **एकदेति**। धनुरुद्यम्य सज्जं कृत्वा प्रगृह्य मृगयां उद्दिश्य वने विचरन्॥ २४॥

1. K,M add तत् 2. K °शयाने 3. K अधिकराहित्ये 4. K,M °त्वे

**रा॰ कृ॰** तत् तादृशं परं पुण्यं पृच्छतां वदतां शृण्वतां च सर्वेषां अत्यन्तपुण्यावहं, असंवृतार्थं असंवृतः स्पष्टः अर्थः यस्य तत् अत्यद्भुतयोगनिष्ठं अनन्ताचरितोपपन्नं अनन्तस्य भगवतः आचरितैः अद्भुतकर्मभिः उपपन्नं सहितं अत एव भागवताभिरामं भगवद्भक्तानां मनोहरं पारीक्षितं परीक्षिते कथितं आख्यानं भागवताख्यं पुराणं नः अस्मभ्यं आख्याहि कथय।

सत्कर्माचरणजातं फलं पुण्यं, तत्कर्मफलत्यागजन्यन्तु परं पुण्यमिति विवेकः। श्रीमद्भागवतमहापुराणस्य तादृशकर्मफलत्यागबुद्धिजनकत्वात् परं पुण्यमिति विशेषणमुपपद्यते। यदुक्तं पारीक्षितमाख्यानं अत्यद्भुतयोगनिष्ठमिति तत्रोच्यते— इतरमार्गेषु दृश्यमानः त्रिगुणविजयनिर्गुणोपासनादिव्यवहारः नात्र दृश्यते। अयं तु योगस्सगुण एव। किञ्च ये तावद्गुणाः शुद्धसत्त्वप्रधानाः त्रिगुणातीतस्थितिमावहन्ति ते भूतदयादयः कल्याणगुणा इत्युच्यन्ते। अस्मिन्

योगमार्गे साधकः स्वमनसो नानाविधाभिप्रायनिरासप्रयत्नमपहाय तन्मनो नारायणकल्याणगुणपरिपूर्णं आतनुते। तेन तस्य प्रकृतिः दिव्यत्वं प्राप्य अखण्डानन्दमश्नुते। तस्मादस्मिन् मार्गे साधनाऽपि सुमधुरा सर्वेन्द्रियसमाह्लादिनी सकलकल्मषहारिणी च सती स्वस्वरूपानुसन्धानात्मिकां परां भक्तिं वितरति॥ १७॥

वयं विलोमजाता अपि ब्राह्मण्यां क्षत्रियात् जाता अपि वृद्धानुवृत्त्या वृद्धानां ज्ञानवयोवृद्धानां शुकादीनां भवतां अनुवृत्त्या सेवया अद्य जन्मभृतः सार्थकजन्मानः आस्म अभवाम। अहो आश्चर्यम्। ह! सन्तोषातिशयद्योतक-मिदं पदम्। तथाहि महत्तमानां अतिशयेन महतां भवादृशानां अभिधानयोगः लौकिकोऽपि सम्भाषणसम्बन्धः दौष्कुल्यं दुष्कुलप्रभवत्वप्रयुक्तं हैन्यं आधिं तन्निमित्तां मानसिकपीडाञ्च विधुनोति निरस्यति॥ १८॥

यो भगवान् षड्गुणैश्वर्यसम्पन्नः अनन्तशक्तिः स्वयमनन्तः महद्गुणत्वात् महत्सु विवेकशालिषु भक्तेषु गुणा यस्मात् भवन्ति स महद्गुणः तस्य भावः महद्गुणत्वं तस्मादपि ऋषयः यं अनन्तं आहुः तस्य महत्तमैकान्तपरायणस्य देवस्य नाम गृणतः कीर्तयतो जनस्येति शेषः। महत्तमानामभिधानयोगः दौष्कुल्यादिकं विधुनोतीति कुतः पुनः, किं वक्तव्यम्?॥ १९॥

विभूतिः लक्ष्मीः प्रार्थयतोपि इतरान् ब्रह्मादीन् हित्वा विहाय अनभीप्सोः अनभिलषतः अपि यस्य भगवतः अङ्घ्रिरेणुं जुषते सेवते इत्येतावता सूचितेन गुणैः असाम्यानतिशायनस्य समानाधिकरहितस्य भगवतः महिम्नेति शेषः अलम्॥ २०॥

अथापि अपि च यत्पादनखावसृष्टं यस्य भगवतः पादस्य नखात् निस्सृतं विरिञ्चोपहृतार्हणाम्भः विरिञ्चेन ब्रह्मणा उपहृतं समर्पितं अर्हणाम्भः अर्घ्यजलं गङ्गात्मकं सेशं महादेवसहितं जगत् पुनाति पवित्रीकरोति। तस्मात् मुकुन्दात् गोविन्दात् अन्यतमः भगवत्पदार्थः भगवत्पदस्यार्थः वाच्यः को नाम लोके अस्ति इति शेषः स एव मुकुन्दः सर्वेश्वरो भगवानित्यर्थः॥ २१॥

यत्र यस्मिन् भगवति मुकुन्दे अनुरक्ताः धीराः सहसैव अकस्मादेव केनापि भाग्येन इत्यर्थः। देहादिषु देहे तदनुबन्धिपुत्रादिषु च ऊढं रूढमूलं सङ्गं आसक्तिं व्यपोह्य त्यक्त्वा यस्मिन् पारमहंस्ये अहिंसा उपशमश्च स्वधर्मः स्वाभाविको धर्मः भवति, अन्त्यं तुरीयं तत्पारमहंस्यं परमहंसाश्रमं व्रजन्ति, तस्मात् मुकुन्दात् अन्यतमः भगवत्पदार्थः को नाम लोके अस्ति इति पूर्वेणान्वयः।

भगवतः अनन्तशक्तित्वोक्तेः जगति शक्तिविरहितस्य वस्तुनः अभावात् शक्तेः सर्वसृष्टिहेतुत्वाच्च, भगवान् अनन्त इत्यत्र अनन्तरूप इत्यर्थः। महद्गुणत्वादित्यत्र भगवद्गुणानां महत्सङ्क्रान्तत्वोक्तेः महतां भागवतानां भगवद्गुणवत्त्वमुक्तं भवति। तथा च तद्गुणवतां तत्त्वाऽऽपत्तेः भगवद्भागवताभेदोपचारात् अनन्तमहद्गुणः भगवान् पुनरप्यनन्तः अनन्तगुणो भवति।

शक्तेः विभूत्युपजीव्यत्वात् विभूतिमय्याः लक्ष्म्याः सर्वशक्तिमयभगवदङ्घ्रिसेवनं निसर्गसिद्धं भवति। तस्मात् भगवान् विभुः सर्वैश्वर्यसम्पन्नोऽपि भवति। एतादृशे भगवत्यनुरक्ताः धीराः महर्षयः देहात्मभावनां परित्यज्य

सर्वभूतात्मभूतात्मानः अहिंसोपशमाख्यस्वधर्मसमुपेताश्च सन्तः निरूढ'सोऽह'म्भावनया समीकृतोच्छ्वासनिश्वासाः पारमहंस्याख्या मात्मनिष्ठां भजन्ते। एते खलु महात्मानः यथावसरं शरीरमुपकरणमादाय विश्वहिते प्रवर्तन्ते॥ २२ ॥

हे अर्यमणः! ज्ञानातिशयेन सूर्यसदृशाः हे महर्षयः! भवद्भिः पृष्टोऽहं अत्र भगवन्महिम्नि यावान् यावन्मात्रः आत्मावगमः आत्मबुद्धेः प्रसरः भवति तावन्तमेव महिमानं आचक्षे हि वर्णयामि खलु। तथाहि पतत्त्रिणः पक्षिणः गरुडादयः यथा आत्मसमं स्वशक्त्यनुरूपमेव नभः पतन्ति उद्गच्छन्ति न तदन्तं प्राप्नुवन्ति तथा विपश्चितः ज्ञानिनोऽपि समं स्वबुद्धिशक्त्यनुरूपमेव विष्णुगतिं विष्णोः सर्वव्यापकस्य भगवतः महिमानं पतन्ति स्वज्ञानविषयीकुर्वन्ति वर्णयन्ति च; न तु तदन्तं लभन्ते। न हि जीवस्य भगवज्जिज्ञासा भगवत्परीक्षापर्यवसायिनी किन्तु तत्त्वप्राप्त्येकप्रयोजनेति भावः॥ २३ ॥

एकदा कदाचित् परीक्षित् धनुः उद्यम्य वने मृगयां विचरन् मृगान् अनुगतः भृशं श्रान्तः क्षुधितः तृषितश्च अभूदिति शेषः॥ २४ ॥

**जलाशयमचक्षाणः प्रविवेश तमाश्रमम्।**<br>**ददर्श मुनिमासीनं शान्तं मीलितलोचनम्॥ २५ ॥**

**प्रतिरुद्धेन्द्रियप्राणमनोबुद्धिमुपारतम्।**<br>**स्थानत्रयात्परं प्राप्तं ब्रह्मभूतमविक्रियम्॥ २६ ॥**

**विप्रकीर्णजटाच्छन्नं रौरवेणाजिनेन च।**<br>**विशुष्यत्तालुरुदकं तथाभूतमयाचत॥ २७ ॥**

**अलब्धतृणभूम्यादिरसम्प्राप्तार्घ्यसूनृतः।**<br>**अवज्ञातमिवात्मानं मन्यमानश्चुकोप ह॥ २८ ॥**

**अभूतपूर्व सहसा क्षुत्तृड्भ्यामर्दितात्मनः।**<br>**ब्राह्मणं प्रत्यभूत् ब्रह्मन्! मत्सरो मन्युरेव च॥ २९ ॥**

**स तु ब्रह्मऋषेरंसे गतासुमुरगं रुषा।**<br>**विनिर्गच्छन्धनुष्कोट्या निधाय पुरमागमत्॥ ३० ॥**

**एष किं निभृताशेषकरणो मीलितेक्षणः।**<br>**मृषासमाधिराहोस्वित् किंनु स्यात् क्षत्रबन्धुभिः॥ ३१ ॥**

तस्य पुत्रोऽतितेजस्वी विहरन् बालकोऽर्भकैः ।
राज्ञाऽघं प्रापितं तातं श्रुत्वा तत्रेदमब्रवीत् ।। ३२ ।।

1. H,V तदा°, K,M स आश्र° 2 B,N °र्घ°, W °र्थ° 3 H,V राज्ञो 4 K,M तस्य ब्रह्मर्षे° 5 B,H,I,V °तः 6 K,M मुधा° 7. K,M,W नः

**श्रीध०** **जलाशयमिति** । अचक्षाणः अपश्यन् । तं प्रसिद्धं आश्रमम् । तस्मिंश्च मुनिं शमीकम् ।। २५ ।।

**प्रतिरुद्धेति** । प्रतिरुद्धाः प्रत्याहृताः इन्द्रियादयः येन तम् । अत एवोपारतम् । स्थानत्रया[1]ज्जाग्रदादिलक्षणात् परं तुरीयं पदं प्राप्तम् । अत एव ब्रह्मभूतत्वादविक्रियम् ।। २६ ।।

**विप्रकीर्णेति** । विप्रकीर्णाभिः जटाभिः आच्छन्नम् । रुरुः मृगविशेषः तस्य चर्मणा चाच्छन्नम् । विशेषेण शु[2]ष्यत्तालु यस्य सः । तथाभूतं मुनिं उदकमयाचत ।। २७ ।।

**अलब्धेति** । न लब्धं तृणं तृणासनं भूम्याद्युपवेशस्थानं च येन सः । न सम्प्राप्तं[3] अर्घ्यं सूनृतं प्रियवचनं च येन सः ।। २८ ।।

**अभूतपूर्व** इति । मत्सरः तदुत्कर्षासहनम् ।। २९ ।।

**स** इति । गतासुं मृतम् । धनुष्कोट्या चापाग्रेण ।। ३० ।।

सर्पनिधाने राज्ञोऽभिप्रायमाह — **एष** इति । एष किं प्रत्याहृतसर्वेन्द्रियस्सन् मीलितेक्षणः [4]यद्वा क्षत्रबन्धुभिः आगतैः गतैर्वा किं नु स्यादित्यवज्ञया मृषासमाधिस्सन्निति जि[5]ज्ञासयेत्यर्थः ।। ३१ ।।

**तस्येति** । तस्य पुत्रः शृङ्गी ना[6]म अतितेजस्वी तपोबलसम्पन्नः । अघं दुःखम् । तत्रार्भकमध्ये ।। ३२ ।।

---

1 H,V °यात् परं जाग्र° 2 H,V शुष्यन् तालुः 3 A °प्तोऽर्घः 4. A,B,V add स्थितः 5 H,V ज्ञातुमित्यर्थः 6 V नामा

**वीर०** क्वचिदपि जलाकरमपश्यं[1]स्तमाश्रमं प्रविवेश आङ्गिरसस्याश्रमं प्रविष्टवानित्यर्थः, तत्र मुनिमाङ्गिरसं ददर्श, कथम्भूतम्? आसीनं उपविष्टं, शान्तं प्रसन्नं मीलिते लोचने येन तम् ।। २५ ।।

प्रतिरुद्धानि निर्व्यापारितानि इन्द्रियाणि येन तं अत एवोपारतं बाह्यव्यापारादुपारतं स्थानत्रयात् जाग्रत्स्वप्नसुषुप्तिरूपावस्थात्रयात् परं स्वात्मानं प्राप्तं अनुसन्दधतं ब्रह्मभूतं ब्रह्मविषयकभावनया अन्वितं अविक्रियं द्वन्द्वप्रयुक्तविकाररहितम् ।। २६ ।।

विप्रकीर्णाभिः विक्षिप्ताभिः जटाभिः छन्नं आवृतं रौरवेण रुरोर्मृगस्य सम्बन्धिना चर्मणा छन्नं एवंभूतं मुनिं वि[2]शुष्यत् तालु वदनं च यस्य तथाभूतो राजा उदकं जलमयाचत ।। २७ ।।

न लब्धं तृणं भूमिः आदिशब्दात् अन्यच्च उपवेशार्थं येन न सम्प्राप्तं अर्घ्यं सूनृतं च मधुरवचश्च[3] येन तथाभूतः अत एव अज्ञातं अवहेलितमिवात्मानं मन्यमानः राजा चुकोप ॥ २८ ॥

क्षुत्तृड्भ्यां अर्दितः पीडितः आत्मा शरीरं यस्य तस्य राज्ञः अत एव अभूतपूर्वः पूर्वं भूतः भूतपूर्वः न भूतपूर्वः अभूतपूर्वः कदाचिदपि पूर्वं न जात इत्यर्थः। मत्सरः मन्युश्च हे ब्रह्मन्! ब्राह्मणं मुनिं प्रत्यभूत् बभूव। मन्युः क्रोधः अमर्ष इति यावत्। मत्सरो द्रोहः अपचिकीर्षेति यावत् ॥ २९ ॥

ततः स तु राजा निर्गच्छन् निर्गन्तुमुद्युक्तः रुषा ब्रह्मर्षेरंसे धनुष्कोट्या धनुषोऽग्रभागेन गतप्राणं सर्पं निधाय पुरं ययौ ॥ ३० ॥

किमर्थं निहितवान् इत्यत्र राज्ञः[4] तात्पर्यमाविष्करोति — **एष** इति। किमेष मुनिः निभृतानि नियमितानि अशेषाणि करणानि इन्द्रियाणि येन मीलिते ईक्षणे लोचने येन तथाभूतः यथार्थसमाधिनिष्ठः; आहोस्वित् क्षत्रबन्धुभिरस्माकं किं प्रयोजनं विद्यते इति बुद्ध्या मृषा मिथ्याभूतः[5] समाधिः यस्य तथाभूतः एवमास्ते इत्यभिप्रायेण निधाय गत इत्यर्थः ॥ ३१ ॥

ततः तस्य मुनेः पुत्रः अतितेजस्वी ब्राह्मतेजस्सम्पन्नः बालकः अर्भकैस्सह क्रीडन् तातं पितरं राज्ञा अघं प्रापितं अपराधविषयीकृतं श्रुत्वा तत्रैवेदं वक्ष्यमाणमब्रवीत् ॥ ३२ ॥

---

1 W °श्यमानस्त° 2 W विशुष्यन्ती तालुनी वदनं च यस्य 3 W वाक् च 4 W adds तत् 5 W मिथ्याभिभूतः

**विज॰** जलाशयं जलाधारं तटाकविशेषं अचक्षाणः अपश्यन् स परीक्षित् आश्रमं आलस्यपरिहारकारणं स्थानविशेषं प्रविवेश इत्यन्वयः। शान्तं असम्प्रज्ञातसमाधिस्थं किञ्चिन्मीलितनेत्रम् ॥ २५ ॥

प्रतिरुद्धाः परमात्मन्येव सन्निधापिताः श्रोत्रादीन्द्रियाणि च प्राणश्च मनश्च बुद्धिश्च येन स तथोक्तः तं प्राणरोधः कुम्भके श्वासरोधः चेष्टानिवृत्तिर्वा अत एव शब्दादिज्ञानेभ्यः उपारतं तदेव स्पष्टयति — स्थानेति। जाग्रदादिस्थानत्रयात् परं अतीतं तुरीयं हरिं प्राप्तं अत एव ब्रह्मणि भूतं, प्रयत्नमन्तरेण स्वत एव मनसा स्वबिम्बरूपं परमात्मानं अनुभवन्तं अतएव अविक्रियं निश्चेष्टं निवातस्थदीपोपमं विरुद्धक्रियारहितं वा ॥ २६ ॥

विप्रकीर्णाभिः जटाभिः छन्नं संवृतं रुरोः कृष्णमृगस्य विद्यमानेन अजिनेन च संवृतं आसीनं वा विशुष्यत् नीरसं तालु जिह्वामूलं गूढजिह्वा यस्य स तथा सः परीक्षित् तथाभूतं एवंविशिष्टं मुनिं उदकमयाचत प्रार्थितवान् इत्यन्वयः ॥ २७ ॥

स राजा चुकोपेत्यन्वयः। तस्मा इति शेषः। अलब्धं तृणभूम्यादि येन सः तथोक्तः आदिशब्देन मधुपर्कादि गृह्यते स्वागतमित्यादिप्रियवचनं सूनृतं "तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता" (भार. 3-2-52) इति स्मृतेः, आत्मानं मुनिना अवज्ञातमिव मन्यमानः क्षुधादिनिमित्तोऽयं कोपः इत्यस्मिन्नर्थे हशब्दः, इतिहासद्योतको वा ॥ २८ ॥

तस्य परीक्षितः ब्राह्मणं प्रति मन्युरभूत् न केवलं मन्युः किन्तु मत्सरश्चाभूदित्यन्वयः। मन्युरेव न प्रसादः इत्येवशब्दार्थः। मत्सरो नायं मद्वशः इत्यप्रीतिश्च कीदृशः अभूतपूर्वः इतः पूर्वमनुत्पन्नः कीदृशस्य क्षुत्तृड्भ्यामर्दितात्मनः पीडितमानसस्य ॥ २९ ॥

शापनिमित्तमाह — **स** इति। स राजा तस्य ब्रह्मर्षेः स्कन्धे गतासुं मृतं सर्पं धनुष्कोट्या निधाय पुरमागमदित्यन्वयः ॥ ३० ॥

पुरमागच्छतस्तस्य आलोचनप्रकारमाह — **एष** इति। एष मुनिः विषयेभ्यः प्रत्यङ्मुखतया निभृताशेषकरणः परतत्त्वविषयीकृतसकलेन्द्रियः मीलितेक्षणः किं नः अस्माकं क्षत्रबन्धुभिः किं स्यादिति मुधा समाधिः मीलितेक्षणः आहोस्विदिति मनसापि तर्कयन् पुरमगादिति पूर्वेणान्वयः ॥ ३१ ॥

तस्य ब्रह्मर्षेः पुत्रः शृङ्गिनामकः तत्रेदमब्रवीदित्यन्वयः। इदमिति वक्ष्यमाणं किं कृत्वा राज्ञा परीक्षिता अघमपराधं प्रापितं पितरं श्रुत्वा अशुचितां प्रापितमिति वा। अतितेजस्वीत्यनेन शापदानसामर्थ्यमस्यास्तीति दर्शितम्। अर्भकैः बालैस्सह विहरन् वयसा बालः न तु सामर्थ्येनेत्येतद्दर्शितं कप्रत्ययेन ॥ ३२ ॥

**रा॰ कृ॰** तत स्स राजा जलाशयमचक्षाणः अपश्यन् तं प्रसिद्धं आश्रमं शमीकाश्रमं प्रविवेश। प्रविश्यासीनं शान्तं रागलोभादिरहितं मीलितलोचनं मुनिं शमीकं ददर्श दृष्टवान्॥ २५॥

प्रतिरुद्धेन्द्रियप्राणमनोबुद्धिं प्रतिरुद्धाः निर्व्यापारिताः इन्द्रियप्राणमनोबुद्धयः येन तं अत एव उपारतं बाह्यव्यापारात् उपरतं स्थानत्रयात् जाग्रत्स्वप्नसुषुप्तिरूपात् अवस्थात्रयात् परं तुरीयं स्वात्मानं प्राप्तं अनुसन्दधानं अत एव ब्रह्मभूतं "ब्रह्म वेद ब्रह्मैव भवति" (मुण्ड. उ. 3-2-9) इति श्रुत्या ब्रह्मत्वमुपगतं अतएवाविक्रियं द्वन्द्वप्रयुक्तविकाररहितं विप्रकीर्णजटाच्छन्नं विक्षिप्ताभिः जटाभिः आवृतं रौरवेण रुरुसम्बन्धिना अजिनेन चर्मणा आच्छन्नं च तथाभूतं एवंभूतं मुनिं राजा विशुष्यत्तालुः उदकमयाचत याचितवान्॥ २६, २७॥

अलब्धतृणभूम्यादिः अलब्धतृणासनभूम्याद्युपवेशस्थानः असम्प्राप्तार्घ्यसूनृतः असम्प्राप्तार्घ्यप्रियवचनश्च स राजा आत्मानं अवज्ञातमिव अवहेलितमिव मन्यमानः चुकोप ह कुपितवान्॥ २८॥

क्षुत्तृड्भ्यां क्षुधा तृषा च अर्दितात्मनः राज्ञः परीक्षितः अभूतपूर्वः पूर्वं कदापि न जातो मत्सरः तदुत्कर्षासहनरूपः मन्युरेव च क्रोधश्च ब्राह्मणं प्रति शमीकमुनिं प्रति सहसा अभूत्॥ २९॥

स तु राजा विनिर्गच्छन् तस्मात् प्रदेशात् निवर्तमानः रुषा क्रोधेन गतासुं मृतं उरगं सर्पं धनुष्कोट्या धनुरग्रेण ब्रह्मर्षेः अंसे स्कन्धे निधाय पुरं स्वपट्टणं आगमत् आगतः ॥ ३० ॥

एष मुनिः निभृताशेषकरणः नियमितसर्वेन्द्रियस्सन् मीलितेक्षणः किम्? यथार्थसमाधिः किम्? आहोस्वित् अथवा आगतैर्गतैर्वा क्षत्त्रबन्धुभिः क्षत्त्रियाधमैः किन्नु स्यात् किं प्रयोजनं भवेत् इति बुद्ध्या मृषासमाधिः मिथ्याभूतसमाधिरास्ते इति मनसि विचिन्तयन् परीक्षित् पुरमगच्छत्॥ ३१॥

तस्य शमीकस्य पुत्रः अतितेजस्वी बालकः अर्भकैः इतरबालकैः सह विहरन् क्रीडन् तातं जनकं राज्ञा अघं अपराधं प्रापितं श्रुत्वा तत्र बालकानां मध्ये इदं वक्ष्यमाणं वचनं अब्रवीत् अवोचत् ॥ ३२ ॥

शृङ्गी उवाच

अहो अधर्मः पालानां पीव्नां[1] बलिभुजामिव ।
स्वामिन्यघं यद्दासानां द्वारपानां शुनामिव ॥ ३३ ॥

ब्राह्मणैः क्षत्रबन्धुर्हि द्वारपालो[2] निरूपितः ।
स कथं तद्गृहे द्वास्स्थः[3] सभाण्डं भोक्तुमर्हति[4] ॥ ३४ ॥

कृष्णे गते भगवति शास्तर्युत्पथगामिनाम् ।
तद्भिन्न[5]सेतून्[6]द्याहं शास्मि पश्यत मे बलम् ॥ ३५ ॥

इत्युक्त्वा रोषताम्राक्षः वयस्यानृषिबालकैः[7] ।
कौशिक्यांप[8] उपस्पृश्य वाग्वज्रं विससर्ज ह ॥ ३६ ॥

इति[9] लङ्घितमर्यादं तक्षकस्सप्तमेऽहनि ।
धक्ष्यति[10] स्म कुलाङ्गारं चोदितो मे ततद्रुहम्[11] ॥ ३७ ॥

ततोऽभ्येत्याश्रमं बालः गले सर्पकलेबरम् ।
पितरं वीक्ष्य[12] दुःखार्तः मुक्तकण्ठो रुरोद ह ॥ ३८ ॥

स वा[13] आङ्गिरसो ब्रह्मन् श्रुत्वा सुतविलापनम्[14] ।
उन्मील्य शनकैर्नेत्रे दृष्ट्वा स्वांसे[15] मृतोरगम् ॥ ३९ ॥

विसृज्य पुत्रं[16] पप्रच्छ वत्स! कस्माद्धि[17] रोदिषि ? ।
केन वा तेऽपकृतमित्युक्तस्स[18] न्यवेदयत् ॥ ४० ॥

---

1 K.M पृष्व्या 2 B H.I V गृह° 3 H.V द्वार्स्थ· 4 Ai Gi भङ्क्तुं 5 K M W तान् भित्र 6 B संतुमद्या° 7 K.M.N.W °कान् 8 K.M.W °क्य° 9 H.K.M.V इतो° W °इत्युल्लङ्घि . Ai Gi अतो 10 A B G I.N दङ्क्ष्यति 11 K.M पितृ° 12 Ai Gi प्रेक्ष्य 13 Ai Gi वैवाङ्गि° 14 K.M °पितम् 15 B.H.I.K.M.V चांसे; W ऽथांसे 16 B I तं च 17 K.M °द्विरो° 18 H.K.M.V ते विप्रकृतं; B तेऽप्यपकृतं; N.W ते प्रतिकृतं

**श्रीध०** **अहो** इति। पालानां राज्ञाम्। पीव्नां पुष्टनाम्। अधर्ममेव निर्दिशति स्वामिनि[1] [2]दासानां यदघं पापा[3]चरणं बलिभुजां काकानामिव शुनामिव चेति ॥ ३३ ॥

दासत्वं दर्शयति — **ब्राह्मणैरिति**। सभाण्डं भाण्डे एव स्थितम् ॥ ३४ ॥

**कृष्ण** इति। तत् तदनन्तरम्। अहं शास्मि दण्डयामि ॥ ३५ ॥

**इतीति।** इति **वयस्यानुक्त्वा** रोषेण ताम्रे अक्षिणी यस्य सः कौशिकी नदी तस्याः अपः सन्धिरार्षः। वाग्वज्रं शापम् ॥ ३६ ॥

**इतीति।** इत्येवं सर्पनिक्षेपेण **दंक्ष्यति** भक्षयिष्यति। पाठान्तरे भस्मीकरिष्यति। स्मेति पादपूरणे। कुलस्याङ्गारतुल्यं मे मया तातद्रुहं ततेति ह्रस्वत्वमार्षम् ॥ ३७ ॥

**तत** इति। गले[6] सर्पकलेबरं यस्येति अलुक्समासः। मुक्तकण्ठः उच्चैरित्यर्थः ॥ ३८ ॥

**स** इति। आङ्गिरसः अङ्गिरसगोत्रोद्भवः शमीकः। पप्रच्छ इत्युत्तरेणान्वयः ॥ ३९ ॥

किमिति पृष्टवान् इत्यत आह — **विसृज्येति**। तं सर्पं विसृज्य कस्माद्धेतोः रोदिषि? केन अपकारः कृतः? ॥ ४० ॥

1 H,V दर्शयति 2 H,V add इति 3 V °प° 4 H,V इत इति 5 H,V **धक्ष्यति** 6 H,V add कण्ठे

**वीर०** तदेवाऽऽह — **अहो** इति पञ्चभिः। बलिभुजां शुनां वायसानामिव वा पीव्नां वर्धितानां पालानां राज्ञां अहो अधर्मः पश्यत। कोऽसावधर्मः द्वारपानां शुनामिव दासभूतानां राज्ञां स्वामिनि ब्राह्मणे अघं अपराधं इति यदेष एवाधर्मः ॥ ३३ ॥

तदेवोपपादयति क्षत्रबन्धुर्हि ब्राह्मणैः द्वारपालत्वेन श्वेव नियोजितः सः द्वाःस्थः क्षत्रबन्धुः तद्गृहे ब्राह्मणगृहे श्वेव कथं सभाण्डमेकपात्रं यथा तथा भोक्तुमर्हति योग्यो भवेत् ॥ ३४ ॥

उत्पथ[1]प्रतिपन्नानां शास्तरि दण्डयितरि कृष्णे भगवति स्वलोकं प्रति गते सति तान् भिन्नमर्यादान् अहमद्य शास्मि शिक्षये। मम बलं पश्यत ॥ ३५ ॥

वयस्यान् समानवयस्कान् [2]बालकान् प्रति इत्थं **उक्त्वा** रोषेण ताम्रे अक्षिणी यस्य सः **ऋषिबालकः** कौशिक्याः नद्याः अपः उपस्पृश्य आचम्य वाग्वज्रं शापात्मकवाग्रूपं वज्रं विससर्ज प्रायुङ्क्त ॥ ३६ ॥

वाग्वज्रमेव दर्शयति — इति इत्थं उल्लङ्घिता मर्यादा येन तं मे ततद्रुहं ततः तातः पिता तस्यापकारिणं कुलनाशकं राजानं इतः सप्तमेऽहनि मया चोदितः प्रेरितः तक्षकः सर्पः [3]धक्ष्यतीति ॥ ३७ ॥

ततो बालः पितुराश्रममागत्य गले कण्ठे सर्पो यस्य तत्कलेबरं यस्य तं पितरं आलोक्य दुःखपीडितः मुक्तः कण्ठः येन सः उच्चैस्स्वरयुक्तः इत्यर्थः, रुरोद रोदनं कृतवान् ॥ ३८ ॥

ततो हे ब्रह्मन्! स वै आङ्गिरसः सुतस्य विलापनं श्रुत्वा शनैर्नेत्रे उन्मील्य अंसे मृतमुरगं दृष्ट्वा ॥ ३९ ॥

तं परिहृत्य पुत्रं पप्रच्छ। **प्रश्नमेवाऽऽह — हे वत्स! कस्माद्धेतोः** त्वमिति **शेषः। विरोदिषि. रोदनं करोषि,** केन वा ते तव अपकृतम्? भावे क्तः। **इति** इत्थमुक्तो बालकः सर्ववृत्तं न्यवेदयत् कथयामास॥ ४०॥

---

1 W °थं 2 W बालान् 3 A,B **दह्यस्यति**

**विज॰** किमाहेति तत्राऽऽह — **अहो** इति। बलिभुजां काकानामिव पृथ्व्याः पालानां राज्ञामधर्मः अन्यायः अद्य अस्माभिः दृष्टः। अहो कष्टं तत्कुत इति तत्राऽऽह — स्वामिनीति। शुनां स्वामिन्यघमिव ब्राह्मणदासानां तद्गृहद्वारपानां राज्ञां सम्प्रति स्वामिनि ब्राह्मणेऽघं दृष्टमिति यत् यस्मात् तस्मादिति॥ ३३॥

राज्ञां विप्रदासत्वं कथमिति तत्राऽऽह — **ब्राह्मणैरिति**। ब्राह्मणैः दासतया द्वारपालः निरूपितः स राजा तस्य विप्रस्य गृहे द्वाःस्थः द्वारपालः कथं सभाण्डं भाण्डेन सह वर्तमानं गृहं भोक्तुं नाशयितुमर्हति नार्हत्येव। हि यस्मात् तस्मात् असौ स्वामिना दण्ड्यः इत्यर्थः॥ ३४॥

तर्हि सम्प्रति को दण्डकर्ता एतेषामिति तत्राऽऽह — **कृष्ण** इति। उत्पथगामिनां विहितमार्गं परित्यज्य गच्छतां शास्तरि कृष्णे भगवति गते भिन्नसेतून् लङ्घितमर्यादांस्तानद्याहं शास्मि दण्डयामीत्यन्**वयः**। मे बलं सामर्थ्यं पश्यत हे **बालाः!** इति शेषः॥ ३५॥

स च दण्डः कीदृश इति तत्राऽऽह — **इतीति**। रोषताम्राक्षः रक्तनेत्रः कौशिकी कुशपाणिः अपः उपस्पृश्य आचम्य वाग्वज्रं शापलक्षणं विससर्ज दत्तवान् राज्ञ इति शेषः। इतिहासद्योतकेन हशब्देन कौशिकी नदी तस्या अपः उपस्पृश्य इत्यपव्याख्यानमपहस्तितमिति ज्ञातव्यम्॥ ३६॥

इतः अद्यतनात् अह्नः सप्तमेऽहनि मे मया चोदितः प्रेरितः तक्षकः सर्पविशेषः लङ्घितमर्यादं कुलाङ्गारं कुलनाशकं मम पितृद्रुहं परीक्षितं नाम राजानं धक्ष्यति स्म दग्धं कुर्यादित्येकान्**वयः। धक्ष्यतीति** लृट् स्मशब्दसामर्थ्यात् लोडर्थो बोद्धव्यः। **भागवतप्रधानराजदहनेऽपि** सामर्थ्यद्योतनाय वा अयं व्यत्ययः॥ ३७॥

आश्रमं गतः ततः गले सर्पकलेबरं कण्ठस्थितसर्पशरीरं पितरं दृष्ट्वा मुक्तकण्ठः उच्चैः रुरोद इत्यन्**वयः**। समाधिस्थितो वाचा नो बोधनीय इत्यतो रोदनं उच्चैः कृतं इत्यर्थद्योतकः हशब्दः॥ ३८॥

वै अपि आङ्गिरसकुलोत्पन्नः स शमीकोऽपि सुतस्य विलापितं रोदनम्॥ ३९॥

उरगं विसृज्य परिहृत्य कस्माद्धेतोः विरोदिषीति पुत्रं पप्रच्छेत्यन्**वयः**। विप्रकृतं विपरीतं कृतम्॥ ४०॥

**रा॰ कृ॰** बलिभुजामिव काकानामिव द्वारपानां द्वाररक्षिणां शुनामिव **पीव्नां** पुष्टानां दासानां दासभूतानां पालानां राज्ञां स्वामिनि ब्राह्मणे यदघं पापाचरणं इदं वर्तते अहो सोऽयमधर्मः विलोक्यतां **भवद्भिरिति** शेषः॥ ३३॥

**क्षत्रबन्धुः** क्षत्रियाधमः ब्राह्मणैः द्वारपालः **श्वेव** द्वारपालत्वेन निरूपितः नियोजितः सः **द्वास्थः** द्वारपालः **क्षत्रबन्धुः तद्गृहे तेषां** ब्राह्मणानां गृहे सभाण्डं भाण्डस्थितं वस्तु घृतादिकं कथं भोक्तुमर्हति ? न कथमपीति भावः। पुरा तपस्विभिः ब्राह्मणैः क्षत्रियाः प्रजापरिपालने नियुक्ता इति ज्ञायते॥ ३४॥

उत्पथगामिनां अनापदि च विहितमार्गं अपहाय वर्तमानानां शास्तरि भगवति कृष्णे गते स्वलोकं गते सति तत् तदा भिन्नसेतून् भग्नमर्यादान् तान् अद्याहं शास्मि शिक्षये मे मम बलं पश्यत॥ ३५॥

वयस्यान् सवयस्कान् बालकान् प्रति इति एवं **उक्त्वा** रोषताम्राक्षः क्रोधरक्ताक्षः **ऋषिबालकः कौशिक्यपः** कौशिकीनदीजलानि उपस्पृश्य आचम्य वाग्वज्रं शापं विससर्ज प्रयुक्तवान् ह इत्याश्चर्ये। आश्चर्यद्योतकमिदं पदं **राज्ञश्शापानर्हत्वं** सूचयति॥ ३६॥

इति इत्थं **लङ्घितमर्यादं** अतिक्रान्तमर्यादं मे पितृद्रुहं पितृद्रोहकारिणं कुलाङ्गारं स्वकुलनाशकं राजानं **चोदितः** मया प्रेरितस्तक्षकः इतः प्रभृति सप्तमेऽहनि **दङ्क्ष्यति** भक्षयिष्यति। धक्ष्यतीति **पाठे भस्मीकरिष्यतीत्यर्थः**॥ ३७॥

**ततश्शापदानानन्तरं** बालः शृङ्गी आश्रमं पितुराश्रमं अभ्येत्य गले कण्ठे सर्पकलेबरं सर्पकलेबरसहितकण्ठं पितरं वीक्ष्य विलोक्य दुःखार्तः दुःखेन पीडितः मुक्तकण्ठः उच्चैस्स्वरयुक्तः रुरोद रोदनं चकार ह इत्याश्चर्ये। क्व शापदानम्? क्व च स्वयं रोदनम्? अहो अस्याज्ञता इत्यर्थः॥ ३८॥

ततश्च हे ब्रह्मन्! स वा आङ्गिरसः अङ्गिरोगोत्रोद्भवः सः शमीकः सुतविलापनं स्वपुत्रस्य विलापं श्रुत्वा **शनकैश्शनैः** नेत्रे उन्मील्य स्वांसे मृतोरगं मृतसर्पं दृष्ट्वा तं विसृज्य — वत्स! कस्माद्धेतोः रोदिषि ? रोदनं करोषि ? केन वा तेऽपकृतम्? अपकारः कृतः ? इति पुत्रं पप्रच्छ। स च पुत्रः इत्येवमुक्तः पृष्टो न्यवेदयत् सर्वं वृत्तमकथयत्॥ ३९, ४०॥

**निशम्य शप्तमतदर्हं नरेन्द्रम् स ब्राह्मणो नात्मजमभ्यनन्दत्।**
**अहो बतांहो महदज्ञ ते कृतम् अल्पीयसि द्रोह उरुर्दमो धृतः॥ ४१॥**

**न वै नृभिर्नरदेवं पराख्यम् संमातुमर्हस्यविपक्वबुद्धे!।**
**यत्तेजसा दुर्विषहेण गुप्ता विन्दन्ति भद्राण्यकुतोभयाः प्रजाः॥ ४२॥**

**अलक्ष्यमाणे नरदेवनाम्नि रथाङ्गपाणावयमङ्ग! लोकः।**
**तदा हि चोरप्रचुरो विनङ्क्ष्यत्यरक्ष्यमाणोऽविवरूथवत् क्षणात्॥ ४३॥**

तदद्य नः पापमुपैत्य[11]नन्वयम् [12]यन्नष्टनाथस्य [13]वसोर्विलुम्पकात्।
परस्परं घ्नन्ति शपन्ति वृञ्जते पशून् स्त्रियोऽर्थान् पुरुदस्यवो जनाः ॥ ४४ ॥

---

1 W नृपेन्द्रं 2 I °द्य 3 K.M °श्रमो 4 K.M °देवोऽपराध्यः 5 K.M तं शप्तुमर्ह° 6 Af Gf °द्भिः 7 K.M अरक्ष° 8 H.V तथा 9 A.B.G.I.N चौ° 10 H V °माणाविवरूधवत्, Af Gf °माणो हि विरुद्धलक्षणात् 11 W °त्व° 12 Af.Gf नष्टस्य नाथस्य 13 K.M पशोर्विलुम्पकाः

**श्रीध०** **निशम्येति**। अभिनन्दनवाक्यं अहो इत्यादि। बत कष्टम्। ते त्वया महत्पापं कृतम्। अल्पीयसि द्रोहेऽपराधे। दमः दण्डः ॥ ४१ ॥

**नेति**। परो विष्णुरित्याख्या ख्यातिः यस्य। तं नरदेवं नृभिः सम्मातुं समं **द्रष्टुम्**॥ ४२ ॥

**अलक्ष्यमाण** इति। अलक्ष्यमाणे अदृश्यमाने। अविवरूथवत् मेषसङ्घवत्॥ ४३ ॥

**तदिति**। **नष्टः** नाथः यस्य लोकस्य तस्य वसोः वसुनः धनस्य विलुम्पकात् अपहर्तुः चोरादेः हेतोः यत्पापं भविष्यति तदस्मिन्निमित्तत्वादस्मानु[1]पैष्यति। अनन्वयं सम्बन्धशून्यमेव। तदेव पापं दर्शयति परस्परमिति। शपन्ति परुषं वदन्ति। पश्वादीन् वृञ्जतेऽपहरन्ति। पुरुदस्यवश्चोरबहुलाः ॥ ४४ ॥

---

1 H.V °कमु°

**वीर०** ततो अतदर्हं शापानर्हं राजानं शप्तं आकर्ण्य ब्राह्मणः आङ्गिरसः पुत्रं नाभ्यनन्दत् तदेव दर्शयति — **अहो** इति सार्धैः सप्तभिः। हे अज्ञ! ते त्वया महदंहः पापं अहो कृतं बत किं तत् अल्पीयसि द्रोहे अल्पापराधे निमित्ते उरुः दमः दण्डः धृतः कृत इत्येतत्॥ ४१ ॥

अपकृतेनापि राजा नापकार्य इत्याह — **न वा** इति। हे अविपक्वबुद्धे! नृभिः अपकृतैरपि नरदेवः नापकार्यः, अतस्त्वं नरदेवं पराख्यं [1]परमपुरुषमिति सामर्थ्यलब्धोऽर्थः नरदेवनाम्नि रथाङ्गपाणाविति वक्ष्यमाणानुगुण्यात् नरदेव इत्याख्यामात्रमेव स तु साक्षादीश्वर एवेति भावः। तं सम्मातुमेवार्हसि न त्वपकर्तुम्। तत्र हेतुमाह यत् यस्मात् यद्विषयानपकारात् तस्य दुर्विषहेण शत्रुभिः असोढव्येन तेजसा गुप्ताः प्रजाः कुतश्चिदपि भयरहिताः भद्राणि मङ्गलानि सुखानीति यावत् विन्दन्ति लभन्ते। तस्मात् लोकसुखावहो नरदेवः न हन्तव्य इति भावः ॥ ४२ ॥

विपर्यये अनर्थमाह — **अलक्ष्यमाण** इति त्रिभिः। नरदेवाख्ये चक्रपाणौ विष्णौ अलक्ष्यमाणे अविद्यमाने सति, अङ्ग! हे पुत्र! तदा ह्ययं लोकः अरक्ष्यमाणः अत एव चोरभूयिष्ठस्सन् वृकप्रचुराविसङ्घ इव नङ्क्ष्यति नष्टो भविष्यति ॥ ४३ ॥

नश्यतु[2] का [3]हानिः इत्यत्राऽऽह — **तदिति**। तत्पापं अनन्वयं अस्मत्सन्ताननाशकं अद्य अधुना नः अस्मान् उपैति किं तत्पापं यद्विलुम्पकात् नरदेवविच्छेदकात् त्वत्तः हेतोः वसोः धनस्य नष्टनाथस्य रक्षकरहितस्य सतः पुरवः ब[4]हवः दस्यवः येषां ते जनाः परस्परं घ्नन्ति शपन्ति वाक्पारुष्यं कुर्वन्ति वृञ्जते च्छिन्दन्त्यर्थान् वृञ्जते ह[5]रन्तीत्येतत्॥ ४४॥

1. W adds नरदेवाख्यं 2. W नश्यतु 3. W adds नो 4 W बहुला 5 W हरन्ति वेत्येतत्

**विज॰** अतदर्हं तस्य शापस्य अर्हो योग्यो न भवतीत्यतदर्हः तं, न केवलं नाभ्यनन्दत्[1] अनिन्दच्चेत्याह — **अहो** इति। अंहः पापं बत खेदे। अल्पीयसि अणुतरे द्रोहे अपराधलक्षणे उरुर्दमः महादण्डः॥ ४१॥

कुतः अनिन्ददिति तत्राऽऽह — **न वा** इति। नराणां देवो राजा तदधीनैः नृभिः नापराध्य इति दुर्विषहेण यस्य राज्ञः तेजसा गुप्ताः रक्षिताः न कुतोऽपि भयं यासां ताः अकुतोभयाः प्रजाः भद्राणि विन्दन्ति लभन्ते इति वै यतः बहुश्रेयोविवक्षया भद्राणीति बहुवचनम्॥ ४२॥

बाधकञ्चाऽऽह — **अरक्षमाण** इति। नरदेवान्तर्यामित्वात् नरदेवनाम्नि रथाङ्गपाणौ विष्णौ अरक्षमाणे पालनं अकुर्वाणे सति तदानीमेवायं अरक्ष्यमाणः अपाल्यमानः चोरप्रचुरः लोकः जनः अविवरूथवत् रक्षारहितसेनावत् क्षणात् विनङ्क्ष्यति हीत्येकान्वयः, "सेना रक्षा वरूथस्स्यात् अवरोधो निवेशनम्" इत्यभिधानम्॥ ४३॥

नष्टनायकस्य पालकरहितस्य पशोः राष्ट्रस्य चोरादयो विलुम्पकाः नाशका इति यत् यस्मात् अद्य नः अस्माकं अनन्वयं अनुपमं, अन्वयविरोधि सन्ततिनाशकरं वा पापमुपैतीत्यन्वयः। उक्तमेव विवृणोति — परस्परमिति। वृञ्जते अपहरन्ति छिन्दन्ति इति वा, दसु हिंसायामिति धातोः नगरनाशकाः, पुर गताविति धातोः इतस्ततो यात्राविघ्नकरा वा पशून् घ्नन्ति स्त्रियः शपन्ति उपालभन्ते धर्षयन्ति अर्थान् वृञ्जत इति विवेकः॥ ४४॥

1 K,M °श्रमो

**रा॰ कृ॰** अतदर्हं शापानर्हं नरेन्द्रं परीक्षितं शप्तं निशम्य श्रुत्वा सः ब्राह्मणः शमीकः आत्मजं पुत्रं नाभ्यनन्दत् नाभिनन्दितवान्। हे अज्ञ! ते त्वया महदंहः पापं कृतमहो! अल्पीयसि द्रोहे निमित्ते सति उरुः महान् दमः दण्डः धृतः कृतः बतेति खेदे॥ ४१॥

हे अविपक्वबुद्धे! हे अपरिणतबुद्धे! दुर्विषहेण सोढुमशक्येन यत्तेजसा यस्य राज्ञः तेजसा गुप्ताः रक्षिताः अकुतोभयाः कुतश्चिदपि भयहीनाः प्रजाः भद्राणि श्रेयांसि विन्दन्ति लभन्ते तादृशं पराख्यं विष्ण्वाख्यं विष्णुवंशजातं नरदेवं राजानं नृभिः अन्यैः साधारणजनैः सम्मातुं समं द्रष्टुमेव न वै अर्हसि नार्हसि किम्पुनस्तं अपकर्तुम्? अतः स्वशक्त्या सर्वव्यापके विष्णुतुल्ये राजनि कृतः द्रोहः सर्वत्र कृतो भवतीति भावः॥ ४२॥

हे अङ्ग! पुत्र! नरदेवनाम्नि राजाह्वये रथाङ्गपाणौ विष्णौ अलक्ष्यमाणे अदृश्यमाने सति तदा हि अयं लोकः अरक्ष्यमाणः अत एव चोरप्रचुरस्सन् अविवरूथवत् वृकादिभ्यः अरक्ष्यमाणं अजाविकमिव क्षणात् विनङ्क्ष्यति विनाशं गमिष्यति ॥ ४३ ॥

नष्टनाथस्य विगतरक्षकस्य वसोः वसुनः धनस्य विलुम्पकात् अपहर्तुः चोरादेः यत्पापं भवति तत्पापं अनन्वयं सम्बन्धशून्यमेवापि अद्य नः अस्मान् उपैति प्राप्स्यति। कुत इति चेत् पुरुदस्यवः तस्करबहुला जनाः परस्परं घ्नन्ति शपन्ति परुषं वदन्ति पशून् स्त्रियः अर्थांश्च वृञ्जते अपहरन्ति च ॥ ४४ ॥

**तदाऽऽर्यधर्मश्च[1] विलीयते नृणाम् वर्णाश्रमाचारयुतस्त्रयीमयः।**
**ततोऽर्थकामाभिनिवेशितात्मनाम् शुनां कपीनामिव वर्णसङ्करः ॥ ४५ ॥**

**धर्मपालो नरपतिस्स तु सम्राट् बृहच्छ्रवाः।**
**साक्षान्महाभागवतः राजर्षिर्हयमेधयाट्। क्षुत्तृट्श्रमयुतो[2] दीनो नैवास्मच्छापमर्हति ॥ ४६ ॥**

**अपापेषु स्वभृत्येषु बालेनापक्वबुद्धिना।**
**पापं कृतं तद्भगवान्[3] सर्वात्मा क्षन्तुमर्हति ॥ ४७ ॥**

**तिरस्कृता विप्रलब्धाः शप्ताः क्षिप्ता हता अपि।**
**नास्य तत्प्रतिकुर्वन्ति तद्भक्ताः प्रभवोपि हि ॥ ४८ ॥**

**श्रीसूत उवाच**

**इति पुत्रकृताघेन सोऽनुतप्तो महामुनिः।**
**स्वयं विप्रकृतो राज्ञा नैवाघं तदचिन्तयत् ॥ ४९ ॥**

**प्रायशस्साधवो लोके परैर्द्वन्द्वेषु योजिताः।**
**न व्यथन्ति[4] न हृष्यन्ति यत आत्माऽगुणाश्रयः ॥ ५० ॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
प्रथमस्कन्धे विप्रशापोपलम्भनं नाम अष्टादशोऽध्यायः ॥ १८ ॥

---

1 AF GF °ऽऽशुधर्मस्सुवि°, I °ऽऽर्यधर्मः प्रवि° 2 K,M °श्रमान्वितो 3 H,V यद्भ° 4 B व्यथन्ते

**श्रीध० तदेति।** आर्यधर्मः सदाचारः। शुनां कपीनामिव अर्थकामयोरेव अभिनिवेशितचित्तानाम् ॥ ४५ ॥

एवं राजमात्रस्य शापानर्हत्वमुक्त्वा प्रस्तुते विशेषमाह — **धर्मपाल** इति सार्धेन। हयमेधयाट् अश्वमेधयाजी। नन्वेवम्भूतश्चेत् तत् कुतोऽपकृतवान् तत्राऽऽह — क्षुत्तृडिति। स्वागतप्रश्नाद्यभावेन अवज्ञातः प्रत्युत शापं कथमर्हतीत्यर्थः ॥ ४६ ॥

अस्य महापापस्य अन्यत् प्रायश्चित्तमदृष्ट्वा पापमावेदयन् भगवन्तं[2] प्रार्थयते — **अपापेष्विति** ॥ ४७ ॥

राजा चेत् प्रतिशापं दद्यात् तर्हि निष्कृतिर्भवेत् अपि, तत्तु न सम्भवति, तस्य महाभागवतत्वात् इत्याह — **तिरस्कृता** इति। तिरस्कृताः निन्दिताः विप्रलब्धाः वञ्चिताः क्षिप्ता अवज्ञाताः। हताः ताडिताः। अस्य तिरस्कारादिकर्तुः। न तत्प्रतीकारं कुर्वन्ति, तद्भक्ताः विष्णुभक्ताः प्रभवः समर्था अपि ॥ ४८ ॥

**इतीति**। विप्रकृतः अपकृतः अघं अपराधम् ॥ ४९ ॥

युक्तं चैतदित्याह — **प्रायश** इति। **द्वन्द्वेषु** सुखदुःखादिषु। अगुणाश्रयः सुखदुःखाद्याश्रयो न भवति ॥ ५० ॥

इति श्रीमद्भागवते प्रथमस्कन्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां अष्टादशोऽध्यायः ॥ १८ ॥

---

1 B.H.V चार्थ॰ 2 H.V add हरिं

**वीर॰** किञ्च तदा नरदेवनाम्नि रथाङ्गपाणौ अलक्ष्यमाणे सति वर्णाश्रमाचारयुतः त्रय्या आगतः त्रयीमयः "तत आगत" (अष्टा. 4-3-74) इत्यधिकारे "मयट् च" (अष्टा. 4-3-82) इति मयट् वैदिक इत्यर्थः। नृणां आर्यधर्मः सतां धर्मश्च विलीयते नङ्क्ष्यति ततो धर्मलयात् अर्थकामयोः निवेशितः अभिनिविष्टः आत्मा मनः येषां[1] नृणां शुनामिव च सङ्करो भविष्यति ॥ ४५ ॥

एवं सामान्यनरदेवस्य अनिग्राह्यत्वमुक्त्वा अथ प्रकृतं परीक्षितं निर्दिश्याऽऽह — **धर्मपाल** इति। स तु नरपतिः परीक्षित् धर्मपालः वर्णाश्रमधर्ममर्यादापालकः तथात्वेन विश्रुतः विपुलकीर्तिः सार्वभौमश्च तत्रापि महाभागवतः, अनेन ब्रह्मविदपकर्तॄणां नः गतिरेव नास्तीति भावः। राजर्षिः केवलं राजव्याजऋषिरेव न[2], हयमेधयाट्[3] हयमेधेन[4] इष्टवान् ॥ ४६ ॥

**क्षुत्तृड्भ्यां** यः श्रमः तेन युतः अत एव दीनश्च तथाभूतः सर्वथा अस्मच्छापं नार्हति एवमात्मजं अनभिनन्द्य तत्कृतात् अघात् आत्मनः अनर्थमाशङ्क्य भगवन्तं क्षमापयति — **अपापेष्विति**। सर्वात्मा सर्वान्तरात्मा शप्तृशप्तयोरप्यन्तरात्मतया अवस्थितः इति भावः। भगवान् अपापेषु[6] स्वभक्तेषु अनेन अपक्वबुद्धिना विवेकरहितेन बालेन कृतं पापमिदं क्षन्तुमर्हति ॥ ४७ ॥

साक्षान्मद्विषयापराधः कथञ्चिन्मच्छरणवरणादिना सह्यः स्यात् मद्भक्तविषयापराधस्तु न कथञ्चिदपि, किन्तु तैरेव सह्यः इत्येवंविधं भगवदभिप्रायमालोच्य तानेव क्षमापयति — **तिरस्कृता** इति। तिरस्कृताः परिभूता अपि विप्रलब्धाः प्रतारिता अपि शप्ता अपि क्षिप्ता निन्दिता अपि हताः ताडिता अपि तद्भक्ताः भगवद्भक्ताः प्रभवोऽपि प्रत्यपकर्तुं समर्था अपि अस्य तिरस्कारकर्तुः न[7] तिरस्कारादिकर्तॄन् प्रतिकुर्वन्ति, किन्तु केवलं क्षाम्यन्ति ॥ ४८ ॥

इति इत्थं स महामुनिः पुत्रकृतेन अघेन अनुतप्तः[8] राज्ञां स्वयं विप्रकृतोऽपि[9] तद्राजकृतं अघं अपराधं नैवाचिन्तयत् न चिन्तितवान्॥ ४९॥

कुतो नाचिन्तयदित्यत्राऽऽह — **प्रायश** इति। लोके परैः अन्यैः **द्वन्द्वेषु** शीतोष्णसुखदुःखादिषु **योजिताः** संयोजिता अपि साधवः प्रायेण न व्यथन्ति न हृष्यन्ति च यथा सुखे योजिताः न हृष्यन्ति तथा दुःखे **योजिता** अपि न व्यथन्तीत्यर्थः कुतः यतः आत्मा तेषां मनः गुणाश्रयः शीलाश्रयः। यद्वा अगुणाश्रय इति **च्छेदः**। गुणकार्यरागद्वेषाद्यनाश्रयः॥ ५०॥

इति श्रीमद्भागवते प्रथमस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां अष्टादशोऽध्यायः॥ १८॥

---

1 W adds तेषां 2 W omits न 3 W omits हयमेधयाट् 4 W adds याट् 5 W °रुभयोरप्य° 6 W adds निरपराधेषु 7. W तत्तत्कृततिरस्कारादिकं प्रति न प्रतिकुर्वन्ति 8 W adds पश्चात्तप्तः 9 W °पकृतोऽपि

**विज°** तस्य परिपाकमाह — **तदेति**। यदा पश्चादिहन्तृशिक्षा न क्रियते तदा आर्याणां शिष्टानां **सम्मतो** धर्मः धर्मे अधिकृतानां अनुष्ठातॄणां विलीयते क्रमेण ह्रसितः तिरोभवति च। कीदृशः त्रय्या त्रिभिः **वेदैः** मीयते ज्ञायते प्रतिपाद्यत इति त्रयीमयः अत एव वर्णाचारैः आश्रमाचारैश्च युतः। धर्मलयपरिपाकमाह तत इति। **ततः** वर्णाश्रमाचारयुतवैदिकार्थधर्मनाशानन्तरं कनकाद्यर्थेषु स्रक्चन्दनवनितादिभोगलक्षणकामेषु अभिनिवेशितः आत्मा मनः येषां ते तथोक्ताः तेषां पुंसां यथा शुनां कपीनाञ्च भक्षणभोगादावनवस्था तथा हीनजातीनामुत्तमजातिभिः **उत्तमजातीनां** हीनजातिभिः भोगसम्भोगादिना वर्णानां सङ्करः कलुषीभावः भविष्यतीत्येकान्वयः॥ ४५॥

परीक्षितः अदुष्टत्वे **नन्विदं** तदेव कथमिति तत्राऽऽह — **धर्मपाल** इति। अत्र **धर्मपालादिविशेषणानि** हेतुगर्भाणि। धर्मपालत्वात्, महाभागवतत्वात्, राजर्षित्वात्, हयमेधयाजित्वाच्च सम्राट् न दुष्टः अतः **क्षुत्तृट्श्रमान्वित**त्वेन बभुक्षापिपासया दीनः अस्मदाश्रममागतः अर्घ्यादिपूजायोग्यः नैव अस्मत् अस्मत्तः शापं **अर्हति** तस्मात् अनिवार्यमघं आपन्नमिति भावः। हयमेधैः अश्वमेधैः इष्टवान् इति हयमेधयाट्॥ ४६॥

इत्थं अघस्य सिद्धत्वं आपाद्य अनुतापपूर्वकं तदघनिष्कृतिं करोति — **अपापेष्विति**। **सर्वात्मा** सर्वान्तर्यामी श्रीनारायणः बालेन स्वभृत्येषु कृतं तत्पापं क्षन्तुमर्हतीत्यन्वयः॥ ४७॥

अस्मदाश्रममागतः अवज्ञातः परीक्षित् प्रभुरपि न तत्प्रतिचक्र इत्याशयेनाऽऽह — **तिरस्कृता** इति। तिरस्कृता निन्दिता विप्रलब्धाः वञ्चिताः शप्ताः उपालब्धाः क्षिप्ताः अधिक्षिप्ताः हताः ताडिताः **अपिशब्दः** प्रत्येकमभिसम्बध्यते। प्रभवोऽपि प्रतिकर्तुं समर्था अपि प्रतिशापं कर्तुं वा तद्भक्ताः तस्य भक्ताः **हरेर्भक्ताः** अस्य तिरस्कारादिकर्तुः सम्बन्धितत्तिरस्काराद्युद्दिश्य न प्रतिकुर्वन्ति प्रतिक्रियां नैव कुर्वन्तीत्यर्थः। **हिशब्देन "क्षमा बलमशक्तानां** शक्तानां भूषणं क्षमा" इति प्रसिद्धिं दर्शयति॥ ४८॥

तदघं तेन राज्ञा कृतं अपराधं महामुनिरिति हेतुगर्भं विशेषणं सर्वज्ञत्वाच्छरीराभिमानिनः एव दुःखादिप्राप्त्या कोपोत्पत्तिः न त्वसम्प्रज्ञातसमाधेः तस्य पद्मपत्रपानीयवत् अश्लिष्टदुरितत्वात् इत्यादिविशेषत्वादित्यर्थः ॥ ४९ ॥

साधूनां अयं स्वभाव इत्याह — **साधव** इति। **द्वन्द्वेषु** सुखदुःखादिषु योजिताः साधवः यथास्थितवस्तुदर्शिनः। कुतः व्यथाद्यभावः इति तत्राऽऽह यत इति। आत्मा गुणाश्रयः इति अकारप्रश्लेषाप्रश्लेषाभ्यां पदच्छेदः कर्तव्यः। गुणस्य अगुणस्य दोषस्य वा आत्मा कर्ता जीवः स्वयमेवाश्रयः तत् तस्मात् इति ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां
टीकायां प्रथमस्कन्धे अष्टादशोऽध्यायः ॥ १८ ॥

**रा० कृ०** तदा रक्षकराजाभावसमये वर्णाश्रमाचारयुतः वर्णानां आश्रमाणां च आचारैः सहितः त्रयीमयः वेदत्रयप्रतिपादितः नृणां आर्यधर्मश्च शिष्टाचारश्च विलीयते विनाशं गमिष्यति। ततः आर्यधर्मविनाशात् अर्थकामाभिनिवेशितात्मनां अर्थकामयोरभिनिवेशितः अभिनिवेशपूरितः आत्मा येषां तेषां जनानां शुनामिव कपीनामिव च वर्णसङ्करः वर्णानां सङ्करः कलुषीभावः भविष्यतीति शेषः।

साधारणजनेषु धर्माधर्मविनिर्णयशक्तिः प्रायशो मृग्यैव। तेषां ग्रासवासोगृहरक्षणादिकं प्रधानम्। तदपेक्षया जनसमाजे वर्णाश्रमाचारयुतः वेदधर्मः प्रवर्तयितव्यः।

वर्णाश्च वेदधर्मानुसारेण ब्राह्मणक्षत्रियवैश्यशूद्राख्याः चत्वारः एव ये तावत् अकृतबुद्धिभिः अद्य कुलत्वेन व्यपदिश्यन्ते। आजन्मसिद्धगुणान् अनुसृत्य तत्तज्जनानां तत्तद्वर्णव्यवहारः। ते च आजन्मसिद्धगुणाः पूर्वजन्मकर्मवासनानुप्राप्ताः यदनुरोधेन स्वकर्म अथवा कर्तव्यकर्म निश्चीयते। एतत्प्रतीपदिशा कर्मस्वीकाराचाराभ्यां वर्णसङ्करः। किञ्च एतद्वर्णतत्त्वप्रयोजनप्राशस्त्यानभिज्ञाः साधारणजनाः बुद्धिपूर्वं अस्मिन् वैदिके धर्मे न प्रवर्तन्ते। तदत्र निस्स्वार्थबुद्धिना सकलजनश्रेयस्साधननिरतेन परिपालकेन स्वसुखमात्रसम्पादनदृष्टिः सामान्यजनः विनेयः। तदा दुर्जनोऽपि धर्ममनुवर्तते। एष हि दुर्जनस्य स्वभावः यत् अयं प्रायशः निर्भये कर्मणि व्याप्रियते। प्रागुक्तस्य प्रभोरभावे तु दुर्जनाः प्रजोपद्रवकारिणः सञ्जायन्ते। प्रजाश्च प्रायेण स्वार्थकामसम्पादनासक्तचित्तत्वात् धर्ममोक्षमाहात्म्यान्धाः भवन्ति। धर्माचरणैकप्रयोजनौ अर्थकामौ इति भावना तासु लुप्यते। प्रत्युत ताभिः अर्थकामसाधनाय धर्मः अनुष्ठीयते। तथा हि केवलवेतनसम्पादनधिया कर्माणि आचरन्ति न तु परसुखायापि। स्त्रीपुरुषाः कामोपभोगार्थमेव मिथुनीभवन्ति न तु गृहस्थधर्मनिर्वहणायापि। अस्यां दशायां अधिकारबलसम्पत्प्रमुखप्रभावोत्कर्षशालिनः जनाः परदारधनाद्यपहरणेषु प्रवर्तन्ते। दुर्बलाः साधवश्च अशरणाः भवन्ति। तथा च जनास्सर्वे यथा कथञ्चित् लब्धं वस्तु सर्वमपि स्वायत्तीकृत्य कपय इव पलायन्ते नानावर्गत्वेन च विशकलिताः श्वान इव परस्परं कलहायन्ते बहिश्च प्रदर्शयन्ति पशुकामचेष्टाः।

एतत्सर्वानर्थपरम्परा राजर्षेः परीक्षितः मरणेन सम्भविष्यतीति शमीकमहर्षिणा सूचितम् ॥ ४५ ॥

धर्मपालः वर्णाश्रमधर्मरक्षकः सम्राट् सार्वभौमः बृहच्छ्रवाः अधिकयशस्कः साक्षात् विनैव फलाभिप्रायं महाभागवतः निरन्तरं भगवत्सेवकः राजर्षिः राजा सन्नपि ऋषिवत् विषयेषु अनासक्त्या वर्तमानः हयमेधयाट् हयमेधयाजी तथापि क्षुत्तृट्छ्रमयुतः क्षुधा, तृषा, श्रमेण च सहितः अत एव दीनः सः तु नरपतिः राजा परीक्षित् अस्मच्छापं नैवार्हति ॥ ४६ ॥

अपापेषु अपराधरहितेषु स्वभृत्येषु निजसेवकप्रायेषु राजसु अपक्वबुद्धिना अपरिणतबुद्धिना बालेन यत् शापदानलक्षणं पापं कृतं तत्पापं सर्वात्मा भगवान् क्षन्तुमर्हति। शमीकः स्वमनसि कल्पितसान्निध्यं सर्वात्मानं भगवन्तं इत्थं प्रार्थितवान् इति ज्ञेयम् ॥ ४७ ॥

तिरस्कृता परिभूता अपि विप्रलब्धाः वञ्चिताः अपि शप्ताः शापविषयीकृता अपि क्षिप्ताः निन्दिता अपि हताः ताडिता अपि तद्भक्ताः भगवद्भक्ताः प्रभवोऽपि प्रतिकर्तुं समर्था अपि अस्य तिरस्कारादिकर्तुः विषये तत्कृततिरस्कारादिकं न हि प्रतिकुर्वन्ति प्रतीकारं नैव कुर्वन्ति हि ॥ ४८ ॥

इति पूर्वोक्तप्रकारेण पुत्रकृताघेन निजपुत्रकृतेन पापेन अनुतप्तः पश्चात्तप्तः स महामुनिश्शमीकः स्वयं राज्ञा परीक्षिता विप्रकृतोऽपकृतोऽपि तद्राजकृतं अघं अपराधं नैवाचिन्तयत् न चिन्तितवान् ॥ ४९ ॥

लोके जगति परैः इतरैः द्वन्द्वेषु सुखदुःखादिद्वन्द्वेषु योजिताः संयोजिता अपि साधवः प्रायशः न व्यथन्ति दुःखे सति व्यथां नानुभवन्ति न हृष्यन्ति सुखे सति न हर्षं प्राप्नुवन्ति यतः यस्मात् कारणात् तेषां आत्मा अगुणाश्रयः गुणकार्यरागद्वेषाद्यनाश्रयः इति भावः।

शुभाशुभे तत्तद्व्यक्तिपुराकृतकर्मानुगते तन्मनः स्पृशतः। सुखदुःखे तु तन्मनः परिणामविशेषस्वरूपे शुभाशुभविचारणासापेक्षे। तद्विचारणापरित्यागपटवः साधवः। तेषां मतं अनुसृत्य सुखदुःखादिसङ्घटनानां इतरे न हेतवः किन्तु द्वारभूताः तत्तद्व्यक्तिपुराकृतकर्मफलानुभवरूपत्वात्। सुखदुःखे च केवलं अनुभवितुः भावनासापेक्षे — एतत्तत्त्वविदः भयोद्वेगादिभिः न विचाल्यन्त इति भावः ॥ ५० ॥

इति श्रीमद्भागवते प्रथमस्कन्धे
श्रीराधाकृष्णप्रणीतायां सुधीसुधायां व्याख्यायां
अष्टादशोऽध्यायः ॥ १८ ॥



# एकोनविंशोऽध्यायः

## सूत उवाच

महीपतिस्त्वथ तत्कर्म गर्ह्यं विचिन्तयन्नात्मकृतं सुदुर्मनाः ।
अहो [1]मया नीचमनार्यवत्कृतं निरागसि ब्रह्मणि गूढतेजसि ॥ १ ॥

ध्रुवं ततो मे कृतदेवहेलनात् दुरत्ययं[2] व्यसनं नातिदीर्घात् ।
तदस्तु कामं [3]त्वघनिष्कृताय मे यथा न कुर्यां पुनरेवं[4]मद्धा ॥ २ ॥

अद्यैव राज्यं बल[5]मृद्धकोशं प्रकोपितब्रह्मकुलानलो मे ।
दहत्वभद्रस्य पुनर्न मे[6]ऽभूत् पापीयसी धीर्द्वि[7]जदेवगोभ्यः ॥ ३ ॥

स[8] चिन्तयन्नि[9]त्थमथाऽशृणोद्यथा मुनेः सुतोक्तो[10] निर्ऋतिस्तक्षकाख्यः[11] ।
स साधु मेने न चिरेण तक्षकान[12]लं प्रसक्तस्य विरक्तिकारणम् ॥ ४ ॥

अथो विहायेममसुं च लोकं[13] विमर्शितौ[14] हेयतया पुरस्तात् ।
कृष्णाङ्घ्रि[15]सेवामधिमन्यमान उपाविशत् प्रायममर्त्यनद्याम् ॥ ५ ॥

या वै लसच्छ्रीतुलसीविमिश्रकृष्णाङ्घ्रिरेण्वभ्यधिकाम्बुनेत्री ।
[16]पुनाति लोकानुभयत्र सेशान् कस्तां न सेवेत मरिष्यमाणः ॥ ६ ॥

---

1 W मयाऽमीवम° 2 V °य° 3 B.H.I V ह्यघ°, K.M अघ° 4 AF GF °व सद्यः 5 AF GF °मूर्ज°, V °मृद्धि° 6 AF GF मेऽस्तु 7 K.M °तासु 8 H.V सञ्चिन्त° 9 AF GF °ष्ट° 10 K.M °क्ताद्विकृतिं त° 11 H.K.M.V °ख्यात् 12 K.M °द° 13 H.V लोकौ 14 K.M विमृश्य तौ, N विमर्शितो 15 H.K.M.V °भि° 16 K.M पुनात्यशेषानुभयत्र लोकान्

## श्रीधरस्वामिविरचिता भावार्थदीपिका

प्रायोपविष्टे गङ्गायां राज्ञि योगिजनावृते ।
शुकस्यागमनं तत्र प्रोक्तमेकोनविंशके ॥

**महीपतिरिति ।** स्वकृतं तत्कर्म मुनिस्कन्धे स[1]र्पक्षेपणं गर्ह्यं निन्द्यं विचिन्तयन् सुदुर्मना जातः । चिन्तामेवाऽऽह सार्धाभ्यां अहो इति । नीचम् पापम् । अमीवमिति पाठे स एवाऽर्थः । **ब्रह्मणि ब्राह्मणे गूढं गुप्तं तेजो यस्य तस्मिन् ॥ १ ॥**

**ध्रुवमिति**। कृतं यद्देवहेलमीश्वरावज्ञापापमित्यर्थः। तस्मान्नूनं मे व्यसनं भविष्यति। तत्तु नातिदीर्घात्कालादचिरादेवाऽस्तु, तत्राप्यद्धा साक्षान्ममैव[2] न पुत्रादिद्वारेणेति प्रार्थना। काममसङ्कोचतः। एवं प्रार्थनायाः प्रयोजनमघस्य निष्कृताय प्रायश्चित्ताय, यथा पुनरेवं न कुर्यामिति च॥ २॥

एवं साक्षात्स्वस्यैव व्यसनं सम्प्रार्थ्य ततः प्रागेव किञ्चित्प्रार्थयते — **अद्य** इति। अद्यैव मे राज्यादि दहतु प्रकोपितं ब्रह्मकुलमेवाऽनलः[3]। पुनर्द्विजादीन् पीडयितुं[4] धीर्मे नाऽभून्न[5] भवेदित्यर्थः॥ ३॥

**स** इति। इत्थं चिन्तयन् स राजा मुनेस्सुतेनोक्तः सप्तमेऽहनि निर्ऋतिर्मृत्युर्यथा भविष्यति तथाऽशृणोत्। शमीकप्रेषितशिष्याच्छ्रुत्वा च स तक्षकस्य विषाग्निं साधु मेने, यतो विषयेषु प्रसक्तस्य विरक्तिकारणम्॥ ४॥

**अथो** इति। अथो अनन्तरम्। उभौ लोकौ पुरस्तात् राज्यमध्य एव हेयतया विचारितौ विहाय श्रीकृष्णाङ्घ्रिसेवामेव अधिमन्यमानः सन् सर्वपुरुषार्थाधिकां जानन्[7] प्रायमनशनं तस्मिन्नित्यर्थः। तत्सङ्कल्पेनोपाविशत् इति यावत्। यद्वा, प्रायं प्रकृष्टमयनं मरणं[8] यथा भवति तथा॥ ५॥

अमर्त्यनद्यामिति विशेषणस्य फलमाह — **या** इति। या गङ्गा लसन्ती श्रीर्यस्यास्तुलस्यास्तया विमिश्रा ये कृष्णाङ्घ्रिरेणवस्तैरभ्यधिकं सर्वोत्कृष्टं यदम्बु तस्य नेत्री तद्वाहिनी उभयत्रान्तर्बहिश्च सेशान्[9] लोकपालैस्सहितान् लोकान् पुनाति। मरिष्यमाणः आसन्नमरणः मरणस्यानियतकालत्वात् सर्वोऽपि तथा। अतस्तां को न सेवेत?॥ ६॥

---

1 B,H,V सर्पनिक्षे° 2. H,V add अस्तु 3. B °कुलं तदेवा° 4 B adds सा 5. A,B मा° 6. H,V सञ्चिन्तयन्निति 7. H,V add नृपः 8 A,B श° 9 B adds ईशैः

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

**महीपतिरिति**। अथ स्वपुरप्रवेशानन्तरं महीपतिः परीक्षिदात्मकृतं[1] तदुरगनिधानरूपं गर्ह्यं कर्म चिन्तयन् सुदुर्मनाः आत्मनिन्दापरो बभूवेत्यर्थः। तदेव दर्शयति सार्धद्वयेन। अहो मया मूर्खवन्निरागसि[2] निरपराधिनि गूढमनभिव्यक्तं तेजः सामर्थ्यं यस्मिन् ब्रह्मणि ब्राह्मणविषयेऽमीवं निकृष्टं कर्म कृतम्। अमीवं पापम्॥ १॥

ततो नीचात्कृतात्[3] देवहेलनरूपात् कर्मणो निमित्तात् न केवलं मया ब्राह्मणोऽवहेलितः, किन्तु साक्षाद्देवो भगवानेवेत्यभिप्रायेण देवहेलनादित्युक्तं, मे मम नातिदीर्घात् समनन्तरकालमेव दुरत्ययमतिवर्तितुमशक्यं व्यसनं दुःखं ध्रुवं नूनं भविष्यति। तत् स्वस्य हितमेव मन्यते तदिति तद्व्यसनं ममाघनिष्कृताय पापविशुद्धये कामं प्रकाममस्तु। किमनिष्टं प्रार्थयसे इत्यत्राह — यथा पुनरेवंविधमघं न कुर्याम्, अद्धा न कुर्यामेव। अद्धेति स्फुटावधारणयोर्द्योतकमव्ययं शिक्षार्थमस्त्विति भावः। अस्त्वद्धा अस्त्वेवेति वाऽन्वयः॥ २॥

**अद्य** इति। प्रकोपितं कोपं प्रापितं यत् ब्रह्मकुलं ब्राह्मणकुलं तत्कर्तृकनिग्रहात्मकोऽनलोऽग्निरद्यैव मम राज्यं बलं सैन्यं प्रभूतधनकोशश्च दहतु। यथा पुनरभद्रस्य मम द्विजेभ्यो देवेभ्यो गोभ्यश्चापचिकीर्षायुक्ता चैवंविधा पापीयसी बुद्धिर्माभूत्तथा शिक्षार्थं दहत्विति भावः॥ ३॥

**इत्थं सञ्चिन्तयन् राजा यथा येन प्रकारेण तक्षकाख्यो निर्ऋतिर्मृत्युर्मुनेः सुतेनोक्त· शापात्मकोक्त्या प्रचोदितस्तथैव शुश्राव, ततस्स राजा प्रसक्तस्य विषयेष्विति शेषः, विषयासक्तस्य स्वस्य विरक्तिकारणं हेतुगर्भमिदं विरक्तिकारणत्वात्तमचिरेण तक्षकरूपमनलं साधु यथा तथा मेने ॥ ४ ॥**

**अथो ततः इमममुञ्च लोकं विहाय। लोक्यत इति लोकः फलम्, सुखमिति यावत्, ऐहिकामुष्मिकसुख-स्पृहां विहायेत्यर्थः। इमममुञ्च लोकं विशिनष्टि। स्वेन पुरस्तात्पूर्वमेव हेयतया विमर्शितौ विचारपूर्वकं हेयत्वेन निश्चितौ विचारपूर्वकम् इमममुञ्च लोकं विहायेत्यन्वयः। ततः कृष्णस्य भगवतोऽङ्घ्रिसेवामधिमन्यमानो निरवधिकपुरुषार्थसाधनतया मन्यमानोऽमर्त्यनद्यां देवनद्यां गङ्गायां प्रायमनशनव्रतमुपाविशत् अनशनव्रतेन दीक्षितो बभूवेत्यर्थः ॥ ५ ॥**

स्वगृहेऽन्यत्र वा प्रायमुंपविशतु, किं विशेषेण अमर्त्यनद्यामेव तदुपाविशदित्यत्र तां विशिंषन्नाह — **या वा** इति। लसन्त्या श्रीतुलस्या विमिश्रो यः कृष्णस्याङ्घ्रिरेणुस्ततोऽभ्यधिकस्य प्रशस्तस्याम्बुनोऽम्भसो नेत्री प्रवहन्ती याऽमर्त्यनदी उभयत्र इहामुत्र च सेशान् लोकपालैः सहितान् लोकान् जनान् पुनाति तां नदीं मरिष्यमाणः को वा पुमान्न सेवेत ? अपि तु सर्व इत्यभिप्रायेण तस्यामेव प्रायमुपाविशदित्यर्थः। लसच्छ्रीतुलसी श्रीकृष्णाङ्घ्रिरेणुना हेतुनाऽभ्यधिकं स्वाधिकरहितमम्बु तस्य नेत्रीति वाऽर्थः ॥ ६ ॥

1. W adds स्वकृतं 2 W निरपराधे 3 W अमीवाल्कृ° 4 W °मनुपविश्य

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

विमुक्तिसाधनेषु प्रथमापाद्यसाधनत्वेन वैराग्यमवश्यमापाद्यं मुमुक्षुणेति परीक्षिच्चिन्ताकथनापदेशेन तत्प्रतिपाद्यतेऽस्मिन्नध्याये। ननु परीक्षितो धर्मपालत्वादिकं न युज्यते। नृशंसवन्नीचकर्मकरणात् पश्चात्तापानुदयाच्चेत्याशङ्कापरिहारत्वेनाह — **महीपतिरिति**। मुनेः स्कन्धे मृतसर्पशरीरार्पणलक्षणमात्मना अनुष्ठितं यत्कर्म तच्चिन्तयन् सुदुर्मनाः सुष्ठु दुःखितमना अभूदिति शेषः। तुशब्द ईश्वरेच्छाधीनत्वं दर्शयति "श्वपचादपि कष्टत्वं ब्रह्मेशानादयः सुराः" इति स्मृतेः। कस्मिन्विषये अनुष्ठितं येन महती चिन्ता सम्भाव्यत इति तत्राह — अहो इति। मया निरागसि निरपराधे गूढतेजसि अप्रकाशिततेजोलक्षणमहिम्नि ब्रह्मणि ब्राह्मणे अनार्यवत् मूर्खवत् नीचं कर्म कृतम् अहो कष्टमिति। महीपतेः कर्मणो गर्ह्यत्वद्योतनाय ब्रह्मणीति; सोऽप्यपराधी चेत्कथञ्चित् घटत इत्यतो निरागसीति। प्रतिक्रियासामर्थ्यप्रकटनाय गूढतेजसीति। "ब्रह्म वेदस्तपस्तत्त्वं ब्रह्मा विप्रः प्रजापतिः" (अम. को. 3-271) इत्यभिधानात्; "ब्राह्मणो नाऽवमन्तव्यो निरागास्तु विशेषतः" (भार. 1-179-13) इति वचनात्॥ १ ॥

तच्च दुष्कृतमपरिहार्यविपत्तिकरमिति चिन्तयतीत्याह — **धुमिति**। ब्राह्मणस्यास्य अवज्ञा विष्णोरवज्ञैव। यतस्तस्माद्देवस्य हरेर्हेलनादवज्ञानात् ध्रुवमवश्यं दुरत्ययमत्येतुमशक्यं व्यसनं दुःखं नातिदीर्घादचिरान्मे मम भविष्यति इत्यन्वयः। तद्व्यसनं मनसाऽभ्युपगच्छतीत्याह तत् इति। अघनिष्कृताय पापप्रायश्चित्ताय तद्व्यसनं काममस्तु, कुतोऽद्धा निरङ्कुशतयाऽहं पुनरेवंविधमघं यथा न कुर्यां तथाऽस्त्विति शेषः ॥ २ ॥

नौपचारिकमिदम्, आन्तरमेवेत्यभिप्रेत्य तदेवाऽऽह — अद्यैव इति। प्रकोपितब्रह्मकुलमेवानलो बहुदाहेऽप्यलम्बुद्धिर्नास्तीत्यनलः। मे मदीयत्वेन अभिमतं राज्यदिकमद्यैव कालक्षेपमन्तरेण दहतु। भूयः अभद्रस्य मे द्विजदेवतासु पापीयसी बुद्धिर्माभूत्, न भूयादित्यन्वयः। अभूदिति व्यत्ययो राज्ञो महानुतापसूचनायेति ज्ञातव्यम्। द्विजाश्च देवताश्च द्विजदेवताः द्विजेषु सन्निहिता देवता वा द्विजरूपदेवता वा। तासु न विद्यते भा दीप्तिर्येषां तेऽभास्तान् द्राति कुत्सयतीति अभद्रः। द्रा कुत्सायामिति धातुः। तद्वत् द्राणमज्ञानं यस्य स तथेति वा, द्रा निद्रायामिति धातुस्तस्य ॥ ३ ॥

अथेत्थं चिन्तयन् स परीक्षित् तक्षकाख्यान्मुनेः सुतोक्तात् सुतेन प्रेरितात् विकृतिकृतापराधपरिहारं[1] देहवियोगलक्षणं यथावदशृणोदित्यन्वयः। आकर्ण्य किमकार्षीदिति तत्राऽऽह — **स** इति। सचाऽऽकर्ण्य तक्षकादचिरेण मरणं राज्यादिषु अलं प्रसक्तस्य विरक्तिकारणमभूदिति साधु मेने इत्यन्वयः ॥ ४ ॥

'स सम्राट् कस्य वा हेतो' रिति शौनकप्रश्नं परिहरति — **अथो** इति। अथो ब्रह्मशापाकर्णनसमनन्तरमेव ममायं शापोऽपि विरक्तिहेतुत्वात् साधुरिति मन्वानः पुरस्तात्प्रथमं ताविहलोकपरलोकावनित्यत्वदुःखमिश्रत्वादिना हेयतया विमृश्य अधिराट् श्रीयुतमिमं भूलोकं तथा अमुं स्वर्गलोकं निर्विद्य विहायाऽस्मिन् संसारे कृष्णाङ्घ्रिसेवैव आत्यन्तिकदुःखनिवृत्तिसुखसाधनत्वात् कर्तव्येति च विमृश्य तामेव म्रियमाणस्य आत्मनः कर्तव्यामभिमन्यमानः परीक्षित् अमर्त्यनद्यां गङ्गायां प्रायमुपाविशत्, यावज्जीवमनशनव्रतं चकारेत्यन्वयः ॥ ५ ॥

किमिति गङ्गायामेव प्रायोपवेशः, अन्यत्राऽपि किं न स्यादिति तत्राह — **या वा** इति। लसन्ती श्रीमती तुलसी लसच्छ्रीतुलसी ब्रह्मज्ञानेन तुलां सिनोतीति तुलसी ब्रह्मज्ञानसदृशी। ब्रह्मज्ञानस्य संसारनिवर्तकत्वं यन्माहात्म्यं तदस्या अप्यस्तीति तत्सदृशी। तनोति करोति मोक्षादिपुरुषार्थमिति तुर्विष्णुः, तत्र लसतीति वा तुलसी। तस्या मञ्जरीरजोभिः विमिश्राः कृष्णस्याङ्घ्रिरेणवः, तैः सहाधिकानि यान्यम्बूनि जलानि तेषां नेत्री लसच्छ्रीतुलसीमञ्जरीरजोविमिश्रश्रीकृष्णचरणरेणुसमधिगत माहात्म्याभ्यधिकसलिलप्रवाहाऽऽकुलेत्यर्थः। या चाऽत एव अशेषान् लोकान् उभयत्र अन्तर्बहिश्च पुनातीति उभयत्र इह लोके शिष्टव्यवहारयोग्यतालक्षणां शुद्धिं, परलोके नरकप्राप्त्यादिनिवर्तनलक्षणां करोतीति वाऽतो मरिष्यमाणः पुमान् कस्तां गङ्गां न सेवेत? ॥ ६ ॥

---

1 K,M विकृतिं

## श्रीराधाकृष्णप्रणीता सुधीसुधा

अथ हस्तिनापट्टणगमनानन्तरं महीपतिः परीक्षित् आत्मकृतं तन्मुनिस्कन्धे सर्पकलेबरनिक्षेपणरूपं गर्ह्यं निन्द्यं कर्म विचिन्तयन् सुदुर्मनाः अत्यन्तं दुःखितमनस्कोऽभूदिति शेषः। तच्चिन्ताप्रकारमेवाह — अहो! मयाऽनार्यवत् अज्ञवत् निरागसि निरपराधे गूढतेजसि गुप्तसामर्थ्ये ब्रह्मणि ब्राह्मणे विषये नीचं पापं कृतम्।

ततस्तस्मात् कृतदेवहेलनात् कृतात् देवस्य भगवतो हेलनात् अवहेलनात्— अनेन ब्रह्मनिष्ठे शमीकमहामुनौ कृतोऽपराधः भगवत्येव कृत इति परीक्षिद्भावयतीति गम्यते। मे मम नातिदीर्घात् शीघ्रमेव दुरत्ययं दुर्निवारं व्यसनं दुःखं ध्रुवं निश्चितमेव भविष्यतीति शेषः। यथा पुनः एवं एवंविधं पापं अद्धा निश्चयेन न कुर्यां तथा तद्व्यसनं तु मे अघनिष्कृताय पापपरिहाराय कामं यथेष्टमेवाऽस्तु, भवतु।

प्रकोपितब्रह्मकुलानलः प्रकोपितं सर्पकलेबरप्रक्षेपेण कोपं प्रापितं यत् ब्रह्मकुलं ब्राह्मणकुलं तदेवाऽनलः कुपितब्राह्मणकर्तृकनिग्रहरूपोऽनल इत्यर्थः। अद्यैव मे राज्यं बलं सैन्यं ऋद्धकोशं समृद्धं धनागारञ्च दहतु। अभद्रस्य दुष्टस्य मे पुनः द्विजदेवगोभ्यः पापीयसी एवंविधा अपचिकीर्षायुक्ता धीर्बुद्धिः न अभूत् मा भूदिति भावः। न मेऽस्तु इति पाठस्साधीयान्।

स्वपापाचरणानुतप्तः परीक्षित् मुनिपुत्रदत्तशापमङ्गीकृत्य तच्छापफललमनुभवितुं संसिद्धोऽभवत्। यद्यपि राजर्षिस्सः प्रतिशापप्रदानाय प्रभुस्तथापि स्वजीवनस्य सप्तदिनमात्रपरिमितत्वात् अपकारिष्वपि सहिष्णुतायाः परमभागवत-शीलत्वात् भागवतोत्तमस्स राजा तथा न कृतवान्।

अपि च परीक्षिताऽनुभूयमानायाः मनोव्यथायाः शृङ्गिशापो न कारणम्। किन्तु स्वपापाचरणनिदानभूतः दुष्टसङ्कल्प एव। तस्मादयं राजा भविष्यत्यपि तादृशः पापसङ्कल्पः आत्मनो माभूदिति प्रार्थयते।

एवं भागवतोत्तमाः विपत्परम्पराभ्यः अविचलिताः परमप्रयोजनप्राप्तिप्रयत्नशीलाः भवन्तीत्येषा परीक्षिच्छापक-था महते प्रबोधाय कल्पते। एतदेव अग्रे विशदयति — ॥ १, २, ३ ॥

इत्थं पूर्वोक्तप्रकारेण सञ्चिन्तयन् स राजा अथानन्तरमेव यथा तक्षकाख्यः निर्ऋतिः मृत्युः मुनेस्सुतोक्तः सुतेन कथितः शापरूपेण प्रचोदितः तथा शमीकप्रेषितशिष्यादशृणोत्। किञ्च सः प्रसक्तस्य विषयासक्तस्य आत्मन इति शेषः। विरक्तिकारणं तक्षकानलं तक्षकस्य विषाग्निं साधु मेने॥ ४॥

अथो ब्राह्मणशापश्रवणसमनन्तरमेव पुरस्तात् शापश्रवणात् प्रागपि राज्यशासनसमयमध्य एव इत्यर्थः। हेयतया दुःखमिश्रत्वात् त्याज्यतया विमर्शितौ विचारितौ इमं लोकं भूलोकं, अमुञ्च लोकं स्वर्लोकं च विहाय कृष्णसेवां श्रीकृष्णपादसेवां अधिमन्यमानः सर्वसाधनेभ्यः अधिकां मन्यमानः अमर्त्यनद्यां गङ्गायां गङ्गातटे इति यावत् प्रायमनशनं निमित्तीकृत्येति शेषः। उपाविशत् प्रायोपवेशं कृतवानित्यर्थः। असमये बलवत् देहत्यागाभिलाष इव प्राणिनामासन्नेऽपि मृत्यौ वैराग्यानुदयो दोषावहः। तस्मादासन्नमृत्युः परीक्षित् विरक्तः श्रीकृष्णपादसेवासक्तः गङ्गातटे प्रायोपवेशमकरोदिति ज्ञेयम्॥ ५॥

लसच्छ्रीतुलसीविमिश्रकृष्णाङ्घ्रिरेण्वभ्यधिकाम्बुनेत्री लसन्त्या श्रीतुलस्या विमिश्राः ये कृष्णाङ्घ्रिरेणवः तैरभ्यधिकं सर्वोत्कृष्टं यदम्बु तस्य नेत्री वाहिनी या वै गङ्गा सेशान् लोकपालसहितान् लोकानुभयत्राऽन्तर्बहिश्च पुनाति पवित्रीकरोति तां गङ्गां मरिष्यमाणः आसन्नमृत्युः को वा न सेवेत? सर्वोऽपि सेवेतेति भावः॥ ६॥

इति व्यवच्छिद्य[1] स पाण्डवेयः प्रायोपवेशं प्रति विष्णुपद्याम्।
दध्यौ[2] मुकुन्दाङ्घ्रिमनन्यभावो मुनिव्रतो मुक्तसमस्तसङ्गः ॥ ७ ॥

तत्रोपजग्मुर्भुवनं पुनाना महानुभावा मुनयः सशिष्याः।
प्रायेण तीर्थाभिगमापदेशैः[3] स्वयं हि तीर्थानि पुनन्ति सन्तः ॥ ८ ॥

अत्रिर्वसिष्ठश्च्यवनश्शरद्वानरिष्टनेमिर्भृगुरङ्गिराश्च।
पराशरो गाधिसुतोऽथ राम उतथ्य[4] इन्द्रप्रमदेध्मवाहौ[5] ॥ ९ ॥

मेधातिथिर्देवल आर्ष्टिषेणो[6] भारद्वाजो[7] गौतमः पिप्पलादः।
मैत्रेय और्वः कवषः[8] कुम्भयोनिर्द्वैपायनो भगवान्नारदश्च ॥ १० ॥

अन्ये च देवर्षिब्रह्मर्षिवर्या[9] राजर्षिवर्या अरुणादयश्च।
नानार्षेयप्रवरान्[10][11] समेतानभ्यर्च्य राजा शिरसा ववन्दे ॥ ११ ॥

सुखोपविष्टेष्वथ तेषु भूयः कृतप्रणामः स्वचिकीर्षितं यत्[12]।
विज्ञापयामास विविक्तचेता उपस्थितोऽग्रेऽभिगृहीतपाणिः[13] ॥ १२ ॥

---

1 K,M °स्थाय 2 I दधौ 3 K,M °धि° 4 H,V,W उचथ्य 5 AF GF °प्रमतिः सुबाहुः; K,M °प्रमतीध्मवाहौ 6 H °र्ष्णि°, V °र्षि° 7 B,H,V भ° 8 AF GF °यः 9 AF GF °महर्षि° 10 AF GF नानर्षिसङ्घान् पुरतः स° 11 H,V,W रांस्तान् स° 12 AF GF महत् 13 K,M °र्घ्य°

**श्रीध० इति** इति। इत्येवं विष्णुपद्यां गङ्गायां प्रायोपवेशं प्रति व्यवच्छिद्य निश्चित्य पाण्डवेय इति तत्कुलौचित्यं दर्शयति। नास्त्यन्यस्मिन् भावो यस्य सः। कुतः? मुनिव्रतः उपशान्तः। तत्कुतः? मुक्तस्समस्तस्सङ्गो येन सः ॥ ७ ॥

**तत्र** इति। तत्र तदा तद्दर्शनार्थं, मुनयः उपागताः न तु तीर्थस्नानार्थं कृतार्थत्वात्। ननु तादृशानामपि तीर्थयात्रा दृश्यन्ते, तत्राह प्रायेणेति। तीर्थयात्राव्याजैः ॥ ८, ९, १० ॥

**अन्य** इति। अरुणादयः काण्डर्षित्वविशेषेण पृथङ्निर्दिष्टाः। नाना[1] यान्यार्षेयाणि **ऋषीणां गोत्राणि** तेषु प्रवरान् श्रेष्ठान् शिरसा भुवं स्पृष्ट्वा ववन्दे ॥ ११ ॥

**सुखोपविष्टेषु** इति। विज्ञापनार्थं पुनः कृतप्रणामः। विविक्तं **शुद्धं** चेतो यस्य। **अभिगृहीतौ** संयोजितौ पाणी येन सः, स्वचिकीर्षितं प्रायोपवेशनादि युक्तमयुक्तं वेति विज्ञापयामास ॥ १२ ॥

---

1 H,V नानाविधान्यार्षे°

**वीर०** स पाण्डवेयः परीक्षित् इत्थं विष्णुपद्यां गङ्गायां प्रायोपवेशं प्रति व्यवच्छिद्य विनिश्चित्य सङ्कल्प्य मुक्तः समस्तेषु देहतदनुबन्ध्यादिषु सङ्गो येन, मुनीनां व्रतं यस्य, न विद्यतेऽन्यो भावः[1] चिन्ता यस्य सः मुकुन्दाङ्घ्रिं दध्यौ ध्यातवान्॥ ७ ॥

तदा तत्र राज्ञस्सन्निधौ महानुभावास्सशिष्या मुनयः लोकं पुनानाः पवित्रीकुर्वन्तः आजग्मुः। भुवनं पुनाना इत्येतदेवोपपादयति — प्रायेण सन्तः साधवः तीर्थयात्राव्याजैः स्वयमेव तीर्थानि पुनन्ति। हि यथा च पुनन्ति तथोपपादितं पुरस्तात् "तीर्थीकुर्वन्ति तीर्थानि" (भाग. 1-13-10) इत्यत्र[2]॥ ८॥

केचैते[3] मुनय इत्यत्र[4] दर्शयति — **अत्रिरिति** सार्धद्वयेन। गाधिसुतो विश्वामित्रः रामो भार्गवः, कुम्भयोनिरगस्त्यः ॥ ९, १० ॥

अन्ये च देवर्षिश्रेष्ठा, ब्रह्मर्षिश्रेष्ठा, राजर्षिवर्या अरुणादयश्च ऋषयः। तानागतान्नानाविधार्षेयप्रवरान् समेतान् सङ्घीभूतानभ्यर्च्य राजा परीक्षित् शिरसा ववन्दे॥ ११ ॥

अथ तेषु सुखं यथा तथा उपविष्टेषु सत्सु पुनरपि कृतः प्रणामो येन स राजा उपस्थितस्तेषां समीपे तिष्ठन्नभिगृहीतपाणिः बद्धाञ्जलिः विवेकयुक्तं चेतो यस्य तथाभूतः स्वचिकीर्षितं कर्तुमिष्टं यत्तद्विज्ञापयामास॥ १२ ॥

---

1 W adds भावना 2 W adds इत्यर्थः 3 W च ते 4 W adds तान्।

**विज०** अतो मरिष्यमाणोऽहं तीर्थोत्तमत्वाद्विष्णुपद्यां गङ्गायामनशनव्रतं करिष्य इति प्रायोपवेशं प्रति व्यवस्थाय निश्चित्यानन्यभावोऽनन्यचेता राज्यभारादिचिन्तारहितान्तःकरणो विष्ण्वेकचेता[1] वा मुनीनां निवृत्तानां ज्ञानिनां व्रतमिव व्रतं यस्य स मुनिव्रतो, वाचालत्वरहितो वा। अत एव मुक्ताः समस्तास्सङ्गाः पुत्रादिविषयस्नेहा यस्य स मुक्तसमस्तसङ्गः[2]। श्रोत्रादीन्द्रियैरन्यप्रसङ्गमन्तरेण तत्कथाश्रवणादिप्रसङ्गो यस्य स तथेति वा। स पाण्डवेयः परीक्षित् विष्णुपद्यां प्रायोपवेशं प्रति स्थितो मुकुन्दं तदङ्घ्रिश्च एवं दध्यावित्येकान्वयः। चः समुच्चये अवधारणे वा॥ ७॥

यत्र परीक्षित्तिष्ठति तत्रोपजग्मुः॥ ८॥

मुनीनां नामानि निर्दिशतीत्याह — **अत्रिरिति**। गाधिसुतो विश्वामित्रो, रामः परशुरामः, इन्द्रप्रमतिश्च इध्मवाहश्च इन्द्रप्रमतीध्मवाहौ ॥ ९ ॥

कुम्भयोनिरगस्त्यः ॥ १० ॥

अन्ये च प्रसिद्धाः प्रसिद्धनामानो नारदादयो देवर्षयो, रामादयो ब्रह्मर्षयो, विश्वामित्रादयो राजर्षयः जातिभेदकथनार्थं पुनर्वचनम्। अरुण आदिर्येषां तथोक्ताः ऋषीणां समूहः आर्षेयं तस्मिन् प्रवराः नानार्षेयप्रवराः, तानभ्यर्च्य, अर्घ्यपाद्यादिभिरिति शेषः। शिरसा वन्दनं नाम नमस्कार एवात्राऽभिप्रेतः, कृतप्रणाम इत्युत्तरवचनात्॥ ११ ॥

ऋषीणामग्रे उपस्थितोऽर्घ्यं गृहीतं पाणौ येन स तथा यत् स्वेन कर्तुमिष्टं तदेभ्यो विज्ञापयामासेत्यन्वयः ॥ १२ ॥

1. B,K,M °ध्वै° 2. K,M add मुक्ते हरौ समस्तसङ्गः

**रा० कृ०** इति हेतोस्स पाण्डवेयः पाण्डुवंशजः परीक्षित् विष्णुपद्यां गङ्गायां प्रायोपवेशं प्रति व्यवच्छिद्य निश्चित्य मुक्तसमस्तसङ्गः त्यक्तदेहतदनुबन्धिसङ्गः मुनिव्रतः अनन्यभावः न विद्यतेऽन्यस्मिन् भावो भावना यस्य तथाभूतस्सन् मुकुन्दाङ्घ्रिं श्रीहरिपदं दध्यौ ध्यातवान्।

अत्र 'मुकुन्दाङ्घ्रि'पदेन विष्णुपदमभिधीयते। सर्वव्यापकस्य विष्णोः पदेन विश्वाकाशमभिव्यज्यते। विष्णुपदस्य आकाशार्थकत्वे "वियद्विष्णुपदम्" (अम. को. 1-73) इत्यादिकोशोऽपि प्रमाणीभवति। आकाशेन च शब्दगुणकेन सर्वशब्दादिभूतः प्रणवो गम्यते। 'ओम्' इत्याकारकः प्रणवः प्राण्युच्छ्वासनिश्श्वासात्मकसोऽहंपरिणामेन हंसमन्त्रेण सिध्यति। तथा च तन्मन्त्रनिरन्तरस्मरणेन श्वासे मनोलयं गमिते सति तच्छ्वासान्तर्लीनप्रणवत्वेनावतिष्ठते साधकः। तन्मन्त्रनिरन्तरस्मरणञ्च अनन्यभावपदेन गम्यते। सैषा स्थितिः विष्णुपदप्राप्तिरित्युच्यते ॥ ७ ॥

तदा महानुभावाः मुनयस्सशिष्याः भुवनं पुनानाः तत्र परीक्षित्समीपे आजग्मुरागताः। प्रायेण सन्तस्साधवः तीर्थाभिगमापदेशैः तीर्थयात्राव्याजैः स्वयं हि स्वयमेव तीर्थानि पुनन्ति पवित्रीकुर्वन्ति ॥ ८ ॥

अत्रिर्वसिष्ठश्च्यवनः शरद्वानरिष्टनेमिः भृगुरङ्गिराः पराशरो विश्वामित्रः परशुरामः उतथ्यः, इन्द्रप्रमदः इध्मवाहः, मेधातिथिः, देवलः, आर्ष्टिषेणः, भारद्वाजः, गौतमः, पिप्पलादः, मैत्रेयः, और्वः, कवषः, अगस्त्यः, व्यासः, भगवान् नारदः किञ्चान्ये देवर्षिवर्याः ब्रह्मर्षिवर्याः राजर्षिवर्याः अरुणादयश्च काण्डर्षयः इति शेषः। तत्रोपजग्मुरिति पूर्वेणान्वयः। नानार्षेयप्रवरान् नानाऋषिगोत्रेषु श्रेष्ठान् समेतान् स्वसन्निधिमागतान् तान् मुनीन् राजा अभ्यर्च्य शिरसा ववन्दे, वन्दनं कृतवान् ॥ ९, १०, ११ ॥

अथ तेषु मुनिषु सुखोपविष्टेषु भूयः पुनरपि कृतप्रणामः उपस्थितस्तेषां समीपे स्थितः अग्रे पुरतः अभिगृहीतपाणिः संयोजिताञ्जलिः परीक्षिदिति शेषः। विविक्तचेताः विशुद्धमनस्कस्सन् चिकीर्षितं स्वेन आत्मना कर्तुमिष्टं यद्वर्तते तद्विज्ञापयामास निवेदितवान् ॥ १२ ॥

**राजोवाच**

**अहो! वयं धन्यतमा नृपाणां महत्तमानुग्रहणीयशीलाः।**
**राज्ञां कुलं[1] ब्राह्मणपादशौचात् दूराद्विसृष्टं बत गर्ह्यकर्म ॥ १३ ॥**

**तस्यैव मे[2]ऽघस्य परावरेशो व्यासक्तचित्तस्य गृहेष्वभीक्ष्णम्।**
**निर्वेदमूलो द्विजशापरूपो यत्र प्रसक्तो भयमाशु धत्ते ॥ १४ ॥**

तं मोपयातं[3] प्रतियन्तु[4] विप्रा गङ्गा च देवी धृतचित्तमीशे ।
द्विजोपसृष्टः कुहकस्तक्षको[5] वा दशत्वलं[6] गायत विष्णुगाथाः ॥ १५ ॥

पुनश्च भूयाद्भगवत्यनन्ते रतिः[7] प्रसङ्गश्च तदाश्रयेषु ।
महत्सु यां यामुपयामि सृष्टिं मैत्र्यस्तु सर्वत्र नमो द्विजेभ्यः ॥ १६ ॥

इति स्म राजा[8]ऽध्यवसाययुक्तः प्राचीनमूलेषु कुशेषु धीरः ।
उदङ्मुखो दक्षिणकूल आस्ते समुद्रपत्न्याः स्वसुत[9]न्यस्तभारः ॥ १७ ॥

विहाय सर्वं नरदेवचिह्नं केयूरहाराङ्गदमौलिरत्नान् ।
रत्नाङ्गुलीयान् विमलान्निरस्य पवित्रपाणिर्मुनिवेष आस्ते ॥

एवं च[10] तस्मिन्नरदेवदेवे प्रायोपविष्टे दिवि देवसङ्घाः ।
प्रशस्य भूमौ व्यकिरन् प्रसूनैर्मुदा[11] मुहुर्दुन्दुभयश्च नेदुः ॥ १८ ॥

---

1 K,M °शौचमाराद्; B,W °शौचादारात् 2. K,M मेऽस्त्वद्य परावरेशे 3 K,M °विष्टं 4 K,M °यान्तु 5 H,V °काख्यो 6 V °त्य° 7 H,V रतिप्रस° 8 H,K,M,V राजा व्यवसाय° 9 B,K,M,W °सुते न्यस्त° * This additional verse is found in K & M, between vv 17 and 18 It was commented upon by Vijayadhvaja Theertha and the commentary is to be found in its proper place 10. H,V तु तस्मिन्न°; W बतास्मिन्न° 11 W °र्मुहुर्मुहु°

**श्रीध॰** अनुमोदनेनाऽनुग्रहमालक्ष्याऽऽत्मानं श्लाघते — **अहो** इति। नृपाणां मध्ये महत्तमैरनुग्रहणीयं शीलं वृत्तं येषां ते। एतच्च राज्ञामतिदुर्लभमित्याह। ब्राह्मणानां पादशौचात्पाद[1]क्षालनोदकात् ''दूरादुच्छिष्टविण्मूत्रपादाम्भांसि समुत्सृजेत्'' इति स्मृतेः, दूरे हि तैस्तद्विसृज्यते। ततोऽपि दूरादेव विसृष्टं क्षिप्तम्। तत्राऽपि स्थातुमयोग्यमित्यर्थः। गर्ह्यं कर्म यस्येत्यात्मानमुद्दिश्योक्तम्॥ १३ ॥

आस्तां तावदनुग्रहो ब्रह्मशापोऽपि भगवत्प्रसादादेव जात इत्याह — **तस्येति**। तस्य गर्ह्यकर्मण एव। अतोऽघस्य[2] पापात्मनो गृहेष्वसक्तचित्तस्य मे स्वप्राप्तये परावराणामीश एव द्विजशापरूपो[3] बभूव। यत्र यस्मिन् शापे सति गृहेषु प्रसक्तो भयं धत्ते निर्विण्णो भवति[4]। यतो निर्वेदमूलो निर्वेदो वैराग्यमूलम् प्राप्तिकारणं यस्मिन्। स्वस्य वैराग्यप्राप्यत्वात्तस्य च भयमूलत्वात्तदर्थं द्विजशापं कारितवानित्यर्थः॥ १४ ॥

तान् प्रार्थयते — **तम्** इति द्वाभ्याम्। तं मामुपयातं शरणागतं प्रतियन्तु जानन्तु। देवी देवतारूपा गङ्गा च प्रत्येतु[5]। वाशब्दः प्रतिक्रियानादरे। गाथाः कथाः गायत॥ १५ ॥

**पुनरिति**। स आश्रयो येषां तेषु प्रकृष्टः सङ्गो भूयात्। अहं यां यां सृष्टिं जन्म उपयामि तस्यां तस्यां सृष्टौ जन्मनि॥ १६ ॥

**इति** इति। अध्यवसायो निश्चयः। प्राचीनानि प्रागग्राणि मूलानि येषां तेषु प्रागग्रेषु कुशेषु आस्ते स्म। स्वसुतन्यस्तभारः स्वसुते जनमेजये न्यस्तो भारो राज्यं येन सः॥ १७॥

**एवमिति**। मुदा व्यकिरन् देवसङ्घैः वादिता दुन्दुभयो नेदुः॥ १८॥

1 B,H,V °दप्रक्षा° 2. H,V add पापस्य 3. A,B °तया 4. B,H,V add स्वयम् 5 H,V प्रत्येतु वा। चशब्दः

**वीर०** तदेवाह — **अहो** इति चतुर्भिः। नृणां मध्ये वयमहो धन्यतमाः उत्तमाः खलु। धन्यतमत्वे हेतुं वदन्नात्मनो विशिनष्टि। महत्तमैर्भवद्भिरनुग्रहणीयमनुग्रहीतुं योग्यं शीलं येषाम्। यद्वा, महत्तमानुग्रहणीयं महत्तमानुग्रहलभ्यं शीलं येषां तथाभूताः। अनेवम्भूतं राजकुलं निन्दति राज्ञामिति। ब्राह्मणानां भवतां पादशौचात्पादसेवामूलकविशुद्धेर्दूराद्विसृष्टं दूरात् त्यक्तं यद्राज्ञां कुलं तत् गर्ह्यं निन्द्यं कर्म यस्य तथाभूतं भवति। बत इति खेदे॥ १३॥

ननु महत्तमानुग्रहणीयशीलस्य तव कथमधुना तन्निग्रहप्रवृत्तिरित्यत्र, तन्निग्रहोऽप्यनुग्रहरूप एवेत्याह — **तस्य** इति। तस्यैव महत्तमानुग्रहणीयशीलस्यैव अभीक्ष्णं पुनः पुनः गृहेषु व्यासक्तं चित्तं यस्य तस्य ममाऽघस्य प्रकृतब्रह्मविदपचाररूपस्य परिहास्क इति शेषः। निर्वेदमूलः देहतदनुबन्ध्यादिषु वैराग्ये च मूलो हेतुः द्विजशापरूपः परावरेशो भगवानेव प्रसक्तः प्रवृत्तः मामनुग्रहीतुं भगवत्सङ्कल्प एव द्विजशापव्याजेन प्रवृत्त इत्यर्थः। कथं तस्यानुग्रहरूपतेत्यत आह — यत्र यस्मिन्मयि प्रसक्तो द्विजशापरूपः परावरेशः **आशु अभयं धत्ते** आदधाति। ब्रह्मविदपचारपरिहारहेतुत्वान्निर्वेदमूलत्वात् सत्सङ्गद्वारा मुक्त्याधायकत्वाच्चानुग्रहरूप एवेत्यर्थः॥ १४॥

अस्त्वेवं प्रकृतं[1] किं इत्याह[2] — **तम्** इति। हे विप्राः! भवन्तः इयं देवी गङ्गा च ईशे भगवति धृतं चित्तं येन तथाभूतं तमुक्तविधं मां उपयान्तमनुवर्तिनं प्रतियन्तु हेयोपादेयशुश्रूषुं जानन्त्वित्यर्थः। **द्विजेनोपसृष्टः** प्रचोदितः तक्षकः कुहकः विस्मापकः मा वञ्चयन्नलं[3] नितरां दशतु नाऽहं बिभेमीति भावः। किन्तु यूयं विष्णोर्गाथाः कथाः गायत कथयत अलं गायतेति वाऽन्वयः॥ १५॥

पुनश्च किञ्च। मम भगवत्यनन्ते अतिभक्तिस्तदाश्रयेषु भगवद्भक्तेषु सङ्गश्च स्यात्। एवमनुगृह्णीतेति भावः। किञ्च यां यां सृष्टिं यद्यज्जन्म प्राप्नोमि तत्र सर्वत्र जन्मनि महत्सु भवादृशेषु मैत्री आनुकूल्यमस्तु। द्विजेभ्यो वो नमः॥ १६॥

इतीत्थं निश्चययुक्तो राजा धीरः स्वसुते जनमेजये न्यस्तो निहितो राज्यभारो येन तथाभूतः समुद्रपत्न्या गङ्गायाः दक्षिणकूले दक्षिणतीरे प्राचीनमूलेषु प्राचीनाग्रेषु कुशेष्वास्ते स्म उपविष्टवान्॥ १७॥

इत्थं तस्मिन्नरदेवानां देवे[4] परीक्षिति प्रायोपविष्टे सति दिवि सर्वदेवसङ्घाः तं प्रशस्य प्रस्तूय मुदा प्रसूनैः कुसुमैः मुहुर्मुहुः पुनःपुनः भूमौ व्यकिरन्; दुन्दुभयश्च नेदुः दध्वनुः॥ १८॥

1. W प्रकृते 2 W °त्यत्राऽऽह 3. A,B °त्व° 4. W adds तस्मिन्

**विज॰** महत्तमैः महापुरुषैरनुग्रहणीयं शीलं येषान्ते तथोक्ताः वयं नृपाणां मध्ये धन्यतमाः। अहो अस्मद्भागधेयम्! कुतः? राज्ञां कुलं गर्ह्यकर्म निन्द्यकर्मवत् तत्कष्टं येन राजकुलेन ब्राह्मणपादशौचमारात् दूराद्विसृष्टं विरहितं तदिति शेषः॥ १३॥

स्वचिकीर्षितमाह — **तस्य** इति। परावरेशे मुक्तामुक्तप्रपञ्चनाथे हरौ व्यासक्तचित्तस्य अनुरक्तबुद्धेः मे तेषु गृहेषु अयं द्विजशापरूपो दण्डोऽभीक्ष्णं अलं निर्वेदमूलो वैराग्यहेतुरस्तु। यत्र येषु गृहेषु प्रसक्तः संसारभयमेव धत्ते, यत्र यस्मिन् भगवति प्रसक्तोऽभयं मोक्षमेव धत्ते प्राप्नोति तस्मिन् हराविति वा॥ १४॥

योऽहमेवं महत्तमानुग्रहणीयशीलः तं मा मां द्विजोपसृष्टः द्विजकुमारेण प्रेरितः वेषान्तरधारी यथा तथा कुहकः कपटी सर्पजातिविशिष्टो वा तक्षकः दशतु भक्षयतु युष्माभिरेतत्कर्तव्यमित्याह — अलम् इति। यूयं देवकीनन्दनमित्यादिका विष्णुविषया गाथाश्चरणत्रयाद्युपलक्षितान् श्लोकान् अलं देहवियोगपर्यन्तं गायत, षड्जादिस्वरैरिति शेष इत्यन्वयः॥ १५॥

न केवलमस्मिन् जन्मन्येव हर्यादौ मनो रतिप्रसङ्गोऽपितु जन्मान्तरेऽपीति प्रार्थय इत्याह — **पुनश्च** इति। तदाश्रयेषु भगवद्भक्तेषु युष्मद्विधेषु[1] मैत्री अ[2]स्तु मदीयोऽयमिति चित्तवृत्तिलक्षणा। सृष्टिं जन्म॥ १६॥

कुत्र गङ्गायां स्थित इति तत्राऽऽह — **इति स्म** इति। स्वसुते जनमेजये न्यस्तो निहितो राज्यभारो येन स तथोक्तः। इत्युक्तप्रकारेण व्यं[3]वस्य निश्चित्य मनोयोगयुक्तो निश्चययुक्तो वा राजा परीक्षित् समुद्रपत्न्या गङ्गाख्यायाः नद्याः उदक एव किञ्चिद्दक्षिणकूले दक्षिणतीरभागे प्रासादे प्राचीनाग्रेषु कुशेषु उदङ्मुख आस्त इत्यन्वयः। मृ[4]त्युचिन्तारहितत्वात् धीर इत्युक्तम्। कूलशब्दस्य लक्षणार्थमनाश्रित्य मुख्यार्थाङ्गीकारे भारतविरोधः स्यात्। यथा[5] गङ्गापदेन तीरं लक्ष्यते कूलपदेनाऽपि जले लक्षणोपपत्तेः। आस्त इति लडप्येवं विधिविशेषद्योतनार्थः॥ १७॥

*श्वेतच्छत्रचामारादिनरदेवचिह्नं न केवलं तावदेव। किन्तु केयूरादींश्च निरस्य त्यक्त्वा चर्म कृष्णाजिनादि मुनिवेषः।

व्यकिरन् वर्षितवन्तः॥ १८॥

---

1 K,M add मम 2 K,M अस्मदीयोऽयमिति चि॰ 3 K,M व्यवसायं 4. K पृष्ठ॰ 5. K,M add गङ्गायां कटकमास्त इति

**रा॰ कृ॰** महत्तमानुग्रहणीयशीलाः, अतिशयेन महद्भिः भवादृशैरनुग्रहणीयं शीलं चारित्रं येषाम् ते तथाभूता वयं नृपाणां मध्ये इति शेषः। धन्यतमाः अत्यन्तं कृतार्थाः। अहो! आश्चर्यम्! ब्राह्मणपादशौचात् ब्राह्मणानां पादशौचात् पादसेवानिमित्तकविशुद्धेः दूराद्विसृष्टं विक्षिप्तं राज्ञां कुलं गर्ह्यकर्म निन्द्यकर्मसहितं भवतीति शेषः। बतेति खेदे॥ १३॥

तस्यैव निन्द्यकर्मण एवाघस्य पापस्वरूपस्य गृहेषु इदमुपलक्षणं दारादेरपि। तथा च गृहदारधनादिषु अभीक्ष्णमत्यन्तं व्यासक्तचित्तस्य संलग्नमनस्कस्य मे, ममानुग्रहार्थमिति शेषः। परावरेशः सर्वेश्वरः एव निर्वेदमूलः

निर्वेदकारणभूतः द्विजशापरूपोऽभवदिति शेषः। यत्र यस्मिन् शापे सति प्रसक्तः गृहादिष्वासक्तः जनः भयं वैराग्यकारणं भयं आशु शीघ्रमेव धत्ते प्राप्नोति निर्विण्णो भवतीत्यर्थः॥ १४॥

हे विप्राः! तमुक्तविधं ईशे भगवति धृतचित्तं च मा मां उपयातं शरणागतं प्रतियन्तुं भवन्तोऽवगच्छन्तु। देवी गङ्गा च तथा मां प्रत्येतु। द्विजोपसृष्टः, द्विजेन ब्राह्मणबालकेन उपसृष्टः प्रेरितः कुहकः वेषान्तरधारी तक्षको वा मां दशतु। यूयन्तु विष्णुगाथाः अलं पर्याप्तं देहवियोगपर्यन्तमिति यावत् गायत कथयत॥ १५॥

पुनश्च अपि च अनन्ते भगवति रतिर्भक्तिः तदाश्रयेषु महत्सु च प्रसङ्गः प्रकृष्टसङ्गश्च भूयात्। किञ्च यां यां सृष्टिं यद्यज्जन्मोपयामि प्राप्नोमि तत्तज्जन्मनि सर्वत्र सर्वभूतेषु मम मैत्री अस्तु भवतु। द्विजेभ्यः ब्राह्मणेभ्यः वः नमः।

महत्तमानुग्रहणीयशीलमात्मानं धन्यं मन्यमानेन भगवत्प्राप्त्युपायवैराग्यापादकं विप्रशापमपि भगवत्स्वरूपमेव भावयता परीक्षिता सर्वात्मनाऽहङ्कारः परित्यक्तः; तस्मादयमीशे धृतचित्तोऽभवत्; भगवद्भक्ति भागवतप्रसङ्गभाग्यबन्धुरां जननपरम्परां च स्वीकर्तुमायत्तोऽभवत्। तथा च मोक्षपदस्य अर्थः न जन्माभावः, किन्तु जननमरणशीलदेहबद्धभावनाविमुक्तिरेवेति, तस्यास्साधनत्वेन च देहोपयोग इति जन्मस्वीकरणनिराकरणयोर्जीवोऽस्वतन्त्र इति च ज्ञायते। अपि चानेन सन्दर्भेण विष्णुभक्त्याऽनन्यया मानवजन्म अन्वर्थं भवतीति पर्यवस्यति॥ १६॥

इति एवं अध्यवसाययुक्तः निश्चयोपेतः धीरो राजा स्वसुतन्यस्तभारः स्वसुते जनमेजये निहितराज्यभारः समुद्रपत्न्याः गङ्गायाः दक्षिणकूले प्राचीनमूलेषु प्रागग्रेषु कुशेषु दर्भेषु उदङ्मुखः आस्ते स्म उपविष्टोऽभूत्॥ १७॥

एवञ्च तस्मिन्नरदेवदेवे राजश्रेष्ठे परीक्षिति प्रायोपविष्टे सति दिवि वर्तमानाः देवसङ्घाः भूमौ स्थितं तं राजानं प्रशस्य संस्तुत्य मुदा हर्षेण प्रसूनैर्व्यकिरन् पुष्पवृष्टिं व्यतन्वन्। दुन्दुभयश्च देवैर्वादिताः दुन्दुभयश्च नेदुः॥ १८॥

**महर्षयो[1] वै समुपागता ये प्रशस्य साध्वित्यनुमोदमानाः।**
**ऊचुः प्रजानुग्रहशीलसारा यदुत्तमश्लोकगुणाभि[2]रूपम्॥ १९॥**

**न वा इदं राजर्षिवर्य! चित्रं भ[3]वत्सु कृष्णं समनुव्रतेषु।**
**येऽध्यासनं राजकिरीटजुष्टं सद्यो जहुर्भगवत्पार्श्वकामाः॥ २०॥**

**सर्वे वयं तावदिहास्महेऽद्य[4] कलेवरं यावदसौ विहाय।**
**लो[5]कं परं विरजस्कं विशोकं यास्यत्ययं भागवतप्रधानः॥ २१॥**

**आश्रुत्य[6] तदृषिगणवचः परीक्षित् समं मधुच्यु[7]द्गुरुचाव्यलीकम्।**
**आ[9]भाषतै[10]नानभिनं[11]द्य यु[12]क्तान् शुश्रूषमाणश्चरितानि विष्णोः॥ २२॥**

राजोवाच

समागतास्सर्वत एव सर्वे वेदा[13] यथा मूर्तिधरास्त्रिपृष्ठे[14]।
नेहाथवा[15]ऽमुत्र च कश्चनार्थ ऋते परानुग्रहमात्मशीलम्[16]॥ २३ ॥

ततश्च वः पृच्छ्[17]यमिमं[18] विपृच्छे[19] विस्रभ्य[20] विप्रा! इतिकृत्यतायाम्।
सर्वात्मना म्रियमाणैश्च[21] कृत्यं शुद्धञ्च तत्रामृशताभियुक्ता॥ २४ ॥*

1 Af,Gf °यस्ते समु°, B,H,V °यस्तं समु° 2 H,K,M,V °नु° 3 Af,Gf भवेत् ध्रुवं कृष्णमनु° 4 B,I,K,M °थ 5 K,M अजं 6. Af,Gf °त्य तदृषिगणस्य वचः; B °त्यर्षिगण°, H,V °त्य तदृषिवचः 7 I,K, °श्चयुद्°8 K,M शापव्य° 9 V,W अभाष° 10 N °ता° 11 B,K,M,W °व° 12 B,K,M,W युक्तः; H,N,V युक्तम् 13 K,M देवा 14 Af,Gf °पिष्टे 15 B,I नामुत्र; K,M वोऽमुत्र 16. K,M शीलाः 17 K,M प्रश्न° 18 B °दं 19 H,V हि पृच्छे 20 A,B °श्र° 21 K,M °स्तु * Here ends the 19th Chapter and the remaining Slokas of this Adhyaya form the 20th chapter in K & M

**श्रीध॰ महर्षय** इति। प्रजानुग्रहे शीलं स्वभावः सारो बलञ्च येषाम्। उत्तमश्लोकगुणैरभिरूपम् सुन्दरम्॥ १९ ॥

**नेति**। भवत्सु पाण्डोर्वंश्येषु। ये जहुरिति युधिष्ठिराद्यभिप्रयेण॥ २० ॥

परस्परं सम्मन्त्रयन्ते — **सर्व** इति। परं श्रेष्ठं लोकम्। तत्र हेतुः। विरजस्कं निर्मायं विशोकञ्च यास्यतीति कुतस्तत्राऽऽह — अयम् इति॥ २१ ॥

**आश्रुत्य** इति। आश्रुत्य आकर्ण्य। समं पक्षपातशून्यम्। मधुच्युत् अमृतस्त्रावि। गुरु गम्भीरार्थम्। अव्यलीकम् सत्यम्॥ २२ ॥

**समागता** इति। त्रयाणां लोकानां पृष्ठे उपरि सत्यलोके वेदा यदा मूर्तिधरा भवन्ति तत्तुल्याः। ज्ञानातिशयमुक्त्वा कृपालुतामाह नेहेति। भवतां प्रयोजनं परानुग्रहं विना नास्ति। तर्हि स एवाऽर्थः स्यात्। न[1] आत्मशीलं स्वस्वभावम्॥ २३ ॥

**तत** इति। पृच्छ्यम् प्रष्टव्यम्। विस्रभ्य विश्वासं कृत्वा। एवंकर्तव्यमित्यस्य भावः इतिकृत्यता, तस्मिन् विषये। सर्वात्मना सर्वावस्थासु यत्कृत्यं विशेषतश्च म्रियमाणैस्तच्च शुद्धं पापसम्पर्क[2]रहितमामृशत विचारयत॥ २४ ॥

1. H,V omit न 2. H,V °सङ्कल्प°

**वीर॰** ये समागता महर्षयस्ते सर्वे। उत्तमैः श्लोक्याः प्रशंसनीया गुणास्तैरभिरूपं राजानं प्रशस्य साधु साध्वित्यनुमोदमानाः ऊचुः। कुतो, यद्यतस्ते प्रजास्वनुग्रह एव शीलं स्वभावः स एव सारो येषान्ते तथाभूतत्वात्प्रशस्यानुमोदमाना ऊचुरित्यर्थः॥ १९ ॥

उक्तिमेवाह — **न वा** इति। हे राजर्षिवर्य! नित्यं श्रीकृष्णमनुव्रतेषु अनुवर्तिषु[1] भवत्स्विदं विचित्रं न वै न भवति[2] किं तत्, ये भवन्तो भगवतः पार्श्वं सामीप्यं कामयमानाः सन्तो राज्ञां किरीटैर्जुष्टं सेवितमध्यासनं सार्वभौमसिंहासनं सद्यो जहुस्तत्यजुरित्येतत्॥ २० ॥

एवं राजानमुक्त्वाऽथ मिथ[3] आहुः — **सर्व** इति। यावत् भागवता एव प्रधाना नितरां सेव्या यस्य सोऽसौ राजा कलेबरं विहाय विरजस्कं शुद्धसत्त्वमयं; विशोकम्, इदमुपलक्षणम्। अपहतपाप्मत्वादिगुणाष्टकप्रादुर्भावदेशं परं लोकं नित्यबिभूत्याख्यं यास्यति; तावत्सर्वे वयमिहैव राज्ञः सन्निधावेव आस्महे आसीमहि॥ २१ ॥

तत्समं वैषम्यरहितममृतस्राविगुर्वाशयगम्भीरमव्यलीकं निष्कपटञ्च मुनीनां वचनमाकर्ण्य एतान् युक्तान् हितानात्महिताचरणोद्युक्तानृषीनभिनन्द्य[4] विष्णोश्चरितानि श्रोतुकामः परीक्षिदभाषत॥ २२ ॥

तदेवाऽऽह — **समागता** इति। त्रिपृष्ठे सत्यलोके यथा मूर्तिधरा वेदाः तद्वदवभासमानाः सर्वे यूयं सर्वतः सर्वाभ्यो दिग्भ्यः इह समागताः। मदनुग्रहार्थं समागता इति भावः। तदेव व्यनक्ति। समागतानां वः परानुग्रहमात्मशीलं विना इहाऽमुत्र च लोकेऽर्थः प्रयोजनं कश्चिदपि नाऽस्ति हि। परेषु मादृशेषु अनुग्रहरूपमात्मशीलं स्वस्वभावं, स्ववृत्तं वा विनाऽन्यदागमनकारणं[5][6] नास्ति हीत्यर्थः॥ २३ ॥

यतो भवदागमनमस्मदनुग्रहैकप्रयोजनम्। ततो हे विप्राः! वो युष्मान् विस्रभ्य[7] विश्वस्य इतिकृत्यतायां इतिकर्तव्यतायां प्रष्टव्यमिमं वक्ष्यमाणं पृच्छामि। कर्तव्यव्यापारप्रकारः इतिकृत्यता तस्यां निमित्तभूतायामितिकर्तव्यताज्ञानार्थं प्रष्टव्यं पृच्छामीत्यर्थः। पृच्छां[8] दर्शयंस्तत्सम्यक् निर्णीय कथयतेत्याह। म्रियमाणैर्मुमूर्षुभिर्जनैः सर्वात्मना सर्वप्रकारेण करणत्रयेण कर्तव्यं शुद्धं संसृत्यनिमित्तं च यत्तत्कर्म तत्राऽभियुक्ताः तद्विमर्शनाभिमुख्ययुक्तास्सन्तो यूयमामृशत विमृश्य[9] उपदिशत हेऽभियुक्ता! इति सम्बोधनं वा॥ २४ ॥

---

1. W °वर्तितेषु 2 W adds हि 3 W इदं 4 W °व° 5 A,B °था° 6 A,B add पृच्छामि 7 A,B °श्र° 8 W पृच्छ्यमेव 9 W adds तत्

**विज०** यदुत्तमश्लोकस्य हरेर्गुणानुरूपं गुणप्रकटतानुकूलं तत् ऋषय ऊचुरित्यन्वयः। प्रजानुग्रहमन्तरेण अन्यस्वभावो नाऽस्ति येषां ते तथोक्ताः॥ १९ ॥

अध्यासनं सिंहासनम्, राज्ञां मण्डलपतीनां किरीटैर्जुष्टं सेवितम्। कालक्षेपराहित्यद्योतनार्थः सद्यश्शब्दः॥ २० ॥

असावयं विशोकं नित्यनिर्दुःखं; कुतः? विरजस्कम् अशोभने[1] शोभनाध्यासबुद्धिरहितम्। कुतः परं त्रिगुणातीतं पूर्णं वा कुतोऽजं जन्मजरामरणरहितं हरिं यास्यतीत्यन्वयः॥ २१ ॥

मधु अमृतं च्युतं[2] श्रवणसुखमत एव गुरोर्ब्राह्मणकुमारस्य शापं व्यलीकयति अनृतं करोति फलत इति गुरुशापव्यलीकम्। अनेन दुर्मरणदोषपरिहारो लक्ष्यते, न तु तक्षकदंशनाभावः, तत्कृतदंशनदर्शनात्[3]। ऋषिगणवच आश्रुत्य एतान् ऋषीनाभाषतेत्यन्वयः॥ २२ ॥

त्रिपृष्ठे सत्यलोके शील समाधाविति धातोः परमात्मसमाधिमन्तो वा। युष्माकमिह लोके अथवा अमुत्र च परलोके कश्चनाऽर्थः साध्यं प्रयोजनं नाऽस्तीति यतस्ततः परानुग्रहकरणस्वभावात् वो युष्मानिमं प्रश्नं विपृच्छे पृच्छामीत्यन्वयः। किं कृत्वा ? इतिकृत्यतायामित्थंकर्तव्यतायां विप्राः विशिष्टज्ञानिनः अकुटिलबद्धयः सात्त्विकप्रकृतय इति विस्रभ्य विश्वस्य। कोऽसाविति तत्राऽऽह सर्वात्मना इति। तत्र कृत्यशतेषु म्रियमाणैः पुरुषैः सर्वप्रकारेण शुद्धं निर्दोषं पुरुषार्थपर्यवसायि कृत्यं कर्तव्यञ्चाभियुक्ता आग्रहयुक्ताः तात्पर्योपेता आमृशत आलोचयत। अलोच्य वाऽस्माकं ब्रूतेति तुशब्दः ॥ २३, २४ ॥

---

1 K नित्यशोभनं 2. K,M श्च्योततीति मधुश्च्युत् 3 K °दंशनात्। ऋषि°

रा॰ कृ॰ ये वै महर्षयस्तत्र समुपागताः यत् यस्मात् प्रजानुग्रहशीलसाराः प्रजासु राजादिसर्वजनेषु अनुग्रहस्वभावसाराः अभवन्, तस्मात्ते उत्तमश्लोकगुणाभिरूपं उत्तमश्लोकैः उत्तमकीर्तिभिः गुणैरभिरूपं सुन्दरं राजानं परीक्षितं प्रशस्य प्रस्तुत्य साधु! इति अनुमोदमानाः ऊचुः वक्ष्यमाणप्रकारेणोक्तवन्तः ॥ १९ ॥

हे राजर्षिवर्य! ये भवन्तः भगवत्पार्श्वकामाः भगवतस्सान्निध्यं कामयमानास्सन्तः राजकिरीटजुष्टं राजकिरीटैर्जुष्टं सेवितमध्यासनं सार्वभौमसिंहासनं सद्यो जहुः त्यक्तवन्तः, तेषु कृष्णं समनुव्रतेषु अनुवर्तमानेषु भवत्सु इदं भगवत्कथाप्रार्थनं न वा चित्रं नैवाश्चर्यकरं भवति।

प्रतिज्ञाबद्धाः पाण्डवाः विष्णोरवतारस्य श्रीकृष्णस्य सन्निधिमेव महानिधिं मन्यमानाः वनमगच्छन्। तस्मात्ते सिंहासनादप्युच्चतरं स्थानमलभन्त। तथाप्यन्त एव वैराग्योदयेन महाप्रस्थानमकुर्वन्। परीक्षित्तु राज्यपरिपालनावसर एव विरक्तः प्रायोपवेशं कृत्वा नारायणध्याननिमग्नोऽभवत्। ततोऽयं स्वपितृभ्योऽपि महत्तर इति व्यज्यते ॥ २० ॥

भागवतप्रधानः भगवद्भक्तेषु श्रेष्ठः अयमसौ राजा यावत्कलेबरं शरीरं विहाय, विरजस्कं रजोरहितं, शुद्धसत्त्वमयमिति यावत्। विशोकं आध्यात्मिकादितापत्रयशून्यं परं सर्वोत्कृष्टं लोकं वैकुण्ठाख्यं यास्यति तावदद्य वयं सर्वे इहाऽऽस्महे।

मृतोरगकलेबरनिक्षेपेण महर्षेरवमाननाकारणभूतात् रजोगुणात् परीक्षिद्विमोचितो भवेदिति स्वापराधजन्य-बाधाऽऽविलस्थितिमतीत्य नारायणध्यानमग्नमानसस्स भवेदिति, तथा चावसानवेलायां स भागवतोत्तमो दिव्यतेजोमयं धाम प्राप्नुयादिति च ते महर्षयस्सङ्कल्पितवन्त इति ज्ञायते ॥ २१ ॥

परीक्षित्समं पक्षपातरहितं मधुच्युत् अमृतस्रावि गुरु गम्भीरार्थं अव्यलीकञ्च यथार्थञ्च तत्पूर्वोक्तं ऋषिगणस्य वचः आश्रुत्य आकर्ण्य विष्णोश्चरितानि शुश्रूषमाणः श्रोतुकामः युक्तान् स्वहिताचरणे सावधानान् एतानृषीन् अभिनन्द्य संस्तुत्य अभाषतावोचत् ॥ २२ ॥

त्रिपृष्ठे त्रयाणां लोकानामुपरि सत्यलोके यथा मूर्तिधरास्सशरीराः वेदास्सन्तीति शेषः। तद्वत्सर्वे यूयमित्यध्याहार्यम्। सर्वत एव सर्वाभ्यो दिशाभ्य एव समागताः। परानुग्रहं परेषु अनुग्रहरूपं आत्मशीलं स्ववृत्तं ऋते विना इहाऽस्मिन् लोके अथवा अमुत्र च स्वर्गादिलोके वा भवतां कश्चन अर्थः प्रयोजनं न नास्ति।

त्रयाणां लोकानां मध्ये भूलोको द्रव्यात्मकः, भुवर्लोकश्शक्त्यात्मकः, सुवर्लोकश्चेतनात्मकश्च। एतत्त्रयातीतः सत्यलोकोऽथवा ब्रह्मलोकस्सत्यात्मकः। अस्मात्सत्यलोकादन्येषां लोकानां सर्गस्थितिप्रलयास्सम्प्रवर्तन्ते। ततश्चात्र शाश्वतास्सृष्टिधर्माः सर्वेऽवतिष्ठन्ते, ये हि वेदा इत्यभिधीयन्ते। तादृशवेदमूर्तय इव तत्रागता ऋषयो व्यराजन्तेति भावः॥ २३॥

ततश्च तस्माद्धे विप्राः! विस्रभ्य भवत्सु विश्वासं कृत्वा इतिकृत्यतायां इतिकर्तव्यतायां निमित्तभूतायां सत्यां वो युष्मान् पृच्छ्यं प्रष्टव्यमिमं वक्ष्यमाणं विपृच्छे विशेषतः पृच्छामि। म्रियमाणैरासन्नमृत्युभिः सर्वात्मना च सर्वप्रकारेण च शुद्धं निर्मलं यत्कृत्यं कर्तव्यमस्ति तत्र विषयेऽभियुक्ताः सर्वज्ञा भवन्तः आमृशत सविमर्शमुपदिशत॥ २४॥

सूत उवाच

तत्राभवद्भगवान् व्यासपुत्रो यदृच्छया गामटमानोऽनपेक्षः।
अलक्ष्यलिङ्गो निजलाभतुष्टो वृतश्च बालैरवधूतवेषः॥ २५॥

तं द्व्यष्टवर्षं सुकुमारपादकरोरुबाहूंसकपोलगात्रम्।
चार्वायताक्षोन्नसतुल्यकर्णसुभ्र्वाननं कम्बुसुजातकण्ठम्॥ २६॥

निगूढजत्रुं पृथुतुङ्गवक्षसमावर्तनाभिं वलिवल्गूदरञ्च।
दिगम्बरं वक्त्रविकीर्णकेशं प्रलम्बबाहुं स्वमरोत्तमाभम्॥ २७॥

श्यामं सदापीच्यवयोऽङ्गलक्ष्म्या स्त्रीणां मनोज्ञं रुचिरस्मितेन।
प्रत्युत्थितास्ते मुनयः स्वासनेभ्यस्तल्लक्षणज्ञा अपि गूढवर्चसम्॥ २८॥

स विष्णुरातोऽतिथयं आगताय तस्मै सपर्यां शिरसाऽऽजहार।
ततो निवृत्ता ह्यबुधाः स्त्रियोऽर्भका महासने सोपविवेश पूजितः॥ २९॥

स संवृतस्तत्र महान् महीयसां ब्रह्मर्षिराजर्षिदेवर्षिसङ्घैः।
व्यरोचताऽलं भगवान्यथेन्दुर्ग्रहर्क्षतारानिकरैः परीतः॥ ३०॥

प्रशान्तमासीनमकुण्ठमेधसं मुनिं नृपो भागवतोऽभ्युपेत्य।
प्रणम्य मूर्ध्नाऽवहितः कृताञ्जलिर्नत्वा गिरा सूनृतयाऽन्वपृच्छत्॥ ३१॥

परीक्षिदुवाच

**अहो अद्य वयं ब्रह्मन्! सत्सेव्याः क्षत्रबन्धवः।**
**कृपयाऽतिथिरूपेण भवद्भिस्तीर्थकाः कृताः ॥ ३२ ॥**

1. H,V °गम° 2. K,M °रुणाक्षो° 3. K,M °कर्णं शुभ्रा° 4. B,H,K,M,N,V,W वक्र° 5. I सदाऽपीव्य°, AF,GF सदा पीन° 6 H,V रुचिरं स्मयेन 7. K,M °ता मुनयश्चासने°, W °ता मुनयः स्वासने° 8. AF,GF मुनये 9 K,M °येऽभ्यागताय 10 B,I,N,W जहार 11. H,V °सुर°

**श्रीध०** **तत्र** इति। तत्र तेषु यागयोगतपोदानादिभिर्विवदमानेषु सत्सु यदृच्छया गां पर्यटन् व्यासपुत्रस्तत्राभवत् प्राप्तः। न लक्ष्यमाश्रमादिलिङ्गं यस्य अवधूतोऽवज्ञया जनैस्त्यक्तो यस्तस्येव वेषो यस्य सः ॥ २५ ॥

**तम्** इति। तमित्यादीनां प्रत्युत्थिता इति तृतीयश्लोकेनाऽन्वयः। द्विगुणान्यष्टौ वर्षाणि यस्य सुकुमारौ पादौ करावूरू अंसौ बाहू कपोलौ गात्रञ्च यस्य तम्। चारुणी आयते अक्षिणी यस्मिन्, उन्नता नासा यस्मिन् लम्बह्रस्वादिवैषम्यं विना तुल्यौ कर्णौ यस्मिन्, शोभने च भ्रुवौ यस्मिन् एवम्भूतमाननं यस्य तम्। कम्बुवत् रेखात्रयाङ्कितः सुष्ठुजातः कण्ठो यस्य ॥ २६ ॥

**निगूढेति**। कण्ठस्याधोभागयोः[2] स्थिते अस्थिनी जत्रुणी, मांसेन निगूढे जत्रुणी यस्य। पृथु विस्तीर्णं तुङ्गमुन्नतञ्च वक्षो यस्य, आवर्तवन्नाभिर्यस्य, वलिभिस्तिर्यङ्निम्नरेखाभिर्वल्गु रम्यमुदरं यस्य। दिश एवाऽम्बरं यस्य। वक्रा विकीर्णाश्च केशा यस्य, प्रलम्बौ बाहू यस्य, स्वमरेषु श्रेष्ठदेवेषूत्तमो हरिस्तद्वदाभा यस्य तम् ॥ २७ ॥

**श्यामम्** इति। सदा अपीच्यमत्युत्तमं[3] यद्वयो यौवनं तेन या अङ्गलक्ष्मीर्देहकान्तिस्तया रुचिरस्मितेन[4] च। गूढवर्चसमपि प्रत्युत्थिताः तं दृष्ट्वा प्रत्युद्गमं[5] कृतवन्त इत्यर्थः ॥ २८ ॥

**स** इति। शिरसैव सपर्यामाजहार आत्मनिवेदनं कृतवान्। तेन सहाऽऽगताः स्त्र्यर्भकादयः ततो निवृत्ताः, स चोपविवेश। सन्धिरार्षः ॥ २९ ॥

**स** इति। स भगवान् ब्रह्मर्ष्यादिसङ्घैः संवृतः सन् अलं व्यरोचत। ग्रहाः शुक्रादयः। ऋक्षाण्यश्विन्यादीनि। अन्यास्ताराः ॥ ३० ॥

**प्रशान्तमिति**। न कुण्ठाः सर्वार्थेषु मेधा यस्य तम्। प्रणम्य प्रश्नार्थं पुनर्नत्वा ॥ ३१ ॥

सूनृतां गिरमाह — **अहो** इति पञ्चभिः। सतां सेव्या जाताः यतोऽतिथिरूपेण हेतुना तीर्थका योग्याः कृताः ॥ ३२ ॥

1 H,V °स्यै° 2 B,H,V °भागे 3. B,H,V °त्यन्तोत्तमं 4 H,V रुचिरं स्मयेन 5 H,V °द्गमनं

**वीर०** तत्रैवं पृच्छतो राज्ञः सन्निधौ भगवान् व्यासस्य पुत्रः श्रीशुकोऽभवदागत्य तस्थौ। कथम्भूतः? यदृच्छया गां भूमिमटमानः तत्र हेतुरनपेक्षः कृत्यपेक्षारहितः[1]। तत्र हेतुः निजलाभेन ब्रह्मात्मकस्वात्मानुभवेनैव[2] तुष्टः अलक्ष्यमृषिरिति ज्ञातुमशक्यलिङ्गं रूपं यस्य सः। तत्र हेतुः अवधूतवेषः; अभिभाव्यवेशः[3], अत एव बालैर्वृतः परिवृतः॥ २५॥

**तम्** इति। तमागतं गूढं[4] मषीसंवृतमणिवत् तिरोहितं वर्चो यस्य तथाभूतमपि तस्य शुकस्य चिह्नाभिज्ञा मुनयः स्वासनेभ्यः प्रत्युत्थिता बभूवुरित्यन्वयः। कथम्भूतम्? द्व्यष्टवर्षं षोडशवर्षवयस्कमिव स्थितं, द्विरावृत्ता अष्टौ[5] वर्षाणि यस्य तमिति समासः, सुकुमाराः पादादयो यस्मिंस्तद् गात्रं[6] यस्य, चारुणी सुन्दरे आयते विशाले अक्षिणी यस्मिन्, उदग्रा नासिका यस्मिन्, तुल्यौ समौ कर्णौ यस्मिन्, शोभने भ्रुवौ यस्मिन्, ततस्तेषां कर्मधारयः, तदाननं यस्य, कम्बुवत् शङ्खवत् वर्तुलः रेखात्रयोपेतश्च कण्ठो यस्य॥ २६॥

निगूढे मांसलत्वेनाप्रकाशे जत्रुणी अंसद्वयसन्धिगतास्थिनी यस्य, पृथु विशालं तुङ्गमुन्नतं वक्षो यस्य, आवर्ता आवर्तवद्वर्तुला विविक्ता[7] रन्ध्रयुक्ता च नाभिर्यस्य, वलिभिस्त्रिभिर्वल्गु सुन्दरमुदरं यस्य, दिगम्बरं दिगेवाम्बरं वस्त्रं यस्य, चीरधरत्वेन[8] प्रशस्ताम्बररहितमित्यर्थः। उपरिवाससा रहितं वा। अन्यथा मोक्षधर्मादिषूक्तप्रकारविरोधात्। वक्रा विकीर्णाश्च। केशा यस्य, प्रलम्बौ आजानुलम्बौ बाहू यस्य, स्वमरोत्तमस्य अमरश्रेष्ठस्येव आभा यस्य॥ २७॥

अपीच्यं कमनीयं वयो यस्मिंस्तस्याङ्गस्य[9] लक्ष्म्या कान्त्या सुन्दरस्मितेन च सदा स्त्रीणां मनोज्ञं स्पृहणीयम्॥ २८॥

अथ स विष्णुरातः परीक्षित् आगतायातिथये तस्मै श्रीशुकाय शिरसा, नम्रेणेति शेषः। सपर्यां पूजां जहार चकार; शिरसा प्रणामपूर्वकं पूजां चक्रे इत्यर्थः। तदा तमनुसृत्य आगता अज्ञा बालकाः प्रतिनिवृत्ता बभूवुः। ततः स पूजितः शुकः महासने महति राज्ञा समर्पिते आसने उपविवेश॥ २९॥

तत्र आसने उपविष्टस्स महीयसामपि महान् माहात्म्ययुक्तो भगवान् शुको ब्रह्मर्षिप्रभृतीनां सङ्घैरलं नितरां व्यरोचत। यथा ग्रहादीनां निकरैः समूहैः परिवृतश्चन्द्रस्तद्वत्। ग्रहा अङ्गारकादयः। ऋक्षाण्यश्विन्यादीनि नक्षत्राणि। तदुभयेतराणि नक्षत्राणि ताराः॥ ३०॥

प्रशान्तं सात्त्विकवेषम् अकुण्ठा आवरणरहिता मेधा धीर्यस्य तम्। यद्यपि "नित्यमसिच् प्रजामेधयोः" (अष्टा. 5-4-122) इत्यत्र " नञ् दुस्सुभ्य एव" (अष्टा. 5-4-121) इति नियमः तथापि आर्षत्वादसिच्। आसीनमुपविष्टं मुनिं शुकमभिमुखं समीपमागत्य महाभागवतो नृपः परीक्षित् मूर्ध्ना प्रणम्य बद्धाञ्जलिरवहितः तदुक्तिश्रवणोपयुक्तावधानयुक्तः सूनृतया मधुरया गिराऽन्वपृच्छत्॥ ३१॥

तदेवाऽऽह — **अहो** इति। यावत्समाप्ति तावत् तत्समागमनेनात्मनः कृतार्थतामाविष्करोति अहो इति। हे ब्रह्मन्! वयं क्षत्रबन्धवोऽप्यद्याहो! सत्सेव्यास्सन्तः, सन्तः सेव्याः येषां तथाभूताः अभूम। यद्वा सतां [10] सेव्या अनुग्राह्या अभूम। तत्र हेतुमाह — कृपया भवद्भिरतिथिरूपेण अतिथिव्याजेन वयं तीर्थकाः कृताः पवित्रीकृताः ॥ ३२ ॥

---

1 W °त्या° 2 W °स्वानुभवे° 3 W °षः 4 A,B गूढमपि सं° 5 W अष्ट द्व्यष्ट 6 B,W add शरीरं 7 W °क्त° 8 W चीवर°
9 W adds शरीरस्य 10 W adds वः

**विज॰** ज्ञानादिनैव सत्सङ्गत्या सकलपापक्षयो भवतीति प्रतिपाद्यतेऽस्मिन्नध्याये। तत्रादौ शुकागमनं वक्ति — **तत्र** इति। यत्र परीक्षिता मुनिभिश्च स्थितं तत्र तस्यामवस्थायां वा व्यासपुत्रः शुको भगवान् यदृच्छया दैवेच्छयाऽभवदित्यन्वयः। पूर्वस्मात्कान्तिविशेषद्योतनाय अभवदित्युक्तम्, आगमनस्य तावता चरितार्थत्वात्। अटनस्य स्वाधीनत्वप्रकाशनाय अटमान इति शानच् प्रत्ययः। तर्हि अर्थाभिलाषी किमटतीत्यत उक्तमनपेक्ष इति। बाह्यविषयापेक्षारहितः। तत्कुत इत्यस्यापि तदेवोत्तरम्। अनपः प्राणनाथः श्रीविष्णुः तद्विषये ईक्षा ईक्षणं दर्शनं यस्य स तथोक्तः। नहि करतलामलकवत् सततमपरोक्षीकुर्वाणस्य तस्य बाह्यपदार्थापेक्षा भवतीति वा। बाह्यपदार्थापेक्षाभावे शरीरयात्रा कथमित्यस्याप्येतदेवोत्तरम्। अनं प्राणं पिबतीत्यनपा ईक्षा दर्शनम्। काकचञ्चुपुटेन वायुपानज्ञानं यस्यास्ति स तथा कथित इति वा। श्रीप्रसादाभावादशनदारिद्र्यं किमित्यस्येदमुत्तरम्। शश्वदपगता न भवतीत्यनपा लक्ष्मीः, तस्या ईक्षणं यस्यास्ति स तथेति वा। तत्कटाक्षस्य पात्रीभूत इत्यर्थः। सन्ततगमनागमनस्वभावेन वायुना तृप्तिः कथं स्यादिति तत्राह — निजेति। स्वरूपानन्देन अलंबुद्धिमान् यदृच्छालाभेन तृप्तः किमाश्रम इति तत्राह — अलक्ष्येति। न लक्ष्याणि आश्रमादिलिङ्गानि यस्य स तथोक्तः। तत्कुत इति तत्राह अवधूतेति। अवधूतानां दिगम्बराणां वेषो यस्य स तथोक्तः। अवधूतः परित्यक्तः वेषोऽलङ्कारो येन स तथेति वा। अत एव बालैश्च वृतः ॥ २५ ॥

मुनयस्तं दृष्ट्वा आसनेभ्यः प्रत्युत्थिता इत्यन्वयः। चशब्दादन्ये च तत्रास्थिता उत्तस्थुरिति ग्राह्यम्। गूढवर्चसं आच्छादितनिजतेजोलक्षणमहिमानमपि तल्लक्षणज्ञाः। किंविशिष्टम्? द्व्यष्टवर्षं द्विः कृत्वाऽष्टवर्षाणि यस्य स तथोक्तः तं षोडशवर्षं सुकुमाराणि कोमलानि पादादीनि यस्य स तथोक्तस्तम्। पादौ च करौ च ऊरू च बाहू च अंसौ च कपोलौ च गात्रञ्च तानि तथोक्तानि। चारुणी ईषदरुणे रक्ते च अक्षिणी यस्य स तथा। उन्नता नासिका यस्य स तथा। तुल्यौ परस्परसमौ कर्णौ यस्य स तथा तम्। शुभ्रं शोभनं आननं यस्य स तथा तम्। कम्बुवत् त्रिरेखाङ्कितशङ्खवत् सुजातो लक्षणवत्तमः कण्ठो यस्य स तथा तम्॥ २६ ॥

अंसवक्षःस्थलयोर्मध्यं जत्रु, निगूढं पूरितविवरं पीवरं जत्रु यस्य स तथा तम्। पृथु विस्तीर्णं तुङ्गमुन्नतं वक्षो यस्य स तथा तम्। आवर्तः पयसां भ्रमः तद्वन्निम्ना वृत्ता नाभिर्यस्य स तथा तम्। वलिभिः रेखाभिः वल्गु सुन्दरं उदरं यस्य स तथा तम्॥ २७ ॥

अपीच्यं षोडशवर्षीयं वयो यस्य तदापीच्यवयः तच्चाङ्गं तस्य, लक्ष्म्या स्त्रीणां मनोज्ञं मनोहरं रुचिरस्मितेन च मनोहरमिति शेषः ॥ २८ ॥

विष्णुरातो विष्णुदत्तः। न तिथिर्दिनविशेषो यस्य स तथा तस्मै, आजहार चकार। हिशब्दो बुधत्वे हेतुः। अनेन कथमालक्षितः पौरैः, कथं वा पाण्डवेयस्य इति प्रश्नः परिहृत इति ज्ञातव्यम्॥ २९॥

स परीक्षित् महीयसां महत्तराणाम् मध्ये महान् संवृतो गूढो महत्त्वप्रकाशनाय राजा ब्रह्मर्ष्यादिभिः परीतो व्यरोचतेत्युक्तम्, तक्षकान्मरिष्ये इति मरणभिया मुखाङ्गकान्तिग्लानिर्नास्तीति यस्मात्तस्मादित्यर्थः॥ ३०॥

सूनृतया गिरा प्रियवचनेन॥ ३१॥

हे ब्रह्मन्! ब्रह्मज्ञानिन्! क्षत्रबन्धवो वयमद्य सद्भिस्सेव्या अभूम, अहो भाग्यम्! कुतः? अतिथिरूपेण आगतैर्भवद्भिस्तीर्थकाः तीर्थेषु प्रशस्ताः तीर्थाः कृताः। यथा भवन्तो निष्कलुषत्वाय तीर्थानि भवन्ति तथा वयमपि, युष्मत्सङ्गत्येत्यर्थः। तत्र कृपैव कारणमित्यतः कृपयेत्युक्तम्॥ ३२॥

---

1 K काकोदरवत् चक्षु°

**रा० कृ०** यदृच्छया गां भुवमटमानः पर्यटन्ननपेक्षः प्राकृतवस्तुभोगापेक्षारहितोऽलक्ष्यलिङ्गः अज्ञेयाश्रमादिचिह्नः निजलाभतुष्टः निजस्वरूपपरमानन्दलाभेन तृप्तः। बालैः, अत्र बालपदेन न केवलमर्भकसमुदायः किन्तु शुकयोगिप्रभावानभिज्ञः सर्वोऽपि जनो लक्ष्यते। अज्ञैर्वृतो वेष्टितः अवधूतवेषः भगवान् व्यासपुत्रः शुकः तत्र परीक्षित्समीपे, अभवत् आगच्छदिति भावः॥ २५॥

अथ शुकयोगिनं विशिनष्टि तमित्यादिभिस्त्रिभिः श्लोकैः — द्व्यष्टवर्षं द्विगुणिताष्टवर्षं षोडशवत्सरवयस्कमित्यर्थः। सुकुमारपादकरोरुबाह्वंसकपोलगात्रम् — सुकुमारौ कोमलौ पादौ करौ ऊरू बाहू अंसौ कपोलौ यस्मिंस्तद्गात्रं यस्य तथाभूतं चार्वायताक्षोन्नसतुल्यकर्णसुभ्र्वाननम् — चारुविशालनेत्रं उन्नतनासिकासहितं समकर्णं शोभनभ्रूयुतं च आननं यस्य तथाभूतम्। कम्बुसुजातकण्ठम् शङ्खचारुगलं निगूढजत्रुम् पृथुतुङ्गवक्षसम्, विशालोन्नतोरस्कम्, आवर्तनाभिं वलिवल्गूदरं वलिभिस्सुन्दरोदरम् दिगम्बरं वक्रविकीर्णकेशम्, प्रलम्बबाहुं दीर्घबाहुम्, स्वमरोत्तमाभम् श्रेष्ठेषु देवेषु इन्द्रतुल्यं श्यामं नीलवर्णं सदा अपीच्यवयोङ्गलक्ष्म्या अपीच्यमतिकमनीयम्, यद्वयो यौवनं, तत्कृतयाऽङ्गलक्ष्म्या देहकान्त्या रुचिरस्मितेन च स्त्रीणां मनोज्ञं मनोहरं गूढवर्चसं गुप्ततेजोयुतमपि तं शुकं दृष्ट्वा तल्लक्षणज्ञास्ते मुनयः स्वासनेभ्यः प्रत्युत्थिताः, प्रत्युत्थानमकुर्वन्नित्यर्थः॥ २६, २७, २८॥

अनन्तरं स विष्णुरातः परीक्षित् आगताय तस्मै अतिथये शुकाय शिरसा सपर्यामाजहार आहृतवान् प्रणामेनैव तत्पूजां कृतवानित्यर्थः। ततस्तदनन्तरं अबुधाः स्त्रियः अर्भका निवृत्ता हि। स च शुकः राज्ञा पूजितः महासने उपविवेश॥ २९॥

तत्रासने उपविष्टः महीयसां मध्ये महान् सः भगवान् शुकः ब्रह्मर्षिराजर्षिसुरर्षिसङ्घैः संवृतस्सन् ग्रहर्क्षतारानिकरैः परीतः इन्दुर्यथा चन्द्र इव अलमत्यन्तं व्यरोचत विराजितोऽभवत्। चन्द्रौपम्येन शुकस्य सन्निधिः प्रशान्त्याह्लादादिजनक इति गम्यते॥ ३०॥

भागवतो नृपः प्रशान्तमकुण्ठमेधसं अकुण्ठबुद्धिमासीनं मुनिमभ्युपेत्य मूर्ध्ना प्रणम्यावहितस्सावधानः कृताञ्जलिः पुनरपि नत्वा सूनृतया गिरा अन्ववपृच्छत्॥ ३१ ॥

हे ब्रह्मन्! यस्मात् कृपया भवद्भिरतिथिरूपेण वयं तीर्थकाः कृताः पवित्रीकृताः तस्मादहो! अद्य क्षत्रबन्धवोऽपि वयं सत्सेव्याः सतामादरणीयाः अभूमेति शेषः॥ ३२ ॥

**येषां संस्मरणात्पुंसां[1] सद्यश्शुध्यन्ति वै गृहाः।**
**किं पुनर्दर्शनस्पर्शपादशौचासनादिभिः॥ ३३ ॥**

**सान्निध्यात्ते महायोगिन्! पातकानि महान्त्यपि।**
**सद्यो नश्यन्ति वै पुंसां विष्णोरिव सुरेतराः॥ ३४ ॥**

**अपि मे भगवान् प्रीतः कृष्णः पाण्डुसुतप्रियः।**
**पैतृष्वसेयप्रीत्यर्थं तद्गोत्रस्यात्त[2]बान्धवः॥ ३५ ॥**

*** अभिप्रस्थापितो नूनं कारुण्याविष्टचेतसा।**
**कृष्णेनैवेत्यहं मन्ये भक्तानां शमभीप्सता॥**

**अन्यथा तेऽव्यक्तगतेर्दर्शनं नः कथं[3] नृणाम्।**
**नितरां म्रियमाणानां संसिद्धस्य वनीयसः॥ ३६ ॥**

**अतः पृच्छामि संसिद्धिं[4] योगिनां परमं गुरुम्।**
**पुरुषस्येह यत्कार्यं म्रियमाणस्य सर्वथा[5]॥ ३७ ॥**

**यच्छ्रोतव्यमथो जप्यं[6] यत्कर्तव्यं नृभिः प्रभो[7]!**
**स्मर्तव्यं भजनीयं वा ब्रूहि यद्वा विपर्ययम्॥ ३८ ॥**

**नूनं भगवतो ब्रह्मन्! गृहेषु गृहमेधिनाम्।**
**न लक्ष्यते ह्यवस्थानमपि गोदोहनं क्वचित्॥ ३९ ॥**

**सूत उवाच**

**एवमाभाषितः पृष्टः स राज्ञा श्लक्ष्णया गिरा।**
**प्रत्यभाषत धर्मज्ञो भगवान् बादरायणिः॥ ४० ॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
प्रथमस्कन्धे शुकागमनं नाम एकोनविंशोऽध्यायः॥ १९ ॥

***॥ इति प्रथमः स्कन्धः समाप्तः ॥***

---

1. K पुंसः 2. K,M,W °प्त° * This additional verse is found in N within brackets between vv 35 & 36 3. K,M °री° 4. K,M °द्धं
5. H,K,M,V °दा 6. K,M,N जाप्यं 7. K,M सदा

**श्रीध॰ येषाम्** इति ॥ ३३ ॥

**सान्निध्यात्** इति। श्रीविष्णोस्सान्निध्यात् सुरेतराः असुराः मयादय इव ॥ ३४ ॥

**अपि इति**। पाण्डुसुतानां प्रियः। अतस्तेषां पैतृष्वसेयानां प्रीत्यर्थं तद्गोत्रस्य मे आत्तं स्वीकृतं बान्धवं बन्धुकृत्यं येन सः ॥ ३५ ॥

**अन्यथा** इति। अन्यथा श्रीकृष्णप्रसादं विना अव्यक्ता गतिर्यस्य म्रियमाणानां नितरां कथं स्यात्? वनयिता याचयिता। वनयितृतमो वनीयान् तस्य वनीयसः। अत्युदारतया मां याचेथा इति प्रवर्तकस्येत्यर्थः ॥ ३६ ॥

**अत** इति। सम्यक् सिद्धिर्यस्मात्तम्। कार्यं कर्तुं योग्यम्, कर्तव्यन्त्वावश्यकमिति भेदः। अत एव सर्वथा म्रियमाणस्य पुरुषस्य यस्मिन् कृते संसिद्धिर्मोक्षलक्षणा सिद्धिर्भवति त त्वां योगिनां गुरुं पृच्छामि ॥ ३७ ॥

**यत्** इति। यच्छ्रोतव्यं यज्जाप्यं यत्कर्तव्यं, यत् स्मर्तव्यं, यदाराध्यं तद्ब्रूहि। विपर्ययमश्रोतव्यादि ॥ ३८ ॥

तव दर्शनस्य पुनर्दुर्लभत्वात् इदानीमेव कथनीयमित्याशयेनाह — **नूनम्** इति। गोदोहनमात्रकालमपि[1] अस्माकं भाग्यवशात् त्वद्दर्शनं जातमिति भावः ॥ ३९ ॥

**एवम्** इति। एवमहो इत्यादिकया श्लक्ष्णया मधुरया गिरा आभाषितोऽभिमुखीकृतः पृष्टश्च ॥ ४० ॥

* आर्यं धर्मजमाहतारिमवनौ कृत्वा परीक्षिन्नृपम्
ब्रह्मास्त्रादभिरक्षितं कलिजयख्यातञ्च कृत्वा भुवि।
अन्ते यश्शुकरूपतः स्वपरमज्ञानोपदेशेन तम्
शापादावदमुं नमामि परमानन्दाकृतिं माधवम् ॥ §

इति श्रीमद्भागवते प्रथमस्कन्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां एकोनविंशोऽध्यायः ॥ १९ ॥

*॥ प्रथमः स्कन्धः समाप्तः ॥*

---

1 H.V गोदोहनकालमात्रमपि  * H.V omit this verse  § B adds प्रथमस्कन्धगूढार्थपदभावार्थदीपिका। सद्भिरुद्दीपनीयेयं यथास्यात्तत्त्वदीपिका ॥

**वीर॰** कथमतिथिरूपेणास्मदागमनरूपेण व स्तीर्थीभूतता इत्यत्र तत्कैमुत्यन्यायेन दर्शयति — **येषाम्** इति। येषां भवतां स्मरणादेव सद्यः पुंसां स्मर्तॄणां गृहाः शुध्यन्ति, किं पुनर्भवतां दर्शनादिभिः शुद्ध्यन्तीति वक्तव्यम्! पादशौचं पादजलम् ॥ ३३ ॥

यत एवमतो हे महायोगिन्! तव सान्निध्यादेव हेतोः पुंसां मादृशानां महान्त्यपि सर्वाणि पातकानि सद्य एव नश्यन्ति, यथा विष्णोः सुरेतरा असुरा नश्यन्ति तद्वत् ॥ ३४ ॥

किञ्च भगवतः श्रीकृष्णस्य अनुग्रहकारितं भगवद्दर्शनादिकमन्यथा तद्दुर्लभमित्याह — **अपि** इति द्वाभ्याम्। तावत्तदनुग्रहस्त्वस्माकं सुलभ इति सम्भावयामीत्यभिप्रायेणाह — अपि इति। अपिशब्दः सम्भावनाद्योतकः। मे भगवान् कृष्णः प्रीतः प्रसन्नः स्यात्। तत्र हेतुं वदन् तं विशिनष्टि। पाण्डुसुताः प्रिया यस्य सः पाण्डुसुतानाञ्च प्रियः। अस्तु पाण्डुसुतप्रियः त्वत्प्रियस्तु कथमित्यत्रोभयत्रानुगतं हेतुं वदन् विशिनष्टि पितुर्भगिनी पितृष्वसा कुन्ती, तस्या अपत्यानि पितृष्वस्रेयाः[1] तेषां प्रीत्यर्थं तद्गोत्रस्य पैतृष्वस्रेयसन्तानस्य आप्तबान्धवः पितृष्वसुः प्रियस्तत्प्रीत्यर्थं तत्पुत्रेषु पुनस्तत्प्रीत्यर्थं तत्पुत्रादिष्वित्येवं यावत्सन्तानं[2] प्रिय इत्यर्थः। आत्तबान्धव इति पाठे आत्ता उपात्ताः परिगृहीताः बान्धवाः येन इष्टबान्धव इत्यर्थः। भगवत्प्रसादेन त्वद्दर्शनं जातं, तत्प्रसादस्तु तत्पितृष्वसुः सन्तानप्रभवत्वादिति भावः ॥ ३५ ॥

अन्यथा भगवतः प्रीत्यभावे[3]ऽव्यक्तगतेः सांसारिकैः अलक्ष्यगतेर्वनीयसः अतिशयेन वनवासिनः संसिद्धस्य कृतकृत्यस्य ते तव दर्शनं नृणां संसारिणां तत्रापि नितरां म्रियमाणानां नोऽस्माकं कथं स्यात्। वनमस्यास्तीति वनी, वनवान् वनवासी प्रकृतऋषिसङ्घापेक्षयाऽतिशयेन वनीति वनीयान् तस्य वनीयसः ॥ ३६ ॥

यतो दुर्लभमपि त्वद्दर्शनमभूदतो योगिनामपि परमं गुरुं त्वां संसिद्धिं पृच्छामि। संसिद्धिशब्दो मुक्तिसाधनोपचरितः। मुक्तिसाधनं पृच्छामीत्यर्थः। तदेव विशदयति। इह लोके पुरुषस्य मुमुक्षोः सर्वदा तत्रापि म्रियमाणस्य यत्कर्तव्यं मनोवाक्कायैः कर्तव्यं, मुक्तिसाधनतयेति शेषः। तत्पृच्छामीत्यन्वयः। तत् ब्रूहीत्युत्तरेणा-न्वयः ॥ ३७ ॥

कर्तव्यमेव विभज्य पृच्छंस्तद्विपर्ययमकर्तव्यं च ब्रूहीत्याह — **यत्** इति। हे प्रभो! नृभिर्मुमुक्षुभिः, तत्रापि मुमूर्षुभिः यच्छ्रोतव्यादिक, यच्च विपर्ययमश्रोतव्यादि च तत्सर्वं ब्रूहि कथय। यत्कर्तव्यमित्युपात्तं[4]तच्छ्रोतव्यादिकरणं[5] व्यतिरिक्तकरणाभावे[6] प्रश्नः स्मर्तव्यं मन्तव्यं भजनीयं प्रीतिपूर्वकमनुध्येयम्, अतो न पौनरुक्त्यम्। अथो अपिचेत्यर्थः ॥ ३८ ॥

यावत्तनुत्यागं एतत्पृष्टं प्रतिवदताऽनियतावस्थानेनापि त्वया अवस्थातव्यमित्यभिप्रायेण तदवस्थानमनियतत्वेन स्तौति — **नूनम्** इति। हे ब्रह्मन्! गृहमेधिनां गृहाश्रमिणां गृहेषु क्वचिदपि भगवतस्तवावस्थानं गोदोहमपि गौर्दुह्यते यावता कालेन तावान् कालो गोदोहनशब्देन विवक्षितः। तावत्कालमपि न लक्ष्यते हि[7] ॥ ३९ ॥

**एवम्** इति। इत्थं राज्ञा आभाषितः। अहो अद्य वयं ब्रह्मन्नित्यादिनोक्तः पृष्टः, अतः पृच्छामि संसिद्धिमित्यादिना पृष्टश्च स भगवान् धर्मज्ञः मुमुक्षूणां मुमूर्षूणां कर्तव्यधर्मयाथात्म्याभिज्ञो बादरायणिः श्रीशुकः श्लक्ष्णया विशुद्धया सम्मृद्धया[8] गिरा प्रत्यभाषत प्रश्नानामुत्तराण्युवाचेत्यर्थः ॥ ४० ॥

इति श्रीवत्सान्वयपयःपारावारराकासुधाकरस्य सर्वविद्यानिधेः चक्रवर्तिनः श्रीशैलगुरोस्सुतेन तच्चरणकमलपरिचर्याप्रसादिततत्सूक्तिसमधिगत श्रीमद्भागवतार्थहृदयेन श्रीवैष्णवदासेन श्रीवीरराघवविदुषा लिखितायां श्रीमद्भागवतचन्द्रचन्द्रिकाख्यायां श्रीमद्भागवतव्याख्यायां प्रथमस्कन्धे एकोनविंशोऽध्यायः ॥ १९ ॥

***॥ प्रथमः स्कन्धः समाप्तः ॥***

---

1. W पैतृष्वसेया 2. W °नं प्रियः 3 B प्रीतत्वाभावे° 4 W °श्रोत्रादि° 5 W °ण° 6 W °करणव्यापारप्रश्नः 7 W adds न दृश्यते हि 8 W मृद्धया

**विज०** तीर्थीकरणमेव विशिनष्टि। येषां भवतां संस्मरणात् पुंसो गृहास्सद्यः शुध्यन्ति वै यस्मात्, अतो दर्शनादिना शुध्यन्तीति किं पुनर्वक्तव्यमित्यन्वयः ॥ ३३ ॥

भवत्सङ्गत्या विशेषोऽप्यस्तीत्याह — **सान्निध्यात्** इति। अनेन ब्रह्महत्यादिपापपरिहारो भवतीत्युक्तं भवति ज्ञानात्पूर्वतनानि भस्मीभवन्ति। पश्चात्तनानि न श्लिष्यन्तीति शास्त्रनिश्चितं वैशब्देनाऽऽह न केवलमस्मत्पापहानिरेव किन्तु अस्मत्सङ्गतानामपीति ॥ ३४ ॥

पाण्डुसुतानां प्रियः, पाण्डुसुताः प्रियाः यस्येति वा। कृष्णो भगवान् मे मह्यं प्रीतोऽपि प्रीत एव। कुतः? पिता वासुदेवः, तस्य स्वसा कुन्ती तस्याः पुत्राः पैतृष्वस्रेयाः[1] युधिष्ठिरादयः तेषां प्रीतये तेषां गोत्रं यस्य सोऽहं तद्गोत्रः तस्य मे आप्तबान्धवो जात इति यस्मादत इति ॥ ३५ ॥

अन्यथा तत्प्रीत्यभावे अव्यक्तगतेरज्ञातगमनस्य संसिद्धस्य ब्रह्मज्ञानितया कृतकृत्यस्य वरीयसो वरणीयेषु पूज्यस्य ते दर्शनं नृणां नः कथं घटते? म्रियमाणानां नितरां न घटत इति शेषः ॥ ३६ ॥

भवद्दर्शनं दुर्लभमिति यतोऽतो दैवात्प्राप्तं योगिनां परमगुरुं संसिद्धं कैवल्यभूतं भवन्तमिह म्रियमाणस्य पुंसः सदा यत्कार्यं, यच्च श्रोतव्यम्, अथ यच्च जाप्यम्, अथवा[2] नृभिर्यत्कर्तव्यम्, भजनीयं वा, यद्वा विपर्ययम् अकर्तव्यं स्मर्तव्यादि तच्च पृच्छामि। तदस्माकं ब्रूहीत्येकान्वयः ॥ ३७, ३८ ॥

गृहमेधिनां गृहस्थानां गृहेषु क्वचिदेकत्राऽपि गोदोहनक्षणमपि भवतोऽवस्थानं न लक्ष्यते। नूनं निश्चितो हि यस्मात्तस्मात् ज्ञानिनि स्वतः प्राप्ते सति कर्तव्याद्यज्ञाने अस्माकं महासुरत्वं स्यादिति भवन्तं पृच्छामीति भावः ॥ ३९ ॥

एवमाभाषितः पृष्टः सम्बोध्य कृतप्रष्टव्यो गुरुशिष्यसंवादलक्षणधर्मज्ञो बादरायणिः शुकः श्लक्ष्णया मधुरया गिरा राजानं प्रत्यभाषतेत्येकान्वयः ॥ ४० ॥

भागवतविवरणमिदं तुलसीदलमिव समर्पयामि हरेः।
चरणनलिनयुगलेऽहं प्रथमस्कन्धोपगं सतां प्रीत्यै ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां
टीकायां प्रथमस्कन्धे एकोनविंशोऽध्यायः ॥ १९ ॥

*॥ प्रथमः स्कन्धः समाप्तः ॥*

---

1 K,M °से° 2. K adds अन्यैः

**रा० कृ०** येषां भवतां संस्मरणादेव सद्यः पुंसाम्, इदमुपलक्षणम्। स्मरणभाजां सर्वेषां जनानामित्यर्थः। गृहाश्शुध्यन्ति, तेषां दर्शनस्पर्शनपादशौचाऽऽसनादिभिः शुध्यन्तीति किं पुनर्वक्तव्यम् ॥ ३३ ॥

हे महायोगिन्! ते सान्निध्यात् पुंसां महान्त्यपि पातकानि विष्णोस्सान्निध्यात् सुरेतराः राक्षसा इव सद्यो नश्यन्ति। अत्र महायोगिनश्शुकस्य विष्णुसादृश्यकथनेन विष्णुमयजीवनत्वं सूच्यते॥ ३४॥

पाण्डुसुतप्रियः पैतृष्वस्रेयप्रीत्यर्थं तद्गोत्रस्याऽऽत्तबान्धवः भगवान् कृष्णो मे प्रीतोऽपि प्रीत एवेत्यर्थः॥ ३५॥

अन्यथा श्रीकृष्णप्रीत्यभावे अव्यक्तगतेः वनीयसः 'चतुर्विधपुरुषार्थान् दास्यामि मां याचत इति मुहुर्यो याचकान् प्रेरयति। स वनीयान्' तस्य संसिद्धस्य कृतकृत्यस्य ते तव दर्शनं नृणां तत्रापि नितरां म्रियमाणानां नोऽस्माकं कथं भविष्यतीति शेषः॥ ३६॥

अतो योगिनां परमं गुरुं, त्वामिति शेषः। संसिद्धिं मोक्षलक्षणामुद्दिश्य पृच्छामि। किञ्च, इह लोके म्रियमाणस्य पुरुषस्य सर्वथा यत्कार्यं करणीयं वर्तते, तदपि पृच्छामीति पूर्वेणान्वयः॥ ३७॥

हे प्रभो! नृभिः यच्छ्रोतव्यम् अथो अथ यज्जप्यं, यत्कर्तव्यं, यत् स्मर्तव्यं, यद्वा भजनीयं वर्तते, यद्वा अथवा विपर्ययं — यानि श्रोतव्यजप्यकर्तव्यस्मर्तव्यभजनीयानां विरुद्धानि वर्तन्ते, तानि सर्वाणि ब्रूहि कथय॥ ३८॥

हे ब्रह्मन्! गृहमेधिनां गृहेषु क्वचिदपि भगवतो भवतोऽवस्थानं, गोदोहनं यावता कालेन गोदोहः क्रियते तावत्कालमात्रमपि नूनं न लक्ष्यते हि। तस्मात् दुर्लभो भवान् कर्तव्यमवश्यमुपदिशत्विति भावः॥ ३९॥

एवं पूर्वोक्तप्रकारेण राज्ञा परीक्षिता श्लक्ष्णया मधुरया गिरा वाचा आभाषितः पृष्टश्च धर्मज्ञो भगवान् बादरायणिश्शुकः प्रत्यभाषत प्रत्युत्तरं दत्तवानित्यर्थः॥ ४०॥

इति श्रीमद्भागवते प्रथमस्कन्धे
श्रीराधाकृष्णप्रणीतायां सुधीसुधायां व्याख्यायां
एकोनविंशोऽध्यायः॥ १९॥
*॥ प्रथमः स्कन्धः समाप्तः॥*



# श्रीमद्भागवत प्रथमस्कन्धस्थ श्लोक पादानुक्रमणिका

